# ऋङ्मन्त्रार्थसमालोचनम्

(वैदिक-मन्त्राणामादित्यमूला व्याख्या)




लेखक·

डा० राजेन्द्रप्रसाद मिश्रः

आचार्यः

वेद-विभाग,

महाराज-संस्कृत-महाविद्यालयः

जयपुरम्

# ṚṄMANTRĀRTHASAMĀLOCHANAM

(A Study of Vedic Mantra besed on the Sun)



by

**Dr. RAJENDRA PRASAD MISHRA**

*Professor*

Deptt. of Vedic Studies
MAHARAJA SANSKRIT COLLEGE
JAIPUR (Raj.)

# मङ्गलम्

ओ३म् । विश्वानि देव सवितर्दुरितानि परा सुव ।
यद्भद्रं तन्न आसुव ॥१॥

आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे ।
सत्यसवं सवितारम् ॥२॥

अनागसो अदितये देवस्य सवितुः सवे ।
विश्वा वामानि धीमहि ॥३॥

सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् ।
अग्निर्नः पार्थिवेभ्यः ॥४॥

# समर्पणम्

* *
* *
*

*

वेदविद्याविद्योतितान्त:करणानां श्रौतस्मार्त्तमणीनां
वाराणसेयसंस्कृतविश्वविद्यालयस्य पूर्वाचार्याणां
परमपूज्यगुरुवर्याणां
**स्व. डा. श्रीगोपालचन्द्र मिश्र महोदयानां**
पुण्यस्मृतौ
सादर समर्पयति ग्रन्थरत्नमिदम्

भवतामन्तेवासी

* *
*
* *
* *
*

# INTRODUCTION

## 'ऋङ्मन्त्रार्थसमालोचनम्'

(A criticism on the meaning of hymes of Rigveda)

"Ringmantrartha Samalochanam" a composition containing 600 pages in Sanskrit language is quite a new treatise on the hymns of Rigveda It is an exposition of the mantras pertaining to the Sun. Though this type of explanation has been adopted at many places by the ancient thinkers, philosophers, and commentators and present trend of explanation is not absolutely a new one, yet the use of this system being uncommon, is not in vogue, and has gone out of date

In the present treatise the ancient explanatory system has been held good that the solar 'Vedartha system' only should be adopted, as in 'Veda-mantras' the order of questions and their answers is solar The composers of vaidik hymns took the present system of explanation to be suitable The system, though, is ancient, it appears to be a modern one

The original testimony of this has been quoted by Saunaka, the author of the index, showing the successive contents of Rigveda "एक एव वा महानात्मा देवता स सूर्य इत्याचक्षते, स हि सर्वभूतात्मा तदुक्तमृषिणा सूर्य आत्मा जगतस्तस्थुषश्चेति". These wordings are the root-base of the doctrine of Shaunak

Among all the literary treatises available in modern times Veda is the most ancient. This fact is unanimously admitted either by a man of letters or by a historian The object of the ancient Vaidik literature is very deep, and that is why the scholars of the east and the west, with their deservations, have tried, and are still trying to know the real object and doubtless explainations of Veda, but so far they have not achieved success in their effort The researchers of Vedant philosophy are well aware of the above fact

As a matter of fact if the matter is keenly pondered over, it shall be admitted that there is no other way to achieve the goal except the said procedure

In the Vedas hymns have been composed in the praise or honour of the deities viz Aditya, Agni, Vayu, Yama, Surya, Bhaga, Poosha,

Mitra, Indra, and Varuna etc. of these deities some are very popular, such as Agni, Vayu and Aditya, while others are unpopular. Yaska, the acient thinker and author of the Nirukta, has written in the Daivatakanda of his Nirukta regarding the form and character of these deities. The belief of the existence of only one deity is called 'Monotheism' and the belief of numerous deities and their praise is historical evolution. The form and character of the deity is in accordance with the correlation of hymns (Mantras). It is the belief of Vedic rituals. In this way, after taking into consideration the various aspects, the doctrine of trinity of gods has been accepted, and with the different point of views existence and actions of other deities are believed to be in the above said three gods.

According to Shaunak, the Sarvanukramanikar of Rigveda, the Sun is the only God and the whole descriotion in the Vedas is related to the firmament where the Sun is. In the same way the belief of one single God has been arrived at. By assuming the variety in the form of Brahma it is known to be numerous. So the Sun only is to be accepted in the form of one God and according to the division of the universe into seven tracts, the doctrine of trinity is held good.

Thus in Veda there are various forms of the only Sun god such as Vishnu, Bhag, Mitra, Varuna, Savita etc, which are not separate from the Sun. The Sun is related to the lokas (The universal regions) according to their different names. Assuming 'Dyuloka' to the north of the intermediate space between heaven and earth, the Sun is given the name of Aditya as it lives there. When it is related to earth, it is called Agni; due to its change in the course or circulation it is called Vishnu; due to diurnal motion it is called Surya. Thus considering the solar view as base, the auther has attempted to expose the sense of Vaidik hymns in the present work.

In this work new interpretations of some of the Vaidik padas, discrimination of doubts with justification and establishment of distinct manifestations is quite pleasing. For this Dr. Rajendra Prasad Mishra deserves congratulations.

Maharaja Sawai Mansing II Musem, City Palace, Jaipur.
14th Jan., 1988

**Dr. B. M. Jawalia**

# शुभाशंसनम्

"ऋङ्मन्त्रार्थसमालोचनम्" नाम वेदस्यादित्यपरव्याख्यानरूपोऽभिनवो ग्रन्थः। यद्यपीदृशव्याख्यायाः समवलम्बनं तदा तदा तेषु तेषु चानुपन्नार्थेषु स्थलेषु प्राचीनैर्विचारकैरपि कृतमेवेति नेयं सर्वथाऽभिनवा, तथाप्यस्याः पद्धतेः सर्वस्थलेषु तैः समाश्रयणाभावादेषाऽप्रचलितैवाऽभूत्। अत्र तु ग्रन्थे तस्या एवाति प्राचीनायाः पद्धतेः सर्वत्रैव वेदे समाश्रयणीयतया प्रतिपादनात् सेयमनभिनवाऽप्य-भिनवत्वेनैव प्रतीयमाना भवेत्। ईदृग्व्याख्याया मूलभूतं प्रमाणं तु ऋग्वेदसर्वानु-क्रमणीकारशौनकेनोद्धृतम् "एक एव वा महानात्मा देवता स सूर्य इत्याचक्षते स हि सर्वभूतात्मा, *तदुक्तमृषिणा सूर्य आत्मा जगतस्तस्थुषश्चेति*" इत्यादि वच-नोक्तमतमेव।

इह हि साम्प्रतिकसमयोपलब्धानां ग्रन्थानां मध्ये वेद एव सर्वप्राचीनतमो ग्रन्थ इति प्रायेण सम्मतमेव समेषामैतिहासिकानामपि तीक्ष्णधिषणानाम्। अत एव च तदर्थोऽप्यतिगम्भीर इति तन्निर्णयाय बहुभिः पण्डितैर्बहुविधां दृष्टिमाल-म्ब्य बहुलं प्रयतितं प्रयत्यते च, तावतापि वेदार्थो नैवासन्दिग्धार्थो जातः सर्वत्रेति सुविदितचरमेव वेदतत्त्वान्वेषिणां विद्वज्जनानाम्।

वस्तुतस्तु सूक्ष्मेक्षिकया यदि पर्यालोच्यते तर्हीदमवश्यमेवाङ्गीकर्त्तव्यं यद्धित्वेमां सरणिं नापरः कोऽपि पन्था विद्यते येन तत्र तत्र वैदिकशब्दविचारा-द्भूतसंशयानां सम्यङ्निरासः स्यादिति।

वेदे तावदग्निवाय्वादित्य-यम-सूर्य-भगपूष-मित्र-वरुणेन्द्ररुद्रप्रमुखा देवताः स्तूयन्ते तत्रैतासु काश्चन लोकेऽतिप्रसिद्धा अग्निवाय्वादित्यादिशब्दप्रतिपाद्याः, परन्तु कासाञ्चनाप्रसिद्ध्या तत्स्वरूपस्याज्ञानात् का इमा देवताः प्रतिपाद्यन्त इति विचारे प्राचीनैर्निरुक्तकारप्रभृतिभिरत्र "एकैव देवतेत्यध्यात्मवादः, नाना-देवताः पुरुषविधा इत्यैतिहासिकवादः यज्ञोपयोगिमन्त्रमय्यो देवता इति याज्ञिक-वादः, इत्याद्यनेकविधपक्षोपन्यासपुरस्सरं *तिस्रो देवता इति नैरुक्ताः*" इति देवतात्रयवादं सिद्धान्तयित्वा तिसृणामेव तासां क्रियाद्युपाधिवशतो विभूतय इमा अपरा देवता इति प्रतिपादितम्। ऋग्वेदानुक्रमणीकारेणापि नैरुक्तं मतं

प्रदर्श्य "एकैव वा महानात्मा देवता स सूर्य इत्याचक्षते" इत्यादिना सूर्यस्यैवैकस्य देवत्वस्वीकारेण सौरावस्थानस्यैव वर्णनं दृश्यते वेदे इति प्रतिपादितम् ।

एवञ्चाध्यात्मवादे एकदेवतावादे वा एकस्यैव ब्रह्मणो देवत्वेन वचने भेदकल्पनां विना तदसम्भवेनोपाधिवशतो भेदकल्पनायां सूर्यरूपमेवैकमुपाधिं गृहीत्वा तस्य स्तव इति लोकादीनुपाधित्वेनादाय देवतात्रयवाद इति तात्पर्यम् ।

एवञ्चैकस्या एव सूर्यरूपाया देवतायाः कर्मविभेदवशतो विभिन्ना देवताशब्दाभिधेयत्वे विष्णु–भग–मित्र–वरुणसवित्रादयस्तु सूर्यतो न विभिद्यन्ते । तथा सति अन्तरोक्षादयोऽपि लोकास्तादृशा वक्तव्या यत्र सूर्यस्यैव सम्बन्धः स्यात् । तथा च मध्यमस्थानसम्बन्धं पूर्वदिक्स्वामितादिकञ्चालक्ष्य विषुववृत्तस्य क्रान्तिवृत्तेन छेदविन्दुं तत् समक्षं देशमन्तरीक्षत्वेन गृहीत्वादित्यस्य मध्यमस्थानवासित्वेनेन्द्रादिनामभिः स्तवः ।

ततश्च तस्मादन्तरीक्षलोकादुत्तरस्य देशस्य द्युलोकत्वं गृहीत्वा तद्वासित्वेनादित्यता, एवं दक्षिणस्य भागस्य भूत्वेन ग्रहणेन तद्वासितयाग्नित्वम्, दक्षिणोत्तरायण उपाधित्वेन गृहीत्वा तस्यैवादित्यस्य विष्णुता, मण्डलोदयप्राक्कालिक किरणवत्तया मित्रत्वम्, क्रमशो व्यक्तिमत्ता तेजसा तमोविनाशनकर्मणोषस्त्वम्, सरणात् सूर्यत्वम्. व्यक्ताव्यक्ततेजोवशतोऽश्वित्वमस्तगमनोत्तरकालिकरश्मिवत्तया क्रमशः पदार्थानामावरणेन वरुणत्वमित्यादिरूपेणादित्यपरां दृष्टिमालम्ब्यैव वदिकमन्त्रादीनां व्याख्यान प्रदर्शयितुमत्र प्रयासः समास्थितः ।

ग्रन्थेऽस्मिन् विचारप्रवणेन विदुषा लेखकेन वैदिकमन्त्राणामादित्यमूलं व्याख्यानसृतिप्रदर्शनपूर्वकं कतिपयवैदिकपदानामभिनवं व्याख्यानं, संशयानां समाधानयुक्तं विवेचनम, विशिष्टोद्भावनानां संस्थापनं च यत्कृतं तत्तु नितान्तं हृद्यमेवेति प्रतीमः । वेदविद्यावीथिपथिकः डा. राजेन्द्रप्रसादमिश्रो वेदाचार्यः ग्रन्थस्यास्य प्रणयनार्थं साधुवादार्हः । अनेन वैदिकसाहित्यक्षेत्रे अनुशीलनरतानां मनीषिणां कृते नवीनानि वातायनानि उद्घाटिष्यन्ते । ग्रन्थरत्नमिदं विज्ञजनेषु सततं प्रीतिकरं स्पृहणीयञ्चभवेदिति कामये ।

मकरसंक्रान्तिः<br>
वि० सं० २०४८<br>
वाराणसी

डा. युगलकिशोर मिश्रः<br>
आचार्योऽध्यक्षश्च<br>
वेदविभागः<br>
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,<br>
वाराणसी

# हार्दिकी सम्मतिः

अहमिद विज्ञाय भृश प्रसीदामि यज्जयपुरस्थमहाराजसस्कृतमहाविद्यालये वेदविभागाध्यक्षा डा राजेन्द्रप्रसादमिश्रमहाभागा स्वकीयया प्रौढप्रज्ञया परिकलितम् "ऋङ्मन्त्रार्थसमालाचनम्" इत्याख्य ग्रन्थरत्न प्रचिकाशयन्तीति ।

ऋङ्मन्त्राणा तत्त्वावबोधाय पूर्वाचार्येभ्य. समारभ्य साम्प्रत यावन्नाना विपश्चितो भाष्यादिविरचनेषु कृतश्रमा प्रतीयन्ते । वैदेशिका अपि तस्या दिशि नानवधाना. सन्ति । वेदाना याथार्थ्येन तत्त्व तु परमात्मैव वेत्ति, पर पौरुषेषु प्रयत्नेषु भारतीया विद्वासस्तेष्वास्थावन्त. सन्त स्वकीय परम्पराप्राप्त ज्ञान समुल्लासयन्तो यानि भाष्याण्यभाषयन् यानि च वास्तवतावन्ति तत्त्वान्युदघाटयँस्तानि सत्यमेव न सन्ति स्वैरविचारपराणि ।

प्रस्तुते समालोचने 'घृतमिव पयसि निगूढ' तत्त्व मतिमन्थानेन निर्मथ्य पुरश्चिकीर्षव श्रीमिश्रमहाभागा' सजोषमभिनन्द्यन्ते तेषामेष श्रम. सर्वत्र समादृत. सन् सर्वेषा सौमनस्याय स्यादिति च कामये ।

डा रुद्रदेव त्रिपाठी
निदेशक
बृजमोहन बिडला शोधकेन्द्रम्
उज्जयिनी

दि. १८-१-८८
उज्जयिनी

# सम्मतिः

'डा. राजेन्द्रप्रसाद मिश्र' प्रणीतम् आदित्यमूलकं व्याख्यानरूपम् "ऋङ्मन्त्रार्थसमालोचनम्" मया दृष्टम् । विदुषा लेखकेन विभिन्न-ग्रन्थानामुद्धरणपूर्वकं ग्रन्थस्थितविषयाणामालोचनं विहितम् । ईदृग्व्याख्यायाः समवलम्बनं प्राचीन ग्रन्थेष्पूपलभ्यते । सूर्यैकदेवता वेदे स्तूयत इति ऋग्वेदसर्वानुक्रमणीकारस्य शौनकस्य मतं सुप्रसिद्धम् ।

वेदार्थचिन्तने कल्पसूत्राणामाधारमादाय ग्रन्थेऽस्मिन् यादृशं सूर्यमूलं व्याख्यानं कृतं वर्तते, तादृग्विधमन्यत्र नैव दृश्यते । "चत्वारिवाक् परिमिता पदानीति" मन्त्रार्थचिन्तनक्रमे व्याकरणमहाभाष्यस्य कैय्यट-नागेश-प्रभृतीनां च विचारकाणां सोपपत्तिकं खण्डनमत्र सोल्लसति ।

मन्ये श्रीमिश्रमहोदयस्यानेन परिश्रमेण वेदार्थचिन्तनक्षेत्रे नवीनानि तथ्यानि प्रकटीभविष्यन्तीति शम् ।

जयपुरम्
दि. १४-१-८८

डा. रामनारायण चतुर्वेदी
निदेशकः
संस्कृत-शिक्षा, राजस्थानम्
जयपुरम्

# सांकेतिताक्षरविवरणम्

| | |
|---|---|
| आ. श्रौ सू. | .. आश्वलायनश्रौतसूत्रम् |
| ऋ अनु. | .. ऋग्वेदसर्वानुक्रमणी |
| ऋ. स. | .. ऋग्वेदसंहिता |
| ऐ. आ. | .. ऐतरेयारण्यकम् |
| ऐ ब्रा. | .. ऐतरेयब्राह्मणम् |
| छान्द उ. | .. छान्दोग्योपनिषद् |
| छा. म. ब्रा. | .. छान्दोग्यमन्त्रब्राह्मणम् |
| ताण्ड्य. ब्रा. | .. ताण्ड्यमहाब्राह्मणम् |
| तै. ब्रा. | .. तैत्तिरीयब्राह्मणम् |
| तै. स | .. तैत्तिरीयसंहिता |
| पा. सू. | .. पाणिनिसूत्रम् |
| व्या. म. भा. | .. व्याकरणमहाभाष्यम् |
| शत. ब्रा | .. शतपथब्राह्मणम् |
| शु. य. स. | .. शुक्लयजुर्वेदसंहिता |
| ष. ब्रा. | .. षड्विंशब्राह्मणम् |
| सा. भा. | .. सायणभाष्यम् |
| सि. कौ. | .. सिद्धान्तकौमुदी |

# संशोधनम्

येषु मुद्राक्षरेषु प्रायेणोत्तरभारते ग्रन्थाः मुद्र्यन्ते, तेषु प्रायेण ई-उ-ऊ-ए-ऐ-ओ-औ-ऋ-ॠ स्वराणां मात्रा उपरितनस्य रेफस्य संकेतोऽनुस्वारचिह्नं च मुद्रणकाले त्रुटित्वा विलुप्यन्ते। अत एतादृशीनामशुद्धीनां सुधीभिः पाठकैः स्वयं संशोधनमूह्यम्। केवलं "शत्वर" (पृ. ८१/१९) इत्यस्य स्थाने "शम्वर", (पृ. १४०/१६) षोडशपंक्तेरनन्तरं "४२-कुहूशब्दार्थविचारः" संयोजनीयम्।

—लेखकः

# विषयसूची

**द्वितीयो विवेकः** 

## ॥ उपोद्घातः ॥

वेदस्यार्थसमालोचने बहुभिर्विभिन्ना दृष्टिमालम्ब्य प्रयतितम् । तत्र केषांचन प्रयत्नो भागश केषाचन सर्वाङ्गीण । तत्र प्रयत्ने केषाचनाङ्गानुसारित्व केषाचन व्यवहारानुसारित्वम् । सामान्यतो नियमानुसार प्राय: सर्वेषाम् । तत्र मन्त्रेष्वपि व्याख्यान मन्त्रार्थस्य, क्वचन प्रश्नपूर्व क्वचन प्रश्नपूर्वता नास्ति, व्याख्यान तु वर्तत एव । यथा "[1]पृच्छामि त्वा परमन्तमित्यनेन केचन प्रश्ना उत्थापिता. । 'पृथिव्या. परोऽन्तः पृच्छ्यते, भुवनस्य नाभिः पृच्छ्यते, वृष्णो अश्वस्य रेत' पृच्छ्यते, वाच परमस्य व्योम्न पृच्छा" । तदुत्तराण्यपि तत्रैव परमन्त्रे उच्यन्ते–'वेदि[2]. पृथिव्या परोऽन्त , यज्ञो भुवनस्य नाभि., सोमो वृष्णो अश्वस्य रेत , ब्रह्मणो वाच परमव्योमतेति ।

हठान्किमितीम इम एव प्रश्ना इति प्रश्नबीजं नोल्लिखितम् । यानि चोत्तराणि तैः प्रश्नोत्थिताकाक्षानिवृत्तिरासीदेव । अतएव तेषामुत्तरत्वम् । परन्त्वस्माक न तानि प्रश्नोत्थापिताकाङ्क्षानिवर्तकानि । बीज त्वत्रास्माक व्यवहारा अन्यादृशा । यान् व्यवहारानभिप्रेत्य मन्त्रे उत्तराणि, तेषा व्यवहाराणामस्माकमप्रत्यक्षत्वम्, ये चास्माक प्रत्यक्षा व्यवहारा. न तैस्तदुत्तराणि प्रश्नोत्थापिताकाङ्क्षासमाधायकानि ।

अस्या दशायामस्माक व्यवहारानुसारेण तेषामुत्तराणा यथाकथचन समाधायकत्वकल्पन तत्तु न मूलस्पर्शि भवति । यथोक्तस्थले पृथिव्याः परान्तपृच्छा, वेदे परान्तत्वमुत्तर,तत्रास्माभि श्रद्धासहकारेण एतावती वै पृथिवी यावती वेदिः इति वाक्यदर्शनेन वेद्या एव पृथिवीत्वमिति व्याख्यायते । अस्माक प्रसिद्धयाज्ञिकव्यवहारे वेदिरिति स्वल्पभूभागस्य वेदित्वेन प्रसिद्ध्या व्याख्यायामेवकारार्थाविज्ञानेन न सम्यक्न भासते, वेद्या एव पृथिवीत्वमित्यस्य किं वेद्यतिरिक्तस्य भूप्रदेशस्य पृथिवीत्व नास्तीत्यर्थ उत वेदिरेव पृथिवीति ।

---

1 ऋ स. 1 164 : 34

2 ऋ स 1 : 164 : 35.

तत्राद्येऽस्माकमनुभवविरोधः । द्वितीये "[1]एतावती वै पृथिवी यावती वेदिरित्यस्य व्याख्येयभागस्य न सम्यक् व्याख्यानम् । अथ एतदर्थमेतस्य प्रशंसा-परत्वं, वेद्याः प्रशंसाऽनेन बोध्यते इति वर्ण्यते तावता मौलिकप्रश्नोत्तरयोर्न सम्यक् विवरणं भवति । तत्र प्रश्ने पृथिव्याः परोऽन्तः पृच्छ्यते न तु का पृथिवीति । एवमुत्तरे वेदिः पृथिव्याः परोऽन्त इति उच्यते न तु वेदिः पृथिवीति । एवं सति उक्तप्रश्नोत्तरयोर्न यथार्थत्वेन ज्ञानम् । एवमेवापरापरप्रश्नोत्तरस्थले विज्ञातार्थत्वम् । एतावताऽपि प्रश्नोत्थितिबीजमविज्ञातमेव । को वा पृथिव्याः परान्तविज्ञाने गुणः यदर्थमयं प्रश्नः ।

एवं सति पृथिव्याः परान्तपृच्छाया भिन्नोऽभिप्रायः । एवं एतदुत्तरस्यापि । एवं मन्त्रे केवलं प्रश्नः क्रियते नोत्तरस्य वचनं तत्र अपरं काठिन्यं प्रवर्तते यत्प्रश्नस्य प्रवर्तने कोऽभिप्रायः उत्तरदान तु अस्मदीयप्रसिद्ध्या कल्पनया । यथा मन्त्रे उच्यते "इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः" इति । अत्रोच्यते येनास्य वामस्य निहितं पदं ज्ञायते तेन तदुच्यतामिति ।

अत्र वामशब्दोऽस्माकं द्विभागे शरीरे दक्षिणविरुद्धशरीरभागबोधकः प्रसिद्धः । मन्त्रे तु आदित्यस्येयं वर्णनेति गृहीतं, तत्र वामशब्दस्यादित्याभि-प्रायेणास्माकं प्रसिद्धोक्तरूपरूढशरीरभागविशेषबोधकत्वं नोपपद्यते । न हि आदित्यः शरीरस्य वामभागरूपः अप्रसिद्धेः । तस्मात्प्रसिद्धं रूढमर्थं परित्यज्य योगार्थं आश्रीयते । तत्रापि वम् धातोर्वामपदसाधने न प्रकृतवर्ण्यत्वेन गृहीतादि-त्यवर्णने उपकारः । वम्धातोर्निगीर्णस्य गिरणमार्गेण पुनः परित्यागरूप उद्गि-रणे प्रसिद्धिः । न हि आदित्यो निगीर्णः पुनरुद्गीर्ण इति प्रसिद्धस्तस्माद्धात्वन्त-रात्तस्य शब्दस्य सिद्धिः । यथा वनु धातोः । तस्य चायमर्थ इति व्याकरणे न विशिष्य निर्देशः ।

एवमप्रतिषिद्धमनुमतमिति न्यायेन याचनार्थत्वं मन्यते । तावतापि न भक्षितलशुनन्यायातिपातः । यतस्माद्धातोर्घञादिना प्रत्ययेन वान इति रूपं प्राप्नु-यात् प्रयुज्यते तु वाम इति । तदर्थमन्यायेन नकारस्य मकार मत्वा वामो वननीयः सेवनीयः फलार्थिभिः । तत्रापि आस्माकीनां परां प्रसिद्धिमाश्रित्य आरोग्यं भास्क-रादिच्छेद इति वशत आरोग्यार्थिभिरारोग्यार्थं सेवनीय इत्यर्थकरणद्वारा व्याख्या-नमतेऽस्मदीयप्रसिद्ध्यनुसारेण मूले तदभिप्रायकत्वं वान्यार्थाभिप्रायकत्वं वेति सन्देहस्य तदवस्थत्वेन उक्तप्रश्नस्य उत्तरं समाधातुं न शक्तिरिति ।

एवं प्रसिद्धार्थानीव सरलार्थानीव पदानि मन्त्रेऽर्थस्य तु तत्र अनानुगुण्यं, यथौषधिसूक्ते उच्यते, या ओषधयो देवेभ्यः पुरा पूर्वा जातास्तासां सप्तशतानि

---

1. श-ब्रा. 5 : 6 : 412.

धामानि मनै स्तुवे इति । अत्र त्रियुग पुरा पूर्वा इत्येषा पदानामुक्तार्थत्वमिव शत सप्तधामानि कानि इत्येतद्विषये निर्णयाभाव । मन्त्रे सख्येयार्थविरहितानि सख्यापदान्युच्यन्ते तेषा सम्यगुपपत्यभाव । अविज्ञातार्थप्रसिद्धपदप्रयोगस्थले तु का कथाऽर्थविवरणे, व्याकरणाद्यनुसारेण यथा कथ च व्युत्पत्तिकल्पनेऽप्यस्या नाञ्जस्यम् ।

ब्राह्मणेऽपि ववचन मन्त्रार्थव्याख्यान दृश्यते यथा "हस शुचिषद्वसुरन्तरीक्षसदि"ति मन्त्र हसादिशब्दैरादित्य एवोच्यते इत्युच्यते । तत्रोच्यते "हस शुचिषदित्येष वै हस शुचिषद्" इत्येवमादि । तावता शुचिषदादीनामादित्यपरत्वेन वर्णने को गुण इति न विशद विवृतम् । अत्र व्याख्याने उपपत्तिसाहित्यमिव वस्तुतस्तत्र न साहशत्व यथा "सप्तदशो वै प्रजापति"रित्यस्य व्याख्यान ब्राह्मण "द्वादशमासा पञ्चर्तवो हेमन्तशिशिरयो समासेन तावान्सवत्सरः प्रजापति" इति । अस्य व्याख्यानस्य सप्तदशो वै प्रजापति इति प्रजापते प्रसिद्धसाप्तदश्यप्रदर्शनार्था प्रवृत्ति । तत्र मूलवाक्ये वैशब्दप्रयोगेण प्रजापते साप्तदश्ये प्रसिद्धयतिरिक्तप्रमाणानपेक्षत्व द्योत्यते । व्याख्याने तु साप्तदश्ययुतसवत्सराभेदात्प्रजापते साप्तदश्यव्यवहारा प्रतीयते । सवत्सरेऽपि साप्तदश्ययोगो न स्वाभाविक प्रसिद्ध इति तत्साधनार्थं सपत्तिप्रकार उच्यते तत्र "द्वादशमासा पञ्चर्तव" इति ।

तत्र मासेषु द्वादशत्वसख्या प्रसिद्धा, ऋतुषु तु पञ्चत्वसख्याया अप्रसिद्धि षट् वा ऋतव. इत्यादिना षट्त्वप्रसिद्धिरिति सवत्सरेऽपि साप्तदश्यस्याप्रसिद्धिस्तदर्थमृतुषु पञ्चत्वसख्यासपत्यर्थमुच्यते समासेन इति । समास सक्षेप एकत्वेनार्थाद्द्वयोर्ऋत्वोरेकत्वेन ग्रहणेन ऋतुषु पञ्चसख्याप्रसिद्ध्या सवत्सरे साप्तदश्यसपत्ति स्यादिति । समासो हेमन्तशिशिरर्त्वोरिति । पर तत्तु न सम्यगिव । यतो मूले वैशब्देन प्रजापते प्रसिद्ध साप्तदश्यमुच्यते न तु पदार्थान्तराभेदात्तत् । तत्रापि पदार्थान्तरे यदि प्रसिद्ध साप्तदश्यमभविष्यत्तदानी तदभेदेन तत्सम्भवेदपि । परन्तु तत्रैव पदार्थे साप्तदश्य न प्रसिद्ध किन्तु कल्पनया साधनीयम्, प्रदर्शित च तत्तु समासेन ।

एव कल्पनया साप्तदश्यसपादन तदैव सम्भवेद्यत्र प्रकारान्तरेण सिद्धस्य तस्यान्यत्र प्रयोग । यथा छन्दोविषये पादानामक्षराणा वा सख्या प्रमाणान्तरेण नियता तत्र मन्त्रे प्रयोगे तच्छन्दोव्यवहारस्योपपादनाय न वा एकेनाक्षरेण छन्दासि वियन्ति न द्वाभ्यामित्यादिना सपत्ति प्रदर्श्यते, नैवमत्र प्रजापते प्रसिद्ध साप्तदश्यमप्रदर्श्य सवत्सरे साप्तदश्य सपादयितु युक्तम । अन्योन्याश्रयप्रसगश्च सवत्सरसाप्तदश्याधीन प्रजापतिसाप्तदश्य प्रजापतिसाप्तदश्याधीन च सवत्सरसाप्तदश्यमिति ।

एवं निरुक्ते तदा तदा तेन तेन प्रकारेण व्याख्यानं प्रदर्श्यते । तत्र व्याकरणापेक्षया शब्दस्वरूपसाधनार्था अपरेऽपि प्रकारा उच्यन्ते, यथा वैयाकरणैरग्निपदस्य साधनेऽङ्गेर्निर्नलोपश्चेति तत्पदं साध्यते, निरुक्त उच्यते, "इतादक्ताद्दग्धाद्वा नि: पर" इति । तेनेण्धातोरकारोऽञ्जुधातोर्दहधातोर्वा गकारो नयति: पर इत्यग्निपदसाधना । अर्थानुसारेण प्रयोगानुसारेण व्याकरणाद्युक्तप्रकारासम्भव एवा कल्पनेत्युक्तं, तावता कल्पनस्यातिव्यापकत्वेन प्रसिद्धिः सन्दिग्धैव । अर्थश्च प्रयोगानुसारेण निर्णेयः प्रयोगश्च व्यवहारमपेक्षते, वैदिकव्यवहाराविज्ञानेऽस्माकं प्रसिद्धव्यवहारेण तत्कल्पने मूलोक्तार्थसंस्पर्शप्राप्तिः । यथैकया प्रतिवेति मन्त्रे काणुकाशब्दार्थाविज्ञाने तत्र प्रयुज्यमानयोरिन्द्रसोमयोस्तदर्थकत्वं सम्भावि गृहीत्वा कान्तकानीति कृतकानीति वा कणेहतः कानिहत इत्यर्थकरणेन तत्तदुचितधात्वादितस्तत्पदसिद्धिरुक्ता, तावता तत्पदस्यार्थः सन्दिग्ध एव, सोमाभिप्रायकता तस्येन्द्राभिप्रायकतेति वेति ।

एवं तदद्य वाच इति मन्त्रे पञ्चजनपदार्थनिर्णयावसरे मतद्वयमुक्त, "गन्धर्वाः पितरो देवा असुरा रक्षांसि, निषादपञ्चमाश्चत्वारो वर्णा, इति मतद्वयं प्रदर्शितम् । तावतापि मन्त्रार्थानिर्णयस्तत्पदार्थानिर्णयश्च । ऐतरेये वश्वदेवशस्त्रे सर्वेषां पञ्चजनानामुक्थमित्युक्तम् । सर्वे पञ्चजनास्तत्रोक्ता देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितृणां च इति । तेन साकं विरोधश्च । तत्रानुक्तानामसुररक्षसां ग्रहणादुक्तानां च सर्पादीनामग्रहणात् । किञ्चोक्तोपवसूक्तीयमन्त्रे त्रियुगमित्यस्यार्थस्य स्पष्टमनुक्तिः । सप्तदशपदयोः गुणेनार्थप्रतिपादकताऽन्यथा वेति सन्दिग्धम्, पुरुषमर्मसंख्याप्रतिपादनद्वारेण मूलोक्तचशब्दप्रयोगविरोधश्च । सायणभाष्यकारादिभिस्तस्य त्रियुगमित्यस्य कृतादियुगत्रयपरतोच्यते तत्र युगपदार्थस्यास्वारस्यम् । सप्तशतपदयोर्निरुक्तवदेवार्थकरणेन चशब्दविरोधश्चेति मन्त्रार्थास्पष्टत्वम् ।

अर्वाचीनैर्व्याख्यातृभिः सायणार्थमनुरुध्य प्रायेण विचारस्तत्र दोषोद्भावनं क्व चन स्वातन्त्र्येणार्थकरण, तत्रापि बहूनां स्थलानां वर्णनस्यानाञ्जस्यम् । यथा म्यैक्स्मूलरमहोदयेनादित्यपरत्वं वर्ण्यते परन्तु हिमकाले तस्य तेजोन्यूनत्वंवसन्तादिकाले तदाधिक्यमेवंपरतया कानिचन स्थलानि योज्यन्ते बहूनि चासंगतानि, बन्दनादिप्रभृतीनां तमसि मग्नानामश्विभ्यामुद्धार इत्यादीनामस्वारस्यं च । अपरैरर्थस्यादित्यरूपस्य वेदप्रतिपाद्यत्वं स्वीकृत्यापि तस्य केवलं सुमेरुमात्रसम्बन्धितयैव वेदे वर्णनमिति स्वीक्रियते तत्परत्वमेव सर्वस्य वर्णनस्येति ।

तत्रोषसां त्रिंशत्त्वमनेककालावस्थायित्वं तमसो दीर्घत्वेन वर्णना दीर्घाहस्तेन वर्णना वेदे ध्रुवप्रदेशापरपर्यायनुमेरुप्रदेशमात्रसम्बन्धित्वं बोधयन्ति, विदेशीयपुराणग्रन्थकथा अपि तत्सूचका इति तदपि आदित्यपरत्वं बोधयति वेदस्येति

न तदंशे प्राचीनसमतवैदिकमतेन विरोधः किन्तु उक्तविषयवर्णनानि सुमेरुकुमेरु-रूपप्रदेशद्वयवर्णनसाधारणानि सन्त्यप्येकप्रदेशमात्रसम्बन्धित्वं तेषां गृहीत्वा सिद्धान्तस्थापनं विरुद्धं तादृशकतिपयस्थलोल्लेखेन व्याख्यानापेक्षति । वैदिक-व्यवहारा. प्राचीनास्तेषामानुरूप्येण वेदादिवर्णनस्य आस्माकीनपरिस्थितिवैषम्येन तदनुरोधेन वैदिकग्रन्थव्याख्यानं न सम्यक्, तासां परिस्थितीनामस्मदादिभिरविज्ञा-नादास्माकीनपरिस्थितेस्तत्रासम्भवात् इति वेदस्यार्थकरणमेवासम्भवग्रस्ततामा-याति । तथापि साधारणनियमानां सर्वत्रैक्यस्य दर्शनात् स्थलविशेषे प्राचीनव्यव-हारस्य याज्ञिकपद्धत्या विज्ञानेन तदसम्भवाभाव. ।

अतएव प्राचीनपरिस्थिते· परिपाकनार्थं विज्ञानार्थं याज्ञिकपद्धत्या. प्रवर्त-नम्, तद्वशतो विभिन्नदेशकालिकानां व्यवहारज्ञानं सुकरमित्यभिप्रायेण मन्त्र एवोक्तं यथा-"देवानां नु वयं जाना प्रवोचाम विपन्यया । उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे" । इत्यनेन । यद्यप्यनेन उत्तरयुगे शस्त्रवचनानुसारेण विज्ञात-मित्येवोपनिबद्धं तावता न्यायसाम्याद्देशान्तरीयामिव कालान्तरीयाणामपि विज्ञानसम्भव· । अतस्तदनुसारेणैव मन्त्रादीनामर्थकरणं न्याय्यम् ।

यत्तु देशान्तरीयपुराणकथानुसारेण तदानुरूप्यस्य वैदिग्रन्थेऽप्युपलम्भेन विशिष्टसिद्धान्तव्यवस्थापनं तत्तासां कथानां सम्यग्विचाराभावनिबन्धनम् । तत्र तदर्थमेवमुच्यते यद्वेदे कृत्तिकाविषये "एता वै प्राच्यै दिशो न च्यवन्ते" इति वर्णनेन कृत्तिकानां प्राचीदिक्सम्बन्ध उच्यमानस्तासु वर्षारम्भं ज्ञापयति। अतएव नक्षत्रमालासु तदादित्वेन वर्णना । यथोच्यते-"कृत्तिकाः प्रथमं विशाखे उत्तममेतानि वै देवनक्षत्राणि । अनुराधा प्रथममपभरणी उत्तमेतानि वा यम-नक्षत्राणि" इति । वेदाङ्गज्योतिषग्रन्थे नक्षत्रदेवतानां कथनावसरे "अग्नि· प्रजापति. सोमो रुद्रोऽदितिर्बृहस्पतिः । सर्पाश्च पितरश्चैव भगश्चैवार्यमापि च" इत्यादिना कृत्तिकादिक्रमेणाग्न्यादिदेवतानां वचनम् ।

नक्षत्रमालासु कृत्तिकादि. क्रमो यथोपलभ्यते वैदिकग्रन्थेषु एवमिदानीन्तन-प्रसिद्धनक्षत्रमालाक्रमस्यान्यथात्वं दृश्यते । यथेदानीं प्रसिद्धो नक्षत्रमालाक्रमोऽश्वि-न्यादिरेवतीनक्षत्रपर्यन्तं । एतद्विषमत्वे बीजं नक्षत्रमालादिमनक्षत्रस्य वर्षारम्भ-तोऽपसृतिः । पूर्वं कृत्तिकानां यदा वर्षारम्भनक्षत्रत्वं तदा ता आरभ्यैव नक्षत्राणां क्रमो नक्षत्रमालायामासीदिति तथावर्णनमुक्तस्थलेषु । कालक्रमेण यदा ता वर्षा-रम्भस्थानतो विच्युता नक्षत्रान्तरं तत्र स्थाने प्रवृत्तं तदा तदारभ्य नक्षत्रमाला-प्रवृत्तिः । नक्षत्रस्य वर्षारम्भस्थाने प्राप्ति. पूर्वनक्षत्रतः प्रायोऽन्यूनसहस्रवर्षैरिति नक्षत्राणां वत्सरारम्भप्राप्तिश्च विपरीतेन क्रमेणेति कृत्तिका तत्स्थानतो विच्युता भरणी तत्स्थानमधिगता सापि विच्युता अश्विनीनक्षत्रं तत्स्थानमधिरुरोह । तदादिनक्षत्रमालायामश्विनीनक्षत्रस्य प्राथम्यं प्रवृत्तमित्यश्विन्यादिनक्षत्रगणना प्रवृत्ता येदानीमस्माकं प्रसिद्धा ।

यद्यपीदानीं वर्षारम्भस्थानं रेवतीनक्षत्रमतीत्योत्तराभाद्रपदामतीत्य पूर्वाभाद्रपदासु प्राप्तं तदनुसारेण नक्षत्रमालाक्रमो अश्विन्यादित्वं परित्यज्य भाद्रपदादित्वमपेक्षते तादृशश्च संस्कारो ज्योतिर्विद्भिर्न कृत इति अश्विन्यादिक्रम एवोपलभ्यते, तावता नक्षत्रमालाक्रमविभेदस्योपलम्भेन तत्र वर्षादिस्थानभेदनिमित्तकत्वं विज्ञातुं पार्यत एव। एकनक्षत्रतो नक्षत्रान्तरप्राप्तौ वर्षारम्भस्थाने वर्षसहस्रमपेक्षत इति समुपलभ्यमानवर्षादिस्थाननक्षत्रतः कृतिकानक्षत्रस्य तत्स्थानप्राप्तयेऽन्यून वत्सरसहस्रषट्कमपेक्ष्यत इति तादृशपरिस्थितेर्वेदे वर्णनेन तस्य वत्सरसहस्रषट्कतः पूर्वं प्रवृत्तिरिति सामान्यतो ज्ञायते। ततः पूर्ववर्तिनक्षत्राणां यदि वर्षारम्भस्थानकत्ववर्णनस्य साक्षात्परम्परया सूचकश्चेन्निर्देशो वेदे उपलभ्येत ततस्ततोऽपि प्राचीनकालिकत्वं तत्र सम्भाव्येत। तादृशश्च निर्देशो मृगशिरसो विषय उपलभ्यते।

तथाहि प्रथमतो गीतावचनं तत्रेश्वरविभूतिकथनावसरे उच्यते "मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकर" इति। तत्र मासानां मध्ये मार्गशीर्षमासस्य भगवद्विभूतित्वं धान्यसमृद्धिशालित्वादिति टीकाकृद्भिर्व्याख्यायामुच्यते। एकेन टीकाकर्त्रोच्यते वर्षादिमासत्वाद्भगवद्विभूतित्वमस्येति। तत्र वर्षादित्वमयनादिमासस्यापि भवति प्रथमतु प्रथममासस्यापीति वर्षादित्वविषये सन्देहे तत्रैव "ऋतूनां कुसुमाकर" इति वर्णनेनोपस्थितत्वाद्वसन्तादिमासत्वरूपस्यैव वर्षादेर्ग्रहणम्। तथा सति मार्गशीर्षस्य वसन्तादित्वरूपवर्षादिमासता गीतायामुक्तेति भवति।

तत्र यद्यपि मासनामव्यवहारः पूर्णमास्यां चन्द्रमोनक्षत्रयोगितयेति मृगनक्षत्रे पूर्णिमायां वसन्तारम्भरूपवर्षादित्वग्रहणे ऋतुव्यवहारस्य सूर्याधिष्ठितनक्षत्रवशतः प्रवृत्या मृगनक्षत्रपूर्णमासस्य वत्सरादित्वे मृगनक्षत्रं पूर्णमास्यां वर्तमानं चन्द्रमसो नक्षत्रं स्यात्। पूर्णमास्यां च सूर्याच्चन्द्रमसोरत्यन्तविप्रकृष्टत्वेन चन्द्रमोऽधिष्ठितनक्षत्रतश्चतुर्दशे नक्षत्रे सूर्यनक्षत्रता स्यात्। तादृशं च नक्षत्रं ज्येष्ठानक्षत्र तस्य वत्सरारम्भरूपवसन्तारम्भकत्वे विंशतिसहस्रवत्सरतोऽपि प्राचीनभावः प्राप्नुयात्।

एवं सति मध्यवर्तिनक्षत्रेषु वसन्तारम्भचिह्नस्योल्लेखोऽपेक्षणीयस्तथोल्लेखस्य वेदादिष्वनुपलम्भेन तथा कल्पनस्यायुक्तत्वं स्यात्। गीतायां च साहचर्याद्वसन्तादिमासत्वरूपवर्षारम्भस्य प्राप्तिरिति विरोधे प्राप्ते उच्यते मार्गशीर्षस्य वसन्तादित्वं च मृगशिरसि पूर्णमासत्वरूपमार्गशीर्षनामनिबन्धनं किन्तु तत्रैव आग्रहायणिकनामनिबन्धनं तत्। तच्च नामाग्रहायणीसम्बन्धात्। आग्रहायणीति मृगशिरसि नामेति अमरकोशे उच्यते, मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी इति। अत्राग्रहायणीति पदं मृगशिरात्रोवाचकमिति वहन्ः। वस्तुतस्तु वत्सरादौ

क्रियमाणक्रियासम्बन्धेनाग्रहायणीपद ता क्रिया बोधयति सा च क्रिया मृगशिर-सीति। अतएव तस्या क्रियाया बोधक नाम श्रौतसूत्रादिषु आग्रयणेष्टिरिति प्रतिपाद्यते।

आग्रयणशब्दश्च हायनाग्रसम्बन्धे प्रवृत्त । तत्र अग्र-हायणेति पदद्वये द्वितीय पद हाधातोर्गमनार्थान्निष्पन्नम्, हाधातोर्गमनार्थत्वमिव हय धातोरपि गमनार्थत्वं हय गताविति पाठात्। एवञ्च अग्रहायण अग्रहयनेति पदद्वय समानार्थम। पदादिभूतस्य हकारस्य परित्याग प्रयोगे बहुल दृश्यते त एव अय गताविति समानार्थकधातूपदेश । विदेशीयभाषास्वपि हकारपरित्यागस्तद्योजन वा दृश्यते। एव सति अग्रहयनेति शब्दो अग्अयनेत्येवरूपो भवेत्। तथा च स आग्रायणेति रूपता प्राप्नुयात्। तत्र ग्रेत्याकारस्य ह्रस्व चाग्रयणशब्दो हायनस्य वत्सरस्यादि बोधक स्यात्। तमिम वर्षादिमभिप्रेत्याग्रयणशब्द प्रवर्तमानस्तत्र क्रियमाणा-मिष्टिमपेक्ष्य सूत्रेषु आग्रयणेष्टिशब्देन व्यवह्रियते।

यजुषि च रुद्राध्याये चमकभागे सौमिकग्रहवर्णनावसरे "आग्रयणश्च मे" वैश्वदेवश्च मे" इत्यत्र ग्रहाभिप्रायक आग्रयणशब्दोऽपि प्रयुज्यमानो दृश्यते। तत्रैव 'शुक्रश्च मे मन्थी च म" इत्यनेन शुक्रामन्थिनोर्ग्रहयोर्वचन तयोश्चादित्य-चन्द्रमोरूपत्वस्य तत्र वेदे वचनेनाग्रयणोऽपि कस्यचन तेजस्विन पदार्थस्य बोधक स्यात्। स च आग्रयणरूप पदार्थ आकाशे दृश्यमान प्रकृष्टप्रकाशरूपो मृगशिर-ससविधे आर्द्राख्यतारकाविशेषो व्याधरूप सम्भवेत्। एव च आग्रयणशब्दस्य वर्षादिबोधकता, स चाग्रयणशब्दो मृगशिरसो बोधक ।

ब्राह्मणे प्रजापतेरादित्यस्य दुहित्रारोह दृष्ट्वा देवैरकृतकार्यकारिणो वेधाय सन्निमितस्य रुद्रस्य बाणेन वेधे प्रजापतिरूर्ध्वमुत्प्लुत सोऽसौ मृगात्मना सन्दृश्यते तमेत मृग इत्याचक्षत इति तत्र वचनात्। तत्र मृगशिरसि सन्दृश्यमानबाणाका-रतारकात्रय स एव प्रजापतेर्वधोपयुक्त शर पश्चाद्दृश्यमानस्तेजस्वी तारका-विशेष एव प्रजापतेर्वधकारी रुद्रो देव इति ऐतरेये वचनम्। मृगशिरसि वर्षादि विना नैतदुपपद्यते। तस्मान्मृगशिरसि वर्षादेरभिप्रायेण तस्यैव बोधको वैदिका-ग्रयणशब्दो मृगशिरसि वर्षादिस्थानस्य बोधक । वर्षादिरेव वसन्तादिभिर्भवतीति गीताया "मासाना मार्गशीर्षोऽहमृतूना कुसुमाकर" इति मार्गशीर्षस्य वसन्तादि रूपवर्षादित्वेन मासाना मध्ये मुख्यत्व वसन्तस्यतु मध्ये प्रथमत्व वत्सरारम्भे प्रवर्तमानत्वेनेति साहित्यान्मार्गशीर्षस्य वर्षादित्वेन भगवद्विभूतित्वमुच्यमान सगच्छते ।

स च मृगशिरसि वत्सरारम्भकाल प्रायेणेतो वत्सरसहस्राष्टकतो न्यूनो न स्यात्। तस्य कालस्येदानीमपि वैदिकैरुपनयने बटोर्वेषविशेषादिनानुकरण क्रिय-माण दृश्यत। उपनयने बटोर्मृगचर्मसन्धारणमाभिव्यज्यते मृगशिरोरूपप्रजापतेर-

नुकारः। तच्च मृगचर्मसन्धारणं पूर्वं सर्वाङ्गीणमासीदिदानीं तस्य चर्मणः खण्ड-धारणं दृश्यते, तावता मृगानुकारो व्यज्यत एव।

ग्रीक्देशीयपुराणग्रन्थवर्णनतोऽपि मृगशिरसि वर्षारम्भ आसीदिति विज्ञायते। तत्रोरायणस्य इग्रास इत्यस्या उपरि प्रेम आसीदित्यादिना प्रेमसम्बन्धो वर्ण्यतेऽनेकविधः। तत्र वेधार्थं प्रदर्शितं दूरस्थं वस्तु विद्ध तस्य प्रेमिणः शिग्आसीदित्यादिना वर्ण्यते। आकाशे विद्धस्य प्रजापतेरिषुणा सार्कं शिर उत्प्लुतं मृग इति ब्राह्मणे उच्यते। ओरायण इत्यस्य सायुधराक्षसरूपत्वेन कल्पना पाश्चात्य-पुराणग्रन्थेषु तत्र इग्रास इत्यस्या उपरि ओरायण इत्यस्य प्रेम आर्तिमियेत्यस्या वा तदुपरिप्रेमेति वर्ण्यते।

ब्राह्मणे प्रजापतेर्दुहितोषा इत्येके प्राहुर्द्यौश्चैक इति उच्यते। तदुक्तं तत्र दिवमित्याहुरुषसमित्यन्ये इति। स चोरायनशब्द आग्रयणशब्दस्य भाषिकप्रणाल्या रूपान्तरं भवितुमर्हति। आग्रयणशब्दे आकारस्यौकारो गकारलोपो रेत्यस्याकार-भावो यणेत्यस्य इन्रूपतेति ओराइन् ओरायणरूपो भवितुमर्हति। यद्यप्यत्र पद-मध्ये गकारस्य लोपे भाषिकनियमो न दृश्यते तथापि तादृशगकारलोपः शब्देषु दृश्यते। तत्रेग्रासप्रभृतीनां संस्कृतउषः प्रभृतिशब्दप्रतिरूपकत्वस्य सम्मतत्वेन ओराइन् इत्यस्यापि संस्कृतशब्दो मूलमपेक्ष्यत इति स उक्तरीत्याग्रयणशब्दतो भवितुमर्हतीति पाश्चात्यदेशीयकथातोऽपि मृगशिरसि वर्षारम्भ आसीदित्यर्थ एव सम्यग्भवति।

ऋङ्मन्त्रेषु इन्द्रेण नमुचेः शिरस एव छेदनमुच्यते। "अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः। विशृङ्गिणमभिनच्छुष्णमिन्द्रः॥ यद्धत्यं मायिनं मृगं तमु त्वं माययावधीः। शिरोन्वस्य राविषम् "इत्यादिषु व्यक्तमुच्यते। एवं च मृगशिरसि वर्षादित्वमिव ततः पूर्वभाविनि पुनर्वसुनक्षत्रे वर्षादित्वस्य स्पष्टं चिह्नं नोपलभ्यते, अस्पष्टं तु देवानां दिशो व्यामोहे दितिवाक्यम्। अदितिश्च पुनर्वसुनो देवतेति पुनर्वसुन्यपि वर्षारम्भ आसीदिति विज्ञायते।

तथा सति स काल इतो वर्षसहस्रदशकात्मेति। तस्मिन्काले जायमान-विशेषाणां वेदे उपलम्भात्सा वैदिकी संस्कृतिस्ततः प्रवृत्ता आसीत्। यद्यपि तस्मिन्नवसरे सूक्तोपनिबन्धो न भवेत् परन्तु संक्षिप्य वाक्यैस्तदनुसारणस्य क्रमि-कस्य संभव इति तादृशि वाक्यानि निविदादीनि संभवन्ति। तदनुसारेण परस्तात्-सूक्तोपनिबन्धस्य संभव इति। एवमादिवर्णनेन ये सिद्धान्ता व्यवस्थाप्यन्ते तेषां तदसाधकत्वमिव प्रतीयते। तथाहि अत्र बीजं गीतावचनं यत्र मार्गशीर्षस्य सर्वमासमध्ये भगवद्विभूतित्ववर्णनम्। तत्वं वत्सरादित्वात्तस्येति। तत्तु न युज्यते वर्षादित्वमेव भगवद्विभूतिमत्वे कारणं चेदन्येषामपि मासानां वर्षादित्वसम्भवेन मार्गशीर्षस्य भगवद्विभूतिमत्वं निर्बिजं स्यात्। धान्यादिसमृद्धिशालित्वेन तत्वे तु मासान्तरेषु तदभावेन तेषां तत्त्वाभावश्चेति वर्णयितुं शक्यम्।

किञ्च वर्षादित्वमुच्यमानं कीदृशं वत्सरादित्वं तस्य, किमयनप्रारम्भरूप-वर्षादिता तस्योत वसन्तप्रारम्भरूपवर्षादिता तस्य विवक्षिता। आद्येऽपि अयनस्य द्वविध्येन किमयनप्रारम्भरूपवर्षादित्वं तस्य, किमुदगयनप्रारम्भकत्वात्तत्त्वमुत दक्षिणायनप्रारम्भात्तथा। अन्त्ये मार्गशीर्षे दक्षिणायनप्रारम्भे ज्येष्ठे उदगयना-रम्भो भवेत् भाद्रपदे वसन्तसम्पातः प्रारम्भेनेति संपातनक्षत्रं फाल्गुनी स्यात्। भाद्रपदे पौर्णमास्यां चन्द्रमसो भाद्रपदानक्षत्रं स्यात् सूर्यस्य च ततोऽत्यन्तविप्रक-र्षात्। तादृशं च नक्षत्रमत्र फाल्गुनीति तदानीं वसन्तसंपातः स्यात्तथा सति नक्ष त्रियप्रजापतिवचनविरोधः स्यात्। नक्षत्रियः प्रजापतिः पञ्चस्वेव नक्षत्रेषु संपा-तारम्भकत्वेनोच्यते, यदि पञ्चनक्षत्रतोऽतिरिक्तनक्षत्रे संपातारम्भस्तदा पञ्चसु नक्षत्रेषु प्रजापतित्ववर्णनं विरुद्धं स्यात्।

अथ संपातो द्विविधो वासन्तिकः शारदश्च। तत्रैषु हस्तादिषु अनुराधान्तेषु शारदसंपातत्वे वासन्तिको भिन्नेषु नक्षत्रेष्विति तद्वचनं न युक्तमिति चेत्तदपि न शारदसंपातवशतयैव तेषां नक्षत्रियप्रजापतित्वात् तत्र फाल्गुन्यां वसन्तसंपात-नक्षत्रत्वे भाद्रपदायाः शारदसंपातता स्यादिति नक्षत्रियप्रजापतिविरोधः। संपात-सम्बन्धित्वेनैव नक्षत्रियप्रजापतित्वं वक्तव्यमन्यथेन्द्रस्य शतक्रतुवचनं विरुध्येत। पञ्चानामेव नक्षत्राणां शारदसंपातनक्षत्रत्वे ततोऽशीत्यधिकशतांशविप्रकृष्टानां पञ्चानामेव नक्षत्राणां वासन्तिकनक्षत्रता स्यात्, शारदसांपातिकानां नक्षत्रिय-प्रजापतित्वेनोच्यमानानां हस्तादिपञ्चनक्षत्राणां हस्तनक्षत्रत पञ्चमस्यानुराधा-नक्षत्रस्य चतुष्पञ्चाशदंशविप्रकर्षेण तावदंशपर्यन्तमेव स संपातो गतिमान् स्यात् आन्दोलितगत्या, अन्यथा नक्षत्रियप्रजापतिवचनविरोधः स्यात्।

एवं शारदस्यान्दोलितगतिमत्त्वे वासन्तिकस्याप्यान्दोलितगतिर्वक्तव्या सापि पञ्चस्वेव नक्षत्रेषु। अन्तरमपि तत्र चतुष्पञ्चाशदंशात्मकमेव वक्तव्यं, तथा सति वासन्तिकसंपातस्य देवदिनादितया वर्णनात्तत्र च पूर्वस्यामुदयात्तानि नक्षत्राणि पूर्वाणि पूर्वदिक्स्थानीति भवेत्, अन्तरं च तेषां चतुष्पञ्चाशदंशरूपमेव स्यात्। तावत्स्वंशेषु सोऽप्यान्दोलितगतिं प्राप्नुवन्नष्टोत्तरशतांशमालारूपः स्यात्। तच्चोपधिसूक्ते या ओषधिरिति मन्त्रेणोच्यते-यास्त्रियुगं त्रयश्च युगं चेति त्रियुगं षट्कं ओषध्यो देवानां त्रते पूर्वाः पूर्वदिक्स्थाः वासन्तिकसंपातस्थाः पुरः जाताः-स्तासां सप्तोत्तरशतं धामानि अंशरूपाणि स्थानानि स्तुवे इति तदर्थात्। ओषध-यश्च नक्षत्राणि देवानामाजिधावनस्थानत्वोक्तेः।

एवं च पूर्वदिक्स्वामीन्द्रः स तु साम्पातिकस्थानस्य संपातपरिभ्रमेण तावन्ति कर्माण्यनुतिष्ठति तानि संपातस्थानान्यनावृतानि स्थानानि चतुष्पञ्चा-शत्सार्धत्रिपञ्चाशदंशरूपाण्येव दक्षिणोत्तरगतिसम्बद्धानि च स्थानान्यनावृतानि-सप्तचत्वारिंशत्सार्धषट्चत्वारिंशद्वा, तथा पूर्णानि योगे शतं सख्या तावत्कर्मकर्तृ-

त्वमिन्द्रस्यैवेति स शतक्रतुरित्युच्यते। तानि च कर्माण्यश्वमेधरूपाणि इति परस्ताद्विस्तरेण प्रतिपादितम्।

एवंनक्षत्रियप्रजापतिविरोधादिन्द्रस्य शतक्रतुवचनविरोधादोपधिसूक्तस्थ वर्णनविरोधान्न फल्गुन्याः संपातनक्षत्रत्वसम्भवः। अथ मार्गशीर्षस्योत्तरायणप्रारम्भकता सापि न सम्भवति फल्गुन्याः सांपातिकनक्षत्रत्वप्राप्त्या नक्षत्रियप्रजापत्यादिविरोधात्। अथ वसन्तप्रारम्भकत्वरूपवर्षादिता तस्य तदपि न सम्भवति। मासनाम्नांपौर्णमास्यां चन्द्रमाः सम्बद्धनक्षत्रवशतः प्रवृत्ते। तदुक्तं पाणिनिना सास्मिन्पौर्णमासीति सञ्ज्ञायामित्यनेन पूर्णमासीनक्षत्रयोगान्मासनामेति पूर्णमास्यां कृतिकाया मासनाम कार्तिकश्चित्रायास्तादृशत्वे मासनाम चैत्र इत्यादिवत्पौर्णमास्यां मृगशिरोनक्षत्रयोगान्मासनाम मार्गशीर्ष इति स्यात्।

संपातार्थं च सूर्यनक्षत्रापेक्षा मृगशिरसश्च मासनामार्थत्वे ततो विप्रकृष्टं सूर्यनक्षत्रं यद्भवेत्तत्र वासन्तिकः संपातः स्यात्तादृशं च नक्षत्र जेष्ठा भवेतत्र वसन्तसंपातस्वीकारे नक्षत्रियप्रजापत्यादिविरोधः स्पष्ट एव। एवं सति न मार्गशीर्षस्य वर्षादिताऽयनारम्भकत्वान्न वा वसन्तारम्भकत्वादिति वर्षादित्वाभावान्न वर्षादित्वेन तस्य भगवद्विभूतिमत्वम्। किन्तु समृद्धिमत्वादेवेति।

यत्तु मृगशिरसो वसन्तादिकल्पनाऽऽग्रयणनामवशतः, आग्रयणनामाग्रहायनत आग्रायणेति वा आग्रयणेतिनाम्नोऽऽहायनाग्रसम्बन्धादिति। तदपि न। तस्मिन्नाम्नि आग्रायणेति वा आग्रयणेति वा आकारादित्वात्। अग्रशब्दसम्बन्धेन अग्रहायन अग्रायण अग्रयणेति नाम्नाः सम्भवो न तु आद्यकारस्य दीर्घसंभावना। अथ तदर्थं अणः प्रत्ययस्य विवक्षणे अग्रहायनसम्बन्धादाग्रहायणमिति वा आग्रायणमिति नाम भवेत् तेन च न हायनाग्ररूपहायनप्रारम्भवोधः। तथा सति हायनाग्रमितिनाम भवेन्नत्वग्रहायनमिति।

तस्मादग्रहायनस्वरूपसिद्धये अग्रहायनपदयोर्बहुव्रीहिर्वक्तव्यः। अग्रे हायनं यस्मादिति। बहुव्रीहौ च हायनाग्रावधित्वेनैव प्रतीयते न तु हायनाग्ररूपवर्षादित्वम्, एवं च हायनाग्रावधिसम्बन्धवोधनादत्रार्थे हायनाग्रावधि-सम्बन्धितः सर्वस्य आग्रहायण–आग्रायण–आग्रयणशब्दैर्बोधः स्यात्। एवञ्चामरकोशे तस्मिन्नेवाग्रहायणीत्यनेनाग्रहायणावधिसम्बन्धिनी क्रिया तस्मिन्नेव मृगशिरस्येवेति तदर्थः न तु मृगशिरसः स शब्दो वाचकः।

अतएव तस्मिन्नेवेति पदप्रयोगोऽमरकोशे। किञ्चाणन्तनिबन्धनस्त्रीत्वमपि तथैवोपपद्यतेऽन्यथा नपुंसकलिङ्गप्रयोगोऽभविष्यत्। अवधित्वं च पूर्वत्वे परत्वेऽपि वा भवति प्रकृते तु पूर्वावधित्वं तथा च यस्माद् हायनाग्रं पूर्वं प्रथमं भवति स आग्रहायणं वा आग्रहायणी वेति तदर्थः। आद्ये नक्षत्रपरत्वमन्त्ये

पौर्णमासीप्रभृतिपरत्वम् । एवं च मृगनक्षत्रेणोदितमर्थात्पूर्ववर्तिनक्षत्रे समुदिते, हायनारम्भप्रवृत्तिः स्यादथवा तस्मिन्नक्षत्रे वसन्तसम्पातप्रवृत्त्या वत्सरप्रारम्भः स्यात् । तच्च पूर्वं नक्षत्रं रोहिणी, रोहिण्यां वसन्तसम्पातो भवेत् । तथा सति आग्रयणपदं वसन्तसम्पातस्य रोहिण्यां प्रवृत्तौ लिङ्गम् ।

तथा सति यजुर्वेदे रोहिणीनामप्रवृत्तौ लिङ्गमुच्यते तस्योपपत्तिः । तत्रोच्यते "देवा वै सर्वान् रोहानरोहन् यत्सर्वानरोहानरोहन् तद्रोहिण्या रोहिणीत्वमिति । यदि रोहिणीतः परस्तान्मृगनक्षत्रेऽपि वसन्तसम्पातो भवेत्तदा रोहिण्या सर्वरोहाभावात्तद्वर्णनमयुक्तं स्यात् । किञ्च नक्षत्रियप्रजापत्यादिविरोधोऽपि । यत्तु ओरायन् इत्यस्य मूलं संस्कृतरूपमाग्रयणेति तदपेक्षया तस्य शब्दस्य रोहिणशब्दतः प्रवृत्तिर्युक्ता । सुलभाऽपि सा तत्रौकारस्याकारभावो हकारलोपो इण शब्दस्य इन्रूपत्वे आदावोकारे आरोइन इति रूपस्य सुपपादत्वम् ।

किञ्च विदेशीयपुराणे आरोयण इत्यस्य राक्षसरूपत्वकल्पनोच्यते, वेदे रौहिणस्यापि सा । यो रौहिणमस्फुरद्वज्रबाहुरित्यादौ राक्षसकल्पनाया वचनेन रोहिणशब्दत एव ओरायणेत्यस्य सिद्धिरनुगुणा । एवं च न मृगशिरसि वसन्तसम्पातबोधकं विदेशीय-आरायणकल्पनमिति । किञ्च मृगस्य प्रजापतिरूपत्वं ब्राह्मणे उच्यते, तत्र सशरमाकाशे मृगनक्षत्रं दृष्ट्वा बाणेन वेधकल्पना वेधनिमित्तं च दुहित्रा सम्बन्ध इत्युच्यते, विदेशीयपुराणग्रन्थेषु इमास इत्यस्या उपरि प्रेमकल्पनोच्यते ।

एवं दिवः आदित्यस्य दुहिता अस्तोत्तरभाविनी उषाः । तस्या एव तज्जन्यत्वेन दुहितृत्वकल्पना न तु उदयप्राग्वर्तिन्यामुषसि दिवो दुहितृत्वकल्पना । तस्या आदित्यं प्रति मातृत्वकल्पनात् । एवञ्चास्तोत्तरवर्तिनी उषा एव दिवो दुहिता, तया साकं प्रेमनिबन्धन एव तस्य बाणेन वेधः । अतएव विदेशीयमुषसं "इमास" इत्यस्या उपरि प्रेमवचनं सङ्गतम् । एवं च मृगशिरसि तत्रास्तोत्तरकालिकी या उषास्तत्कालेऽस्तगिरिशिखरे तस्य नक्षत्रस्य सन्दर्शनेन तत्र प्रेमकल्पना । सम्भवति च रोहिण्यां देवेष्वादित्यस्योदयेऽसुरेषु अर्थात्सुमेरौ तदानीमादित्यस्यास्तमयेन तत्कालिके तस्मिन्नक्षत्रेऽस्तोत्तरदृश्योषः सम्बन्धः प्रेमकल्पनासम्भवः ।

किञ्च तत्पुराणग्रन्थेषु अस्तमुपयतस्तस्य नक्षत्रस्य वृष्टिप्रदं इस्विफरमिति नामाप्युपपद्यते । तत्र हि कुमेरावादित्यास्तनो वर्षाकालप्रवृत्तेर्मन्त्रे प्रतिपादनम्, तच्च देवानां माने इति मन्त्रे प्रतिपादितम् । रात्रौ तत्र मासचतुष्टयपर्यन्तं वृष्टिमत्वात्परवर्तिमासद्वये परदिवसीयत्वकल्पनया रात्रौ ऋतुद्वयकल्पना दिने च तत्तुंत्रयमिति वत्सरे ऋतुपञ्चकत्ववचनं पञ्चपादं पितरमित्यादिष्वुपपद्यते । एवं च नाग्रयणशब्दं आरायणेति नाम वा मृगशिरसि वासन्तिकसम्पादकमिति ।

यत्तु दीक्षाब्राह्मणवशतो मृगशिरसि वासन्तिकसंपातसाधनमिति तदपि न सम्यगिव। दीक्षाब्राह्मणे संवत्सरसत्रार्थं दीक्षाकालास्त्रयो निर्दिष्टा (१) एकाष्टका (२) फाल्गुनी पूर्णमासी (३) चित्रापूर्णमासी। तत्र हेतवः क्रमेणोच्यन्ते १–एकाष्टका संवत्सरस्य पत्नी तस्यामेष एतां रात्रिं वसति। –फाल्गुनीपूर्णमासः संवत्सरस्य मुखम्। ३–चित्रापूर्णमासोऽपि संवत्सरस्य मुखम् इति दीक्षाब्राह्मणं यजुर्वेदे उच्यते, सामवेदेऽपि।

तत्र सामब्राह्मणे सर्वं इमे प्रकारास्तथैवोच्यन्ते केवलं द्वितीयकालः फाल्गुन इत्येवोक्तः। तृतीयकाले हेतुरुच्यते चक्षुर्वा एतत्संवत्सरस्य यच्चित्रापूर्णमास इति। मुखतो वै चक्षुर्मुखत एव प्रारम्भ इति। प्रतिपूर्वं दोषा उच्यन्ते।

तत्र (१) आर्तं वा एते संवत्सरस्याभिदीक्षन्ते, व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते, अन्तनामानावृतू भवतः। (२) सांम्मेघ्य विषुवान्। संपद्यते। (३) तस्य काचन न निर्या। सामब्राह्मणे उच्यते (१) तस्य सा निर्या यदपोऽनभिनन्दन्तोऽभ्यवयन्ति। विच्छिन्नं वा एते संवत्सरस्याभिदीक्षन्ते। आर्तं वा एते संवत्सरस्याभिदीक्षन्ते। अन्तनामानावृतू भवतः। (२) समेघे विषुवान् संपद्यते। (३) तस्य न कापि निर्या।

अत्रैकस्मिन्ननुष्ठाने त्रयो वर्षारम्भा उच्यन्ते, एकस्मिन्वत्सरे त्रयाणां वर्षारम्भाणामसम्भवेन ते भिन्नकालिका वक्तव्याः। तत्रैको वर्तमानकालो परौ द्वौ पूर्वकालिकौ। तत्रेमे वत्सरारम्भाः क्रिमयनारम्भकालिकाः। तत्राद्ये एकाष्टकापक्षे संवत्सरस्यार्तिव्यत्यासदोषैः ऋत्वोरन्तनामत्वदोषश्च। तत्रार्तिः पीडा विनाशरूपो व्यत्यासोऽयनान्तरारम्भरूप इति। व्याख्यासु अयनं हि पूर्वं समाप्तं द्वितीयं प्रारब्धमिति।

ऋत्वोरन्तनामत्वं च अन्तिमनामकस्तत्रर्तुर्भवति शिशिरो भवतीत्यर्थः। अपामनभिनन्दनं च दोषः तदानीं शैत्यात्। परन्तु फाल्गुनीपूर्णमासपक्षे तस्य संवत्सरमुखतोक्तिर्न युक्ता स्यात्। एकाष्टकायामवसितस्य सवत्सरस्य फाल्गुनीपूर्णमासस्य संवत्सरमुखताऽसम्भवः। अयमेव चित्रापूर्णमासपक्षेऽपि दोषः।

अथ वसन्तारम्भकालिका वर्षारम्भा इति द्वितीयः पक्षः। तत्रैकाष्टकायां वसन्तारम्भकालिको वत्सरारम्भ इति वर्णने तस्याः संवत्सरपत्नीत्वं ब्राह्मण उच्यमानं न संगच्छते, पूर्वपक्षेऽप्ययं दोषः। तत्र दिने संवत्सरवासकल्पनया द्वितीयदिनतो वसन्तारम्भो भवेत्। तथा सति एकाष्टकायां दिननक्षत्रं ज्येष्ठा तदनुरोधिसूर्यनक्षत्रंधनिष्ठा स्यात्। धनिष्ठायां माघे वसन्तसंपातकल्पने अश्लेषासु श्रावणे शारदसंपातः प्राप्नुयात्।

तथा सति नक्षत्रियप्रजापतिवचनविरोध । तत्रैकाष्टकाया दीक्षणेऽभामन भिनन्दनदोषश्चानुपपद्यते । न हि तदा वसन्तारम्भे शैत्येनानभिनन्दनमपां सम्भवति । यद्यसौ वसन्तसपातादिर्मन्येत तदानीं सपातस्य सर्ववृत्तपरिभ्रमे एतत्पर्यायगतत्वस्य तत्र कल्पनाऽसम्भवेन पूर्वपर्यायगतत्व वक्तव्य, सपातस्य वृत्ते विलोमगतित्वेन वर्तमानकालतो वर्षसहस्रद्वयाधिककालोत्तर सम्भविष्यतस्तस्य वेदे उल्लेखासम्भव । पूर्वपर्यायगतत्वस्वीकारो चान्यूनविंशतिसहस्रवर्षाण्येतस्य काल स्यादिति ।

किञ्च तदानीं पूर्वं सम्भवतामपरेषामपि वसन्तारम्भाणा दीक्षोपयोगित्वसम्भवेन तदनुल्लेखो सगत स्यात् । एव फाल्गुनपूर्णमास्या दीक्षार्थं ग्रहण तत्र वर्षादिता वसन्तसपातादिरूपा यदि स्यात्तर्हि सपातार्थं सूर्यनक्षत्र भाद्रपदा भवत् । तत्र च सपात इदानीं वर्तमानो ब्राह्मण तस्य वर्णनमसभव स्याद्यतो ब्राह्मणस्यान्ततो न्यूनतो न्यूनसहस्रद्वयान्यूनसंवत्सरकालिकत्वेनैतत्पर्यायगतसपातस्येदानीं वर्तमानत्वस्य वक्तुमशक्यत्वेन पूर्वपर्यायगत तद्वक्तव्यमित्यन्यूनविंशतिसहस्रवत्सरत पूर्वभाविता वर्णनीया स्यात् । पूर्वपर्यायगतत्वे च अपरेषा मध्यवर्तिसपातस्यानानुल्लेखस्यासमर्थनीयत्वापात. । एव चैत्रपूर्णमासस्यापि वसन्तादिमासत्वेन न वत्सरादिमासता, उक्तदोषतादवस्थ्यात् ।

एव तर्हि ब्राह्मणोक्तोल्लेखस्य का गतिरिति चेत् । अत्र ब्रूम —नेमे निर्देशा विभिन्नवत्सरीयसंवत्सरारम्भबोधका किन्तु एकवत्सरीयविभिन्नकालिकवत्सरारम्भबोधका, तथाहि वत्सरारम्भोमेरुपर्वतस्य दक्षिणोत्तरदिग्वर्तिनो. सुमेरुकुमेरुरूपयो. शृगयोर्दिनारम्भात्मक । तत्रत्य दिन विषुववृत्तीयस्थानेषु तत्सविधवर्तिषु च स्थानेषु यत्र दिनरात्रभाव षष्टिघटिकाधिककालेन न भवति तेषु वत्सरशब्देन व्यवह्रियते । एव चावत्यो वत्सरारम्भ' सुमेरुकुमेर्वोर्दिनारम्भात्मक' । तत्रत्य दिन च सुमेरौ देवयानशब्देन कुमेरौ च पितृयाणशब्देनोच्यते । तस्य देवयानादेरनेकरूपत्व वेदे ।

यथा वत्सरे मकरसङ्क्रान्तिप्रारम्भे एकम् । उष कालारम्भे द्वितीय, सावित्रकालारम्भे तृतीयम्, आदित्यमण्डलोदयतश्चतुर्थम् । सर्वाणीमानि देवयानान्येव । देवयानवत् पितृयाणस्यापि चातुर्विध्य वेदे । तत्र कर्कसक्रमणादौ प्रथममुष: यानान्येव । देवयानवत्पितृयाणस्यापि चातुर्विध्य वेदे । तत्र कर्कसक्रमणादौ प्रथममुष कालादौ च पूर्ववदवशिष्टानि । केवल तेषा कालो भिन्नरूप: स्यात् । यत्तु आदित्योदयकालिकमेव पूर्वतन वैदिकमपरेषा पश्चात्कालिकत्वम् इति ।

तदयुक्तम् । अपरेषामपि वेदे उपलम्भात्, अत एव 'पथिभिर्देवयानैरिति बहुवचनोल्लेख उपपद्यते । देवयानानामनेकत्वे पितृयाणस्यानेकत्व सिद्धप्रायम् ।

किञ्च मन्त्रे एव चतुर्णां देवयानानामुल्लेखो "ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति" । इति । किञ्च सप्तमर्यादा इति मन्त्रे 'पथां विसर्गे' इति पथश्चातुर्विध्येनैवोपपद्यत इति विस्तरेण प्रपञ्चितमन्यत्र । तथा सर्वस्यास्य ब्राह्मणस्योपपत्तिः । तथाहि संवत्सरसत्रार्थं दीक्षाग्रहणे प्रथमः काल एकाष्टकारूपः । तदुक्तं तत्र संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन् इति ।

तत्रैकाष्टकाशब्द उषसं बोधयंस्तत्कालरूपां माघकृष्णाष्टमीं बोधयति । अत एव तस्याः संवत्सरपत्नीत्वेनोल्लेखः । व्यक्तो वेद उषस आदित्यपत्नीत्वेन व्यवहारो नैकस्थलेषु । तस्यामेतां रात्रिं वसतीति वर्णनेन संवत्सरस्य तत्र वासः परदिने पुनः प्रवृत्या वासरान्तरूपदिनान्तरारम्भः । उषःकालमारभ्य दिनान्तरारम्भस्य धार्मिकक्रियासु इदानीमपि प्रसिद्धः उषसश्च सुमेर्वादौ त्रिंशत्पर्यायपर्यन्तं प्रवृत्तिः । अत एव त्रिंशतं योजनानीत्याद्युल्लेख इति प्रपञ्चितं विस्तरात् ।

स चोषसःकालो भागत्रयेण विभक्तो रूपत्रयसम्बन्धात् । अन्तिमो भागोऽरुणवर्णः । यमभिप्रेत्योषसां त्र्यरुणप्सव इति विशेषण सूक्तेषु । मध्यमो भागः श्वेतवर्णः । यमभिप्रेत्योषसां श्वेत्येति विशेषणमेवं प्रथमो भागः कृष्णवर्णः । तं कृष्णवर्णभागमभिप्रेत्योषसोऽत्र रात्रिशब्दसम्बन्धेन वचनम् । एवञ्चैकाष्टकाशब्देनोषः कालादिरूपस्य माघकृष्णाष्टमीरूपैकाष्टकाकालस्य ग्रहणे तत्र दीक्षणे परवर्तिवर्णनं संगतम् । तथाहि—एकाष्टकायां दीक्षायां साक्षात्संवत्सरमारभ्य दीक्षोक्तिः । संगता उषःकालस्यापि दिनादित्वात्संवत्सरादित्वेन साक्षात् संवत्सरमारभ्य दीक्षोक्ति. ।

अत्र पक्षे दोषोक्तिरपि युक्ता । तथाहि एकाष्टकायां दीक्षणे पूर्वसंवत्सरस्यार्तिविनाशस्तमभिलक्ष्य दीक्षणं दोषः । तत्र संवत्सरस्य वासवर्णनेनावसानबोधनात् । किञ्चोषसि दिनव्यवहारेऽपि मुख्यं दिनमादित्योदयमारभ्यैव । तथा सति ततः प्रवर्तमानसंवत्सरस्य सावित्रकालान्ते विनाशस्तमभिलक्ष्येत्यार्थो वा । व्यस्तत्वं चात्रैव पूर्वसंवत्सराविनाशेन विपरीतता । एकाष्टका रात्रिः पूर्वसंवत्सराय दीक्षा चोत्तरसम्बद्धेति व्यस्तता । किञ्च ऋतूनामन्तनामत्ववचनमपि अत्र पक्षे युज्यते । तथाहि संवत्सरसत्रस्य सोमयागरूपत्वेन तत्र दीक्षोपसत्क्षमनुष्ठानं पूर्वमपेक्ष्यते ।

तत्र दीक्षार्थं द्वादशदिनानि उपसदर्थानि च द्वादश दिनानि । तावत् पर्यन्तं दीक्षणीयोपसदिष्टीनामनुष्ठानान्ते सवनरूपैकाहसोमयागरूप संवत्सरावयवानुष्ठानप्रारम्भः । तच्चानुष्ठानं सुत्याशब्देनोच्यते । एवञ्च दीक्षोपसदर्थं चतुर्विंशतिदिनान्यतीत्य सुत्याप्रारम्भः । एकाष्टकादीक्षणपक्षे फाल्गुनकृष्णाद्वितीयातः सुत्या प्रारम्भः स्यात् । तथाच तत आनुष्ठानिकमासकल्पने कृष्णपक्षादित्वं मासानां

स्यात् तदिदमन्तनामत्वमृत्वो । ऋतुशब्देन च मासग्रहण, अत एव ऋतु इति द्विवचनोल्लेख । किञ्चेद यागानुष्ठान दैविक, दैविके कर्मणि शुक्लादित्वमपेक्ष्यत इति तद्विरुद्धकृष्णपक्षादित्वप्राप्त्याऽन्तनामत्वस्य दोपत्वम् । फाल्गुनकृष्णाद्वितीयाया प्रारब्ध सावत्सरिकसुत्यानुष्ठान फाल्गुन एव समाप्त स्यात्ततोऽवभृथगमन तदानी शीतकालसत्वेनापामनभिनन्द्योक्ति ।

तत्र दोपस्य निर्याशब्देन वचनादय दोपो निष्कृष्ययानरूपमुख्यसम्वत्सराभिप्रायेण । मुख्यः सवत्सरश्च चित्रापूर्णमासे प्रारम्येतेति । अत एव तस्य चक्षुष्ट्वाभिधानम् । तदानीमादित्यमण्डलोदयेनादित्यमण्डलस्य चक्षुष्ट्वेन वेदे "चक्षुर्मित्रस्य वरुणस्याग्ने" इति वचनेन सवत्सरे चित्रापूर्णमासस्य चक्षुष्टवाभिधानम् । एव सति फाल्गुने शैशिरमासत्वेन शैत्यसत्वम् । एव सत्युक्तविधदोपसम्भवेनैकाष्टकाया दिनरूपसवत्सरादित्वेऽपि न दीक्षानुष्ठानप्रारम्भ । तत सावित्रकालरूपादिनादिरूपसवत्सरादित्वमभिप्रेत्य द्वितीय काल उच्यते दीक्षणे, "फाल्गुनीपूर्णमास" इत्यादिना । अयमप्येकवत्सरीयवत्सरारम्भ एवेति ।

अत्र पक्षे एकाष्टकावदन्तनामत्व मासाना न भवति शुक्लपक्षत एव सुत्याप्रारम्भात । तथाहि फाल्गुनीपूर्णमास दीक्षाप्रारम्भे द्वादश दीक्षार्थानि द्वादश उपसदर्थानि च दिनान्यतीत्य सुत्यारम्भ । स च चैत्रशुक्लनवम्या तत आनुष्ठानिकमासप्रवत्या शुक्लादित्वमेव मासाना स्यादिति नान्तनामत्वरूपो दाप । एकाष्टकायामिव रात्रिसम्बन्धाभावेन परदिनमात्रसम्बन्धित्वेनातिव्यस्तत्वरूपदोपाभाव । तदभिप्रत्य ब्राह्मण उच्यते – तस्य एकैव निर्या यत्सामेध्ये विपुवान् भवतीति । एकैवेत्यनेनापरदोपाभावो व्यक्त ।

अत्रापि निर्याशब्देन वचनान्निष्कृष्य यानरूपमुख्यदिनारम्भाभिप्रायेणैको दोपः साम्मेध्ये विपुवत प्राप्ति । मुख्यो दिनरूपवत्सरारम्भश्चित्रापूर्णमासे तत पण्मासान्ते वर्पाकालसमाप्तिराश्विनपूर्णिमाया स्यात् । एवञ्च फाल्गुनपूर्णमासे दीक्षणे सुत्याप्रारम्भश्चैत्रशुक्लनवम्या स्यात् । ततो मासक्लृप्तौ पण्मासान्ते विपुवदनुष्ठानमाश्विनशुक्लदशम्या स्यात् स च वर्पाकाल इति साम्मेध्ये विपुवत प्राप्तिरूपो दोप इत्युक्तम् ।

ततोऽपर काल उक्तश्चित्रापूर्णमास इति, तत्र दीक्षणे ऋत्वोरन्तनामत्वा प्राप्ति शुक्लपक्षादित्वान्मासानाम् । कार्तिकशुक्लदशम्या विपुवत प्राप्त्या सम्मेधे विपुवत प्राप्तिरूपाऽपि दोपो नास्ति । अत एव तस्य न काचन निर्यत्युक्ति, एव सति चित्रापूर्णमासस्य निर्दोपत्वेपि न तत्र दीक्षण किन्तु दीक्षण पूर्णमास्या पूर्वं चतुरहे दीक्षणमित्युक्त ब्राह्मणे । तत्र पूर्णमास्या. पूर्वश्चतुरह कस्याः पूर्णमास्या. चैत्र्या वा फाल्गुन्या वा माघ्या वेति सन्देहे सान्निध्याच्चैत्र्या

ग्रहणे प्राप्ते उच्यते माघ्या एव पूर्णमास्याः पूर्वश्चतुरहो ग्रहीतव्यः। तत्र हेतुगर्भ वचनमुच्यते, तथा सति दीक्षणे एकाष्टकायाः परित्यागो न स्यादिति।

किञ्चैतरेयब्राह्मणे देवानामनुष्ठाने वासन्तिकादिमासैर्दीक्षाया अप्राप्तिः। किन्तु शैशिरमासाभ्यामेव दीक्षा प्राप्तिवचनात् माघफाल्गुनयोरेव शैशिरमासत्वात्तत्रैव दीक्षामिति माघ्येव पौर्णमासी चतुरहेऽवधिरूपा मन्तव्येति, चैत्र्याः शैशिरत्वाभावात् फाल्गुन्याः शैशिरत्वेऽपि सम्मेधे विषुवतः प्राप्तिदोषसत्वाच्छैशिरत्वात् माघ्येव ग्रहीतव्येति। एवचेदं ब्राह्मणं न मृगशिरसि वसन्तसम्पातसाधकम्।

वस्तुतस्तु अग्रयणशब्दोऽग्रेऽयनावधित्वेन उत्तरस्यां सुमेरावुदितपूर्णमण्डलादित्यपरः। तस्य पूर्णमण्डलोत्तरमेवायनस्य हायनस्य वा प्रवृत्तः। इदं प्रथममुदितं पूर्णं मण्डलं नाग्रे सञ्जायमानायनान्तःपाति परस्तात् प्रवर्तमानहायनान्तःपाति वा। तस्य सम्पूर्णमण्डलोदयोत्तरं प्रवृतेः। यथैतस्य प्रथमोदितमण्डलस्य न हायनान्तःपातित्वमेवं ततः पूर्ववर्ति खण्डितमुदीयमानमण्डलमपि हायनान्तःपाति न। सम्पूर्णमण्डलोदयोत्तरं हायनप्रवृतेरुक्तत्वात्। न चैव परहायनानन्तःपातित्वेऽपि पूर्वहायनान्तःपातिता स्यादिति वाच्यम्।

हायनावसानस्य गत्यवसानावधित्वाद्। गतेरवसानं च खण्डितमण्डलपूर्ववर्ति सम्पूर्णबिम्बपर्यन्तत्वात्। अतः पशुपुरोडाशार्थवादब्राह्मणे पञ्चविधरूपैरादित्यरूपपुरुषस्य पशुत्वकल्पनाप्रदर्शनं यत्किञ्चिद्रूपमुपादाय तस्य पशुत्वकल्पनं, तस्य रूपस्य विनाशे तं परित्यज्य रूपान्तरेण पशुत्वकल्पनं तद्धानावपरेणेत्येवं कल्पनापरम्परायां गमनेन हेतुना तस्य पशुत्वेन ग्रहणे तदपि गमनवत्त्वरूपं भूसंस्पर्शदशायनं विनष्टमिति पशुत्वहेतोर्विनाशेन मेघविनाशात्तस्य परित्यागेन रूपान्तरमविरूपमुपादाय पशुत्वेन ग्रहणमुक्तम्। भूसंस्पर्शो हि अस्तावसरे क्षितिजसम्पर्कः। यत ऊर्ध्वं मण्डलं क्षितिजादधस्ताद्गच्छत्खण्डितरूपतां प्राप्नुयात्।

एवञ्च तदानीं तस्य तत्र परस्ताद् गन्तव्यप्रदेशाभावेन गमनाभावः। तदिदं विस्तरेणान्यत्र प्रदर्शितम्। एवञ्चास्तगमनप्रारम्भावसरे पूर्णं मण्डलं गतिरहितं गतिराहित्यान्न तस्य पूर्वहायनान्तःपातिता। तदिदं त्रयाणामस्तप्रारम्भीयमण्डलस्य परस्ताद्यावदस्तमुदयं वा खण्डितमण्डलस्य परस्तात् सम्पूर्णोदितमण्डलस्येति दण्डनिपातन्यायेन त्रयाणां मण्डलानां पूर्वोत्तरसंवत्सरानन्तःपातित्वेन कल्पनमृभुवर्णनतो व्यक्तम्। ऋभवो हि किरणास्ते पूर्णमण्डलोदयोत्तरं तत्र मण्डले प्रविश्य प्रकाशनादिरूपं कार्यं कुर्वन्ति यावदस्तस्थलीयमन्तिमं पूर्णं मण्डलम्। तन्मण्डले तैस्तस्य परित्याग इति कल्पना।

एतत प्रकारान्तरेणापि तत्र प्रतिपादित यदिमे ऋभव उक्तत्रिविधमण्डलावसरे ततो विनिर्गममकृत्वा तत्र स्वपन्तीवेति। तादृशस्वापोत्तरमृभूणामादित्येन सवादस्योपनिबन्धनमभूमन्त्र। स चाय मन्त्र —"सुषुप्वास ऋभवस्तदपृच्छतागोह्य क इद नो अबुबुधत्। श्वान बस्तो बोधयितारमब्रवीत्सवत्सर इदमद्या व्यख्यत"॥ इति। कृतस्वापा स्वापोत्थिता ऋभवो गोह्यस्माकमिद बोधन जागरण केन कृतमित्यगोह्यमादित्य पृष्टवन्त। तदानी बस्तोऽजस्तद्रूप आदित्यस्तानब्रवीत् "श्वान बस्तो बोधयितास्मि' इति। तेनादित्ये ऋभूणा स्वापस्तत उत्थान च बोध्यते। यद्यपि अत्र तेषा केवल स्वापवचन न तु स्वापस्थाननिर्देशस्तथापि मन्त्रान्तरे तत्स्थान स्वापस्य कालश्च निदिश्येते। तदुच्यते—"द्वादश द्युन्यदगोह्यस्यातिथ्येरणन्नृभव ससन्त" इति। अत्रागोह्यस्यादित्यस्य गृहे आदित्य रूपे गृहे द्वादशदिनपर्यन्त ऋभूणा स्वाप उच्यते। तत्र द्वादशदिनरूपकालावधिनिर्देशस्येद तात्पर्य यत् सुमेर्वादिस्थले आदित्यबिम्बस्य पूर्णस्योदयार्थमस्तमयार्थं वा तस्य प्रदक्षिणाचतुष्टयमपेक्ष्यते। तत्रत्यैका प्रदक्षिणा दिनशब्देनोच्यते। दिनचतुष्टयेन पूर्णं बिम्बमुदेति।

तदपि मन्त्रान्तरे उच्यते। तत्र दृश्यस्यादित्यमण्डलस्य व्यास एकाशात्मक षष्टिकलात्मको वा। तस्यैकाशात्मकादित्यबिम्बस्य तत्र प्रदक्षिणारूपवृत्तमार्गे दण्डकलितन्यायेन माने साकल्येन सख्या भवत्यशाना बिम्बाना वा षष्ट्यधिका त्रिशती। इय च वृत्तभागसख्या सर्वगाणितिक प्रसिद्धा। तत्र प्रतिवृत्तमेतत्सख्याकल्पनस्य बीजमपीदमेव क्षेत्रादिमानस्थले। अन्यथा वृत्तमाने सुलभसगणनीयशतघातरूपसख्याया अकल्पने एतादृशदशघातरूपमस्याकल्पने बीजान्तराभाव स्यात्।

तच्चैकाशात्मकमादित्यबिम्ब सुमेर्वादौ प्रदक्षिणचतुष्टयेन पूर्णमुदेतीति प्रतिप्रदक्षिण प्रतिपर्याय पञ्चदशकल समुदेति। तेन प्रतिपार्श्व दशयुगमित प्रदेश प्रकाशेन व्याप्यते। आदित्यस्य प्रतिपार्श्व दशयुगमिता व्याप्ति सवित्रुपाभिर्व्याप्तिरुच्यते।

अथवा, तत्र सवितु प्रकाश उपस प्रकाश इति व्यवहार उदये चास्ते चोपलभ्यते। तत्रोदयावसरे मित्रशब्देन अस्तावसरे च सवितुर्वरुणशब्देन व्यवहार। मैत्रावरुणसूक्ते युगपञ्चकनियम्यत्वमुच्यते—"मित्राय पञ्च येमिरे जना अभिष्टिशवसे" इति। मित्रन्यायो वरुणस्यापि। उपसस्त्रिशद्योजनसम्बन्धितोपससूक्ते 'अनवद्यास्त्रिशत योजनान्येकैका ऋतु परियन्ति सद्य" इत्यादिनोच्यते। स च सुमेर्वादौ प्रदक्षिणाना योजनत्व गृहीत्वाच्यते षड्भि पर्यायैर्युग भवतीत्यन्यत्र विस्तरेण निरूपितम्।

तथा सति युगपञ्चकमुषसो भवति युगपञ्चकञ्च सवितुरिति मिलित्वा दशयुगपर्यन्तं प्रतिपार्श्वमादित्येन प्रकाशेन व्याप्यते । प्रकाशस्य पाकशब्देन वचनमन्यत्र विस्तरेण निरूपितम् । तदिदं पचनं गृहीत्वा मन्त्रे उच्यते–"उक्ष्णो हि मे पञ्चदश साकं पचन्ति विंशतिम् । आदित्यरूपेन्द्रस्योक्तिर्वृषाकपिसूक्ते एषा । तत्र तेनोच्यते उक्ष्णः सेचकस्य प्रकाशकस्य । तेजसोऽप्शब्देन वचनमन्यत्र विस्तरेणोक्तम्, तथा सति तेजोरूपाणामपां सेचनं प्रकाश इति उक्ष्णः प्रकाशस्येत्यर्थः । तादृशस्य मे मम पञ्चदश पञ्चदश भागाः कलारूपाः पूर्वोक्ताः प्रतिपर्यायमुदीयमानाः साकं युगपदेन विंशतिम्, उक्तरीत्यादित्येन प्रतिपार्श्वं प्रकाश्यं युगदशकं तद्द्वयं विंशतिस्तां विंशतिं तावत्संख्याकं प्रदेशं पचन्ति प्रकाशयन्तीत्यर्थः । पुरुषसूक्ते 'तस्माद्विराडजायत विराजो अधि पूरुष" इत्यनेनाप्ययमर्थो बोध्यत इत्यन्यत्र निरूपितम् ।

एवञ्चात्र मन्त्रे पञ्चत्रिंशद्बलीवर्दपाकवचनम् । पञ्चत्रिंशत् संख्याया नक्षत्रग्रहसंख्याभिप्रायकताकल्पनमयुक्तम् । मन्त्रार्थस्य तत्र स्वारस्याभावात् । अन्त्ये ग्रहनक्षत्रसंख्याभिप्रायकत्वेतत्संख्याभिप्रायेण सप्त अष्टाविंशतिरूपसंख्यावयवनिर्देशो भविष्यदिति न किञ्चिदेतत् । एवञ्च पूर्वोक्ते सुमेर्वादावुदयास्तावसरीयमण्डलत्रयार्थं प्रदक्षिणा द्वादशापेक्षणीयाः । प्रदक्षिणानां च दिनशब्देन व्यवहार इत्युक्तम् । तथोक्तमण्डलीयद्वादशदिनपर्यन्तमृभूणामुक्तरीत्या मण्डले सत्तारूपावस्थितिः स्वापरूपेणोच्यते । एतावतेषां द्वादशदिनानां पूर्वोत्तरसम्वत्सरानन्तःपातित्वेन तदुभयमध्यवर्तित्वेन तत्रोभययोजकत्वेन तत्र सेतुकल्पना पारसीकानां पुराणग्रन्थेषूच्यमाना संगता ।

पाश्चात्यदेशीयपुरातनग्रन्थेषु संवत्सरद्वयमध्ये द्वादशदिनेषु क्रीडाविशेषवर्णनादिकमपि संगच्छते । इदञ्च प्रतिसंवत्सरमेव भवतीति एतस्य चान्द्रसौरवर्षसामञ्जस्यकल्पनाबीजत्वमपि सम्भवतीति । प्रजापतिदुहित्रारोहकल्पनापि एतत्सम्बन्धेन प्रवर्तत इति अनुपदं विचारयिष्यते । सर्वं चेदं मृगशिरसि वसन्तसम्पातसाधकमित्युक्तिः मृगशिरः सविधे ततः पूर्ववर्त्तिन्यां रोहिण्यां सम्पातसाधकमित्यर्थिका चेत्तदा तस्या न विरोधित्वं मृगशिरस्येव सम्पातसाधकं चेत्तदा नैतेषां तादृशत्वं साधारण्यात् प्रत्युत वाक्यान्तरविरोधात् । नक्षत्रप्रजापतिप्रभृतिविरोधः प्रदर्शितो विस्मरेणान्यत्र ।

यत्तु विहिंसोतोरिति सूक्तं मृगशिरसि सम्पातसाधकं तदपि न, तस्य रोहिण्यां सम्पातसाधकत्वस्यापि सम्भवात्, साधारण्यात् । तद्धि सूक्तं वसन्तसंम्पातस्थलीयां परिस्थितिं दृष्टिभेदेन वाकोवाक्यप्रदर्शनमुखेन प्रदर्शयति । यद्यपि सुमेरुकुमेर्वोः सम्पात एकत्रोदयोऽपरत्रास्तमय इति उभयोरेकत्र प्राप्तिर्भवतीति एकस्थलीयोदयपरिस्थितेरपरस्थलीयास्तमयसाधारण्यं भवति । एवञ्च वसन्तसम्पात-

स्थले सुमेर्वभिप्रायेणोदय कुमेर्वभिप्रायेणास्तमय:। तत्रास्तमयमारभ्योदय परिस्थिति रुक्तसूक्त उच्यते।

ऋभूणा द्वादशदिनपर्यन्तावस्थितिसाधनार्थमुक्तरीत्या अस्तावसरीय सर्वान्ते दृश्य पूर्णमण्डल परस्तात् खण्डित मण्डल परवर्ति चोदयावसरीय प्रथमतो दृश्य पूर्णं मण्डलमिति त्रितय गृहीत्वा दृष्टिभेदेनात्र सूक्ते विविधा वर्णना। तत्र सूक्ते प्रतिमन्त्रान्त विश्वस्मादिन्द्र उत्तर. इत्यश. सर्वसाधारणो न तु मन्त्रोपनिबद्धवक्तृविशेषाश'। अवशिष्टोऽशो वक्तृविशेषसम्बन्धी। तत्र प्रथममन्त्रे मत्सखेति पदप्रयोगादिन्द्रसखित्वस्य मन्त्रान्तरे "इन्द्रस्य युज्य. सखेत्यादौ" विष्णौ प्रयोगाद्वृषाकपिशब्देन हरविष्णू वृषाकपीति द्वयोर्ग्रहणाद्विष्ण्वभिप्रायकत्वस्यापि सम्भवेन मदित्ययमिन्द्राभिप्रायक. प्रयोग इति प्रथममन्त्रो वाक्यमिन्द्रस्येति युक्तम्।

इन्द्राण्या वचनत्वकल्पने बीज विश्वस्मादिन्द्र उत्तरः इत्यश। नहि इन्द्रेण स्वाभिप्रायेणैतद्वचन सम्भवति तादृशत्वेन वचने निमित्ताभावश्चेति। परन्त्विद सर्वमन्त्रसाधारण वक्तृविशेषव वयासम्बद्धम्। इन्द्राण्या वृषाकपौ सखित्वस्या प्रसिद्धे.। परस्तादत्रैव सूक्ते सख्युर्वृषाकपेर्ऋते इत्यनेनेन्द्रसखित्वस्य वृषाकपौ वचनादौ वृषाकपिविशेषणम्। किञ्च परस्मिन् मन्त्रे इन्द्रस्य विशेषण 'मतिव्यधिरिति"। तत्र व्यथने बीजाभावो मा भूदित्यस्मिन् मन्त्रे मत्सखेति इन्द्रवचनेन कुशकाशावलम्बनन्यायेन सगतत्वम्। इन्द्रस्य सखा पुष्टेऽत्वमदत्तस्य निमित्तभूतस्य सवनस्य परित्यागेन तद्वशतोऽभीष्टवस्त्वलाभेन दु खसम्भवेन मित्रदु खेन दु.खितत्वाभिप्रायेण व्यथने मित्रदु.खस्य निमित्तस्योक्तरीत्या वर्णयितु शक्यत्वमिति नेदमिन्द्रविशेषणम्।

तत्र सवनपरित्यागवचनेन तत्र वृषाकपिरूपेऽस्तावसरीयेऽन्तिमे सम्पूर्णमण्डलेऽस्तसम्बन्धो व्यज्यते। एव सति रश्मीना तस्मिन्नवसरे कार्यकरणवतो विराम इति ऋभूणा स्वापे आतिथ्ये वेद सूचकमिति। अथ चास्त कुमेर्वभिप्रायक इति मदधातुप्रयोगतो विज्ञायते। "यत्प्रातर्मध्यन्दिनं सायञ्च तानि सवनानि" इति यजुर्ब्राह्मणे उक्तेरपि पदस्य पूर्वमनुवर्तनेन सायमदनसम्प्राप्ति।

"सोतोर्व्यमृक्षतेति" वचनेन सोमसम्बन्धप्राप्त्या सोमस्यादनीयत्व धारारूपेणेति सोमधाराविषये सूक्ते 'स्वादिष्ठया मदिष्ठया पवस्व सोमधारयेति" विशेषणद्वयवचन 'स्वादिष्ठा मदिष्ठेति" तद्व्याख्यान ब्राह्मणे, "स्वादिष्ठा वै देवेषु पशवो मदिष्टा असुरेष्विति" मदसम्बन्धस्यासुरेषु वचनादसुरसम्बन्धस्य शरद्धेमन्त शिशिरस्त आसुरा ऋतवो सुरेषु तर्हि भवन्तीति ब्राह्मणं वचनेन तदृतुसम्बन्धस्य सुमेर्वभिप्रायेण कुमेरौ सत्वेन तस्यासुरसम्बन्धिता। मदसम्बन्धस्योक्तरीत्या असुरेषु।

सवनविसर्गश्चास्तावसर इति कुमेरौ अस्तावसरीयोऽयं सवनविसर्ग इति जायते, एवं सति तदवसरीयस्यान्तिमसम्पूर्णदृश्यमण्डलस्य वृषाकपिवोध्यत्वमत्र विज्ञायते। अस्तस्यादित्यमरणरूपत्वकल्पनेय श्मशानभूमिरिति तत्र वर्तमानोऽसौ वृषाकपी रुद्ररूप इति भवति। वृषाकप्यर्थाभेदेनेन्द्रसखित्वम्। अत एव परमन्त्रे अतिव्यथिरिति इन्द्रविशेषणं संगच्छत इति।

एवं सति विहिसोतोरसृक्षत नेन्द्रं देवममंसतेत्यंशोऽपि न कस्यापि वक्तुर्वचनांशः किन्तु साधारण एवेति। एवञ्चान्तिममपोदं पूर्णं मण्डलं तच्च पूर्वस्यां दिशि, पूर्वदिक्स्वामी चेन्द्रः। खण्डितञ्च तद्रूपम्। अत एव मन्त्रेषु तस्य आखण्डलशब्देन वचनम्। खण्डितत्वेन पूर्णत्वेनादृश्यत्वं गृहीत्वा इन्द्रस्य सत्वविषये सन्दिग्धता। अत एव तत्सत्वप्रतिपादनार्थं सजनीयं सूक्तमित्यन्यत्रोक्तम्। ततः परस्तादस्तारम्भ उदयारम्भश्च सहैव। एकत्र यथा यथास्तमयते तथा तथापरत्रोदयं प्राप्नोतीति।

एवञ्च कुमेर्वभिप्रायेण खण्डितभावप्रारम्भदर्शनेन इन्द्रोऽपि तदनुगच्छतीति कल्पनयेन्द्रः परा धावन् अतिव्यथायुक्तः। अर्थादत्र परावावने हेतुरुक्तः, सवनपरित्यागेन वृषाकपेरिष्टाप्राप्त्या दुःखिनत्वमिव मित्रदुःखेनायमपि दुःखित इत्यतिव्यथित्वं तस्य। व्यथानिदानस्य मित्रदुःखस्यापनोदनाय पराधावनमिन्द्रस्य। एवं सतीन्द्रेण स्वीयं कर्म सोपमानं हित्वा पराधावनमतिव्यथित्ववशतः तदुक्तमन्यत्र।

परावति देशे सोमपानाभाव उच्यते अन्यत्र सोमपीतये नो अह नैव प्रविन्दसि लभसे, तत्र सोमपानं न लप्स्यस इति इन्द्रं प्रति वचनमर्थादिन्द्राण्या इत्यर्थः। अतिव्यथया मित्रमनुसरंस्तन्निवारणायेति मन्त्रे उच्यते। स्वीयं कर्म सोमपानं हित्वान्यत्र गमनेन गमनस्यातिगुरुत्वं तच्च मित्रसाहाय्यादिरूपावश्यकरणीयत्ववशत इति गृहीत्वोच्यते अय वृषाकपिः। अत्रायमिति विशेषणादपरोऽपि वृषाकपिर्भवतीति विज्ञायते। तस्यास्तप्राप्त्या कृष्णवर्णवशतो हठादृश्यत्वाभावेन मार्गणीयतया मृगरूपत्वमिति गृहीत्वोच्यते अयं हरितवर्णमृगरूपो वृषाकपिस्त्वां किमकरोत् तवैतेन किं प्रियमनुष्ठितं यद्वशतः स्वीयं कर्म हित्वा साहाय्याय प्रवर्तसे। साहाय्यस्वरूपमुत्तरार्धेनोच्यते-"यस्त्वं यस्मै अस्मै इरस्यसि"। इरस्यसीत्ययं शब्द इराशब्दादन्नार्थादिच्छायां क्यचि लालसायां सुगागमे निष्पन्नः। अत्यन्तमुत्सुकत्वेनान्नमिच्छमि अयोर्वा पुष्टिमद्वस्विच्छसि।"

एवं रूपेण तद्दुःखनिवारणेन हे इन्द्र यमिमं प्रियं तत्र सखिभूतं सम्मुखं यथाभवेदेवं रक्षसि अस्य वृषाकपेः कर्णे वराहयुः श्वा जम्भिपदपि। अत्राकस्मात् कुतः पुनर्वराहयोः शुनः सम्प्राप्तिर्येनास्य वृषाकपेः कर्णे जम्भनोचितः। अथाक्षेपमात्रमिदं न वस्तुसत्। तर्हि शुना जम्भवचनेनालन्त्वे शुनो वाराहयुरिति

विशेषणस्य का सार्थकता । अथ भक्ष्याक्रमणेनातित्वरोपेतधावनबोधनाय तदिति चेत्तदानीं भक्ष्यविशेषवराहस्य वचने हेतोरसत्त्वं यस्य कस्यापि भक्ष्यस्य मृगादेरतित्वरया धावमानस्याक्रमणायातित्वरोपेतधावनलाभसम्भवात् ।

अथ वृषाकपेर्मृगत्वोक्त्या सम्पातस्थलीयनक्षत्रे मृगाकृतिकल्पनया तस्य कल्पितमृगाकृतेस्तारकाविशेषस्य सविधे विद्यमानस्य कल्पितश्वाकृतेस्तारकसंघस्य वशात् शुना जम्भनोक्तिः । तदपि न, सम्प्राप्तिसाजात्यान्नक्षत्रेऽश्वाकृतिकल्पनं, तत्कल्पनाच्च सम्प्राप्तिरित्यन्योन्याश्रयात् । एवं तत्र श्वाकृतिं कल्प्यमानेन धावतः शुनः कल्प्यते । एवं सति तत्र वराहयुरिति विशेषणस्यासंगतिः । तत्रान्यत्र वराहत्वाकल्पनात् । तस्मादत्र श्वशब्देन न तन्तारकासंघरूपस्य शुनो ग्रहणं किन्तु श्वशब्देनात्र प्रतिप्रदक्षिणमावर्तमानरूपस्यादित्यस्यैव ग्रहणं स च वायुरूपः । वायौ श्वशब्देन वचनं मातरिश्वेत्यादौ दृष्टम् । वृषाकपित्वमादित्यस्य दक्षिणोत्तरागमने वायुत्वं पुनरावर्तने ।

तत्र पूर्वपश्चिमगतिरनुभूयते सा पञ्चदशकलाभिर्बिम्बस्य । एवं प्रतिप्रदक्षिणं वायुरूपत्वे तस्य पञ्चदशकलामात्ररूपत्वेनाखण्डमण्डलरूपेणादर्शनाददृश्यत्वम् । तदुक्तमन्यत्र मन्त्रे ध्राजिरेकस्य ददृशे न रूपम् इति । एवञ्च दक्षिणोत्तरा गच्छतो वृषाकपेः सर्वासु दिक्षु प्रसृमरकिरणरूपकर्णसम्बन्धितेति पूर्वपश्चिमदिशोरपि कर्णसम्बन्धः । तत्र वृषाकपेर्दक्षिणोत्तरगतिशालितया याम्योत्तरवृत्तसम्बन्धिता वायोश्च पूर्वपश्चिमगत्या स वृषाकपेरेकेन पार्श्वेनागत्यापरेण पार्श्वेन गतः स्यादिति ।

तेन वृषाकपेरेक एव कर्णस्तत्र सम्मुखत्वेन स्पृष्टः स्यात् । तदिदं कर्णसम्बन्धित्वं श्वशब्दश्लेषेण सारमेयेण जम्भनमित्युक्तिः अथ वृषाकपिर्मेरोर्दक्षिणे कुमेर्वास्यस्तंगतोऽथवा गतास्तमित इति तत्राप्यस्तवेलायां परिभ्रमन् एवास्तमियात् । तत्रास्तवेलावर्तिप्रदक्षिणात्मकभ्रमणे गतिमान् वायुरस्तस्थलं प्राप्नुवन्भवेत् । कुमेरौ चास्तमारभ्य वर्षाकाल इति तत्कालिकमेघमनुलक्ष्यैवासौ वायुरूपः श्वा गच्छतीति तस्य वराहयुशब्देन वचनम् । मेघनामसु वराहशब्दस्य निघण्टौ पाठात्तद्रूपवराहमनुलक्ष्य वायोर्गमनमेव श्लेषेण शुनोऽपि गमनमिति वराहयुता तस्य । उक्तरीत्या वृषाकपिकर्णसम्बन्धितया शुनो वराहयोः कर्णे जम्भनमिति वचनं मन्त्रे ।

तत्रास्तोत्तरभासमानेन तेजसा वस्तुजातप्रकाशनं प्रियवस्तुसंपादनपूर्वं प्रकाशनमिति गृहीत्वा प्रियाः तष्टानीति प्रकाश्यवस्तुनिर्देशः । तत्प्रकाशनं व्यक्तशब्देनोच्यते । व्यक्तशब्दे विपूर्वस्याञ्जुधातोः क्तप्रत्ययः । अञ्जुधातोस्तु व्यक्तिबोधकता । व्यक्तिश्च स्पष्टः प्रकाशः । एतच्चास्तोत्तरं वर्तमानोपरूपसान्ध्य-

प्रकाशरूपेन्द्राणीकृतम् । तच्च कुमेरावस्तोत्तरमिन्द्राणीप्रकाशितं वस्तुजातं तदानीं प्रवर्तमानमेघैरावृतम् । अथवा सूर्यास्तोत्तरं रात्रिप्रवृत्यारात्र्याश्च दोप शब्देन वचनं तच्च दोपकरणादोपश्च तमोरूप इति इन्द्राण्याः प्रियवस्तुदोपोक्तिः ।

तदिदमावरणं वृपाकपिकृतमिति वृपाकपेरुपरि इन्द्राण्या रोपकल्पना । वृपाकपिरादित्यात्मेत्युक्तम् । तस्मिंश्चादित्ये शिर आदिरूपेण कल्पनेति प्रकृते वृपाकपिविम्बरूपस्य वृपाकपेः शिरसोऽस्तमयेनादर्शनमिन्द्राण्या शिरसश्छेदेन संपादितमिति कल्पनम् । उक्तरीत्या प्रियविनाशकरत्वेन वृपाकपेर्दुष्कृतत्वमिति तस्य दुष्कर्मकारिणः कृष्णरूपमाप्तस्य गमनं तत्सुगमनं न भवति । स सुगमनाभावः प्रियवस्तुविनाशकुपितेन्द्राणीकृत इतीन्द्राणीवचनत्वेन मन्त्रे उपनिबद्धः । तदुक्तम् "श्वान्वस्य जम्भिपदपि कर्णे वराहयुः, प्रिया तष्टानि मे कपिर्व्यक्ता व्यदूदुपत् । शिरोन्वस्य राविपं न सुगं दुगकृते भुवमिति ।

एतावता प्रवन्धेन कुमेरावस्तस्थलीयान्तिमपूर्णदृश्यमण्डलसम्वन्धिप्रतिपादनं सूक्ते । ततो मध्यस्थाने खण्डितदृश्यविम्बाभिप्रायेण वर्णना परवर्तिमन्त्रैः । सर्वत्र वर्णनेऽनुशब्दप्रयोगेण कल्पितत्वप्रतीतिः । मध्यवर्तिखण्डितविम्बस्थले नानाविधा कल्पना । स्त्रीन्द्रियकल्पनापि पुमिन्द्रिय कल्पनापि तद्योगकल्पनापि । उदयत आदित्यस्य भागशब्देन वचनम् । तदुक्तं निरुक्तकारेण तस्य कालः प्रागुत्सर्पणात् इति । उदयस्थानमध्यवर्तित्वमिन्द्रस्य । इन्द्रस्येन्द्रियेणेत्यादौ तस्यावयवत्वेन निर्दिश्यमानपीन्द्रियं तदभिन्नम् । तदुक्तं निरुक्ते आत्मैवैपामायुधं वाहनमात्मैवैपां सर्वं देवस्य देवस्येत्यनेन ।

एवमिन्द्रियाभिन्न इन्द्र इति तत्र पुमिन्द्रियकल्पनापि । इन्द्रस्थानविशेपाभिप्रायेण तद्योग कल्पनापि तत्र । तदिदमश्वमेधे जायोपनिपातादिकल्पनादिव्यवहारेण व्यक्ततरम् । तेन रूपेणात्र मध्यवर्तिविम्बवर्णना । तदुक्तमिन्द्राणीवचनत्वेन मन्त्रे "नयत्स्त्रीसुभसत्तरे"त्यादिना । अत एवात्र पूर्वापरसंगतिः सूक्ते । अन्यथा पूर्वं वृपाकपेरुपरि क्रोधेन तच्छिरश्छेदनोत्तरमकस्मादिन्द्राण्या स्वरूपवर्णन मिथुनव्यापारस्तत्र योग्यायोग्यत्वादिकं वर्ण्यमानमसगतं स्यात् । एवञ्चैतेन वर्णनेन मध्यवर्तिखण्डितविम्बवर्णना । ततः परस्तादचिरोदितसंपूर्णदृश्यमण्डलोपवर्णना । तत्र सम्पूर्णदृश्यमण्डलस्यापि वृपाकपित्वेन वर्णना । अत एवात्र वृपाकपिवर्णने इदमेतच्छद्वाभ्यां विशेपणम् । तत्रेन्द्राण्या वचने स्वरूपवर्णन योगवर्णनादिकम् ।

इन्द्रवर्णने वृपाकपेरुपरि क्रोधकरणमयुक्तं देवतातोपकरत्वात्स्वस्य वृपाकपिना सख्येन तद्विनाऽवस्थानाशक्तिः स्वरूपवर्णनं च, इन्द्रेण स्वरूपवर्णने मध्यवर्तिस्थानसम्बद्धकलापञ्चदशसम्वन्धित्वं तावतोभयपार्श्ववर्तित्रिंशत्यशस्थानपर्यन्तं

तेज सम्बन्धात्पाककल्पनोभयकुक्षिपूरण तेजसेत्यादिवर्णनम् । तत परवर्तिवृषाकपिवर्णने उच्यते "अयमिन्द्र वृषाकपि परस्वन्त हत विदत् । असि सूना नव चरुमादेघस्यान आचितम्" । अयमिदानी दिनप्रारम्भीयो वृषाकपि परस्वन्त परस्तात विदूरे कुमेरुप्रदेशे विद्यमान हतमिन्द्राण्या । अस्तेन कृष्णरूपना गतमत एव मार्गणीयतया मृगरूप तमविदत् प्राप्नोतु ।

एवञ्चैतद्वृषाकप्यपेक्षया हतस्य मृगरूपस्य भिन्नत्वेऽपि न स मृगनक्षत्ररूप । एवमुदयावसरीयकलामात्रस्यास्तावसरीयस्य वैककलावशेषबिम्बभागस्यासिसाजात्यादसित्व स चासि सूनारूपो हिंसक इत्यर्थ, उदितबिम्बस्य आदनभाण्डरूपनवचरुरूपता त चरु चरुभाण्डात अनन्तरमुपस उदयात् प्रागस्तोत्तर च तिर्यक्प्रसारितेजोरूपतया युगस्थाने बिम्बे ईपयोर्मीलन पश्चादविसारि ईपारूप तेजोयुतान स्वरूपम । तच्चैधनीय मध्यवर्तितमोरूपैधायुतम् । वृषाकपिरय गृह्णातु । उपस्यनस्त्वकल्पना "एतदस्या अन शये सुसपिष्ट विपाश्या" अपापा अनस शरत्सपिष्टादह विम्युपो इत्यादो ।

इन्द्रस्य मध्यवर्तितया तेनोच्यते पूर्ववर्तिन दास परवर्तिनमार्य विचिन्वन् पाकसुत्वनो रात्रिकालीनात् सोममुदयावसरे पिबामि । रात्रो सञ्चितस्य तेजोरूपसोमस्य कलामात्रोदितेनेन्द्रेण पान क्रियत इति एकयेत्यादो वर्णितम् । इन्द्रेणोभयसन्दर्शनमुक्त तदेवोच्यते, अस्तगतोवृषाकपिस्तदुद्दिश्योच्यते–"वृषाकप पुनरेहि त्वदीयागमने त्वमह च सुविता शोभन सवन कल्पयावहा आवाम् । यश्च स्वप्ननशन आदित्यस्तद्रूपस्त्वमस्तमेपि पथा पुनरिति ।

एवञ्चेद सातत्येन प्रचलति । तद्बोधनाय द्वितीय पुन शब्द । गमनागमनमार्गस्तु न बहुदूर इत्युक्तम्–धन्व च यत्कृन्तत्र च कतिस्वित्ता वियोजना इत्यत्र । कृन्तत्र कृत्त प्रदेश । अस्तावसरे प्रकाशितात्प्रदेशात्पृथक्कृत । तत आरम्य अर्थादस्तस्थानमारम्य धन्व निरुदक सर्वथा तमोमय प्रदेश । वेदेऽप्स्त्वेन तेजसा बोधनेन तद्रहितो निरुदक प्रदेश । स तु न बहुदूर इत्युक्त कतिस्वित् स्वल्पानि योजनानि । अत वृषाकपेर्नेदीयस सविधवर्तिनो गृहान् स्थानानि प्रदेशान् । तेषु प्रदेशेष्वित्यर्थ । अस्तमेहि । तत पुनरेहीत्युक्तम् । यदोदञ्च्युदक्स्थित गृह हे वृषाकपे इन्द्र युवामाजनन्तन तदानीं स वह् वघयुत । अघशब्देनान्तम उच्यते । तमसोऽह, शब्दबोध्यतया 'सप्तमर्यादा' इत्यस्मिन्नुक्तत्वेन तत्समानार्थोऽघशब्दोऽपि तम एवाह ।

एवञ्च पुरुवघ, पूर्वघ बहुतमा स वृषाकपिरूपो मृग क्व कुत्र गतो जनानां मोहकर्ता । एवञ्च अत्र मृगशब्द प्रथमत उक्तो यो वृषाकपिस्तावसरीयस्तमाह । एवञ्चैतेन न मृगशिरसो बोध इति नैतन्मृगशिरसि वसन्तसम्पातसाधकम् । यदि

मृगशिरसि सामीप्ये सप्तमीं गृहीत्वा मृगशिरोनक्षत्रसविधे रोहिण्यां वसन्तसम्पातस्येदं चिह्नमित्यर्थो विवक्ष्यते तदा न विरोधः। नक्षत्रियप्रजापत्यादिवचनान्यपि उपपन्नानि भवन्तीत्युक्तपूर्वमेव, एवं चैतेन सूक्तेनास्तस्योदयस्य वावसरे पूर्वोक्तत्रिविधमण्डलस्य वर्णनम्। तदेतत्त्रयस्य कालो न पूर्वस्मिन्नहनि वत्सरे वा अन्तः–पतितो न वोत्तरस्मिन्निति एतत्त्रयसम्बन्धिनो द्वादशदिनात्मककालस्य ऋभुस्वापार्थत्वमुक्तं सगच्छते इति। ऋभूणां स्वापादिविषयो विचारः पूर्वमत्रोक्तोऽन्यत्रापि निरूपित इति।

एवं वेदे प्रयुज्यमानसंख्यादीनां संख्येयासन्निधाने तत्सन्निधाने वाऽर्थस्यानेकस्थले निर्णयो न भवति, तदर्थं मन्त्रान्तर उच्यमानतादृशव्यवहारस्यानुरूप्येण निर्णयार्थं प्रयासः। यथा आग्नेये सूक्ते त्रीणि शता त्रीणि सहस्राण्त्रिंशच्च त्रयश्च देवा इत्युक्तं, कुत एतावन्त एव देवा इति निर्णयापेक्षा। स चोपलक्षणतया न निर्णेतुं शक्यः। उपलक्षणत्वे कुत एतावत्संख्यापर्यन्तानुधावनं, प्राथमिकीं काञ्चन संख्यामुद्दिश्योपलक्षणतया व्याख्यानस्य सम्भवात्।

एतत्संख्याया उपलक्षकत्वाभावो विवक्षितार्थत्वं निविद्वर्णनवशतो ज्ञायते, वैश्वदेवीषु निवित्सु एषा संख्या षड्वारमुक्ता, तदुक्त तत्र–त्रयश्च त्री च शतात्रयश्च त्री च सहस्रा त्रयश्च त्रिंशच्च। तावन्त उद्धरणे, तावन्तो निवेशने, तावतीर्ग्नाः तावतीः पत्नीः, तावन्तो रातिषाचः इति।

एतेन न केवलं सा संख्या विवक्षिता किन्तु तत्सम्बन्धवशतो परापि काचन संख्या बोध्यते ते च देवा इति। अर्थाद्देवशब्देन एतावन्तो देवा विवक्षितास्ते च दिवारात्रसम्बन्धिन इति। दिवारात्रिसम्बन्धेनैकवृत्तसम्बन्धो भवतीति। एकस्मिन् वृत्ते देवसंज्ञका भागा एतावन्त इत्यपि ज्ञायते। एवं सति स्थलान्तरे निर्दिश्यमानया "षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण दुष्पदा रथ्यावृणक्" इत्यत्रोच्यमानसंख्यया साकमस्या देवसंख्यायाः कश्चन सम्बन्धः प्रतीतो भवति, स च षष्टिमित्यत्रोक्तसङ्ख्यात्रयेण देवसंज्ञकैकसंख्यासाम्यम्।

अयमेवार्थो मन्त्रान्तरसाहित्येन स्पष्टं प्रतीयते। स्वनयदानस्तुतौ षष्टिं सहस्रमनु गव्यमागात् इत्यनेन गवां षष्टिसहस्राण्युक्त्वा परवर्तिमन्त्रे उच्यते– "पूर्वामनुप्रयतिमाददे वस्त्रीन्युक्तानष्टावरिधायसे गाः" इति। अत्र प्रयतिर्दानं पूर्वमुक्त गवां षष्टिसहस्रात्मक तदनु त्रीन् युक्तानष्टौ गा आददे इत्युच्यते, अत्र त्रीन् युक्तानष्टावित्यनेनैकादशसंख्याविवक्षणे साक्षात्तद्वचनं निर्युक्तिकं स्यात्तस्मादत्र द्वाभ्यां संख्याभ्यां भिन्नं प्रमेयमुच्यते, एका गो-रूपस्य संख्येयस्य बोधिका एका तत्समूहस्य बोधिका। समूहोऽपि कियद्भिरवयवैरित्यनिर्णीतं तथापि पूर्वोक्तषष्टिं सहस्रेत्यनुरोधेनात्र द्वादशभिरवयवैरेकः समूह इति ग्रहणं तच्च

नीनित्यनेन समूहग्रहणेन वक्तव्यमुताष्टावित्यनेनेति निर्णयाभावे उक्तषष्टिमिति सख्यानुरूप्यमष्टावित्यत्र समूहग्रहणे भवतीति अष्टावित्यनेन द्वादशात्मका अष्टौ समूहा विवक्षिता· ।

तथा सति अष्टाभि. षड्भिं पञ्चनवतिमध्यका गावो लभ्यन्ते, श्रीनितेरुद्गृहीतास्त्रय इति सख्यामेलने षष्टिमिति मन्त्रोक्तवन्था निष्पद्यते । सा च गवा सख्या दुष्पदरख्याया वर्जन उपयुक्तेति वर्णनना गन्तव्यमार्गरूपवृत्तसम्बन्धिनीभि द्वयोरपि गोमख्या ६००६६ सपद्यते । नवत्यधिकषट्सहस्ररूपाया वैश्वदेवी-निविदनुसारेण लब्धदेवसख्यया ३३३६x६=२००३४ चतुस्त्रिंशदधिकविंशतिसहस्रात्मिकया उक्त निविदनुसारेण वृत्तसम्बन्धिन्या परस्पर सम्बन्धकल्पने त्रिभिर्गोभिरेको देव इति ग्रहणे उपपद्यते ।

एव ६००६६ सख्याकानि गवा कति देवा इति जिज्ञासाया त्रिभिश्चेद्गोभिरेको देवो नवनवत्यधिकषष्टिसहस्रं कियन्त इत्यनुपातेनोक्तसख्यालाभ ३.६००६६::१=६००६६÷३=२००३३ । एव चैकेन देवेन यदि त्रयो गाव, उक्तचतुस्त्रिंशदधिकविंशतिसहस्रं कति गाव इति अनुपातेन १ २००३३ : ३= २००३३X३=६००६६ इति परस्पर सम्बन्धप्रतीति ।

एव षड्भिर्भागैश्च देवसख्या २००३३ सर्वदेवेन भागेन कियतीत्यनुपातेन ६:१ :. २००३३=२००३३÷६=३३३६ इति सख्या लभ्यते, सा चोपनिषद्-सख्यासमा, श्रीणि शतेति मन्त्रसख्यासमेत्यनयो· सख्ययो. त्रिभिनमन्त्रादिपूच्यमानयोर्वंशत: परस्परसम्बन्धेन परस्पर सम्बन्धे एवरूपो निर्णयो भवति त्रिभिर्गोभिरेको देव: एकेन देवेन गोत्रितयलाभ इति ।

एकस्य देवस्य गोत्रितयसम्बन्धोऽपि ऋभुवर्णनवशत. प्रतीयते । ऋभवो हि त्रयो वर्णयन्ते ऋभुर्विभ्वा वाज इति । मन्त्रेषु वर्णनावसरे तेषा कार्यमुच्यते "वाजो देवानामभवत् सुकर्मा इन्द्रस्य ऋभुक्षा वरुणस्य विभ्वेति । तत्रैकस्य देवसम्बन्धितापरस्य वरुणसम्बन्धितान्यस्येन्द्रसम्बन्धितोच्यते । तत्र वरुणोऽस्तकालिक आदित्य इन्द्रश्च दिवाभागीया देवाश्चोदयात्पूर्ववर्तिन इति त्रयाणा त्रिभि: सम्बन्धः ।

सोऽपि तत्सूक्ते उच्यते शोणामेक उदक गामवाजति मासमेक: पिंशति सूनयाभृतम् । आनिम्रुच: शकृदेको अपानरत् किंस्वित्पुत्रेभ्य. पितरावुपावतु. । इत्यत्रैकस्या निम्रुचोऽर्थादा अस्तमय कार्यम् । अपरस्य शोणवर्णगोसम्बन्धिना-

परस्य सुनयाभूतमांससम्पादनमिति तत्रास्तोल्लेखात्तत्परवर्तिवरुणकालसम्बन्धिता मांसमेक इत्यनेन बोध्यते। अस्तोत्तरं वरुणकालेऽरुणवर्णमेघादिदर्शने मांसखण्डकल्पनायास्तत्र संभवः।

एवं शोणा गौरपि उदयपूर्वकालिकी उषाः। उषसोऽरुणवर्णगोवाहनत्वं निघण्टौ आरुण्यो गाव उषसाम् इत्युच्यते। वाहनवाहिनोरभेदो निरुक्त उच्यते आत्मैवैषां वाहनम् इत्यादिना। तथाचैक उषःकालसम्बद्धः परो वरुणकालसम्बद्धः, अन्यः सूर्यमण्डलसम्बद्धोऽर्थाद्दिनसम्बद्ध इति भवति। एवं चर्भूणां रश्मिरूपत्वस्य निरुक्ते प्रतिपादनाद्रश्मीनां चादित्यमण्डलेन त्रिधा सम्बन्धः, अरनेमिभावेनारनाभिभावेन सम्मुखभावेन चेति तदुभयतः पार्श्वयोः सम्मुखं चेति वर्णनं वेदे याज्ञिकप्रक्रियासिद्धं चेति रश्मीनां गोशब्देन वचनं चेति त्रिभी रश्मिभिरेको देवो मण्डलं व्याप्यत इति, त्रिभिर्गोभिरेको देवस्ते च देवा पूर्णे वृत्ते दिनरात्रात्मके त्रयस्त्रिंशदधिकविंशतिसहस्रसंख्याका इति प्रतीतं भवति।

किं च देवानां विषये त्रय एकादशास इति एकादशत्रययोगिता, सापि लोकत्रयभेदेन। तदुक्तं "ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ। अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वमिति।" तत्रोक्तरीत्या गवां संख्या लोकत्रयाभिप्रायेणैकस्मिन्लोके एतावती २००३३ स्यात्। तत्र विंशतिसहस्रस्य स्वत्वेन ग्रहणे अवशिष्टा गोसंख्या त्रयस्त्रिंशत्तस्या देवत्वसंपादने एकादश देवा भवन्ति प्रतिलोकमिति मन्त्रोक्तसंगतिः। इत्यादिकं विस्तरेण प्रतिपादितम्।

एवं विष्णोश्चतुर्णवतिसंख्यायोगिता सधस्थद्वयसम्बन्धिता उत्तरं दक्षिणं चेति विचारोऽपि मन्त्रानुगुण्येन प्रदर्शितः। इन्द्रस्य शतक्रतुत्वं विष्णुसखत्वमपि विस्तरेण प्रदर्शितम्। चत्वारिंश्यां शरदि इन्द्रेण वृत्रस्य लाभ इत्यादिकं वर्णितम्। वृत्रः कस्तेन युद्धवर्णना कथम्। सोमः कः। तत्पानमिन्द्रेण कथं कुत्रेत्यादयोऽपि विशेषाः प्रतिस्वं विस्तरेण प्रतिपादिताः। मित्रावरुणयोः स्वरूपे अश्विनोश्च स्वरूपविषये भूयान्विचारः प्रदर्शितः। मित्रस्य पञ्चभिर्नियमनं मित्राय पञ्च येमिरे इत्यादिस्थं विचारितम्।

पञ्चजनपदार्थः परस्परमतविरोधान्मूलनद्वारा प्रकाशितः। वेदे प्रश्नाः केचन पृच्छामि त्वेत्यादावुक्तास्तदुत्तराणि च केन प्रसंगेन कथं च सम्यक् भवन्ती-

त्यादिक मन्त्रान्तरसाहित्येन प्रकाशितम्। "चत्वारि वाक्" इति मन्त्रे तुरीय वाचो मनुष्या वदन्ति इत्यस्य मन्त्रान्तरसाहित्येन व्याख्यानान्तरविमर्शपूर्वमर्थ प्रदर्शितः। सप्तमर्यादा इत्यादि-मन्त्रेषु टीकाकृता व्याख्यान यथा नोपपन्न तस्य दिक् प्रदर्शिता।

वेदे साजात्येन लौकिकसम्बन्धि-व्यवहारस्य बीज त्रिसुपर्णानुवाको विस्तरेण व्याख्ययोक्तः। आजिधावनादयो देवेपूच्यमाना. कथमुपपद्यन्त इति मन्त्रानुगुण्येन प्रदर्शितम्। वेदार्थनिर्णये पूर्वकालिकव्यवहाराणामस्मदादीना च व्यवहाराणा भिन्नत्वेनासम्भवप्राप्तौ श्रौतव्यवहारेण तन्निर्णयविज्ञानेनार्थस्य सगति. प्रदर्शिता। ब्राह्मणेषु उच्यमानाना केषाचन व्यवहाराणा यथाकथचनो-पपत्त्यर्थमनेकेषामनेकधा विचारसरणिस्तत्रत्यकतिपयविशेषवशतो निर्णीय प्रदर्शिता। इन्द्रस्य पञ्चापराधस्वरूपनिर्णय, सर्वचरुर्देशो वाऽन्यो वा पदार्थ', अनुमतिराकासिनीवालीकुहू्वा पूर्वात्वपरात्वे विशिष्य विचार, अनुष्ठाने सोमस्य शस्त्रयोर्विपर्यासोचित ।देवाना विकलागवर्णनम्। युगपदार्थं । अत्रीणा सूर्या-चन्द्रमसोरुपरागविज्ञानम्।

शत जीवेति मन्त्रे ऋतुत्रयस्य शतसख्यया वचनम्। वेदापौरुपेयत्ववचनम्। वेदिनिर्माणे विशेषनिदानमित्यादय प्रसगोपप्रसगेनार्था मन्त्रोपन्यासपुरस्सर निर्णीता.। सर्वथैतस्य वेदे आदित्यरूपस्यैवैकस्य स्तवे उपपाद.। स च स्तवो वस्तुतो ब्रह्मण एवादित्यरूपमुपाधि गृहीत्वेति वेदानामेकात्मपरत्वम्। एतेन वेदस्य कालनिर्णयो भाषासौसादृश्यवशतो व्यभिचरित', ज्योतिर्वचनपरिस्थितिवशतः सकल्प्यमानो वचनादीनामतथात्व नक्षत्रियप्रजापत्यादिवशतः सपातस्यान्दोलित-गतिमत्वविज्ञानादैदम्पर्यानिर्णये मूलकालानिर्णय एव। नक्षत्रचक्रसम्बन्धित्वे-नान्दोलितगत्या रोहिणीसम्पातस्थलगतविशेषोपलम्भात्तस्य चास्मिन्पर्यायेऽन्यून-तोऽन्यूनद्वादशसहस्रनोवर्गिसम्भवेन ततः प्राचीनता सिध्यति। स प्राचीनः काल किम्मर्याद इति विज्ञानासम्भवः।

मूलदेशकल्पनाऽपि न सुमेरुरूप एव देश इति निर्णेतु शक्या कुमेरोरपि वर्णनस्य समुपलम्भेन तद्गतादित्यस्य चन्द्रमः शब्देन वर्णनेन केषांचन तदनु-सरणबीज तत्सम्बद्धापरेषां पौराणिकविशेषवता कुमेरुणोऽपि परम्परया तत्तद्देश-

समागमनसूचनासम्भवेनेदमित्थंभावस्यविज्ञानम् । नवीनविचारपद्धतिर्भू मेः परिणामादिविशेषकल्पनावशतो निर्णयस्तु केवलप्राचीनग्रन्थमात्रदर्शनतो शक्य एवेति । काचन विचारसरणिरत्र प्रदर्शिता सुधीभिः परीक्षणीया । युक्तायुक्तत्वं च "गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः । शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छतीति न्यायेनात्र सारसत्वे विचारणीयमिति ।

याज्ञिकक्रियाणामादित्यपरत्वेन साकल्येन विज्ञानेऽपीतोऽप्यधिको विशेषो विज्ञातुं शक्यः । तत्र शस्त्राणां स्वरूपाणि, तत्र मन्त्राणां पौर्वापर्यमावापोद्वापावित्यादिकं, स्तोत्रेषु सामानि तत्स्वरूपाणि तन्मन्त्रास्तेषु विष्टुत्यादिवशतः स्तोमादीनां वशतश्चेतोऽप्यधिकविशेषविज्ञानासम्भवः । एवमादिकं बहुलं विचारणीयम्, विचारणीयञ्च तैस्तैर्विचारकैरादित्यपरतादृष्टिमवलम्ब्येति । सर्वथाऽयं विचारप्रकारोऽभिनवोऽपि प्राचीनो विचारकैः प्राचीनग्रन्थेषु च तदा तदाऽवलम्बितोऽपि नूतनवद्भासमान इति नवीनत्वेनोक्तः परीक्षणीयः सुधीभिरिति शम् ।

विद्वज्जनानुचरः
डा. राजेन्द्र प्रसादमिश्रः



# ऋङ्मन्त्रार्थ समालोचनम्

## अथ प्रथमो विवेकः

### १ प्राचीनाऽर्वाचीनवेदव्याख्यासु विसगति.

वेदो हि प्राचीनतमो ग्रन्थ इति प्राय सम्मत सर्वेषाम्। तस्यातिप्राचीनत्वेन तदर्थविज्ञान सुदुष्कर विशेषतयेदानीन्तनानाम्। तदर्थं प्राचीनैर्बहुभिर्बहुविधा प्रयत्ना कृता । नूतनैरपि तदर्थं बहुतर प्रयतित प्रयत्यते च। तत्र केचन नियमसम्पादनपूर्वं टीकाकृतः पाणिनिजैमिनियास्कप्रभृतय । केचन तदीयान्नियमानवलम्ब्य तदनुरोधेन टीकाकृत स्कन्दस्वामिसायणप्रमुखा सर्वं इमे प्राच्याष्टीकाकृत.। अर्वाचीना अपि खण्डशस्तात्पर्यंशो वा टीकाकर्तारो म्येक्समूलर–मूर–राथप्रभृतय । सर्वैरेभिष्टीकाकृद्‌भिर्वेदार्थविवरणार्थं प्रयत्ना कृता॰। एषु प्राय सर्वव्यापी प्रयत्नः सायणाचार्याणाम्। तेषा प्रयत्नमनुरुध्य पाश्चात्यैष्टीकाकृद्‌भिः स्वस्वानुकूलयुक्तियुक्ता नूतना प्रयत्ना विरचिता । तावताऽपि वेदस्य न सम्यगर्थावधारणम् ।

*लौकिकप्रयोगेष्वदृश्यरूपवशतोऽर्थविज्ञानकाठिन्य* पाणिनिना वैदिकरूपसम्पादकनियमसम्पादनद्वारेणाशतो दूरीकृतम् । परन्तु नियमाना साधारण्यात्, उत्पद्यमानसशयानामनिराकरणेनार्थस्याविस्पष्टनेन न पूर्णता तत्प्रयत्नस्य। मीमासकशिरोमणिजैमिनिना वेदभागरूपब्राह्मणभागस्य विविधभागकल्पनाद्वारेणार्थकरणाय बलवान् प्रयास आस्थित । तत्र विधिभागस्य सार्थक्यमपूर्वार्थबोधनवशत, अर्थवादभागस्य लक्षणया विध्यर्थापेक्षितार्थबोधनवशत सार्थक्यमित्यादिरूपेणः बहुल स प्रयत्नो ब्राह्मणभागे, मन्त्रभागरूपे वेदभागे तु न तादृशस्तस्य प्रयत्न इति सोऽसम्पूर्ण एव ।

किञ्च ब्राह्मणभागेऽपि अर्थवादभागस्य लक्षणया विध्युपयुक्तत्वव्यवस्थापनेन सार्थक्येऽपि लक्षणार्थमुपादीयमानार्थवादभागे लोकशास्त्रविरुद्धार्थप्रतिपादनस्य न सम्यगुपपत्तिः। यद्यपि शबरप्रभृतिभिस्तदीयटीकाकृद्‌भिस्तादृशस्थलेषु नित्य कञ्चन आकाश वायुमादित्य वार्थमुपादाय सार्थत्व व्यवस्थापनीयमित्युक्तम्, उदाहरण-

रूपत्वेन टीकाकृता कुमारिलभट्टेन "[1]अहल्यायै जार" इत्यशंस्य "अहनि लीयत इत्यहल्या रात्रिस्तस्या जरयिता जार आदित्य" इत्येव व्याख्यानं प्रदर्शितम्, तावता सर्वस्थलेषु तादृशप्रयत्नाभावान्न स प्रयत्नः पूर्ण इति न्यूनतैव ।

मन्त्रभागे तु तादृशस्यापि प्रयत्नस्याभावेन स एकदेश प्रयत्न एव । यास्काचार्यैरपि कतिपयानां कठिनार्थानामप्रसिद्धार्थानां शब्दानां प्रदर्शनपूर्व तदर्थप्रतिपादनद्वारामन्त्रार्थव्याख्याने कृतोऽपि प्रयत्नः कतिपयतदुल्लिखितस्थलेष्वेव सम्यक् सन्देहानिवर्तकतयाऽसम्पूर्ण एव । तट्टीकाकृता दुर्गाचार्येण यास्कीयनिरुक्तगतानामांशिकानां पूर्णानां वा मन्त्राणां प्रतिपद व्याख्यानं प्रदर्शितमपि न सर्वत्र सम्यगनुभवपथाधिरूढं केवलं कथञ्चन निरुक्तकारीयकल्पनाप्रदर्शकमेव । तावतापि तस्य न्यूनत्वमेव ।

अर्वाचीनटीकाकृद्भिः प्राचीनटीकाकाराणां टीकागता दोषाः प्रदर्शिताः, किञ्चन स्वाभिमतं नवनवतरव्युत्पत्तिप्रतिपादनद्वारा प्रकटित तदपि तेषामपि न निश्चितं विस्पष्टं स्थलान्तरे त्वविस्पष्टमेव । यथा "[2]सदृशीरद्य सदृशी" रितिमन्त्रभाष्ये उपसस्त्रिंशद्योजनपरिगमनरूपमन्त्रगतार्थस्य विवरणाय एवं यत्रोपा गच्छति तत्स्थानतः पूर्ववर्तित्रिंशद्योजनभूभागस्थानां सोदिता दृश्यते स चोषः कालः एकविंशतिघटिकाभिः षड्विंशतिपराभिश्च सम्मितः, एकविंशतिघटिकामारभ्यषड्विंशघटिकापर्यन्तम्, इति सायणाचार्यैरुक्तम् ।

तत्र पाश्चात्येन म्येक्स्मूलरमहोदयेन टीकाकारानुसारेण सूर्यस्य प्रत्यहं मेरुप्रादक्षिण्येन परिभ्रमः स्वल्पाधिकपञ्चसहस्रयोजनपरिमितः । तावता अहरात्मकघटीषष्टीनामुपयोगेन घटीषष्ट्याः कृते यदि स्थूलेन मानेन पञ्चसहस्रं योजनान्यूपयुज्यन्ते तर्हि त्रिंशद्योजनकृते कियान् काल इति योग्यानुपातविचारणेन त्रिंशद्योजनोपयोग्युषः कालः सावशेष एकोनविंशतिनिमेषाः, स्थूलेन मानेन विंशतिनिमेषा भवन्ति, एवं सति विंशतिनिमेषात्मा उषः कालः सायणेन कथं घटीपञ्चकपरिमित उच्यत इति दोषमुद्भाव्य तत्समाधानाय भाष्यग्रन्थस्यान्यथाकरणं कृतम् ।

यथा भाष्ये–एकविंशतिघटिकाभिरित्यत्र घटिकाशब्दस्थाने पराशब्दं प्रयोज्य पराशब्दस्यपलसमानार्थतां व्यवस्थाप्य एकविंशतिघटिकाभिर्नाम एकविंशतिपराभिः । एकविंशतिपलैरित्यर्थः । एवं षड्विंशतिपराभिरित्यत्र परास्थाने तत्पराशब्दमुक्त्वा षड्विंशतिपराभिर्नाम षड्विंशतितत्पराभिः । तत्पराशब्दस्य विपर्लत्वं व्यवस्थाप्य षड्विंशतिविपलैरित्यर्थः ।

---

१. प. ब्रा. १ : १.

२. ऋ. सं. १. १२३. ८

एव सति भाष्ये स चोप काल: एकविंशति पलै षड्विंशतिविपलै सम्मितो भाष्याभिप्रेतार्थ इति प्रतिपादितम् । एवञ्च सर्वथा भाष्यमिदमसङ्गतमित्युक्तम् । तावता मूलार्थस्याविस्पष्टत्व तथैवावस्थितम्, न कोऽपि युक्तियुक्तो योग्योऽर्थस्तत्र तेन प्रतिपादित इति न्यूनतैव । एव मन्त्रगतस्यांशविस्पष्टार्थत्व तदवस्थमेव । एवमेतादृशा अपरेऽपि । एवञ्च सर्वेषा प्रयत्नाना वेदव्याख्याया सदोषत्वे वेदस्यार्थोऽविस्पष्ट एव ।

## २. ब्राह्मणभागेऽपि व्याख्यानभागस्यासंगतार्थत्वम्

न केवल प्राचीनानामर्वाचीनाना वा टीकाकृता टीका अकृतार्था. किन्तु ब्राह्मणभागेऽपि व्याख्यानभागस्यापुष्टार्थत्वमसङ्गतार्थत्वञ्च । यथा ब्राह्मणे सप्तदशसख्याविशिष्टार्थस्यार्थवाद उच्यते । "सप्तदश सामिधेन्यो भवन्ति । सप्तदशो वै प्रजापति· प्रजापति. सवत्सरो द्वादशमासा· पञ्चर्तवो हेमन्तशिशिरयो: समासेन तावान् सवत्सर: सवत्सर: प्रजापति. प्रजापत्यायतनाभिरेवाभीराध्नोति य एव वेद"[1] इति ।

अत्र सामिधेनीना साप्तदश्यस्य पोषणायोच्यते, यत प्रजापति: सप्तदश सप्तदशसख्यायोगी, तत्सम्बद्धसख्यायोगात् सामिधेन्योऽत्र तावत्सख्याका. प्रशस्ता: । प्रजापते: साप्तदश्य सवत्सराभेदात् । सवत्सरस्य साप्तदश्यं मासर्तुसख्यायोगादित्येवमर्थंत प्रतिपाद्य मासर्तुसाप्तदश्य सम्पादयितुमुक्तम्, द्वादश मासा पञ्चर्तवो हेमन्तशिशिरयो: समासेन इति ।

ततो विज्ञायते सवत्सरे साप्तदश्य न मुख्य किन्तु तदवयवसख्यानुरोधादारोपितम् । अवयवानामपि साप्तदश्य न तावत्सख्याकावयवसख्यायोगात् किन्तु विशिष्टावयवसख्यायोगात् । ते चात्रावयवा नैकजातीयास्तेषु तावत्सख्याया अप्रसिद्धे·, किन्तु भिन्नजातीया मासरूपा ऋतुरूपाश्च ग्राह्या: । तावताऽपि लशुनभक्षणन्यायानतिपात:, यतस्तेष्वपि अभिप्रेतसख्याया अप्रसिद्धि. । तदर्थं पुनस्तत्र सम्पादनेन (येन केनापि प्रकारेण) सा सख्या वक्तव्या । सम्पादनञ्च ब्राह्मण एव "हेमन्तशिशिरयो: समासेन" इति प्रदर्शितम् ।

अय भावो यद्यप्यत्र मासरूपा ऋतुरूपाश्चावयवा गृह्यन्ते उक्तसख्यायोगार्थम्, परन्तु तेष्वपि सा सख्या न प्रसिद्धा, यतो मासा द्वादश सवत्सरे ऋतवश्च षडित्यष्टादशसख्या उभयसख्यायोगाद् भवति, नाभिप्रेता सप्तदशसख्येति तदर्थमवयवेषु सख्या न्यूनीकर्तव्या, सापि न मासरूपावयवेषु किन्तु ऋतुरूपावयवेषु । ऋतुष्वपि सख्यान्यूनीकारो न यथाकथञ्चन किन्तु ऋतुद्वयस्यैकसख्या-

---

[1] ऐ ब्रा १ १.१.

कल्पनेन। ऋतुद्वयमपि न यथेच्छं किमप्यनियतं ग्राह्यं किन्तु हेमन्तशिशिर-रूपमेव। तावता तयोरेवत्वोर्द्वित्वसंख्यां प्रसिद्धां परित्यज्यैकसंख्यास्वीकारः कार्यः। एवं सति मासा, द्वादश, ऋतवः पञ्चेति मिलित्वा सप्तदशसंख्यायोगः संवत्सरेऽवयवद्वारेणेति।

एवं संवत्सरस्य सप्तदशत्वे तदभिन्नः प्रजापतिरिति सोऽपि अवयवगत-संख्यायोगिसंवत्सराभिन्न इति संवत्सरावयवगतसंख्यया परम्परया संबद्ध इति सप्तदश इति। एवं परम्परया प्रजापतिसम्बन्धन सप्तदशसंख्या प्रशस्ता, तद्योगात् सामिधेन्योऽप्यत्र प्रशस्ता इति। मूले तु सप्तदशो वै प्रजापतिरित्यत्र[1] प्रजापतेरेवेतरनिरपेक्षसाप्तदश्ययोगो वैशब्देन प्रसिद्धार्थकेन प्रतिपाद्यत इति, उक्तांशव्याख्यानमपुष्टं प्रतिपादितनानाविधविकल्पानिराकरणनासङ्गतमिति। एवं बहुषु स्थलेषु। तदेतत् पुरस्तात् क्रमशः प्रतिपादयिष्यते।

**३. मन्त्रेष्वपि विसगतिः**

मन्त्रा अपि केचनात्यन्तप्रसिद्धार्थपदयोगिनोऽपि कयाऽपि कल्पनया न विस्पष्टार्था भवन्ति।

तत्र बहुषु स्थलेषु केवलसंख्यापदानि क्वचन संख्येयार्थकपदसहितानिक्वचन संख्येयार्थबोधकपदरहितानि वोच्यन्ते तानि सम्यगुपक्लृप्तानि भवन्ति, तत्र यथाकथञ्चन टीकाकृद्भिर्व्याख्यातान्यपि तानि न विशदर्थानि समञ्जसानि भवन्ति। यथा–ऐन्द्रे सूक्त उच्यते। जघान[2] नवतीर्नव इति वचनम्। अत्रानेका-नवतयो विवक्षिता अथवा शब्दरूपव्यत्यासेनैकैव नवतिर्विवक्षितेति सन्देहः। सन्देहबीजन्तु-अयमेवैतदर्थक एव मन्त्रोऽविकलो वेदान्तरे पठ्यते, केवलं तत्रोच्यते– "जघान[3] नवतिं नव" (तै.सं. १:५:८:१) इति।

एवं सत्यत्र टीकाकृद्भिर्न कोऽपि निर्णयः प्रतिपाद्यते। यदा वेका नवतिर्यदा वा अनेका नवतयो मन्त्रे विवक्षितास्तदा किंस्वरूपत्वं तासामित्यपेक्ष्यते। अत्र सायणेन व्याख्याने वृत्रसम्बन्धित्वस्य मन्त्रे वचनात् प्रतिपाद्यते। वृत्रस्यासुर-त्वादासुरी मायात्र गृह्यते, तस्याः प्रथमतः सत्वरजस्तमोरूपगुणत्रययोगात् त्रैविध्यम्। प्रत्येकं तत्रोत्तममध्यमावमरूपतया त्रैविध्येन नवरूपत्वम्, तत्रापि प्रत्येकं प्रकारान्तरेण नवविधत्वं प्रकल्प्यैकाशीतिविधत्वं तत्रापि प्रत्येकं दश-दिग्भेदेन भिन्नतया दशोत्तराष्टशतीपरतया तावत्संख्याकानामासुरीणां मायानां विनाश इन्द्रेण कृत इति।

---

१. ऐ. ब्रा. १.१.१.

२. ऋ. सं १. ५. ८. १.

३. तै. सं. १. ५. ८. १.

विलष्टतरमिद व्याख्यानमेकनवत्यर्थकत्वेऽसगतञ्च। ऐन्द्रपु सूक्तेपु स्थलान्तरे सख्येयार्थक पदसाहित्य प्रतिपाद्यते तत्र कुत्रचन पुर उच्यन्ते, कुत्रचन नद्य कुत्रचन वस्त्वन्तरम्। सर्वञ्चेद तत्र नवतिपदयोगि। तथा सति तद्वर्णन स्यानुपपत्ति। क्वचन शम्बरसम्बन्धनैकोत्तरशतसख्यावचनमित्यादीना न स्पष्टार्थतति।

एवमेतादृशा सख्यापदयोगा अविस्पष्टार्था मन्त्रेपु।

औपधिसूक्ते—"या[1] ओपधी पूर्वा जाता देवेभ्यस्त्रियुग पुरा। मनै नु-बभ्रूणामह शत धामानि सप्त च"। अय मन्त्र उच्यते। अत्र पूर्वास्त्रियुग पुरा शब्दाना पौनरुक्त्यम, त्रियुगशब्दस्य कालविशेपरूपत्वे मन्त्रस्य चतुर्थयुगोयना-प्राप्त्याऽवरकालिकतयाऽपौरुपेयत्वसिद्धान्तभङ्ग। तत्रैव द्वितीयार्धे शतसप्त-शब्दाभ्या विवक्षितसख्याया अनिर्णीतत्वम्। व्याख्यातृभिर्यास्कादिभिस्तत्रसप्त शत्यर्थकत्वेन व्याख्यानम, तथा सति मन्त्र तत्रार्धे च शब्दस्यासंलग्नकता। तस्मादेतन्मन्त्रार्थोऽविस्पष्ट।

आग्नये सूक्ते—"त्रीणि[2] शता त्री सहस्राण्यग्नि त्रिशच्च देवा नव चासपर्यन्। औक्षन घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतार न्यसादयन्त।" अय मन्त्र उच्यते अत्र देवाना विशिष्टा सख्या निर्दिश्यते। तत्र के ते देवा एतत्सख्या-विशिष्टा कुतस्तेपामेतत्सख्यावैशिष्ट्यम्। कुत एत एतावन्तोऽग्ने सपर्याकर्त्तार इत्यादेरनिर्णय। उपलक्षणमिद सर्वेपा देवानामित्युक्तिरपि न समञ्जसा। पूर्ववर्तिनीना सख्यानामप्युपलक्षकत्वसम्भवेन तत्परित्यागे एतत्सख्याया उपलक्षण-त्वेन ग्रहण विनिगमनाविरह।

एवमेतादृशान्यनेकानि स्थलानि मन्त्रेपु तत्र न सम्यङ्मन्त्रार्थप्रत्यय।

ब्राह्मणपु तु नानाविधा कथा वर्ण्यन्ते। तासा वर्णनस्यार्थवादत्वेन मीमासकै साथन्यवर्णनेऽपि नित्यार्थग्रहणेन तैष्वलक्ष्यार्थव्याख्यान तदपि न सम्यक्। ब्राह्मण पशुपुरोडाशार्थं वादे देवै पुरुषाश्वगोऽव्यजाना यागे पशुत्वेनो-पयोगरूपा पञ्च पर्याया उक्ता। तत्र क्रमेण प्रथमत एकस्य पशुत्वेन ग्रहण ततस्तस्मान्मेधव्यपगमस्तस्य मेधस्य परवर्तिनि पश्वन्तरे प्रवृत्ति, निवृत्तमधस्य पूर्वस्य पशा पशुत्वेन परित्यागा देवै तस्य च निवृत्तमेधस्य पशुत्वेन यागत परित्यक्तस्य पश्वन्तररूपत्वम्। अन्त निवृत्तस्याजात् पशोर्मेधस्य भूम्या प्रवेश-स्तत्र तस्य व्रीहियवरूपतेति तद्विकारपुरोडाशयागोऽनुष्ठेय इति प्रतिपादनम। तत्र कुत इम एव क्रमेण पञ्चैव पर्याया ग्रहीतव्या नाधिका, कुतोऽयमेव क्रमा

१. ऋ स १० ९७ १
२ तत्रैव, १० ५२ ६

न विपर्यस्तः क्रम आदरणीयः, कुत इम एव पशव उपात्ता नान्ये, कुतस्तेषां मेधव्यपगमे पशवन्तररूपत्वमित्यादयोऽनेके प्रश्ना उद्भवन्ति, तेषां न समर्पकमुत्तरं व्याख्यासु । इयमेव रीतिः प्रायो ब्राह्मणोक्तासु कथासु ।

४. देवताविशेषणेषु विसंगतिक्रमः

एवं देवतासु प्रसिद्धानां विशेषाणां न सम्यगुपपादनम् । यथा अन्धो भगः, अदन्तकः पूषा सविता हिरण्यपाणिरित्यादीनाम् । यद्यप्येतद्विषये भाष्यकृता एवं व्याख्यातम् । पूर्वं देवकर्तृकयागेषु भगादीनां ब्रह्मत्वमासीत् । यागे ब्रह्मणा ग्रहीतव्यो भागः प्राशित्रपात्रे संस्थाप्य तस्मै दीयते, तस्य भागस्य निरीक्षणहस्तादानदन्तचर्वणानि निषिद्धानि तानि यथास्वं पूर्वोक्तैर्यथाक्रमं निरीक्षणहस्तादानदन्तचर्वणवशतस्तस्य तस्य तत्तदङ्गवैकल्यमिति तेषां तादृशविशेषप्रसिद्धिरिति । तदपि न मनस्तोषावहम् । यतः पुरोडाशभागस्य निरीक्षणादिवशतस्तत्तदङ्गवैकल्यस्य लोकविरोधात् ।

एवं भृगोरर्चिष्युत्पत्तिरंगिरसामङ्गारतो विखननाद्वैखानसस्येत्यादेः सम्यगुपपत्त्यवचनम् ।

एवं ग्रावस्तुत्यर्थवादे सर्वचतुर्दशो वाऽन्यरूपो वा अर्बुदेन मन्त्रमिश्रणम् । अर्बुदोदासर्पिणी प्रपदित्यादिविषये न विशदार्थता ।

एवं स्तोत्रशस्त्रयोरानुपूर्व्ये आज्यप्रउगशस्त्रयोरानुपूर्व्यरूपक्रमविपर्यासवचनं ब्राह्मणे । तत्र मौलिकक्रमस्य कीदृग्रूपत्वं कथं तस्य तत्वम् । विहरतीति मौलिके प्रयोगे विपर्यासार्थकत्वमुत सम्पत्यर्थकत्वं वेत्यादयोऽनेके विचार्यस्थलविशेषाः । एतादृशस्थले टीकाकाराणां विशिष्य मौनमिति तत्र व्याख्यानापेक्षा ।

किञ्च वेदानां यज्ञार्था प्रवृत्तिः । अत एव वेदाङ्गज्योतिषग्रन्थे "वेदा हि यज्ञार्थमभिप्रवृत्ता" इत्युक्तिः । ब्राह्मणे देवताभिः तदनुरूपं मनुष्यैः कर्तव्यमित्युक्त्या देवता यागाः प्रतीयन्ते तत्र कथं देवतायज्ञसम्पत्तिः । यज्ञेषु दारवपात्राणां प्रकृतिवृक्षनियमनम्, पात्राणामाकाराः, नामानि, उपयोक्तॄणांहोतृप्रभृतीनां नामानि, कार्यकारणादेशाः, कार्यानुष्ठानप्रकाराः, तत्र प्रयुज्यमानमन्त्रा इत्यादीनां नियमस्य दर्शनात् किंहेतुकता नियमस्येत्यादयोऽनेके विषया ग्रन्थकृद्भिर्व्याख्यातृभिर्विचारिताः । ग्रन्थेषु वचनात्तत्र तादृशा नियमा इत्युक्तिस्त्वपर्याप्ता । ग्रन्थेष्वेव तथावचनस्य को हेतुरस्यैवानुयोगविषयत्वात् ।

एवञ्च वेदस्यार्थः सर्वथाऽस्पष्ट एव । नानाविधैर्विचारकैर्बहुशो विचारेऽपि न तत्र मनस्तोषावहा स्पष्टतेति ।

अस्या दशायामभिनव पन्थान ममवलम्ब्य तदर्थस्य स्पष्टत्राय प्रयास । यद्यपि नानाविधै धर्मविचारकैर्विचारेऽप्यकृतकृत्यत्वे क्षुद्रमतेर्मम प्रयास मफल स्यादित्याशा दुराशैव तथापि "नभ पतन्त्यात्मसम पतत्रिण" इति न्यायेन मइचन प्रयास आस्थीयते । अयञ्च प्रयासो न सर्वथा निर्मूल कपोलकल्पित किन्तु प्राचीनतमैर्ऋषिभि सूत्ररूपेणोल्लितो नवीनैरपि विचारकैस्तदा तदा विद्युद्विद्योतनन्यायेन प्रकाशितोऽपि एवप्रणाल्या वचनान्नवीनोऽपि समूलत्वात् सप्रमाण इति तदर्थं प्रयत्यते ।

४. देवतास्वरूपविचार:

वेदे मुख्य· प्रतिपाद्यो विषय क इति विचारे कर्मश्रवणैर्मीमांसकैरुच्यते, कर्मैव मुख्य प्रतिपाद्य वेदस्य,अपरे देवादयोऽर्था कर्मोपकारकतया प्रधानभूता इति ।

अपरे पुनर्ब्रुवते-वेदप्रतिपाद्यानि कर्माणि देवताकर्मतया प्रतिपाद्यन्त इति देवनैव मुख्यतया वेदप्रतिपाद्या । देवताप्रतिपादने साधनभूतमेतत् कर्मप्रतिपादनमिति गुणभूतानि कर्माणीति ।

तत्र मुख्याया प्रतिपाद्याया देवताया किं स्वरूपमिति विचारे एकैव देवताऽऽत्मस्वरूपिणी वेदप्रतिपाद्या । तस्या एकस्या एवोपाधिभेदाद्भिन्नत्वम्, भिन्नताया नानाशब्दैराकारैर्वचनमित्यध्यात्मवादिन ।

सम्प्रतिपद्यान्ये ब्रुवते-सत्यमेकैव देवता प्रतिपाद्यते. सत्यमेव चैकस्या स्तस्या उपाधिभेदेन भिन्नत्वम्, तत्प्रतिपादनार्थमपेक्षितोपाधराश्रयणे शब्दद्वारक एव सर्वत्र वाङ्मयेऽर्थे प्रत्यय इति प्रथमोपस्थित शब्दमेवोपाधितयाऽऽश्रित्य तद्भेदेन देवताया भिन्नत्वम् अत एवेन्द्रचन्द्रादीना नानाशब्दानामुपाधित्वेन नानादेवता वेदे प्रतिपाद्यन्ते । अत एव शब्दाना नित्यतया तदुपाधिकदेवानामपि नित्यत्वेन नित्यार्थप्रतिपादको वेद इति भवति । परिच्छिन्नार्थोपाधिग्रहणे सम्भवता दोषाणामत्र कल्पे प्राप्ति ।

न हि एकोऽर्थविशेषरूप इन्द्ररूपो देवो युगपन्नानादेशेष्वनुष्ठीयमानेषु समानेषु यागेषु युगपद्दत्वेन सम्बन्धमर्हति । माहात्म्यात्तत्कल्पनापेक्षया नित्यस्य विभो: शब्दस्यैवोपाधित्वेनाश्रयण नित्यस्य विभोरपि शब्दस्य शैवालघाटनन्यायेनाभिव्यञ्जककण्ठताल्वाद्यभिघातरूपप्रयत्नस्य तत्र तत्र भिन्नतया तद्वशतोऽभिव्यज्यमानस्य नित्यस्य विभो शब्दस्य तद्रूपिण्या देवतायाश्च युगपत्सर्वदेशसम्बन्धे न किंचिद्बाधकमिति मीमांसका. ।

अर्थबोधे प्राथम्येन शब्दप्राप्तावपि बोधरूपफलेऽर्थस्यैव सन्निकृष्टत्व बोधकशब्दस्य त्वर्थद्वारेत्यर्थस्यैवोपाधित्व ग्रहीतुमुचितम् । एवञ्चार्थरूपमुपाधिं गृहीत्वा

देवतातत्वनिश्चय: । अर्थश्च नित्यो लोकरूप: । लौकिनस्तु तत्र सम्बध्यन्ते इति लोकस्यैवाधाररूपस्योपाधित्वेन ग्रहणम् । यद्यपि लोकोऽपि अविशेषभावेन ब्रह्माण्डात्मके एव तथापि तत्र सविधवर्तित्व-विदूरवर्तित्ववशतो भेदकल्पनम् । ते च लोकास्त्रिविधा भूलोकान्तरिक्षलोकद्यौलोकरूपत: । तदुपाधिवशतो वेद प्रतिपाद्या देवतास्त्रिविधा इति नैरुक्ता: ।

तदुक्तं यास्केन–"तिस्त्रो देवता इति नैरुक्ता" इति । ताश्चेमा अग्निवाय्वादित्यशब्दैरुच्यन्ते देवता: । एवं सति प्रतिपाद्यानां देवतानां भूलोकसम्बन्धित्वेऽग्नित्वम्, अन्तरिक्षलोकसम्बन्धित्वे वायुत्वम्, द्योलोकसम्बन्धित्वे आदित्यत्वमिति तत्प्रतिपादनं वेदे ।

ऋग्वेदीयानुक्रमणिकाकारेण शौनकेन तु पूर्वोक्तान् पक्षान् प्रदर्श्य पूर्वाचार्याणामभिमत: पक्ष: प्रदर्श्यते । तत्र सत्यमेवाध्यात्मवाद एव वेदे । आत्मैव च वेद प्रतिपाद्य: । आत्मनश्चैक्येन भेदराहित्येन प्रतिपादनस्याशक्यतयोपाध्याश्रयणे त्रिश्वजिन्न्यायेन सर्वसम्मत: प्राथमिकदृश्यविकाररूप आदित्य एवोपाधित्वेन ग्रहीतव्य: । तदुपाधित्वेनेव वेदे आत्मन: प्रतिपादनम् । अध्यात्मवाद एवासौ । तत्र शरीरस्थानीयमादित्यरूपमुपाधिं गृहीत्वा वेदे प्रतिपादनमिति आदित्यरूपिण एवात्मनो वेदे प्रतिपादनम् । तदुक्तं तेन–"एक एव वा महानात्मा वेदे स्तूयते[1], स सूर्य इत्याचक्षते । "सूर्य[2] आत्मा जगतस्तस्थुषश्चे"त्यपि निगमो भवतीति ।

अत्र आचक्षत इति वचनादिदं न ममैव मतम्, किन्तु पूर्वेषां सर्वेषामाचार्याणामिति तेन कर्त्रनुद्देश: । वैदिकमिदं मतं वेदसमकालं पुरातनमिति प्रतिपादनाय सूर्य आत्मेति निगमोल्लेखनं तेन । तदुक्तनिगमवशतश्चराचरात्मकस्य जगत आत्मरूपत्वेन सर्वप्रथम: सूर्य एवात्मरूपो वेदप्रतिपाद्यो मुख्यो देव: । तस्यैवोपाधिवशतो नानाविधा वर्णना वेदे । यथैकस्य देवदत्तात्मन: शरीररूपमुपाधिं गृहीत्वा वर्णने तदीयगुणक्रियाद्युपाधिभेदतोऽभिन्नत्वेन तत्प्रतिपादनं तद्वत् ।

चराचरात्मकत्वेन प्राथम्यं सर्वापेक्षयेत्युक्तमेव । एवं सृष्टावाकाशादिक्रमेणोत्पत्तौ दृश्येषु त्रिषु भूतेषु तेजस: प्राथम्यम् । तदुक्तं "तत्तेजो सृजतेति । तेजसश्च स्पष्टमुपलम्भ आदित्य इति तस्यैवात्मोपाधित्वेन ग्रहणेन वेदे प्रतिपादनम् । एवं च सर्ववर्णनं वेदे आदित्यपरं यथा तथैव व्याख्यानमुचितम् । इदमेवंप्रकारं व्याख्यानमेव प्राचीनम् । तस्य व्याख्यातृभिरपि तदा तदा अनुसरणम् तस्यैतस्य व्याख्यानस्य समाश्रयणे न पूर्वोक्ता व्याख्यानदोषा: प्राप्नुवन्ति: सर्वं च समञ्जसं भवति ।

तदेतत्क्रमश: प्रतिपादयिष्यते ।

---

१. ऋक्सर्वा.

२. शु. य. वे. १४ : ४६

## ६. एकदेवता प्रतिपादनम्

आदित्य एवैको देवो वेदे प्रतिपाद्यत इति वचने इन्द्रवरुणमित्रप्रभृतयो-भिन्नैर्नामभि. प्रतिपाद्या अपि निमित्तविशेषवशत आदित्याभिन्ना । आदित्य-स्यैव तानि नामान्तराणि । आदित्य एवेन्द्रादिशब्दै प्रतिपाद्यत इति भाव । वेदो मन्त्रब्राह्मणोभयात्मक इति मन्त्रभाग इव ब्राह्मणभागेऽपि आदित्यस्य प्रति-पादनम । एव सति ब्राह्मणगतानि कर्माणि आदित्यस्यैव अर्थवादा अपितत्प्रति-पादका एव । एव सति अर्थवादविषये नित्य कञ्चनार्थं गृहीत्वोपपत्तिर्वक्तव्येति शावरवचनमप्युपपद्यते । आदित्यकर्मानुसारेण मनुष्यैरनुष्ठीयमानानि कर्माणि भवन्ति एव सति देवताकृतिमनु मनुष्यै कर्मानुष्ठानमिति ब्राह्मणे तत्र तत्र प्रति-पाद्यमानमुपपद्यते । प्रपचयिष्यतेऽयमर्थं परस्तात्सविस्तरम् ।

तस्य चादित्यस्यैकस्य सत उपाधिभेदेन नानादेवतारूपत्वमित्युक्त प्राक् । इद मन्त्रेणाप्युच्यते तथाहि मन्त्र.–'इन्द्र मित्र वरुणमग्निमाहुरथो दिव्य:स सुपर्णो गरुत्मान् । एक सद्विप्रा बहुधा वदन्त्यग्नि यम मातरिश्वानमाहु[1]रिति ।

तत्र लोकोपाधिनाग्न्यादित्व तस्य । एव सति निरुक्तमतमप्येतन्मतमध्ये-ऽन्त पततीति न तेनास्य मतस्य विरोध: ।

## ७. लोकानां विषये नानाकल्पना:

लोकाश्च त्रिविधा भूरन्तरिक्ष द्यौरिति रूपेण । तेषामेषा लोकाना विषये नानाविधा. कल्पना वेदे । यथा प्रथमतो अत्यन्तप्रसिद्धा लोककल्पना–"इय भूर्भू-लोक:, भुवमारभ्य आ–आदित्यमण्डलमन्तरिक्षलोक, आदित्यमण्डलमारभ्योपरि-ष्टात्सर्वो द्युलोक "इति । अपरविधा लोककल्पना शतपथब्राह्मणे प्रतिपाद्यते । तत्रोच्यते" वसन्तो ग्रीष्मो वर्षास्ते देवा ऋतवो देवेषु तर्ह्य सो भवति देवास्त-र्ह्य भिगोपायतीति" ।

अत्रर्तु त्रये देवेषु भवतीति वर्णनेन यत्रासावृक्तर्तु त्रयेऽनस्तमितो दृश्यते स देवनिवास स्वर्गो लोको द्युलोको वा । अस्य च भुव उत्तरस्मिन्पार्श्वे सर्वोच्च-स्थाने स्थिति: । यत्र स्थानेऽवस्थितेन पुरुषेण ध्रुवनक्षत्र स्वस्वस्विके (स्वमस्त-कोपरि) उपरिष्टाद्दृश्यते स भागो द्युलोक: । स चोर्ध्व इति तस्य शिखरत्वेन कल्पना । मेरो देवाना निवास इति प्रसिद्धा तन्मेरुशिखरम् । तच्च सुमेर्वाख्यम् । तत्र देवाना निवासवर्णनात् । एव च भुव उत्तरस्मिन्पार्श्वे सर्वोच्चभागस्य देव-निवाससुमेरुत्वे तस्यैव द्युलोकता चेति ।

तद्विपरीतदिशि अर्थाद्दक्षिणस्या दिशि भुव: पार्श्वीयसर्वोच्चभाग: कुमेर्वा-य मेरोर्दक्षिण शृंगम् । एतल्लोकालोकशब्देनापि व्यवह्रियते । अस्य भूलोकत्वम् ।

---

१ ऋ. वे. १:१६४.४६

तत्रादित्यस्य वामत्वेन वर्णना। सुमेरौ यावदादित्यो भवति तावत्पर्यन्तं कुमेरुस्थैः स न दृश्यते। यदा च कुमेरुस्थानां दृश्यो भवेत्तदानीं सुमेरुस्थानामदृश्यः। तत्र शतपथब्राह्मणे वसन्तादिऋतुत्रयं देवेषु स्थित्या तत्रतावत्कालं तत्रत्यानां दिनं स च कालो माससंस्कारवासितात्मनामभिप्रायेण षण्मासा भवेयुः। एवं च तत्र षाण्मासिकं दिनमिति भवति।

यथेदं भुव उत्तरपार्श्वे एवं भुवोदक्षिणपार्श्वेऽपि स्यात्। तत्र शरदादि-ऋतुत्रयमादित्यस्थितेः शतपथे वर्णनात्। तदुक्तं शरद्धेमन्तः शिशिर इति असुरा ऋतवो सुरेष्वसावेतर्हि भवत्यसुरांस्तर्ह्यभिगोपायति इति। एवं चात्रापि कुमेरावृतुत्रयमादित्यस्थित्या षाण्मासिकं दिनम्। यदा सुमेरौ दिनं तदानीं कुमेरावादित्यादर्शनाद्रात्रिः। साऽपि षाण्मासिकी तत्र। यदा च कुमेरावादित्यदर्शनं तदानीं तत्र दिनं सुमेरौ च तावत्कालमादित्यादर्शनाद्रात्रिरिति। एवं सुमेरौ कुमेरौ च षाण्मासिकं दिनं तावती रात्रिश्चेति।

आदित्यस्यास्तगमनेऽग्नौ प्रवेशस्तस्येति ब्राह्मण उच्यते। तदुक्तम्-आ[1]दित्यो वा अस्तं यन्नग्निमनुप्रविशतीति। एवं तस्योदयोऽप्यग्निसकाशत इति। अत एवोच्यते[2] 'अग्नेर्वा एष प्रातरुदेतीति। एवं चादित्यस्यास्तमारभ्योदयपर्यन्तमग्नेः सत्त्वमिति भवति। एवं च सुमेरावस्तमितः कुमेरावुदेतीति कुमेरोर्भूत्वम्। भूलोकसम्बन्धिन आदित्यस्याग्नित्वोक्तेः।

एवं च सुमेरुर्द्योलोकः कुमेरुर्भूलोकः, मध्यवर्तिभागश्च उभयोरन्तर्मध्ये क्षियति तिष्ठतीति तस्यान्तरिक्षलोकता। एवं चात्र इमे कल्पे त्रयोऽपि लोका भुवि वर्तमाना इति भवति। एषां त्रयाणामपि लोकानां प्रत्येकं लोकत्रयरूपत्वम्। तथाहि ब्राह्मण उच्यते "एषां वै लोकानां रोहेण सवनानां रोह" इति।

अयं भावः– यथेमे लोका आदित्येन प्रत्यहं कर्मणोर्ध्वोर्ध्वमाक्रम्यन्त आरुह्यन्त इति वा तदनुसारी सवनानामपि सोमयागीयानां क्रम इति। यथादित्येन दिने प्रथमं प्रथमलोकोऽर्थाद्भूलोक आरुह्यत एवं प्रथमेऽवसरे प्रथमं सवनं तस्य कालविशेषाभिप्रायेण कालबोधकः शब्दः सवनशब्देन सह प्रयुज्यते प्रातरिति। प्रथमं सवनं प्रातःसवनं तच्च प्रातःकाले भवति। एवं च प्रातःकाले प्रथमं सवनं प्रातः सवनाख्यमेवं प्रातःकाले प्रथमो लोको भूलोक इति। अत एवादित्यस्य प्रातरुदयेन उदयश्च वह्नेः सकाशतः, वह्निश्च भूस्थान इति। संगच्छते।

यथा प्रातःकाले भूलोकः प्रातः सवनं च एवं मध्यमलोको मध्यमं सवनं च समानकालं द्वयम्। तस्य च सवनस्य मध्यन्दिनमिति विशेषणान्मध्यन्दिनकालिकता, एवं लोकस्यापि मध्यमस्यार्थादन्तरिक्षलोकस्य मध्यन्दिनकालिकता।

---

१. श. ब्रा. ३:५:७:५ २. ऐ. ब्रा. १:३:२

एव तृतीयसवन द्यालोकश्च समकालाविति । एव च सुमेरौ दिनप्रारम्भे भूलोका दिनमध्येऽन्तरिक्षलोक परस्ताद द्योलोक इति लोकत्रय भवति । यथा सुमेरौ लोकत्रययोग एव कुमेरावपिलोकत्रययोग समानन्यायेन । सुमरुकुमर्वोर्द्योत्व भूत्वमिति प्रागुक्तमेव ।

तदेतद् गृहीत्वा मन्त्रे उच्यते "[1]तिस्रो भूमय त्रयो द्योलोका" इति । तदुक्तम्–तिस्रो भूमीर्धारयन्त्रीरुतद्यूनिति । यथा सुमेरुकुमेर्वोर्भूरादिलोकत्रय-योगिता समानन्यायेन मध्यवर्तिन्यन्तरिक्षलोकेऽपि लोकत्रययोग । तत्रापि आदित्यस्य उदयादिसत्वात् । तदेतदभिप्रेत्य ब्राह्मण उच्यते त्रयो वा इमे त्रिवृतो लोका इति ।

उक्तरीत्या त्रयाणा लोकाना लोकत्रययोगे लोकसख्या साकल्येन नवरूपा भवति । यथोक्तरीत्या लोका नवविधा उक्ता, एव कल्पनान्तरेण लोकाना त्रिषष्टि सख्याकत्वम् । तदुक्त ब्राह्मण "अनुष्टुभौ[2] स्वर्गकाम कुर्वीत" इति द्वयोरनुष्टुभो स्तुतिप्रसगे "द्वयोर्वा अनुष्टुभोश्चतु षष्ट्यक्षाराणि[3]" इत्युक्त्वोच्यते "त्रयो[4] वा इम एकविंशा लोका" स्तेष्वेकैकेनाक्षरेणारुह्य चतु षष्टितमेनोर्ध्व-वर्तिन्यादित्ये प्रतितिष्ठतीत्युक्तम् ।

एव चैषा त्रयाणा लोकानामुक्तरीत्या सुमेरुकुमेरुमध्यवर्तिना प्रत्येकमेक-विंशतिविधत्वम् । अत एव प्रत्येक एकविंशा इति विशेषण सगच्छते ।

तच्चैकविंशतिविधत्व यथा—

भुव उत्तरदक्षिणपार्श्वगते नवतितमाशरूपे प्रतिपार्श्वमुच्चस्थले सुमेरु-कुमेरुरूपे षाण्मासिकी रात्रि षाण्मासिक च दिन भवतीत्युक्त प्राक् । तत्र षाण्मासिक्या रात्रौ केवलतमोमयानि दिनानि नवनवतिर्भवन्ति । दिनभेदेन तमोभेद मत्वा तानि वृत्राख्यान्धकारस्य रूपाणि तेषामिन्द्रेणादित्येन विनाशन क्रियत इति इन्द्रसूक्तेषूच्यते "जघान[5] नवतीर्नव" 'जघान[6] नवति नव" "नव[7] यदस्य नवति च भोगान् त्साक वज्रेण मघवा विवृश्च" 'दित्यादिना ।

*यथा उक्तस्थाने केवलतमोमयानि दिनानि भवन्ति एव तस्मात्स्थानादव-*रोहे *स्वल्पन्यूनांशस्थले दिनरात्रिमानयोर्विषमता* भवति । सा च विषमता अन्ति-मनवत्यंशस्थानत सप्ताशन्यूनपर्यन्तमेव भवति तत परस्ताद्दिनरात्र्योर्मानमक-दिनापेक्षयाऽधिक न भवति । इति तस्य विशिष्य वचनाभावो वेदे ।

---

१ तै ७२३२  २ ऐ ब्रा ११५,  ३ ऐ ब्रा ३५४,
४ ऐ ब्रा ७३२  ५ ऋ स १८४१३  ६ ऋ स १५८१
७ ऋ स ५२९६

तदेतद्विषमावधित्वं रात्र्या एकादशदिनावधि भवति। तच्च विषमं रात्रिमानमथर्ववेदे रात्रिसूक्ते उच्यते। यथा—"ये ते रात्रि नृचक्षासो द्रष्टारो नवतिर्नव[1]। अशीतिः सन्त्वष्टावुतो ते सप्तसप्ततीः। षष्टिश्च षट् च रेवति पञ्चाशत्पञ्चसुम्नयि। चत्वारश्च चत्वारिंशच्च त्रयश्च त्रिंशच्च वाजिनी। द्वौ च ते विंशतिश्च ते रात्र्येकादशावमाः[2]"। इति। अत्र स्थानभेदेन रात्र्या अवधिभेदा निर्दिष्टाः। ते चांशसप्तकस्थानपर्यन्तमेव भवन्ति।

एवं चैतेषु स्थानेषु प्रतिस्थानं भिन्नत्वं गृहीत्वा सुमेरौ द्योलोकसप्तकम्। सुमेरुवत्कुमेरावपि अंशसप्तकपर्यन्तं दिनरात्र्योर्विषमावधित्वमिति तत्रापि सप्तविधत्वं तच्च भुवः। यथा सुमेरुकुमेर्वोः सप्तविधत्वं लोकगतमेवमन्तरिक्षलोकेऽपि वैषम्यनिबन्धनं लोकसप्तकमिति। त्रयाणामेषां सप्तविधानां लोकानां प्रतिस्वमुदयमारभ्यास्तमयपर्यन्तं पूर्वोक्तरीत्या लोकत्रयकल्पनेभूरादिलोकानां प्रत्येकमेकविंशतिविधत्वं भवति। तदेतद् गृहीत्वा ब्राह्मण उक्तं "त्रयो वा इम एकविंशा लोका" इति।

८. लोके कल्पनाभेदेन संख्याभेदः

एवं सति लोके कल्पनाभेदेन त्रित्वं नवत्वं एकषष्टिविधत्वमिति भवति। तेषु भूरादिविभागेनाग्न्यादिरूपत्वमादित्यस्य भवति।

तत्र कुमेरुरूपभूलोकस्योदयादिवशतो लोकत्रयमभिप्रेत्य तत्रापि देवतात्रयं भवति। तस्याग्निभ्रातृत्वेन व्यवहारः। तेषां च पूर्वशब्देन व्यवहारः। तद्विषये परस्ताद्विवेचनं करिष्यते। "ते चेमे अग्नेः पूर्वे त्रयो भ्रातरो मृता[3]" इति कृष्णयजुर्वेदे उच्यते। ऋग्वेदेऽपि उच्यते—"अग्नेः पूर्वे भ्रातरो अर्थमेतं रथीवाध्वानमन्वावरीवुः[4]"। इति।

अत्र मन्त्रे भ्रातर इति बहुवचनमात्रमुच्यते न तु संख्याविशेषस्तथापि कपिञ्जलन्यायेन पूर्वोक्तकृष्णयजुर्वशतश्च "ते त्रय" इत्येवं विवक्षितम्। अर्थशब्देन गन्तव्यस्थानसमाप्तिरूपोऽवधिरुच्यते। अवभिप्राप्त्या समाप्तिरुपलक्ष्यते। तथा मरणकल्पनयोच्यते "अग्नेः पूर्वे भ्रातर" एतमर्थमन्वावरीवुः अनुक्रमेण वृतवन्ता। अर्थवरणं मरणमिति पूर्वमुक्तमेव।

एवं च "तेऽग्नेस्त्रयो भ्रातरो मृता" इति कृष्णयजुर्वेदोक्त एवार्थोऽनेन ऋङ्मन्त्रेण प्रतिपाद्यत इति भवति। एतस्याग्निभ्रातृत्रयस्य अस्य वामस्येति सूक्ते स्पष्टमुल्लेखः। अयं हि तत्रत्यो मन्त्रः—"अस्य वामस्य पलितस्य होतुस्तस्य

---

१. अ. वे. १९:४७:३–५ २. ऐ. ब्रा. ७:३:२
३. तै. सं. २:६:६:१ ४. ऋ. सं. १०:५१:६१

भ्राता मध्यमो अस्त्यश्न । तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्य विश्पतिं सप्तपुत्रम्[1] इति ।

९. वामशब्द विवेचनम्

अत्र वामशब्देन कुमेरुगत आदित्योऽग्निरूपो बोध्यते । अय भाव -सुमरुकुमेर्वो पाण्मासिकदिनरात्रिसाम्येऽपि सप्तविधत्वादिकतिपयप्रकारसाम्येऽपि केचन विपमा प्रकारा प्रतिस्व भवन्ति ।

सुमेरावादित्यस्य विशेप एवरूपो भवति यत् तस्य तत्र पूर्वस्या दिश्युदय क्रमेण कुलालचक्रगतिवत्प्रदक्षिणावर्ता गति । तया क्षितिजत क्रमेण मासत्रयपर्यन्तमूर्ध्वाया दिशि गमनमम्बरतले । तच्च तस्य तत्रारोहण क्षितिजतश्चतुर्विशत्यशपर्यन्तम । पुनरारोहक्रमण ततस्तथैव गत्या प्रदक्षिणावर्तया मासत्रयपर्यन्तमवरोह । स चारोहक्रमणत्युतनम् । तत्रारोहक्रमवैपरीत्येनावरोह ।

यथा सोपानारोहण य क्रमो गृह्यते तदनुसार्येवावरोहे क्रम आस्थीयत वैपरीत्येन । न हि आरोहे क्रम १-२-३-४ सोपानाना तस्य अवरोहेऽपि १-२-३-४ इत्येवमव क्रम सभवति, नवा ४-२-१-३ इत्यादिरूपोऽपि सभवति किन्तु आरोहक्रमस्य १-२-३-४ वैपरीत्येन ४-३ २-१ एव क्रमणावरुह्यत, तद्वदादित्योऽपि सुमरौ क्षितिजतश्चतुर्विशत्यशपर्यन्तमारूढो मासत्रयेण कुलालचक्रगत्या क्रमणावरोहति । प्रतीच्या दिशि चास्तमेति प्रतीच्यामस्तमित सुमेरौ कुमेरौ तत्रैवोदेति ।

एव सति कुमेरावादित्यस्य प्रतीच्यामुदय इति भवति । तत्र प्रतीच्यामुदित क्रमेण कुलालचक्रगत्या वामावर्तया तत्रत्यमम्बरतलमारोहति क्षितिजतश्चतुर्विशत्यशपर्यन्त मासत्रयेण । तत पुनर्मासत्रयेण तयैव गत्या क्षितिजपर्यन्तमवरोहति । मासत्रयान्ते तत्र पूर्वस्यामस्तमेति । तत सुमेरौ पूर्वस्यामुदेतीति क्रम । एव सति सुमेरुगता विशेपा पूर्वस्यामुदय प्रदक्षिणावर्ता गति कुलालचक्रवत, पश्चिमायामस्तमय ।

१०. सुमेरुकुमेर्वो प्रतिस्व केचनविपमा प्रकारा

कुमेरुगता विशेपा पश्चिमायामुदयो वामावर्ता गति कुलालचक्रवद्, पूर्वस्यामस्तमय इति । एतेपा विशेपाणामभिप्रायेण सूक्तेपु वर्णनावसरे आदित्यस्य विभिन्ननामभिर्वर्णना । यथा सुमेर्वभिप्रायेण तस्य दक्षदक्षिणशब्देन प्रदक्षिणभ्रमाभिप्रायेण, पूर्वस्यामुदेत्य पश्चिमायामस्तार्थं गमनमभिप्रेत्य प्रत्यङ्शब्देन

१ ऋ. स १:१६४१

व्यवहारः। आदित्यव्यवहारवदुषआदीनामपि व्यवहारा इति तेषामपि दक्षिणा-प्रतीच्यादिशब्दैर्व्यवहारो वेदे।

एवं कुमेर्वभिप्रायेण तद्गतविशेषाभिप्रायेण सुमेरुविरुद्धभावेन व्यवहारः। यथा वामावर्तपरिभ्रमाभिप्रायेण दक्षिणविरुद्धवामशब्देनादित्यव्यवहारः। एवं तत्र प्रतीच्यामुदेत्य क्रमेणास्तार्थं पूर्वां दिशमभिप्रेत्य गमनाभिप्रायेण प्राङ्शब्देन पूर्वप्रथमादिशब्दैश्च व्यवहारस्तत्र तत्र सूक्तादिषु। आदित्यव्यवहारवदुषआदीनामपि वामाप्रतीचीपूर्वाप्रथमा इत्यादि शब्दैर्व्यवहारः सूक्तेषु। एवं सति उपरितनमन्त्रे कुमेर्वभिप्रायको वामावर्तगत्याभिप्रायेण वामशब्देन व्यवहारस्तस्य।

## ११. अग्निः पूर्वेभिर्ऋषिभिरिति मन्त्रार्थ-विचारः

एवं चोक्तमन्त्रेऽस्य भूलोकसम्बन्धिनो वामस्य वामावर्तस्यादित्य तद्रूपस्याग्नेर्भ्रातरः क्रमेण तन्मन्त्रे उच्यन्ते। प्राङादिशब्दवत्पूर्वादिशब्दैरपि व्यवहारः कुमेरुसम्बन्धाभिप्रायः प्रसिद्धो बहुलं वेदे। यथा—अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत। स देवाँ एह वक्षति। इति मन्त्रे। तत्र पूर्वादिशब्दा उभयार्थका लोके प्रसिद्धा, दिग्वाचकाः कालवाचकाश्च। प्रयोगेषु योग्यतानुसारेण ते तत्र निर्णीयन्ते। प्रकृते मन्त्रे सन्दिग्धावस्थाकः पूर्वशब्दः परवर्तिनूतनशब्दवशतो व्याख्यातृभिर्निर्णीयतेऽत्रायं शब्दः कालवाचक इति।

नूतन शब्दस्य सन्निहितकालबोधकत्वं प्रसिद्धतरमिति तत्प्रतिद्वन्द्वितया निर्दिश्यमानः पूर्वशब्दोऽत्र कालवाचकः। स च विप्रकृष्टो भूतः कालो वर्णनानुसारेण गृह्यते। अत एव पूर्वेभिरित्यस्य व्याख्यानं पूर्वकालिका ये भृग्वङ्गिरः प्रभृतयस्तैरिति व्याख्यातृणाम्। परं तु पूर्वशब्दस्योभयार्थत्वमिव नूतनशब्दस्यापि उभयार्थत्वमिति न नूतनशब्दवशतः कालवाचकत्वं पूर्वशब्दे निर्णेतुं शक्यम्।

किञ्च अग्निर्ऋषिभिः स्तुत्य इत्येतावद्वर्णनमात्रेणापि पूर्वनूतनशब्दग्रहणं विनापि तदुक्तार्थप्रतीत्या तच्छब्दोपादानं तत्र मन्त्रे निरर्थकं स्यात्। वेदेऽर्थाम्रेडनं न दोषायेति त्वगतिकगतिः। संभवति अनाम्रेडनेन वाक्यार्थबोधे तदाश्रयणस्यायुक्तत्वात्। किञ्चैतयोःशब्दयोः प्रतिद्वन्द्विभूतार्थबोधकत्वाद्विशिष्टशब्दसाहचर्यं लोकप्रसिद्धम्। यथा पूर्वशब्दस्य परशब्देनैवं नूतनशब्दस्य पुराणशब्देन साहित्यं प्रसिद्धम्। प्रकृते च मन्त्रे उभयोरपि प्रसिद्धं साहित्यमननुसृतम्। प्राथमकल्पिकसाहित्यस्यासत्त्वे द्वितीयकल्पिकसाहित्याश्रयणम्।

यथा पूर्वशब्दः दिशं देशं वा बोधयति प्राथम्येन न तादृशः नूतनशब्दः प्राथम्येन तद्बोधकः, किंतु प्रयुज्यमानपूर्वशब्देन देशादिनिर्णये तत्र साहित्येन प्रयुज्यमानः नूतनशब्दोऽपि देशवाचकः संपद्यते इति तस्य द्वितीयकल्पीयता पूर्वशब्देन साहित्ये। एवं नूतनशब्दस्य प्राथमकल्पिक साहित्ये प्रतिद्वन्द्विभूतः पुराण-

शब्दो न पूर्वशब्दस्तथा। स तु नूतनशब्देन द्वितीयकल्पिकसाहित्ये प्रतिद्वन्दिभूतः।

एवं सति पूर्वशब्दस्य नूतनशब्दस्य च प्रकृते मन्त्रे द्वितीयकल्पसम्बन्धिसाहित्ये प्रतिद्वन्द्विभूतत्वमिति न पूर्वशब्देन नूतनशब्दार्थनिर्णयो नापि नूतन शब्देन पूर्वपदार्थनिर्णय.। उभयोरपि समत्वात्। तस्मादत्र निमित्तान्तरवशतोऽयं निर्णय. कर्तव्य.। एवं सति श्रणुरपि विशेषोऽध्यवसायकर इति न्यायेन प्रथमोपस्थित मन्त्रगते पूर्वशब्दे प्रसिद्धतरविभक्तिवैशिष्ट्यविपरीततया दर्शनात्प्राप्तविरुद्धार्थकत्व कल्प्यते।

प्रकृते च मन्त्रे नूतनपदसाहित्येन अस्य द्वितीयकल्पसाहित्यप्रतिद्वन्दितायाः प्राप्ताया विरुद्धत्वेनात्रास्य प्राथमकल्पिकसाहित्यप्रतिद्वन्दिता विज्ञायते। तेनास्याःदिग्वाचकत्वस्याश्रयणम्। तथा च पूर्वशब्दः पूर्वदिग्द्वारा पूर्वाञ्चनवशात आदित्यस्यैव पूर्वदिक्सम्बन्धत्वेन पूर्वार्थको न तु कालवाचक। एवं सति अत्र पूर्वशब्देन न पूर्वकालिकाना ग्रहण किन्तु पूर्वाञ्चनाना ग्रहणमिति नूतनशब्दोऽपि न कालिकार्थः किन्तु पूर्वाञ्चनवैपरीत्येन प्रत्यगञ्चनार्थक।

एवं पूर्वा पूर्वाञ्चना ऋषयोऽग्नि स्तुवन्ति। एवं नूतना पूर्वाञ्चनावसाने प्रत्यगञ्चनप्रवृत्या प्रत्यगञ्चना अपि अग्नि स्तुवन्ति। अत्र पूर्वशब्दस्य ऋषिविशेषणत्वेन मन्त्रे वचनात् तत्रोक्तऋषिभिरित्यस्य तेन सह यथा विशेष्यविशेषणभावसम्बन्ध', एवं तत्रैव विशेष्यबोधकपदरहितनतनशब्दस्यापि उपस्थित ऋषिभिरित्यनेन विशेष्यविशेषणभाव सम्बन्ध. इति भवति प्रतीति.।

परन्तु पूर्वोक्तरीत्या नूतन इत्यस्य प्रत्यगञ्चनपरतानिर्णये प्रत्यगञ्चनपरताया ऋषित्वसम्भवान्नात्र ऋषिभिरित्यस्य विशेष्यतया सम्भव इति नात्र नूतना ऋषय इत्यर्थ', किन्तु ये प्रत्यगञ्चनास्त इति अनुक्तविशेष्यकत्वेनैव ग्रहणम्।

अय भाव –कुमेरोर्भूत्वात्तत्सम्बन्धित्वमृषीणाम्। ऋषिशब्देन किरणा आदित्यस्य गृह्यन्ते। ते आदित्यस्य कुमेरौ पूर्वाञ्चनत्वेन आदित्यसमानन्यायतायास्तत्रत्यानामृषीव किरणेष्वपि दर्शनात्तेऽपि पूर्वाञ्चना. कुमेरुसम्बन्धा ऋषिशब्दबोध्याः। एवं सति पूर्वं किरणा आदित्य स्तुवन्ति एवं नूतना अर्थात्प्रत्यगञ्चना सुमेरस्था' किरणा आदित्य स्तुवन्ति, ते च सुमेरुसम्बन्धाः किरणा देवशब्दबोध्या। अत एवात्र नूतनैरुतेत्यत्र देवैरिति विशेष्यसम्बन्ध इति भवति।

ऋषीणा रश्मिपरत्वस्य निरुक्ते प्रतिपादनम्, एवं देवानामपि रश्मिरूपत्वमिति शतपथे वचन तदुपरिष्टाद् व्याख्यास्यते। रश्मय आदित्यमण्डलस्या-

समन्ताद्वर्तन्ते यथा रथनाभ्या आसमन्तादराः। रश्मिष्वरत्वेन कल्पने आदित्य-मण्डले नाभित्वेन कल्पना। तदेतद् गृहीत्वा वेदे प्रोच्यते रथनाभाविवारा इति।

अरत्वेन कल्पनायां रथचक्रे कल्पनाद्वयं सम्भवति यदिमेऽरा नेमितो निर्गत्य नाभ्यां प्रविशन्ति अथवा नाभितो निर्गत्य नेम्यां तेषां प्रवेश इति। उभय-विधाऽपि कल्पना रश्मिषु वेदे कल्पिता। तत्र मण्डलतो निर्गता रश्मय आकाशे पृथिव्यादिषु पतन्ति। पृथिव्यादिभिराकाशे प्रतिबन्धाद्रश्मिगमनस्य तस्मिन्पृथि-व्यादौ, प्रतिबन्धके तेजसः पुञ्जीभावेनौष्ण्योत्पत्त्या तत्राग्निरूपता रश्मीनां सम्पद्यते। अग्निरूपतापन्नानां रश्मीनां पुनर्मण्डलानुकूलगत्या मण्डले प्रवेशः।

तत्राद्यप्रकाराभिप्रायेण मन्त्रे प्रोच्यते "अग्ने नेमिररां इव देवांस्त्वं परिभूरसि"[1] इति। देवा आदित्यरश्मयस्तेषां गमनप्रतिबन्धस्थानमराणां नेमिरिवाग्निरिति तस्य देवानामासमन्ताद्भवनमभिप्रेत्योक्तं अरान् नेमिरिव त्वं परिभवसि इति। सोऽयमराणां नेम्यां प्रवेशाभिप्रायेणारनेमिभाव इत्युच्यते, नाभिगमनाभिप्रायेण तु अरनाभिभाव इति।

सोऽपि रश्मिषु 'रथनाभाविवारा' इति पूर्वोक्तेनाभिव्यज्यते। तत्रारना-भिभावमभिप्रेत्योच्यते–यदिमे रश्मयोऽन्यतः समागत्य मण्डले सन्निविशन्तीति। तद्विषये ब्राह्मणे मन्त्रेषु च वर्णना। आदित्यमण्डलस्योदयात्पूर्वं दृश्या रश्मयो मण्डलसविधं गत्वा तत्स्तुवन्ति तत उदयो जायते। एवमस्योत्तरं दृश्या रश्मयो मण्डलपृष्ठभावेन गत्वा तत्स्तुवन्तीति।

एतत् पृष्ठभावेन गत्वा स्तवनं नमनशब्देनोच्यते। अग्रभागेनागत्य स्तवनं स्तवनेडनशब्देनोच्यते। एतेषां पृष्ठभागेनाग्रभागेन वा गच्छतां रश्मीनां मण्डले तिर्यक्त्वेन सम्बन्धः। सम्मुखीनभावेन मण्डले प्रविशन्तस्ते तदाह्वयन्तीवेति। एवं त्रिविधभावमभिप्रेत्यत्रिविधानि विशेषणानि वेदे प्रतिपाद्यन्ते। यथा वह्नि-स्तावके सूक्ते उच्यते "आजुह्वान[2] ईड्यो वन्द्यश्चेति"। तदत्र देवतासूदयन्नादित्यो भुवि वर्तमानैः किरणैः पूर्वाञ्चनात्पूर्वैर्भूसम्बन्धादृषिरूपैरादित्यः स्तूयत इत्यभि-प्रायेण मन्त्रे अग्निः पूर्वेभिर्ऋषिभिरीड्य इत्युक्तिः।

एवं देवेषूदयात्प्राक्कालीना रश्मय उदयन्मण्डलाग्रभागेनागच्छन्त अत एवेमे नवीना अर्थादपराः प्रत्यगञ्चना इति देवरूपास्तमग्निं स्तुवन्तीति वचनम्। एवं सम्मुखीनोऽसावग्निरादित्यो देवान् सम्मुखीनान् रश्मीन् इहोदयदेशे आवक्ष्यति आनेष्यतीति। अनेनारनेमिभाव उक्तः। पूर्वप्रकारद्वये तु अरनाभिभाव इति।

---

१. ऋ. स. ५ : १३ : ६.

२. ऋ. स. १० : ११० : ३.

एतावता मन्त्रे देवानामनुयुनोक्त्या तदानमनस्य उदयकालिकत्वेनात्रादित्यस्योदयो भवत्विति प्रदर्शितं । एवं चास्मिन्मन्त्रे पूर्वशब्दस्य कालवाचित्वाभावेन टीकाकृता व्याख्यानस्यैवाप्रवृत्तिरिति वेदस्यापौरुषेयत्वभङ्गरूपसिद्धान्तहान्या अप्राप्ति. । टीकाकृद्रीत्या व्याख्याने, तस्या उद्धार. क्लेशसाध्य इति । एवं चात्र मन्त्रे पूर्वशब्द. पूर्वाञ्चनाभिप्रायक इति भवति ।

एवञ्चास्यवामस्यमन्त्रे वामावर्त आदित्यो वामशब्देनोच्यते । तस्य भ्राता मध्यमोऽश्नशब्देनोच्यते । अश्न: सर्वतो गच्छन्वायुरिव व्यापक सोऽग्नेर्वामावर्तादित्यस्य मध्यमो भ्राता । तृतीयो भ्राता घृतपृष्टोऽस्याग्नेरित्यादि तन्मन्त्र उच्यते । एवं च कुमेरौ सुमेराविव लोकत्रयसम्बन्धिनस्ते परस्पर भ्रातृभूतास्तेषा कुमेरावस्तमये सुमेरावुदये कार्यकालस्यावमानादर्थप्राप्तिर्मरणं वेत्यभिप्रेत्य यजुर्वेदे "अग्ने.[1] पूर्वे त्रयो भ्रातरो मृता" इत्युक्ति. । 111350

ऋग्वेदे उपरितने मन्त्रेऽयं प्राप्ता इति वचनम् । तदेतत् कुमेरुगत वैशिष्ट्य पश्चिमायामुदय: प्राच्यामस्तमय: तच्छान्दोग्योपनिषदि प्रोच्यते । तत्रोक्त "स यावदादित्यो दक्षिणत उदेतोत्तरेऽस्तमेता द्विस्तात् पश्चादुदेता पुरस्तादस्तमेते" ति । तत्र दक्षिणस्यामुदय उत्तरस्यामस्तमये पश्चात् पश्चिमायामुदय. पुरस्तात् पूर्वस्यामस्तमय इति वर्णनम् । तत्कुमेरावेव सम्भवतीति ।

## १२. जघान नवति नवेति मन्त्रार्थ विचार:

एवं च वेदे आदित्यस्यैवैकस्य स्तव इति मन्त्रेषु प्रोच्यमानसख्याना विस्पष्टार्थत्वं भवति ।

तत्र प्रथमत ऐन्द्रे सूक्त उच्यमानसख्याविषय एव विचार: ।

पूर्वोदाहृत: सख्याविशेषो "जघान नवतिर्नव" इत्यत्र नवाधिका नवति. । किमनया सख्यया विवक्ष्यते । कुत एतावानेव सोऽयं. । कथञ्च तस्य विनाश इन्द्रेणेति ।

तत्रेन्द्रो हि आदित्यस्तस्य द्विविधा गतिरेका दक्षिणोत्तरायणरूपिणी दक्षिणोत्तरसम्बन्धेन, अपरा सापातिकगति: पूर्वपश्चिम सम्बन्धेन ।

तत्र दक्षिणोत्तरायणगतिर्वेदे देवयानपितृयानशब्दाभ्या प्रोच्यते ।

देवयानशब्देन देवेषु यान गमनम् । देवाश्च उत्तरस्या सुमेरौ निवसन्तीति पूर्वमुक्तम् । देवयानप्रारम्भस्थलतो देवयानप्रवृत्ति: । तत्प्रारम्भस्थलानि चत्वारि वेदे निगदितानि ।

---

१. ऐ ब्रा ३ : ८.४.

तत्र दक्षिणायनावसानस्थलं यत् पितृयाणावसानरूपम्, तत्प्रथमम् । यस्य मकरसंक्रमणादिरूपत्वम् ।

अथवा देव्या रात्र्या मध्यः, ततः । देवी रात्रिश्च देवेष्वादित्यस्यास्तमयतः प्रवर्तते । तत्रादित्यस्यास्तमयः शरदृतुप्रारम्भे । अत एव शतपथब्राह्मण उच्यते "वसन्तो ग्रीष्मो वर्षास्त देवा ऋतवः, देवेषु तद्र्यसो भवति" इति । एतदृतुत्रय यावत् देवेष्वादित्यस्य सत्ववचनेन परस्मिन्नृतुत्रये देवेषु तस्यासत्वं प्रतीयते । तच्चास्तोत्तरमिति शरदृतुप्रारम्भे देवेष्वादित्यस्यास्तमयेन रात्रिप्रवृत्तिः । सा च परवर्तिऋतुत्रयं यावत् ।

एवं च परवर्ति मासषट्कं देवी रात्रिः । तस्या मध्यश्च हेमन्तर्तोरेक-मासावसाने । यतो देवेष्वस्तमित आदित्यो सुरेषु पितृषु वोदेति । स चोदयः कुमेराविति तत उदितस्य वामावर्तगत्या क्षितिजत उपरिष्टाच्चतुर्विंशत्यंशपर्यन्तः समारोहो मासत्रयेण । तत्र तृतीयमासान्ते तस्य तत्रोर्ध्वारोहस्यावधिश्चतुर्विंशांश-स्थलरूपावधिप्राप्तिः । ततः स पुनरारोहक्रमेण मासत्रयेणावरोहन् भवत् ।

एवं च शरदि उदितस्य तस्य शरदृतुमासद्वयं हेमन्तस्यैको मासोऽतीतः स्यादिति । हेमन्तस्य मार्गशीर्षपौषरूपं मासद्वयम् । तत्र मार्गशीर्षमासस्यान्ते मकर आदित्यस्य संक्रमणे मकरादिः कालस्तत आरम्भो देवयानस्य अर्थादु-त्तरायणस्य प्रवृत्या स एको देवयानस्य प्रारम्भ इति । ततः आरम्भ स उत्तरस्यां गन्तुं प्रवर्तते ।

## १३. सदृशीरद्य सदृशीति मन्त्रार्थ विचारः

उषःकालारम्भोऽपि देवयानारम्भकालस्तत आरम्भ देवयानं प्रवर्ततेऽत एव स उत्तरायणारम्भकालः । स द्वितीय उत्तरायणप्रारम्भः । तथाहि–तत्र सुमेरुकुमेर्वोर्यत्र पाण्मासिकं दिनं तावती रात्रिश्च तत्रास्तोत्तरं मासद्वयपर्यन्तं सायंकालिकं सान्ध्यं तेजो भवति । तत्र प्रथममासपर्यन्तं भास्वरं तेजस्ततः पर-वर्तिनि मासे च न्यूनभास्वरं तेजः, ततः परवर्तिमासद्वयं तमोमयम् ततः परवर्तिनि मासद्वये च प्रातःकालिकसान्ध्यतेजोयुक्तता भवति । तत्र प्रथमो मास औषसः । द्वितीयो मासः सावित्रः । तत्र औषसो मासस्त्रिंशद्दिनपर्यन्त इति उषसस्त्रिंशद्यो-जनपर्यन्तं ऋतुः कार्यं तमोनिरासपूर्वं विश्वप्रकाशनं तासां भवति । तदयमर्थः सदृशीरद्येति मन्त्रे प्रतिपादितः । तथाहि स मन्त्र :—

> सदृशीरद्य सदृशीरिदुश्वो दीर्घं सचन्ते वरुणस्य धाम ।
> अनवद्यास्त्रिंशतं योजनान्येकैका ऋतुं परियन्ति सद्यः ।[1] इति ।

---

१. ऋ० सं. १:१२३:७

तत्र त्रिंशत योजनानि त्रिंशद्दिनानि, अर्थाद्दिनानि तावन्ति एवं मासस्तावत् पर्यन्तमुपस सत्वम। तत्र सुमरुकुमेर्वोदिनरात्र्यो: षाण्मासिकताक्ता। तत्र तावत्पर्यविकले दिने वा रात्र्या वा कथनमृतुमासदिनव्यवहार। सातत्येन दिनस्य वा रात्र्या वा प्रवृत्तौ तत्र कथमृतुमासादिनाम कालमान स्यात्। कथञ्चोपसस्त्रिंशद्दिनरूपकालमानेन वचनमिति चेत्, सत्य दिने वा रात्र्या वा अवान्तरदिनादीनामभावाद्दिनादिभिर्व्यवहारो न सम्भवति।

अत एव पूर्वोक्त शतपथब्राह्मणम् "वसन्तो ग्रीष्मो वर्षास्ते देवा ऋतव" इत्यादिकमनुपपद्यते। दिनादिव्यवहाराभावे मासव्यवहाराभावेन ऋतुव्यवहारासम्भवात्। तथापि तत्र सुमेर्वादो सातत्येन प्रवर्तमाने दिने वा रात्र्या वा अवान्तरकालपरिच्छेदाश किंचिदुपलभ्यते। तस्यैव मासर्तुसंस्कारवासितान्त करसौदिनादित्वेन व्यवहार कृत्वा मासर्त्वादीना तत्र व्यवहार क्रियते। तथाहि पूर्वमुक्त "सुमेरौ कुमेरौ वा आदित्यस्य कुलालचक्रवद् गतिरिति।

एतावान् पर विशेषो यत् सुमेरौ सा दक्षिणावर्ता कुमेरौ वामावर्तेति। कुलालचक्र भ्रमद् वृत्ताकारेण भ्रमति, एवमआदित्यो भ्रमन् वृत्ताकार परिभ्रमति। सैषा आदित्यस्य दैनन्दिनी गतिस्तृतीया। पूर्वं गतिद्वयमुक्तम्, सा च तस्य दैनन्दिनी गतिस्तत्र कुलालचक्रवद्भ्यो वृत्ताकारभ्रमणेन भवति। तत्र यो वृत्ताकार परिभ्रमस्तस्य कियत्या कालकलया पूर्णता भवति। तता द्वितीयो भ्रमस्ततस्तृतीय इत्यादिक्रमेणाविरत भ्रमन्नादित्य ऊर्ध्वमारोहति अवराहति सातत्येन चानस्तमिता दृश्यते। तस्यादर्शने च स परिभ्रमस्तत्र ग्रहनक्षत्रताराभिस्तत्र भ्रमद्भि स भ्रमोऽनुभूयते।

एवं सति स आदित्यस्य भ्रम इति कथमुक्तिरिति चेत् सत्य, तत्रादित्यस्य भ्रमणमनुभूयमान न वस्तुतस्तत्तस्य वास्तव, किन्तु आरोपितम्। वास्तव तु तद्भ्रमण पृथिव्या एव। पृथिव्या एव स्वासमन्ताद्भ्रमन्त्या वशतस्तदारूढः पृथिव्या गतिमनवबुध्य तामादित्य आरोप्यादित्य एव गतिमान् भवतीत्युच्यते तर्यारुढाना तीरगमनवत्।

पृथिव्याः स्वासमन्ताद्भ्रमणेन दैनन्दिनगति *आदित्यस्यासमन्ताद्भ्रमन्त्या* एव परिभ्रमणन वार्षिको गतिस्तत्र स्वन्पपरिवर्तनवशत उत्तरायणादिगति। तथा सापातिकगति पृथिव्या एव। आपातप्रतिपत्तिन्यायेनादित्ये ता गतिमारोप्य आदित्यस्य दैनन्दिनी दक्षिणोत्तरायणरूपा वार्षिकी सम्पातचलनवशत सम्पद्यमाना सापातिकी गतिरिति। तदेतदैतरेयब्राह्मण उच्यते—

स वा एष न कदाचनास्तमेति नोदेति। त यदस्तमेतीति मन्यन्ते ह्न एव तदन्तमित्वाऽथात्मान विपर्यस्यते रात्रीमेवावस्तात् कुरुतेऽह. परस्तात्। अथ

यदेनं प्रातरुदेतीति मन्यन्ते रात्रेरेव तदन्तमित्वाऽथात्मानं विपर्यस्ते हरेवावस्तात्कुरुते रात्रिं परस्तात् स वा एष न कदाचन निम्रोचति इति (ऐ. ब्रा. ३:४:६)

एवञ्च सर्वत्रादित्यस्य गतिवचनमापातप्रतिपत्तिन्यायेन वक्तव्यमिति ।

एवञ्च सुमेरुकुमेर्वो रात्रिकाले ग्रहनक्षत्रतारादीनां भ्रमणेन गतिरनुभूयते । सापि कल्पितैव । तत्रादित्यस्य कुलालचक्रवद्भूमन्यायेनैकवृत्तपरिभ्रम एकपर्यायः इति पर्यायशब्देन वारशब्देन प्रदक्षिणाशब्देन वा सा गतिर्व्यवह्रियते तत्र । ये च सुमेरुकुमेर्वोः पर्याया एत एवाक्षपातस्थले विपुवृत्तादिषु दिनत्वेन व्यवह्रियन्ते । एवं सति दिनसंख्याग्रहणवशतस्तत्र मासादिव्यवहारः ।

एवं चैषा सुमेर्वादिस्थोपास्त्रिंशत्पर्यायपर्यन्तं प्रकाशमाना भवति । एतदेव गृहीत्वा पर्यायाणां योजनशब्देन ग्रहणं कृत्वोक्तमन्त्रे त्रिशतं योजनानीत्युक्तिः । एवञ्च तत्रत्य रात्रिकाले तमोमयमासद्वयादूर्ध्वं प्रथमो मास उपस इति भवति । यथा सुमेरौ षाण्मासिकरात्र्यभिप्रायेणोक्तमन्त्रे पर्यायाणां योजनशब्देन ग्रहणमेव विपुवृत्ताद्यक्षपातदेशे दिनरात्र्योर्मानमविशेषेण षष्टिघटिकात्मकम्, तत्र दिनार्थानां त्रिंशद्घटिकानां परित्यागे त्रिंशद्घट्य एव रात्रिमानं स्यात् । रात्रिमानं च घटीदशकमस्तोत्तरं तेजस्सम्बन्धिः। तत्रास्ताव्यवहितोत्तर घटीपञ्चकं भास्वरतेजोयुक्तं परवर्तिघटीपञ्चकं चाभास्वरतेजोयुतम् ।

ततः परवर्तिघटीदशकं तमोमयं, ततः परवर्तिघटीदशकं परद्दिनीयसान्ध्यतेजोयुतं, तत्र प्रथमं घटीपञ्चकमभास्वरतेजोयुतमौषसं, परवर्तिघटीपञ्चकं भास्वरतेजोयुतं सावित्रं, ततः परस्तादादित्यस्योदयः। एतदेवाभिप्रेत्य सायणभाष्ये भाष्यकारेणोक्तं, स चोपः काल एकविंशतिघटिकाभिः षड्विंशतिपराभिश्च सम्मित इति ।

रात्रिप्रारम्भ उक्तरीत्याऽस्तोत्तरवर्ति तेजस्सम्बन्धि-घटोदशकं परवर्तितमोमयं घटीदशकं मिलित्वा विंशतिघटिकास्वतीतासु परवर्त्येकविंशीं घटिकामारभ्य षड्विंशघटीपर्यन्तं घटीपञ्चकपरिमितः उपसः कालः। स एव च भाष्यकारेणोक्तः। तं भाष्यकारीयमभिप्रायमविदित्वा व्यर्थ एव पाश्चात्येन मैक्समूलरमहोदयेनास्थाने एव कोलाहलः कृतः ।

तत्र भाष्यकृता त्रिंशद्योजनशब्दस्य व्याख्यानं कृतं तदपि योजनशब्दस्य क्रोशचतुष्टयात्मकं मानं गृहीत्वा न कृतम् । किन्तु सूर्यस्य प्रतिदिनं वृत्ताकारगतिमभिप्रेत्य, वृत्ते च षष्ट्यधिकत्रिशतभागानामंशशब्दितानां सत्वेन तैश्च दिनरात्र्योः षष्टिघटिकानामतिक्रमणेन तत्र दिनार्थानामशीत्यूर्ध्वशतांशानामूर्ध्वं रात्र्यर्थेषु तावदंशेषु पूर्वोक्तरीत्या विंशतिघटिकार्थेषु विंशत्यधिकशतांशेषु अतीतेषु रात्रिशेषार्थानां षष्ट्यंशानां मध्ये सावित्राणां त्रिंशदंशानां परित्यागे त्रिंशदंशा

उपोऽर्धा अवशिष्यन्ते। तेषामशाना योजनशब्देन ग्रहण कृत्वा मन्त्रे त्रिशद्‌योजनानि कार्यं कुर्वती गच्छतीत्युक्तम्। उपसामुक्तविधत्रिशत्सम्बन्धेन तैत्तिरीय उच्यमान त्रिशद्उपस्तावक सूक्तमुपपद्यते।

एव भाष्याभिप्रायमज्ञात्वा योजनशब्देन क्रोशचतुष्टय गृहीत्वा तदनुसारेण पृथिव्या विषुववृत्तीयक्षत्रमानार्धाना नवीनरीत्या मानाना "माइल्' सज्ञकाना किंचिन्न्यूनपञ्चविंशतिसहस्राणा षष्टिघटिकाभिरत्यये त्रिशद्योजनार्थाना क्रोशाना विंशत्यधिकशतपरिमिताना 'माइल्" सज्ञकमानेन परिवर्तन कृत्वा सार्धद्विशत् "माइल्" इत्यस्यातिक्रमे कियान् काल इति अनुपातप्रदर्शन द्वारा यो निर्णय उक्त स तु सर्वथा भाष्याशयाविज्ञानमूल इति।

एवञ्चोष कालमारभ्य देवयानस्योत्तरायणस्य वा प्रारम्भ। एतद्द्वितीय देवयानम। अत एवोपसमुक्तेपूच्यत 'स्वसा[1] स्वस्रे ज्यायस्यै योनिमारैगिति"। स्वसारात्रिरूपा ज्यायस्यै स्वस्रे ज्येष्ठभगिनी उपास्तस्या कृते योनि स्थानमारक् रेचितवती। रात्रिरपगता दिन प्रवृत्तमिति तदर्थ। तत ओपसकालना दिनान्तरारम्भेण देवयानारम्भ इति व्यक्तम्। मन्त्रान्तरेणाप्ययमर्थ उच्यते 'आरैगु कृष्णा सदनान्यस्या[2]" इति। तत्र कृष्णा रात्रिरस्या उपस सदनानि स्थानानि आरैक रेचितवतीति।

आश्विनसूक्तेऽश्विनौ प्रत्युच्यते "प्रातर्यावभिरागत[3] मिति"। "प्रातर्यावाणो देवाश्च" ऐतरेयब्राह्मण उच्यन्ते। तथा च ब्राह्मणम् "इमे वै देवा प्रातर्यावाणो यदग्निरुषा अश्विनाविति"[4]। तेनोपस प्रात सम्बन्धो व्यज्यते। प्रातर्दिनारम्भ इति प्रसिद्धम्। दिनारम्भे प्रवृत्ता उपास्तस्याः प्रथमप्रवृत्तत्वाज्ज्येष्ठत्व पश्चात्प्रवर्तमाना रात्रिरिति तस्या कनिष्ठत्वम्। एवमुपसो ज्येष्ठत्ववर्णनादप्युपसस्सकाशातो दिनारम्भ इति व्यक्तम्। ऋतशब्दस्य दिनबोधकत्वादुपस ऋतावरीति ऋतवतीरयर्थक नामापि ततो दिनारम्भ वाच्यतीति दिक्।

## १४. देवयानपितृयाणयो प्रत्येक चातुर्विध्यम्

*सावित्रकालमारम्भ दिनान्तरप्रवृत्या सुमेरुस्थले तद्गतस्यापि कालोत्तरस्य* सावित्रकालस्य दिनान्तरप्रारम्भकतया तत प्रवर्तमान तृतीय देवयानम्। तत्रादित्योदये दैवदिनप्रारम्भणाद चतुर्थ देवयानम।

ते चेमे चत्वारो देवयाना पन्थानो भवन्ति। देवयानाना चातुर्विध्ये तद्विरुद्धा. पितृयाणा अपि पन्थानश्चतुर्विधा भवन्ति। तदुक्त "दे॰ चत्वार पथयो

---

१ ऋ वे १ १२४ ८.  २ ऋ वे १ ११३ २

३. ऋ वे ८ ३८ ७  ४ ऐ. ब्रा २ २ ५  ५ शा म ब्रा २ १ १०.

देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषामज्यानिमजीतिमावहात् तस्मै नो देवा: परिदत्तेह सर्वे" इति ।

पितृयाणस्य देवयानभिन्नत्वाभिप्रायेण यमसूक्ते यमं प्रति उच्यते "यस्ते स्व इतरो देवयानाद्"[1] इति । एवं च देवयानपितृयाणयोरेव दक्षिणोत्तरायण-रूपत्वम् ।

तत्र दक्षिणोत्तरा गच्छन्नादित्यो याम्योत्तरवृत्ते विषुवृत्तत उभयपार्श्व-योश्चतुर्विंशत्यंशपर्यन्तं गच्छति । उत्तरायणे प्रवृत्त आदित्यो विषुवृत्ततो याम्यो-त्तरवृत्तगतदक्षिणदिक्कचतुर्विंशत्यंशावसानस्थलत उत्तरां गन्तुं प्रवर्तते । क्रमेण च तद्वृत्तीयांस्तावत्संख्याकानंशानतीत्य विषुववृत्तं प्राप्य तत उत्तरदिक्कचतु-र्विंशत्यंशपर्यन्तं गच्छति । तावता स्थूलेन मानेनाष्टाचत्वारिंशदंशा उपयुक्ता-भवन्ति । तावता मासषट्कञ्च वत्सरस्यातीतं स्यात् । वत्सरपूर्त्यर्थं-तेषामेवां-शानां विपरीतगत्याऽऽक्रमण कर्तव्यं भवति । तावता वत्सर: पूर्णो भवति । एवं चैतेषामंशानां गमागमाभ्यामुपयोगेऽष्टाचत्वारिंशद्द्वैगुण्यं स्यात् ।

ततश्चोक्तांशानां संख्या षण्णवतिरूपा स्यात् । इदञ्च स्थूलमानेन । सूक्ष्म-माने तु विषुववृत्ततः प्रतिदिशं सार्धत्रयोविंशत्यंशानामेवोपयोगे तद्द्वैगुण्ये सप्त-चत्वारिंशत्संख्या सकृदाक्रमणे स्यात्, द्विराक्रमणे तु उक्तसंख्याद्वैगुण्ये चतुर्णवति-रंशानां दक्षिणोत्तरायणे उपयोक्तव्यानां संख्या भवति । तावतामंशाना दक्षिणो-त्तराक्रमणेन वत्सर: पूरितो भवति । एते दक्षिणोत्तरागमन उपयुक्ता अंशा वैष्णवे सूक्ते उच्यन्ते । तथाहि वैष्णवसूक्तीये मन्त्रे—

"चतुर्भि: साकं नवतिञ्च नामभिश्चक्रन्नवृत्तं व्यतीनरवीविपत्"[2] इत्युच्यते ।

## १८. चतुर्भि: साकमित्यादि मन्त्रार्थ प्रकाशनम्

अत्र 'चतुर्भि: साकं नवतिं नामभि:" वृत्तचक्रवदनुकूलभावेन वेपनमुच्यते । तत्र व्यतीनिति द्वितीयान्तेन प्रतिकूलभावो वेपनीयेषु प्रतिपाद्यते । द्वितीयान्ते-नात्र वेपनकर्म प्रतिपाद्यते । साधनं तत्रोच्यते नामभिरिति तृतीयया नामरूपम् । नामशब्देन गमनमुच्यते । एवं च गमनेन व्यतीनां वेपनं वृत्तचक्रदृष्टान्तेनानुकूल-भावोऽपि वेपितव्यानां प्राप्त: । तेषां वेपनीयानां चतुर्भि: साकं नवतिमिति संख्या प्रोच्यते ।

एवं च चतुर्णवतेर्वृत्तचक्रवदनुकूलप्रतिकूलभावेन वेपनं विष्णुकर्तृकमत्र प्रतिपाद्यते । अनुकूलप्रतिकूलभावे तेषामेव येषामनुकूलप्रतिकूलभावो विवक्षित:

---

१. ऋ. वे. १०:१८:१.

२. ऋ वे. १:१५५:६

द्वि सम्बन्धिता भवति। द्वि सम्बन्धे वेदे सधस्थशब्देन व्यवहार। तस्य सधस्थस्य वर्णने सूक्ते "उत्तरमिति विशेषणादिदमुत्तरदक्षिणसम्बन्धीति विज्ञायन। तदुच्यते तत्र उत्तर "सधस्थमिति"।

एव च दक्षिणोत्तरसम्बन्धि सधस्थान तत्र गन्तव्यांशेषु भवतीति उक्तया मत्यया दक्षिणोत्तरायणयोरुक्तव्यानामशानामेषा सख्या बोधिता भवति। आदित्यस्य विष्णुरूपभास्ता। एव सत्यादित्येन दक्षिणोत्तरायणयोर्याम्योत्तरवृत्त विषुववृत्तत प्रतिपार्श्वं दक्षिणोत्तरा गन्तव्यानामशाना सार्धत्रयोविंशतिरूपाणा पार्श्वद्वययोगे सम्पन्नाना सप्तचत्वारिंशदशाना द्विर, योगेन सम्पद्यमाना चतुर्णवतिसख्याया प्रतिपादन भवति।

यत्वत्र चतुर्भि साक नवतिभिरत्र आदित्येन गन्तव्यवृत्त साकल्येन सम्पद्यमानानामशाना सख्या षष्ट्युत्तरत्रिशतरूपा नवतिचतुष्टयात्मिका चतुर्भि साक नवतिमित्यनेन बोध्यते इति वचनम्। तन्न सम्यक्। तथा सति नवतिपदस्य बहुवचनान्तता प्राप्नुयात्। किञ्च व्यनीनिति विपरीतभाववाचकस्य सम्यक्सम्बन्धो न स्यात। एव सधस्थग्रहणस्य तत्रोत्तरमिति विशेषणस्य सम्यगन्व न स्यात्। तस्मादनेन वचनेन दक्षिणोत्तरायणयोरुपयोक्तव्याना याम्योत्तरवृत्तगतांशानामेव चतुर्णवतिरूपा सख्या प्रोच्यत इति।

यद्यपि विष्णुसूक्ते उपरितनमन्त्रे चतुर्णवरशा उच्यन्ते के चेमेऽशा इति विचारे विष्णुना वेध्यमानत्वाद्विष्णुना त्रिभिर्गमनैर्दीर्घं सधस्थ विमीयत इत्युक्त्या विमेयसधस्थस्य चोत्तर सधस्थमित्युत्तरशब्देन तत्रव विशेषणादुत्तर सधस्य सहस्थानरूपमर्थाद्दक्षिणेनेति प्राप्त्या दक्षिणोत्तरसधस्थस्य त्रिभिर्गमनैर्विमानमिति भवति।

ते च दक्षिणोत्तरसम्बद्धविमेयभेदा अशैर्विमीयन्त इति उक्तसख्याका दक्षिणोत्तरायणसम्बन्धिनोऽशा भवन्ति। ते च तत्र तावन्त। यतो भूमध्यवृत्त विषुवाख्य ततो दक्षिणस्यामुत्तरस्या च याम्योत्तरवृत्ते आदित्येन गन्तव्या अशा प्रतिपार्श्वं सार्धत्रयोविंशति। पूर्वं स्थूलेन मानेन चतुर्विंशतिरित्युक्तम्।

तयोरुभयपार्श्वयोरशाना मेलनेन सप्तचत्वारिंशत्सख्या भवति। तावद्भिरशैस्तैर्नैकमयायन सम्वत्सरार्धरूपमुपयुक्त स्यात्। अतोऽयनान्तरसग्रहार्थं सवत्सरपूर्त्यर्थं तया विपरीतभावेन पुनरुपयोगेन सप्तचत्वारिंशत्सख्याया द्विगुणत्वेन मन्त्रोक्ता चतुर्णवतिसख्या लभ्यते। तेषामशाना गमनागमनयोरुपयोगेन सधस्थता अनुकूलप्रतिकूल पादश्चेति।

१६. सम्पातगति प्रतिपादनम

विष्णुश्च सूक्तेषु इन्द्रस्य युज्य सखेत्युच्यते। युज्यो योगयुक्त सखेत्यनेन समानरूपत्व बोध्यते। विष्णुश्चादित्य इन्द्रोऽपि आदित्य। तत्रेन्द्रस्यात्रापि

सम्बन्धग्रहणे विष्णुरिन्द्रस्य युज्यः सखेति भवति। तयोरिन्द्राविष्णवोः सुतपावत्वं रक्षकत्वं वृत्रविनाशकत्वं च सूक्ते प्रोच्यते।

एवं चेमेंऽशा इन्द्रसम्बन्धिनोऽपि भवन्तीति। एषामनावृत्तानां ग्रहणे संख्या सप्तचत्वारिंशद् भवति। प्रतिपार्श्वं सार्धत्रयोविंशतिरित्युक्तं प्राक्। तत्र पूर्णांशसंख्यामात्रग्रहणे त्रयोविंशतिः प्रतिपार्श्वमिति पार्श्वद्वयमेलनेन संख्या षट्चत्वारिंशद्भवति। सा चैषांशानां संख्या दक्षिणोत्तरगतिसम्बन्धिनाम् आदित्यस्येति।

यथा दक्षिणोत्तरा गतिरादित्यस्य दक्षिणोत्तरायणगतिरूपिणी, एवं पूर्वपश्चिमगतिरप्यादित्यस्य भवति। सा च सम्पातगतिरित्युच्यते, तस्या एवापरोक्षभावेन ज्यौतिषग्रन्थेषु अयनगतिरिति वर्णना। अयनगतिरित्यत्र नायनरूपा गतिः। किन्तु अयनस्य अयनस्थानस्य गतिश्चलनमिति यावत्।

वृत्ते एकस्य बिन्दोः स्वस्थानतश्चलने वृत्तगताः सर्वे बिन्दवः स्वस्थानतश्चलिता भवन्ति इति सम्पातबिन्दुरपि स्वस्थानतश्चलितो भवति इति सम्पातगतिरपि तेनोक्तप्राया। सम्पातो नाम वत्सरमध्यकाले याम्योत्तरवृत्ते आदित्यगन्तव्य मार्गरूपक्रान्तिवृत्तस्य भुवो मध्यवृत्तरूपविषुववृत्तस्यैकत्र सम्प्राप्तिः। स च सम्पातः क्रान्तिवृत्ते यस्मिन बिन्दौ एकस्मिन् वत्सरे जातो वत्सरान्तरे तदपेक्षया विभिन्नबिन्दौ भवति।

स्वल्पा चैतस्य वात्सरिकी गतिर्बहुना कालेन दर्शनयोग्यदेशभेदवशतः प्रतीयते। तस्याश्च पूर्वपश्चिमभावेन प्रतीत्यैषा पूर्वपश्चिमगतिरादित्यस्य सम्पातगतिशब्देनोच्यते। तत्र क्रान्तिवृत्तस्य यो मध्यमो बिन्दुर्मेषादिर्मीनान्तबिन्दुस्थलीयो वत्सरमध्ये याम्योत्तरवृत्ते विषुववृत्तेन सम्पतितः सोऽवधिबिन्दुस्ततः पूर्वस्यां पश्चिमायां वा चलत्वम्। तच्च चलनं न सर्ववृत्तव्यापि किन्तु प्रतिपार्श्वं कियदंशपर्यन्तम्। ते चांशास्तत्रावधिबिन्दुतः पूर्वपश्चिमयोः प्रतिपार्श्वं सप्तविंशतिर्भवन्ति स्थूलभावेन।

१७. या ओषधीरिति मन्त्रार्थविचारः

सा च पातांशसंख्या ओषधिसूक्ततोऽभिव्यक्ता भवति। तथाहि ओषधसूक्ते मन्त्रः—

या ओषधीः पूर्वा जाता देवेभ्यास्त्रियुगं पुरा।
मनै नु बभ्रूणामहं शतं धामानि सप्त च॥ इति।

एतन्मन्त्रस्य निरुक्तकारेणोल्लेखपूर्वं संक्षिप्तं व्याख्यानमुक्तम्। या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा, मन्ये नु बभ्रूणां बभ्रुवर्णानां हरणानां भरणानामिति वा शतं धामानि सप्त च। धामानि त्रयाणि भवन्ति स्था-

1. ऋ. स. १०:९७:१.

नानि नामानि जन्मानीति[1]। जन्मान्यत्राभिप्रेतानि। सप्तशत पुरुषस्य मर्मणा तेष्वेना ग्रादधतीति वेति।

ग्रनार्थस्यास्पष्टत्वम्। पूर्वाशब्दस्य दिग्बोधकत्व कालबोधकत्व वेति सन्दिग्धम। त्रीणि युगानि पुरेत्यस्यार्थो न विस्पष्ट। पूर्व युगत्रय जाता इति वर्णने मन्त्रस्य चतुर्थयुगसम्बन्धिता प्राप्नोति। देवेभ्य इत्यस्य विशेषेणोल्लेखस्य प्रयोजन न स्पष्टम। बभ्रुशब्दस्य नानार्थत्वसपादनेन न कोऽपि गुण। प्रकृते तावता निर्णयाभाव। शत धामानि सप्त चेत्यशस्यार्थोऽत्यन्तमविस्पष्ट। धामशब्दस्यात्र जन्मार्थकत्वेन तावन्ति जन्मान्योपधीनामित्यनेन किमभिप्रेयते, कि तावत्य एवौपधय, उत तावतीरेवाह जाने इति।

को गुण एतावतीनामेवौपधीना सत्वे विज्ञाने वा। शत सप्तेति पदयोर्गुणनेन सम्बन्धे सप्तशतीत्यर्थं उत सप्ताधिक शतमिति सकलनमात्रमिति वा। सप्तशत पुरुषस्य मर्मणामित्युल्लेखेन प्रथमकल्पप्रतीतिस्तदानी समुच्चयार्थकचकारस्योपादान व्यर्थ स्यादिति।

**१८ या ओषधीरिति मन्त्रार्थ निर्णय**

निरुक्तव्याख्याकर्त्रा दुर्गसिंहेन तु पूर्वा इत्यस्य प्रथमा इत्यर्थकरणन कालिकतास्य शब्दस्य मन्यत इव। त्रियुग पुरेति पदयास्त्रियुगेभ्य पूर्वमादिकल्पे इति वर्णने त्रियुगमित्यत्र विभक्ति-विपरिणामोऽपि मन्तव्य तावता देवेभ्य इत्यस्य पुन सम्यक् प्रयोजनाभाव। मन्त्रस्य चतुर्थयुगसम्बन्धिनाप्राप्तिदोपस्तदवस्थ एव। देवेभ्योऽपि पुरेति वर्णनेन देवानामपि जन्मस्वीकारेणामरता तेषा न स्यात्। शत सप्त चेत्यस्य सप्ताधिक शतमित्यर्थमुक्त्वा तावतीरह जाने इत्यर्थेन तावतीनामोपधीना विज्ञाने तदुल्लेखे च प्रयोजनाविज्ञानम्। एव सति व्याख्यानद्वयेनापि मन्त्रस्यार्थो न विस्पष्ट। इयमेव रीति स्वल्पविभेदेन सायणभाष्यस्य। एव च सरलार्थपदयुतस्यैतस्य मन्त्रस्य न स्पष्टार्थता।

ग्रथात्रैव व्याख्यान चेत्–यदत्रौपधिशब्देन न लोकप्रसिद्धा ग्रोपधयो गृह्यन्ते किन्तु ग्रोपो दाहात्मक तेजस्तद्धीयते ग्राधीयते यत्रति व्युत्पत्त्या सौरतेज प्रकाश्यानि नक्षत्राण्यभिप्रयन्ते। ग्रत एव ब्राह्मणे देवा वा ग्रोपधीषु पक्वास्वाजिमयु देवा वै नक्षत्रष्वाजिमयुरिति वर्णनस्य समानरूपता भवति। एव पूर्वाशब्दो नात्र कालवाचक किन्तु दिग्वाचक। तथा सति पूर्वा पूर्वदिक्का इत्यर्थ।

त्रियुग शब्दोऽपि न त्रयाणा युगाना समाहारबोधक। तथा सति त्रियुगीत्यपि प्राप्नुयात्। किन्तु युगशब्दस्य द्वित्वसख्याबोधकत्वेन त्रयो युग द्वय चेति

---

१. निरुक्तम् ६ २८ १

संख्ययोः संकलनार्थकः। एवं सति मन्त्रपूर्वार्धस्यैवमर्थो भवति या ओषधयो यानि नक्षत्राणि तत्संख्या त्रियुगशब्देनोच्यते त्रीणि युगं द्वयं च। पञ्चेत्यर्थः। अर्थाद्यानि पञ्च नक्षत्राणि पुरा पूर्वस्मिन् काले देवेभ्यः देवानां कृते अर्थाद्द्युलोके पूर्वा पूर्वाणि पूर्वदिक्कानि अर्थादादित्योदयस्थानि सञ्जातानि।

अयं भावः–देवानां निवासः सुमेरुस्तत्रादित्योदयस्थानं पूर्वरीत्या वासन्तिकसंपातस्थानं तत्स्थत्वं नक्षत्राणां पञ्चानां पूर्वमासीत् इत्युक्त्या स सम्पातो नक्षत्रपञ्चकसम्बद्ध इति भवति। तत्र नक्षत्रपञ्चकग्रहणेन संपातस्य न सर्वनक्षत्रपरिभ्रमः किन्तु नक्षत्रपञ्चक एवावस्थितिरिति संपातस्यासर्ववृत्तपरिभ्रम इति भवति। अन्यथा पूर्ववर्तिनां सर्वेषां नक्षत्राणां संपातसम्बन्धित्वे नक्षत्रपञ्चकग्रहणस्यासम्बद्ध प्राप्नुयात्।

किञ्च स्थलान्तरे पठ्यमानमन्त्रानुसारेणैतन्मन्त्रस्य सांपातिककृत्तिकानक्षत्रकालिकतयान्ततः पूर्ववर्तिनक्षत्रपञ्चकस्य सांपातिकत्वेनात्र ग्रहणं प्राप्नुयात्। कृत्तिकापूर्ववर्तीनि सांपातिकानि नक्षत्राणि रोहिणीमृगशिरआर्द्रापुनर्वसुपुष्यरूपाणि गृहीतानि भवेयुः। तेषां सांपातिकत्वेन ग्रहणे यजुर्वेदीयनक्षत्रियप्रजापतिवर्णनविरोधः स्यात्। स चोपरिष्टात्प्रतिपादयिष्यते।

किञ्चैतेषां नक्षत्राणां ग्रहणे एतन्मन्त्रोत्तरार्धोक्तसंख्यावचनविरोधः स्यात्। न हि रोहणीतः पुष्यनक्षत्रपर्यन्तमन्तरं सप्तशती अंशानां भवेत् अथवा सप्तोत्तरशतांशपरिमितमन्तरं भवति। यद्यप्यत्र नक्षत्रपञ्चकमेवोच्यते मन्त्रे न विशिष्टं किञ्चन नक्षत्रपञ्चकं, विशेषानुक्तेस्तथापि येषां पञ्चानां नक्षत्राणामन्तरं गमागमाभ्यां मन्त्रोत्तरार्धोक्तांशसंख्यासमं स्यात् तादृशं नक्षत्रपञ्चकमेवात्र विवक्षणीयम्।

तादृशं नक्षत्रपञ्चकं हस्तनक्षत्रमारभ्य चित्रास्वातीविशाखाऽनुराधारूपनक्षत्रपञ्चकेऽनुराधापर्यन्तमन्तरं चतुष्पञ्चाशदंशा इति ज्यौतिषिके प्रतिपादनेन तस्य द्वैगुण्येऽत्र मन्त्रोत्तरार्धोक्ता संख्या सप्तोत्तरशतरूपिणी समा भवतीति तन्नक्षत्रपञ्चकस्यात्र ग्रहणप्रसक्तिः। तस्य देवतासम्बन्धित्वेनोक्तनक्षत्रपञ्चकस्य ग्रहण इमानि वसन्तसाम्पातिकानि नक्षत्राणि प्राप्नुयुस्तथा सति इदानीन्तनवसन्तसम्पातसम्बन्धिनक्षत्रापेक्षया तेषां नक्षत्राणां वसन्तसंपातनक्षत्रत्वेन प्राप्त्यै बहुपूर्वः कालो वक्तव्यः स्यात्।

किञ्चैतेषां नक्षत्राणां वसन्तसंपातस्थाने प्राप्त्यै इदानीन्तनवसन्तसंपातनक्षत्रानुसारेण तेषां वसन्तसंपातस्थत्वप्राप्तिपर्यन्तं मध्यवर्तीनि यानि तादृशानि नक्षत्राणि तेष्वपि उक्तसंपातसिद्ध्या संपातस्य सर्ववृत्तभ्रमप्राप्तिः स्यात्तथा सति उक्तनक्षत्रपञ्चके नक्षत्रियप्रजापतिवर्णनस्यायुक्तत्वं स्यात्। को विशेष एतेषामेव पञ्चानां नक्षत्राणां नक्षत्रियप्रजापतित्ववर्णने।

*अथ मन्त्रोक्तसङ्ख्यासाम्यसम्पादकत्वमेवैषा नक्षत्रियप्रजापतित्वकल्पने विशेष* इति। तदपि न सम्यक्। तथा सति एतत्सख्यावर्णनस्य निष्प्रयोजनत्व स्यात्। उक्तनक्षत्रपञ्चकगतसख्याग्रहणे विज्ञाने वा न किञ्चन फलमस्ति। तस्मादत्रोक्तनक्षत्रपञ्चक न वसन्तसपातनक्षत्रत्वेन ग्रहीतु शक्यम्।

तथा सति अत्र मन्त्रोत्तरार्धगतसख्याया ग्रहणार्थमुक्तनक्षत्रपञ्चकस्य सापातिकत्व वक्तव्य तच्च वसन्तसपातसम्बन्धि न भवतीति कृत्वा तस्य शारद सपातस्थता वक्तव्या।

तथा सति शारदसपातस्योक्तरीत्या नक्षत्रपञ्चकावस्थाने वसन्तसपातस्यापि तत्सारूप्येण नक्षत्रपञ्चकगतत्व वक्तव्य तानि चोक्तशारदीयसम्पातनक्षत्रपञ्चकानुसारेण रेवतीमारभ्य अश्विनीभरणीकृत्तिकारोहिणीरूपनक्षत्रपञ्चकमेवात्र वसन्तसपातसम्बन्धित्वेन ग्रहीतव्य तथा सति तस्येदानीमपि सत्वेनोक्तरीत्या शारदसपातन्यायेन मन्त्रोत्तरार्धगतसख्यासम्बन्धित्वेन ग्रहणमुचितम्। तथा सति नक्षत्रियप्रजापतित्वकल्पनानुसारेण नक्षत्रपञ्चक एव सपातभ्रम आन्दोलनन्यायेनेति *सपातस्यासर्ववृत्तभ्रमो नक्षत्रियप्रजापतिवचनेन अत्र मन्त्रे उत्तरार्धे* विशिष्टसख्यावचनेन च सिध्यति।

एव चात्र मन्त्रे उत्तरार्धे सप्ताधिक शतमित्येव सप्त च शतमित्यस्यार्थत्वेन *वक्तव्य न तु सप्तशती निरुक्तकाराद्यभिमता।* चशब्दग्रहणमप्यत्रोक्तार्थसूचकम्। उत्तरार्धस्य मन्त्रगतस्यायमर्थो यदुक्तनक्षत्रपञ्चकस्य शत सप्त सप्ताधिक शत धामानि अशरूपाणि धामानि स्थानानि सौरतेजोयोगाद् बभ्रुवर्णानि अरुणवर्णानीति यावत्। मनै स्तुवे मानयामि वेति। तेषामशाना रात्रिविनाशोत्तर प्रवृत्त्या आदित्योदयेन सर्वेष्टप्रदातृत्वमिति प्रशसितत्वम्। उक्तसख्याकाशयोगितया रेवतीप्रभृतिरोहिणीपर्यन्तस्य वसन्तसापातिकनक्षत्रपञ्चकस्यात्राभिप्रेतत्वमिति।

तेषा रेवतीप्रभृतीना रोहिणीपर्यन्ताना तावत्सख्याकाशयोगस्तैत्तिरीयब्राह्मणवशतो विज्ञायते। तथाहि तत्र ब्राह्मणे नक्षत्रियप्रजापतेर्वर्णनमुच्यत एवम्।

हस्त[1] एवास्य हस्तश्चित्रा शिर स्वाती हृदयम्, ऊरू विशाखे अनुराधा प्रतिष्ठा। एष वै नक्षत्रिय प्रजापति। यो वै नक्षत्रिय प्रजापति वेद। उभयोरेन लोकयोर्विदु इति।

अत्र कुत एषा नक्षत्राणा प्रजापतिरूपता किमिति नान्येषामिति विचारे प्रकारान्तराभावात्सपातसम्बन्धितैव तेषा प्रजापतिरूपत्वे हेतु। तच्च सपातसम्बन्धित्वमेषामेव यदि भवेत्तदेषा वैशिष्ट्यम्। यदि सपातो नक्षत्रान्तरसम्बन्ध्यपि भवेत्तर्हि उक्तनक्षत्रपञ्चके प्रजापतिरूपत्ववर्णन निर्हेतुक स्यात्।

---

१. तै ब्रा १.५ २

एतन्मात्रसम्बन्धित्वे तु एतान्येव नक्षत्राण्युक्तसंपातस्थानि तद्गततयाऽऽदित्यस्थितिप्रज्ञापकानि तद्द्वारा संवत्सरज्ञापकानीति कृत्वा प्रजापतिरूपाणीति। संवत्सरस्य प्रजापतिरूपत्वं ब्राह्मणेषु "संवत्सरो वै प्रजापतिरि"त्यादिना स्पष्टमुच्यते।

शारदसंपाततो वासन्तिकसंपातस्याशीतिशतांशविप्रकृष्टत्वेन हस्तादौ शारदसम्पातत्वे ततस्तावदशविप्रकृष्टनक्षत्रपञ्चक एव वासन्तिकः संपातः। तत्र पञ्चैव नक्षत्राणि भवेयुरिति तद्बोधनाभिप्रायेण त्रियुगमिति निर्देशः। सर्वथा अत्र वासन्तिकानां पञ्चनक्षत्राणां सम्बन्धिनः सप्तोत्तरशतमंशाः स्तूयन्ते।

एवं सम्पातस्थनक्षत्रपञ्चकस्य सम्बन्धो गमागमाभ्यां द्विःसम्बन्धनेति। द्विःसम्बन्धाभावे सकृत्सम्बन्धे तत्रांशाः सार्धत्रिपञ्चाशत्। त इमे सम्पातसम्बन्धितः पूर्वापरदिक्सम्बन्धिनः। तत्रापूर्णांशपरित्यागेन पूर्णांशमात्रग्रहणेऽपि पञ्चाशत्संख्या भवति, एवं सति साम्पातिकास्त्रिपञ्चाशत्तुदक्षिणोत्तरायणीयाश्च षट्चत्वारिंशन्मिलित्वा ४६+५३=९९ नवनवतिः सम्पद्यते।

एतेषु स्थलेषु आदित्येन तद्रूपेणेन्द्रेण स्वयं गम्यत इति तत्रत्यस्यादित्ययोगाभावे विद्यमानस्यान्धकाररूपस्य वृत्रस्य विनाश इन्द्रेण। इन्द्रभिन्नेन दुर्लङ्घ्यत्वाद्दुर्गत्वमवस्थानात् पुरत्वमित्यादिकं तत्र कल्पितम्। तानितावत्संख्याकानि पुराणि दुर्गाणि वेति विशेष्यविशेषे नादरात् केवलनवति नवेत्युक्त मन्त्रे। दक्षिणोत्तरायणीयेष्वंशेषु विष्णोः सम्बन्धात्तस्येन्द्रं प्रति युज्यत्ववचनम्।

एवं चेन्द्रसूक्ते नवनवतिवर्णनवशत उत्तरायणाद्यभिप्रायेण विष्णोः सूक्ते चतुर्भिरित्यादिसंख्या, औषधिसूक्तगता च संख्योपपद्यत इति सिध्यति। एवं सति ऋग्वेदीयमन्त्रे नवतीरिति विपरिणामेन नवतिमित्यर्थकं, वेदान्तरानुरोधात्। एवमादित्यपरत्वे उभयोर्जघान नवतिं नव या ओषधीरित्यनयोर्विस्पष्टार्थता।

## १९. संपातांशानां स्थूलमानप्रतिपादनम्, तत्र जपमालोदाहरणञ्च

सम्पातसम्बन्धिनोंऽशाः स्थूलमानेन चतुष्पञ्चाशत् अयमंशो लौकिकधार्मिकव्यवहारतोऽपि स्पष्टः। तथाहि धार्मिककृत्येषु जपस्थले साधनत्वेन मालोपयुज्यते, सा च जप्यसंख्यागणनोपयोगिनी, जप्यसंख्या तु तत्तत्स्थले शतघातरूपिणी। शतं द्विशतं सहस्रं लक्षमयुतं प्रयुतमिति परार्धान्ता। तस्याः संख्यायाः संख्यानार्थमुपयुज्यमाना मालाऽपि तत्संख्याने यथा सौकर्यं स्यात्तादृशी उपयोक्तव्या।

परन्त्वत्र तद्वैषम्यम्। शतघातरूपिणी संख्या संख्यातव्या, माला तु अष्टोत्तरशतमणिभिः प्रोक्ता। कथमनया मालया संख्याने सौकर्यं भवेत्। एकशतसंख्याके जपे मालयाः सकृदुपयोगे जपसंख्याऽष्टाधिकशतरूपा संपद्यत इति वैषम्यम्। एवमेव परसंख्यास्थले।

अथ यदि जपसङ्ख्यायले जपदशांशेन तर्पणम्, तद्दशांशेन ब्राह्मणभोजनमिति माङ्गल्यार्थं शतापेक्षायाऽऽधिक्येन तर्पणाद्यर्थत्वेन सङ्ख्यानाभिप्रायेण तदुपपत्तिरित्युच्येत, तदानीं मणीनां सङ्ख्या न्यूना भवेत्। शतदशांशत्वं दशसु दशदशांशत्वं सर्वन्यूने एकस्मिन्निति तर्पणार्थां दशमणयो ब्राह्मणभोजनार्थंश्चैको मणिरिति मालायां मणीनां मत्या एकादशाधिकोत्तरशतसङ्ख्याऽपेक्षणीया। तावता द्विशतादिसङ्ख्याने पुनर्वैषम्यस्य दुर्वारत्वम्। मालायां मणिसङ्ख्याविषये स्मृतावुच्यमानविकल्पा अपि वैषम्यस्य दुर्वारत्वेन नोपपद्यन्ते। यथा प्रजापतिस्मृतौ मालामणिविषये उच्यते—

> अष्टोत्तरशतं कुर्याच्चतुः पञ्चाशदेव तु।
> सप्तविंशतिकं वापि ततो नैवाधिका वरा॥ इति।

एतत् कथमपि नोपपद्यते।

स्मृतीनां श्रुतिमूलत्वे तन्मूलश्रुतेरुक्तस्मृतेर्वादित्यपरत्वेनोपपादने सम्यगुपपत्तिः। यथा पूर्वोक्ता आदित्यस्य सम्पातगतिस्तस्याः पूर्वपश्चिमभावेन प्रवृत्त्या तदुपयोगिनोऽशाश्चतुष्पञ्चाशदिति पूर्वं निर्णीतम्। तावता ग्रहणेन सम्पातमालायाः पूर्णत्वमिति तत्पूर्णत्वाय तावतामंशानां द्विरुपयोगो गमागमाभ्यामादित्यस्य सम्पातगतौ साऽशसङ्ख्या द्विरुपयुज्यमानाऽष्टोत्तरशतरूपत्वेन सम्पद्यते।

अथ च सम्पातस्थलीयादित्यबिम्बानुकारेण मणिभिर्दण्डनिपातन्यायेन सम्पातमालानुकारेणाभिव्यज्यते प्रकारः, बिम्बं ह्यादित्यस्यैकांशव्याममापातदशनात्। तस्य बिम्बस्य सम्पातस्थानेषु दण्डनिपातन्यायेनावर्तने चतुष्पञ्चाशत्सङ्ख्या चतुष्पञ्चाशद्वारमावर्तनेन, द्विस्तथा वर्तनेऽष्टोत्तरशतसङ्ख्या निष्पद्यते। बिम्बानुकारो मणिभिर्मालायां, तेषां परस्परभावेन प्रवयणेन बिम्बेन माने यो दण्डनिपातन्याय सोऽनुक्रियते। तत्र केवलं गमनानुकारस्तदा तदनुकूला चतुष्पञ्चाशद्रूपा मणीनां सङ्ख्या मालायां स्यात्। गमनेऽपि मूलावधिमनुसृत्यैकपार्श्वगमनमात्रानुकारस्तदा सप्तविंशति सङ्ख्या मणीनां स्यात्।

## २० सम्पातस्यासर्ववृत्तपरिभ्रमप्रतिपादनार्थं रङ्गवल्यादिधार्मिक–चिह्नद्वयोल्लेख

एवं चैकपार्श्वगमनानुकारे सप्तविंशतिः, पार्श्वद्वयस्य सकृद् गमनानुकारे चतुष्पञ्चाशत्, पार्श्वद्वयस्य गमनागमनानुसारेण द्विरुपयोगे द्विर्गमनानुकारेऽष्टोत्तरशतमिति मालामणीनां सङ्ख्या स्यान्न प्रकारान्तरेणेति तदभिप्रेत्योक्तस्मृतौ त्रिविधैव मणीनां सङ्ख्या मालायामित्युक्तं सङ्गच्छते। हित्वेमं प्रकारं मालामणिसङ्ख्योपपादनमशक्यमेव। एवं च स्मृतावुच्यमाना धार्मिककृत्येषूपयुज्यमाना माला तन्मणीनां सङ्ख्या सम्पातस्य तावदंशकत्वमसर्ववृत्तभ्रमं च साधयतीति।

एवं रङ्गवल्यादिलेखने धार्मिकचिह्नविशेषविलेखनमपीदमपि सम्पातस्यासर्वगतिमादित्यसम्बन्धितामभिव्यनक्ति। तथाहि तच्चिह्नं स्वस्तिकनामकं तस्य

देशभेदेन भेदोऽपि उक्तरीत्यैव सुसंगतो भवति । तथाहि तस्य विलेखः परस्पर-परिच्छिन्नरेखाद्वयात्मकः । स च परिच्छेदो मध्यसम्पर्केण भवति + एवम् । अत्र प्रतिदिशं प्रतिलेखान्तं मर्यादारेखापि विलिख्यते 卐 एवम् ।

तत्रोर्ध्वाधोरेखया दक्षिणोत्तरायणगत्यर्थस्थानानुकार आदित्य प्रत्यन्तं मर्यादारेखाविलेखनेन, तत्र स्वल्पभागपर्यन्ततैव तस्या गतेर्भवति गमागमाभ्यां तत्रावृत्तिरिति द्योत्यते । मर्यादारेखालेखोऽपि गतिस्थानानुकाररेखाया अन्ते न समानरूपो विलिख्यते किन्तु एकस्मिन् रेखान्तस्थाने तद्रेखाया एकपार्श्व-सम्बन्धनैव । परस्मिन् प्रान्ते च पूर्वपार्श्वविरुद्धदिक्सम्बन्धेन विलिख्यते 卐 एवम् । तत्रोक्तविधमर्यादारेखाद्वयस्य विपरूपेण विलेखनेन तत्र गमागमौ प्रत्याय्येते ।

एवं वामपार्श्वतः समारभ्य पूर्वोक्तरेखां मध्यतश्छित्वा दक्षिणपार्श्वे कियद्दूरं काचन रेखा विलिख्यते पूर्वरेखापेक्षया स्वल्पमानाधिक्यवती 卐 एवम् । अत्रापि पूर्वरेखावदेव प्रतिपार्श्वं रेखान्ते मर्यादारेखाद्वयं विलिख्यते 卐 एवम् । सा च रेखा सम्पातगतिस्थानानुकारिणी आदित्यस्य । सापि गतिर्न सर्ववृत्तव्यापि-नीति बोधयितुं तत्र मर्यादारेखालेखः । प्रतिपार्श्वं भिन्नपार्श्वसम्बन्धितल्लेखो गमागमाभ्यां तदुपयोगं ध्वनयति ।

अत्र लेखे सर्वसाधारणलेखता उल्लिखितरूपा । कैश्चन तत्र सर्वं विलिख्य प्रतिपार्श्वं सर्वरेखान्ते स्वल्पोऽववृत्ताकारो विलिख्यते 卐 एवम्, तेन तत्र आदित्य-सम्बन्धः स्पष्टं प्रतिपाद्यते । तत्राप्यन्ते आदित्यार्धविम्बपर्यन्तत्वं तदर्धवृत्तलेखने-नाभिव्यज्यते । विदेशीयैरपीद चिह्नं विलिख्यते स्वल्पविभेदम्, विभेदश्च मर्यादा-रेखालेखाभावमात्रेण +, स च तैः क्रास शब्देन व्यवह्रियते, तत्राप्येप स्वाभिप्रायः ।

यत्तु तत्र मर्यादारेखालेखाभावो गतेर्मर्यादा भावं द्योतयन् सम्पातस्य सर्ववृत्तपरिभ्रमं सूचयतीति, तदसत् । ऊर्ध्वाधोवर्तिन्या दक्षिणोत्तरायणानु-कारिण्याः स्थलेऽपि मर्यादा भावं प्राप्नुयात्तया सति । एवञ्चात्र मर्यादारेखा-लेखाभावमात्रमेव न तु तेन सर्ववृत्तपरिभ्रमादिसूचनम् ।

आदित्यस्योक्तस्थानेपु परपरवर्तिततया गत्या दण्डनिपातन्यायेन तत्र-सम्बन्धेन तदनुकारो विदेशीयेषु उक्तत्रिवरेखानेखमूलभूते तत्र सर्वत्र कोलन-कल्पना । आदित्यस्य सर्वत्र दण्डनिपातन्यायेन सम्बन्धे सर्वत्र परपरवर्तिसर्वत्रिम्ब-वैशिष्ट्येन निरन्तरप्रोक्तकोलाकारता भवति । आदित्ये च कीलाकारता तत्र तत्र शंकवोऽर्पिताः षष्टिरित्यादिना वेदे प्रोच्यत इति । सर्वथाऽस्य चिह्नस्यादि-त्यगतिप्रतिरूपकत्वमेवेति ।

## २१. इन्द्रस्यादित्याभिन्नत्वप्रतिपादनम्

एतावतेन्द्रस्यादित्याभिन्नता, तत्वे तन्निहन्तव्या असुरा अपि तेजोनिवर्त्यान्धकाररूपतमोरूपिणस्तदीयपुरादीनां सख्या आदित्यस्य दक्षिणात्तरा पूर्वं पश्चिमा च गति परिच्छिन्ना, परिच्छेदेऽपि सख्यानियमन, सख्या च विशिष्टैर्वाभिमतेत्यादयो विशेषाश्च ऊर्ध्वोक्तरीत्या सिध्यन्तीति ।

इन्द्रो हि उदयन्नादित्यस्तत्सम्बन्धितया च सूक्तेषु ब्राह्मणेषु च नानाविधा कल्पना वेदे । तत्र सामान्यत इन्द्रसम्बन्धिनी द्विविधैव वर्णना तदीयकृतित्वेनोच्यते सामपान बलकृतिश्चेति । तत्र सोमपानविषय उच्यते इन्द्र सोम पीत्वा तज्जनितेन हर्षेण वृत्रहननादिक करोति । तदुक्त निविदध्याये "अस्य मदे जरितरिन्द्रो वृत्रमहन्[1]" इत्यादिना तस्य नानाविधानि कर्माणि तत्रोक्तानि ।

किञ्च सूक्तेष्वपि [2]"इन्द्रस्य नु वीर्याणि प्रवोचम्" इत्यादिना द्विविधानि कर्माणि प्रोच्यन्ते । लवसूक्त लवरूप इन्द्र सोमपाने तज्जनित हर्षे स्वस्यावस्थाविशेष वर्णयति "इति[3] वा इति मे मनो गामश्व सनुयामिति" । "कुवित्सोमस्यापामित्यादिना ।" तदिद सर्वं कथमुपद्यते यदीन्द्र आदित्यस्तर्हि कथ सोमस्य पान तेन, कथ तस्य मद , कथ तेन वृत्रवधादिक क्रियते । सोमश्च वल्लीरूप , न हि वल्या रसस्य वा पानमादित्येन क्रियत इति । वृत्रादिवधादिवर्णनानामप्यनुपपत्ति । तस्मादत्र सोमपानादीना रूपाणि भिन्नानि वक्तव्यानि ।

तत्र वृषाकपिसूक्त उच्यते "विहिसोतो रसृक्षत नेन्द्र देवममसतेति" । आदित्यस्यास्तमयकालीनैषा वर्णना । तत्रोच्यत आदित्यरूपे इन्द्रेऽस्तमिते देवा किरणा पूर्वमर्थादस्तमयात तद्वशवर्तिनस्तदीयादेशपालनकर्तार पूर्व तेषा नियमित कार्य सेवनं विश्वप्रकाशनरूप व्यसृक्षत परित्यक्तवन्त । इन्द्रनियमापरिपालनेनेन्द्र देव नियन्तार नामसततिं ।

अय भाव -अस्तमयात पूर्वमादित्येन देवाना जगत्प्रकाशनरूप कार्य तद्रूपञ्च सवन कर्तव्यतया नियमितमासीत् । अस्तमिते चादित्ये देवैस्तद्विसृष्टम् । पूर्व देवाना किरणाना भुव प्रति प्राप्त्या तदीयपदार्थप्रकाशन तै क्रियते । अस्तमिते चादित्ये तदीयकिरणाना भुवा सम्पर्कराहित्येनाध्र्वंगमिता सञ्जाता । तत्रोच्यते "देवैर्शात्वैव भुसम्बन्धिपदार्थप्रकाशनरूप सवन तै परित्यक्तमिति" ।

तावता विज्ञायते सवन प्रकाशनमिति । एवञ्च सोम प्रकाशस्तदात्मक तेज इति यावत् । तस्यैव तेजोरूपस्य सोमस्येन्द्रेण पान क्रियते । पानमत्र स्वीकार । अयभाव –आदित्योऽस्त यन्नग्नौ स्वीय तेजो निदधाति तावता स

---

१ निविदाध्याय ११      २. ऋ स १ ३२ १.
३ ऋ स १० ११९ १      ४ ऋ स १० ८६ १.

रात्री तेजोरहितो भवतीति कल्पना। अत एव स रात्री कृष्णवर्णात्मा न प्रकाशते। वस्तुत एकत्र देशेऽस्तमितस्तद्विरुद्धदेशे तस्य सत्वे प्रकाशमानत्वेऽपि पूर्वदेशानुसारेणासौ तेजोरहितः कृष्णवर्णः सञ्जात इति कल्पना। यश्च विरुद्ध-देशे प्रकाशमानः स तु भिन्न एव पूर्वस्मादिति देशभेदात्तस्य भेदकल्पना।

एवञ्च तेन भिन्नेनादित्येन यत्रासावुदितस्तत्र प्रकाशनं क्रियते तदानीमेव यत्र देशेऽसावस्तमितस्तद्देशस्थानां तारकादीनामपि प्रकाशनं क्रियते। एवञ्च तद्रात्रौ दीयमानं तेजः सवनं तत्रत्यस्य प्रकाशनं सर्वां रात्रिं यावद्भवति। तस्य रात्रौ दीयमानस्य प्रकाशस्य सर्वां रात्रिं यावत् सञ्चितस्य उदये आदित्येन पानं क्रियते तस्य स्वीकारः क्रियते।

आदित्ये तद्रात्रिकालिकं तेजो विलीनं भवति। अयं विलय एव तेन सोम-स्योक्तरीत्या तेजसः पानमिति। उदये प्रकाशेऽन्धकारस्य तद्रूपतमसो नाशो वृत्रस्य नाश इन्द्रकृतः रूपकेण वर्णना। तदेतन्मन्त्रे प्रोच्यते। स चायं मन्त्रः–"एकया प्रतिधापिबत्साकं सरांसि त्रिंशतम्। इन्द्रः सोमस्य काणुका[1]।"

## एकया प्रतिधेतिमन्त्रार्थचिन्तनम्

अयं मन्त्रो निरुक्तकारेण अनवबुद्धार्थस्य काणुकाशब्दस्यार्थनिर्णयायो-पक्षिप्तो व्याख्यातश्च। तदीयं व्याख्यानमेवम्—

"एकेन प्रतिधानेनापिबत्साकं सहेत्यर्थः, इन्द्रः सोमस्य काणुका। कान्त-कानीति वा क्रान्तकानीति वा कृतकानीति वा। इन्द्रः सोमस्य कान्त इति वा कणे हत इति वा कणेहतः कान्तिहत[2]" इति। अत्रैकेनैव प्रतिधानेन युगपत्सोमस्य त्रिंशत्सरांसि पीतानि। तत्र काणुकाशब्दः सोमस्य विशेषणं सम्भवति इन्द्रस्य वा। आद्ये पक्षे उच्यते कान्तकानि प्रियाणि क्रान्तकानि आक्रान्तानि कृतकानि संपादितानि वेति।

द्वितीये पक्षे काणुका इन्द्रः कान्त इच्छावान् कणेघातः कणेहतः। अति-शयितं सोममिच्छन् भवति। त्रिंशत्सरांसि सोमस्य कानीति विचारे याज्ञिकैरुच्यते उक्थ्यस्य सामसंस्थाया माध्यन्दिने सवने त्रयः पर्याया दश दश चमसास्ते सर्वे ऐन्द्रा इति तत्रत्य चमसपात्रेषु त्रिंशत्संख्याकेष्वास्थितसोमयुक्तत्वादान्यत्र सरां-स्युच्यन्ते। तानीन्द्रेण पीयन्ते। तत्स्थः सोमः पीयत इत्यर्थः।

तदुक्तं तेन तत्रैतद्याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवताकानि इति। तत्र हि माध्यन्दिने सवने उक्थपर्यायास्त्रयस्त्रयोऽप्यैन्द्रा एव भवन्ति। त्रिष्वप्येतेषु दश दश चमसाः। तदभिप्रायेण त्रिंशत्सरांसीत्युक्तं मन्त्रे। यानि उक्थसम्बद्धानि सोमपात्राणि तान्येकेन प्रतिधानेन पीयन्ते। तान्यत्र सरांस्युच्यन्त इति याज्ञिकाभिप्रायः।

---

१. ऋ. सं. १:७७:४    २. नि. ५:११:१

निरुक्ताभिमत मत मूले उच्यते, ।त्रिंशदपरपक्षस्याहोरात्र्यास्त्रिंशत्पूर्वपक्षस्येति नैरुक्ता तथा या एताश्चान्द्रामसय आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्तीति । टीकाकृता तदर्थं उच्यते, तस्मैव सति या एताश्चान्द्रमसश्चन्द्रम सम्बन्धिन्यश्चन्द्रमसि भवा आगामिन्यः प्रतिपद्वितीयादितिथिषु आगच्छन्ति आप रश्मयस्ता अपरपक्षे पिबन्तीति ।

अत्र याज्ञिकपक्ष त्रिंशदुक्थपात्रस्थसोमे हूयमाने पीयमानेऽपि साक शब्दस्यासलग्नकता । न हि तावता युगपद्धोम पान वा, क्रमिक तत् ।

तथाचैतस्मिन पक्षे देवतात्रयवादे सोमपानस्यायुक्तत्व च । अत एवास्वरसान्निरुक्तकारनतमुक्त मूलकारेण। टीकाकृता तद्व्याख्याय तस्मिन्नपि मन दोष उद्घाटयते । आह एकया प्रतिधापिबदिति मन्त्रे साक सरासि त्रिंशतमिन्द्र पिबतीत्युक्तम । नैरुक्तपक्षेण तथा एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्तीति । तदेतद्रश्मिषु पातृषु चन्द्रमसि पीयमाने सर्वमेतदसम्बद्ध भवति, एकया प्रतिधापिबदिति मन्त्रस्यैन्द्रत्वादिति । अय दोषष्टीकाकृता परिह्रियते, इतरस्मिन् मन्त्रे यमक्षितिमक्षितय पिबन्तीत्यत्र रश्मीना पानसम्बन्धादादित्य उच्यते ।

आदित्योऽपि हि इन्द्रशब्देनोच्यते 'असावादित्य एवेन्द्र इति ह विज्ञायते" । तदवयवभूताश्च रश्मय समासव्यासस्तुतिभाव । सर शब्द खल्वपि उदके वर्तते। तत्रैव सति यानि तान्युदकानि सरासि पञ्चदशाह सम्भूतानि साकमवस्थितानि भवन्ति चन्द्रमसि तानि सूर्य इन्द्रो रश्मिभिरपरपक्षे पिबतीति । एवमेतत् सर्वमुपपद्यते नैरुक्तपक्ष इति ।

एव चैतस्मिन मन्त्रे याज्ञिकपक्षे साक पानस्यानुपपत्ति । नैरुक्तपक्षे मन्त्रे इन्द्रेण त्रिंशत सरासि साक एकया प्रतिधया पीयन्ते इत्युच्यते नैरुक्तैश्चन्द्रमसि सभृतानामपा पान रश्मिभि क्रियत इत्युच्यत इति इन्द्रपानमुच्यते । रश्मिपानेन समाधीयत इत्यसम्बद्धता । अतष्टीकाकृता इन्द्रस्यादित्याभेदेनादित्यत्व गृहीत्वा रश्मीना चादित्याभिन्नत्वेन रश्मिकर्तृक पानमादित्यकर्तृकमेवेति मन्त्रार्थस्य व्याख्यायाश्च सगतार्थत्वमित्युक्तम् ।

परन्तु अत्र पाने साकशब्देन साहित्य वा यौगपद्य वोक्त मन्त्रे तस्यावस्थितिसम्बद्धता वर्णन वा मन्त्रस्यार्थवर्णनम्। अवस्थितिबोधकस्य शब्दस्य मन्त्रेऽभावात्। तस्मादय मन्त्रोऽस्पष्टार्थ । टीकाकारेणादित्यपरत्वेन व्याख्यानेऽपि न विस्पष्टार्थता। काणुकाशब्दस्येन्द्रविशेषणता सोमविशेषणता वेत्यत्रानिर्णय. । तद्व्युत्पादनेऽपि अनेकरूपत्वप्रतिपादनेन तदर्थोऽप्यनिर्णीत । तस्मादस्य प्रकारान्तरेणादित्यपर व्याख्यानम् ।

तत्र प्रथमं काणुकाशब्द इन्द्रविशेषणमेव। तत्र व्युत्पत्तिश्च अणुशब्दात्कुत्सितार्थे कन् तस्य पुनः कुत्सितार्थककिंशब्देन समासः किमः कोष्णमित्यादाविव कादेशः। अर्थश्च अणुः स्वल्पा मात्रा। स्त्रीत्वादत्र मात्राग्रहणम्। तस्याः कना बोध्यं कुत्सितत्वम् तथा चाणुका अतिशयितस्वल्पा मात्रा। किमा समासे काणुकाशब्दे अत्यतिस्वल्पा मात्रा बोध्यते। तथा च अतिस्वल्पमात्र इन्द्रः स्वल्पकलारूपः इन्द्रः एकया प्रतिधया प्रथमयैव प्रतिविरुद्धधानेन प्रतिधा, सोमस्य त्रिंशत्सरांगि युगपदपिवत्।

अयं भावः—आदित्योदयस्थलीयैषा वर्णना। आदित्योदयात्पूर्वं रात्र्यास्त्रिंशद्दण्डपर्यन्तं, किंवा, सावित्रकाले त्रिंशदंशसम्बन्धेन घटीपञ्चकरूपे सभृतं बहुलीभूतं तेजः पृथक्त्वेन भासमानं सर्वमादित्ये कलामात्रोदिते तत्रैव लीनं भवति पृथक्त्वेन नावभासते। तदसौ तेजसो विलयः स्वल्पकलामात्रोदित आदित्ये युगपद्भवति। अयमेवेन्द्रस्य सोमपानमित्युच्यते।

एवं सति तेजस एव सोमरूपता तस्य विलयस्त्वादित्ये स्वल्पकलारूपे युगपत्कालविलम्बकृत्वा यस्तत्सोमस्य पानमिमेऽर्था एवं व्याख्यानेन स्पष्टा भवन्ति, मन्त्रस्यार्थोऽपि विस्पष्टः। पूर्वमुदयादादित्यस्यान्यत्र सत्वेन तदपेक्षया प्रतिविरुद्धमुदयनीयदेशे धान स्थापनं प्राप्तिरिति यावत्। तस्यैकशब्देन स्वल्पत्वं बोध्यते। अस्तदेशापेक्षोदयदेशे स्वल्पं प्राप्तः कलामात्र इन्द्रः पूर्वत्रिंशद्घटीपु रात्र्याः सावित्रत्रिंशदंशेपु सभृतं भास्वरतमं तेज उदयमात्रेणात्मनि गृह्णाति। बहुलीभूतमपि तत्तेजः पृथक् न भासत इति। आदित्योदयात्पूर्वं पृथक्तयाऽवभासमानस्य तेजस उदिते आदित्ये पृथगनवभासोऽनुभवसिद्धः।

अन्यत्रापि प्रकारान्तरेणायमर्थो वर्ण्यते। उदयात्पूर्वकालपर्यन्तं मण्डलतः पृथग्भासमान तेज उषा इति गृहीत्वा सोषा उदयपर्यन्तं मण्डलतः पृथग्भासमानोदिते आदित्ये तत्र विलीना भवति। न ततः पृथगवभासते। स तस्यास्तत्रैकीभावो विलयात्मा तं गृहीत्वा तस्य विवाहरूपेण कल्पनम्। उषाश्च सूर्योदयसन्निकटा सूर्याशब्दिता तस्या आदित्येन विवाहकल्पनां गृहीत्वा सूर्याविवाहसूक्तं वेदे वर्णितम्। आदित्यपत्नीत्वेनोषसो व्यवहारोऽपीममर्थं स्पष्टयति।

यथा पत्नी विवाहात्पूर्वं पृथग्रूपा विवाहोत्तरं पत्यौ विलीयते तत्साजात्यादुषस आदित्य पत्नीत्वेन व्यवहारो बहुलं वेदे। प्रजापतेः कनामबोध्यत्वकथापीममेवार्थं बोधयतीत्युपरिष्टाद्वर्णयिष्यते। एवं चात्रार्थे प्रतिधासरःकाणुकाशब्दानां स्पष्टार्थत्वम्। एव च सोमस्तेजोरूपस्तत्पानं च तदादानरूपमिति भवति।

अयमेवार्थः प्रकारान्तरेण सूक्तान्तरे बोध्यते। तत्रोच्यते—अयमिन्द्रस्त्रिकद्रुकेष्वपिवत्सुतस्य इति। त्रिकद्रुकशब्दस्यार्थं आश्वलायनेन श्रौतसूत्रे उच्यते—

"अभिप्लवषडहस्य[1] पूर्वं त्रिकं त्रिकद्रुक इत्याचक्षते" इति। तच्च त्रिकं ज्योतिर्गौरायुरिति यागत्रयरूपम। एवञ्चोक्तयागत्रये सुतस्य सोमस्य पानमकरोदिन्द्रः। तत्रेन्द्रेण सर्वेषु सोमयागेषु सोमः पीयते तथा सति को वा विशेषो यत्तेन त्रिकद्रुकेषु सोमपानवर्णनस्य। नैरुक्तमते इन्द्रो यदा मध्यमस्थानवासिनी देवता तदानीं कथमुक्तयागत्रये सोमपानं तस्य।

किञ्च सूर्यस्यैवैकस्य देवत्वं तस्यैव वेदे स्तव इत्यनुक्रमणिकालिखितमतानुसारेण कथं सूर्यस्योक्तयागत्रये सोमपानमिति। तत्रोच्यते इदमपि सर्वं सोमस्य तेजोरूपत्वे तत्पानस्य तदादानरूपत्वे एवोपपद्यत इति। इदं त्रिकद्रुकनामतोऽपि व्यज्यते। तन्नाम रुचेर्धञि रुक इति रूपम्। तस्य किमा समासः किमः स्थाने कद्रथ इत्यादिवत्कदादेशे कद्रुक इति, तस्य त्रिशब्देन समासे त्रिकद्रुक इति शब्दः।

रुच धातोर्दीप्तिरर्थः। किमा कुत्सितार्थे वर्तमानेन दीप्तौ कुत्सितत्वं बोध्यते। दीप्तेः कुत्सितत्वमसम्पूर्णतया। एवं च कद्रुको असम्पूर्णदीप्तिः। तस्य त्रित्वं त्रिशब्देन बोध्यते। एवञ्चासम्पूर्णदीप्तियुक्तास्त्रयस्तच्छब्देन बोध्यन्ते। पूर्णा दीप्तिश्च आदित्यस्य दर्शने तददर्शने चासम्पूर्णा। सा च रात्रावेव सम्भवेत्।

रात्रौ हि प्रथमतोऽधिका दीप्तिः प्रारम्भे, ततः क्रमशो ह्रीयमाना पुनरुदयाभिप्राये क्रमशो विवर्धमाना दीप्तिः। तत्रोदयाभिप्रायदीप्त्यभिप्रायेण स शब्दः। तत्र विषुवृत्तादिस्थदेशेषु उदयात्पूर्वं घटीपञ्चकः सावित्रः कालः प्रकृष्टप्रकाशः। सावित्रकालतः पूर्वं पञ्चघट्य उषःकालः पूर्वसावित्रापेक्षया स्वल्पप्रकाशः।

उषःकालतः पूर्ववर्ती दिनान्तरभिप्रायो रात्र्यामाणोऽप्यल्पप्रकाशः। सुमेरुस्थले तु सावित्रः कालः एकमासपर्यन्तः। एवमुषःकालोऽपि तावान्। पूर्ववर्तिरात्रिकालोऽपि दिनान्तरसम्बन्धाभिप्रायस्तावानेव। तदेतत्सदृशोरच्चेति मन्त्रभाष्ये च प्रतिपादित इति तत्सर्वं पूर्वं विस्तारेण निरूपितम्। एवं चैषां त्रयाणां कालानां दीप्तियोगेऽपि आदित्यदर्शनकालीनापेक्षया स्वल्पतेजस्त्वात्कद्रुकत्वम्।

त्रिकद्रुकशब्दतो यथा पूर्वोक्तार्थलाभ एवं तच्छब्देन गृह्यमाणयागत्रयबोधकशब्दतोऽपि स एवार्थो लभ्यते। त्रिकद्रुकशब्देनाभिप्लवषडहस्याद्यं यागत्रयं गृह्यत इति पूर्वमुक्तम्। तन्नामानि ज्योतिर्गौरायुरित्यपि पूर्वं प्रतिपादितम्। ततोऽपि उक्तार्थलाभः। तथाहि ज्योतिःशब्देन केवलं प्रकाशमयः त्रिकद्रुकशब्दविशेषणतया न्यूनदीप्तिः सावित्रः कालो बोध्यते। गौरित्यनेन उषःकालबोधः। उषसो गोवाहनत्वेन गोशब्देन बोधात्।

---

१ आ श्रौ सू ४ ३

निरुक्तकारेणोच्यते "[1]आत्मैवैषामायुधं वाहनं सर्वं देवस्य देवस्येति"। एवं गोवाशनमुपसामिति गवामुषोऽभिन्नत्वम्। गावश्च किरणा इति। एवमायुः शब्देन रात्र्याः पूर्वोक्तस्वल्पतेजोयुतो दिनान्तरीयभागो गृह्यते। आयुः शब्दस्य हि आङ्पूर्वाद्युधातुतो निष्पत्तिः। आङ्ईषदर्थकत्वम्। युधातोश्च मिश्रणममिश्रणमर्थः। तत्र प्रकृते तेजसा ईषन्मिश्रणं तेन बोध्यते।

एवं सति तच्छब्दतो रात्रिसम्बन्धित्वम्। उक्तरीत्या स्वल्पतेजस्कभागत्रयग्रहणम्। तत्र विद्यमानस्य तेजसस्तद्रूपस्य सोमस्य पानमिन्द्रेण क्रियत इति पूर्वोक्तार्थ एवानेन बोध्यते। एवं च तेजः सोमस्तत्पानमादानं स्वस्मिन्विलयस्वरूपमिन्द्रेण क्रियते इति। अत एव सोमपानविषये स्पष्टं वर्णनं क्रियते वेदे मन्त्र।

सोमं मन्यते पपिवान्यत्संपिषन्त्योषधिम्।
सोमं यं ब्राह्मणो विदुर्न तस्याश्नाति कश्चन॥ (ऋ. सं. १०:८:८३)

ओषधिं पिष्ट्वा पानकर्ता सोमो मया पीत इति मनुते। परन्तु ब्राह्मणो ब्राह्मणा मन्त्रा वा वैदिका देवतावर्णनस्थले यं सोममिति विदुस्तस्य न केनापि भक्षणं क्रियते। देवतादि वर्णनस्थल इत्यवश्यं पूरणीयम्। अन्यथा सोमयागप्रक्रियया सोमवल्लीरसनिष्कासनपूर्वं पानपर्यन्तं प्रक्रियाया वेदे एव प्रतिपादनात्तेन विरोधः स्यात्।

यत्तु निरुक्तकारेणात्र वृथासुतोऽर्थाद्यज्ञं विना सुतः सोमोऽसोमः सोमो न भवति, पाता च तस्य न सोमपा भवति योऽयज्वेत्यर्थं उक्तः स तु यथाकथंचन प्रसिद्धवल्लीरूपं सोममभिप्रेत्य योजितो न तु वेदमन्त्रस्वारस्यापेतः। किञ्च तेनापि वृथा सुतोऽयज्वेत्यादिपदानामत्राध्याहारादिना योजनीयता भवति, तावता न कोऽपि सूक्ते प्रकृतोपयोगः स्यादिति। उक्तरीत्येन्द्रकर्तृकसोमपानवर्णनस्य न सम्यगुपपादनं स्यादिति।

एवं बलकृतिरिन्द्रस्य पराक्रमवर्णनेन, पराक्रमश्च वृत्राद्यसुराणां निरासनेन, तच्च बहुधा वर्ण्यते वेदे युद्धवर्णनपुरस्सरम्।

वस्तुत इन्द्रस्य न केनापि युद्धम्। युद्धवर्णना तु उपमार्थेन। तदुक्तं निरुक्तकारेण—"उपमार्थेन युद्धवर्णना भवन्ति" इति (नि. २:१६:२)। मन्त्रेऽप्युच्यते—

"मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न नु पुरा विवित्से[2]"॥ इति

## २३. इन्द्रविषयिणी युद्धवर्णन उपमार्थेना सूपपन्ना भवतीति प्रतिपादनम्

आदित्येन वास्तवं तु न केनापि युद्धं सम्भवति। आदित्यस्य तमसा वृत्रादिशब्देनोच्यमानेन विरोधो न सम्भवत्येव। आदित्यदृष्ट्या तमसोऽभावात्। केवलं

१. निरुक्तम् ७:४:१५.
२. ऋ. वे. १०:५४:२

तेजसि सति तमसो दर्शनं तत्रेति तेजस्तमसोरसामानाधिकरण्यदर्शनाद्विरोधं प्रकल्प्य विरोधस्य पुरा काष्ठा युद्धकल्पनं तत्रेति । एवं चोक्तरीत्या तेजोवशतो विनाश्यो वृत्रादिरसुरोऽपि तेजोवशतो विनाश्यान्धकाररूप एव । निघण्टौ मेघबाधकेषु नामसु वृत्राहिशम्बरशब्दना पाठेन तेषामभिन्नार्थत्वेन शम्बरादयोऽपि तमोरूपाएव एव । तेन च वृत्रेण निरुद्धा आपोऽपोदानी तमसस्सत्तादशायां तेजसो सत्वं दृष्ट्वा तमोरूपेण वृत्रेण तासां निरोधः कृत इति कल्पनया तेजोरूपिण्य एव । ताश्च वृत्रविनाशेनेन्द्रेण मोच्यन्ते इति कल्पना । अत एवेन्द्रा वृष्टिप्रदातेति वर्णनम । वृष्टिश्चोक्तरीत्या तेजोरूपाणामपां निरोधकस्य वृत्रस्य विनाशनेन । एवं चापनिरोधकत्वाद् वृत्रो मेघरूपः । अत एव मेघबाधकेषु नामसु वृत्रशब्दपाठः । तच्चावृरूपत्वमव्यक्ततेजस एव । अत एव पूर्वमुक्तस्यायुः शब्दस्य त्रिकद्रुकत्वम् ।

२४ सोमस्य रश्मिरूपत्वप्रतिपादनार्थं ब्रह्मादेवानामितिमन्त्रार्थं विचारः

एवं च सोमपानं तेजः स्वीकारः सोमश्च तेजोरूप इति पूर्वोक्तं सिद्धम् । अत एव तस्य सोमस्य रश्मिरूपत्वेन वर्णनं मन्त्रे क्रियमाणं संगच्छते । तथाहि मन्त्रः—

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ।। इति ।

(ऋ. सं. ९.९६.६)

अत्र षष्ठ्यन्तानां पदानामर्थानां मध्ये प्रथमान्तपदार्थरूपः सोम इत्युच्यते । निरुक्तपरिशिष्टे तेन तेन प्रवृत्तिनिमित्तेन षष्ठ्यन्तपदार्था रश्मिरूपा उच्यन्ते ।

तत्र देवानां देवनानां प्रकाशमानानामादित्यरश्मीनां मध्ये सोमो ब्रह्मा महान् । अयंभावः-आदित्यमण्डलं वृत्ताकारं तस्याऽऽसमन्तात्सर्वासु दिक्षु ततो रश्मयो विनिर्गच्छन्ति इति । तन्मध्ये केचन रश्मयो द्रष्टुः सविधं प्राप्ताः केचनोर्ध्वदेशगामिनः केचन तिर्यग्गामिनः । तेषामभिप्रायेणोच्यते द्रष्टुः सविधं प्रकाशयितुं प्राप्तानां प्रकाशयितॄणामत एव देवनानामादित्यरश्मीनां मध्ये ब्रह्मा साक्षात्प्रकाशकोऽत एव महान् यो रश्मिस्तत्स्वरूपः सोम इति ।

प्रचलच्चक्रन्यायेन केचन प्रकाशनार्थं प्रकाश्येन सम्बद्धा भवेयुः केचन निवृत्ततत्कार्याः केचनागामिप्रकाशनकार्याः । यथा प्रचलच्चक्रस्याराणां मध्ये कश्चनारो भुवा सम्बद्धः कश्चनातीततत्सम्बन्धः कश्चनागामितत्सम्बन्धः । एवं भयानामेवाराणां भुवोक्तरूपसम्बन्धिता । तद्व्यपगमे च केवलं प्रसरद्रूपत्वं तत्तद्दिगभिप्रायेण ।

एवमादित्यरश्मीनामपि मध्ये क्रमिकं त्रिरूपत्वं भवति प्रत्येकम्। कश्चन यदा प्रकाश्य किञ्चन प्रकाशयितुं प्रवर्तते तदानीं तत्पूर्ववर्तिनस्तत्कार्यमतीतं भवति परवर्तिनश्च तत्कार्यं भविष्यद्भवेत्।

एवं च प्रकाशकसविधवर्तिनोः प्रकाशकयोः प्रकाशकस्य च प्रकाश्येन साक्षात्सम्बन्धः कालद्वारा अपरेषां पारम्परिकः स इति। वर्तमानकार्य एकः अतीतकार्यकालानन्तरितातीतकार्यः, एवं भविष्यत्कार्यकालानन्तरितभविष्यत्कार्यश्चेति द्वाविति त्रय एव प्रकाश्येन साक्षात् सम्बद्धा भवन्ति।

तत्परवर्तिनां च तदुद्देशेनापरेण व्यवधानमिति न ते साक्षात्प्रकाश्यसम्बन्धिनः चक्रस्य प्रचलनदृष्टान्तनैतेषां चक्राकारवृत्तादित्यबिम्बसम्बन्धिनां किरणानामपि प्रत्येकं क्रमेण त्रिरूपत्व भवति। तत्र त्रयः प्रकाशका देवता आदित्यरश्मयस्तन्मध्ये साक्षाद्वर्तमानप्रकाशनकार्यो ब्रह्मा महान् तद्रूपः सोम इत्युक्तं ब्रह्मा देवानामित्यंशेन मन्त्रगतेन।

एतेषां त्रयाणां किरणानामृभुरूपत्वेन वर्णना वेदे। तदुक्तं निरुक्तकारेण—"[1]आदित्यरश्मयोऽप्यृभव उच्यन्ते" इति। ते च ऋभवस्त्रयः ऋभुर्विभ्वा वाज इति। तत्र ऋभुनाम्ना बहुवचनेन सर्वेषां ग्रहणं बहुषु स्थलेषु। वाजशब्देनापि बहुत्वेन ऋभवो निर्दिश्यन्ते। ऋभुशब्दस्य निर्वचनं निरुक्तकारेणोच्यते—ऋभवः उरु भान्ति इति वा ऋतेन भान्तीति वा ऋतेन भवन्तीति वा इति।

(नि. ११:१५:२)

आर्भवसूक्ते तेषां कर्माणि पृथगुच्यन्ते वाजो देवानामभवत्सुकर्मेन्द्रस्य ऋभुक्षा वरुणस्य विभ्वा इति। तत्र देवाः प्रातःकालीना रश्मयस्तेषां वाजः सुकर्मा भवति सुकर्मा शोभनकर्मा। यतः प्रातःकालीनानां प्रातःकाले शोभनं कर्म च देवानां प्रकाशमानानामादित्यरश्मीनां शोभनप्रकाशरूपम्। प्रातः काले-प्रवृत्तस्य प्रकाशस्य क्रमेण विवर्धमानत्वाच्छोभनत्वम्। सायंकाले यद्यपि प्रकाशः प्रकाशनं करोति तावता न स शोभनः तस्य प्रवृत्तस्य प्रकाशस्य क्रमेण अवहीयमानत्वात् विनाशोन्मुखत्वेन न शोभतेत्युक्तं वाजो देवानामभवत्सुकर्मेति।

इन्द्रस्य आदित्यस्योदितस्यास्तमयपर्यन्तं प्रकाशनरूपं कर्म तद्विषये ऋभुः सुकर्माभवत। ऋभुरेव ऋभुक्षाशब्देनोच्यते। तदुक्तं इन्द्रस्य ऋभुक्षा इति। सुकर्मा इत्यस्यानुषङ्गः। एवं सायंकाले प्रकाशमानानामादित्यरश्मीनां मध्ये विभ्वनामका रश्मिर्वरुणस्य सुकर्मा। वरुणस्य कर्म जगदावरणार्थं प्राप्तस्य तमसो वारणम्। तत्कर्म विभ्वा सम्यक्करोतीति सुकर्मा भवति। अत्रापि सुकर्मेत्यनुषङ्गः। तदुक्तं वरुणस्य विभ्वा इति। एतेषामेतत्कार्यं मन्त्रान्तरे स्पष्टमुच्यते ऋभुसूक्ते—

---

१, नि. ११:१६:४

गोणामेक उदकं गामवाजति मांसमेकं पिंशति सूनया भृतम्।
आनिम्रु च शकृदेको अपाभरत्किं स्वित्पुत्रेभ्य पितरावुपावतुरिति[1]।
एतद्विषयको विचार परस्तात्करिष्यते।

एवं सति प्रकाशनार्थं ये रश्मय प्राप्तास्तेषां मध्ये सोमो महान् भवति। तदुक्तं ब्रह्मा देवानामिति। यत पूर्वोक्तरीत्या प्रकाशकानां मध्ये सम्मुखप्राप्त्या प्रकाशनार्थं कस्यचन प्राप्तिरिति तादृश सोम इति स ब्रह्मे ति। ये तु तिर्यक्त्वेन प्राप्तास्तेषां समुखरश्म्यपेक्षया न्यूनतेजस्कतया न महत्वम्, न्यूनत्वं प्रकाशनेन तमसो निवारणेन च कल्प्यते। समुखानो रश्मिर्यथा सर्वाङ्गीण तमो निवारयति प्रकृष्टं प्रकाशते न तथा तिर्यग्रश्मय इति। 111350

पदवी. कवीनामिति। पदं वेत्तीति पदवी। पदमादित्यमण्डलं तद्वेति गच्छति इति पदवी। कवीनां मध्ये पदवी साम। अयं भाव –ब्राह्मणे उच्यते "ये वै न पूर्व ऋषय प्रेतास्ते कवय[2]"इति।"पूर्वाञ्चिना ये ऋषय. प्रेता विनष्टा प्रकर्षेणापुनरागमनाय गतास्ते कवय इति।

रश्मीनामुभयविधा गतिर्वेदे वर्ण्यते। तत्रारनेमिगतिररनाभिगतिरिति उभयविधा गति पूर्वं प्रतिपादिता। तत्रारनाभिगतिमभिप्रेत्य सर्वं यज्ञानुष्ठानं प्रवर्तते। अत्र गतौ आदित्यप्रकाशतो निर्गतस्य तेजस पुनरादित्यप्राप्तिर्भवति। सा लोकतो विज्ञायते। यथा आदित्यसकाशतो विनिर्गतं तेजो भुवा तत्प्रभृतिराकाशवर्तिभि, प्रतिबद्धं सदग्निभावमापद्यते। अग्नेश्चोर्ध्वंज्वलनेनोर्ध्वं गच्छत्तेज आदित्यं प्राप्नोति आदित्यं प्रविशतीत्यर्थ।

*वैदिकयज्ञस्थले एषैव कल्पना यज्ञानुष्ठानप्रकारतो विज्ञायते। यज्ञानुष्ठाने* मुख्यं पात्रद्वयं स्रुव. जुहूरिति। तत्र स्रुवस्याकारो मस्तके सच्छिद्रग्रन्थ्याकारो वर्तुल पश्चान्निर्ग्रन्थिदण्डयुत। तत्र दण्डो हि तेजसो रश्मिभावमापन्नस्य प्रतीकम्। तच्च तेजो ग्रन्थिसदृशं आदित्यमण्डलं प्राप्नोति। एवञ्चात्र स्रुवस्य मूर्धा आदित्यप्रतीकम्। तत्र आगतं तेज. कुत आगतमित्यस्पष्टम्। अत एव स्रुवस्य दण्डमूले ग्रन्थ्यादिराहित्यम्।

स्रुवस्य होम उपयोगावसरे तन्मूलं न विवरणीयं विवरणे यजमाननाश इति वचनम्। अत एव स्रुवोपयोगावसरे याज्ञिकैर्हस्ते गृहीतस्य स्रुवस्य दण्डो वस्त्रादिना च्छाद्यते। एवं सति यत कुतो वा प्राप्नोतु तदादित्यगतं तेज। तदादित्यस्यैवेति गृहीत्वा तस्य स्रुवस्थस्य तेज प्रतीकस्थाग्न्यादं जुहूपात्रे प्राप्ति.।

सा च आदित्यतो निर्गतस्य तेजस. भूलोकसदृशं तेजस प्रतिबन्धके तस्य पुञ्जीभावं प्रतिपादयति। प्रकृते जुहूपात्रेण भुवि तेजस पुञ्जीभावो बोध्यते।

---

१. ऋ.व १।१६१।१०   २ ए.ब्रा ६।३।४

तथाहि जुहूपात्रं मस्तकेऽर्धगोलसदृक्षं वृत्ताकारं मूले ग्रन्थियुतदण्डयुतम्। मस्तकेऽर्धगोलसदृक्षवृत्ताकाराग्रे त्र्यस्रनालीमार्गयुतम्। तत्र मूलगतो ग्रन्थिरादित्य प्रतीकम्। दण्डस्ततोनिर्गच्छद्रश्मिरूपतेजः प्रतीकम्। तस्य मूर्धरूपो भागो भुवः प्रतीकम्।

आदित्येनार्धभागो भुवः प्रकाशित इति अर्धवृत्ताकारस्तस्य प्रतीकम्। तत्र सगर्तभावो भुवि पुञ्जीभूततेजसो ग्रहणस्थलाभिप्रायकः। तत्र पुञ्जीभूतस्य तस्य तेजसो भुवोऽपरपार्श्वेन विनिर्गममार्गो नालीरूपः। स च मूर्धसविधे आपेक्षिकपरिणाही अग्रभागे आपेक्षिकन्यूनतां गतः। स च रात्रावन्धकारस्थितिदेशाभिप्रायेण त्र्यस्रः।

अयं भावः–भुवो मण्डलेनादित्यतो विनिर्गतस्य तेजसः प्रतिबन्धेन तदपरपार्श्वे तेजोराहित्यं भवति। तच्च तेजोराहित्यं भूसन्निकटे स्थले वहुलं, तस्यां दिशि परवर्तिन्याकाशभागे भुवः पार्श्वद्वयेन गच्छतस्तेजसो वशतः क्रमेण न्यूनीभावमापद्यमानं भुव उभयपार्श्वभागेन गच्छतस्तेजसः परस्ताद्योगे तत्र तेजसि तस्य विलयः। एवं सति तेजसो यावति भागे राहित्यं तस्य भागस्य गर्तरूपेण व्यवहारः।

यथा भवो गर्ते पांस्वादीनामभावेन केवलाकाशरूपता एवमत्र भुवा व्यवधाने भुवो परपार्श्वे तेजसो भावेन गर्तरूपता। स च तेजोराहित्यरूपो गर्तो भुवा तेजसो व्यवधानेन भुवो परपार्श्वे भूसंलग्नदेशमारभ्याकाशे कियद्दूरपर्यन्तं आदित्यविरुद्धदेशस्य भूपार्श्वस्थले भवति। तत्रादित्यस्यासत्वेन रात्र्याः सत्वम्। तस्य रात्र्या गर्तरूपत्वेन वेदे व्यवहारः।

यथा मित्रावरुणसूक्त उच्यते "दानुमत्या[1] वृहन्तं गर्तमाशाथे" इति। दानुमती रात्रिस्तस्यास्तेजसो भावेन गर्तरूपता। स च तेजो भावेन तद्रहितदेशगता महति आकाशे वर्तमान इति महान् इति। तत्र गर्ते मित्रावरुणयोः स्थितिरनेन वोध्यते। तदेतदग्रे स्पष्टमुच्येत। स च भूव्यवधानेन सम्पन्नो गर्तो भूसन्निकटदेशेपरिणाही परस्तात्तनुतां गत एवं त्र्यस्रतामापद्यते। तस्य त्र्यस्रत्वाभिप्रायेणेन्द्रसूक्ते वृत्रविषये उच्यते अपादहस्तो अपृतन्यदिन्द्र मिति।

अयंभावः—पूर्वोक्तरीत्या वृत्राऽन्धकारस्तेजोरूपेणेन्द्रेणासामानाधिकारण्याद्विरुद्वेन युद्धं करोति। तेजस्तमसोरेकत्र स्थित्यभावेन विरोधकल्पना ततोयुद्धकल्पनेति पूर्वमुक्तम्। स च वृत्ररूपोऽधकारः पादहस्तरहितः। यथा मानुषके शरीरे पादहस्तराहित्ये केवलं स्कन्धदेशमारभ्यानाभिभागः स्कन्धदेशे विशालो नाभिदेशे च क्रमेण तनुरेवं स वृत्रोऽपि पादहस्तरहितस्त्र्यस्रः। तस्योपरि वर्तमाना

१. ऋ. सं. ५:६८:५

भूरूपा माता नामपह्नायेन्द्रेण वृत्रस्कन्धे वज्रेण ताडनेन तद्वक्षः कृत इति ऐन्द्रे "इन्द्रस्य नु वीर्याणि प्रवोचमिति" सूक्ते स्पष्ट प्रतिपादितम् ।

एत्र च भूसम्बन्धवशात सम्पन्नस्य तमसो मस्तकभागे भुवो भाग । परस्तादभूव परिणाहानुरोधन परिणाहि तम क्रमेण तनुतामापन्नमग्रे इति तस्य श्रुयस्त्व तत्प्रतिकृतिरूपत्वेन जुहूपात्रे नालीमार्गं । स च काकपुच्छसदृक्षो वा हंसतुण्डसदृक्षो वा हस्त्याष्ठसदृक्षो वेति श्रौतसूत्र विशेष । तावता तस्य मूले विस्तारोऽग्रे तनुत्वमिति भवति ।

एव चैतेन जुहूपात्रेण आदित्यसकाशतो भुव प्रति प्राप्तस्य तेजसो भुवि सञ्चितस्य क्रमेण नाडोमार्गेण गमन बोध्यत । तच्च जुहूस्य घृतरूप तेज आहवनीये तन्नामकेऽग्नौ यज्ञे हूयते । आहवनीयस्य चाग्नेरादित्यरूपत्व शतपथे उच्यत "असौ[1] वा आदित्य आहवनीयो रश्मयो विश्वे देवा" इति । एव चादित्यतो विनिर्गतस्य तेजस. पुनरादित्यप्राप्तिर्होमेन बोध्यते । एवञ्चेमानि याज्ञिककर्माणि आदित्यसम्बद्धकर्मबोधकानीत्यग्रे निरूपयिष्यते विस्तारेण ।

२.. आदित्यतो विनि.सृत तेज पुनरादित्ये प्रविशतीति प्रतिपादनम्

आदित्यसकाशतो विनिर्गत व्यक्तमव्यक्त वा सर्वं तेज. पुनरादित्ये प्रविशति तदिदमिन्द्रस्य वज्रमिति । वज्रमिन्द्रस्यायुधम् । निरुक्तकारेणोच्यते"आत्मैवैषामायुध वाहन सर्वं देवस्य" इति । एव च वज्ररूप एवेन्द्र । स चादित्यरूप इति आदित्यतो विनिस्सृत तेज पुनरादित्ये प्रविशतीत्ययमर्थो मन्त्रेणाप्युच्यते । तथाहि मन्त्रः—

> "दिवस्पृथिव्यो पर्योज उद्भृतं वनस्पतिभ्य पर्याभृत सहः ।
> अपामोज्मान परिगोभिरावृतमिन्द्रस्य वज्रं हविषा रथ यज[2] इति" ॥

अत्र दिवस्पृथिव्यो द्यावापृथिव्योर्यत्तेज आदित्यसकाशतो गत तत्सर्वं परित समन्तात् उद्भृतमुद्धृत्य परिगृहीतम् वनस्पतिभ्यो रात्रौ प्रकाशमानेभ्यस्तारकादिभ्यस्तमसो नाशक यत्सहस्तेजस्तत्सर्वं परित आ समन्तादाहृतम्, अपामव्यक्ताना तेजसा गोभि किरणैः सहितानामोज्मा ओजोरूपमिति यावत् । रश्मिसहितमव्यक्त तेजस्तत्सर्वं मिलितमिन्द्रस्य तद्वज्र स एव रथस्त यजेति ।

दिवाभागे आदित्येन द्यावापृथिव्योर्दत्त रात्रिकाले तस्यासत्त्वेन तारकादिभ्य प्रकाशमानेभ्यो यल्लब्धम्, उभयाभावे यदव्यक्त तेज. तदतिरिक्त रश्मिरूप तेजस्तत्सर्वं मिलितमिन्द्रस्य वज्रमिति वर्णनेन तत्सर्वमिन्द्राभिन्न आदित्ये प्रविष्टमिति भवतीति । एव चानेनारनाभिभावो रश्मिगतेरुक्तः ।

---

१. शत. ब्रा. ५ ३·४.३
२. ऋ. सं. ६ ४७:२७

एवं च पदे पतस्थानीय आदित्ये ये गच्छन्ति किरणास्ते पदव्यः। तेषां किरणानामरसादृश्यान्न ते नाभिसदृक्षे आदित्ये युगपदेव स्थाने सम्बद्धा भवन्ति किन्तु क्रमेण। एवं सति यो रश्मिः पदेन साक्षात्सम्बद्धः स पदवीस्तद्रूपः सोमः, कवीनां मध्ये ये पूर्वे प्रेता रश्मयस्ते कवयः।

अयं भावः—आदित्यादीनां विषये दर्शनमुत्पत्तिरदर्शनं मरणमिति ब्राह्मणे प्रतिपादितम्। तदनुसारेण ये पूर्वे पूर्वाञ्चना रश्मयः अतीतदर्शना अत एव ते प्रेतास्तेषां मध्ये पदवीः पदं प्रविशन् यो रश्मिः स सोम इति। ऋषिर्विप्राणाम्। विशेषेण पूरकाणां विविधं पूरकाणां वा तेजः प्रदानेनप्रकाशका ये तपां मध्ये सम्मुखसम्बन्धो य आदित्यस्य रश्मिस्तद्रूपः सोम इति। महिषो मृगाणाम्। मृगाणां मार्गणानामादित्यरश्मीनां मध्ये महिषोमहान्।

आदित्यस्यास्तगमनेऽदर्शने मृगशब्देन मार्गणीयत्वेन वचनदादित्यरश्मीनामदर्शनेन मार्गणीयानां मध्ये महिषो महान् सोम इति। लोकेऽपि मृगाणां पशूनां मध्ये महिषः प्राणी महान् भवतीत्ययमर्थोऽपि सूचितः। श्येनोगृध्राणाम्। गृध्र्-धातोरतिशयेनाङ्क्षाबोधकत्वेन ततो निष्पन्नस्य गृध्रशब्दस्य भक्ष्यविषयेऽत्यन्त-लालसस्य आकाशे वहुदूरमुड्डीयमानस्य पक्षिणो ग्रहणम्। स यथा द्रुततरं गच्छति तद्वद् ये द्रुतगत्या वहुदूरं गच्छन्ति तादृशानां किरणानां मध्येऽसौ सोमः श्येनरूपः।

श्येनो हि सर्वेषां पक्षिणां मध्ये वहुदूरं गच्छतीति प्रसिद्धं तत्सदृशः तद्रुततरं गत्वादित्ये प्रविशन् सोम इति। स्वधितिर्वनानाम्। वनशब्देन वननीया आदित्यरश्मय इति निरुक्त परिशिष्टे उक्तम्। वननीया एषणीयाः रात्रौ तेषामसौ परशुरिव सोम इति। एतादृशः सोमः पवित्रमादित्यमण्डलमेति महान्तमाकाश-भागमतिक्रम्येति।

एवं सति सोम आदित्यतो विनिर्गततेजोरूपः, तस्येन्द्रेण पानं पुनस्तं प्रति प्राप्तिरिति "सोमोऽस्माकं ब्राह्मणानां राजेति" ब्राह्मणवाक्यमपि ब्राह्मणानां ब्रह्मादित्यस्तत्सम्बन्धिनामस्माकं रश्मीनां मध्येऽत्यन्तं भास्वर इत्यर्थत्वेन प्रवृत्तम्। सुदूरगामी आदित्यस्य यः किरणस्तस्य सुषुम्णशब्देन व्यवहारः सुषुम्ण आदित्य-श्चन्द्रमा गन्धर्वस्तमभिदीपयतीति स्पष्टः। एतावता सोमस्तेजारूपस्तत्पानं स्व-स्मिंस्तस्य विलयः, ततो वृत्रादिना युद्धमित्यादिकं साजात्यात्कल्पनमिति दिक्।

## २६. त्रीणिशता त्री सहस्राणीति मन्त्रार्थविचारः

एवमृग्वेदे आग्नेये सूक्तेऽग्निपूजकानां देवानां संख्योच्यते—
त्रीणि शत त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन्[1]। इति।

---

१. ऋ. सं. १०:५२:६

अत्र क एते देवा. कुत एषामेतावती सख्या इति विचारे सायणेनोच्यते–उपलक्षणमिद सर्वे देवाः पूजका इति । तत्रोक्तरीत्या यदि मन्त्रोक्तसख्याया उपक्षणत्व तर्हि सा सख्याऽविवक्षिता भवति । सा च संख्या भिन्नपिदृष्टसूक्ते एवमेवाविशेषेणोच्यमानाऽसंगता स्यात् ।

अथ ऋषिष्वपि पौर्वापर्यकल्पनैकेन पूर्वेणोक्तापरेण तद्दृष्टा मन्त्रान्तरवचन न विरुद्धयत इति चेदत्रापि उपलक्षणत्वमित पूर्ववर्तिनीनामपि सख्याना सम्भवति तत्परित्यागो निर्हेतुक । किञ्चोपलक्षणत्वे अत्रैवोच्यमानानामनेकासा सख्यानामेकयैवापेक्षितार्थोपलक्षणपरासा ग्रहणमयुक्त स्यात् । किञ्च विभिन्नसख्योल्लेखेन सकलसकलनेन सम्भवन्ती सख्या एकोनचत्वारिंशदधिकशतत्रयाधिकसहस्रत्रयरूपा सख्या अवयवशोऽत्र निर्दिष्टा ।

तत्रापरेषामवयवानामुक्तसख्यायाः सत्वे एषामेवावयवानां ग्रहणस्य निर्युक्तिकत्व स्यात् । किञ्चैषैव सख्योक्तावयवोपेता वैश्वदेवीषु निवित्सु पठ्यते । तद्वचन विरुद्ध स्यात् । एव हि वैश्वदेवनिविद्गतानि निविदध्यायोक्तानि वाक्यानि–त्रयश्च त्री च शता । त्रयश्च त्री च सहस्रा । त्रयश्च त्रिंशच्च[1] इति ।

२७ त्रीणि शतेतिमंत्रे संख्या सख्येय विचारः

उपलक्षणत्वे मन्त्रोक्तसख्याया एतद्वचन विरुद्ध स्यात् । किञ्चोपनिषत्स्वपि कति देवा याज्ञवल्क्येऽति प्रश्नपूर्वं सैव सख्योत्तररूपेण निबध्यते तदनुपपत्ति स्यादुपलक्षणत्वे । तस्मादेषा सख्या मन्त्रोक्ता नोपलक्षण सभवति । एव सति पूर्वोक्तसशयानामनिरासेन मन्त्रस्यास्पष्टार्थत्वम् । वैश्वदेवनिविदनुसारेण नास्याः सख्याया उपलक्षणार्थत्व प्रत्युत विवक्षितत्व प्रतीयते । न केवल विवक्षितमेव किन्तु आदित्यगतिसम्बद्धत्वमपि प्रतीयते । एव हि तत्रत्यानि वाक्यानि ।

त्रयश्च[2] त्री च शता । त्रयश्च त्री च सहस्रा । त्रयश्च त्रिंशच्च । तावन्त उदरणे । तावन्तो निवेशने । तावतीर्ग्नाः । तावतीः पत्नी । तावन्तोऽभिपाच । तावन्तो रातिपाच । इति । अत्रोत्तरवाक्येषु तावच्छब्दप्रयोगादन्त्यप्रथमवाक्यत्रयोक्ता नवाधिकत्रिंशदधिकशतत्रयाधिकसहस्रत्रयरूपा संख्या विवक्षितेति प्रतीति. । सा वैश्वदेवनिवित्सम्बन्धाद्देवाना सख्येति प्रतीयते । तामेव सख्या गृहीत्वा तस्याः स्थानादिसम्बन्ध उत्तरवाक्यैर्बोध्यते ।

यथा वाक्यम्–तावन्त उदरणे इति । अत्र तावन्तस्तावत्संख्याका इत्यर्थः । अर्थादेते देवा अत्र विवक्षिता । वैश्वदेवनिवित्सम्बन्धात् । उदरणे । उदरण नामोर्ध्वगमन तत्र । तच्चोदरण कस्येति नात्रोच्यते परन्तु परवर्तिवाक्यार्थविचारेण-

१. नि वि. ७

२ निविदाध्याय ७.

दमादित्यस्येति प्रतीयते । एवं सति उदरणमूर्ध्वगमनमादित्यस्य तच्चोदयरूपमिति उदरण आदित्योदये इत्यर्थो भवति । तथा परवर्तिवाक्यम्–तावन्तो निवेशने । निवेशनं गृहम् । तत्सम्बन्धिताऽनेन वाक्येनोच्यते । तच्चादित्यस्यास्तग्रहणेनात्र तत्सम्बन्धरूपत्वम् । आदित्यस्यादर्शनमस्तमयशब्देनाच्यते । तत्रास्तशब्दस्य गृहार्थत्वम् । निघण्टौ गृहबोधकेषु नामसु अस्तशब्दस्य पाठात् । अस्तमयो गृहगमनं तच्चादित्यस्येति निवेशनमादित्यस्यास्तमयस्तत्सम्बन्धिनस्तावन्तस्तावत्संख्याका देवा इत्यर्थ: । परिवर्तिवाक्यम्-तावतीर्ग्ना: इति ।

अत्र सान्निकट्यादस्तोत्तरवर्तिसन्ध्याकालस्यात्र ग्नाशब्देन ग्रहणम् । तासां ग्नानां सम्बन्धित्वं तस्या: संख्यायास्तेन वाक्येन प्रतिपाद्यते । तावती: तावत्यस्तावत्सख्याका: ग्ना: । ग्नाशब्देन स्त्रीणां ग्रहणम् । निघण्टौ तच्छब्दस्य स्त्रीबोधकत्वनिर्णयो निरुक्तकारेण । स्त्रियश्चार्थाद्देवानाम् । ताश्च देवाभिन्नाएव । एवं सत्यत्र ग्ना शब्देन देवा एव विवक्षितास्ते च तत्कालसम्बन्धिनस्तावन्त इत्यर्थ: ।

एवं परवर्तिवाक्यम्–तावती: पत्नी: । तावत्य: पत्न्य: अर्थाद्देवानाम् । ताश्चास्तोत्तरा: पूर्वं प्रतिपादिता इति अनेन वाक्येनोदयपूर्ववर्तिन्यो गृह्यन्ते । उदयपूर्ववर्तिसन्ध्याकालस्योप: कालत्वेन वर्णनादत्रपत्नीशब्देनोषसो ग्रहणम् । उपस: पत्नीत्वेन व्यवहार: सूक्तेषु । निरुक्तकारेणोच्यते–"एषैवाभिसृष्टकालतमा सूर्या" । "सूर्या सूर्यस्य पत्नी" इति । एवं चोपस: सूर्यात्वमादित्यपत्नीत्वमभिप्रेत्य सूर्याविवाहसूक्तमपि संगच्छते । उपस एकत्वेनानेकत्वेन व्यवहारो वेद औपससूक्तेषु ।

एवं च पत्नीशब्देनात्रोपसंगृहीत्वा तस्यास्तावतीरित्यनेनाभिप्रेत: संख्याविशेषबोध उपाधिवशात् । उपाधिश्च परस्तात्प्रतिपादयिष्यते । यथा प्रात: कालिकं सान्ध्यं तेज उप: शब्देनोच्यते एवं सायंकालिकस्यापि तस्य तत्वेन वचनम् । एवं सति ग्ना अप्युपस: । तासामप्यनेकत्वमुपाधिवशत एव ।

एवं "तावन्तोऽभिपाच:' । अभिपाच इत्यनेनाभि अभित: सम्मुखसम्बन्धस्तेन सचन्ते सेवन्ते युक्ता भवन्ति तेऽभिपाचो देवास्तावत्संख्याका इत्यर्थ: । एवं "तावन्तो रातिपाच:" इति । रातिर्दानं तेन तद्वतो लक्षणया रात्रि: । रात्रिशब्देनापि स एवार्थ: । तत्र सचन्ते सेवन्ते युक्ता भवन्ति तादृशा रातिपाचो देवास्तावन्तस्तावत्संख्याका इत्यर्थ: ।

तत्रोक्तरीत्या षण्णामेव वाक्यानामुक्तविधसंख्याबोधकत्वेन तावत्या: संख्याया: षड् गुणितत्वं बोध्यते । उदरणमित्यनेनोर्ध्वगमनम् । तच्चादित्यस्योदयमारभ्योर्ध्वमम्बरतले आरोहादादित्यस्य गमनमत्र गृह्यते । अहोरात्रेण सञ्जायमानादित्यस्य गतिर्वृत्ताकारा । वृत्ते च तत्रोर्ध्वमर्धं वृत्तस्य दिनार्धमपरं रात्र्-

पर्यम। वृत्तार्धे दिनगतेऽर्धो भाग आरोहार्थ । अपरश्चार्धो भागो वृत्तस्यावरोहार्थ । अवरोहसमाप्तिश्चास्तमये।

एव सति आरोहावरोहयार्वृत्तचतुर्थभागनवत्यशपर्यन्त प्रतिस्व प्राप्तौ' ग्नापत्नी रातिषाच" पदसम्बन्धवशत आरोहावरोहयार्वृत्तार्धत्रिभागभागिता भवति। तृतीयो भागश्च वृत्तार्धे षष्ट्यशात्मा। तथाहि उक्तपदत्रयमध्य राति शब्देन रात्र्या अखिलाया अस्तमयमारभ्योदयपर्यन्ताया वृत्तार्धसम्बन्धिनया ग्रहण प्राप्ते ग्नापत्न्योस्तदन्तर्गतयोरपि पृथगुल्लेखेन रातिशब्दनग्नापत्न्योर्मध्यवर्तिस्थानसम्बन्धिन्या एव ग्रहण विज्ञायते। तत्र प्रकृत विशेषवचनादग्नापत्नीरात्रीणा समो विभाग प्रतीयते। स च रात्र्यर्धे वृत्तार्धे। वृत्तार्धस्य भागा अशीत्युत्तरं शत, तथा तृतीयो भाग षष्ट्यशात्मा प्रत्येक भवति।

एव सति स्थलान्तरे रात्र्यास्त्रिभागस्यपत्वोक्तेरनुगुणत्वेन रातिषाच इत्यनेन गृह्यमाणो भागो मध्यवर्तिषष्ठ्यशात्मा भवति। पत्न्यर्थोऽपि तावान्। एव ग्नार्थोऽपि तावानेव। एव रात्र्या यथा त्रयो विभागा एव दिनेऽपि उदरणनिवशनया पृथग्वचनादभिपाच इत्यनेनापि दिनमध्यवर्तिभागोऽभिप्रयते, स च क्तरीत्या दिनार्धवृत्तार्धस्येति। स च तृतीयो भागा वृत्तार्धस्य षष्ट्यशात्मा। एवमुदरणनिवेशनयोरपि प्रतिस्व वृत्तार्धस्य षष्ट्यशात्मा भाग ।

एव चाग्नाहोरात्रयो षष्ठो भाग प्रत्येक बोध्यते इति फलितम्। प्रतिषष्ठभाग च वत्सस्य तावत्या ग्रहण साकल्येन वृत्तार्धा सख्या ३३३९×६ षडगुणिता चतुस्त्रिंशदधिकविंशतिसहस्ररूपिणि भवति। वैश्वदेवीषु निवित्सु प्रतिपादनादिमे एतावन्तो देवा इति भवति।

ते चादित्येन गन्तव्य दैनंदिवृत्ते उक्ता इति तस्य वृत्तस्यैतावन्तो भागा देवसज्ञका इति तद्भागोपाधित्वेन तावती देवाना सख्येति भवति। अहोरात्रार्थवृत्तषष्ठभागश्च घटीदशकात्मा भवति। दिनभागत्रयरूपास्त्रिंशद्घट्यो दिनार्था भवन्ति।

एव रात्र्यर्थभागत्रयरूपत्रिंशद्घटीना मध्ये रात्रिप्रारम्भीयाया ग्नाया रात्र्यसमानीयाया पत्न्याश्च भागद्वय विंशतिघटिकात्मक परित्यज्य मध्यवर्तिघटीदशकात्मा भाग केवलो रात्र्यर्थो वा केवलतमोऽर्थो भवति। केवल तमोदशायामेव वह्निसम्बन्धिता। दिवा आदित्येन सन्धिकाले रात्र्या पादद्वये सान्ध्येन उष-आदिशब्दाभिलप्यन तेजसा प्रकाशनादवशिष्टो रात्र्यो मध्यवर्ती तमोमयो भाग एव वह्निप्रकाश्यो भवतीति वह्निसम्बन्धित्व तस्य। स च भाग उक्तरीत्या घटीदशकात्मकाहोरात्रस्य षष्ठो भाग केवलरात्र्यर्थ ।

रातिषाचश्च तत्र देवा एकोनचत्वारिंशदधिकशतत्रयाधिकसहस्रत्रयमिता वह्निसम्बन्धिन इति वह्निपूजका इत्युच्यते पूर्वोक्ते आग्नेये मन्त्र। एव सति

न सा मन्त्रोक्ता संख्योपलक्षणार्था भवतीति तथा सति मन्त्र उक्तसंख्यावशतो स्पष्टार्थत्वमपि न भवतीति वैश्वदेवनिविद्वशतो मन्त्रस्योक्तरूप एवार्थ इति ।

उक्तरीत्या अहोरात्रार्थाया देवानां संख्यायाः स्वीकारे मन्त्रान्तरीयो व्यवहारोऽपि सम्यगुपपन्नो भवतीति । तथाहि—

त्वमेताञ्जनराज्ञो द्विर्दशा बन्धुना सुश्रवसोपजग्मुषः ॥
षष्टिं सहस्रा नवतिं नव श्रुतो निचक्रेण दुष्पदा रथ्यावृणक् ॥
(ऋ. सं. १:५३:९)

अत्र दुष्पदाया रथ्यायाः सम्बन्धिनो नवनवत्यधिकषष्टिसहस्राणि चक्रेण निर्वर्जितवान् अतिक्रान्तवांस्त्वमित्यर्थः । अत्र क इम उक्तसंख्याका निवर्जनीयाया रथ्यायाः सम्बन्धिनः । कुत एतावन्त इति विचारे न विस्पष्टता भवति यदीयं संख्या राज्ञां विशेषणम् । एतत्संख्याकानां राज्ञां निवारणं कृतवानिति । तदानीं राज्ञामेतत्संख्याविशेषग्रहणस्य किं तात्पर्यम् । यदि रथ्यासम्बन्धिनोऽर्था एतावन्त इति तदानीं तद्विशेषज्ञानाभाव इत्यस्पष्टार्थत्वम् ।

तत्र यदि स्वनयदानस्तुतौ दिनप्रारम्भे उक्त संख्यायुतगोसमूहस्य निर्देशात्तावत्संख्याका गावोऽत्रापि गृह्यन्त इति मन्यते । तथाहि तत्रत्यो मन्त्रः—

"षष्टिः सहस्रमनुगव्यमागात्सनत्कक्षीवाँ अभिपित्वे अह्नाम्[1] । इति । अत्र अह्नामभिपित्वे समीपे गव्यं षष्टियुतं सहस्रं कक्षीवान् सनत् स्वीकृतवानित्युक्तम् । यद्यपि पूर्वोक्तमन्त्रे नवनवत्यधिका षष्टिसहस्रसंख्या निर्दिश्यते अत्र तु षष्टिसहस्ररूपैवेति वैषम्यम् । तथापि अत्रत्यपरमन्त्रे अवशिष्टायाः संख्यायाः प्रकारान्तरेण वचनात् वैषम्याभावः । तत्र परस्तादुच्यते—

पूर्वामनु प्रयतिमाददे वस्त्रीन्युक्ताँ अष्टावरिधायसे गाः[2] । इति ।

अत्र प्रयतिर्दानम् । पूर्वं दानमनु अहं त्रीन् युक्तानष्टौ गा आददे इत्युक्तिः । अत्र भाष्यकृता त्रीन् युक्तां अष्टावित्यत्र अष्टत्रिसंख्ययोः समानार्थकत्वं संकलनन्यायेन योगं मत्वोक्तस्थले एकादशसंख्या अभिप्रेयते इत्युच्यते । सा च संख्या रथगता । यद्यपि तत्रैव मन्त्र गा इति पदमुच्यते तथापि तद्रथपरमिति न विरोधः ।

एवं चैकादश रथानहं गृहीतवानिति कक्षीवत उक्तिः । यद्यपि पूर्वं रथानां संख्या दशरूपिण्युक्ता "वधूमन्तो दश रथासो अस्थुः" इति । अत्र देयद्रव्ये निर्देशः । एवं च न केवलं दशानां रथानां स्थितिमात्रयुक्तं किन्तु देयानां रथानां संख्योक्ता

---

१. ऋ. सं. १:१२६:३
२. ऋ. सं. १:१२६:५

तथापि तत्र वधूमन्त इति विशेषणात्ते दश एकादशस्तु धनकनकपूर्णत्वेनाधिका विवक्षित इति मन्तव्यमित्युच्यते ।

तत्रैकादशेति रथगतैवैषा सख्या इति बलवत्तरप्रमाणेन यदा निर्णीयेत तदानीमुक्तविधा विवेक सम्भवेत् । न च तथा प्रकृते । अत्र प्रथमत उक्तत्रयष्ट-सख्ययो समानार्थत्वमित्यनिर्णय । गा पदोक्त्या गोपरत्व प्राप्तानि तस्येत्यनुप-पन्ना सोधित । किञ्च समानार्थत्वे किमित एकादशेत्यनुक्त्वा सख्याद्वयनिर्देश ।

अथ यदि अवयवशो निर्देश स इति तर्हि एकादशसख्याया अनेकावयव-योगितया अवयवान्तराभिप्रायेणान्या सख्या कुतो नात्तेति कुत एवंवाक्यवमस्य गृहीतेति विनिगमनाविरह । अथ यदि अशोकवनिकान्यायेन तस्या वचनमिति सभवति प्रकारान्तरेणसार्थक्ये नैरर्थक्यनिर्णायकोक्तन्यायानाश्रयणस्य शिष्ट-सम्मतत्वात्, कथ तर्हि तत्सार्थक्यम् । तत्रोच्यते ।

अत्र त्रीनित्यनेन गावो निर्दिश्यन्तेऽर्यानित् सख्या गोगता । अष्टाविति पद गोसमुदायाष्टकबोधकम । समुदायश्च द्वादशाना गवाम् । तत्र समुदायग्रहणे द्वाद-शानामेव समुदायाश्रयणे त्रीन्युक्ता अष्टाविति विचित्रनिर्देश एव मानम । तथा-सत्येव मन्त्रान्तरानुगुण्यमिति ।

एव च द्वादशगवीनामष्टाना ग्रहणे गावो भवेयुष्षण्णवति गोत्रितय तु साक्षादेव निर्दिष्टमिति साकल्येन सख्या नवनवत्यात्मिका भवति गवामिति । तत्र पूर्वा प्रयतिमनु इति मन्त्र निर्देशेन साकल्येन षष्टिसहस्राणि नव नवतिश्च गवा सख्या सपद्यते । एव सति दानस्तुतौ तावत्या सख्याया गोसम्बन्धित्वनिर्ण-येन पूर्वमन्त्रेऽपि उक्तसख्या गोगतैव गृह्यते ।

एव सति तत्र मन्त्रे तावत्सख्याका गाव एव गृह्यन्ते इति निर्णीयते । उभ-यत्र समसख्यानिर्देशात् । चक्रेणेति अतिक्रमे साधनस्य चक्रस्य निर्देशात् रथ्यायाा-श्च दुष्पदत्वविशेषणात् । गावश्च किरणा अत्र विवक्षिता । दुष्पदाया रथ्या-यास्तावतीभिर्गोभिरतिक्रमणबोधनात्तासामादित्येन प्रत्यह गन्तव्याहोरात्ररूपवृत्त-सम्बन्धिता बोध्यते ।

एव चैकवृत्तसम्बन्धिता देवाना गवा चावाहिता भवति । तया च गवा देवानामपि परस्पर सम्बन्ध प्राप्नोति स च सम्भवादेकस्य देवस्य गोत्रिनयेन सम्बन्ध इति । एव च पूर्वोक्तत्र्यंशदेवनिविदनुसारेण वृत्त देवसख्या तस्या गाम-स्थारूपसपादनार्थं सा त्रिभिश्चेद् गुणिता भवति तदा फलमुक्तमन्त्रगतगोसख्या-सम भवतीति उक्तरीत्या वृत्ते देवसख्या पूर्वोक्ता २००३४ चतुस्त्रिंशदधिकविंश-तिसहस्रात्मिका अत्र गोसख्या वृत्तगता नवनवत्यधिकषष्टिसहस्रात्मिका ६००६९ । अनैतस्या गोसख्यायास्त्रिभिर्विभाजने देवसख्या भवति यथा ६००६६/३= २००३३ इति ।

तावन्त एवाहोरात्रसम्बन्धिनो देवाः। पूर्वोक्ताग्नेयसूक्ते वह्नेः पूजकदेवतासंख्याविज्ञानार्थमेतस्या वृत्तगतदेवसंख्यायाः षड्भिर्विभाजने २००३३/६= ३३३८,५/६। अत्रार्धाधिकशेषेण तदर्थं पूर्णसंख्याग्रहणे ३३३९ इति वह्निकालसम्बन्धिनी संख्या भवति सा च तत्कालसम्बन्धाद्वह्नेः पूजकदेवसंख्येति पूर्वमन्त्रस्य स्पष्टार्थत्वं भवति इति। एवञ्चाग्नेयेसूक्ते देवसंख्या नोपलक्षणार्था इति।

अत्र यद्यपि वैश्वदेवनिविदनुसारिणी देवसंख्या सम्पूर्णवृत्तगता २००३८, वृत्तगतगोसंख्यातस्त्रिभिर्विभाजने वृत्तगता देवसंख्या २००३३, अनयोरेकसंख्यया वैशम्य दृश्यते तथापि वैश्वदेवीषु निवित्सु या प्रथमतो देवसंख्या प्रोक्ता वृत्तषष्टभागीयदेवस्वरूपिणी तस्यामेकस्य षष्ठ १/६ भागस्याधिकस्य योजनात्सम्पूर्णवृत्तीयदेवसंख्या विज्ञानायोक्तवैश्वदेवीयनिविद्गता षट्भागानां षट्संख्यासु प्रतिस्वं षष्ठभागस्याधिक्येन साकल्येनैकसंख्याया अधिकायास्तत्र प्रवेशवशतस्तत्र वृत्तगतदेवसंख्याया आधिक्यं प्रतीयत इति मन्त्रानुसारिसंख्यानुसारेण देवसंख्याया वृत्तगताया २००३३ अस्या न वैषम्यम्।

एवमपरापरे ये साक्षात् षष्टिसहस्रनिर्देशा मन्त्रेष्वेतेष्वपि उक्तरीत्या गोसंख्यादेवसंख्यादिकं मन्तव्यम्। यथा षष्टिं सहस्रमनुनिर्मजामज इत्यादिषु। एवं चात्रवृत्ते गवां संख्या दानसूक्ते तावतीनां गवां दिनप्रारम्भे स्वीकारवर्णनेनादित्येन प्रत्यहं गन्तव्यवृत्तगता सा संख्या गवामिति विज्ञायते। तदनुसारेण देवसंख्याऽपि तद्वृत्तगता। तच्च वृत्तमादित्येन षष्टिघटिकाभिरतीयते तत्र षष्ठो भागो वह्नेः पूर्वं प्रदर्शितरीत्येति तत्र भागे उक्तरीत्या संपद्यमाना देवसंख्या ३३३९ एकोनचत्वारिंशदधिकत्रिशताधिकसहस्रत्रयात्मिकोक्ताग्नेये मन्त्रे उच्यते तस्या उपलक्षणत्वेनार्थकरणं न योग्यम्। एवं चोक्तरीत्या मन्त्रस्य विस्पष्टार्थत्वमिति पूर्वमुक्तमेवेति।

आदित्येन प्रत्यहं गन्तव्येऽहोरात्ररूपवृत्तमार्गे लोकत्रयसम्बन्धिता भवति। अत एव एषां वै लोकानां रोहेण सवनानां रोहं आम्नात इति निरुक्तवशात एकस्मिन्नहनि सवनानि त्रीणि प्रातर्मध्यन्दिनतृतीयसवनानि। तत्र प्रातर्मध्यन्दिनेति विशेषणवशतो योगेन लोकानां रोहोऽपि समानन्यायेनैकदिनसम्बन्धी वक्तव्यः। तथा सति आदित्येन प्रत्यहं भ्रमता लोकत्रयं सम्बन्धनीयं भूम्यन्तरिक्षद्यावात्मकमिति प्रतिलोकं गोसंख्याभिप्रायेण वृत्तगोसंख्या त्रिविभाजनीया सा च वृत्तगतदेवसंख्यासमाना प्रतिलोकं गोसंख्या स्यात् २००३३ रूपिणी। तत्र सहस्रतोऽधिकार्वरिना त्रयस्त्रिंशत्संख्या देवसंख्यारूपतां नीता एकादशव्यवतिष्ठते।

एवं प्रतिलोकं देवसंख्याया एकादशत्वेन निवित्सु त्रय एका दशासः इति वचनं भवति। किञ्च मन्त्रेष्वपि ये देवा दिव्येकादशस्थ पृथिव्यामध्येका दशस्थ अप्सुक्षितो महिनैकादशस्थ ते देवासो यज्ञमिमं जुषध्वमित्यादिषु लोकत्रयाभिप्रायेण देवानामेकादशसंख्यावर्णनं प्रतिलोकमुपपद्यते। सा चैकादशसंख्या देवानां

प्रतिलोक तथा सति लोकत्रयाभिप्रायेण साकल्येन देवसख्या त्रयस्त्रिशद्रूपिणी भवति।

यत्तु ब्राह्मणे[1]त्रयस्त्रिशद्वै देवा देवाना त्रयस्त्रिशत्सख्याकत्वमुक्त्वा तदुपपत्तये अष्टौ वसव एकादश रुद्रा द्वादशादित्या प्रजापतिश्च वषट्कारश्चेति देवसख्या विभज्य प्रतिपादिता सा मन्त्रोक्तदेवसख्यानुसारेण निविद्गतदेवसख्यानुसारेण नोपपद्यते तस्य भिन्नाभिप्रायकत्वात्। मन्त्रेषु निवित्सु त्रय एकादशास. प्रतिलोकमेकादशसख्यायोगितोच्यते, ब्राह्मणोक्तविभागे वसवोऽष्टावुच्यन्ते तेषा प्रात. सवनसम्बन्धितया भूलोकसम्बन्धित्वेन भूलोक सम्बन्धिनी सख्या अष्टाविति भवति न तु एकादशरूपिणी।

सर्वलोकसम्बन्धिनो. प्रजापतिवषट्कारयो सख्याया अत्र भूलोकीयदेवतासख्याया योजनेऽपि सा दशसख्या स्यात् न तु एकादश। एवमादित्याना तृतीयसवनयोगितया तृतीयसवनसमरूपद्योलोके द्वादश देवानासख्या न तु एकादशेति विरोधात्। तस्माद् ब्राह्मणोक्ता सख्या भिन्नाभिप्रायेति।

एव चोक्तरीत्या निविदुपनिषन्मन्त्रानुसारेण लोकत्रयसम्बन्धी देवानामेकादशत्रयविभाग पूर्वोक्तषष्टिसहस्रादिसख्याया गोरूपत्वस्य तस्याहोरात्ररूपवृत्तसम्बन्धित्वस्य त्रिभिर्गोभिरेको देव इति परिमाणस्य च ज्ञापक इति स्पष्टम्। एवञ्चोक्ताऽग्नेयसूक्तगतमन्त्रसख्योपपत्त्या मन्त्रार्थस्य स्पष्टत्वमिति पूर्वमुक्तमेवेति।

## २८. वृत्रनमुचिशम्बरप्रभृत्यसुराणां तमोरूपत्वम्

ऐन्द्रेषु सूक्तेषूच्यमाना वृत्रनमुचिशम्बरप्रभृतय इन्द्रविनाश्या असुरा अपि तमोरूपा। इन्द्रस्यादित्यत्वेन तेन विनाश्यत्व तमस एव भवतीति। तेजस्तमसोस्तु वास्तवविरोधाभावेन सामानाधिकरण्याभावेन विरोधकल्पना तन्मूलायुद्धकल्पना। तन्मूलश्चायुधाद्युपयोगवर्णनप्रकारः। तन्मूल एव सन्धानादिप्रकारः। यथा नमुचिना युद्धे इन्द्रनमुच्यो सन्धि, इन्द्रेण नमुचेरार्द्रेण शुष्केण वस्तुना दिवा रात्रौ च वधो न कर्तव्य इति। इन्द्रेणापि तत्परिपाल्योष काले नमुचेर्वध कृत।

उषाश्च न दिवा न रात्रिः। तत्रत्यस्याव्यक्तस्य तेजस अपा फेनत्वकल्पना। अत एव नमुचिसन्धानविरोधो न, यत फेनो नार्द्र वस्तु न शुष्कमिति। तदुक्त ब्राह्मणे मन्त्रे च। मन्त्र. "अपा फेनेन नमुचे शिर इन्द्रो दवर्तय[2]" इति। "अपा फेनो न शुष्क नार्द्रमिति ब्राह्मणे प्रतिपादितम्। अप्त्वमव्यक्ततेजस इति पूर्वमुक्तमेव। शम्बरस्य शतपुरीविनाशो वृत्रस्य नवनवतिपुरोविनाशेन व्याख्यात।

---

१. ऐ. ब्रा. २.२.८ २. ऋ स. ८ १४.१३

चत्वारिंश्यां शरदि लाभवर्णना चत्वारिंश्यां शरद्यन्वविन्दद् इति मन्त्रोक्ता तमः परत्वेन सुलग्ना। सुमेरौ वसन्तग्रीष्मवर्षर्तु पर्यन्तमादित्यस्योदितस्यानस्तमितस्यसत्वेन षाण्मासिकं दिनं तत्र ततः परस्ताच्छरदि रात्रिप्रवृत्तिः। शरदृतुश्च मासद्वयव्यापी। तत्र प्रथमो मासो वारुणस्तदभिन्नसवितुः। तत्रास्तोत्तरवर्तिप्रकृष्टप्रकाशः क्रमेण न्यूनीभवन् भवति। तत्र न तमः। परवर्तिनि च रात्रिकालिकी सन्ध्योषः पदबोध्या। उषसश्च रूपत्रययोगिता मन्त्रेषु प्रोच्यते, तदुक्तं–त्र्यरुषीणां चतुः शतमित्यत्र।

तद्व्याख्यावसरे भाष्यकारः सायण आह–त्र्यरुषीणां त्रिभागारुणानामिति। त्र्यरुणप्सव इति उषसां स्थलान्तरे मन्त्रगतं विशेषणमपि त्रिभागारुणत्वं बोधयति। एवञ्चोषस एको भागो अरुणरूपः। उषसां नामसु निघण्टौ श्वेत्येति नामतः श्वेतवर्णोऽपि तासां त्रिभागः। अवशिष्टश्च भागस्तमोरूपत्वेन कृष्णवर्णः।

एवं सति अस्तोत्तरवर्तिमासरूपास्त्रिंशत्पर्यायरूपाहोरूपास्त्रिंशच्छरदः। शरदृतोस्त्रिंशद्दिवसा इत्यर्थः। ततः परवर्तिसायंसन्ध्यारूपोषसः प्रथमो भागोऽरुणवर्णः दशपर्यायात्मकदिवसदशकयुतः। मिलित्वा चत्वारिंशत्पर्याया दिनानि वा शरदस्तावतीतानि भवन्ति।

ततः परवर्तिनि उषसो द्वितीयभागे तमस उपलब्धिस्तां गृहीत्वा चत्वारिंश्यां शरदि असौ लब्ध इति चत्वारिंश्यां शरद्यन्वविन्दादित्यस्य न विरुद्धता स्पष्टता वा। स्वनयदानस्तुतौ प्रातःकालीनोषसः सावित्रकालसाहित्येन चत्वारिंशत्पर्यायपर्यन्तं शोणवर्णत्वं वर्ण्यमानमुपपद्यते चत्वारिंशद्दशरथस्य शोणाः सहस्रस्याग्रे श्रेणीं नयन्ती इति।

अत्र सहस्रं सहस्रसंख्याकरश्मियुतमादित्यमण्डलम्। आदित्यस्याग्रेऽर्थात् तस्योदयात्पूर्वमित्यर्थः। दशरथस्य दशघट्यात्मककालस्य। सुमेरुव्यतिरिक्तस्थले। सुमेरौ दशघटोस्थानिनां षष्टिपर्यायाणां ग्रहणम्। दैनन्दिनगतौ दशघटीष्वपि दैनन्दिनवृत्तदशघटीकालोपयोगिवृत्तषष्ट्यंशानां मध्येवा चत्वारिंशच्छोणाः शोणवर्णा अश्वा वा गावो वा श्रेणिं नयति श्रेणिरूपेण दृश्यन्ते। तावत्कालपर्यन्तमरुणिम्नो भासात्।

पूर्वोक्तसावित्रः काल उदयपूर्ववर्ती पञ्चघट्यात्मा ततः पूर्ववर्तिपञ्चघटीपरिमिति उषसः इति दशघट्य उदयपूर्वकालिकास्तासां चत्वारिंशदंशा उदयसमनन्तरा इत्युक्तम्। एवञ्च रथशब्दोऽत्र घटीबोधकः। दशघटीपर्यन्तमुषसः सत्वेन तेषां दशानां रथानां स्वनयदानस्तुतौ वर्णनं–'[1]वधूमन्तो दशरथासो अस्थुरिति'। उषसो वधूत्वेन ग्रहणात्तेषां रथानां वधूमन्त इति विशेषणम्।

१. ऋ. सं. १:१२६:७

पुरुषसूक्ते चोक्तदशकस्योदयात् पूर्वकाले अस्तोत्तरकाले च वर्तमानस्याभिप्रायेणोच्यते 'तस्माद्विराळजायत विराजो अधि पूरुषः[1]' इति, विराड् दशाक्षरेति दशत्वसाम्येन उक्तदशरथेषूदयात् प्राग्वर्तिषु अस्तोत्तरवर्तिषु च विराटत्वं प्रकल्प्योक्तं तस्माद्विराळजायत विराजो अधि पूरुष इति। सूर्योषसो क्रमिकप्रवृत्तिमभिप्रेत्य उषसः सकाशत आदित्यस्योत्पत्तिवर्णना। उषसो मातृत्वं सूर्यस्य पुत्रत्वम् च प्रान्। सायं च सूर्यं पूर्वं उषा पश्चवर्तिनीति गृहीत्वा सूर्यसकाशत उषस उत्पत्तिवर्णना। उषसो जन्यत्वं सूर्यस्य जनकत्वमिति वर्णना।

एतदेव गृहीत्वोषसो दिवा दुहितृशब्देन वर्णना वेदे। उषसोऽदितित्वम। तदुक्तं निरुक्ते अदितिशब्दस्य अर्थवर्णनप्रसंगे- 'अदितिरदीना देवमाता[2]' इति। देवस्य सूर्यस्य माताऽदितिः। उषाश्च सूर्यस्योत्पादयित्रीत्युक्तमेव। तस्या अदितेः सम्बन्धित्वेन मन्त्र उच्यते-"[3]आदितेर्दक्षो अजायत दक्षाद्वदिति परि" इति। तदपि उक्तरीत्यैवोपपद्यते। "आदित्योषसोर्दर्शनमुत्पत्तिरदर्शनं मरण"मिति ऐतरेयब्राह्मणानुसारेण मन्त्रेषूच्यते।

ऐतरेयब्राह्मणे "[4]अथातो ब्रह्मणः परिमरः" इत्यस्मिन् खण्डे एताः पञ्च देवता परिम्रियन्ते विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निरिति तासां क्रमेण तत्र दर्शनेनोत्पत्तिरदर्शनेन मरणं प्रतिपादितम। आदित्यस्येवोषसोऽपि दर्शनमुत्पत्तिरदर्शनं मरणमिति गृहीत्वा मन्त्रे एकः सुपर्णः स समुद्रमाविशत्स इदं विश्वं भुवनं विभर्ति। तं पाकेन मनसा पश्यमन्तितस्तं माता रेळ्हि स रेळ्हि मातरम इति। रेळ्हि विनाशयति। परस्परविनाशकृत्वमुच्यमानं संगच्छते।

एवञ्चोदयात् पूर्वमस्तमयादुत्तरं चादित्यस्य दशघटीपर्यन्तः सवितुरुषसो कालः। तत्रोषसोऽपि स एव काल इति कदाचिन व्यवह्रियते। उषसश्च सूर्यपत्नीत्ववर्णनात्तस्मिन घटीदशकात्मको दशरथव्यवहारः। तत्र दशरथे स्वनपदानस्तुतौ वधूमन्त इति विशेषणे संगच्छते इति दिक्।

## २६ चत्वारि वाक् परिमितेति मन्त्रार्थविचारः

एवं-चत्वारि वाक्परिमिता पदानि, तानि विदुर्ब्राह्मणा ये मनीषिणः
गुहा त्रीणि निहिता नेङ्गयन्ति, तुरीयं वाचो मनुष्या वदन्ति[5]॥

एतन्मन्त्रव्याख्याने सामञ्जस्यं व्याख्यातॄणाम्। तथाहि-अत्र व्याकरणभाष्यकारा एतन्मन्त्रव्याख्याने आहुः, चत्वारि वाक्परिमितानि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च तानि विदुर्ब्राह्मणा ये मनीषिणः। मनसु ईषिणो मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति। गुहायां त्रीणि निहितानि

---

१ ऋ सं १०.६.५ २ निरुक्तम ४.२२.१
३ ऋ सं १०.७२.४ ४ ऐ ब्रा ८.५.५ ५. ऋ सं १.१६४.४५

नेङ्गयन्ते न निमिषन्तीत्यर्थः, तुरीयं वाचो मनुष्या वदन्ति । तुरीयं वा एतद् वाचो यन्मनुष्येषु वर्तते तच्चतुर्थमित्यर्थः ।

अत्र मन्त्रे पद पदं पदजातिपरम् । नामाख्यातोपसर्गनिपातरूपपजातिचतुष्टयं वाचः । मनीषिभिर्यानि विज्ञायन्ते ब्राह्मणैः । तत्र त्रीणि गुहाया निहितानि गुप्तानि सर्वेषाम् । वाचश्चतुर्थं तुरीयं पदं मनुष्या वदन्ति । अत्र तुरीयमित्युक्त्या पूर्वोक्तपदचतुष्टयसख्यापूरकं तत् । तदपि पदमेव । तच्च मनुष्यैरुच्यते । कथमिदं सम्भवति । पूर्वोक्तपदचतुष्टयस्यापि मनुष्यैः प्रयोगात् । एवञ्च सति मन्त्रार्थो विस्पष्टः । तुरीयपदस्य सम्यग्विज्ञानाभावात् ।

अतः कैयटेन पदचतुष्टये प्रत्येकं चतुर्थभागं मनुष्या वदन्तीति व्याख्यातम् । तत्र मूले केवलं पदचतुष्टयोक्त्या प्रत्येक भागचतुष्टयकल्पना प्रामाणिकी कल्पनीया । तुरीयपदस्य मूलगतस्य पदचतुष्टयसंख्यापूरकत्वेन प्राप्तस्य कल्पितप्रत्येकपदगतप्रकारसम्बन्धिसंख्यापूरकत्वेन कल्पनस्याञ्जस्येन मूलतो प्रतीतेः ।

उद्योतकाराः भाष्यगतपदजातानीति पदस्यार्थं ब्रुवते परापश्यन्तीमध्यमावैखर्यः नामादीनि च । एवञ्च मूलगतस्य चत्वारि पदानीत्यस्य परादिचतुष्टयं नामादिचतुष्टयं चार्थ इत्यर्थः तत्र मूले सकृदुक्तस्य चत्वारि पदानीति पदद्वयस्यैकविधपदचतुष्टयबोधकस्योभयविधपदचतुष्टयबोधकत्वकल्पनस्य मूलस्वरसतो प्राप्तिः । तथोक्तद्विविधपदचतुष्टयमध्ये नामादिरूपं पदचतुष्टयं प्रत्येकं चतुष्पादं-चतुष्प्रकारमित्यर्थः ।

तत्प्रकारगतसंख्यापूरकत्वं मूलगततुरीयशब्दस्य । एवं सति असंख्यानि नामादीनि तन्मध्ये स्वल्पान्येव पदानि मनुष्यैरुच्यन्ते । सकलपदवेदने शास्त्रदृष्ट्या वैयाकरणा एव प्रभव इति तस्यार्थः । तदुक्तं कैयटेन-तत्र चतुर्णां पदजातानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरणा वदन्तीति ।

एवं सति प्रथमतः पदचतुष्टयद्वयं प्रकल्प्य तन्मध्ये एकस्यैव चतुष्प्रकारता नापरस्येति तन्मध्ये स्वल्पपदानां चतुर्थभागत्व कल्पनेति बहुविधमलौकिकं कल्पनीयं भवति । नामादीनामसंख्यतया प्रयुज्यमान कतिपयनामादीनां चतुर्थभागत्व कल्पनाया. असम्भवात् । तस्मादल्पप्रयोगपरत्व तस्य वक्तव्यमिति न समञ्जसैषा कल्पना ।

एतदर्थं छायाकारेणोद्योतस्थस्य नामादिमध्ये एकैकं चतुष्पादमित्यस्य व्याख्याक्रियते, चतुर्थपादं परादिभिरेवेत्यर्थ इति । तत्रासंख्यनामादिमध्ये कतिपयपरत्वं न तुरीयशब्दस्य किन्तु नामादीनां प्रत्येकं परादयो ये भेदास्तत्रान्तिमभेदो यो वैखर्याख्यस्तत्परत्वं तुरीयशब्दस्येति । तत्रापि पक्षे सकृदुक्तस्य चत्वारि पदानीत्यस्यानेकार्थपरत्वदोषतो निस्तारः । तस्मान्न वैयाकरणरीत्या मन्त्रार्थः समञ्जसः ।

निरुक्तपरिशिष्टे तु पदचतुष्टयं नानाप्रकारं मतभेदेन प्रदर्शितम्। कतमानि तानि पदजातानि? (१) ओंकारो महाव्याहृतयश्चेत्यार्षम् (२) नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणा, (३) मन्त्र कल्पो ब्राह्मण चतुर्थी व्यावहारिकीति याज्ञिका। (४) ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ता। (५) सर्पाणा वाग् वयसा क्षुद्रसरीसृपस्य चतुर्थी व्यावहारिकीत्येके। (६) पशुषु तूणवेषु मृगेषु आत्मनि चेत्यात्मप्रवादा।

तत्र ब्राह्मणमपि प्रदर्श्यते, अथापि ब्राह्मणं भवति सा वै वाक् सृष्टा चतुर्धा व्यभवत्। एष्वेवलोकेषु त्रीणि पशुषु तुरीयम। या पृथिव्यां साग्नौ सा रथन्तरे यान्तरीये सा वायौ सा वामदेव्ये या दिवि सादित्ये या बृहति सा स्तनयित्नौ। अथ पशुषु ततो या वागत्यरिच्यत ता ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या देवानां या च मनुष्याणामिति।

एतेषामपि प्रकाराणामाञ्जस्येन मन्त्रार्थप्रतिपादनेऽनुपयोग। प्रथमपक्ष मनुष्यैस्तुरीयवचनस्यानुपपत्ति। ओंकारादीनामपि मनुष्यै प्रयोगात। वैयाकरणाना मतं पूर्वं परीक्षितमेव। तृतीये कल्पे कल्पशब्दो वैदिकभागपरो वा श्रौतसूत्रादिग्रन्थपरो वेति सन्दिग्धम्। आद्ये गाथादीनामसग्रहो कस्माच्चतुर्थीत्वेन व्यावहारिकया ग्रहण वीजाभाव। चतुर्थपक्षे वेदत्रयमुक्त्वा आथर्वणस्य चतुर्थस्य वेदस्याभिप्रायेण ग्रहणे प्राप्ते त परित्यज्य तुरीयमिति मन्त्राशानुगुण्याय व्यावहारिकीति हठात् ग्रहणस्यायुक्तत्वम।

अथ ऋगादिभिरेवाथर्वणोऽपि सगृहीत इति व्यावहारिक्याश्चतुर्थ्या ग्रहणे न दोष इति। तदपि न। सृष्टेरुत्पत्तिमारभ्याप्रलय व्यवहारकालस्तत्र वाण्या मनुष्यैरिव पशुभिरप्युपयोगेन मनुष्या वदन्तीत्यशस्य मन्त्रगतस्यासलग्नता। पञ्चमकल्पोऽपि न युक्त। सर्पशब्देन क्षुद्राणा महता च सर्पाणा ग्रहणसम्भवेन पुन क्षुद्रसरीसृपग्रहणमयुक्तम्।

किञ्च पश्वादिग्रहणाभावेन न्यूनतापि। उक्तरीत्या मन्त्राशयाजनाय व्यावहारिकीत्यस्य ग्रहणस्य दुष्टत्व पूर्वमुक्तमेव। षष्ठकल्पे पशूना मृगाणामप्यात्मत्वेन चातुर्विध्यस्यैव तत्रासगति। ब्राह्मणोल्लेखस्तु उक्तमन्त्रार्थानुपयोगित्वेन तदुल्लेखस्यानवसरप्राप्तत्वमिति।

एतद्व्याख्याया दुर्गाचार्येणोच्यते—नामाख्यातोपसर्गनिपातरूपपदचतुष्टये तुरीय चतुर्थ भागमयज्ञाय मनुष्या वदन्ति वेदयन्ते। तत्राप्रसिद्धार्थत्वादाख्यातोपसर्गनिपातपदानि अर्थं न वेदयन्ते। नामानि तु प्रसिद्धार्थत्वाद् वेदयन्त्यर्थानिति। तस्य प्रसिद्धतरार्थत्वात्तदर्थज्ञानायेत्यध्याहार इत्यर्थ। अत्रापि अध्याहार कर्तव्य। तुरीयमित्युपदेशक्रमेण चतुर्थमित्यर्थ। उपदेश क्रमश्च प्रसिद्धत्वान्नामाख्यातोपसर्गनिपाता इति। तत्र चतुर्थं निपातपदमेव न नामपदमित्यभिमतार्थसम्बन्धो न स्यादिति।

एवं चास्मिन् मन्त्रे पदशब्दार्थस्यानिर्णयेन मन्त्रार्थो विस्पष्ट इति प्राप्ते सूर्यैकदेवता वेदे स्तूयत इति मतानुसारेण तत्स्पष्टत्वार्थं प्रयत्यते। तथाहि–तत्र मन्त्रे वाक्परिमितानीत्यस्य वाचा वाक्त्वेन परिमितानि पदानि स्थानानि चत्वारीत्यर्थः।

अयं भावः वेदे सर्वत्रादित्यस्तवः। स च आदित्य उपाधिभेदवशतो विभिन्नैर्नामभिः स्तूयते। यथा प्राग्दिशमुपाधिं कृत्वा स इन्द्र इत्युच्यते। उदयन्नसौ भगः, सरणात् सूर्य इत्येवं मण्डलस्यासत्ताकालमुपाधिं कृत्वा स वागित्युच्यते। आदित्यमण्डलस्यासत्ता नाम दर्शनाभावः स चास्तमयमारभ्यापुनरुदयं भवति। तदानीं स वागित्युच्यते। अथवा वाचः सत्वं मण्डलस्या सत्ताया अर्थाददर्शनस्य काले भवति। तच्च मन्त्रेणोच्यते। तथा हि मन्त्रः—

तिस्रो मातृस्त्रीन् पितृन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेममवग्लापयन्ति।
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम्॥ इति॥
ऋ. सं. १:१६४:१०.

अत्र मातरो भूलोकास्ते च त्रयः। पितरो द्योलोकास्तेऽपि त्रयः। तान्बिभ्रदसावूर्ध्वस्तिष्ठति। ते धृताः षड्लोका इममादित्यं धर्तारं नावग्लापयन्ति, ग्लानं न कुर्वन्ति। अनायासत इमाल्लोकानसौ धारयतीत्यर्थः।

अमुष्य दिव आदित्यस्य पृष्ठे सत्ताकाले दर्शनकाले विश्वमिदं पदार्थजातं बोधयन्तीं प्रकाशयन्तीमिति वा अविश्वमिन्वामसर्वव्यापिनीम्। आदित्यमण्डलस्य तया अव्यापनादविश्वमिन्वासौ। एतादृशीं वाचं मन्त्रयन्ते। मन्त्रैः प्रकाशयन्ति मन्त्रैर्वेदयन्ति कवयः मन्त्रयन्ते पदं न मत्रि गुप्तपरिभाषण इत्यस्माद्धातोर्निष्पन्नं किन्तु मन्त्रशब्दात् प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेत्यनेन णौ सम्पन्नम्। मन्त्रैः प्रतिपादयन्ति प्रकाशयन्ति मन्त्रयन्ते इति।

सायणाचार्यैः पूर्वां व्युत्पत्तिं गृहीत्वा व्याख्यायते। एतावता वाण्याः स्थितिरादित्यस्यासत्ताकाले इति भवति।

३०. पृच्छामि त्वेति मन्त्रार्थविचारः

तदसत्ताकालश्च तस्यास्तमयमारभ्यातदुदयमिति पूर्वमुक्तम्। आदित्यस्यासत्ताकाले वाण्याः सत्वमयर्थश्च प्रश्नपूर्वं मन्त्रे प्रतिपाद्यते। तथाहि मन्त्रः—

पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः।
पृच्छामि त्वा वृष्णोरश्वस्य रेतः पृच्छामि वाचः परमं व्योम॥ इति॥
ऋ. सं. १:१६४:३४

तत्र वाचो व्योम वाचोयुक्तायुक्तं स्थानं तद्विषयिणि मन्त्रेण पृच्छा। तच्च स्थानं परमं न तु अवमं पृच्छ्यते। इति।

अथ भाव — आदित्यस्योदयास्तरूप सन्दर्शन स्थानभेदेन भिन्नरूपम् । भुवो दक्षिणपार्श्वे यदादित्य उदेति तदानीं भुवो परेऽप्युत्तरे पार्श्वे साऽस्तमेति । यदा च भुव उत्तरे पार्श्वे उदेति तदानी भुवो दक्षिण पार्श्वेऽसौऽस्तमेति । इद षाण्मासिकमुदयनमस्तमयन सुमेरुकुमेर्वोर्भवति । भुवो मध्यदेशे तु प्रत्यह कियत्काल च तस्य दर्शनमदर्शन च ।

तदपि यदा एकत्र देशे तस्य दर्शन व्यक्त तदानी तद्विरुद्धदेशे तस्यादर्शनमिति विभिन्नरूपता तस्य । तत्र कुमेरुर्भुवो दक्षिणपार्श्वे सुमेरुश्च भुव उत्तरपार्श्वे । तत्र दक्षिणपार्श्वो दक्षिणदिग्गत । दक्षिणस्या दिशश्चावाक्त्वमधोवर्तित्वम । अत एव तस्या अवाचीश इत व्यवहारो वेदेऽपि । लोकेऽपि सैव दिगवाची-शब्देनोच्यते ।

यथा अमरकोशे उच्यते-प्राच्यवाचीप्रतीच्यस्ता पूर्वदक्षिणपश्चिमा इति । अवाची अवस्तादञ्चति अधोवर्तिनीति यावत् । तद्विरुद्धा दिगुत्तरा । तस्या उत्तरात्वमूर्ध्वत्वात् । एव सत्युत्तरस्या ऊर्ध्वत्व दक्षिणस्या अधोवर्तित्व भवति । उत्तरदिग्गतानामूर्ध्वत्वेन परमत्वेन व्यवहारो वेदे ।

यथा विष्णुसूक्ते विष्णो पदविषय उच्यते परम पदमवभाति भूरि । विष्णो पदे परमे मध्वउत्स इति । एव च दक्षिणस्या दिशि कुमेरावादित्य-स्यासत्ताकालेऽर्धरात्रो वर्तमाना वाक् । तस्यास्तत्रादित्योदये सत्ता । तदेव च तस्या वाचो व्योम । यथा कुमेरादेव सुमेरावादित्यस्यासत्ताकाले वर्तमाना वाक् तत्र तदुदये तस्यास्तत्रासत्स्वरूप व्योम । तत्र दक्षिणदिग्गत व्योममवममधोवर्ति । उत्तरदिग्गत च व्योम परममूर्ध्वदिग्वर्ति । तस्य परमस्य व्योम्नो मन्त्र पृच्छा-पृच्छामि वाच परम व्योमेति । तत्रोक्तमन्त्रगतप्रश्नानामुत्तराणि परवर्तिना मन्त्रणोच्यन्ते । यथा

> इय वेदि परो अन्त पृथिव्या अय यज्ञो भुवनस्य नाभि ।।
> अय सोमो वृष्णो अश्वस्य रेत ब्रह्माय वाच परम व्योम ।। इति ।
> ऋ स (१ १६४ ३५)

ब्रह्मा उत्तरदिग्गत आदित्य । स तु वाच उत्तरदिग्गताया परम व्योम तद्रूप इति । एव च वाक् रात्रौ वर्तमाना इति भवति । एव सति मन्त्र मन्त्र-यन्ते इत्यस्य मन्त्रण प्रतिपादयन्तीत्यर्थार्थं उचिता न तु मन्त्रणा कुर्वत इति । एव सति सायणादीना मते गुप्तपरिभाषण इत्यस्मात् प्रकृत तत्पदव्युत्पादनमयुक्तम् । अस्मिन्नर्थेऽय मन्त्र एव प्रमाणमित्यर्थ ।

एव च वाग् रात्रौ वर्तमाना भवति । रात्र्याश्च यामचतुष्टयेन विभक्तता । तत्र यामोपाधितया रात्र्या, वाच इमानि चत्वारि स्थानानि भवन्ति । तानि वाचा मीयन्ते इति वाक्परिमितानि । तानि ब्राह्मणा विदुर्मनीषिण । तत्र

प्रथमयामत्रयस्य गुहायां वर्तमानत्वम् अन्धकारो गुहा तत्र वर्तमानत्वम्, तमोमयत्वमिति यावत्। गुहायां वर्तमानत्वान्नेङ्गयन्ति न प्रकाशितानि भवन्ति। तानि यामत्रयरूपाणि वाचस्त्रीणि पदानि। वाचस्तुरीयं पदं रात्र्याश्चतुर्थयामरूपं स्थानं, मनुष्या इति मनुष्यावासस्थानं भूलोक इति वदन्ति। एवं सति मन्त्रे मनुष्या इति पदं प्रथमान्तं न वदनक्रियाकर्तुरभिप्रायेण किन्तु अध्याहृतेतिपदवशत उक्तकर्मकारकविभक्तिरूपप्रथमान्तं कर्मकारकबोधकम्। अर्थाद्वाचश्चतुर्थं पदं मनुष्यलोक इति भवति।

अयं भावः–सोमयागे सवनानां क्रम आदित्येन लोकारोहक्रमवत्। सवनानि च प्रतिदिनमिति लोकारोहक्रमोऽपि प्रतिदिनमिति भवति। लोकाश्च त्रयो भूलोकान्तरिक्षलोकद्योलोकभेदनेति। आदित्येन प्रत्यहं त्रयो लोका आरुह्यन्ते। तत्रोक्तक्रमविषये ब्राह्मणम् "एषां वै लोकानां रोहेण सवनानां रोह[1]" इति। तदर्थस्तूक्त एव। प्रतिदिनं प्रातर्भूलोकः प्रातः सवनं च। ततोऽन्तरिक्षलोको मध्येऽह्नो माध्यन्दिनसवनञ्च, ततो द्योलोकस्तृतीयसवनं च।

एवं सति उक्तक्रमेणादित्यस्त्रीन् लोकानारुह्यारोहविपरीतक्रमेणावरोहति। प्रतिदिनम्। तत्र प्रथमदिन उक्तरीत्या त्रीन् लोकानारुह्य विपरीतक्रमेणावारुह्य द्वितीयदिने लोकान् पूर्वदिनवदारोहति। तत्र रात्राववरोहक्रमे कुत आरभ्य मनुष्यलोकमवारोढुमसौ प्रवर्ततेऽर्थान्मनुष्यलोकारम्भः कुत इति।

प्रश्नस्योत्तरं मन्त्रे–तुरीयं वाचो मनुष्या वदन्तीति। वाचस्तुरीयं पदं रात्र्याश्चतुर्थ याममारभ्य भूलोकस्य प्रवृत्तिरिति। वाचस्तुरीयं पदं मनुष्या मनुष्यलोकइति यावत्। एवमुत्तरमुक्तमन्त्रेणोच्यते। अयमर्थः प्रकारान्तरेण मन्त्रान्तरेणोच्यते। तथाहि पूर्वोक्तप्रश्नप्रतिपादके मन्त्रे प्रथमः प्रश्नः–"पृच्छामि त्वा परमन्तं पृथिव्या" इति

तस्यायमर्थः–रात्री लोकानामवरोहे अन्तरिक्षलोकस्यावसानं भूलोकप्रारम्भश्च, ततः पुनरारोहे दिनान्तरे भूलोकस्यावसानमन्तरिक्षलोकस्य प्रारम्भश्च स्याताम्। उभयोः प्रारम्भावसानयोर्मर्यादारूपत्वं प्रतिलोकम्। तत्रोदयसविधवर्ती भूलोकस्यावसानरूपोऽन्तः सविधवर्तीदिनसम्बन्धित्वात्।

यश्च रात्रौ भूलोकारम्भरूपोऽन्तः स विदूरवर्ती रात्रिसम्बन्धात्। स भुवः परोऽन्तस्तद्विषयिणी पृच्छा मन्त्रे क्रियते–"पृच्छामि त्वा परमन्तं पृथिव्या" इति। तस्योत्तरमुच्यते परवर्तिना मन्त्रेण–"इयं वेदिः परो अन्तः पृथिव्या" इति। तत्र वेदिप्रारम्भ एव पृथिवीलोकप्रारम्भ इति तत्रोत्तरम्। तस्यायं भावः–वेदिप्रारम्भ एव भूलोकस्य रात्रावादित्येनावारुह्यमानस्य परो विदूरवर्ती अत्र प्रारम्भरूपोऽन्त इति।

---

१. निरुक्तम् ७:२३:२

एवं सति वेदिप्रारम्भतो भूलोकः प्रवर्तत इति तदर्थः। वेदिप्रारम्भश्च कुत इति विज्ञेयम्। वेदिश्च सवितुः कालमारभ्य प्रवर्तते। तथाहि "वेदिर्यज्ञेऽग्नित्रय-मध्यवर्तिनी भूमिरिति" प्रसिद्धम्। तत्र पूर्वस्यां दिश्याहवनीयोऽग्निः। दक्षिणस्यां दक्षिणाग्निः पश्चिमायां गार्हपत्योऽग्निः, इति त्रयोऽग्नयस्तेषां स्थानानि। तत्राग्नित्रयमध्ये विद्यमानवेद्या वामांसस्थाने अध्वर्योः स्थानम्। वामश्रोण्यां होतुः स्थानम्। होतुः स्थानमारभ्य वेदिः प्रवर्तते। होतुः स्थानमेव वेदिप्रारम्भ-देश इति।

अध्वर्योः स्थानं च पूर्वस्यां वेद्यन्तभागे, तच्च वेद्या वामांस इति पूर्वमुक्त-मेव। तत्र होत्रध्वर्युभ्यामादित्यस्य गत्यनुकारः कर्मणा मन्त्रेण च क्रियते प्रति-पाद्यते। तत्र होत्रा प्रयुज्यमानो मन्त्रो दर्शपूर्णमासयागे आश्वलायनेन श्रौतसूत्रे दर्शितः।

"षष्टिश्चाध्वर्यो[1] नवतिश्च पाशा अग्निं होतारमन्तरा विचृता।
सिनन्ति पाकतिधीर एतीति"।

अनेनमन्त्रेण स्वस्थानतो होतोत्थाय ऋतस्य पन्थामन्वेमि होतेत्यभि-क्रम्याऽध्वर्युमन्वारभेतेति।

२१. यज्ञे होत्रध्वर्युभ्यामादित्यस्यैव गत्यनुकारः

अत्रादित्यः स्वस्थानं प्राप्तमनुकुर्वन्नसौ होता स्वस्थानमुपर्युक्तमन्त्रेण प्रतिपाद्य ततः स्वस्यादित्यरूपत्वं मत्वादित्यवाक्यत्वेन ब्रवीति ऋतस्य पन्था-मन्वेमि होता इति मन्त्रम्। ऋतस्य यज्ञस्य पन्था पन्थानमनु अनुसृत्येमि गच्छामि होता होतृरूप इत्यर्थस्तस्य मन्त्रस्य। तं मन्त्रमुच्चार्य तत्स्थानतोऽध्वर्युस्थानं करेण स्प्रष्टुमिच्छन्नसौ होता स्वस्य तावद्दूरपर्यन्तं करस्य लम्बमानत्वाभावेन किंचिदग्रतो गत्वा करस्पर्शयोग्यं स्थानमादित्यमनुकुर्वस्तत्स्थानतोऽध्वर्युमंसेऽन्वा-रभते स्पृशति पाणिना। पाणिश्च यथाध्वर्योः पार्श्वं स्पृशेदेवम्। तथा सति अध्वर्युस्पर्शनेनोभाभ्यां होत्रध्वर्युभ्यां मन्त्रः प्रोच्यते इति तत्र सूत्रे प्रति-पादितम्।

तत्र होतृस्थानसूचको होत्रा पठ्यमानो मन्त्रः पूर्वं प्रतिपादितम्। तत्राध्वर्युं सम्बोध्योच्यते—"षष्टिश्चाध्वर्यो नवतिश्च पाशा अग्निं होतारमन्तरा विचृता" इति। तत्र के ते पाशाः कुत एतावन्तः इति विचारे आदित्यपरतयोभयं समाहितं भवति। तथा सति पाशानां वर्णनेन वेदे पाशा वरुणस्येति प्रसिद्ध्या वारुणाः पाशा गृह्यन्ते। वरुणश्च पश्चिमदिक् सम्बन्धी देव इति पश्चिमदिक्सम्बन्धः आदित्यस्याभिव्यक्तो भवति। पश्चिमां दिशं प्राप्तोऽस्तमितो भवतीत्यादि-त्यस्यास्तप्राप्तिर्ज्ञायते। अस्तमितोऽसौ वरुणेन पाशैर्बध्यतेऽतस्ते पाशा अस्ततः

---

१. आ. श्रौ सू. १.३

प्रवर्तन्ते। वद्धानां पाशानामेकैकशश्छेदनं कृत्वासावादित्योऽग्रतो गच्छति। एवं गच्छतस्तस्य तत्स्थानप्राप्तिर्यद्धोतुः स्थानमिति भवति।

अथवा यत्र स्थाने प्राप्त आदित्यो होतेति व्यवह्रियते। तत्स्थानप्राप्तिपर्यन्तमादित्येन क्रमशश्छिन्नानां पाशानां संख्या मन्त्रे प्रोच्यते "पष्टिश्च नवतिश्चेति" अर्थाद्द्वयोगेन सार्धपञ्चाशत्पाशाश्छिन्नाः। ते च अग्निं होतारमन्तरेति। "अस्तं यन्नादित्योऽग्निमनुप्रविशतीति वेदे वर्णनादसावग्निः पश्चिमदिक्स्थो गार्हपत्यसंज्ञितो भवति। तत आरम्य होतृस्थानपर्यन्तं मध्ये इत्यर्थः।

आदित्येन दैनन्दिनगत्या वृत्ताकारः परिभ्रमः क्रियते। तत्र दिनार्धानां वृत्तभागानामंशसञ्ज्ञितानामशीत्यूर्ध्वं शतमतीतं रात्र्यर्धानामंशानां मध्ये एतावन्तोंऽशा अतीताः। अशानामुपाधितया स्वीकारं कृत्वा तावन्तः पाशाश्छिन्ना इत्युक्तम्। तावतामशानां तेनातिक्रमः कृत इति। तावतासौ होतृस्थानं प्राप्तः। यतो मन्त्र उक्तमग्निं होतारमन्तरा च्छेदस्तावतां पाशानामिति।

एवं च होतृस्थानतो रात्र्यवसानपर्यन्तं रात्र्यर्धानां वृत्तगतानामंशानां मध्ये त्रिंशदंशा अतिक्रान्तव्या अवशिष्यन्ते। रात्र्यवसानस्थानमध्वर्योः। होतृस्थानं गतस्यादित्यस्य किरणा अध्वर्युस्थानं स्पृशन्ति इति। अध्वर्युस्पर्शस्तत्र होत्रा कर्तव्य उक्तः।

एतावता होतृस्थानतस्त्रिंशदंशास्तावद्भिरंशैः पञ्च घट्यो भवन्ति, स च सावित्रः कालः सावित्रकालप्रारम्भो होतृस्थानतः। वेदिश्च दर्शपूर्णमासयोर्होतृस्थानतः प्रारब्धा भवति। अत एव होतुः स्थानं वेद्या वामश्रोण्यां भवतीति। वेद्या अन्तश्चाध्वर्युस्थान इति तत्स्थानं वेद्या वामांसे इति। एतावता वेदिः सावित्रकाले भवतीति सिद्धम्। सच रात्र्याश्चतुर्थो यामः। वाचस्तुरीयं पदमिति तत्र भूलोकः इत्यभिप्रायेण प्रश्नोत्तरमन्त्रे उच्यते—"इयं वेदिः परो अन्तः पृथिव्या इति।

तत्र पृथिव्या अन्तस्य परत्वेन विशेषणादसौ विदूरवर्ती रात्रिगतोऽन्त इति भवति। अर्थात्तत्स्थानतो भूलोकः प्रवर्तते इति भवति। एवं सति पूर्वोक्ते वास्तावके मन्त्रे तुरीयं वाचो मनुष्या वदन्तीत्यस्य न वाचस्तुरीयं पदं मनुष्या वदन्ति मनुष्याणां वदने कर्तृत्वस्य प्रतिपादकं, किन्तु उक्तरीत्या तत्पदं मनुष्या इति मनुष्यलोक इति भूलोक इति वा इतिपदयोगेन मनुष्यलोकबोधकमिति वेदविज्ञाः कवयो वदन्तीत्यर्थ एवेति स्पष्टम्।

अत एव मन्त्रान्तरे "यद्वाग्वदन्त्यविचेतनानि" इति, "तां विश्वरूपाः पशवो वदन्ति" इत्यस्य न विरोधः। अन्यथा तत्रापि अविचेतनानाम्, चेतना मनुष्या, विचेतनाः काष्ठलोष्टादयः, अविचेतनाः पशुपक्ष्यादयः। तत्र 'तुरीयं वाचो मनुष्या वदन्ति" इत्यत्रेवात्रापि पशुपक्ष्यादयस्तां वाच वदन्ति इत्यर्थः

कर्तव्य स्यात् । एव ता पशवो वदन्तीत्यपि । तथा सति पूर्वमन्त्रे मनुष्या वदन्तीत्यनेन विरोध स्यात् ।

एव च सवितृकालतो वेदि प्रवर्तत इति स परोऽन्त पृथिव्या पृथिवी लोकस्य । ततस्तस्य प्रारम्भ इति यावत् । सवितृकालस्य रात्र्याश्चतुर्थयाम प्रवृत्तिरिति स चतुर्थयामो वाचस्तुरीय पद तदेव मनुष्या इतीत्यनेन भूलोकरूपमिति । एव सति पूर्वोक्तस्य चत्वारीति मन्त्रस्य स्पष्टार्थत्वमिति ।

## ३२ तदद्यवाच इति मन्त्रस्य पञ्चजनशब्दार्थनिर्णय

एव तदद्य वाच इति मन्त्रे प्रयुज्यमानपञ्चजनशब्दस्यार्थविषये व्याख्यातृणा नानाविध व्याख्यानमिति तद्वशतस्तस्य मन्त्रस्यार्थो न विस्पष्ट । तथाहि स मन्त्र —

*तदद्य वाच प्रथम मसीय येनासुरा अभि देवा असाम ।*
*ऊर्जाद उत यज्ञियास पञ्चजना मम होत्र जुषध्वम् ।। इति ।।*

ऋ. स १० ५३ ४

अथ मन्त्रो निरुक्तकृता व्याख्यायते । यथा—

तदद्य[1] वाच परम मसीय येनासुरानभिभवेम देवा । असुरा असुरता स्थानेष्वस्ता स्थानेभ्य इति वा । अपि वा असु प्राणनामास्त शरीरे भवति तेन तद्वन्त । असोर्देवानसृजत तत्सुराणा सुरत्वम् । असोरसुरानसृजत तदसुराणामसुरत्वमिति विज्ञायते । ऊर्जाद उत यज्ञियास । अन्नादाश्चयज्ञियाश्च । ऊर्गित्यन्ननामोर्जयतीति सत । पक्क सुप्रवृक्णमिति वा । पञ्चजना मम होत्र जुषध्वम् । गन्धर्वा पितरो देवा असुरा रक्षासीत्येके । चत्वारो वर्णा निषादश्च पञ्चम इत्यौपमन्यव । निषाद कस्मान्निषदनो भवति, निषण्णमस्मिन् पापकमिति नैरुक्ता । यत्पाञ्चजन्यया विशा । पञ्चजनीनया विशा । पञ्च पृक्ता सख्या स्त्रीपु नपु सकेष्वविशिष्टेति ।

दुर्गाचार्येणास्य व्याख्या क्रियते—सौचीकस्याग्नेरार्षम् । तस्य विश्वैर्देवै सवाद तत्रैव होतृजपे विनियुक्ता ।

*तद्वीर्यं वाच परममुत्कृष्टमहमद्य मसीय मन्ये, जाने इत्यर्थ । तेन वीर्येण* किम् इति । येनासुरान् अभिभवेम वयम । हे देवा ऊर्जाद ,अन्नभक्षयितार । अपि च हे यज्ञियास यज्ञसम्भादिन देवा यूयम् । अपि च हे पञ्चजना मनुष्या निषादपञ्चमा वर्णा । मम इद होत्र जुषध्वम् अनुगृह्णीध्वमिति समस्तार्थ इति ।

अथ निरुक्तकारेण तच्छब्दस्यार्थो विस्पष्टतया नोक्त । दुर्गाचार्येण तस्य वीर्यपरत्व मन्यते, अतोऽत्र मन्त्रेऽसुराभिभवे तस्य साधनत्वमुच्यते येनेति

---

१ निरुक्तम् ३ ८ १

वचनेन । भाष्यकारस्यायमेवाभिप्रायः प्रतीयते । अत्र सन्देहास्पदपञ्चजनशब्दार्थविषये मतद्वयं निरुक्तभाष्यकृता प्रदर्शितं यथा गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येक इत्येकीयं मतम् । चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवमतमपरम् । अत्र निषादशब्दविषये दुर्गाचार्येण मतद्वय प्रतिपाद्यते । निषादः प्राणिवधजीवन इत्येकम् । निषादः सौधन्वन इत्येके इत्येकीयं मतमपरम् ।

ऐतरेयब्राह्मणे वैश्वदेवशस्त्रप्रशंसावसरे उच्यते—"सर्वेषां वा एतत् पञ्चजनानामुक्थं यद्वैश्वदेवम्, देवमनुष्याणां गन्धर्वाप्सरसां नागानां च पितृणां[1] च" इति । अत्र पञ्चजना इत्युच्यते निर्दिश्यन्ते चत्वारः, देवमनुष्याः (१) गन्धर्वाप्सरसः, (२) नागाः, (३) पितरः, (४) इति । कथमिदं संगत स्यादित्यभिप्रायेण सायणभाष्यकारेण तदीयभाष्य उच्यते—अत्र देवा इत्येको राशिः मनुष्या इत्यपर इति उक्तरीत्या पञ्चजना इति । तत्र देवाः मनुष्याः गन्धर्वाप्सरसः नागाः पितर इति पञ्चजना मन्यन्ते ।

एवं सति निरुक्तकारोल्लिखितपञ्चजना गन्धर्वाः पितरो देवा असुरा रक्षांसि इत्यनेन विरोधः, अत्र अमनुष्याणां नागानां चाग्रहणात् । असुराणां रक्षसाञ्चातिरिक्तानां ग्रहणम् । तेषामपि पञ्चजनत्वमिष्टमिति तु न वक्तुं शक्यम् । ब्राह्मणे सर्वे पञ्चजना एत इत्युक्त्वा देवमनुष्या गन्धर्वाप्सरसो नागाः पितर इति निर्देशात्, एत एव पञ्चजना नापरे इति विज्ञानम् । एवं निषादपञ्चमानां चतुर्णां ग्रहणमित्यपि उक्तब्राह्मणविरुद्धम् । किञ्च तत्र निषादशब्दार्थविषयेऽपि मतभेदस्य दुर्गाचार्येणोक्तेः । एवं सति पञ्जनशब्दार्थस्याविज्ञानान्मन्त्रार्थो विस्पष्टः ।

अत्र वस्तुतस्तच्छब्देन व्योम्नो ग्रहणमुचितम् । तच्च वाचो व्योम आदित्यः । पृच्छामि वाचः परमं व्योम ब्रह्मा यं वाचः परमं व्योम इति प्रश्नप्रतिवचनाभ्याम् । तत्र व्योम्नः परममिति विशेषणादपरविधतायाः प्रतीतेः । सा चापरा विधा अस्मिन् मन्त्रे प्रथममिति शब्देनोच्यते । प्रथमशब्दस्य पूर्वशब्दसमानार्थता । पूर्वशब्दश्च प्रायेण वेदे पूर्वाञ्चनवशतोऽर्थं बोधयति । तच्चादित्यादीनामिति ते पूर्वादिशब्दैर्बोधिता भवन्तीति पूर्वं प्रतिपादितम् । एवं सत्यत्रापि प्रथमशब्देन पूर्वं पूर्वाञ्चनं तद् व्योम वाच आदित्यरूपमिति । आदित्यग्रहणेन देवानामसुराभिभवे साधनत्व मन्त्रे उच्यमानं सम्यक् संगतं भवति ।

यद्यपि ब्राह्मण देवासुराणां संघर्षेऽसुरैः शब्दप्रयोगेण जयपराजययोर्निर्णयो देवान् प्रति उक्तः । तत्र प्रयोगविषयेऽसुरैरुक्तमस्माभिरेकविधः शब्दः प्रयोक्तव्य एकेन परेण तत्समानार्थः समानरूपस्त्रीलिङ्गो भिन्नः शब्दः प्रयोक्तव्यः एवं प्रयोगे येन तादृशो भिन्नः शब्दः प्रयोक्तुं न शक्येत तस्य पराजय इति सन्धिः ।

---

१. ऐ. ब्रा. ३:३:७

देवैस्तं सन्धि प्रतिपद्योक्तम्, भवदभिरेव प्रथम शब्द प्रयोक्तव्य इति । असुरैरुक्त भवद्भिरेव प्रथम शब्द. प्रयोक्तव्य तदानी देवै शब्द उक्त एक इति । असुरै-रुक्तम् एका इति । पुनर्देवैरुक्तम् द्वौ इति । असुरैरुक्तम द्वे इति । देवै त्रय इत्युक्तम् । असुरै: तिस्र इत्युक्तम् । पुनर्देवै चतुर इत्युक्त, असुरै चतस्र इत्युक्तम् । तदानी देवै पञ्च इत्युक्तम् ।

असुराणा पञ्चशब्दसरूपस्य स्त्रीलिङ्गस्य भिन्नशब्दस्य प्रयोगे शक्ति, तावता पराजय. सञ्जात इति कथोक्ता । एव सति वाचो वीर्येणापि पराभवस्य वचनाद्वीर्यपरत्ववचनेऽपि अभिभवसाधनत्व न विरुध्येतेति चेत तथापि सर्वत्रा-दित्यरूपस्यैवेन्द्रस्यासुराभिभवकर्तृत्वोक्त्या यावती वलकृतिरित्यस्यैव सेत्यनेन विरोधात् । वाण्या पृथक्सत्त्वाभावस्य पञ्चमे पदे सूचनात् पञ्चम पदमुक्त-रीत्याऽऽदित्यरूपमिति आदित्यरूपव्योमपरताया एव तच्छब्दस्य युक्तत्वात् । तच्छब्देनोक्तरीत्या व्योमग्रहणेनैव सगतार्थत्वमिति ।

एव "मूर्जाद उत यज्ञियास" इत्यत्र यज्ञियवचनेनान्नादत्वस्य लब्ध्योर्जा-त्वेन पृथक् ग्रहणस्य विशेषष्टीकाकृद्भिर्नोच्यते । मन्त्रा उतशब्देन तत्र विशेषस्य प्रतीतेः । किञ्च यज्ञशब्देन इष्टिपशुसोमहोमरूपसर्वविषयशोक्त्योर्जादानामपि ग्रहणस्य यज्ञियग्रहणेनैव प्राप्ते । किञ्च यज्ञियास इत्यस्य यज्ञ सपादिन इत्यर्थं उच्यते । तच्च किं देवत्वेनाभिनिष्पादनाद्यज्ञस्य । तथा सति यज्ञियग्रहणेनैव प्राप्त्या पृथक् ऊर्जाद इति ग्रहणस्य विशेषावचनाद्दोष. ।

अथ यदि यज्ञकर्तृत्वेन यज्ञसपादकता तर्हि तेषा देवत्वलाभाभावेन परवति पञ्चजना इत्येतेन गतार्थत्वमिति तद्ग्रहणस्य मन्त्रे निरर्थकत्वमिति । ऊर्जात्व यज्ञियत्व च देवाना समवतीति ततस्तत्लाभ इति न वाच्यम् । उभयस्य पञ्चजन-विशेषणत्वात् । पञ्चजनस्य कथमुभय विशेषणमिति चेत् ।

अत्रोच्यते । पञ्चजना. गन्धर्वा पितरो देवा असुरा रक्षासि । तेषा मध्ये आद्याना त्रयाणा गन्धर्वपितृदेवाना यज्ञियत्वम् । अन्त्यद्वयस्य तु तमोरूपत्वेन सर्वविधपदार्थावरकत्वेनान्नादत्वम् । अत एव पुरुषसूक्ते पुरुषस्यान्नेन विवर्ध-मानतोक्ता । अन्न च पुरुषेणादित्यात्मनाऽदनीय यत्तजस्ततस्यानृत्व विनाशकरत्व-ममुररक्षसाम् । असुरा रक्षासीति पृथङ्निर्देशो देशभेदात् ।

अत एव वेदे लोकभेदाभिप्रायेण देवा मनुष्या पितर एवन, असुरा रक्षासि पिशाचा अन्यत इत्युक्तम्, तत्र द्योलोकाभिप्रायेण तेजोरूपाणा देवत्व तमोरूपाणामसुरत्वम । अन्तरिक्षलोकाभिप्रायेण पितृत्व तद्विराधेन रक्षस्त्वम् । एव भूलोकाभिप्रायेण मनुष्यत्व तद्विरोधिना पिशाचत्वमिति । किञ्चासुर-रक्षोविनाशकत्व देवानामुच्यते देवाश्च किरणरूपा । अत एव शतपथब्राह्मणे

"रश्मयोविश्वेदेवा"[1] इत्युक्तम् । तेषां तेजोरूपतया तद्विनाश्यत्वं तमोमयत्व एव संभवतीति ।

पिशाचा अपि तमोरूपा एव । अत एवेन्द्रं प्रति पिशाचनाश: प्रार्थ्यते "पिशङ्गभृष्टिमम्भृण पिशाचिमिन्द्र सम्मृण । सर्वं रक्षो निबर्हयेति[2]" । इन्द्रश्चादित्यात्मा तेन विनाश्यत्वं तमोरूपत्वे एव संभवतीति पिशाचा अपि तमोरूपा एव । तत्रासुररक्षसामुभयविधानामपि पञ्चजनत्वमुपरिष्टादुक्तम् ।

**पञ्चजन-शब्दार्थ-विचार:**

ननु पञ्चजना इत्यस्य निघण्टुसु मनुष्यनामसु पाठात्कथं देवादीनां पञ्चजनत्वमिति चेत् तदर्थं पञ्चजनशब्दो विचारणीय: किमसौ समस्त एव मनुष्यनामोत जनशब्दस्य तत्व पञ्चशब्दस्तु सह प्रयुज्यते केवलमिति । तत्र नाद्य: । पञ्चजनसमानार्थतया प्रयुज्यमानावेदे शब्दा: पञ्चक्षितय: पञ्चकृष्टय: पञ्चचर्षणय: पञ्चव्राता: । तेषां वशत: पञ्चजनशब्दे पञ्चशब्दस्य संख्याबोधकत्वेन साहित्येन प्रयोगप्रतीतेर्विशिष्टस्य मनुष्यनामत्वाभावात् ।

अत एव ये वा जनेषु पञ्चस्विति व्यस्त: प्रयोग: संगच्छते । अन्त्यश्चेत्सत्यं, परन्तु तावता जनशब्दस्य न केवलमनुष्यबोधकता किन्तु तन्निवासमनुष्यलोकबोधकत्वम् । तन्निवासस्य भूलोकस्यानेकविधत्वमिति पूर्वमुक्तम् । ननु तर्हि कथं देवादीनां पञ्चजनत्वप्राप्तिरिति चेन्न । अभिप्रायविशेषेण तेपामपि पञ्चजनत्वात् ।

अयं भाव:-पूर्वं लोकानामनेकविधत्ववर्णनावसरे भूलोकस्यानेकविधत्वमुपवर्णितम् भूलोकीयो भूलोक: । अन्तरिक्षलोकीयो भूलोक:, द्योलोकीयो भूलोक इत्यादिना । स च भूलोकस्तत्र तत्रादित्योदयात्पूर्वं प्रवर्तते । "पृच्छामि त्वे" त्यादिमन्त्रद्वयेन प्रश्नोत्तररूपेणोच्यत इति पूर्वं निवेदितम् । स चोदयात्पूर्ववर्ती सावित्र: कालो वेदिरूपो भूलोक इति विस्तरेण पूर्व निवेदितम् ।

तस्य च सावित्रकालस्य पञ्चघटीरूपपञ्चविभागयुक्तत्वम् । ते च पञ्च विभागा: कुत्रचन घटीदण्डप्रभृतिशब्देन उच्यन्ते, कुत्रचन षड्हशब्देनोच्यन्ते, तत्र षड्हपञ्चकरूपपञ्चजनविभागो ध्रुवप्रदेशे दक्षिण उत्तरे च । अर्थात्सुमेरुकुमेर्वो: । विषुववृत्तसविधस्थले घट्यादिपञ्चरूप:, तेपामभिप्रायेण सावित्रकालरूपवेदिरूप भूलोकरूपमर्त्यस्थानपञ्चकाभिप्रायेण पञ्चजना इति पदं तत्समानार्थकपञ्चक्षितय इत्यादि निर्देशा अपि तथैव ।

एतेपां पञ्चानां सावित्रकालनियामत्वाभिप्रायेण सूक्ते मित्राय पञ्च येमिरे जना अभिष्टिशवसे इति उच्यते । मित्रश्च सवित्रभिन्न इति पूर्वमुक्तम् । तस्य पञ्चजना: पञ्चकालावयवरूपभूलोका नियामका इति । अभिष्टिशवा

१. श. ब्रा. ४:३:७ २. ऋ. वे १:१३३:५

नाम यज्ञानुकूलगतिमान् । उदयानुकूलतेजोयुतो वा । तदेव तेजोऽभीष्टं भवति इति ।

तत्र अभिष्टिशब्दे इकारस्य दीर्घाभावश्छान्दसः । यज्ञश्चादित्यरूपः । उदयपूर्वकालिकता तस्य प्रतीयते । अत एतत्कालिकभूलोकाभिप्रायेण ऐतरेयब्राह्मणे वैश्वदेवशस्त्रविधिप्रशंसावसरे उच्यते "सर्वेषां वा एतत्पञ्चजनानामुक्थं यद्वैश्वदेवं देवमनुष्याणां गन्धर्वाप्सरसां नागानां च पितृणां[1]"चेति । तत्र सुमेर्वभिप्रायेण तत्रत्योदयप्राक्कालिकभूलोकाभिप्रायेण देवमनुष्याणामित्युक्तिः । (द्युलोकीयभूलोकगतानामिति तदर्थः) एवमन्तरिक्षलोकीयोदयप्राग्वर्ति भूलोकानामभिप्रायेण गन्धर्वाप्सरसामित्युक्तिः । यक्षगन्धर्वाप्सरोगणसेविनमन्तरिक्षमिति वचनस्तेषामन्तरिक्षलोकनिवासात् ।

तत्र पञ्चजनत्वेन तद्वर्णनात् तल्लोकीयभूलोकाभिप्रायकतोक्तप्राया । कुमेरुरूपभूलोकगतोदयात्प्राग्वर्तिभूलोकाभिप्रायेण पितृणामित्युक्तिः । दक्षिणे भुवः पार्श्वे विषवृत्ततो दक्षिणभागरूपान्तरिक्षलोके आदित्यादीनां भुवा समृष्टत्वेन गमनाभिप्रायेण सर्पणवद्गतिमभिप्रेत्य नागानामर्थात्सर्पाणामित्युक्तिः । ते च भुवो दक्षिणपार्श्वीयान्तरिक्षलोकगतभूलोकस्थाः इति तेषां सर्पणवद्भूसंसृष्टगत्यभिप्रायेण तेषां सर्पत्वोक्तिरिति ।

एतेषामपेक्षया परेषां पञ्चजनानामसत्त्वाभिप्रायेण ब्राह्मणे सर्वेषां पञ्चजनानामित्युक्तिः । तदेवमादित्योदयस्थलविशेषाभिप्रायेण पञ्चजना अनेकविधाः । तेषां सामान्यतो ग्रहणमभिप्रेत्य गन्धर्वा इति वर्णना पञ्चजनत्वेन । सुमेर्वभिप्रायेण सामान्यतो देवा इति कुमेर्वभिप्रायेण सामान्यतः पितर इति, अन्तरिक्षलोकाभिप्रायेण सामान्यतो वर्णना गन्धर्वा इत्युक्तम् ।

इमे च देवा इति पदसाहचर्येण तेजोरूपाः । सावित्रे काले बहुलतेजोयुक्तत्वेऽपि तमसोऽपि तदानीं सत्वेन तदभिप्रायेणासुरा रक्षांसीत्युक्तम् । एतत्पञ्चजनद्वयमयज्ञीयं केवलमन्त्रादूर्ध्वं पूर्वं देवादित्रयं यज्ञियमिति मन्त्रे "ऊर्जाद उत यज्ञियासः" इति पञ्चजनानां विशेषणम् । एवं च ब्राह्मणोक्तिः सगच्छते । निरुक्तोक्तमेकीयमतमपि संगतम् । "निषादपञ्चमाः" इत्यौपमन्यवमतमपि न विरुध्यते ।

तथा हि तदुक्तवर्णकल्पनाया अत्रापि सम्भवात् । तथाहि उदयन्नादित्यो ब्राह्मणस्तस्याहवनीयरूपत्वं मुखत्वं च । "असौ वा आदित्य आहवनीयः[2]" इति ब्राह्मणोक्त्या आहवनीयत्वम् ।"[3]ब्राह्मणोऽस्य मुखमासीदिति" मुखरूपत्वं मन्त्रोक्त्या विज्ञायते ब्राह्मणरूपत्वं चेति ।

---

१. ऐ ब्रा ३ ३ ७ २. श ब्रा. ५.३.४.३

३ ऋ. वे. १०.९० १२

तस्यादित्यस्योदयात्पूर्वमस्तोत्तरं च प्रवर्तमानमौषसं तेजस्तस्योत्तरस्यां दिशि वाहुरूपता। वाह्वोश्च राजन्यरूपत्वं पुरुषसूक्ते वर्ण्यतेऽतस्तस्य क्षत्रियत्वम्। तदिदं सुमेर्वभिप्रायेणेति उत्तरस्यामिति स्पष्टम्। कुमेर्वभिप्रायेण आदित्यस्योदयात्प्राग्वर्ति, अस्तोत्तरवर्ति च यदौषसं तेजस्तस्योरुरूपत्वम्। अत एव तत्रत्याया उपसो नामोर्वशीति वेदे वर्ण्यते।

उर्वशी शब्दस्य निरुक्तकारेण व्युत्पतिः प्रदर्श्यते "ऊरुभ्यामश्नोतीत्यादि"। उर्वोश्च वैश्यरूपत्वं पुरुषसूक्ते उच्यते। भुवो दक्षिणोत्तरपार्श्वयोरर्थात्सुमेरुकुमेर्वोरुदितादित्यस्य शिरोरूपेण कल्पनवत्पदत्वेनापि कल्पनस्य वेदे प्रसिद्ध्या स्थानभेदेन तस्य भिन्नत्वेन द्विवचनेन उच्यते "पद्भ्यां शूद्रो अजायत" इति पुरुषसूक्ते। सर्वं चेदमुदयसविधवर्तिकाले इति चत्वारो वर्णाः। निषादशब्देन तमो गृह्यते तस्मिन्सर्वस्य पाप्मनो विद्यमानत्वात् तमसस्सर्वपदार्थावरकत्वेन तत्र शोभनानामिवाशोभनानामपि तेनावरणात्तत्र सर्वपाप्मसत्तोक्ता। एवं सति निषादपञ्चमाश्चत्वारो वर्णाः। पञ्चजना इति वर्णनमपि न विरुद्धम्।

केवलं ते लौकिकमनुष्यरूपा नाभिप्रेयन्ते इत्येव। मन्त्रे ऊर्जादः, यज्ञियास इत्युक्त्या देवत्वोक्त्या होत्रसेवनस्योक्त्या च नात्र लौकिकमनुष्याणामवसरः। उक्तरीत्या मनुष्यादयश्चात्र पञ्चजनरूपा इत्युक्तमेव। तदेवं पञ्चजना आदित्योदयात्प्राक्कालिकसावित्रकालरूपवेदिरूपपृथिवीरूपजनपञ्चकाभिप्रायेण ये पञ्चजना इत्युक्तिः।

तत्राग्निर्होता होमसम्पादकः। सा च होतृक्रिया शस्त्रशसनादिरूपा सप्तविधा। अत एव सप्तहोतृत्वेन वेदे प्रयोगः। मन्त्रोऽपि सप्तहोतृशब्देनोच्यते। अत एव ब्राह्मणे होतृक्रियाया अनेकविधत्वाभिप्रायेण सर्वचरौ देवताभिर्योगकरणेऽपि एकस्या होतृक्रियाया अनिष्पादनेन पाप्मनो विनाशस्तत्रार्बुदेनागत्य सा क्रिया निष्पादितेति तेषां सर्वपाप्मविनाश इत्युक्तिः। तदेतदुपरिष्टाद् विवेचयिष्यते। तत्र ब्राह्मणे "एका वै वो होत्रा कृता" इति वर्णनेन होतृक्रियाया अनेकविधत्वं स्पष्टमेव।

एवं च प्रकृतमन्त्रे हे पञ्चजना उक्तरूपा मम होत्रं होतृकर्म जुषध्वं सेवध्वमिति। इदं च स्तवनमुदयकालिकमिति स्तोत्रशस्त्रसम्बन्धेनोच्यते। एवं च पञ्चजना इति न लौकिकमनुष्यपञ्चकाभिप्रायेणोच्यते किन्तूक्तरीत्योदयप्राक्कालिकसावित्रकालाभिन्नवेदिरूपपृथिवीजनपञ्चकाभिप्रायेणेति।

### २२. देवानां माने इति मन्त्रे त्रिद्विशब्दयोरर्थविचारः

एवं देवानां माने इति मन्त्रे त्रिद्विशब्दयोरर्थस्य सम्यक् प्रकाशनाभावादस्पष्टार्थता। तथाहि मन्त्रः :—

देवाना माने प्रथमा अतिष्ठन् कृन्तत्रादेषामुपरा उदायन ।
त्रयस्तपन्ति पृथिवीमनूपा द्वा वृबूक वहत पुरीषम् ॥इति ।
(ऋ स १०।२७।२३)

निरुक्तकारेणाथ मन्त्रो व्याख्यायते । देवाना निर्माण प्रथमा अतिष्ठन् । माध्यमिका देवगणा । प्रथम इति मुख्यनाम प्रतमो भवतीति । कृन्तत्रमन्तरिक्षम् । विकर्तन मेघाना विकर्तनेन मेघानामुदक जायते । त्रयस्तपन्ति पृथिवीमनूपा । पर्जन्यो वायुरादित्य । शीताष्णवर्षैरोषधी पाचयन्ति । अनूपा अनूवपन्ति लोकान् स्वेन कर्मणा । अयमपीतरोऽनूप एतस्मादवानूप्यत उदकेन । अपि वान्वाविति स्यात् । यथा प्रागिति तस्यानूप इति यथा स्याद्यथा प्राचीनमिति । द्वा वृबूक वहत पुरीषम् । वायुवादित्या उदकम् । वृबूकमित्युदकनाम ब्रवीतर्वा शब्दकर्मणा भ्रशतर्वा । पुरीष पृणाते पूरयतर्वा । इति ।

दुर्गाचार्येणैतस्य व्याख्या क्रियते । यथा देवाना मान इति । वसुक्रस्येन्द्रपुनस्यार्षम् । त्रिष्टुप् । महाव्रतीये मरुत्वतीये शस्यते । देवाना दानादिगुणयुक्ताना माने विमाने निर्माण । यदा देवा सृष्टा प्रजापतिना तदैत एव माध्यमिका देवगणा प्रथमा अतिष्टन् । एतेऽपि हि दानादियोगाद्देवा उच्यन्ते ।

प्रथमा प्रतमा । प्रकृष्टतमा , मुख्या इत्यर्थ । तस्मादेत एव प्रकृष्टतमा आसन् । अतिष्ठन् । अवस्थितवन्त सृष्टौ हि सर्वदेवानामग्रे सृष्टा इत्यभिप्राय । किञ्च कृन्तत्रात । उत्कृन्तात् प्रदेशाद् एषा मेघानामिन्द्रेण उपरा आप उदायन् । आगतवन्त । उपरशब्देनात्र उदकमुक्तम् । तात्स्थ्यात्तच्छब्दो मञ्चा क्रोशन्तीतिवत् । उपरेषु मेघषु या आपस्ता उपचारादुपरा उच्यन्त ।

किञ्च यदा ताभिरुपराभिरद्भिरोषधय प्रोहिना भवन्ति अस्य तदा त्रयस्तपन्ति त्रय पर्जन्यादयस्तपन्ति पृथिवी पृथिवीलोकम् । अनूपास्त हि अनुवपन्ति लोकान् स्वेन स्वेन कर्मणा । यथाकालमनुगृह्णन्ति । एतदनुवपन लोकाना यद्वर्षादिभि पर्जन्यादयो यथार्थमोषधी पाचयन्ति । किञ्च । द्वा वृबूक वहत पुरीषम् । द्वौ वायुवादित्यौ वहत आक्षिपत इत पृथिवीलोकात् वृबूकमुदकम । कि लक्षणम् । पुरीष प्रीणयितृ पूरयितृ वा सत इति ।

अत्र निरुक्तकारेणोपरशब्दस्य मेघपरस्याय निगम उच्यते, व्याख्यान चोपरशब्दस्योदकपरत्वेन व्याख्यान क्रियते । तथा त्रय शब्देन पर्जन्यवायुवादित्याना ग्रहणन तपन्तिपदेनान्वय उच्यते । तपधातोरष्णीकरणमर्थ , स च आदित्यस्यैव भवति । तत्सम्बन्धाद्वायोरपि न तु पर्जन्यस्येति नैकल्पेण तपन्तिपदेन त्रय इत्यस्य सम्यगन्वय ।

पृथिवीमित्यस्य लोकपरस्यौषधिपरत्व लक्षणया । तपन्तीत्यस्य पाचयन्तीत्यर्थकरणम् । तथा द्वावित्यनेन पूर्वोक्तत्रयगतस्यैव द्वितयस्य ग्रहण नान्यरूप-

स्येत्यत्र विनिगमनाविरहः। किञ्च सर्वमिदं, व्याख्यानं प्रथमशब्देन माध्यमिक-देवानां ग्रहणे निर्णायकं किंचित्प्रमाणं स्यात् तदा। अथ विकर्तनेन मेघानामपामुद्भवो लोकप्रसिद्ध इति लोकप्रसिद्ध्या प्रथमशब्देन माध्यमिकदेवगणा गृह्यन्त इति।

तदपि उपरशब्दस्य मेघपरस्यार्थपरत्वे संभवेत्। उपरशब्दस्तु मेघनामसु निघण्टौ पठ्यते। तन्निगमनायैवैतस्य मन्त्रस्योपन्यास इति तस्यादकपरत्वा-भावात्। लक्षणयोदकपरत्वं प्रथमशब्दार्थवशत इति। अन्योन्याश्रयात्। उपरशब्दस्योदकपरत्वे मेघानां कृन्तत्रेणोदकलाभ इति प्रसिद्धिवशतः प्रथमशब्देन माध्यमिकदेवगणलाभः। तद्वशतश्चोपरशब्दस्योदकार्थे लक्षणा इति। दुर्गाचार्य-व्याख्याने नाधिकं किञ्चित्। केवलमादिसृष्टौ माध्यमिका देवगणा दानादिवशतः प्रतमा मुख्या आसन्निति प्रतिपाद्यते। निरुक्तस्यैव प्रदर्शनमन्यत्र। तस्मादत्रार्थो न स्पष्टः।

मन्त्रान्तरसंवादाच्चान्योऽर्थ उच्यते। तथाहि–अनेन मन्त्रेण कुमेरुगता वर्णना क्रियते। तत्र प्रथमाः पदेन तदद्य वाचः प्रथमं मसीयेत्यत्र प्रथमपदेने-वात्रापि पूर्वाञ्चनानां ग्रहणम्। पूर्वाञ्चनाः कुमेरौ भवन्तीत्युक्तमेव। ते प्रथमाः पूर्वं देवानां माने निर्माणे अतिष्ठन्। अयं भावः–पूर्वोक्तलोककल्पनानुसारेण कुमेरावपि आदित्येन प्रत्यहं लोकत्रयमारुह्यते। लोकत्रयं च क्रमिकम्। भूलोकः प्रथमं ततोऽन्तरिक्षलोकस्ततः क्रमिको द्योलोक इति।

तत्रान्तरिक्षलोकावसाने द्योलोकप्रवृत्तिस्तदभिप्रायेण प्रथमा देवानां द्युलोकस्थानां निर्माणे प्रवृत्ता आसन्, द्योलोकस्तत्र प्रवृत्त आसीत्। द्योलोकश्चा-दित्यस्यास्तमयात्पूर्वं प्रवर्तमानोऽस्तोत्तरमप्यनुवर्तमानो भवतीति पूर्वमुक्तमेव। दिवा यान्ति मरुत इत्यनेन द्युसम्बन्विता मरुताम्। असामि धूतवः। असाम्योजो विभृथा सुदानव इति वर्णनतस्तेषामसम्पूर्णतेजस्कता प्रतीयते। असम्पूर्णञ्च तेज आदित्यस्यास्तमयोत्तरमिति वर्णनतो मरुतो रात्रिकालिका द्योलोकवासिन इति द्योलोकस्यास्तोत्तरमपि प्रवृत्तिरिति।

एवं सति प्रकृते मन्त्रे कृन्तत्रादेषामुपरा उदायन् इत्यनेन एषां प्रथमानां कृन्तत्रात्। कृन्तत्रशब्देन कृन्तनबोधनद्वारा प्रकृते दिनकृन्तनबोधनेनास्तमयकाला बोध्यते। तथा चादित्यास्तमयकालत उपरा मेघा उदायन् ऊर्ध्वमागताः। अस्त-मयमारभ्यैव मेघोन्नतिः प्रवृत्ता वर्षाकालः प्रवृत्त इति यावत्।

अयं भावः– उत्तरे मेरुप्रदेशे सुमेर्वादौ क्रमिककार्यबोधका वसन्ताद्या ऋतवो भवन्ति। तेषां नामानि वसन्तो ग्रीष्मो वर्षा इति शरद्धेमन्तः शिशिर इति। तदनुसारेण सुमेरौ कार्याणि, आदौ दिनस्य वसन्तकार्याणि पत्रशातनादीनि परस्तात् ग्रीष्मकार्यमौष्ण्यवृद्धिस्ततो वर्षाकार्यवृष्टिर्वर्षाकालस्तदन्तेऽस्तमय आदित्यस्य।

तदुक्तं शतपथब्राह्मणे "वसन्तो ग्रीष्मो वर्षास्ते देवा ऋतवः । देवेषु तर्ह्यसौ भवति । देवास्तर्ह्यभिगोपायतीति" । अत्रोक्तर्तुत्रये आदित्यस्य देवेषु सत्ताबोधनात्तदानीमसौ द्योलोके उत्तरस्यां सुमेरौ भवति । सुमेरौ देवानां निवासात् । अर्थात्तदानीं देवानां तत्र दिनम् षाण्मासिकम् । परस्तात्तत्र रात्रिः सा च ऋतुत्रयपर्यन्ता । यदा च देवानां रात्रिस्तदानीं कुमेरावादित्यस्योदयाद्दिनं, तदपि तत्र षाण्मासिकं तदानीं तेषां कुमेरुस्थानां न दिनप्रारम्भीयो वसन्तर्तुं भवति ।

एवं सति तत्र ऋतुचक्रं कथं भवति तदनेन मन्त्रेण प्रतिपाद्यते । तत्रोच्यते–तेषां अयमानामर्थात्कुमेरुस्थानां कृन्तनाद्दिनकर्तनस्थानादर्थादादित्यास्तमयकालात् उपरा मेघा उदायन् उदिता भवन्ति । अर्थात्तदानीं तत्र वर्षाकालः प्रवर्तते । रात्रौ वर्षाकालवर्णनाद्दिने तदभाव इति विज्ञायते । वर्षाभावे आदित्यप्रकाशनवशतस्ताप औष्ण्यं भवति दिने । दिनं च षाण्मासिकं तत्रापि तावद्भिर्मासैरर्तुत्रयं तदुक्तं त्रय तपन्ति अवाशन्ते आदित्यतेजसा सन्तापयन्ति पृथिवीं भूलोकं कुमेरुमिति यावत् ।

एवं रात्रावपि संजायमाना वृष्टिः समग्रां रात्रिं यावत्, अर्थान्मासषट्कं यावत् प्रवर्तते । तत्र चतुर्द्वयकल्पना । तदभिप्रेत्य ,तत्रोच्यते—द्वौ द्वावूनूं वृबूकमुदकं पुरीषं सर्वव्यापकं सर्वपूरयितृ वहतः । तदानीं तावत्कालपर्यन्तं वर्षाः संजायन्ते । एवं सति तत्र ऋतुपञ्चकव्यवहारः । दिनगतास्त्रयो रात्रिगतौ द्वाविति । अयमर्थोऽस्य दामस्येति सूक्ते—

> पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।
> अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितमिति मन्त्रः ।
>
> (ऋ. वे १० १६४ १२)

अत्र पूर्वमर्धं कुमेर्वभिप्रायम् । अतएव तत्रोच्यते पिता संवत्सरः स तु पञ्चपान् ऋतुसंज्ञकपञ्चपादोपेतः । वसन्तादिसंज्ञा ऋतुप्रभृतयः संज्ञाः सर्वाः सुमेर्वभिप्रायाः । अतएवर्तुचक्रे वसन्तादित्वमुच्यते सुमेराविदं सम्भवति । तत्र संवत्सरारम्भतो वसन्तादीनामृतूनां प्रवृत्तेः । अतएव तत्र वसन्तादीनां कार्याणि पत्रशातनादीनि सङ्गतानि भवन्ति । कुमेरौ तु तेषामसम्भवात् । नहि तत्र वत्सरारम्भो वसन्तेन सम्भवति ।

अतएव शतपथब्राह्मणे वसन्तादित्रये देवेष्वादित्यस्य स्थितिरुक्ता । एवं सति देवेषु वसन्ते उदितस्यादित्यस्य ऋतुत्रयं यावत्तत्र स्थितस्य ऋतुत्रयान्तेऽस्तं गन्तुं प्रवृत्तस्य कुमेरावुदयो न हि वसन्ते भवितुमर्हति । यत्तु ब्राह्मणे शरदि पितृषूदयस्तदादिऋतुत्रयपर्यन्तं तत्रादित्यस्य सत्त्वमित्यादिकं ब्राह्मणवचनं तत्तु सुमेरुस्थैर्नु संज्ञावासितैनतेरभिप्रायेण । न तु तत्र शरदादीनामपि तन्नामभिर्व्यवहारे

किमपि प्रमाणमुपलभ्यते। न च वसन्तादीनां व्यवहारस्य कुमेरुगततुर्चक्रे भावेऽपि मधुमाधवादिशब्दैर्व्यवहारस्तत्र स्यादिति कल्पनं, तदपि न सम्यक्। तन्नाम विषये "मधुश्च माधवश्च वासन्तिकावृतू" इति व्यवहारेण तस्यापि व्यवहारस्य कुमेरुगततुर्चक्रे भावात्।

अतएवैतरेयब्राह्मणे प्रजापतेः सप्तदशत्वसम्पत्यर्थं संवत्सरस्य सप्तशत्व सम्पत्यर्थं ऋत्वोः समास उक्तः "हेमन्त-शिशिरयोः समासेनेति"। सोऽपि कुमेर्वभिप्रायः। तत्र ऋत्वाः समासाय तस्यर्तुद्वयस्य रात्रिकालिकत्वमपेक्षणीयम। न हि पूर्वोक्तर्तुद्वयसत्ताकाले तत्र रात्रिरस्ति। अस्माकमर्थात्सुमेर्वभिप्रायेण रात्रिकालिकता शरदादिऋतुत्रयस्य, तदानीं सुमेरौ रात्रेः सत्वात् परन्तु कुमेरौ तदानीं दिनमेवं भवति न तु रात्रिः। एवं सति समासवचनं सुमेर्वभिप्रायेण। षड्तुवासनावासितमते ऋतुपञ्चकव्यवहारस्य न सम्यक्त्वं किन्तु सम्पादनेन साधनीयत्वमित्यभिप्रायेण तत्साधनं ब्राह्मणे प्रतिपादितं, तदपि स्वकल्पनाभिप्रायेणैव प्रतिपाद्यते। रात्रिकालिकशरदादिऋतुत्रयस्य मध्येऽन्तिमर्तुद्वये समासः प्रदर्शितो ब्राह्मणे–हेमन्तशिशिरयोः समासेनेति।

एवं सति न वास्तवो हेमन्तशिशिरयोः समासः किन्तु ऋतुपट्त्वकल्पने यथान्तिमर्तुद्वये एकत्वकल्पनया ऋतुपञ्चकसम्पत्तिरेवं कुमेरौ यत्र वास्तवं ऋतुपञ्चकमेव तत्र उक्तरीत्या समासकल्पनेति। कुमेरौ ऋतूनां नामान्येव न भवन्ति। व्यवहारार्थं तत्र संख्यया व्यवहारः। स एवात्र मन्त्रे द्वित्रिशब्दाभ्यां प्रतिपाद्यते। तदेव गृहीत्वोक्तास्यवामीयसूक्तगते पञ्चपादमित्येतस्मिन्मन्त्रे उक्तं पञ्चपात् पितेति। एवं सति पञ्चपादमुक्तरीत्या पञ्चावयवाः पादरूपा यस्यैवं द्वादशावयवा आकृतयो यस्य तादृशं पञ्चपादं द्वादशाकृतिं पितरं संवत्सररूपं पाण्मासिकार्थद्वयेन विभक्तं तत्र परे परस्मिन् द्वितीयेऽर्धे रात्रिरूपे पुरीषिणं वृष्ट्युदकवन्तम्, वृष्टिमन्तमाहुः।

एवं सति देवानां माने इति मन्त्रोक्त एवार्थोऽनेन मन्त्रपूर्वार्धेनोक्तः। तस्मिन् मन्त्रे दिवात्रयस्तापयुक्ता रात्री द्वयं वृष्टियुक्तमित्यर्थः पूर्वं वर्णित एव। सुमेर्वभिप्रायेण पञ्चपादमन्त्रस्य द्वितीयार्धे उच्यते–अथ पक्षान्तरे इमे सविधवर्तिनः। सविधवर्तित्वं च सुमेर्वभिप्रायेण। अन्ये पूर्वापेक्षयाभिन्नाः सुमेरुवर्तिनः आहुः। उपरे विचक्षणम् उपरशब्देन तद्युक्तो वर्षर्तुरुच्यते, वर्षर्तो विचक्षण दृश्यमिममादित्यं सप्तचक्रे षळरे अर्पितमाहुरिति। एवं एतन्मन्त्रवशतो देवानां मान इत्यस्य पूर्वोक्त एवार्थो मन्तव्य इति।

सायणेनायं मन्त्रोऽस्यवामस्यसूक्तीयः पञ्चपादमिति एवं व्याख्यायते। तथा हि तदीयं व्याख्यारूपं, पञ्चपादं पञ्चर्त्वात्मकपादोपेतम्। हेमन्तशिशिरयोः समासेनैकत्वाभिप्रायेण। पितरं प्रीणयितारं, द्वादशाकृतिं द्वादशमासा एवाकृतयो यस्य तादृशम्। पुरीषिणं वृष्ट्युदकेन तद्वन्तं प्रीणयितारं वा। पुरीषमित्युदक-

नाम। उक्तलक्षणं संवत्सरचक्रं दिवा द्युलोकस्य परेऽर्धे, तास्थ्यात्ताच्छब्द्यम्। परस्मिन्नर्धे अन्तरिक्षलक्षणेऽवस्थितमादित्ये इत्यर्थः। तस्मिन्नर्पितमाहुः।

एतदुपरिस्थितमत्रानुषज्यते। यद्यत्रार्पितं तत्तदधीनमतः संवत्सरं परायत्तमाहुरित्यर्थः। अथेमे अपि चान्ये वेदवादिन एवमाहुः। किमिति। उपरे उपरमन्तेऽस्मिन् उपरता प्राणिनोऽत्रेति वा उपरः संवत्सरः, तस्मिन्। कीदृशे सप्तचक्रे। सप्तादित्यरश्मयस्तद्द्वारेण चक्रस्थानीया यस्यासौ तथोक्तः। यद्वा। अयनर्तुमासपक्षाहोरात्रमुहूर्तानि सप्त। सप्तचक्राणि पुनः पुनः भ्रममाणानि यस्य तादृशे षळरे। षड्ऋतव एवारा नाभौ प्रवृत्ताः सम्बद्धा यस्य तथोक्तलक्षणे संवत्सरे रथे, विचक्षणं विविधदर्शनकरमादित्यमर्पितमाहुः। एतदुक्तं भवति। अमुमादित्यं दक्षिणोत्तररूपभिन्नगतेस्तीव्रमन्दभावस्य च कालाधीनत्वात्तदधीनमाहुः। अन्ये तु संवत्सरात्मकस्य कालस्य सूर्यगमनसाध्यत्वात्तदायत्तमाहुरिति।

अत्रोर्ध्वोक्तस्यार्पितमाहुरित्यस्यानुषङ्गः, तास्थ्यात्ताच्छब्द्यमिति न्यायेनार्धशब्दस्यार्थस्थे लक्षणा कर्तव्या। दिवोऽर्धमित्यनेनान्तरिक्षरूपं ग्रहीतव्यमिति क्लिष्टा कल्पना। सप्तचक्रेति पदं सप्तशब्दस्य रश्मिद्वारादित्यसम्बन्धो वक्तव्यः, अथवा कालावयवानामयनादिमुहूर्तपर्यन्तानामेव ग्रहमिति विनिगमनाभावः। सप्तसंख्यायामन्येषामपि ग्रहणेन उपपादनसंभवः।

पञ्चपादत्वस्य मन्त्रान्तरसंवादेन द्वयोर्ऋत्वोरैक्यकल्पना विना सम्भवतोऽन्यथाकल्पनमित्यादयः प्रकाराः स्वीकार्यास्तदपेक्षयाऽस्मदुक्तव्याख्यानेन मन्त्रान्तरसंवादात्तेनैव मन्त्रार्थस्य स्पष्टार्थत्वम्। दिवः परेऽर्धे द्योलोकस्यापरार्धे पुरीषिणमित्यनेन रात्रौ वृष्टियुतत्वं बोध्यते लक्षणां विना। तदुक्तपूर्वं देवानां माने इत्यस्य व्याख्याने द्वा वृके वहतः पुरीषमित्यनेन सम्वादोऽस्य वर्णनस्य। किञ्च पञ्चर्तुत्ववर्णनं कुमेरुसम्बन्धित्वेन।

तथा सति तस्य ऋतुद्वयसमासेन तस्य च कुमेरुसम्बन्धित्वेनासम्भवः। यतः समासो हेमन्तशिशिरयोरेव तत्र, तस्मिन् देशे दिनस्य तदानीं सत्त्वेनासम्भवश्चेति विविधा दोषाः सम्भवन्तीति मन्त्रान्तरसंवादेन पूर्वोक्तव्याख्यानमेवास्य स्वीकर्तव्यं प्रदर्शितं च तद् पूर्वमेव। एवं सति देवानामिति त्रिशब्दस्य पर्जन्यवाय्वादित्यपरत्वेन वर्णनाऽपि न युक्ता। द्वावित्यस्यापि व्याल्यादित्यपरत्वेन वर्णनस्याऽप्ययुक्तत्वं तच्च सर्वं प्रदर्शितमिति तन्मन्त्रोक्तसन्त्रार्थविज्ञानद्वारा तस्य मन्त्रस्य विस्पष्टार्थत्वमिति प्रदर्शितम्। अन्यद्बहुलं वक्तव्यं पूर्वमुक्तमेवेति।

एवं च देवानां माने इतिमन्त्रोक्तस्य पञ्चर्तुयुक्तत्वस्य, रात्रौ द्वयोः पुरीषित्वं चात्र पञ्चपादं दिवः परऽर्धे पुरीषिणमित्यस्य पूर्वार्धेनवचनम्। सुमेरौ दिने वृष्टियुक्तता षड्ऋतूपेतत्वं च द्वितीयेनार्धेनोच्यते, अथ पक्षान्तरे इमं

सविधवर्तिनः, सुमेरुवर्तिनो दीर्घतमस ऋषेस्तत्रत्यानामेव सविधवर्तित्वात् इमे इत्यनेन सुमेरुवर्तिनो गृह्यन्ते । अन्ये पूर्वापेक्षया भिन्नास्तत्रत्याः प्राणिनो वेदवादिनो वा उपरे मेघे मेघकाले इत्यर्थः । विचक्षणं दृश्यं दर्शनोपेतमादित्यं सप्तचक्रे दिवाभागीयसप्तमासोपेते षळरे ऋतुषट्कयुते संवत्सरे अर्पितमाहुः ।

एवं सति अत्र संवत्सरः षळरः षडृतूपेतः । उपरे मेघकाले दृश्यत्वमादित्यस्येति वचनाद्वर्षाकालो दिवैवेति विशेषाः । सुमेराविदं भवतीति । एवं सति पञ्चपादमित्येषा वर्णना देवानां विरुद्धदेशेऽर्थात्कुमेराविति भवति । तत्र समग्रां रात्रिं यावद्वृष्टिसत्वेन तत्र रात्रिकालिके मासषट्के रात्रिपूर्वार्धरूप एको रात्रि द्वितीयार्धरूपोऽपरर्तु रिति ऋतुद्वयोपेतत्वं रात्रेः । दिवा च ऋतुत्रयोपेतत्वमिति ऋतुपञ्चकोपेतत्वम् । तत्र ऋतूनां वसन्तादिनामभिर्व्यवहाराभावेन केवलं सङ्ख्ययैव । त्रयो द्वौ इति ऋतुनिर्देशः । एवं चतुपञ्चकत्वस्योपपत्तये ब्राह्मणे ऋतुषट्कसंस्कारानुरोधने दृष्टान्तरूपेण वचनं हेमन्तशिशिरयोः समासेनेति ।

अयं भावः-यैर्ऋतुपञ्चकव्यवहारः क्रियते कुमेरुस्थैस्तैरपि दिवा न ऋतुत्रयकल्पनम्, किन्तु रात्रौ । तच्च सुमेरुवर्तिनामृतुषट्कव्यवहारिणां दिवा वसन्तादिऋतुत्रयं, रात्रौ शरदादिऋतुत्रयं, तत्र हेमन्तशिशिरयोः समासवर्णना कल्प्यते- एवं कुमेरावपि समासवर्णनेन ऋतुपञ्चकव्यवहारोऽभिज्ञेय इति । कुमेरौ रात्रिकालिकत्वेन हेमन्तशिशिरयोरभावात् । प्रत्युत तदृतुत्रयं शरद्धेमन्तशिशिररूपं तत्र दिने एव प्रवृत्तं न तु रात्राविति, तदुक्तं शतपथे शरद्धेमन्तः शिशिर इति त आसुरा ऋतवः ।

असुरेषु तर्ह्यसौ भवति असुरांतर्ह्यभिगोपायतीति । देवविरुद्धदेशसम्बन्धिता सुराणां, देवांश्चोत्तरस्मिन्सुमेरुरूपे मेरोः शिखरे निवसन्तीति तद्विरुद्धे कुमेरुरूपे दक्षिणदिक्के मेरोः शिखरे असुरा निवसन्ति तत्रादित्यस्थितेरुक्तेस्तत्र च दिनप्रवृत्या समसनाभावो हेमन्तशिशिरयोः ।

एवं च तत्र नोक्तरूपः समास ऋतुपञ्चकव्यवहारोपयोगीति ब्राह्मणोक्तस्य समासस्य दृष्टान्तरूपेणोपादानम् । अथवा नायं कुमेरुस्थानामभिप्रेतः समासस्तै रात्रौ ऋतुद्वयस्यैव स्वीकारात् । तच्चतुर्द्वयं विनिगमनाभावेन समरूपम् । समरूपता चोक्तरीत्या रात्रिकालस्य पूर्वपरार्धवशत इति । तत्र रात्रिकालिक एकैकऋतुस्त्रैमासिक इति । एवं सति ब्राह्मणोक्ता समसनकल्पनाऽन्यार्था । सा तु शतंजीवेति मन्त्रोपपत्यर्था इति ।

### ३४. शतञ्जीवेति मन्त्रव्याख्याऽपि न विस्पष्टा

एवं शतंजीवेति मन्त्रव्याख्यापि न विस्पष्टा । तथाहि स मन्त्रः ।

शतं जीव शरदो वर्धमानः शतं हेमन्ताच्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः[1] । इति ॥

---

१. ऋ. सं. १:१६१:४

अत्र मन्त्रे शतसंख्याकोल्लेखस्यैवाविस्पष्टत्वम्, अपरोऽशस्तु सरलः प्रायेण। अत्र शतमिति विशेषणाच्छरदो वत्सरार्थत्वं तेन शतं शरदः शतवर्षपर्यन्तं जीवेत्यर्थः. तत्र शतपर्यन्तस्यायुषोऽवधेर्निर्देशाय केवलमेकेन शरद्धेमन्तहेमन्तानां शतविशेषणत्वेन ग्रहणेनोक्तार्थलाभेऽपरेषां ग्रहणं निष्प्रयोजनं स्यात्। भवति शतं शरदइति वा शतं वसन्तानिति वा शतं हेमन्तानिति वा एकेन शब्देन शतशब्दसहितेन शतवत्सरबोधनेन अवशिष्टनिर्देशस्य वैयर्थ्यम्।

तत्र निरुक्तपरिशिष्टे इम मन्त्र गृहीत्वार्थविषये तत्र युक्तत्वायुक्तत्वविषये किमपि नोक्तं, भाष्यकृता वत्सरलाक्षणिकत्वमुक्तमतावताऽयं युक्तदोषो निवारिति इति भवति विचारणा किमित्येकेनैव ग्रहणेनोपपत्तावावशिष्टग्रहणमिति। तत्रापि पुनः किमिति एतदृतुत्रयमेव निर्दिष्टं नान्ये ऋतवो गृहीताः। ऋतुत्रयग्रहणे प्रसिद्धक्रमेण वसन्तान् शरदः हेमन्तानितिक्रमे ग्रहीतव्ये किमिति तद्व्युदास इत्यादयः संशयाः प्रादुर्भवन्ति कथमिमे परिहरणीया इति।

तत्र वत्सरपरत्वस्यासम्भवे शतशब्दस्य दिनसंख्याबोधकत्वं, तत्र सम्बन्धितया शरद इत्यादिग्रहणमिति तदपि न। यतः शरद ऋतुत्वं, ऋतुश्च मासद्वयात्मा, प्रतिमासं दिनानि च त्रिंशदिति साकल्येनैकस्मिन्नृतौ दिनानां षष्टिसंख्यैव प्राप्नोतीति न तदभिप्रायकः. तस्य प्रयोगस्य सम्भव इति चेत्, सत्यम्। अतएव च ऋतुशब्दस्य ऋतुद्वयग्रहणोपचारः।

एवं शतिं शरद ऋत्वन्तरस्य चोपचाराच्छरच्छब्देन ग्रहणं कृत्वा शतं शरदः शरदः शतसंख्याकानि दिनानीत्यर्थ इति तत्रोपचारग्रहणे शरदा सन्निधवर्तिनः ऋतोर्लक्षणे स पूर्वो वा परो वोपलक्षणीय इत्यनियमे प्राप्ते ऐतरेयब्राह्मणे उपचारप्रकारः प्रदर्शितः। हेमन्तशिशिरयोः समासेनेति।

एवं च ब्राह्मणे प्रजापतेः सप्तदशत्वादि प्रतिपादनाय प्रतिपादितः। तत्र प्रजापतेः सप्तदशत्वं संवत्सराभेदादुक्त्वा संवत्सरस्य साप्तदश्यं मासर्तोः संख्यां गृहीत्वा वक्तुं तत्र मासानां द्वादशसंख्यामृतूनां पञ्चत्ववचनार्थं पञ्चमषष्ठयोऋर्त्वोरेकत्वेन ग्रहणं कृत्वा सप्तदशत्वसंख्यासंपादनेन प्रतिपादितः, हेमन्तशिशिरयोः समासेनेति।

एवं च समासरूप एवात्रोपचारः स हेमन्तस्य परवर्तिना शिशिरेणेति ब्राह्मणानुगुण्याद्बोद्धव्य इति सिध्यति। समासोऽपि द्वयोर्ऋत्वोरिति प्राप्तम्। तथा चैतरेयादिषु वचनाद्धेमन्तशिशिरयोः समासे गृहीते तस्य च हेमन्तत्वेन व्यवहारेऽनुमतेऽपि शतं जीवेति मन्त्रे शरद्धेमन्तवसन्तानां त्रयाणामेव शतसंख्याकत्वमुच्यमानमनुपपन्नमेवावशिष्यते। कुतो वर्म एवंतत्र. शतसम्बन्धितयाचरन्त इति।

कदाचन वसन्तस्य तदुत्तरवर्तिना ग्रीष्मेण समासो वसन्तशब्देन, हेमन्तशिशिरयोश्च हेमन्तशब्देन ग्रहणेनापरेषां सर्वेषां ग्रहणस्य प्राप्त्यादनमन्त्रे त्रयाणां शतसंख्याकत्वमुच्यमानं न विरुद्धमिति सर्वेषामृतूनां शतसम्बन्धिताप्राप्तेः।

तत्रापि पुनः सन्देहस्यावसरः, समस्यमानर्त्वोर्मध्येऽन्यतरनाम्ना समास-व्यवहारे कथं वसन्तादिशब्दैरेव व्यवहारो न ग्रीष्मादिशब्दैः। तत्रापि समस्यमान-र्त्नाम्ना व्यवहारे समस्यमानादिमर्तुनाम्ना समासव्यवहारो वसन्तहेमन्तयोरिव वर्षाशरदृत्वोरपि वर्षात्वेनैव व्यवहारेऽपेक्षणीये कुतस्तत्र शरत्वेन व्यवहार इति सन्देहस्तदवस्थ एव।

एवमृतुप्रसिद्ध्यनुसारेण यथाक्रमं प्रथमं वसन्तस्य ततः शरदस्ततो हेमन्त-स्येति ग्रहणापेक्षणे कुतः शरद एव प्राथम्येन ग्रहणम्, व्युत्क्रमाभिप्रायकत्वे हेम-न्तस्य कुतो न प्रथममुक्तिरिति सन्देहस्यानपाकरणमेव। तदर्थं समासोऽपि उप-चारत एव ग्रहीतव्यः, तेनोक्तसंशयापाकरणस्य संभवात्।

तथाहि तत्र द्वयोर्मासयोर्ऋतुव्यवहारस्य मुख्यत्वमेकस्मिन्नुपचारतः प्रवृत्तिः। तथा च हेमन्तशिशिरमासानामुपचारतो हेमन्तत्वग्रहणेन ग्रहणे पुनस्त-त्राप्रविष्टानामृतूनां प्रवेशने प्रविष्टस्य न्यूनीकरणे तत्राप्रविष्टनूतनप्रविष्टर्तुनाम्ना तद्व्यवहारः कर्तव्यः। हेमन्तशिशिरयोः समासे शिशिरं निष्कामस्य शरदः प्रवे-शने शरद्धेमन्तयोः समासस्य नूतनप्रविष्टशरदृतुनाम्ना व्यवहारः। यथा वा हेमन्तं निष्कामस्य प्रवेशने शिशिरवसन्तयोर्नूतनवसन्तर्तुनाम्ना व्यवहारः। एवं सति मन्त्रोक्तत्रिविधव्यवहारस्योपपत्तिरिति तु न वक्तव्यम्।

उक्तरीत्या ऋतुप्रवेशनिर्गमार्थं द्वयोर्द्वयोर्मासयोः प्रवेशनिर्गमौ वक्तव्यौ, ऋतुव्यवहारस्य मासद्वये मुख्यत्वात्। तथापि प्रवेशनिर्गमयोः क्रमिकत्वाय प्रथम-मेकैकमासप्रवेशनिर्गमयोर्वक्तव्यत्वम्। तथाचाप्रविष्टनूतनैकमासप्रवेशे प्रविष्टस्य निष्कासने व्यवहारार्थं किञ्चन नाम देयं, तत्र प्रदेयनाम्नैव मन्त्रगतव्यवहारस्यो-पपत्तौ प्रकारान्तरेण तद्ग्रहणस्य निरर्थकत्वात्।

तथाहि ब्राह्मणानुसारेण प्रसिद्धर्तुक्रमानुसारेण प्रसिद्धर्तुमासग्रहणे मार्ग-शीर्षपौषयोर्हेमन्तत्वं माघफाल्गुनयोः शिशिरत्वं समासायोभयोर्ऋत्वोर्ग्रहणे मार्गशीर्षपौषमाघफाल्गुनमासाः समासार्था भवेयुः। एतैर्मासैः समासेनैकर्तुनाम्ना समासे, प्रथमप्रवृत्तहेमन्तर्तुनाम्ना समासव्यवहारः, स च ब्राह्मणे प्रदर्शितः। अत्र समासे ऋत्वन्तरस्य प्रवेशे निर्गमे चापेक्षितैकमासनिर्गमप्रवेशौ वक्तव्यौ। तथा सति प्रथमं मासं मार्गशीर्षाख्यमपोह्य नूतनः परवर्ती मासश्चैत्ररूपो योजनीयः।

तथा सत्यत्र समासमासाः पौषमाघफाल्गुनचैत्रमासा भवेयुः एवमन्तिमं पूर्वसमासमासानां फाल्गुनं निरस्य पूर्वमासपूर्वस्य कार्तिकस्य तत्र योजने समास-मासाः कार्तिकमार्गशीर्षपौषमाघमासा भवेयुः। अनयोरेकमासनिर्गमप्रवेशयोर-नुसारेण संपद्यमानयोः प्रकारयोः केन नाम्ना व्यवहारः स्यात्।

तत्र कार्तिकमार्गशीर्षपौषमाघमासानां हेमन्तत्वेन व्यवहारो न सम्भवति, ब्राह्मणोक्तप्राथमिकसमासोऽसांकर्यप्रसंगात्। अथ माघः शिशिरमासस्तदनुरोधेन

शिशिरव्यवहार, सोऽपि न युज्यते, द्वयो शिशिरमासयो प्रवेशदशायामपि शिशिरनामत्वेनाऽव्यवहारेणैकमासप्रवेशदशाया तन्नाम्ना व्यवहारस्यायुक्तत्वात।

तस्मादुक्तचतुर्मासाना कार्तिकमार्गशीर्षपौषमाघाना मासद्वयाभिप्रायेण हेमन्तव्यवहारस्य साकर्यदोषान्निरासे द्वयोर्मासयो प्रवेशदशाया तन्नाम्ना व्यवहृतस्यैकनामप्रवेशे तन्नाम्ना व्यवहारस्यायुक्तत्वाच्छैशिरस्य नाम्नो निरासे पारिशेष्यात्कार्तिकमासप्रवेशानुसारेण तदीयतु नाम्ना स समासो व्यवहर्तव्य । आश्विनकार्तिकमासयो शरदृतुत्व तच्च मासद्वये शरच्छब्देन व्यवहारस्तत्र मुख्यम्। इदानीमेकमासे तच्छब्दव्यवहारो मुख्यो गौण । तेन नाम्नैवात्र व्यवहार प्रकारान्तरासभवात्।

एवञ्चात्र द्वयोर्ऋत्वोरेकैकमास एकस्य द्वौ मासाविति ऋतुत्रयसम्बन्धिनि मास चतुष्टये समासव्यवहारो मुख्यो न सम्भवतीति उपचारोऽपि गौणतया ग्रहीतव्य, एव द्वितीयेऽपि प्रकारे पौषमाघफाल्गुनचैत्रमासचतुष्टये माघफाल्गुनाभिप्रायेण शिशिरव्यवहारस्य साकर्यापत्या निरासे पौषसम्बन्धेन हेमन्तव्यवहारोऽपि साकर्यापत्याऽवशिष्टफाल्गुनमासाभिप्रायेण वसन्तव्यवहारो मासचतुष्टये गौण इति।

एवमेकैकमासपरित्यागे परापरग्रहणे चोक्तरीत्या मन्त्रगत शरद्धेमन्तवसन्तनामक मासचतुष्टयत्रय भवति। एतस्यैव त्रयस्य मन्त्रे शरदादिशब्दैर्व्यवहार। अत्र प्रतिऋतु-शतशब्दार्थसम्बन्धित्वाय मासचतुष्टय ग्रहीतव्यमन्यथैकस्यर्तोर्मासद्वयसम्बन्धितया मासस्य च त्रिशदिनकतया साकल्येन दिनाना षष्टिरेव सख्या स्यात्। इष्यते च मन्त्रानुसारेण शत, तस्याश्च मासद्वयग्रहणे यथानुपपत्तिरेव मासत्रितयग्रहणेऽप्यनुपपत्तिरेव। मासत्रयस्य दिनसख्या नवतिर्भवति इष्यते शतमिति तत्रर्तु नाम्ना मासचतुष्टय गृह्यते।

एव मासचतुष्टये एकर्तु नाम्ना व्यवहारस्य मुख्यत्वाभावेनोपचारत स व्यवहारो ब्राह्मणानुसारेण। तस्यापि मन्त्रोक्तर्तु ग्रहणस्योपपादनार्थमेकमासप्रवेशानुसारेण पूर्वोक्तरीत्यैकस्मिन् मासि ऋतुव्यवहारस्यामुख्यत्वेन गौणत्वेन तादृश उपचारो ग्रहीतव्य, तावतैव मन्त्रगतव्यवहारस्य ऋतुत्रयस्य शतसम्बन्धित्वरूपस्योपपत्तौ मासद्वयप्रवेशनिर्गमाभ्या तद्व्यवहारस्वीकारे प्रयोजनाभावात्प्रयोजकस्य प्रकारान्तरेणोपपत्तौ प्रयोजकस्य प्रयोजकत्वाभावाच्चेति।

किञ्चात्रैकमासप्रवेशनिर्गमाभ्यामेव समासो वक्तव्यो न मासद्वयप्रवेशनिर्गमाभिप्रायेण। ऐन्द्रसूक्ते वृत्रप्राप्तिप्रापककालस्योल्लेखात्। तथाहि तत्रोच्यते— "चत्वारिंश्या शरदि वृत्रमन्वविन्ददित्यर्थक चत्वारिंश्या शरद्यन्वविन्दत्[1]" इति।

---

१ ऋ. स २.१२.११

तत्र शरदि चत्वारिंशी प्रदक्षिणा चत्वारिंशं दिनं वेति पूर्वमुक्तम्, तदनुसारेण वृत्रलाभः कार्तिकमासस्य शुक्लदशम्यां वक्तव्यः।

आश्विनकार्तिकयोः शरदृतुत्वस्य प्रसिद्ध्या आश्विनस्य त्रिंशद्दिनानि कार्तिकस्य प्रथमानि दशेति चत्वारिंशत्संख्यायाः सम्पत्तेः, एवं चार्धाधिकावशेषं कार्तिकं, मार्गशीर्षं, पौषं, माघं च मासचतुष्टयं गृहीत्वा शरदः शतव्यवहारो मन्त्रगतो वक्तव्यः। तत्रर्तुद्वितयग्रहणेन तदुपपादनं कर्तुमशक्यम्।

तथाहि शरदः समासत्वाय पूर्वो वा परो वा ऋतुस्तत्र वक्तव्यः, पूर्वर्तुं वर्षास्तां गृहीत्वा श्रावण-भाद्रपदाश्विनकार्तिकानां आश्विनकार्तिकमार्गशीर्ष-पौषानां वोक्तरीत्या समासः शरदृतुशब्देन न वक्तुं शक्यते, मन्त्रोक्तस्य चत्वारिंश्यां शरदि वृत्रलाभस्यानुपपत्तेः। अन्धकारदिनसंख्या शतंजीवेतिमन्त्रे शतशब्देनोच्यते। सा च समासग्रहणेन भवति। एवं सति उक्तरीत्या शतसंख्यायाः कृते पूर्वोक्तरीत्या ऋतुद्वयग्रहणे ततः पूर्ववर्तिऋतौ चत्वारिंश्यां तल्लाभो भवेत् न तु शरदि।

उक्तरीत्या शरदश्चत्वारिंश्यां लाभानुसारेण ततः परमर्धाधिकावशेषस्य शरदो द्वितीयमासस्य कार्तिकस्य समासे प्रवेशे पूर्वमासीयचतुर्थमासस्य फाल्गुनस्य ततो निष्कासने कार्तिकमार्गशीर्षपौषमाघमासा एव समासार्थतया ग्रहीतव्यास्तेषामुक्तरीत्या शरन्नाम्नैव व्यवहारः सम्भवतीत्ययं समासः शतंजीव शरद इति मन्त्रे वक्तव्यः प्रकारान्तरेण चत्वारिंश्यां शरदि लाभवर्णनस्यायुक्तत्वं स्यादिति उक्तरीत्या वसन्ते तदीयैकमासस्य समासे प्रवेशे स्वनयदानस्तुतौ उच्यमानमश्वानां शोणवर्णानां चत्वारिंशत्संख्यानां सहस्रस्याग्रे श्रेणिवचनं प्रमाणम्। तदुक्तं तत्र—चत्वारिंशद्दशरथस्य शोणाः सहस्रस्याग्रे श्रेणिं नयन्ति इति।

अत्र सहस्रस्योदीयमानस्य सहस्रसंख्योपेतरश्मिरूपगोयुतस्य मण्डलस्याग्रे प्रथमं तदुदयात्प्रथमं, दशरथस्य उदयात्पूर्ववर्तिसावित्रौपसघटीदशरूपस्य पडहृदशकस्य, उक्तरीत्या मासद्वयार्थमुपयुज्यमानस्योदयसविधवर्तिनश्चत्वारिंशद्गावो वा तद्रूपा अश्वा वा शोणवर्णाः श्रेणिरूपेण भासन्ते इत्यर्थः पूर्वमुक्त एव। तत्रोदयस्य वसन्ततौ सत्वात्ततःपूर्ववर्तिचत्वारिंशत्संख्याकानि दिनानि पर्वर्तुगतानि गृह्येरन् यदि तदानीं मन्त्रस्थशतमुवसन्तानिति वचनस्यानुपपत्तिः।

अतो वसन्तीयान्यन्तिमानि चत्वारिंशद्दिनानि शोणवर्णानि हित्वा प्रथममासस्य दशदिनानि ब्राह्मणोक्ते समासे अधिकानि वसन्तर्तुसम्बन्धिप्रथममासस्योपयोजनीयानि। पूर्ववर्तिसमासगतस्य प्रथमो मासश्च समासतो निष्कासनीयः। तथा सति पूर्वोक्तब्राह्मणीयसमासे प्रथममासस्य परित्यागे मासा भवेयुः पौषमाघफाल्गुनास्त्रयः। तेषां दिनानि नवतिः। वसन्तीयाद्यमासचैत्रीयानि प्रथमानि दश-

दिनानि, तेषां पूर्वोक्तसमासीयनवतिदिनेषु योजनेन सपद्यमानस्य शतस्य समासार्थं-पूर्वसमासीयास्त्रयः पौषमाघफाल्गुनमासावसन्तीयश्चाद्योमासश्चैत्रस्तस्य योजने सपन्नसमासस्य पूर्वोक्तरीत्या वसन्तशब्देनैव व्यवहार इति ।

एवं सति वसन्तस्थलेऽपि हेमन्तीयोऽन्तिमो मास पौष शैशिरीय मासद्वय माघफाल्गुनौ वसन्तीयश्चाद्यो मासश्चैत्र इत्येतेषा चतुर्णां समासस्य मुख्यशब्देन वचनासम्भवेनोपचारेणैकस्मिन् मासि वसन्तत्व गृहीत्वोक्तरीत्या वसन्तत्वेन व्यवहारस्त समासमभिप्रेत्य च मन्त्रे शतमु वसन्तानितिवचनस्योपपत्ति ।

एव रूपसमासाभिप्रायेण शत जीवेति मन्त्रे त्रयाणामृतूना शतदिनवक्तोक्ता। त्रयाणामेव ग्रहणेनान्यस्मिस्तदभावोऽपि बोध्यते । एव सति उक्तसमासानुरोधेन शत दिनानि तमोऽर्थानि परवर्तीनि उदयात्पूर्वं शोणाभासयुतचत्वारिंशदश्वरूप-गवार्थानि, तत परस्तादादित्यस्योदय सपद्यमान. शरच्छताभिप्रायेण समासीय-मासचतुष्टय कार्तिकमार्गशीर्षपौषमाघरूपम् ।

तत्र चत्वारिंशया शरदि लाभेन ततोऽवशिष्टानि शरदो दिनानि विंशति', तत परवर्तिमासद्वय मार्गशीर्षपौषरूप तदीयानि दिनानि षष्टि, परवर्तिमाघ-मासस्य दिनानि विंशतिरिति शत दिनान्यतीत्य माघस्यावशिष्टानि दिनानि दशा-तीत्व परिवर्तिन फाल्गुन मास तदीयानि त्रिंशद्दिनानि गृहीत्वा चत्वारिंशद्दिनानि शोणार्थान्यतीत्य चैत्रे मासि शुक्लप्रतिपदि वा चैत्रमासि वोदय. । तस्य साधकञ्च मन्त्रे शत जीवेत्यत्र शत शरद इति वचनम् ।

एव शतहेमन्तवचनेन मार्गशीर्षपौषमाघफाल्गुनरूपमासचतुष्टय समास-ग्रहणेन गृहीत्वा तत्र प्रथम मासत्रय मार्गशीर्षपौषमाघरूप नवतिदिनानि फाल्गुन-स्य प्रथमानि दशदिनानि मिलित्वा शत, तत. परस्ताच्चत्वारिंशद्दिनानि, तत्र फाल्गुनस्यावशिष्टानि विंशतिः, तत. परस्ताच्चैत्रीयविंशतिदिनानि शोणार्थानि, तत परस्तादादित्यस्योदये चैत्रकृष्णपञ्चम्या वा अस्मिन्नर्थे शतहेमन्तवचन शत जीवेति मन्त्रे ।

शत वसन्तानीति वसन्तशताभिप्रायवेन मन्त्रगतेन समासेन ब्राह्मणीय-समासगतमासचतुष्टये आदिमं मार्गशीर्षमास परित्यज्यावशिष्ट मासत्रय पौष-माघफाल्गुन तदीयदिनानि नवतिः, तत पर शतसङ्ख्यासपत्यर्थं परवर्तिचैत्ररूप-वसन्तमासीयादिमदशदिनग्रहणेन शतसङ्ख्यासम्पत्तिस्तस्योल्लेख. शत जीवेति मन्त्रे शतमुवसन्तानिति ।

ततः परस्ताच्छोणार्थानि दिनानि चत्वारिंशत्तैश्चैत्रीयानि दिनानि च विंशतिर्वैशाखगतानि दिनानि विंशतिरुपयुज्य तदन्ते वैशाखमासस्य कृष्णपक्षे उदय इति वैशाखान्ते उदय इति । तस्य साधको मन्त्रे शत जीवेत्यत्र शतमु वसन्तानित्युल्लेखः ।

एवं चोक्तमन्त्रे त्रिविधोल्लेखात्त्रिविधस्य आदित्योदयस्य विज्ञानम्। एकश्चैत्रप्रतिपदि शुक्ले द्वितीयश्चैत्रकृष्णपञ्चम्यां तृतीयश्च वैशाखकृष्णपक्षे पञ्चम्यामुदय इति। तत्र चैत्रशुक्लप्रतिपदि उदये दिननक्षत्रं रेवतीनक्षत्रं तदेवादित्याधिष्ठित नक्षत्रम्। तत्र देवेष्वादित्यस्योदय इति वर्णनेन तद्वासन्तिकसंपातनक्षत्रं भवेत्, तदानीं शारदसंपातनक्षत्रं हस्तनक्षत्रम्, तस्य सूचकं शतं जीवमन्त्रे शतं शरद इति वचनम्।

चैत्रकृष्णपञ्चम्यामुदये तत्र दिननक्षत्रं मूलनक्षत्रं ततः पश्चाद्वर्ति दिननक्षत्रं पञ्चमं स्वातिनक्षत्रं ततोऽशीत्यंशविदूरं नक्षत्रं भरणीनक्षत्रमादित्याधिष्ठितं तत्रादित्यस्य उदयः, स च देवेष्विति ततो वसन्तसांपातिकत्वं तस्येति शारदसंपाते नक्षत्रं स्वातिनक्षत्रं भवेत्, सूचकं शतं जीवेति मन्त्रे शतं हेमन्तवचनम्। तथा वैशाखकृष्णपञ्चम्यामादित्यस्य देवेषूदये वसन्तसंपातस्तदानीं भवेत्। तत्र दिननक्षत्रमुत्तराषाढा स्यात्, ततः पूर्ववर्ति षष्ठं नक्षत्रं पौर्णमासीनक्षत्रं भवेत् तच्च विशाखे स्याताम्। विशाखानक्षत्रस्य पूर्णिमायां दिननक्षत्रत्वे आदित्यस्य नक्षत्रं कृत्तिकानक्षत्रं तदादित्याधिष्ठितं स्यात्। तत्र वसन्तसंपातनक्षत्रत्वे शारदसंपातनक्षत्रं विशाखा वा स्यादनुराधा वा स्यात्। दिननक्षत्रस्य वशतः सम्पद्यमानसंपातनक्षत्रस्य स्वल्पविभेदसम्भवात्।

एवं च शतं जीवेति मन्त्रे शतं शरदःशतं हेमन्तान् शतं वसन्तानिति त्रयो निर्देशा न शतसंवत्सरबोधनाय, तथा सति एकेनैव वचनेनाभिप्रेतार्थबोधने वचनान्तरवैयर्थ्यप्रसंगात्। किन्तूक्तरीत्या शारदसंपातनीयनक्षत्राणां हस्तस्य स्वात्या अनुराधायाश्च साधकं भवेत्क्रमेण। तत्र त्रिभिर्निर्देशैरादिमध्यान्तानां नक्षत्रियप्रजापतिगतानां नक्षत्राणां हस्तस्वात्यनुराधानां ग्रहणे साधने मध्यवर्तिनक्षत्रयोरपि शारदसांपतिकत्वमुक्तप्रायम्। संपातस्य क्रमिकतया मध्यवर्तिनक्षत्राक्रमणं विना पार्श्ववर्तिनक्षत्राक्रमणस्यासंभवात्।

नचैवं रीत्यानुक्तनक्षत्रमाक्रममाणः संपातो हस्तनक्षत्रपूर्ववर्तीन्यपि नक्षत्राण्याक्रामेत्। तथा सति सर्ववृत्तभ्रमस्संपातः स्यादिति वाच्यम्। नक्षत्रप्रजापतिवर्णनस्य तथा सति विरुद्धत्वं स्यात्। सर्ववृत्तं परिभ्रमति संपाते किमितीदं नक्षत्रपञ्चकमेवादाय प्रजापतित्वकल्पना किमित्यन्यानि नक्षत्राण्यादाय न सेति सशयस्यानुच्छेदः स्यात्। न च तेष्वेव नक्षत्रेषूत्तोलितहस्तपुरुषप्रतिकृतिसम्भवात्सा। न चान्येषु नक्षत्रेषु तादृशाकृतिकल्पनस्य निमित्तमस्तीति न तेषु तस्याः कल्पनमिति वाच्यम्।

अपरेषु नक्षत्रेषु कानिचन कानिचन नक्षत्राणि गृहीत्वा आकृत्यन्तरकल्पनसंभवः। तस्या आकृतेश्च वशतस्तत्र नक्षत्रियप्रजापतित्वकल्पनसंभवात्। वर्तन्ते च नक्षत्रान्तरेषु विभिन्नाकृतिकल्पनं पूर्वसिद्धम्। अत एवैतरेयब्राह्मणे एका

कथोक्ता यत्प्रजापतिः स्वां दुहितरमसदभिप्रायेणाभिध्यातवान्। देवैस्तद्विज्ञाया-यमकार्यं करोतीति शासनं कर्तुमिष्टम्। तदानीं सम्भूय विचारे क्रियमाणे प्रजापतिशासनोपयोगिसामर्थ्यं स्वेष्वदृष्ट्वा तैरेको देवो नूतनो निष्पादित। निष्पाद्य तमूचुस्तेऽयं प्रजापतिरकार्यं करोतीमं विध्येति, तच्छ्रुत्वा तेन बाणेन प्रजापतिर्विद्ध ऊर्ध्वमुत्फालं कृतवानिति कथामुक्त्वा तत ऊर्ध्वं तत्रोक्तं तमेतमूर्ध्वं कृतोत्फालं प्रजापतिं मृग इत्याचक्षते।

यस्तु आकाशे मृगसदृक्षस्तारकापुञ्जो दृश्यते यश्च तत्र तारकापुञ्जे तिर्यगवभासमानतारकात्रयरूपो दृश्यते स तु रुद्रेण मृगस्य हननार्थं प्रेषितो बाण'। यश्च तत्तारकापुञ्जन पश्चादुज्वलदीप्तिस्तारकाविशेषो दृश्यते स उ एव स. स एव स मृगव्याध इति वर्णनेन तारकान्तरेष्वपि आकृतिकल्पनस्य पूर्वसिद्धत्वेन तत्र नक्षत्रियप्रजापतिकल्पनस्य सम्भवेन हस्तादिष्वनुराधान्तेषु पञ्चसु नक्षत्रियप्रजापतिकल्पनस्य निर्बीजत्वं स्यात्।

यत्तु पूर्वोक्तैतरेयकथानुसारेणान्येषु नक्षत्रेषु प्रजापतेराकारः कल्पित एवेति, तन्न। तत्र प्रजापतेराकारकल्पनेऽपि न स पुरुषरूप. किन्तु पशुरूपः स, पुरुषरूपत्वमत्रैव नक्षत्रपञ्चके भवतीति तत्कल्पना तत्रेत्यपि न युक्तम्। तावता पुरुषरूपत्वस्यान्यत्राभावेनात्रैव पुरुषरूपत्वं प्रजापतित्वं केवलं कल्प्येत यदि तदानीं तद्वशतो नक्षत्रपञ्चकएव सपातभ्रमो नान्यत्रेति कल्पनमसम्भवि भवेत्। अत्र न केवलमत्र नक्षत्रपञ्चके पुरुषरूपत्वं नस्य प्रजापतित्वमात्र कल्पितं किन्तु तेन सह यदन्यद्वर्णनं क्रियते तस्यानुपपत्ति स्यात्।

अत्रोच्यते हस्त एवास्य हस्त चित्रा शिर. स्वाती हृदयं विशाखे ऊरू अनुराधा प्रतिष्ठा। एष वै नक्षत्रिय. प्रजापति। यो वा एवं नक्षत्रियं प्रजापतिं वेदोभयोरेन लोकयोर्विदु' इति। अत्र उक्तप्रजापतिवचनेन साकं तज्ज्ञाने लोकद्वयविज्ञानमुच्यते तस्य सापातिकत्वे संभवः। सपातश्चोभयोर्लोकयो. सन्धिस्थले आदित्यसन्दर्शनरूपः। एवं सति तत्रावस्थानेन लोकद्वयविज्ञानं भवति। तदेतत्सपातस्यासाधारणं कार्यमत्रैव निर्दिश्यमानं विरुध्येत।

न चैतस्यार्थवादत्वमिति न स्वार्थसाधकत्वमिति न तेनैतन्मात्रनक्षत्रस्थिति. सपातस्य वक्तु शक्येति वाच्यम्। सत्यम्। अर्थवादत्वेऽपि साक्षाद्विधेयार्थस्य प्रशस्त इति प्रशमावोधनेनैव प्रशसाया बोधनीयायां तदकृत्वाऽर्थविशेषव्यवहारद्वारेण तद्वर्णनस्य निष्प्रयोजनत्वं दुर्निवारं स्यात्।

अतएव शबरस्वामिभिरर्थवादस्थले लक्षणया विधेयप्राशस्त्यबोधनेनार्थवादस्य सार्थक्येऽपि मुख्यवृत्त्या प्रतिपाद्यमानव्यवहारस्य नित्यं कञ्चनार्थं गृहीत्वा सार्थक्यवर्णनं प्रदर्शितम्। तस्मादुक्तरीत्यैतस्यैव नक्षत्रियप्रजापतेः फलविशेष-

श्रवणवशतोऽत्रैव नक्षत्रपञ्चके संपातस्य परिभ्रमो नान्येषु नक्षत्रेष्वित्यर्थस्य बोधनेन संपातस्यासर्ववृत्तपरिभ्रमः सिध्यति।

एवं चोक्तमन्त्रगतेन ऋतुत्रये शतत्रितयव्यवहारेणोक्तरीत्याद्यमध्यान्तिमनक्षत्रत्रयस्य संपातसम्बन्धित्वे बोधिते मध्ययोरपि तदुक्तप्रायमिति। तदेतेन मन्त्रगतव्यवहारेण नक्षत्रियः प्रजापतिर्यजुर्वेदोक्तोऽनुमोदितो भवति इति सिध्यति।

अयं संपातः शारद इति तस्यासार्वत्रिकत्वे वासन्तिकोऽपि संपातो सार्वत्रिक इति सिध्यति। तदत्र हस्तमारभ्यानुराधापर्यन्तस्यान्तरस्य चतुष्पञ्चाशदंशरूपत्वेन ज्योतिपिकग्रन्थोक्त्या अयं शारदःसंपातश्चतुष्पञ्चाशदंशान्यावत् आन्दोलितन्यायेन परिभ्रमतीति तदनुरोधेन वासन्तिकः संपातोऽपि तावदेव परिभ्रमेत्, तथा च तस्यासर्वगतित्वमेवेति। तत्र यातायातेन संपद्यमानसंख्यायाः स्वल्पन्यूनत्वसंभवेन औषधिसूक्तगतस्य शतं धामानि सप्त चेत्यादेरुपपत्तिरिति पूर्वमुक्तमेव। एतदभिप्रायेणैवाक्षसूक्ते उच्यते—

त्रिपञ्चाशः क्रीळति व्रात एषां, देव इव सविता सत्यधर्मा[1]। इति।

तत्रोच्यते, एषामक्षाणां त्रिपञ्चाशो व्रातः क्रीडतीति, अत्र तस्य अक्षव्रातक्रीडनस्य दृष्टान्त उच्यते, देव इव सविता सत्यधर्मेत्यनेन। यथा सविता सत्यधर्मा देवस्त्रिपञ्चाशः क्रीडति एवमिति।

२५. त्रिपञ्चाशः शब्दार्थविवरणम्

तत्राक्षस्थले क्रीडागतो विशेषस्त्रिपञ्चाशशब्देनोच्यते परन्तु सवितुर्देवस्य त्रिपञ्चाशपदार्थः कः। न चासौ प्रसिद्धः। अप्रसिद्धं चोपमानं न भवति। अत्र तु उपमानत्वेन तस्योपादानात्प्रसिद्धत्वं प्रतीतम्। तथा त्रिपञ्चाशसम्बन्धित्वे न केवलं सवितृत्वं पर्याप्तं, देवत्वं सत्यधर्मत्वं चापेक्षितम्। तदेतत्पर्यालोच्यमानमुक्तविधसम्पातयातायातसम्बन्ध्यन्तरमानप्रदर्शनद्वारा संगत भवति।

तथाहि सविता सर्वजगत्प्रकाशनादुत्पादनाच्चासावादित्यः देवः प्रकाशकः। आदित्य इति वर्णनेनैव देवत्वे लब्धे पुनर्देव इति ग्रहणमर्थान्तरमपि क्रोडी करोति। तच्च देवनरूपम्। देवनपञ्चाक्षसम्बन्धिनो क्रिया। तस्या लोके क्रीडाशब्देन व्यवहारः, आदित्ये गतिशब्देन तद्वचनम्। अक्षानुरोधेन गतिमान इत्यर्थः।

एवं च लोके अक्षशब्देन क्रीडनोपयोगिपदार्थस्य ग्रहणम्। आदित्यगतौ तत्सम्बन्धस्यानुपयोगेनाक्षशब्देन रथाक्ष इव वृत्तरूपादित्यरूपरथाक्षसदृशो ब्रह्माण्डे

---

१. ऋ. वे. १०:३:४८

दृश्ये स्थिर इवावभासमानो ब्रह्माण्डा तगतपदार्थगतिमनुमापयन कश्चन तजास्पो ध्रुवशब्देनाभिलप्यमान पदार्थो गृहीता भवति ।

स एवात्र सूक्त स्तोतव्य । तत्राक्षशब्देन व्यवहार आदित्ये रथकल्पना सम्बन्धात् । रथाक्षोऽप्यक्षशब्देनोच्यते । तत्राक्षत्दश्लेपणाल्लाके क्रीडाया सम्बन्धिनोऽक्षपदार्थस्य ग्रहणम । पदसाम्यात्क्रियासाम्याच्च बिभीतकाक्षाऽप्यत्र वण्यते । एतावता स नात्रस्तोतव्य , केवल मादृश्यनिर्वाहाथ तस्यात्राश्रयणात् ।

३७ प्रावेपा मा बृहतो इति मन्त्रार्थस्य सविस्तर प्रदर्शनम

प्रावपा मा बृहता मादयन्ति प्रवातेजा इरिण वर्वृताना ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागविमह्यमच्छान[1] । इति ।

अत्र प्रारम्भे प्रतीयते वणन विभीतकाक्षस्य । स विभीतको वृक्षस्त फला स्यपि तेन शब्देनोच्य ते । स विभीतको वृक्ष प्रवातेजा । अधिकवातप्रदेशे जायत उवरप्रदेशे । अतएव तस्योदकरहित स्थिति । तस्य फलानि भक्षयितार मादयन्ति कोष्ठयभेदनाज्जागरयन्ति छदयन्ति चेति वृक्षफलव्यवहारसाम्येनात्र देवनाक्षो वण्यते स च देवनाक्ष । तत्र बहुवचन पदार्थत्रयस्योपयोगात । ते चाक्षा क्रीड यितृन् वेपयन्ति फलाशकया क्रीडयितृभिश्च वप्यन्ते क्रीडार्थमिति प्रावपा शब्देनोच्यन्त । एतच्च वेपन बृहतो महतो जनसमुदायस्येति ।

एव तेऽक्षा प्रवाते वातरहित क्रीडास्थाने वतमाना इरिण निगतार्थो क्रीडास्थाने । तत्र स्थान सजातमृण पुत्रपौत्रानुग न भवति । ववृताना वतमाना वा अतिशयेन चचलत्वमुपयाता । क्रीडयितृभि क्रीडावसरेऽपेक्षितरूपेणाक्षाणा निपातार्थं हस्ते गृहीताना तपा हस्ताभ्या मथन कृत्वा परित्यज्यन्ते । तद्वशत स्तेऽतिशय चचला ।

मूजवत्पवत जातस्य सोमस्य भक्ष इवाय विभीदक काष्ठयस्य वायोर्भेदनेन वृक्षस्तज्जयो देवनाक्षोऽपि विशेपण नानारूपेण क्रीडने भेदनात्स्वरूपविवरणा ज्जयेन पराजयेन वा जागृविजागरयिता । जयशालिनो हर्षेण जितस्य दु खेन साऽयो देवनाक्षो मह्य देवनकर्तु रच्छान अक्षशब्दश्रवणेन मम मनो विपयान्तर तश्छादयित्वा छादनेनाप्रकाशनेनादृत्य केवलमेतस्मिन्नक्षक्रीडन एवोत्साहयति ।

प्रकृतस्तु सोऽक्षो ज्यातिश्चक्रप्रवतको बृहतो महतोऽस्य ज्योतिश्चक्रस्य प्रावेपा अतिशयने वेपनकता प्रेरणकर्तेति यावत् । स्थानभेदेन तस्य भेदेन बहु- वचनम् । मा माम । आदित्यस्यावितरिति वणनात आदित्य मादयन्ति वेपनेना विज्ञातस्वप्रवृत्ति पराधीन कुर्वन्ति । तेऽक्षा उक्तज्योतिश्चक्रचालका अक्षा प्रवा तजा वेपनाज्जातनातिशयितेन वातेन युक्त प्रदेशे जाता स्थिता । इरिण आस्फु

१ ऋ स १० ३४ १

रके ईषस्फुरणं यत्र तादृशे प्रदेशे वर्तमानाः। ऋणशब्दस्य जलवाचकत्वेन, तच्चाव्यक्तेषत्प्रकाशपरमिति यत्रेषस्फुरणं वर्तते तत्र प्रदेशे वर्तमानाः। न हि अक्षस्थितिदेशेऽस्माभिः प्रकाशः उपलभ्यते।

मौजवतः सोमस्य भक्षो यथा उन्मादेन पराधीनं करोति एवमसौ विभीदकः विशेषेण भेदकश्च्यावययिता स्थानात्, जागृविः सर्वदा स्वकार्यकरणे जागरूको मह्यमादित्यमच्छान् अचच्छदत् विभिन्नछन्दस्सम्बन्धं कारयति, अतिशयितं भिन्नदेशसम्बन्धिनं तत्राप्यपराधीनं करोति। असत्यामपि ममेच्छायां हठादन्यदेशसम्बन्धं कारयति मां वेपयतीत्यर्थः।

एवञ्चैषा दृश्यमाना ज्योतिश्चक्रगतिः साऽक्षाधीना तत्र तीव्रमन्दगतिमत्वाद्देशविप्रकर्षस्य न्यूनाधिकत्ववशतः केचन स्थिरा अवभासन्ते केचन चलाः। यथा आदित्यस्य स्थिरत्वबुद्धिरतिमन्दगतित्वादस्माकमभिप्रायेण, वस्तुतो नासौ स्थिरः किन्तु चलः। अतिदूरत्वात्तद्गतिरस्माभिर्नोपलभ्यते, एतावता स न स्थिरः किन्तु ज्योतिरूपत्वात्तस्य पूर्वोक्ताक्षपरिचालितत्वाच्चलत्वमेवेति।

एवं चैतदक्षसूक्तं न विभीतकाक्षबोधनार्थं नापि वा देवनाक्षबोधनार्थं मुख्यतः प्रवृत्तं, किन्तु ज्योतिश्चक्रचालकाक्षबोधनार्थमेव मुख्यतः प्रवृत्तम्। ज्योतीरूपत्वात्तस्य परब्रह्म उपाधित्वात्। वेदे आदित्यस्यैवैकस्य स्तवादित्यादिकं पूर्वमुक्तमेव।

एवं सत्यत्र त्रिपञ्चाशः क्रीड़तीत्यत्र तस्यैव वर्णनम्, तथा सति अक्षाणाम्। वस्तुत एकस्याक्षस्य स्थानभेदं मत्वा बहुवचनम्। व्रातस्त्रिपञ्चाशः क्रीड़ति सवितुस्त्रिपञ्चाश इव। स चादित्यो यथा संपातगत्याऽर्थमागमं कुर्वाणः गणितानुसारेण विशेषविज्ञानाज्ज्ञातगमागमः। स यथा एकस्थानादपरस्थानपर्यन्तं त्रिपञ्चाशांशपर्यन्तं गच्छंस्त्रिपञ्चाश उच्यते।

एवञ्चैतस्य तद्युक्तत्वं विज्ञातमित्युपमानता तस्य। तद्वभेदवशतोऽक्षस्यापि त्रिपञ्चाशस्थानसम्बन्धित्वेन परिभ्रमात् स्थानभेदेनानेनं गृहीत्वाक्षाणां व्रातः समूहः क्रीड़ति गतियुक्त इवावभासते। अक्षेषु देवनाक्षत्वव्यवहारयोग्यत्वायादित्ये देवत्वेन मुख्येऽक्षसम्बन्धे प्रकाशकत्वेन देवनाक्षसम्बन्धेनाक्षैः क्रीड़नकर्तृत्वेन देव इति विशेषणम्। तच्चादित्यस्य गतिसम्बन्धवशतोऽज्ञायमानमक्षक्रीड़नं दिवाभागे प्रकृष्टप्रकाशे सम्यग्ज्ञातुमशक्यमिति रात्रौ तद्विज्ञानाय रात्रिसम्बन्धनाय सवितुः सत्यधर्मेति विशेषणम्।

तस्यायमर्थः—सवितुः प्रकाशकं तेजः सवितुर्दर्शने दर्शनेऽपि भवति। तत्र सवितुरदर्शने तेजः सत्यशब्देनोच्यते। तदानीं सवितुरदर्शनेन तस्यासत्त्वे प्राप्ते असत्वाभावप्रतिपादकसत्यशब्देनोच्यते। यथा नासत्यशब्दे। तेन हि अश्विनोरन्यतरस्य बोधनं क्रियते तत्रैकः प्रकृष्टप्रकाशः स दस्रशब्दबोध्यः। अपरस्यार्थादप-

कृष्टप्रकाशत्वम्, तत्र प्रकाशस्यापकर्षादसत्वे प्राप्ते तदभावमुखेन नासत्यशब्देन स बोध्यते, तत्र सत्यभावो सत्यशब्देन बोध्यते, नशब्देन पुनस्तदभावो बोध्यते, तेन सत्य एव न असत्य इत्येव सोऽश्विनोरन्यतरो देवो बोध्यते ।

तदुक्तं निरुक्ते सत्यादेव नासत्यौ इति । एवं सत्यपकृष्टं तेजः सत्यं तादृशतेजसा प्रकाशनरूपं कार्यं कुर्वाणः सत्यधर्मेत्युच्यते । तस्य तादृशस्य वशता-ऽसम्बन्धद्वारा त्रिपञ्चाशत्सम्बन्धितया विज्ञानात्सविता त्रिपञ्चाश इत्युच्यते । एवं च सवितुर्नक्षत्रसम्बन्धविज्ञानान्नक्षत्रगतान्तरवशतस्तत्रत्यं त्रिपञ्चाशत्वं सवितर्यारोप्य स त्रिपञ्चाश इत्युच्यते । तदिदं सर्वं दिवा न बोधितुं शक्यत इति रात्रिसम्बन्धः सत्यशब्देन बोध्यते । धर्मशब्दः कर्मबोधकः । तच्च सवितुः कार्य-प्रकाशमित्यभिप्रायेण सत्यधर्मेति प्रतिपादितम् । अयमर्थो विभ्राट्सूक्तगतेन मन्त्रेण प्रतिपाद्यते ।

३७. विभ्राड् बृहत्सुभृतमिति मन्त्रार्थचिन्तनम्

विभ्राड् बृहत्सुभृतं वाजसातमं धर्मन्दिवो धरुणे सत्यमर्पितम् ।
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा[1] । इति ।

अत्र दिवो धर्मन् धर्मणि कर्मणि प्रकाशने ज्योतिर्यज्ञे । एवं धरुणे प्रकाशनी-येऽर्थात् प्रकृष्टज्योतिषो सत्वेन प्रकाशनीयं धरुणशब्देन गृहीत्वा तत्र सत्यम-प्रकृष्टप्रकाशं तेजोऽर्पितं सत्यरूपमिति । तस्याप्रकृष्टप्रकाशस्य ज्योतिषो विशेषं उच्यते अमित्रहेति । अमित्रहावृत्रहाशब्दयोः समानार्थता प्रथमशब्देऽमित्रह-शब्देननञा समासेन वारणीया ।

तथा च मित्रं हन्ति मित्रहा तादृशं न भवतीत्यमित्रहा । वृत्रस्यान्धकारस्य हन्तृ इति विशेषणमप्रकृष्टप्रकाशतेजसः । प्रकृष्टप्रकाशस्य परवर्तिविशेषणत्रयम्, तत् दस्युहन्तमम् । दस्युहन्तारस्तमसो विनाशका उपग्रादयस्तेषां मध्येऽतिशयेन दस्युहन्तृतमो विनाशकम् । न हि उपग्रादिभिस्तमसः सर्वात्मना नाशः क्रियते ।

मण्डलेनोदितेन सर्वात्मना तमो विनाश्यत इति प्रकृष्टप्रकाशस्य ज्योतिष-स्तमोहन्तृतमत्वेन विशेषणम् । असुरहा सपत्नहेत्यनयोरपि समानार्थतावारणाय समासभेदः । यथा असुरहेत्यत्र सुरान् हन्तीति सुरहा तादृशं न भवतीत्यसुरहा, सपत्नानां शत्रूणां तमआदीनां हन्तृ ज्योतिः ।

एवं च रात्रावप्रकृष्टप्रकाशः सविता सत्यधर्मेति । एवं चास्मसूक्ते सवितु-स्त्रिपञ्चाश इति विशेषणं सपातगतेरंशानामपूर्णानां त्यागेन पूर्णांशग्रहणेन त्रिपञ्चाशत्संख्येति तत्सम्बन्धात्सवितुस्त्रिपञ्चाशोक्तिः ।

1. ऋ. सं. १:१७०:२

एवं चेदमपि संपातस्यासर्वगतिं साधयति । संपातस्यासर्वगतिबोधने परेषां संसूचकानां पूर्वं प्रतिपादनं कृतम् ।

नक्षत्रियप्रजापतिस्थले पञ्चनक्षत्राणि संपातार्थानि, तत्र प्रथमतृतीयपञ्चमाना संपातसम्बन्धित्वख्यापनं शतं जीवेति मन्त्रेण क्रियत इत्युक्तम् । मध्यवर्तिनोश्चित्राविशाखयोस्तत्वं सम्पातान्तरद्वारा बोध्यते । तत्र कृत्तिकाविषये यजुर्वेदे उच्यते एता वै प्राच्या दिशो न च्यवन्ते इति ।

अत्र प्राग्दिशश्चयवाभावेन तत्र संपातकालिकी तत्सत्ता बोध्यते । कृत्तिकासु वासन्तिकनक्षत्रत्वे विशाखाशारदसंपातनक्षत्रं भवतीति स्पष्टमेव । अश्विनीनक्षत्रस्य वासन्तिकनक्षत्रता, एवं चित्रायाः शारदनक्षत्रत्वं त्वौपविसूक्तगतमन्त्रेण विज्ञायत एव, तत् पूर्वं प्रतिपादितम् । विशिष्य दीक्षाब्राह्मणविचारे परस्ताद्विचार्येति ।

एवं मन्त्रेषु प्रोच्यमानसंख्यानां विशेषस्य ग्रहणे तात्पर्याज्ञानतो मन्त्रार्थस्यास्पष्टत्वं कतिपयैरुदाहरणैः प्रदर्शितम् । स्पष्टार्थत्वं चादित्यपरव्याख्यया । अथ कतिपयशब्दानां लोके प्रसिद्धार्थानामप्रसिद्धार्थानां वशतोऽपि मन्त्रार्थविस्पष्टमत्या अनुद्भवात्तदर्थमादित्यपरतया व्याख्याने स्पष्टार्थत्वेन तादृशां कतिपयानां प्रदर्शनं क्रियते ।

### ३८. वृकशब्दार्थविचारे आदित्यपरं व्याख्यानप्रदर्शनम्

तत्र वृकशब्दः । निघण्टुत्वविज्ञातार्थत्वेन अयं शब्दः पठितः । निरुक्ते निगमवशतस्तदर्थविज्ञाने प्रयत्नः । तत्र वृकशब्दस्य चन्द्रमा अर्थः, कुतोऽसौ वृक उच्यते, तदर्थमाह विवृतज्योतिष्कः, विकृतज्योतिष्क विक्रान्तज्योतिष्को वेति । तदर्थं दुर्गाचार्यष्टीकायामाह–विवृतज्योतिष्कः प्रकाशितज्योतिष्कत्वात् । विकृतज्योतिष्कः शीतत्वेन तज्ज्योतिषो भासनात् । सर्वत्र ज्योतिरुष्णं भासते, चन्द्रमसि तच्छीतमिति तद्विकृतमिति ।

विक्रान्तज्योतिष्कः अन्येभ्यो ग्रहनक्षत्रतारादिभ्यः प्रकृष्टज्योतिष्कत्वादिति । वृकशब्दतस्तल्लाभस्तु शकटायनरीत्या पदेभ्यः पदेतरार्धसंस्कारन्यायेन । यथा तेन सत्यशब्दस्य निर्वचनप्रदर्शनावसरे उक्तं निरुक्तकारेण प्रदर्शितम् एतेः कारित च यकारादि चान्तकरणमस्तेः शुद्धं च सकारादि चेति ।

तदर्थं उच्यते दुर्गाचार्येण एतेः इण् वातोः कारितं ण्यन्तं तादृशरूपं कृत्वा ततो यकारादिभागस्य य रूपस्य ग्रहणेन सत्यशब्देऽन्तिमो भागः । एवमस्तेः अस् भुवि इत्यस्य शुद्धं रूपं, ततः सकारादिभागस्तमादौ योजयित्वा संस्कारे सत्यमिति ।

अथ भावः—इण् धातोर्ण्यन्तस्य रूपमाययति ततो यकारो गृहीतः। अस धातोः शतृप्रत्ययान्तस्य रूपं सदिति तस्य पूर्वार्धे योजनेन सत्+य सत्यमिति, सत्यशब्दार्थः इण्धातोरस्धातोरर्थदर्शनेनोक्तरीत्या तद्धातुतस्तस्य शब्दस्यसिद्धिः। सत्यशब्दः सन्तं यथावद्रूपमर्थमाययति बोधयतीति सतोऽर्थस्य बोधकः।

एवं प्रकृते वृकशब्दे विवृतज्योतिष्कशब्दतो वृशब्दोगृहीतः, क रूपोऽन्तिमो भागो योजित इति वृकशब्दसिद्धिरर्थश्चोक्तः सिध्यति। विकृतज्योतिष्कः इत्यत्र कृशब्दं गृहीत्वा तस्य ककारस्य स्थाने वकारं कृत्वा पूर्ववद्योज्यम्। विक्रान्तज्योतिष्क इत्यत्र क्रमधातोः क्र इत्यंशमुपादाय रेफस्य ऋकारकरणेन ककारस्य वकारकरणेन वृकशब्दस्तस्यार्थ उक्तः। तत्र प्रयोगानुसारेण शब्दस्यार्थं निर्णीय तद्गतक्रियादिबोधकधात्वादिशब्दतोऽभिप्रेतपदरूपसाधनम्, इति स न्यायः।

अथ नानाविधकल्पनाकारी गौरवग्रस्त इति तस्य न सर्वत्राश्रयणम्। प्रकृते निरुक्तकारेणैतस्य शब्दस्य प्रयोगस्थलं प्रदर्श्य चन्द्रमोऽर्थत्वं निर्णीयते। तच्च प्रयोगस्थलं यथा तेन प्रदर्शितो निगमः।

अरुणो मासकृद्वृकः पथा यन्तं ददर्श हि।
उज्जिहीते निचाय्या तष्टेव पृष्ठ्यामयी वित्तं मे अस्य रोदसी[1] ॥ इति।

अत्र मन्त्रे मासकृत्पदं प्रयुक्तं माससंपादनमवयवद्वारा शुक्लकृष्णपक्षसंपादनेनेति गृहीत्वा निरुक्तकारेणोक्तं मासानां चार्द्धमासानां च कर्ता भवति चन्द्रमाः, स एव वृकपदार्थः। अत्र वर्ण्यमानस्य प्रकारस्य तत्र संभवोऽपि। अरुणोभवत्यरुणवर्णः स उदये चन्द्रमा येन मार्गेणाकाशे गच्छति तेन मार्गेण गच्छन्ग्रहनक्षत्रतारकादिं तं ददर्श तमभिजिहीते येन तेन नक्षत्रादिना योक्ष्यमाणो भवति। तक्ष्णुवन्निव पृष्ठरोगी जानीत मेऽस्य द्यावापृथिवी इति।

सर्वस्यास्य कल्पनस्य मूलं मन्त्रोक्तो मासकृच्छब्दः। तं दृष्ट्वा प्रसिद्धिसहकारेण चन्द्रमःपरतानिर्णयः। तत्र मासकृच्छब्दः शाखाभेदेन पदरूपविभेदः। कश्चनात्र मासकृत् इति पदं छिद्यते। कैश्चनशादिभिरत्र मा, सकृद, इति पदद्वयं छिद्यते। तत्र प्रथमपक्षे कथचनोर्ध्वोक्तार्थसंभवेऽपि द्वितीयकल्पे चन्द्रमःकल्पनाबीजस्य मासकृच्छब्दस्याभावेन वृकशब्दस्यार्थोऽविज्ञातः। पदद्वितयच्छेतृभिः शाखिभिर्मासकृच्छब्दस्य नोक्तार्थत्वं मन्यते। एवं सति मासकृच्छब्दस्य मासकारित्वाद्यर्थाभावे चन्द्रमःकल्पने मूलाभावान्न वृकश्चन्द्रमाः।

अथ मन्त्रान्तरवशतो वृक आदित्यः। तत्र मन्त्रः—वृकस्य चिद्वर्तिकामन्तरास्यात्प्रामुञ्चत गृभीतामिति। अत्र वृकेण गृहीता वर्तिका क्षुद्रः पक्षी तस्या वृकास्यतो विमोकवचनं वृकशब्दस्यादित्यार्थपरत्वसाधकं, तत्र वृकमुखतो वर्तिका

1. ऋ. सं. १। १०५। १८

मोचनं तावन्मात्रं नादित्यपरत्वसाधकं वृकशब्दस्य। तदर्थं निरुक्तकारेणाख्यानं मन्त्रान्तरसहकारेणोच्यते। तत्र मन्त्रः–

अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य। आह्वयदुषा अश्विनौ आदित्येनाभिग्रस्ता। तामश्विनौ प्रमुमुचतुरित्याख्यानम्। इति। अत्राख्याने अश्विभ्यां वृकास्यतो वर्तिकाया मोचनं कृतमित्येतावन्मात्रमुच्यते, वर्तिका केति न स्पष्टम्। मन्त्रेऽपि वर्तिका अश्विनावाह्वयत् अश्विनौताममुञ्चतं वृकस्यास्यत इत्येवोच्यते। तत्र वर्तिकापदार्थस्तु निरुक्तभाष्यकृता उषोरूप इति गृहीत्वा तस्या आदित्यसकाशतो मोचनं गृहीत्वा आदित्यपरता वृकशब्दस्योच्यते। संभवेदिदं यदि वर्तिकाशब्देनोषा एव ग्रहीतव्येत्यत्र किमपि प्रमाणं स्यात्। न च तादृश किमपि प्रमाणं निरुक्ते प्रदर्श्यते। तस्मादत्र वृकवर्तिकासाजात्यं यत्र संभवेल्लोके तदनुसारेण तदर्थनिर्णयः कर्तव्यः। नहि आदित्योषसोः स्वयं वृकवर्तिकारूपताऽस्ति, साजात्यात्तत्र तदारोपः।

तद्विचारे वर्तिकासाजात्यमादित्यमण्डले एव सम्भवति। यथा वर्तिका स्वल्पकायः पक्षी आकाशे उड्डीनः स्वल्पकायो दृश्यते कन्दुकादिसदृशः, एवमादित्यमण्डलं स्वल्पकायमाकाशे सञ्चरदिव दृष्ट्वा तत्र पक्षिकल्पनायाः सम्भवः साजात्यात्। वेदे मन्त्रे ब्राह्मणे च आदित्ये पक्षिरूपत्वकल्पना बहुस्थलेषु प्रोच्यते। एवं सति आदित्यो न वृकपदार्थः किन्तु तदतिरिक्तः, प्रत्युत रात्रिकाले आदित्यमण्डलस्यादर्शनेन रात्र्या तमसा वा तद् ग्रस्तमिति कल्पनासम्भवः। तस्य मोचनमश्विभ्यां कृतमिति वर्णनसंभवः।

वृकशब्दएवारण्ये शुनि प्रसिद्धो लोके, तस्य च शुनः प्राणिशरीरविकर्तनात् प्राणिहिंसाकारित्वाद् वृकशब्दबोध्यता। तत्र वृच्धातोर्हिंसार्थात्तस्य शब्दस्य सिद्धिः। अतएव निघण्टुषु हिंसार्थकेषु धातुषु वृणक्तीति पठितम्। एवं च विकर्तनसाम्येन हिंसाकर्तृत्वसाम्येन च वृकशब्देन तमो वा रात्रिर्वोच्यते।

आदित्यादर्शनेन तमसा तस्य वधवर्णनसंभवः। अह्नो विकर्तनेन वा तस्य वृकशब्दबोध्यता। एवं सति वृकशब्देन तमो गृहीत्वा तत्सकाशतो वर्तिकारूपस्य क्षुद्रपक्षिसदृशरूपस्यादित्यमण्डलस्याश्विभ्यां विमोचनं, विमोचनार्थं तयाह्वानमिति संभवः। अतएव प्रथममन्त्रार्थः सरलः। रात्र्या वृकशब्दार्थत्वे तत्र वर्तमानस्य तमस उषसो वापि वा वृकशब्दार्थत्वं संभवि। तदनुसारेण वृकशब्दार्थत्वं तमसः प्राप्तमुषसोऽपि।

प्रकृते उषारूपस्यैव वृकस्य ग्रहणाभिप्रायेणोच्यते, अरुणो वृक इति। स चारुणो वृकउषारूपः। उषा रात्र्याः प्रारम्भे भवति रात्र्या अवसानेऽपि। तत्रोभयस्थलीयोषसोरेकत्वं मत्वोच्यते मासकृदिति। तस्यार्थो मांसकृत् मांसकर्तनकारी। अनुस्वाराभावश्छान्दसत्वात्। प्रातस्तन्या उषसो मांसकृत्वं

मन्त्रान्तरे प्रकारान्तरेणोच्यते । यथाऽर्भवसूक्ते । तत्र ऋभवः स्तूयन्ते ते च अथ ऋभुर्विभ्वा वाज इति ।

तत्रर्भु रिन्द्रस्यादित्यस्य सुकर्मा, विभ्वा वरुणस्य सुकर्मा, वाजो देवाना सुकर्मेति ऋभुसूक्तस्थमन्त्रेण वाजो देवानामभवत्सुकर्मेन्द्रस्य ऋभुक्षा वरुणस्य विभ्वा इत्यनेन प्रतिपाद्यते । ततो ज्ञायते एकोऽस्तोत्तर कार्यकारो, अपरो दिवाभागे, तृतीयः प्रातःकाले । वरुणोऽस्तोत्तरवर्त्यादित्य । इन्द्रस्तु दिवाभागीयः । देवा रश्मयस्तु प्रातःकालीनाः । तेषामेव सुकर्मत्वमहस्सम्बन्धात् । तच्च तृतीयस्य कार्यम् । तदेषामृभूणां कार्याण्यपि ऋभुसूक्तगतमन्त्रे उच्यन्ते । तत्रोच्यते—

> शोणामेक उदकं गामवाजति मासमेके पिंशति सूनयाभृतम् ।
> आनिम्रुचः शकृदेको अपाभरत्किंस्वित्पुत्रेभ्यः पितरावुपातुरिति[1] ॥

निरुक्तकारेण निघण्टौ पठितम्, अरुण्यो गाव उषसाम् उषसामरुणवर्णा गावो वाहनानि इति तदर्थः । देवानां वाहनादिविषये निरुक्तकारेणोच्यते आत्मैवैषां वाहनमायुधं सर्वं देवस्य देवस्येति । ततो ज्ञायते अरुणवर्णा गावो रश्मयस्तदभिन्ना उषाः । रश्मीनां देवत्वं शतपथब्राह्मणे उच्यते इति पूर्वं प्रतिपादितम् । तत्र मन्त्रे उच्यते शोणामेक उदक गामवाजति शोणा अरुणवर्णा गौरर्थादुषोरूपिणी । तामरुणवर्णां गामेक ऋभुरर्थाद्विभ्वा उदकमव्यक्त तेजस्तमः कालिकम् । रात्रौ अव्यक्तस्य तेजसोऽप्त्वेन व्यवहारो वेदे इति पूर्वं प्रतिपादितम्, तत्पाययितुमित्यर्थः ।

अवाजति प्रेरयति । एकेनर्भुणा सायन्तनी उषोरूपिणी गौरुदकं प्रति नीयते । यथा लोके गोपालको गामुदकपानार्थं जलाशयं प्रति नयति तद्वत् । सा चैषा सायन्तनी उषाः । तत्कालतः परस्तात्तमोमयकालस्य प्रवृत्या तत्रत्यस्याव्यक्ततेजोरूपस्योदकस्य सविधे नयनं तस्या एव सम्भवतीति । प्रातस्तनीमुषसमभिप्रेत्योक्त मन्त्रे मासमेकः पिंशति सूनयभृतम् इति ।

एकः प्रातःकालिक ऋभुर्वाजरूपः । सूनया स्वल्पच्छुरिकया भृत संपादित कर्तितमिति यावत् । मासं पिंशति अरुणवर्णं करोति । अयभावः—प्राय उषःकाले प्रातः सायं चोदयात्पूर्वमस्तोत्तर चादित्यस्य समेघमरुणवर्णत्वं दृश्यते । ते चारुणा दृश्यमाना मेघा मासखण्डरूपाः । ते च कलामात्रोदितेनाऽस्तमितेन आदित्येन तदभिन्नयाच्छुरिकया कर्तिता इवेति । अरुणवर्णास्त उषसा सम्भृता इति ।

पृथिव्यास्तिर्यक् प्रसरणवशात् देशविशेषे आदित्यस्य स्वल्पकालमुदयस्ततोऽस्तमयः । पुनर्द्वितीयवारे पूर्वतोऽधिककालमादित्यस्योदयोत्तर सत्ता ततः पुनर-

---

१. ऋ. वे. १.१६१:१०

स्तमय इत्येवं क्रमेण दिनस्य विवर्धमानता। सा चानेकदिनपर्यन्ता ध्रुवसन्निकटदेशस्थले। तत्र स्वल्पकालमुदित आदित्योऽस्तं यच्छुनः पुच्छमिवावभासते। अतएव तस्य शुनः पुच्छत्वेन व्यवहारः। तदेतत्परस्तात्सत्यवसरे वर्णयिष्यते।

यथा शुनः पुच्छं स्वस्थानतो निर्गतं तिर्यक् भवदर्धवर्तुलाकारं भवति एवं तत्रादित्योऽपि क्षितिजत ऊर्ध्वमुद्गतोऽस्तं यच्छुनः पुच्छाकारो भासते। एवं स्वल्पकालं कलामात्ररूपं दृश्यमादित्यमुषस्सु अरुणवर्णासु मध्ये दृष्टिपथमुपागतम्, पुनरदृश्यमेवं भावमुपलक्ष्य अरुणवर्णान्तिराले दृश्याया आदित्यमण्डलकलायाश्छुरिकात्वं गृहीत्वा तयेमानि मांसखण्डानि कृत्तानीति कल्पना। एवं च सूनाहिंसिका छुरिका। तया भृनं संपादितं मांसमेकः पिंशतीत्युक्तम्। यद्यपीदमुभयविधापः कालयोः सम्भवति तथापि शोणामिक इत्यनेन सायन्तन्याः पृथग्वचनादत्र प्रातस्तन्येवोषा अभिप्रेयते।

एवं च प्रातस्तन्योषसा तद्रूपेण वाजेन वाजेन सूनया छुरिकया संपादितं मांसं पिंश्यतेऽरुणवर्णं क्रियते संगृह्यते वा। पिशि अवयव इति धातुः। ततः पेशनमवयवसंपादनमित्यर्थः। रूपसंपादने तस्य संभवः। एवं च प्रातस्तन्या उषसः सायन्तन्या वा मांसकृत्वं भवतीत्युक्तम्। सा च प्रकृतेऽरुणोऽरुणवर्णः मांसकृत् मांसकर्तनकारी वृकस्तद्रूपिणी उषाः। मा सकृदिति पदद्वयच्छेदे वृके मांसकृत्वं वृकस्वभावतो लब्धम्।

अस्तगतस्यादित्यस्योक्तिरियम्। तेनोच्यतेऽरुणो मांसकृद्वृकः पथां यन्तं मा सकृद्ददर्श प्रथमम्, ततस्तमःप्रकृत्या तदीयव्यापाराभावः। पुनः प्रातःकाले तामुपसं दृष्ट्वोच्यते यं पूर्वदृष्ट एव वृक इति गृहीत्वा पुनर्व्यापरणे प्रवृत्तः। तदुक्तं उज्जिहीते निचाय्य। निचाय्य प्रथमतो दृष्ट्वा क्रमणार्थमुज्जिहीते ऊर्ध्वं गच्छन्नाक्रामतीवेति कल्पना। इयं च तष्टेव पृष्ठ्यामयीत्युपमानेन व्यज्यते। स पृष्ठे आमयवान् दुःखयुक्तः हठादुत्थातुमक्षमस्तष्टा लक्ष्यं काष्ठादिकं प्रथमं पश्यति तत उत्थातुं चेष्टते ततस्तस्य लक्ष्यानुगो व्यापारो भवति।

एवमेतेनारुणेन वृकेण मार्गेण गच्छन्नहं दृष्टः प्रथमम्। ततः स मात्राक्रमितुमुत्कालं कृतवान्। उत्काले मध्यदेशासम्बन्धः स्पष्टः। तादृशोऽत्र तमःकाले उषसो सम्बन्धात्पुनस्तस्या दर्शनादुद्गमनकः पनेति। एवं सत्येवोपमाने तष्टुः पृष्ठ्यामयीति विशेषणदानं सार्थकम्। एवंवृकेणाक्रमणादिकल्पनं हठाद् बुद्धिस्थं न भवति, किन्तु पूर्वोक्तसकृद्विचारेणेति कूटवद्भावं मनसि कृत्वोच्यते हे द्यावापृथिवी तत्स्या जना वा, अस्य मम वचसस्तात्पर्यं वित्तं जानीतम्, जानीथेत्यर्थः। अस्मिन्सूक्ते प्रतिमन्त्रमेतादृशकूटकल्पनवदुक्तस्तस्य तात्पर्यं जानीतमित्यस्यावृत्तिः प्रतिमन्त्रम्।

एवं सति वृकपदार्थोऽत्र रात्रिस्तदवयवभूता उषा इत्येव। न तु आदित्यः साजात्यात् वर्तिकात्वं चादित्यस्य साजात्यात्प्रसिद्धेश्च वेदे इति तस्या आदित्य-

रूपाया वर्तिकाया मोचनमश्विभ्यां क्रियत इत्यश्विनो. स्तुति.। अश्विनोर्नासत्यदस्त्रयोः उदयात्पूर्वमस्तोत्तर च सहप्रवृत्ति । तनोदयात्पूर्वंसहप्रवृत्ति गृहीत्वा परस्तादादित्यस्योदयेनाश्विभ्यामादित्यस्य तद्रूपिण्या वर्तिकया अरुणवर्णवृकसकाशतो मोचन कृतमिति कल्पना ।

एव सत्येवोक्तमन्त्रस्य स्पष्टार्थत्वम। अन्यथा चन्द्रमसो वृकत्वकल्पने ऋषिणोक्ते यथा यन्त त, नक्षत्रादिक च दृष्ट्वा तेन नक्षत्रेण चन्द्रमा युक्तो भवति । तादृश मा प्रति दृष्टवानिति वर्णने कष्टरूपत्वाभावेन वित्त मे द्यावापृथिवी इति मन्त्रांशस्य समञ्जसता न स्यात् । आदित्यपरत्वे तूक्तरीत्या स्पष्टार्थत्वम् । वृकशब्दस्यादित्यपरत्वे वर्तिकाशब्दस्योष. परत्वे साजात्याभाव । न हि सा पक्षीव पिण्डीभूता दृश्यते आदित्ये तु तत्सम्भव इति पूर्वमुक्तमेव ।

### २९. वेदे प्रयुज्यमानेच्छशब्दसम्बन्धेऽपि न विस्पष्टार्थता

एव वेदे प्रयुज्यमानेच्छशब्दविषयेऽपि न विस्पष्टनार्थता । इच्छब्दविषये निरुक्तकारेणोच्यते "मन्त्रेष्विच्छब्द. पादपूरणमात्रफलोऽनर्थक"। तदुक्त तेन अमिताक्षरेष्वनर्थकास्ते पदपूरणा मिताक्षरेषु कमीमिद्विति । तत्र कमादिविषये न प्रकृते विचारः किन्तु इच्छब्दविषये । तस्यानर्थकत्व तेनोक्तम् । व्याख्यातृभिर्व्याख्यानावसरे इच्छब्दस्य यथाभिमत सार्थक्यमुच्यत । यथा यदङ्गेति मन्त्र भाष्यकारेणोच्यते । तथाहि स मन्त्र —

यदङ्ग दाशुषे त्वमग्ने भद्र करिष्यसि ।
तवेत्तत्सत्यमङ्गिर.[1] । इति ।

अत्र सायणेनोच्यते-अङ्गेत्यामन्त्रणे, हे अङ्ग अग्ने दाशुषे हविर्दत्तवते यजमानाय तत्कर्मानुसारेण भद्र वित्तगृहादि करिष्यसि । दास्यसीत्यर्थः । तत्तवेद् । तत्तवैव । अत्र यजमानाय प्रजापश्वादिरूपफलदानेन स यजमान साधनसपत्त्या पुनर्याग करिष्यति तथासति तत्फलदान तवैवोपकारकम् । तदुक्तरीत्या तवोपकारकत्व तत्सत्य न तु विपर्यस्त, हे अङ्गिर. अङ्गिरः सकाशत उत्पन्नाग्ने अथवाङ्गारजाग्ने इति ।

अत्र भाष्ये इच्छब्दस्यावधारणार्थत्वमुक्त तवेत् तवैवेति । परन्तु वेदे बहुषु-स्थलेषु इत्तच्छब्दौ सह प्रयुज्येते, यथा प्रकृते तवेत्तद् इति । एवं मैत्रावरुण मन्त्रे तदित्समानमाशार्थे इत्यत्र तयोः सहप्रयोगः । एव सोम्य मन्त्रे त्वामच्छाचरामसि तदिदर्थं दिवेदिवे इति । बहुस्थलेषु एव केवलोऽपीच्छब्द प्रयुज्यते यथा विश्वेदिन्द्रस्य वीर्या कृतानि इत्यादिषु । तवेत्तदित्युभयग्रहणे इच्छब्दस्यार्थाभावो न वक्तु शक्यः प्रत्युत तच्छब्दवशतः कश्चनार्थ कल्प्य, एव केवलस्थलेऽपि अर्थविशेषग्रहणेन मन्त्रार्थस्य सम्यगुपकारो भवति ।

---

१. ऋ. व. १.१:६

यथा प्रकृते मन्त्रेऽग्निं प्रत्युच्यते हविर्दानवते यजमानाय भद्रकरणं तव इत्तत्सत्यमिति । तत्र ऋतसत्यशब्दयोर्लोके समानार्थत्वेऽपि वेदे सर्वत्र न समानार्थता यथा ऋतं च सत्यं चेति मन्त्रे । तत्र ऋतसत्यशब्दयोर्न समानार्थत्वम् । तथासत्यन्तरवर्णनेनैवोपपत्तावपरग्रहणवैयर्थ्यं स्यात् । तस्मादृतशब्दस्य दिनार्थकत्वं दिनाभिन्नादित्यार्थकत्वं तदभिन्नयज्ञार्थकत्वं वा । अतएव निरुक्तकारेण ऋतशब्दकथनावसरे सत्यं वा यज्ञं वेति प्रतिपादितम् । तत्र समानार्थत्वमभिप्रेत्य सत्यं वेति वचन, पर वचनमसमानार्थत्वे । अतएव मैत्रावरुणमन्त्रेऽनेकवारमृतशब्दं गृहीत्वा वर्णनमुपपद्यते । सच मन्त्रः—

ऋतेन मित्रावरुणा वृतावृधावृतस्पृशा ।
ऋतुं बृहन्तमाशाथे[1] ॥ इति ॥

अत्र मित्रावरुणयोर्ऋतेन बृहतः क्रतोः कर्मणो व्याप्तिवचनाद्दिनसम्बन्धो व्यज्यते । ऋतावृधौ ऋतस्पृशा इत्यनेन ऋतवर्धकत्वमृतस्पृक्त्वं चोपपादयितुम् ऋतभिन्नसम्बन्धोऽपेक्षणीयः । तथा सति ऋतभिन्नसम्बन्धिनावेतावृतसविधवर्तित्वेनवर्तवर्धकौ ऋतस्पर्शकारकाविति वर्णनं सम्यक् भवति ।

तयोर्ऋतभिन्नसम्बन्धो मित्रावरुणसूक्ते वर्णनतो ज्ञायते । तत्रोच्यते "दानुमत्या बृहन्त गर्तमासाथे" इति । दानुमतो रात्रिः । दाभाभ्यांनु रित्योणादिकेन सूत्रेण दाधातोर्नुप्रत्ययात् । दानु दानं तद्वती । रात्रिशब्दोऽपि दानवत्वबोधकः । रा दाने इत्यस्मात् राशदिभ्यां त्रिप् इत्यनेन त्रिप्प्रत्ययात् । रात्रिः दानेन तद्वती । अवश्यायादिदानाद्रात्रिर्दानुमतो । तस्या बृहन् गर्तश्चोक्तरीत्या तेजसो भावात्मकः । तत्र तयोर्वर्तमानत्वं तेन मन्त्रेण प्रतिपद्यते । तेन तयो रात्रिकालत्वं ज्ञायते ।

स च रात्रिकाल आदित्यमण्डलसविधवर्ती उदयात्पूर्वोऽस्तमयादुत्तरो वा व्यवहितः । अतएव तौ प्रति सूक्ते उच्यते "सहस्रस्थूणं बिभृथः सह द्वा" विति । तत्र सहस्रस्थूणमित्यनेनादित्यमण्डलमुच्यते सहस्ररश्मियुक्तत्वात्तस्य रश्मीनां स्थूणात्वेन वर्णनं साजात्यात् । यथा प्रलम्बमाना मस्तके वृत्ताकारवतो स्थूणा भवति एवमिमे रश्मयोऽप्यादित्यात्प्रलम्बमाना मस्तके वृत्ताकारमण्डलसम्बन्धिन इति ।

सहस्रस्थूणं सहस्ररश्म्युपेतमादित्यमण्डलं सह धारयथ इति सह विधारकत्वमुच्यमानं संगच्छते । यथा दुरादानपदार्थस्य ग्रहणे सन्दंशस्तस्योभयपार्श्ववर्ती अव्यवहितो विधारको भवति तद्वत् । एवं च मुख्यं दिनमादित्योदयेनादित्यसम्बन्धात् । तस्यासमन्तात्सह विधारकत्वोक्त्या तयो रात्रिवर्तिमण्डलसविधवर्ती दिनप्रारम्भीयो रात्रिप्रारम्भीयश्च काल इति भवति । दिनस्य ऋतशब्दार्थत्वे

---

१. ऋ. वे. १:२:८

रात्रिस्तद्भिन्ना, तत्सम्बन्धित्वमुक्तरीत्योच्यमानं सगतम्। अतएव रात्र्यावसाने दिनप्रारम्भकाले वर्तमानत्वेन तयोर्ऋतस्पृक्त्वमुच्यमानं सगतम्।

एवं दिनं यथादित्योदयात्तदस्तमयं यावन्मुख्यं भवति एवं सवितृकालतोऽपि अमुख्यं दिनारम्भ उक्तः स तु पूर्वमुक्त एव। सवितुश्च मित्राभिन्नतया ताभ्यां दिनसम्बन्धः। तच्च सवितृकालतः प्रवर्तमानं दिनं न मुख्यं, किन्तु वर्धितमिति तयो [ऋ]तवृधत्वं मन्त्रे उच्यमानं सगतं भवति। एवं च ऋतशब्दतो दिनार्थकस्तद्भिन्ना च रात्रिस्तत्सम्बन्धिता सत्यशब्दस्य। सा च रात्रिः सत्यशब्देनोच्यते तद्गतं तेजोऽपि तद्वत् सत्यशब्देनोच्यते।

ऋत सत्यशब्दयोर्भिन्नार्थकत्वादेव सन्ध्यानुष्ठाने आचमने प्रयुज्यमानमन्त्राभ्यां द्विविधज्योतिषोर्वचनं सगतम्। दिवासन्ध्यायामाचमनमन्त्रे "इदमहं मामृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा" इत्यादित्यज्योतिषोहोमाधारत्ववचनं, रात्रिसन्ध्यायां तस्मिन् मन्त्रे "सत्ये ज्योतिषि जुहोमि स्वाहा" इति सत्यस्य ज्योतिषोवचनम्।

एवं दिवा भोजनेऽन्नपरिसेचने रात्रिभोजनेऽन्नपरिसेचने यौ मन्त्रौ प्रयुज्येते ताभ्यामप्येवमेवार्थः प्रतीयते। सत्यं त्वर्तेन परिषिञ्चामि ऋतं त्वा सत्येन परिषिञ्चामि इति मन्त्रौ, तयोराद्यो दिनभोजने द्वितीयश्च रात्रिभोजने प्रयुज्यते। अनयोर्मन्त्रयोर्ऋतसत्यशब्दयोर्विभिन्नविभक्तिकत्वेनैकस्मिन्वाक्ये प्रयोगात्तयोर्भिन्नार्थत्वप्रतीतिः। एवञ्च ऋतभिन्नं सत्यमर्थात्सत्यभिन्नता ऋते प्रतीता भवति। तच्च सत्यमृताभावो वा तत्र वर्तमानमव्यक्तं तेजो वेत्यन्यत्।

एवं चोक्ताग्नेये मन्त्रेऽग्निं प्रत्युच्यमानं यजमानाय भद्रदानं भविष्यत्कालिकं तव सत्यस्वरूपम्। अर्थात्त्वदभावकालिकम्। पूर्वोक्तरीत्या वह्नेरभावो वह्नेः सत्यमिति भवति। तच्च वह्नेः सत्यमुभयत्र पृथिवीलोके द्योलोके चेति। तत्र पूर्वोक्तलोककल्पनायां वह्नेः पृथिवीसम्बन्धित्वं तत्र च यजमानेन हविर्दानादिकं क्रियते यज्ञस्वरूपं क्रियारूपम्। तस्य फलं च भविष्यकालिके जन्मनि। तत्र यजमानोऽपि तत्रत्य आदित्य एव।

तत्र स्थितेन तेन क्रियमाणो यज्ञो मानुषो यज्ञः। एवं द्योलोकावस्थाने तत्र स्थितेन तेन क्रियमाणो यज्ञो दैवो यज्ञः। तत्र मानुषकयज्ञे तज्जन्यं फलं जन्मान्तरे। जन्मान्तरं पूर्वस्य जन्मनोऽवसाने मरणोत्तरम्। तत्र पृथिव्यां जातस्य तत्रोदितस्यादित्यस्य मरणं तत्रादर्शने द्योलोके उदयरूपे जन्मनि। तदानीं तस्य पूर्वयजमानस्य यद्भद्ररूपं फलं वित्तगृहप्रजापशुरूपं तत्तत्र द्योलोके भवेत्। द्योलोके सूर्यदेवताकत्वं न वह्निदेवताकत्वमिति वह्नेस्तत्र तत्सत्यम्। एतच्च विदूरवर्तितच्छब्देनोच्यते।

एव तत्र यज्ञे यजमानस्य यत्पूर्वोक्तभद्ररूपं फलं तत्तत्र भविष्यत्कालिकं तत्पृथिवीलोके इति तस्य पृथिव्यां सविधवर्तित्वेन इच्छब्देन वचनम्। तदुभयरूपं सविधवर्तिविदूरवर्ति च वह्नेः सत्यरूपमिति गृहीत्वोच्यते मन्त्रे "तवेत्तत्सत्यम्" इति। एवं चात्रेच्छब्देन पृथिवीसम्बन्धित्वं तच्छब्देन विदूरवर्तिद्योलोकसम्बन्धित्वं बोध्यते।

एवमेव मैत्रावरुणमन्त्रे तदित्समानमाशाथे इत्यत्र मैत्रावरुणयोः सह-प्रवृत्तरूपत्वेन तयोरित्तत्सम्बन्ध उभयोः समानरूप एव। यदेकस्य सविधवर्ति तदेवापरस्य, यच्च विदूरवर्ति तदेवापरस्येति गृहीत्वोक्तं "तदित्समानमाशाथे" इति। सोम्येऽपि मन्त्रे देवताभिः सोमं प्रत्युच्यते हे सोम त्वामच्छाभिमुख्येन तदिदर्थ तदिदोरन्त चरामसि इति।

अर्थशब्देन गन्तव्यस्थानस्यावसानस्थलं बोध्यते। अतएवाग्निं प्रति मन्त्रे उच्यते "अग्नेः पूर्वे भ्रातरो अर्थमेतं रथीवाध्वानमन्वावरीवु" रिति। "अग्नेः पूर्वे भ्रातरो रथी अध्वनोऽन्तमिवेतमर्थमनुवृत्तवन्तः। अवसानस्थलं प्राप्ता मृता"इत्यर्थ इति पूर्वं प्रतिपादितम्। एवञ्चेच्छब्देन पृथिवीसम्बन्धित्वं तच्छब्देन विदूर-द्युलोकसम्बन्धित्वमर्थो बोध्यते, न तु नैरर्थक्यं तस्य। अत एवैन्द्रे सूक्ते—

निगव्यवोऽनवो द्रुह्यवश्च षष्टिः शता सुषुपुः षट्सहस्रा।
षष्टिर्वीरासो अधि षड्दुवोयु विश्वेदिन्द्रस्य वीर्या कृतानि॥
ऋ. सं. (७ : १८ : १४)

इत्यस्मिन् मन्त्रे इन्द्रस्य पृथिवीलोकस्थानि कृतानि सर्वाणि वीर्याण्युच्यन्ते इच्छब्देन। तत्र विश्वा सर्वाणि इत्पृथिवीलोकसम्बन्धीनि वीर्या वीर्याणि कर्माणीन्द्रस्येत्युच्यते। तानि कर्माणि मन्त्रपूर्वार्धेनोच्यन्ते निगव्यव इत्यनेन। अत्र मन्त्र रात्र्याः पञ्चधा विभागस्तद्भेदभिन्नानि पञ्चविधानि कार्याण्यत्रो-च्यन्ते तानि सर्वाणीन्द्रकृतानि इत् पृथिवीलोके इति।

तत्र गव्यवो गवार्थिनोऽनवो द्रुह्यवश्च प्रतिस्वं षट्सहस्रा षट्सहस्राणि। अगवः शब्दो मनुष्यनाम द्रुह्यवोऽपि मनुष्यनामैव। तत्र गवार्थित्वमुपोऽर्थित्वं गृहीत्वा पृथिवीसम्बन्धान्मनुष्या अर्थाद्भूलोकसम्बन्धिन एव।

एतावता भागद्वयमुपर्युक्तं संख्या च द्वादशसहस्राणि। ततः परस्तत्षष्टिः शता षट्सहस्राण्येव सुषुपुः स्वापं कृतवन्तो मनुष्यसम्बन्धिनः पृथिवीसम्बन्धिन एव। केवलतमोमयत्वेन तत्र क्रियाभावात्स्वापवचनम्। तदपीन्द्रकर्मैव। ततः षष्टिः शतेत्यध्याहार्थं षष्टिः शता षष्टिः शतानि षट्सहस्राणि वीरासो वीराणि शत्रूणामभिभवकर्तॄणि। तमसो विनाशकानि। ततोऽधिकं षट् सहस्राणि दुवोयु, दुवः परिचर्या स्तुतिरिति यावत्। तत्कर्तुमिच्छत्।

एव सर्वं मिलित्वा त्रिशतसहस्राणि तावत्पर्यन्त तेन तेन रूपेण तावत्काल-सम्बन्धादिदमिन्द्रकर्तृकमिति गृहीत्वोक्त विश्वा सर्वाणि इत् पृथिवीलोक-सम्बन्धीनि इन्द्रस्य कर्माणीत्यर्थ'। एव चैत्तच्छब्दयोर्न सर्वत्र नैरर्थक्यमिति।

४० विपुणशब्दार्थविचार:

एव विपुणशब्दार्थाविज्ञानेनास्पष्टार्थता मन्त्रस्य। अथ शब्दो निघण्टुषु अनवगतार्थेषु पठ्यते। निरुक्तकारेणेम शब्द गृहीत्वा तदर्थविज्ञानाय निगम उक्त'। यथा—

न यातव इन्द्रजूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः।
स शर्धदर्यो विपुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋत न ॥इति।
(ऋ वे १ २१.५)

अस्य निरुक्तकारेण व्याख्या क्रियते-स उत्सहता यो विपुणस्य जन्तो-र्विषमस्य मा शिश्नदेवा अब्रह्मचर्याः। शिश्नं श्नथते। अपि गुर्ऋतं नः। सत्य वा यज्ञं वा इति। दुर्गाचार्येणात्र व्याख्या क्रियते। यथा-हे भगवन् इन्द्र तथ, कुरु यथा नेममस्मद्यज्ञ यातव यातयितार यज्ञविघ्नकर्तार. केचिदपि जूजुवुरा-गच्छेयुरित्यर्थ। किञ्च हे शविष्ठ बलिष्ठ ये एते वन्दना वन्दितारो लाटगौडादय. जानपदीभिर्वेद्याभिराकृतिभिर्युक्ताः। किं ब्राह्मणा एते स्यु., उतान्यजातीयाः केचिदिति।

अथवा आवेदितव्याभि. प्रवृत्तिभिर्युक्ता। नहि तासा प्रवृत्तीनामन्तोऽस्ति याभिस्ते प्रवर्तन्ते चपलत्वात्। किञ्च येऽपि श्रोत्रिया अपि सन्त. शिश्नदेवा शिश्नेन नित्यमेव प्रकीर्णाभि स्त्रीभिः साक क्रीडन्त आसते श्रौतानिकर्माण्यु-त्सृज्य। तेऽपि युष्मदनुग्रहादिदमस्माक ऋतं यज्ञ मा अपिगु' मा आगच्छन्तु। नोस्माक तैरपि यज्ञमभिगच्छद्भिरर्थोऽस्तीत्यभिप्रायः। आह कीदृशास्तर्हि यज्ञ-मागच्छन्त्विति। उच्यते। स शर्धत्। स एवोत्सहतामिममस्मद्यज्ञमागन्तु, य एवायं ईश्वर आत्मीयानामिन्द्रियाणाम्। जितेन्द्रिय इत्यर्थः।

यश्च विपुणस्य विषमस्य यज्ञविध्वंसयितुर्जन्तोर्मनुष्यस्य निग्रहाय समर्थः। येन परिपाल्यमाना एत यज्ञमविघ्नेन समाप्येमहीत्यभिप्रायः। एवमेतस्मिन्मन्त्रे यातवो वन्दना शिश्नदेवाश्च मा आगच्छन्तु इति प्रतिषिद्धेष्वेतेषु अनिष्टत्वा-देतेषा स शर्धदर्यः इति श्रूयमाणमार्यवृत्तमनुष्यागमनविषयमेतद्भवति तस्येष्ट-त्वात्, स चाभ्यागतः सन्नवश्य विपुणस्य विषमस्य मनुष्यस्य निग्रह करोति। तस्माद् विपुणस्येति शब्दो विषमस्येत्युपपद्यते इति।

एव चात्र भाष्यकृता मन्त्रे यातवो वन्दनाः शिश्नदेवा इति शब्ददर्शनेन विपुणशब्दस्यानिष्टार्थकत्वमिति गृहीत्वा विपुणशब्दस्य विषमार्थमुक्तम्। यात्वा-दीनामृते प्राप्तिमभूदियुक्तत्वेन तेऽपि अनिष्टा.। स्व तेषु दोषकल्पनया। शिश्न-देवा इति शब्दस्तु विशेषविचारमकृत्वाऽनिष्टपर इति गहीतं तथा व्याख्यात च।

तत्र टीकाकृता बहुतरार्थस्य योजनेन भाष्योक्तार्थ एव पुष्टतां नीतः। तत्रोक्ता यातव इत्यादयः शब्दा स्वभावतोऽनिष्टबोधका न भवन्ति। यातव इत्यनेन कर्मसु प्रवर्तनं बोध्यते। नहि कर्मप्रवर्तनमात्रं दुष्टरूपम्। कर्मप्रवर्तने प्रवर्तयितुः प्रवर्त्यस्य दुःखोत्पादनपूर्वं प्रवर्तनदोषाय भवेत् न तु सामान्यतः कर्मसु प्रवर्तनं दोषः।

एवं वन्दनमपि न दुष्टं स्वभावतः किन्त्वभिप्रायभेदेन दुःखपर्यवसायि दुष्टं, न तु सामान्यतस्तस्य दुष्टत्वम्। एवं शिश्नदेवा इति वर्णनमपि अश्लीलशिश्नशब्दयोगमात्रेण शिश्नदेवाः शब्दो दोषपर्यवसायो भवति। परस्परसाहित्येऽपि तेषां न दुष्टार्थपरत्वं किन्तु प्रकारान्तरेण दोषोपक्रमे तत्प्रकरणपठिता एते दोषयुक्तार्थबोधका भवेयुरित्यनिष्टार्थकतैतेषां स्यात्। प्रकृते च तादृशदोषोपक्रमे प्रमाणाभावेन भाष्यकारीयं तट्टीकाकर्तुश्च व्याख्यानमयुक्तमिति मन्त्रस्यार्थो न विज्ञातो भवति।

आदित्यपरत्वे तस्मिन्नानिष्टगन्धोऽपि। तदर्थं प्रयासः—तत्रैतस्मिन् मन्त्रे आदित्यस्योदयवर्णना क्रियते। उदयावसरे च तस्य किरणैरसम्बन्धः। किरणानां सम्बन्धो हि उदयोत्तरम्। अस्तान्तरीयाश्च किरणाः अस्तोत्तरं तत्सम्बन्धार्थं तत्पथा गच्छन्तीति तैरप्ययोगः। आदित्यस्य किरणैर्योगः सम्मुखभावेन पाश्चात्यानां, पौरस्त्यानां च किरणानां तिर्यक्त्वेन भवति। उदयावसरे च त्रिविधकिरणायोग इत्ययमर्थोऽत्र मन्त्रे प्रोच्यते। सूर्योदयकालिकी अत्र वर्णना। स च सूर्यस्योदयः सुमेरौ देवतानिवासस्थाने वर्ण्यते। तथाहि। न यातव इन्द्र "जुजुवुर्नः" इति।

यातवः शब्द उदयप्राक्कालिककिरणानां बोधकः। ते हि किरणा रात्रेरवसानसम्पादकाः सन्तः प्राणिनस्तदीयव्यापारे प्रवर्तयन्तस्तान्यातयन्ति। प्रयत्नयुक्तान् कुर्वन्ति। रात्रौ तमसा सर्वपदार्थेष्वावृतेषु पदार्थानामभावान्निद्रयाभिभावाच्च प्रयत्नविहीनता प्राणिनां जायते। अवसितायां च रात्र्यां सर्वपदार्थप्रकाशने तस्य तस्य प्राणिनः स्वस्वोचितव्यापारे प्रवृत्तिरुत्पद्यते, सा चैतैः किरणैः पदार्थानां प्रकाशनेन कारितेति ते यातयितारः प्रयत्नस्य प्रवर्तका भवन्ति इत्यभिप्रेत्य ते यातव इत्युच्यते।

एतादृशं प्रवर्तनं यातनमभिप्रेत्य सवितुस्तदभिन्नस्य मित्रस्य मित्रो जनान्यातयति ब्रुवाण इति जनानां यातनमुच्यते। एवं च मित्रस्य तदभिन्नस्य सवितुः प्रातःकालिकाः किरणा यातवः इत्युच्यन्ते। तदुक्तं हे इन्द्र यातव उक्तरीत्या प्राणिनां स्वव्यापारे प्रवर्तका यातवः किरणाः प्रातःकालिका इति यावत्। नोऽस्माकमृतमुदयन्तमादित्यं न जुजुवुः। न गतवन्तो भवन्तु। आदित्येन सम्बद्धा मा भवन्तु। अतीतो हि तेषां समयः। आदित्यस्येदानीमुदीयमानत्वादित्यर्थः।

एवं वन्दना अपि अस्तोत्तरवर्तिनः किरणाः । ते हि अस्त यन्त गत वा आदित्य विरक्त विरक्ततामुपगत क्रुद्धमिव मन्वानास्त नमस्कारेण प्रसादयन्त इव तमनुसरन्ति । अत एवैतान् किरणानभिप्रेत्य "एहिमायाम" इति विशेषण प्रयुज्यते वेदे । भाष्यकृतोक्तशब्दस्य निर्वचनप्रदर्शनव्याजेनोक्तम् सोचीकमग्निमप्सु प्रविष्टम् एहिमा यासी. इत्युक्तवन्त इति तदनुकरणहेतुकोऽय शब्दस्तपाम् । अस्त गतमादित्य विरक्त मत्वा तत्प्रसादनायेव तदीयमार्गेण गच्छन्तस्तदनुसरन्त. प्रसादनायेति कल्पना। प्रसादन च नमस्कारपूर्वकानुनयेनेति तेऽपि तमादित्य नमस्कारेणानुनयन्तीवेति गृहीत्वा वन्दनशब्देनोच्यन्ते ।

एवं च वन्दना नमस्कारकर्तारस्ते किरणा नोऽस्माकमृतमुदयार्थं प्राप्तमुदीयमानमादित्य न जुजुवुर्न प्राप्ता भवन्तु। तेपामस्तोत्तरवर्तितया यत्र चास्तस्तद्देशीयैर्व्यापारैस्तद्देशप्रकाशनरूपैः प्रवृत्तिरिति अत्रोदीयमानदेशे प्राप्ति । यतोऽत्रोदयवस्थादित्यस्य । एव सति तेपामपि अनवसर इति । अस्तमेष्यमाणस्य उदेष्यमाणस्य वा सहप्रवृत्त्योभयो. प्राप्तिस्तदभिप्रायेणोच्यते स वर्धदिति ।

यद्यप्यादित्यस्यैवय तथापि देशादिरूपोपाधिभेदवशात्तद्भेद मत्वा भेदेन व्यपदेशः । यश्च देवतासूदयन् भवति स देवरूप । यश्चास्तमुपगच्छन् मनुष्येषु अर्थात्कुमेरौ भवति स तु मनुष्यरूपो भवति । देवलोकश्च सुमेरौ, तद्विपरीते कुमेरौ मनुष्यलोक इति पुरस्तादुक्तमेव । देवेषूदयस्थल मनुष्येष्वस्तमयस्थलम् । उभयोर्युगपत्प्रवृत्तिः । यथायमेकत्र उदयनमस्तमयनरूप व्यापार प्रपद्यते तथा तथा परत्र तद्विरुद्धव्यापाराविष्टो भवति । प्रकृते च देवतासु उदत् प्रवृत्तस्तदानीमेवासौ मनुष्येष्वस्तमेतु प्रवर्तते । यावत्या मात्रयोदेति तावत्या मात्रयाऽन्यत्रास्तमेतीति । तदिद परस्परद्वन्द्वमिव भवति । तदेवाभिप्रेत्य तस्य देवासुरयुद्धत्वेन वर्णना ।

किञ्चेदमेवाभिप्रेत्य "शूद्रार्यौ चर्मणि व्यायच्छाते तमार्य वर्णमुज्जापन्ती" त्यनेन परिमण्डलस्यादित्यस्य प्रतीकरूप परिमण्डल चर्म तस्य शूद्रार्याभ्या भिन्नदेशे समाकर्षणरूप व्यायमनुमुच्यते ब्राह्मणेऽश्वमेधप्रकरणे । एव सति प्रकृते विषुणः जन्तुर्देवमनुष्यरूपसर्वदेशसम्बन्धरूपो मर्त्यः अस्तमयन् स्यात् । अर्यश्चोदयन् स्याद्देवेषु । अनयोर्जन्त्वार्ययो. परस्पराभिभवार्था प्रवृत्ति. चर्मव्यायमनेन बोध्यते । तत्रार्यो बलवान् भवतु, अन्यमभिभवतु इत्यभिप्रायेणोच्यते सः प्रसिद्धोऽर्थादुदयन् । अर्यो गमनशील आदित्यः । विषुणस्य नानारूपस्य तेजस्तमोवैशिष्ट्येन नाना रूपता । मनुष्यलोक देवलोकव्याप्त्या सर्वदेशसम्बन्धिता । तादृशस्य जन्तोमर्त्यस्यास्त प्राप्नुवत कुमेरोरित्यर्थः शर्धत् बलवान् भवतु तस्याभिभव करोत्वित्यर्थः । शृध-धातोरभिभवार्थत्व तत्कारणबलार्थत्व चेत्यर्थः ।

एवं चेदानीं नोदयात्प्राग्वर्तिनां वा अस्तोत्तरवर्तिनां वा किरणानामवसरः । नर्त्यस्य चाभिभवेन निरासः । उदयोत्तरवर्तिनामपि तदप्राप्तिरुच्यते मा शिश्नदेवा इति । अयं भावः आदित्यस्य सम्पूर्णोदये तस्येन्द्रियरूपता वेदे वर्ण्यते । सा चोदयावसरेऽस्तोत्तरं च न भवति । अत एवैतरेयब्राह्मणे उच्यते दक्षिणं पादमवनेनिजेऽस्मिन्राष्ट्र इन्द्रियं दधामि । सव्यं पादमवनेनिजेऽस्मिन् राष्ट्र इन्द्रियं वर्धयामि । इति ।

आदित्ये पादकल्पनयाऽवनेजनं प्रक्षालनं पादस्य । तत्तु मलसम्बन्धे । मल-सम्बन्धश्च रात्रौ । अस्तावसरे तेन स्वीयतेजसोऽग्नौ निधानेन तस्य तेजोराहित्या-न्मलिनत्वमिति कल्पना । तस्यावनेजनं मलिनस्थले । तद्विरुद्धदेशे चासौ प्रकाश-मानो भवति । तद्गृहीत्वोच्यते यदा दक्षिणं प्रदक्षिणगमनावर्तमानं सुमेरावादित्य-रूपं पादमवनेनिजे प्रक्षालयामि तदानीमस्मिन्कुमेरुरूपे राष्ट्रे इन्द्रियं दधामि । यदा च सव्यं पादं कुमेरुगतादित्यरूपं पादमवनेनिजे प्रक्षालयामि तदानीं सुमेराव-स्मिन्राष्ट्र इन्द्रियं वर्धयामीति ।

नैनोदितस्यादित्यस्येन्द्रियरूपत्वं न उदयतो वा अस्तंगतस्य वेति व्यक्तम् । अत एव ब्राह्मण उच्यते वरुणस्य वा अभिषिच्यमानस्येन्द्रियं वीर्यं व्यपक्रामत् । अपक्रान्तस्य त्रेधाभाव उच्यते-तृतीयं भृगुस्तृतीयं श्रायन्तीयं तृतीयं सरस्वत्यभव-दिति । एतेनेन्द्रियत्वं दिवाभागे उदयोत्तरस्यादित्यस्येति तद्भावः ।

उदयोत्तरं आदित्यस्येन्द्रियत्वात्तदवसरीयाणां किरणानां तद्देवत्वं इन्द्रियं देवः प्रकाशमान एषामिति व्युत्पत्त्या ते किरणाः शिश्नदेवाः । तेऽपि अस्माक-मृतमुदयन्तमादित्यं नापिगुरुत्वं प्रति प्राप्ता नाऽभूवन्, अत्र लीना नाऽभूवन्निति ।

उदयावसरे तेषामनवसर इति तेऽपि अप्रोदयात्स्यादित्ये सम्बद्धा ना-भूवन्नित्यर्थः । उदयावसरे आदित्यस्यानिन्द्रियभावो मैत्रावरुणे सूक्ते उच्यते । तथाहि मन्त्रोक्तम् वक्षं दधाते अपसम् इति । वक्षमुदीयमानमादित्यं मित्रावरुणौ दधाते धारयत इति । तदादित्यस्य विशेषणमुच्यते अपसमिति । तेन शब्देन पसरूपत्वाभावो बोध्यते । पसः शब्दस्येन्द्रियपरत्वं वर्णव्यत्यासात् सप इत्यस्य विपर्यासेन पसभावः ।

परिशिष्टाध्याये तदुच्यते गतमावेशितं पस इति । तत्र यथा पसः शब्दो व्यत्ययकृत एवं सपशब्दोऽपीति । एवं च वक्षस्य अपसमिति विशेषणात्तस्यानि-न्द्रियभावो व्यज्यते । तदेवमुदयोत्तरस्यादित्यस्येन्द्रियरूपत्वेन । तदानीन्तनाः किरणास्तत्प्रकाशितास्तद्देवा उच्यन्त इति ते शिश्नदेवाः । तेऽपि न ऋतमुदया-स्मदीयं मण्डलमापुः । तत्र लीना ना भवन्तु इत्यर्थ इति विस्पष्टार्थत्वं मन्त्रा-न्तरादिसाहित्येनेति नोऽत्र विचारशीलार्थप्राप्तिरिति ।

४१. यत्त्वासूर्येति मन्त्रेऽर्थविचारणा

एवमात्रेये सूक्ते स्वर्भानुनासुरेरा तमसा सूर्यस्य वेध इत्यादिवर्णनस्योपराग-परत्वेन वर्णनं न सर्वथा मन्त्रार्थानुगुणम् । यद्यपि अत्रादित्यरत्राचयन इति नानुक्रमणिकोल्लिखितमतभेदसम्भवस्तथापि मन्त्राक्षरस्वारस्यविरहेण तथा वर्णनस्यासगतत्वम् । तथाहि तत्सूक्तीया मन्त्राः—

यत्वा सूर्यं स्वर्भानुस्तमसाविध्यदासुर ।
अक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयु. ॥ (ऋ म ५·४०·५)

अत्र सूर्यं प्रत्युच्यते—हे सूर्य यद् यदा त्वा त्वामासुरो सुरसम्बन्धी स्वर्भानुरादित्यस्तमसाऽविध्यत् त्वा तमोयुक्तमकरोत् । कीदृश स्वर्भानुरक्षेत्रवित् क्षत्र गृह न वेत्ति तादृश. । तदानी तस्य गृहसम्बन्धाभावात् । यथा मुग्ध । मुग्ध उन्मत्ता यथा क्षेत्र गृह न जानाति तद्वत् । तदानी भुवनानि भूसम्बन्धिना लोका अदीधयु दीप्ता. प्रकाशिता अभवन् ।

यत्वत्र स्वर्भानुत्वेन पुराणानुरोधेनासुरस्य ग्रहणम्, पुराण सुरं साक सघर्षे देवानामुभाभ्या क्षीरादधेर्मन्थनेन चतुर्दशरत्नानि लब्धानि । तत्रैकममृतरूपमपि रत्न तस्य ग्रहणे तेषा विमतौ विष्णुना मोहिनीरूप धृत्वाऽमृतादीना विभाजन स्वीकृतम् । तत्रैकस्या पङ्क्तावसुराणामवस्थापनमपरस्या देवाना निवेशस्तत्र राहु-नामकेनासुरेण कपट विचिन्त्यावुपविष्टम् ।

यदा मोहिनीरूपधारी विष्णुरमृतकुम्भ गृहोत्वा परिवेषणे प्रवृत्तस्तदानी राहोर्हस्ते परिविष्टममृत तेन तदानीमेव प्राशित दृष्ट्वा पार्श्ववर्तिभ्या सूर्याचन्द्र-मोभ्या विष्णवे तन्निवेदने क्रुद्धेन विष्णुना राहुणा पीतस्यामृतस्य निगालनात्पूर्वमेव चक्रेण वध. कृत. । अमृतसम्बन्धाच्छिन्नाशिरसोऽप्येतस्य जीवनमेवाभात् ।

तत प्रभृति सूर्याचन्द्रमसोर्विषये क्रुद्धोऽसौ पर्वणि तौ ग्रसति स तयोरुपराग उच्यते । तादृशोपरागपरताऽत्रे ति वर्णनम् । यतोऽत्र स्वर्भानोर्ग्रहण सूर्यस्य तमसा वेधवचन चेति । तन्न समजसम्, यतोऽत्र स्वर्भानो राहुपरत्वेन वचने तस्य स्वयमसुरत्वादासुर इति वर्णनस्यासगति. । एवमदीधयुरित्यस्य भुवनानीत्यस्य बहुवचनान्तकर्तृपदस्य अक्षेत्रविन्मुग्ध इत्युपमानस्य चासगति. ।

यत्वत्र यदा हे सूर्य स्वर्भानुस्तमसा त्वामविध्यत् तदानी भुवनानि सर्वे लोका अर्थात्तद्वर्ती जन. स्थानमविजानानो दृष्ट इति वर्णनम् । अत्र आसुर इत्येव वर्णनस्यासगत्या सार्कं बहुवचनान्तस्य भुवनपदस्य तत्स्थलोकपरता लक्षणया वक्तव्या । एकवचनान्तत्वेन लोकलक्षणे दीधयुरित्यनेनसम्यगनन्वय. । "दीधीङ्" धानोर्दीप्त्यर्थस्य दृशधातुसमानार्थत्वकल्पना करणीया स्यात् ।

तावतापि यथेति उपमावाचकपदस्यानन्वय इत्यादयो दोषाभवन्ति । कोशकारेण तमस्तु राहुः स्वर्भानु रिति अभेदेनोक्तस्य भेदकल्पना करणीया

स्यात्तमसा। तस्मान्नेदंपरमिदं वर्णनम्। किन्तु स्वर्भानोरासुर इति विशेषणेनासौ स्वर्भानुरसुरसम्बन्धीति विज्ञायते। वेदे सुराणां देवविरोधितया वचनाद्वयं स्वर्भानुरासुर इत्युच्यते। तद्विशेषणेनापरोऽपि स्वर्भानुवतीति विज्ञायते। तदर्थं स्वर्भानुपदस्यार्थः प्रथमतश्चिन्तनीयः। तत्र भाधातो दीप्त्यर्थात् दा-भाभ्यां नुः इति नु प्रत्यये भानुर्दीप्तिकर्तेत्यर्थो लभ्यते।

ऊर्ध्वं भानुं सविता देवो अश्रेदित्यादिपु भानुशब्दस्य रश्मिपरतादर्शनादत्र भानुशब्देनादित्यरश्मिग्रहणम्। रश्मिरेवैक एकस्मिन्नवसरे भुवनं प्रकाशयतीति ऋभुसूक्तेपु वर्णनात्स प्रकाशको रश्मिरेवादित्यशब्देन गृह्यते लोके। अथवा भानुशब्देन प्रकाशक आदित्यो गृह्यते, तस्य स्वःशब्देन विशेषणं स्वर्भानुशब्दे। स्वः शब्दोऽत्र न लोकविशेषपरो रूढः किन्तु शोभनेन गमनेन यौगिकः। सुपूर्वा-दृधातोः स्वरित्यस्य निष्पत्तिः। सुशब्दस्य शोभनार्थकता लोकसिद्धा, तादृशं चात्र ऋधात्वर्थो गमनमिति गृहीत्वा शोभनगमनकर्ता भानुरादित्य इति स्वर्भानु-शब्दस्यार्थः।

दिवाभागे विश्वप्रकाशनेन तस्य स्वर्भानुशब्देन वचनं, प्रकाशनार्थत्वेन गमनस्य शोभनत्वम्। स च प्रकाशक आदित्यः स्वर्भानुरित्युक्तम्। प्रकाशनं च स्थानभेदेन भिन्नकालिकं भिन्नम्। यथा भारतवर्षस्य दिवाभागे प्रकाशनम-मेरिकाप्रदेशे तदीयदिवाभागीयप्रकाशनतो भिन्नरूपमेवं सुमेरौ प्रकाशनं कुमेरु-प्रकाशनतो भिन्नरूपम्। तत्र सुमेरुं प्रकाशयन्नादित्यस्तत्र शोभनगमन इति तत्र स्वर्भानुः। न तदानीं कुमेरुं प्रति स स्वर्भानुर्भवेत्। एवं कुमेरुं प्रकाशयन्नसौ सुमेर्वभिप्रायेण न स्वर्भानुः स्यात्।

तत्र शतपथब्राह्मणे "वसन्तो ग्रीष्मो वर्षास्ते देवा ऋतवो देवेष्वेतर्ह्यसौ भवति देवास्तर्ह्यभिगोपायतीति' वर्णनेन वसन्तादिऋतुत्रये देवेषु वर्तमानो देवान् साम्मुख्येन प्रकाशयन् देवानां गोप्ता देवः देवरूपो भवति। एवं देवताविरोधा-द्देवलोकविरुद्धे कुमेरुरूपे देशे सुरनिवासरूपे परवर्तिऋतुत्रये वर्तमानोऽसावसुरेपु स्यात्, असुरांस्तदानीम् अभि साम्मुख्येन प्रकाशयंस्तद्गोप्ता आसुररूपः स्यात्। आसुरो सुरसम्बन्धी। एवञ्चासुर इति विशेषणादसौ कुमेरुसम्बद्धः प्रतीयते। स्वर्भानुवचनात्तत्र दिवाभागप्राप्त इति भवति। एवं च स्वर्भानुरादित्यो यथा दैव एवं स आसुरोऽपि इति दैवस्य तस्य व्यावर्तनाय स्वर्भानोर्विशेषणं मन्त्रे आसुर इति।

एवं सति मन्त्रे वेधे सावर्न तमस्तत्स्वरूपतो भिन्नत्वेनोच्यमानं संगच्छते। स्वर्भानोरेवामराद्यनुरोधेन तमोरूपत्वेन तमसो भेदेन निर्द्देशस्य संगतिर्न स्यात्। आसुर इति विशेषणस्यायुक्तत्वमुक्तमेव। तत्र सूर्यो देवः सुमेरुगत आदित्यस्तस्य आसुरस्वर्भानुतो भेदः। आदित्यस्योपाधिभेदेन वेदे भिन्नतया वचनमिति

प्रतिपादितमेव। स च सूर्यो देवत्वात्सुमेरौ वर्तमान । तस्य सुमेरौ रात्र्यवसरे तमसा युक्तत्वमिति कल्पनम्।

अतएवादित्येनास्तगमने स्वीय तेजोऽग्नौ निधीयत इति वेदे वचनम। अग्नौ प्रवेश इति वर्णनाप्युक्तमूलिकैव। तदुच्यते आदित्यो वा अस्त यान्नग्निमनुप्रविशति इति। तेजसोऽग्नौ निधानात्स तेजोरहित कृष्णरूप इत्यपि कल्पना वेदे। तदेव गृहीत्वा यजुर्वेद उच्यते "यत्कृष्णोरूप कृत्वा प्राविशस्त्व वनस्पतीनिति।"

एव चास्य सुमेर्वभिप्रायेणास्तोत्तर तमोरूपता। कुमेर्वभिप्रायेण तु तदानी तत्र दिनप्रवृत्त्या स तु तत्र शोभनगमन आदित्य । तत्र देवेषु रात्रौ सञ्जायमानकार्ष्ण्यस्य तद्रूपतमसो वेधस्य आसुरस्वर्भानुकर्तृकत्वमिति गृहीत्वा प्रकृतमन्त्रे उच्यते हे सूर्य (अर्थात् सुमेरुस्थ) यद्यदा रात्र्यवसरे इत्यर्थः। आसुर. (कुमेरुस्थ) स्वर्भानुरादित्यस्त्वा तमसाऽविध्यत् तमोयुक्त कृतवान्।

तत्र दृष्टान्त उच्यते। यथा मुग्धः कर्तव्याकर्तव्यमजानान उन्मत्तादिवदक्षेत्रविदेवमसावपि अक्षेत्रवित्। क्षेत्रशब्दस्यास्तरूपगृहबोधकता, तदु क्षेत्र न विजानातीत्यक्षेत्रवित्। उदय प्राप्नुवन्नसावस्त न प्राप्तो भवतीयमस्ताप्राप्तिरेव क्षेत्रविज्ञत्वाभावरूपेणोच्यते।

तदा भुवनानि अर्थात्कुमेरुस्थानि, तत्रापि भूरादिलोकत्रयसत्वस्य पूर्वमुक्तत्वात्तानि अदीधयु दीप्तिमन्ति प्रकाशितान्यभूवन्। यदा सुमेरौ रात्रिप्रवृत्तिस्तदानी कुमेरौ दिनप्रवृत्त्या तत्रत्यभुवनप्रकाश इत्यर्थ । एव सति नानेनादित्यस्य उपरागरूपग्रहणबोधनम्। तत. परवर्तिमन्त्र.—

> स्वर्भानोरधयदिन्द्र माया अवो दिवो वर्तमाना अवाहन्।
> गूळ्ह सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविन्ददत्रिः[1] ॥

पूर्वोक्तमन्त्रे रात्रेर्वचनादत्रापि रात्रिकाले सजायमानविशेषा अन्धकाररूपतमस' प्रवृत्तिस्तद्वशतस्तेजसोऽव्यक्तस्योदकरूपस्य प्रतिबन्ध इत्यादय ऐन्द्रसूक्ते उच्यमानास्तेऽपि उक्तस्वर्भानुकृता एवेति गृहीत्वा तासा मायात्वेन व्यवहारोऽत्रमन्त्रे ता सर्वा माया दिवो द्युलोकस्यावोऽवस्तात् अर्थाद्दक्षिणदिक्के कुमेरौ वर्तमाना. स्वर्भानोर्मायारूपास्तानिन्द्रोऽवस्नाद्रात्रिरूपे कुमेरुदेशेऽहन्। एव रूपेणेन्द्रेण मायाविनाशवर्णनादुक्तस्वर्भानुरुक्तरीत्या कुमेरुस्थ एवादित्यस्तेन रात्रौ सूर्यस्य सुमेरुस्थस्यादित्यस्य तमो वेध इति ज्ञायते, नासावुपरागरूप इत्युक्तम्।

---

१. ऋ स. ५.४०.१०

तदानीं रात्रौ अप्रवृतेन निष्कर्मणा, अपकृष्टं सर्वस्य विश्वस्यावरणेन विनाशकरणादपकृष्टं निकृष्टं व्रतं कर्म यस्यैतादृशेन तमसा गूळ्हं गुप्तमदृश्यं सूर्यं तुरीयेण ब्रह्मणा तेजसाऽविन्दत् अत्रिः। अत्रिशब्दस्यार्थो निरुक्ते उच्यते अत्रैव तृतीयमृच्छतेत्यत्रिः न त्रयो वेति।

अत्राग्निस्थाने भृगावङ्गिरसे च सञ्जाते तृतीयं खननेन विजानीथेत्युक्त्या त्रिरिति। त्रय इत्यत्रिरिति। तत्र लोकद्वयेन सुमेरुकुमेरुरूपेण सम्बन्धाद् द्वौ भवतः। यश्च तत्सम्बन्धराहित्येन प्रकाशकः तृतीयो वेति कल्पने उच्यते न तृतीयः किन्तु तदभावरूप आदित्यरूप एवात्रिः।

ऋषीणामादित्यरूपत्वस्यारण्यकेपूक्तिरिति पूर्वमुक्तम्। चतुर्थेन ब्रह्मणा तेजसाऽविन्दत्। रात्रौ भासमानं तेजः स्थानभेदेन भिन्नमिति गृहीत्वोच्यते तुरीयमिति। सोमविषयिण्यां प्रजापतिदुहित्रारोहकथायां प्रजापते रेतः प्रथमत उद्दीप्तमादित्य इत्युक्तम्।

द्वितीयमुद्दीप्तं भृगुरिति। भृगोरर्चिषि संभवस्य ब्राह्मण उक्तेः किरणसन्दर्शनदशायां द्वितीयं तेजः स भृगुरिति। किरणासन्दर्शनदशायां भास्वरमुपोरूपं सान्ध्यं तेजस्तृतीयम्, एवं सुमेरौ, कुमेरावपि सैवैव रीतिः। प्रकृते सुमेरुस्था वर्णनेति तत्र सान्ध्यतेजसः परस्तादृश्यं तेजश्चतुर्थम्। यस्य प्रकाशस्य वशतस्तत्र सर्वात्मना तमः प्रवृत्तावपि न तेजसोऽभावः। तस्यैव ब्रह्मरूपत्वेन वर्णनं वेदे। तस्यैव प्रजापतित्वेन वर्णना ब्राह्मणादिषु।

तदुक्तमैतरेये ब्रह्म वै बृहस्पतिरिति। प्रजापतिःप्रजाः सृष्ट्वा महानभवत्। तेन देवानामुत्पादनेनोत्पदित इन्द्रः प्रजापतिमब्रवीत्, तवेदं महत्वं मम भवतु इति। प्रजापतिनोक्तं यदि मम महत्वं तव स्याद् अहं महत्वरहितः को वा स्यामिति, तदा तदेव तव नाम 'क' इति भवतु, इत्यर्थवादेन प्रतिपाद्यते। तत्तुरीयं ब्रह्म तेजः तेनात्रिर्गूळ्हं सूर्यं तमसा तुरीयेण ब्रह्मणाऽत्रिरविन्ददित्युक्तं मन्त्रे। एवं सति तुरीयं ब्रह्म न किञ्चन दर्शनसाधनं न वात्र तमसा गूहनमुपरागरूपमिति, न वात्रिणोपरागसन्दर्शनं तत्स्पर्शमोक्षकालविज्ञानरूपमिति कल्पनावसरः। परवर्ती तत्रत्यमन्त्रो यथा—

मा मामिमं तवसन्तमत्र इरस्या द्रुग्धो भियसा निगारीत्।
त्वं मित्रो असि सत्यराधास्तौ मेहावतं वरुणश्च राजा[1]। इति।

अत्र सूर्यवाक्यत्वेन वचनम्। हे अत्रे तव सम्बन्धिनं सन्तं विद्यमानं त्वदीगमित्यर्थः। इममेवंरूपतापन्नं तमसा विद्ध मां सूर्यरूपम्। इरस्या, अन्नेच्छया।

---

१. ऋ. सं. ५:४०:७

इराशब्दादन्नार्थात्स्यचि लालसायां, सुकि विवपि स्त्रिया दापि तृतीयैकवचनटा-स्थाने सुपामिति डा । मियसा भयजनकेन तमसा द्रुग्धो द्रोहकर्ता स स्वर्भानुर्मा निगारीत् । भक्षितं मा कुर्यात्, मा भक्षयतु । मा विनाशयतु इत्यर्थः ।

अतस्त्वं मित्रश्चेह प्रकृते स्थाने विद्यमानं माऽन्नतं रक्षतम् । यतस्त्वं मित्रोऽसि । मितदुःखात्त्राता भवसि । श्लेषेण मित्र सुहृद्भवसि । मित्रनामकदेवोऽसि मन्त्रेषु मित्रस्य सवित्रभिन्नत्वमुच्यते उत मित्रो भवसि देव धर्मभिरित्यादिना । मित्रावरुणयोर्विषये मित्रावरुणसूक्तेषु आदित्यबिम्बपार्श्वद्वयेऽर्थादुदयादित्यस्य पूर्वमेवमस्तोत्तरं तत्स्थितिर्वर्ण्यते सहस्रस्थूण बिभृथ सह द्वौ इत्यादिषु, तत्पूर्वं प्रदर्शितमन्यत्र । स च मित्र उदयात्पूर्वं वरुणश्चास्तोत्तरं भवति । तत्रास्त उदयश्च सुमेरौ यथा तथा कुमेरावपिभवत इति तत्पूर्वोत्तरभाविता तत्रापि । तत्र विशेषप्रतिपादनाय मित्रावरुणयोः स्थानविशेषाभिप्रायको विशेष उच्यते विशेषणद्वयेन ।

मित्रस्य विशेषणं "सत्यराधा"इति वरुणस्य विशेषणं राजेति । तत्र सत्यराधा इत्यनेन तस्य रात्रिसम्बन्धो व्यज्यते । राध शब्दो धनार्थस्तेज आह । सत्यं तेजो यस्येति । रात्रिकालिकस्य तेजसः सत्यशब्देन वचनं वेदे । अत एव सन्ध्यानुष्ठाने रात्रिकालिकाचमनमन्त्रे सत्ये ज्योतिषि जुहोमीत्युच्यते । अश्विनोः सूक्तेष्वश्विनोः प्रतिदिनं त्रिः सम्बन्धो बोध्यते । । तत्र सहप्रवृत्तरूपेण द्विरसहप्रवृत्तरूपेण सकृत् । सहप्रवृत्तं रूपं चोभयतः पार्श्वयोरुदयात्पूर्वमस्तोत्तरं चेति ।

असहप्रवृत्तं च रूपमेकस्य रात्रिमध्यावसरेऽपरस्य दिने । तत्र तयोः स्वरूपं मन्नाम्ना व्यज्यते । एकस्तत्र नासत्योऽपरो दस्र । दस्रोऽव्यक्ततेजोरूपो नासत्यो व्यक्ततेजोरूपः । तत्राऽव्यक्तत्वेन तेजसोऽसत्वात्तदभावे प्राप्ते तत्प्रतिक्षेपमुखेन सत्यत्वं तस्योच्यते नासत्यशब्देनासत्यो न भवतीति । आग्रयणाचार्येण सत्यस्य प्रणेतृत्वमुच्यते । अतएव सौरे सूक्तेऽपि वरुणे सत्यमर्पितमिति तस्य रात्रिसम्बन्ध उक्तः ।

एवं रात्रिकालिकं तेजः सत्यशब्देनोच्यते, तद्राधो यस्य तादृशस्त्वमिति अत्रिं प्रत्युक्तिः । अर्थादत्रिर्मित्ररूप इत्यर्थः । अतएव तस्य वरुणेन साहचर्यमुच्यते । स च रात्रिकालिक इति सत्यराधस्त्वेन तस्य वचनमत्र । वरुणश्च सुमेर्वभिप्रायेण रात्रिकालिकोऽपि कुमेरावसावुदयकालिकोऽपीति तस्य राजेति विशेषणं, राजा राजमानो भासमान इति यावत् । तौ अत्रिं स्वसरक्षणं बोध्यतः सूर्येणेति । एतेनापि नात्रादित्योपरागपरता, न हि तत्र वरुणसम्बन्धप्राप्तिः । न वा अत्रेरत्र मित्रभावनया संरक्षणप्रार्थना तथा सति मित्रबोधनाय मित्रपदं नपुंसकं प्रयुज्येत । इदमपि पूर्वोक्तार्थसूचकमुपरागपरतावचने विरुद्धमिति । परश्च मन्त्र —

ग्राव्णो ब्रह्मा युयुजानः सपर्यन् कीरिणा देवान्नमसोपशिक्षन् ।
अत्रिः सूर्यस्य दिवि चक्षुराधात्स्वर्भानो रप माया अघुक्षत्[1] ॥ इति ।

अत्रात्रेस्त्रिविधः सम्बन्धो बोध्यते । तिर्यक्सम्बन्धद्वयं सम्मुखसम्बन्धश्चैकः । आदित्यमण्डलेऽन्यत आगत्य किरणाः प्रविशन्तीत्यर-नाभि भावेन किरणानां सम्बन्धवर्णनं बहुषु स्थलेषु वेदे । स च वामभागत उदयात्पूर्वं, दक्षिणभागत उदयोत्तरं तत्सम्बन्धो, देवाश्च किरणाः शतपथादिषूच्यन्ते । तत्र वामभागतः समागतानां सम्बन्धो नमनशब्देनोच्यते, दक्षिणभागतः समागतानां सम्बन्धः स्तोत्रशब्देन स्तुतिशब्देन बोच्यत इति प्रतिपादितमन्यत्र । तदत्रोच्यते– "कीरिणास्तुत्या सपर्यन् पूजयन् स्तुवन् नमसा स्तुत्योपशिक्षन् पूजयन् स्तुवन्" इत्येव ।

तथा सम्मुखसम्बन्धबोधनाभिप्रायेणोच्यते–ब्रह्मा तन्नामक ऋत्विग्रूपः । अत्रेर्मित्रत्वं पूर्वमन्त्रे उक्तम् । मित्रस्य सवित्रभेदः पूर्वमुक्तः । सवितुश्च देवयागे ब्रह्मत्वं वर्ण्यते वेदे इत्यत्रिरप्यत्र मित्राभिन्नः सवितृरूप इति ब्रह्मर्त्विक्त्वेनोच्यते ब्रह्मपदेन । न तु ब्राह्मणजात्यभिप्रायेण ब्रह्मपदमत्र तस्य बोधकम् । स च ग्रावस्तुत् । ब्रह्मगणे यज्ञ ग्रावस्तुत् अच्छावाको भवति, अच्छावाकस्यापि ब्रह्मशब्देन वचनम ।

यथा होतृगणस्थानां मैत्रावरुणप्रभृतीनांहोतृ शब्देन वचनं तद्वत् । तेन ग्राव्णः सोमाभिषवीयस्य स्तुतिः क्रियते यज्ञे, सा च स्तुतिः सम्मुखस्तुतिरूपेति अर्बुदकाद्रवेयाख्यानेन ऐतरेये वर्णितमित्यन्यत्र निरूपितम् । तदहि ग्राव्णो युयुजानः स्तुवन् । आदित्येऽन्यान्यरूपत्वेन कल्पनवत्सोमाभिषवग्रावत्वेनापि कल्पनात्तत्स्तुतिः सम्मुखीना स्तुतिरिति ।

एवं त्रिविधां स्तुतिं प्रयुञ्जानस्त्रिविधं किरणयोगं बोधयन् असावत्रिः सूर्यस्य चक्षुः । सूर्यरूपं चक्षुः । व्यधिकरणा रूपकल्पना । अत्रेरुक्तरीत्या मित्ररूपत्वात्सूर्यं मित्रावरुणचक्षुष्ट्वस्य चक्षुर्मित्रस्य वरुणस्याग्नेः इति सौरसूक्तादिषु वर्णनात्सूर्यरूपमेव चक्षुरत्र न तु सूर्ये चक्षुषः स्थापनं निरीक्षकत्वेन उपरागे स्पर्शमोक्षयोर्निरीक्षणाय स्थापनम् ।

तादृशं सूर्यरूपं चक्षुः सन्दर्शनसाधनरूपं विश्वस्य दिवि द्योलोके आधात्स्थापितवान् । सूर्यस्यादर्योऽत्रात्रिकृत इति कल्पना । एव सूर्य उदित इति परमार्थः । एवं स्वर्भानोरुक्तरीत्या कुमेरुगतस्य माया अन्धकारादिकास्ता अपाघुक्षत् अपगूहितवान् । अपकृष्य गूहनं विनाशात्मकं तत्कृतवान् । एतावता सूर्य उदितस्तमो विनष्टमिति परमार्थः । परवर्ती च मन्त्रः—

---

1. ऋ. वे. ५:४०:८

य वै सूर्यं स्वर्भानुस्तमसाविध्यदासुर ।
अत्रयस्तमन्वविन्दन्नह्यन्ये अशक्नुवन्[1] ।।

अत्र स्वर्भानुकृत सूर्यस्य वेध उक्तरूप एव । अतएव तस्यापि आसुर इत्येव विशेषणम् । स चोक्तरूपो वेधस्तमसो मिश्रणेन विज्ञायते नत्वन्येन, तस्योदयकालिकत्वात् । मिश्रश्चैकोऽपि उप इव तस्योपाधिक वहुवचनम । एव सत्यत्र सूक्तगतमन्त्रेपूपरागपरत्वेन वचन न मन्त्रार्थानुगुणम् । एव सत्युपरागपरता स्थलान्तरे वक्तव्या भवेत् ।

यथाऽथर्ववेदीयमन्त्रेण तत्सिध्यत्युपरागादि, सच मन्त्रभागाऽथर्ववेदीय –

उत्पाता [2] पार्थिवान्तरीक्षाच्छनो दिविचरा ग्रहा ।
शनो भूमिर्वेपमाना शमुल्का निर्हत च यत् ।। नक्षत्रमुल्काभिहत

शमस्तु, शनोग्रहाश्चान्द्रमसाय । शमादित्याश्च राहुणा ।
शन्नो मृत्युर्धूमकेतु , श रुद्रास्तिग्मतेजस इत्यादि ।

निघण्टुषु मध्यमस्थानवासिदेवतानामसु अनुमति , राका, सिनीवाली, कुहूरिति चत्वारि नामान्युक्तानि । एतेषामर्थकथनावसरे निरुक्तकारेण यास्केन एतेषा देवपत्नीबोधकत्वमुक्तम् । तत्र पक्षान्तरमपि तत्र भाष्ये उक्तम् तच्च पूर्वेषा याज्ञिकाना मत निरुक्तकारेण प्रदर्शितम् । 'अनुमतीराके पौर्णमास्या, सिनीवाली कुहूश्चामावास्ये[3]' इति । तत्रापि या पूर्वा पौणमासी सानुमतिर्योत्तरा सा राका एव या पूर्वामावास्या सा सिनीवाली यात्तरा सा कुहूरिति । ऐतरेयब्राह्मणेऽप्युच्यत "या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका, एव या पूर्वामावास्या सा सिनीवालीर्योत्तरा सा कुहूरिति '[4] ।

अत्र दिनभेदेन पौर्णमास्यमावास्ययो पूर्वोत्तरात्व व्यवस्थाप्यते, तद्गतपचोक्तनाभेद इति । ततश्चायमर्थो यत्पूर्वदिनसम्बन्ध पूर्वात्वमुत्तरदिनसम्बन्धे उत्तरात्वमिति । तावता को गुण पौर्णमास्यमावास्ययोर्यावता पूर्वोत्तरदिनसम्बन्धोऽन्यासामपि तिथीना सम्भवति, तासा पूर्वोत्तरा वेन तत्प्रयुक्तभिन्नाम्ना व्यवहाराभावोऽनयोश्च तत्सम्बन्धमाश्रित्य तादृशव्यवहारस्तद्गतश्च भिन्ननामव्यवहार इति ।

अथ निरुक्तरीत्याऽनुमननादनुमत , रातेर्दानकर्मणो राका, सिनमन्न सद्वती सिनिनी, वाल पर्व वृणोतेरिति, अन्नयुक्तत्वात्सिनीवाली । कुहूर्गू हतरितिनिमित्तवशतस्तासा तत्वम् । तदपि न । अनुमननमनुमतेर्निमित्त तत्र कस्य केन

---

१ ऋ वे ५ ४० ९०　　२ अ वे १९ ९ ७
३. निरुक्तम् ११ २९ २　　४ ऐ ब्रा ७ २ १०

कुतोऽनूमननमित्यविज्ञानम् । रातेरित्येन रा धातुतो निष्पत्तिर्विज्ञायते, पौर्णमास्या: को गुण: । अन्नवत्पूर्ववर्तात्यनेन सिनीवालीति, तत्तु कुहूवामपि व्यभिचरति । तावता पूर्वात्वपरात्वाभ्यां को गुण: । किमिति तैश्शब्दै: पौर्णमास्यमावस्ययोरेव ग्रहणं न पुनस्तिथ्यन्तरस्येति निर्णायको न कोऽपि हेतु: ।

एवं देवपत्नीत्वमपि कुत इत्यपि वचनैकशरणमेवेति । एवं तत्तस्या: कर्मसु प्रोच्यमानेषु मन्त्रेषु उच्यमाना गुणाश्च कथमुपपद्येरन्निति । निरुक्तवचनस्येव तट्टीकाकृता दुर्गाचार्येण स्थितं तद्गृहीत्वा तत्परतयाशेषयोजनेन निगमानां व्याख्यानमात्रं कृतं न तु पदार्थविषये विचारनिर्णय: । एवं सति अनयो: पूर्वात्वपरात्वविषये न काप्युपपादिका युक्ति: । देवपत्नीत्वं यथा निर्युक्तिकं वचनमात्रशरणमेवं पौर्णमास्यमावास्ययो: पूर्वात्वपरात्वे अपोति । दिनभेदेन भेदास्तिथ्यन्तरेष्वपि सम्भवन्ति ततस्तेषामेवमवचनेऽनयोरिव वचने न किमपि विनिगमकमिति ।

न च तिथ्यन्तरेषु विशेषवैदिकानुष्ठानाभावादनयो: पक्षपूरकत्वात् श्रौते कर्म्मणि पर्वानुग्रहस्यापेक्षणीयत्वादिष्ट्यादे: क्रमिकपक्षे पूर्वदिनेऽन्वाधानादिकरणात्तत्रोपवासस्य कृते तिथिनिर्णयस्यापेक्षणात्पूर्वात्वनिर्णयस्यापेक्षणम् । अतएवैतरेये मतभेद उपवासे तिथिभेदनोल्लिखित: । "[1]पूर्वा पौर्णमासीमुपवसेदितिपैङ्ग्यमुत्तरामिति" कौषीतकमिति ।

एवममावास्यायामपि दर्शपूर्णमासयो: पर्वप्रतिपत्सन्धौ यागानुष्ठानयोग्यकाले यागानुष्ठानार्थं तद्योग्यता पूर्वदिनीयायाममायामुत्तरदिनीयायां वेति निर्णयस्यापेक्षणेन तदर्थं पूर्वात्वपरात्वनिर्णयोऽपेक्षणीय: । अन्यथा । पूर्वदिनयोगमात्रेणामावास्यां गृहीत्वाऽन्वाधाने हविर्निर्वाने परदिनीयप्रात:काले चन्द्रमस कलामात्रावशिष्टस्य दर्शने प्रायश्चित्तीयतापत्ति: ।

तदुक्तं यस्य हविर्निरुप्तं चन्द्रमा अभ्युदियात्तेन तस्य हविषस्तेभ्यो देवेभ्यो विभज्य शिपिविष्टगुणकविष्णवे दातृगुणकाग्नये प्रदातृगुणकाये इन्द्राय याग: कार्य: इति विभिन्नदेवविषयकस्य यागस्य निरुप्तहविर्गतस्थूलतण्डुलसूक्ष्मतण्डुलमामध्यमतण्डुलानां विवेचनेन तद्धविष्कप्रायश्चित्तत्वेनानुष्ठानं, पुन: पूर्वोक्ताममवास्यायागानुष्ठानं कर्तव्यं स्यादिति ब्राह्मणे प्रतिपादनं संगच्छते ।

एवं हि तद् ब्राह्मणम्—"यस्य हविर्निरुप्तं चन्द्रमा अभ्युदियात्त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुं, ये क्षोदिष्ठास्तान्विष्णवे शिपिविष्टाय घृते चरुमि" ति । तदपि न । तिथ्यन्तेरेष्वपि श्रौतकर्मानुष्ठाने प्रधानकालयोग-

---

१. कौ. ब्रा. १:२:१० : ऐ. ब्रा. १:२

निर्णयाय दिनभेदेन द्वैधे तदर्थं तिथ्यन्तरवेधनिर्णयाद्यर्थमपेक्षणीयपूर्वपरनिर्णय-प्रकारस्यात्रापि सम्भवेन तेनैव पौर्णमास्यमावास्ययोरपि पूर्वत्वपरत्वयो-स्तिथ्यन्तरवेध निर्णयेन विशिष्टानयो पूर्वत्वपरात्वयो पूर्वापराशब्देन वचने बीजाभावादिति चेन्नात्र तयो. पूर्वापराशब्दन बोध दिनभेद कारण किन्त्वन्य रूपमेव ।

तथाहि अत्र पूर्णमास्यमावास्ययो स्वरूप तावन्निर्णेयम् । कर्मानुष्ठाने तच्छब्दार्थस्वरूप लोकरवमुच्यते–अदमावास्याशब्दो न केवलकालवाचक किन्तु योगरूढः । तत्रावयवार्थं सहवास निमित्तीकृत्य प्रवृत्त । स च सहवास प्रसिद्धया सूर्याचन्द्रमसो' तौ च सूर्याचन्द्रमसौ सहयोगेऽपेक्षितौ लोकप्रसिद्धावेवोआग्यरूपौ, यतश्चन्द्रमः शब्दार्थविषयेऽन्यथात्वस्यापि प्राप्तिसम्भव । चन्द्रमा यथा चन्द्रे द्वादिशब्दैर्बोध्यते मासकृदेव सोमशब्देनापि तद्बोध । तत्र सोमशब्दार्थविषये ब्राह्मण उच्यते "सोमो वै वाजस्तस्य चन्द्रमास्तृतीय योऽय पवते स तृतीयमिति" तत्राय पवत इत्यनेन भूसम्बन्धिन आदित्यस्येदमा बोधनस्य वेदे बहुषु दर्शनेन पूधातोर्गमनार्थत्वस्य गमनार्थकेषु निघण्टौ पाठेन गन्तुरादित्यस्य तेन बोध । आदित्यश्च रन्नेव सर्वदा भवति न कदापि ततो विरतो भवतीति ऐतरेये उच्यते"सूर्यस्य पश्य श्रेमाण यो न तन्द्रयते चरन्" इति । एव सति यथा सामशब्दबोध्य आदित्य एव चन्द्रमः शब्दबोध्यतोऽपि तस्य । नवोनव इति मन्त्रे आदित्यपरताया. स्वीकर्तव्यत्वात । तथाहि स मन्त्र —

नवो नवो भवति जायमानोऽह्ना केतुरुषसामेत्यग्रम् ।
भाग देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरते दीर्घमायु[1] ।।

एतदर्थं निरुक्तकार आह–"नवो नवो भवति जायमान इति पूर्वपक्षादिममभिप्रेत्य, अह्ना केतुरुषसामेत्यग्रमित्यपरपक्षान्तमभिप्रेत्य । आदित्यदैवतो द्वितीय. पाद इत्येके । भाग देवेभ्यो विदधात्यायन् इत्यर्धमासेज्यामभिप्रेत्य । प्रवर्धयते चन्द्रमा दीर्घमायु " इति ।

दुर्गाचार्येणतस्य व्याख्या क्रियते–नवो नवा भवति जायमान., चन्द्रमा', प्रतीच्या दिशि पूर्वपक्षादिमुपक्रम्य । उपक्रान्तवृद्धि. । अस्त गत आदित्ये पश्चादादित्यस्य प्रतिमास जायमाना नवो नवा भवति । अह्ना केतुरुषसामेत्यपरपक्षान्तमभिप्रेत्य । अपरपक्षान्तेषु प्राच्या दिशि प्रक्षीण कलामात्रावशेष. । अह्ना केतु-र्लक्षणम् । तत्कलापचयापचयाभ्या हि प्रतिपत्प्रभृतीन्यहानि लक्ष्यन्ते ।

अथवा अह्ना केतु. कर्ता स्वगतिविशेषै. । उपसामेत्यग्रमिति । उपसो य. प्रकाशस्तस्य प्राग्न पुरस्तात्सूर्यस्योदितो दृश्यते । न पुनरेष एव पर्यायेण प्रतीची-

---

1. ऋ स १०.८५:१९

प्राचीदिशौ आयन्, पूर्वापरपक्षविभागेनैकैकशोऽपि पूर्णमास्यमावास्ययोरागत्य कालं भिन्दन् हविर्भागं वा विभागेन यथाविभागं देवेभ्यो भागं विदधाति ।

एवं कर्मापि पूर्वपक्षात्पौर्णमास्यमावास्ययोः स्वगत्या काले तिथिं विभज्य देवेभ्यो ददाति विभागदाने हेतुर्भवति, पूर्णे चन्द्रमसि उपचये उपवासात् पौर्णमासीमेवमदर्शनेऽमावास्यायामिनि ह विज्ञायते । य एवं करोति चन्द्रमाः स प्रतिरते प्रवर्धयते ईजानानां दीर्घमायुः । वयमपि च यजामहे तमनेन हविषा । अतः सोऽस्माकमेतत् करोत्वित्येतदाशास्महे । आदित्यदैवतो द्वितीयः पाद इत्येके । पूर्वापरं चरतो माययैतौ इत्यतोऽनन्तरमेवेयम् । इति ।

मैत्रावरुणीये समाने हविषि विनियोग इत्यपेक्ष्येयमपि सौर्याचन्द्रमसीति । ग्रहूनां केतुरित्यतो विशेषलिंगाद् ब्रवीति आदित्यदैवतो द्वितीयः पाद इति । तदर्थ-योजना–यश्चन्द्रमा नवो नवो भवति जायमानो यश्च देवेभ्यो भागं विदधात्यायन् यश्च प्रतिरते दीर्घमायुः सोऽस्माकमेतत्करोतु । अयं च सूर्यः ग्रहूनां केतुः कर्तोदयास्तमयाभ्यामुषसां चाग्रमेति मुख्यत्वमागच्छति तत्कृतत्वादुषसो जन्मनः । तद्रश्मिप्रान्तप्रोत्सार्यमाणे हि तमस्युषासो जायन्तेऽतः स तासां जनयिता मुख्यः । अतः साऽस्माकमेतदेवं करोत्विति ।

एवं मन्त्रार्थं निरुक्तानुरोधेन, व्याख्यां निघण्टुनिरुक्तानुरोधेन प्रदर्श्य चन्द्रमस उक्तरीत्या मासकृदर्थकत्वेऽनुपपत्तिं प्रदर्शयति । अत्र निघण्टौ मध्यमस्थानदेवताकथनप्रसंगे उच्यमानश्चन्द्रमाः कथं मध्यमस्थानः । ननु सूर्यात्परतः शतसहस्रे योजनानां चन्द्रमसः स्थानमिति पौराणिकाः स्मरन्ति । सत्यं स्मरन्ति, कर्मयोगे तु द्युस्थानत्वे सति सर्वदेवतानां विशेषतः स्थाननियमो विवक्षितः । तदेतदैन्द्रं कर्म रसानुप्रदानं वृत्रवधो बलकृतिरिति तथा बाहुल्येनैन्द्रेषु दृष्टत्वात् । बलकृतिश्च चन्द्रे दृष्टा यथा ववैरजेत दुर्मतिरिति । प्रसिद्धं चेदमिन्दुश्चन्द्रमा इति ।

रसात्मकत्वाच्चन्द्रमसो रसानुप्रदानसम्बन्धः । एवं चेदिन्द्रश्चन्द्रमाः, तस्य मेघवधाविकारसम्बन्धकृत्वेन सूर्यादर्वागिति युक्तं चन्द्रमा मध्यमस्थानः । अपि च ओषधिः सोमश्चन्द्रमा भवत्यथियज्ञमापन्नः । स चेन्द्रस्यान्नम् । अन्नं चान्नादस्यात्मसाद्भवति । अद्यमानस्यानन्यत्वेनावस्थानादित्यतो युक्तं मध्यमस्थान इति । यथा च सर्वगतो वायुर्मध्यमस्थानो विशेषत इत्येवमित्यतो दोष इति ।

एवञ्च मासकृतश्चन्द्रमसो द्युलोकस्थानस्य मध्यमस्थानदेवतासु पाठात् इन्द्राभिन्नत्वेनादित्याभिन्नता, किञ्च द्युलोकस्थानवासिनोऽपि एकदेवतापक्षे आदित्याभिन्नत्वमेव । एवं च पूर्वोक्तसोमत्रैविध्ये चन्द्रमसः सोमशब्दबोध्यत्वेनादित्यरूपत्वमिति । तच्च भूसम्बन्धित्वेन इदमा बोधनादित्युक्तम् ।

एव च सुमेरुप्रदेशीय आदित्यः सूय कुमेरुप्रदेशीयश्च भूसम्बन्धो आदित्य-श्चन्द्रमा । अनयो सूर्याचन्द्रमसो सहवास निमित्तीकृत्यामावास्याशब्दप्रवृत्ति-विप्रकर्षं च निमित्तीकृत्य पूर्णिमाशब्दप्रवृत्तिरिति वक्तव्यम् । पूर्वोक्त नवो नवो इति मन्त्रस्य केवलादित्यपरत्वेन सुसगताया व्याख्याया सम्भवेन मासकृच्चन्द्रम परतया यथाकथञ्चिद्व्याख्याया अयुक्तत्वम । अह्ना दिनाना केतु प्रज्ञापक प्रतिदिन जायमानो नवो नवो नवप्रकार उपसामग्रमेति ।

देवेभ्यो भाग विदधान आयन् । आदित्योदये यज्ञानुष्ठानप्रवृत्त्या यज्ञ दीय-मानभागो दिनसम्बन्धादादित्य सपादित इति कल्पना । एतादृशश्चन्द्रमा आदित्यो दीर्घमायु प्रतिरत इत्यर्थात् । एव च सूर्याचन्द्रमसो सहवास ब्रुवन्नपि अमावा स्याशब्द प्रसिद्ध मासकृत कलावन्त चन्द्रमस न सहवासप्रतियोगितया गृह्णाति मन्त्रार्थाननुगुण्यापत्ते, किन्त्वादित्यस्यैव देशभेदभिन्नस्य चन्द्रमस्त्वेन ग्रहणेन सूर्याचन्द्रमसो सहवाससम्बन्धेनामावास्याशब्द. प्रवर्तते इति ।

कुमेरुसम्बद्धो भूसम्बन्धी आदित्यश्चन्द्रम शब्देन बोध्यत इत्युक्त पुरस्तात् । एव च सुमेरुसम्बन्धित आदित्यस्य तत्र प्रदक्षिणपरिक्रमवशतो दक्षदक्षिणशब्दव्य-वहारार्थत्व, पूर्वस्यामुदयेन पश्चिमाभिमुखगमनवशात प्रत्यङ्गादिशब्दैस्तस्य व्यव-हार प्रत्यङ् देवाना विश प्रत्यङ्गुदेषि मानुषान् । प्रत्यङ्विश्व स्वर्दृश इत्यादौ यथा ।

एव कुमेरावुदयन्नसौ पश्चिमायामुदेत्य पूर्वाभिमुख गच्छन्स आदित्यस्तत्र पूर्वप्रथमप्राङ्गादिशब्दैर्व्यवह्रियत इत्युक्त पुरस्तात् । तदनयो सूर्याचन्द्रमसो सहवासश्च तत्रोदयास्तावसरे भवेत् । तत्रकस्या दिश आदित्य उदेति यथा यथा, तथा तथा परस्या दिश्यस्तमयते । यथा सुमेरुनोऽस्तमयन् तदानीमे वकुमेरावुदयन् भवति । यावत्या मात्रयास्तमेति तावत्या मात्रया कुमेरावुदेति । एवमेव कुमेरा-वस्तमये सुमेरावुदये ।

एवञ्च तस्मिन्नवसरे सहवासस्तयोरिति । तत्र सुमेरुसम्बद्धस्यादित्यस्य सम्बन्धेन यथोप आदीना प्रत्यङ्गादिप्रतीच्यादिशब्देन व्यवहार, एव कुमेरु-सम्बन्धवशात आदित्यस्य पूवशब्दव्यवहारवदमावास्याया अपि पूर्वाशब्दनव्यवहार, सुमेरुसम्बद्धादित्यसम्बन्धादुत्तरात्वेन व्यवहारो ब्राह्मणे । तत्रानुमति पूर्वा पौर्ण-मासी, राका उत्तरा पौर्णमासी । एव सिनीवाली पूर्वामावास्या उत्तरा कुहूरिति ।

तद्तत्तदीयमन्त्रैरपि व्यक्त भवति । किञ्च सुमेरौ कुमेरौ चोक्तरीत्या सूर्याचन्द्रमसो सहवासो द्विर्भवति, उदयावसरे अस्तावसरे च । तथापि उदया-वसरे सूर्याचन्द्रमसो सहवासात्तरमादित्यस्य दर्शनमेव जायते न त्वदर्शनम्, अमा-वास्यायाश्चाय विशेष. सहवास उभयोरदर्शनञ्चेति । तत्र सत्यप्युदयावसरे सह-वासे दर्शनस्याभावेन न तत्रत्य सहवासस्तत्रामावास्याशब्दप्रयोगे निमित्तम् ।

अत एव न तत्र पूर्वात्वपरात्ववर्णनसम्भवः । अस्तावसरीयश्च सहवासस्तदुत्तरं यत्रास्तं गत आदित्यस्तत्र तस्यादर्शनं चेति अमावास्यावोधे तत्र निमित्तमिति तत्रत्या साऽमावास्येत्युच्यते । कुमेरावस्ते कुमेरुस्था सामावस्या, सुमेरावस्ते सुमेरुस्था चेति ।

कुमरुसम्बन्धिन आदित्यादेः पूर्वादिशब्दैर्व्यवहारस्य पूर्वं वहुशः प्रतिपादनात्तत्रत्यामावास्या पूर्वाशब्दभाक् । एवं सुमेरावपि सोत्तरा भवति । तदेतद्ब्राह्मणादिषु पूर्वात्वपरात्वेन व्यवहारे निमित्तमित्युक्तम् । इदं कर्मसु प्रयुज्यमानत्मन्त्रैरभिव्यज्यते । तथाहि सिनीवाल्याः कुमेरुसम्बन्धिन्याः पूर्वस्या अमावास्याया अयं मन्त्रः—

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः[1] ।। इति ।

अयं मन्त्रो निरुक्तकारेण व्याख्यातो यथा—सिनीवालि पृथुजघने । स्तुकः स्त्यायतेः संघातः । पृथुकेशस्तुके पृथुष्टुते वा या त्वं देवानामसि स्वसा मु असा, स्वेषु सीदतीति वा । जुषस्व हव्यमदनं प्रजां च देवि दिश न[2] इति ।

दुर्गाचार्येणैतस्य व्याख्या क्रियते—हे सिनीवालि पृथुष्टुके विस्तीर्णजघने अथवा पृथुष्टुके पृथु केशस्तुके पृथु केशकलापे अथवा पृथुष्टुते, या त्वं देवानां स्वसा भगिन्यसि माध्यमिकानां, सा त्वं जुषस्वासेवस्व एतत् हव्यमाहुतं, मर्यादया विधानेन च हुतमस्माभिः । आसेव्य च प्रजां देवि दिदिड्ढि नः । प्रजामस्माकं दिश अतिसृज देहि इत्याशास्महे इति ।

अत्र मन्त्रे देवस्वसृत्वं तस्या उच्यते । अमावास्या तत्रैव भवति यत्र सहवासे दर्शनं च । तदुभयं यत्रास्तस्तत्रैवेति पूर्वमुक्तम् । अस्तदेशे एवास्तोत्तरवर्तिनः किरणा दृश्यन्ते । किरणानाञ्च देवत्वम् । सचास्तः कुमेरौ यदाभवति तदा तत्रत्य आदित्यस्तत्रत्यद्योलोकं प्राप्तः । तत्रत्यकिरणा अपि देवा एव, ते च मन्त्रे यद्यपि विशिष्य नोक्तास्तथापि ते साध्या देवा एव । तच्च देवानां माने इति मन्त्रे प्रतिपादितम् ।

एवञ्च तत्र तृतीयसवने देवानां निर्माणस्योक्ततयाऽस्तावसरे च तत्प्रवृत्त्या सूर्यचन्द्रमसोः सहवासोऽपि तत्रास्तावसरीयो विज्ञायते, ततस्तस्य चन्द्रमसस्तत्रादर्शनेनामावास्यापि तत्रत्यैवैषा गृह्यते, तत्रादित्यादीनामिवास्या अपि पूर्वञ्चनात्पूर्वात्वेन ग्रहणमिति ब्राह्मणादिषु पूर्वामावास्यात्वेनोक्तिः, सैषा पूर्वामावास्या समानात्स्थानादुत्पाद्यत इति तस्या मन्त्रे या देवानामसि स्वसा इति देवान् प्रति स्वसृत्वेन वचनम् ।

---

१. ऋ. वे. २:३२:६ २. निरुक्तम् ११:३२:१

एवं वदे सूर्येण यत्र देशे सुमेर्वादावुदीयते तदानीं तेन तद्विरुद्धे कुमेर्वादौ स्वीयं तेजो दीयते तद्वशत एव तत्र प्रकाशनं भवति। प्रकाशकरणस्याहुतित्वेन वचनम् यदस्य विज्ञानं तज्जुहोतीत्यनेन। तदभिप्रेत्य सिनीवालीं प्रति मन्त्र उच्यते ग्राहुत अद्ईपदर्थकत्व व्याप्त्यर्थकत्वं वा, ग्राद्य रात्रौ स्वल्पस्यैव तेजस प्रवृत्ति। नहि दिनवत्परिपूर्णं प्रकाश इति। ग्रन्त्य ग्रा समन्ताद्धुत तद्धव्य हे सिनीवालि नोऽस्माकं सम्बन्धि जुषस्व सवस्व स्वीकुर्वित्यर्थ। दवि! हे सिनीवालि नोऽस्माकं प्रजा दिदिड्ढि दिशि देहीत्यर्थ। एवमपरस्तस्या मन्त्र —

> या सुबाहु स्वङ्गुरि सुषमा बहुसूवरी।
> तस्य विश्वपत्न्यै हवि सिनीवाल्यै जुहोतन[1]॥ इति।

अत्र सूर्याचन्द्रमसो सहवासमदर्शनं च चन्द्रमसो निमित्तीकृत्य प्रवृत्तपाऽमावास्या कुमेरुसम्बन्धिनी,ग्रत एवात्र मन्त्र तस्य विश्वपत्नीत्वेन वचनम्। विश्वपत्नी विशां प्रजानां पत्नी पालिकेति तदर्थ। सा च सुबाहु शोभनबाहूपेता। सहवासस्थलीयत्वेन तस्यास्तभत्याभिन्नत्वेन तदीयपार्श्वस्य प्रकाशितत्वेन पार्श्वभागीयतेजसश्च बाहुत्वेन वर्णनेनात्रास्तमुपेष्यत परवर्तिपार्श्वभागस्य सम्यक् प्रकाशितत्वेन शोभनत्वमित्युच्यते सुबाहु। ग्रस्तमुपयन्नसावर्धंशोऽस्तमितोऽर्धंश-श्चानस्तमित।

आदित्यबिम्बञ्च दशाङ्गुलव्याममुच्यत इति दशाङ्गुलमध्येऽर्धबिम्बस्यास्तमये पञ्चाङ्गुलमात्रस्य दर्शनेनाङ्गुलिपञ्चकयुतत्वेन हस्तरूपत्वं मत्वा तस्य प्रकाशमानत्वेनापि सुबाहुत्ववर्णनासम्भव। पञ्चाङ्गुलपरिमाणह्यङ्गुलमितभागानामपि प्रकाशितत्वेन स्वङ्गुरिरित्युक्ति। लकारस्य रेफो व्यत्यासात। सुषमेत्यनेन सम्यक्बिम्बार्धरूपत्व पचाङ्गुलिमितत्वमुच्यते। एवं तस्या सवनस्य प्रकाशनरूपस्य कर्तृत्व गृहीत्वा बहुसूवरीत्युक्ति। ग्रथवा बहूनां परवर्तिकिरणानामुत्पादयितृत्वं मत्वोच्यते बहुसूवरीति। तादृशी या सिनीवालीसञ्ज्ञकामावास्या विशां पालयित्री तस्यै हविर्जुहोतनेत्युक्ति।

एवञ्चात्रोदितविषमन्त्रद्वयार्थस्योक्तविधपूर्वामावास्यारूपत्ववचनेनैव सामञ्जस्यम्। तस्मात्पूर्वामावास्या कुमेरावर्धास्तमितादित्यरूपिणीति वेदे सूर्यस्यैवैकस्य स्तव इति पूर्वेषां मतस्योपपत्ति। निरुक्ताभिमतदेवपत्नीत्वस्यापि भेदरूपामावास्याया देवपत्नीत्ववर्णनस्यापि सम्भवेनोपपत्ति।

याज्ञिकाभिमतपूर्वामावास्यात्वमपि सगतमिति सिनीवाली कुमेरुगतार्धास्तमितादित्यरूपिणीति सिध्यति। सिनीवालीशब्दोऽप्यमुमेवार्थं पुष्णाति। तत्र सिनीत्यनेन बन्ध उच्यते। षिञ्धातोर्बन्धनार्थात्तस्य निष्पत्ते। तदुक्त-

---

1 ऋ.म २ ३२ ७

त्वात्सा सिनीवाली। अस्तावसरीयस्यादित्यस्य वरुणशब्देन वेदे मैत्रावरुण-सूक्तादिषु वचनात्। वरुणस्य पाशशायुधत्वेन वर्णनात्। अस्तमारस्य पाश-बन्धनस्य वचनात्सिनीवाली पूर्वोक्तरीत्या कुमेरुस्थादित्यरूपिण्यमावास्या पूर्वा सिनीवालीनामिका।

यत्तु निरुक्तकारेण सिनशब्दस्यान्नार्थत्वं गृहीत्वा तद्युक्तार्थे इकारं प्रत्यय मत्वा वालशब्दस्य च वृधातुतो निष्पत्तिः, रेफस्य लकारभावो व्यत्यासादिति वालं पर्व सूर्याचन्द्रमसोः सहवासरूपामावास्येति वचनम्। तन्न सम्यक्, अव्या-वर्तकत्वात्। सिनीवालीनामान्नवत्पर्वरूपिणी अन्नं च पैतृककर्मनिबन्धनम्। पैतृकञ्चकर्म दिनभेदेनामावास्याभेदे पूर्वस्यामेव भवति न परस्यामिति निया-मकाभावेन परस्या अप्यन्नवत्वसम्भवेन पूर्वस्याः सिनीवालीत्वकथने बीजा-भावात्।

यथा भुवि कुमेरावस्तमयकालीनसूर्याचन्द्रमसोः सहवासकालोऽस्तावसरीयः, तत्रत्यामावास्या सिनीवालीपदबोध्या, एवं भुव उत्तरपार्श्वे सुमेरावस्तकालिक-सूर्येन्दुसहवासकालीनतत्रत्याऽमावास्या कुहूशब्दबोध्या। अत एवोच्यते योत्तरा ।ा कुहूरिति। विद्यते हि तत्र सूर्याचन्द्रमसोः सहवासः सूर्यस्यादर्शनं च परस्तात्। उत्तरदिक्सम्बन्धात्सोत्तरेत्युच्यते इत्युक्तम्।

कुहूरिति नामाप्युक्तार्थबोधकम्। कुहूरित्यस्य कौ होम इत्यर्थकता, कुशब्दस्य पृथिवीबोधकत्वेन कुमेरुबोधकता, तत्र होमो दानमर्थाद्द्यो-लोकीयैः। द्योलोकश्च भुव उत्तरपार्श्वे सुमेरुरूप इत्युक्तम्। यथा कुमेरौ विद्य-मानेन दीयमानं तेजो यागहोमरूपेणोच्यते, एवं सुमेरौ विद्यमानेन दीयमानस्य तेजसोऽपि होमादिरूपत्वमिति कौ होमो यया सा कुहूरिति कुहूनामकत्वम्। अमावास्येति वचनादुत्तरे सुमेरौ सूर्याचन्द्रमसोः सहवासो दर्शनञ्च प्राप्तमिति उत्तरदिक्सम्बन्धात् सहवासादर्शनवत्वाच्च सामावास्योत्तरा कुहूरिति नाम-बोध्येति। तन्मन्त्रतोऽप्यमर्थो विस्पष्टः। तथाहि तदीयो मन्त्रः—

> कुहूमहंसुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि।
> सा नो ददातु श्रवणं पितॄणां तस्यैते देवि हविषा विधेम[1] ।। इति।

अत्र सुवृतमिति विशेषणेन द्योलोकसम्बन्धितोच्यते। द्योलोकस्य सुवरिति नाम सुष्ठुवरणेन निमित्तेन। तद्वदस्या अपि सुष्ठुवरणेन हेतुना सुवृतमिति विशेष-णम्। विद्मनापसमित्यनेन पृथिवीसम्बन्धो व्यज्यते। सुमेरौ द्योलोके यज्ञो यथा यज्धातुना वाच्यत एवं कुमेरौ यज्ञो विद्धातुना बोध्यते।

विद्धातोर्यज्ञबोधकत्वं निघण्टौ यागबोधकेषु नामसु विदथेति नाम्ना विज्ञाप्यते। ततो विद्मनेतिपदेन वेदनरूपस्य पृथिवीगतस्य यज्ञस्य वचनेन तेन

---

१. तै. सं. ३:३:११:१६, एवञ्च–आ. श्रौ. सू. १:१०

विद्मना यज्ञेन कर्मवतो यज्ञरूपकर्मकर्त्रीमित्यर्थ । इद पद सुमेरुसम्बन्ध कुहूवा अभि०पञ्जयति । सुहवायास्तस्या प्रकृतयज्ञार्थकेन अस्मिन् यज्ञ इत्यनेन सुमेरुत कुमेरुगतयज्ञस्य बोध । तस्या कुहूवा सकाशात् पितृणा श्रवणस्य प्रार्थनम । पितृश्रवण पितृणा यत्र पार्श्वे निवासस्तद्रूप श्रवण पार्श्व ददातु तत्पार्श्व प्रापय-त्वित्यर्थ । एवमपरस्तस्या मन्त्र —

> कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविष शृणोतु ।
> सन्दाशुषे किरतु भूरि वाम रायस्पोष यजमाने दधातु[1] ॥ इति ।

अनेनापि देवानामपा कुहूरिति वचनेन देवताकर्तृक को होम, स च देवतास्वस्तमयावसरीय इति । एषा अमृतस्य पत्नी हव्या चास्य यज्ञस्य श्रुति-भाव प्राप्नोतु । दाश्वांश्चात्तरदिकस्तस्मै भूरि वाम वामावृत्त धन सा किरतु ददातु । यजमाने च रायो धनस्य पोष दधात्विति । वाममिति विशेषण च धनस्य दक्षिणदिक्सम्बन्ध बोधयति । एवञ्चैतद्वचनेन कुहूवा कुमेरुसम्बन्धव्यक्ति । तेनैषास्तावसरीयेति च व्यक्त भवति । एवञ्चैषा सहवासनिबन्धना परस्तात् सूर्यस्यादर्शनेन युतेति पूर्वमुक्तमेव । तत एषोत्तराऽमावास्या कुहूपदवाच्येति ।

आदित्यस्यास्तावसरीयत्व यथामावास्यायाश्चन्द्रदर्शतश्च यथा तस्या पर्वो-त्तरात्वमेवमुदयकालिकत्वेन पूर्णिमाया अपि तादृशत्वम्, पूर्वोत्तरापरसम्बन्धित्व च । तथाहि पूर्णत्व विप्रकृष्टत्व च निमित्तीकृत्य पूर्णिमाशब्दोऽयमाह । तच्च पूर्णत्व विप्रकृष्टत्व च निरूपकमपेक्षमाण सूर्याचन्द्रमसावेव तत्त्वेन गृह्णाति । भवति च सूर्याचन्द्रमसोर्विप्रकृष्टत्व गृहीत्वा तच्छब्दप्रवृत्ति ।

तत्र चन्द्रम शब्देन कलावतो मासकृतश्चन्द्रमसो ग्रहण लोके, अत्र त्वादि-त्यस्यैव चन्द्रमस्त्वेन ग्रहण, पूर्वोत्तरात्वेनामावास्यावत् पूर्णिमाया अपि प्रामा-णिकग्रन्थेषु वचनात् । एवञ्च सुमरुकुमरुवर्तिनोर्देशभेदेन भिन्नत्वेनाभिप्रेयमाण-योरादित्यरूपसूर्याचन्द्रमसोर्विप्रकृष्टत्व सम्बन्ध एव पूर्णत्वऽपि । एवञ्चेद विप्र-कृष्टत्व पूर्णत्व सूर्याचन्द्रमसोरेव । तच्चोदयावसरीयम् । उदयान्तरे क्रमेण प्रवृत्त आदित्य पूर्ण उदितो यत्र तत्स्थानस्य तत्रत्यामावास्यास्थलीयनरसहवासस्यानता विप्रकृष्टत्वम् ।

स्थानगतस्य तस्य विप्रकर्षस्य तत्स्थानवर्तिनि आदित्ये समारोपेण सोऽपि विप्रकृष्ट इत्युच्यते । तत्र दक्षिणस्या दिशि उदितस्य सामस्य तद्रूपस्यादित्य-स्योदयस्थान, तस्या दिशि अस्तावसरीयसहवासस्थानतो विप्रकृष्टम् । तत्स्थान-गतस्य तस्मिन्नारोप कृत्वा सोऽपि विप्रकृष्ट इत्युच्यते । तथा तस्य दर्शन पूर्णत्वे-

---

१ तै. स ३ ३ १२ २० एवञ्च—आ श्रौ सू १ १०

नेति पूर्णत्वं विप्रकृष्टत्वं भवतीति सा पूर्वा पौर्णमासीत्युच्यते। तस्या नामानुमतिः। तदेतत्तादीयमन्त्रतोऽपि व्यज्यते। अयं तन्मन्त्रः—

अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम्। अग्निश्च हव्यवाहनो
भवतं दाशुषे मयः[1]। इति।

एकत्रोदितेनादित्येनापरत्र प्रकाशस्य दानं यागहोमादिरूपं पूर्वमुक्तम्। एवं सति दक्षिणदिक्केनादित्येन दीयमानः प्रकाशो दक्षिणदिक्कानां यज्ञः। तथा चासौ देवानामभिप्रायेण क्रियमाणः यज्ञः। स च देवतासम्बन्ध्यग्निसापेक्षः। दवतासम्वन्धिन्यन्यकर्तृके च यज्ञे आहवनीयोऽग्निः स देवतासु हव्यवहनाद्धव्यवाहनशब्देनोच्यते। स चाग्निरेषाऽनुमतिश्च नोऽस्मदीय यज्ञमनुमन्यतामिति दाशुषे सुखसम्पादकत्वमूच्यते इति।

तथा च देवतोद्देश्यकयागवर्णनतो दक्षिणदिशः सम्बन्धो व्यक्तो भवति। एवं चैतन्मन्त्रतस्तस्य विप्रकृष्टस्य पूर्णस्य देवतोद्देश्यकयागकर्तुरुदितत्वरूपवर्णत्वं प्रतीयते विप्रकृष्टत्वं, च। एषा पूर्णिमा पूर्वा भवति। यथैषा दक्षिणदिग्गता पूर्णिमा पूर्वा एवमुत्तरदिग्गता सा राकेति। तत्रापि तद्दिशि सहवासादर्शनस्थानरूपावस्तिमयस्थानतस्तत्र पूर्णविम्बोदयस्थानस्य विप्रकृष्टत्वं, तच्च तत्रत्य आदित्ये आरोप्य तस्य विप्रकृष्टत्वं पूर्णत्वं चेति तत्कालिकात्वेनैषा पूर्णिमा उत्तरोच्यते। राकेति तन्नामेत्युक्तम्। तदीयश्च मन्त्रः—

राकमहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा वोधतु त्मना।
सीव्यत्वपः सूच्या च्छिद्यमाना ददातु वीरं शतदायमुक्थ्यम्[2]।। इति।

द्वितीयो मन्त्रस्तस्या एवम्—

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा[3]।। इति।

अत्र सुहवात्वं ह्वानकर्मत्वं, सुभगात्वं चोदयकालिक्या एव तस्याः सम्भवतीति उदयकालिक्यास्तस्या ग्रहणं वोधयति। अपां कर्मणां सातत्येन प्रवृत्तिरूपं सीवनमच्छिद्यमानकिरणरूपसूच्या उदयकालित्वं तस्या वोधितम्। एवं शतदाययुक्त उक्थ्यो रात्रिकालिकादित्यरूपपुत्रस्य दानं करोत्वित्यपि तदैव संगतम्।

एवं द्वितीयमन्त्रे वसुनः सहस्रयोपत्वं सुभगत्वमुक्तरीत्यैव संगच्छते। एषैवोत्तरा पूर्णमासी वेदे विवक्षिता। अत एव दर्शपूर्णमासयोरहोरूपत्वमुच्यमानं तैत्तिरीये सगतम्। ये अहोरात्रे ते दर्शपूर्णमासाविति। तत्राहःपदस्य पूर्णमासेन

१. शु. य. सं. ३४:६ २. ऋ. सं. २:३२:४
३. ऋ. वे. २:३२:५

सम्बन्धः। दर्शपूर्णमासशब्दे दर्शशब्दस्याल्पाच्तरत्वेन पूर्वनिपात । एव च यदहः सा पूर्णमासी, या रात्रिः स दर्श इति क्रमिकान्वयाभिप्रायेणोक्तवाक्य मगच्छते। अन्यथाहोरात्रयोस्तद्वचनस्य सम्यक्त्व न स्यात्। एवञ्चेदानीमुक्तरत्वे निघण्टौ मध्यमस्थानेऽनुमत्यादीनां वचनस्य सगति । एव देवपत्नीत्ववर्णनमपि सगतमिति दिक्।

४३. वाताप्य शब्दार्थनिर्णय.

निरुक्ते वाताप्यशब्दो निघण्टौ अनिर्णीतार्थत्वेन पठितस्यार्थनिर्णयावसरे उच्यते वाताप्यमुदक भवति वात एतदाप्याययति इति। एतद्विवरणतो विज्ञायते वाताप्येत्यय शब्दोऽकारान्तस्तस्यार्थविषये विचार इति।

यतो निरुक्ते वाताप्यमुदकं भवतीति वर्णनेन तस्य प्रथमान्तताप्रतीतेः। वातेनाप्यायनाद्वाताप्यस्य तत्त्वमिति। तच्चाप्यायनमुदकस्येति वाताप्यशब्द उदकस्य बोधक इति। निगमश्च तत्रोक्त पुनानो वाताप्य विश्वश्चन्द्रमिति। टीकाकृता दुर्गादासेन व्याख्यायामुच्यते-वाताप्यमुदक प्राप्य द्रवीभूतः सोम। सम्पूर्णो मन्त्रश्चेत् पर्यालोच्येत तदानीमुभयस्य निर्युक्तिकताप्रतीतिः। एवमत्र सम्पूर्णो मन्त्रः—

नु नो रयिमुपमास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम्।
प्रवन्दितुरिन्दो तार्यायुः प्रातर्मक्षू वियावसुर्जगम्यात्[1] ॥ इति।

अत्र सामानाधिकरण्याद्रयिमित्यस्य विशेषणानि नृवन्तमित्यादीनि प्रतीयन्ते। तथा सति तत्र वाताप्यमित्यपि रयिविशेषणमेव। तच्चेदं पुल्लिङ्गम्। रयिमित्यस्य पुल्लिङ्गत्वात्। अतएव नृवन्तमित्यस्य पुंस्त्वमुपपन्नम्। तथा सति वाताप्यमित्ययमपि पुल्लिङ्गो द्वितीयान्त एव। तत्र पुनः सन्देहो द्वितीयैकवचनान्तोऽसौ किमकारान्तो वा स्यादिकारान्तो वा। मन्त्रान्तरसम्पर्कादस्यानकारान्तत्व प्रतीयते।

तथाहि अन्नसूक्ते उच्यते—वातापेऽपीव इद्भव इति। तत्र वातापे इति सम्बोधनान्नाय शब्दोऽकारान्त. प्रत्युतेकारान्तः। तस्येकारान्तस्य सम्बोधने रूप वातापे इति मन्त्रे। एव सति प्रकृतमन्त्रेऽपि इकारान्तवातापिशब्दस्य द्वितीयैकवचने बहुलवचनादमि पूर्वरूपाभावेऽर्यमितिवद वाताप्यमिति पुल्लिङ्ग-द्वितीयैकवचनान्तस्य वाताप्यमित्येव रूपम्। तथा सति तन्मन्त्रोक्तरयिमिति विशेष्येणानुगुण विशेषण स्यात्। एवञ्च वाताप्यमित्यस्य नोदकपरताऽपितु वातद्वाराऽऽप्नियुक्तमिति यौगिकत्वमात्रम्। तच्च तन्मन्त्रोक्तरयिविशेषणत्वेनोपपद्यत इति।

---

१. ऋ. स. ६.६३.५

तत्रोदाहरणं मन्त्रे उच्यते–हे इन्दो हे सोमास्मदर्थं पुनानो गच्छन्। पू धातोर्गत्यर्थकेषु निघण्टौ पाठादस्य गत्यर्थत्वम्। रयिं धनमादित्यरूपमुप सविधे मास्वोत्पादय। सविधश्च देशः कुमेरुस्तत्रेत्यर्थः। कीदृशं रयिम्, नृवन्तं नृभिर्नेतृभिः किरणैस्तद्वन्तम्। किरणानां मण्डलनेतृत्वमिति कल्पना। अत एव सप्त युञ्जन्तीत्यादि उपपन्नम्। पुनः कीदृश रयिम्। वाताप्यम्, वातेन प्राप्यमाणम्।

अयं भावः–वातो हि सदा गमनशीलः प्रतिदिनं प्रचलन्नादित्यः। स च क्रमेणोत्तरा गमनावसरे सुमेरौ प्रथमं दृग्गोचरो भवति, ततः परस्तात् क्रमेणादित्यदर्शनमनस्तमितं तत्रोदितं भवतीति पूर्ववर्तिना तेनेदं दत्तमिति कल्पना यथा सुमेरावेवं कुमेरावपि। वातेनाप्यत इति वा वातापित्वं बिम्बस्य। अन्नसूक्तेऽपि बिम्बस्यान्नत्वेन स्तुतौ तस्य वातापे इति सम्बोधनमुक्तकल्पनया। पुनः कीदृशं विश्वश्चन्द्रम्। विश्वं सर्वं प्रत्यविशेषात् देवान् मनुष्यान् पितृन् पश्वादीनपि प्रति चन्द्रमानन्दयितृ सुखकरमित्यर्थः।

कुमेरुष्ठानामुदयस्तस्याह्लादकरत्वं सुमेरुष्ठानामपि दिवाभागे आपेक्षिकप्रखरकिरणवत्त्वापेक्षया सुखकरताऽस्तमयत आदित्यस्यैवं मध्यमादिस्थानवासिनः प्रत्यपीति गृहीत्वोच्यते विश्वश्चन्द्रमिति। अत्र विश्वश्चन्द्रशब्दस्य सुश्चन्द्रहरिश्चन्द्रवत्सुडागमः। इदमेकं पदमत एव विश्वश्चन्द्रपदे एकस्वरयोगिता। विश्व इत्यस्य पृथक्पदत्वे चन्द्रमित्यस्यापि तथात्वे उभयोः पृथक्स्वरता स्यात्।

एवञ्च दुर्गादासोक्तं विश्वः सर्वो जन इति विवरणं न सम्यक्। आदित्यमण्डले त्रिधा किरणयोगः। तत्राग्रवर्ती किरणसंघ आदित्यं स्तौतीति कल्पना। पश्चाद्वर्ती चादित्यं नमतीवेति। सम्मुखश्च तमाह्वयतीवेति। तद्युक्तस्य स्तोतृत्वं मत्वोच्यते वन्दितुरतीतस्य पश्चाद्वर्तिकिरणसम्बन्धिन आदित्यस्य सम्बन्धि आयुः स एवाविरतं चलन्नादित्यरूप आयुरूपो वायुरूपस्तं प्रतारि प्रवर्द्धय।

अय भावः–अयं सर्वदा प्रचलन्नादित्यः सुमेरुसन्निकटे कुमेरुसन्निकटे च देशे हठान्नोदितोऽस्तमितो वा बहुकालं भवति, किन्तु तस्य देशस्य सुमेरुकुमेर्वोः सामीप्यानुसारेण क्रमश उदयास्तमयौ स्वल्पकालमारभ्य बहुकालपर्यन्तं कुर्वाणः प्रवर्धित इत्युक्तिः। अत एवैतस्यादित्यस्य देशानुसारेणोदेत्य स्वल्पकालं प्रकाश्य विश्व, पुनरस्तमये उदितस्य तस्य स्वल्पोर्ध्वदेशसम्बन्धोत्तरं पुनरस्तमये शुनः पुच्छवद्भावः। यथा शुनः पुच्छं स्वल्पप्तिर्यग्भावं प्राप्तं भवति एवम्।

अत एव तस्य तथाभावमापन्नस्य शुनःपुच्छशब्देन व्यवहारः। एवं बहुकालं वर्तमानः सः प्रवर्धित इति गृहीत्वाऽऽयुपः प्रतरणोक्तिः। आयुवायुशब्दयोः समानार्थत्वं निरुक्तकार आह–आयुरेव वकारोपजनं प्राप्य वायुर्भवति। तद्वदत्र।

एव प्रात काले वियावसुरूपो वा सविता तद्रूप आदित्यो जगम्यात् गच्छतु प्राप्तो भवतु दिनमुदित भवत्विति प्रार्थना ।

४४. मर्यादाशब्दवचनस्यलेऽपि विसंगति

एव मर्यादाशब्दवचनस्यलेऽपि न स्पष्टार्थत्वम् । तथाहि मन्त्र –

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यहुरोऽगात् ।
आयोर्हं स्कम्भ उपमस्य नीळे पथा विसर्गे धरुणेषु तस्थौ ।।

एतन्मन्त्रस्यादिममर्धं निरुक्तकारेण अहुर शब्दार्थनिर्णयाय निगमत्वेनोक्तम् । व्याख्यात च तत्तनैवम्–सप्तैव मर्यादा कवयश्चक्रुस्तासामेकामप्यभिगच्छन्नहस्वान् भवति । स्तेय तल्पारोहण, ब्रह्महत्या, भ्रूणहत्या, सुरापान, दुष्कृतस्य कर्मण. पुनः पुनः सेवा पातकेऽनृतोद्यमिति ।

दुर्गाचार्येण सम्पूर्णं मन्त्र प्रदर्श्य तस्य व्याख्यानमेव कृतम्–सप्त मर्यादा· सप्त स्थिती कवयो मेधाविनो हिरण्यगर्भमनुप्रभृतयस्ततक्षु कृतवन्त । नित्या एव हि ता, तैस्तु तत्प्रख्यायिकानुस्मरणार्थं ग्रन्थसन्दर्भोऽभिव्यञ्जित । एतदेव करणमित्युपचर्यते । तासामेकामिदभ्यहुरोऽगात् । इदित्यनर्थक· । अप्यर्थे वा । तासा मर्यादानामेकामभिगच्छन्नभिक्रामन् अहस्वान् भवति । गादित्येनदभे समीपमाक्रम्य एकामप्यभिगच्छन्निति । कतमास्ता मर्यादा इति ? स्तेय तल्पारोहणम् इत्येवमाद्याः । य पुनरेताः नाभिगच्छति तस्य किम् इति ।

स आयोरयनस्य सूर्यस्य स्कम्भे स्कम्भने मण्डले उपमस्य सर्वभूतोपनिर्मातुरादित्यान्तरपुरुषस्य नीळे नीडे निलयने स्थाने यानि धरुणानि धारयितृणि स्थानानि अप्रध्वसीनि आभूतसम्प्लवस्थायीनि तेषु तस्थौ तिष्ठति आह–कस्मिन् काले ? पथा विसर्गे विषयानुप्रवेशमार्गभूतानामिन्द्रियाणा विसर्गे विसर्जनकाले प्राप्ते मृत्युकाल इत्यर्थ· । मर्यादासंसर्गात्स्पष्टतर एव निगम इत्यतोंहुरशब्दो द्वितीयो नोपात्त । स्मृतिसमाचारश्चानेन प्रतिविशिष्ट उपदर्शितो भविष्यतीत्येव मन्त्रेभ्य एवापहृत्य सर्व एव समाचारो विशिष्टं. स्मृतिकारै सन्दृष्टो न स्वतन्त्र इत्यर्थः इति ।

अत्र मर्यादाशब्दस्य तत्सप्तकस्य तत्साहित्येनाहुरशब्दस्य वचनाद्भाष्यकारेण पापपरत्वमुक्तम । यद्यपि पापाना विषये कापि सख्या न नियता, विशिष्टपापविषये पञ्चत्वसख्या योगः प्रसिद्धो न सप्तसख्यायोग. । अहुरशब्दस्यापि न पापयुक्तत्वार्थकत्व नियतम् । एव च मर्यादावचनात्तत्सप्तकग्रहणाच्च न पापपरत्वनिश्चय । एव महापातकाना पञ्चत्वस्य प्रसिद्धया सप्तसख्यापूरणार्थं दुष्कृतस्य कर्मण पुन पुन. सेवाया पातकान्तरत्वेन ग्रहण प्रसिद्धिविरुद्धम् ।

---

१. ऋ· वे १०.५.६

महापातकं पुनः पुनरनुष्ठीयमानं पातकान्तरं न भवति। ब्रह्महत्या पुनः पुनरनुष्ठिता न पातकान्तरं किन्तु ब्रह्महत्यैव सा। केवलमभ्यासेन प्रायश्चित्ताभावस्य तत्र प्राप्तिः। एवं मिथ्यावचनस्य पापत्वेऽपि न पातकत्वं नापि वा महापातकत्वं, दुष्कृतस्य पातकस्य विषये तस्य पातकत्वसम्भवेऽपि तस्य न महापातकत्वमिति तस्यापि महापातकसदृशत्वेन न प्राप्तिरिति प्रकृते पातकेषु सप्तसंख्याया अप्रसिद्धेर्यथा कथञ्चन तत्पूरणे पातकान्तराग्रहणे विनिगमनाविरहः।

तस्मान्नात्र मर्यादशब्देन पातकानि, तानि च सप्तेति नियन्तुं शक्यम्। संभवमात्रेण ग्रहणे प्रकारान्तरेणापि सम्भवेऽयमेव प्रकारो ग्रहीतव्यो नान्य इत्यत्र न किमपि प्रमाणमुपलब्धं स्यात्। एतेनांहस्वत्व-वचनेन पापपरतेति वचनमपि परास्तम्, तेनोक्तपापसहायकत्वस्य निर्णेतुमशक्यत्वात्। अंहस्वाञ्छब्दः पापिन एव बोधकः इति नियमनमपि दुर्घटं न तावता पातकस्य नियमः। एवं परस्परसाहित्यात्तथार्थपरत्ववचनमपि परास्तम्। अस्यां दशायां मर्यादाशब्दस्य तत्सप्तकस्यार्थानिश्चयान्मन्त्रो न विस्पष्टार्थः।

यत्तु टीकाकृत निरुक्तार्थव्याख्याने मन्त्रस्य पूर्वार्धं निरुक्तकाररीत्या व्याख्यायोत्तरार्धं शेषेण व्याख्यातं तथा—यः पुनरेतानभिगच्छति स इत्यध्याहारेण। तदपि मन्त्रपूर्वार्धस्य सति पूर्वोक्तरीत्या व्याख्याने यथा कथञ्चन तादृक्तेन वचनीयं स्यात्। आयोः सूर्यपरताऽयनवशतः, स्कम्भनमित्यस्य स्पष्टार्थत्वाभावे मण्डलपरता, उपमस्योपनिर्मात्रर्थत्वं तच्च मण्डलस्थे पुरुषे तस्य नीड निलयने स्थाने, धरुणशब्दस्याप्रध्वंसिस्थानपरत्वं तेषु, तस्थावित्यस्य व्यत्ययेन तिष्ठतिपरता तच्च पथामिन्द्रियपरत्वं विसर्ग इत्यस्य मृत्युपरता इत्येवं बहुविधार्थकल्पनद्वारेति क्लेशेन सम्पादनीयम्।

किञ्च पूर्वार्धे मर्यादानां सप्ताधिकरणानि मर्यादासम्बन्धित्वेन प्राप्तानि, संख्यासाम्यात्। तानि तत आच्छिद्य मन्त्रेऽनुक्तस्य मर्यादानभिगन्तृपुरुषस्य सम्बन्धित्वेन ग्रहीतव्यानि। अत्रापि तस्थाविति पदेन गृह्यमाणस्य कर्तुर्विशेषावचनात्सप्ताधिकरणसम्बन्धित्वेन सप्तानामप्यधिकरणानां तदधिकरणता वक्तव्या। तां परित्यज्य विसर्गधरुणानामेवाधिकरणानां तत्कर्तृयोगः स्कम्भरूपस्याधिकरणस्य सूर्यमण्डलस्य पुरुषं प्रति तत्वं नीडस्य धरुणः सम्बन्ध इति।

ऐकरूप्येण सर्वाधिकरणसम्बन्धस्य स्थितिकर्त्रा प्राप्तस्य परित्याग इति। पूर्वार्धेन तद्योगस्तात्पर्यादिति बहुविधता कल्पनाया इति तत्कल्पने सर्वत्र प्रमाणानुपन्यासेन केवलं सम्भवात्सैव विशिष्यादृता। एवं सम्भवपरत्वे प्रकारान्तरेणापि सम्भवेऽयमेवैतस्यार्थ इति नियमनाभावे नियमनादस्पष्टार्थता मन्त्रार्थस्येति। तदर्थं प्रयत्यते।

कविभिर्मर्यादाना तक्षण करणमित्यशो मन्त्रे स्पष्टमुच्यते । मर्यादाना सप्तत्वमपि स्पष्ट प्रतिपादितमेव । परन्तु ता मर्यादा का इति तु न स्पष्ट मन्त्रे, कथञ्च तासा सप्तत्वमित्यशो विस्पष्ट । तत्र द्वितीयपादे तासामेका योऽभिगात् अभि सम्मुख गतस्सोहुर॰ । अथवा योऽभिगच्छेत् सोहुर इति प्रतिपादनेन तत्साहित्येन मर्यादाशब्दस्य पापपरता मन्यते । तावता तत् सप्तत्वस्य पापपरताया न सम्यगन्वय । न हि पापानि सप्तैवेति प्रसिद्धि । महापापपरत्वे मर्यादाशब्दस्य पापमात्रपरस्य महापापरूपविशेषार्थपरत्व पापमात्राभिगमने प्राप्तस्याहुरत्वस्य महापापाभिगमने एव स्वीकर्तव्य स्यात् ।

किञ्च तावताऽपि"भक्षितेऽपि लशुने न शान्तो व्याधिरिति" न्यायेन सप्तसख्यान्वयोऽनुपपन्नोऽवशिष्यत एव । तस्मान्मर्यादाशब्दस्य नात्र पापपरता किन्तु अवधिपरत्व, ते चावधयः सप्त कविभि कृता उक्ता इत्यर्थ । ते चावधय कुत्र कस्येति मन्त्रावचनादलभ्य तस्य स्थाननिर्णयाय मन्त्रे इच्छब्द प्रयुक्त । इच्छब्दस्य पृथिवीसम्बन्धपरता पूर्व प्रतिपादितैव ।

एव च पृथिव्यामवधयः सप्त कविभि कृता इत्यर्थ पर्यवस्यति । कस्येत्यश. परमवशिष्यते । तच्च द्वितीयपादवशतो लभ्यते । तत्रोच्यते एकामभिगादहुर । इति । एवञ्च सोऽवधिरभिगमनस्याहस्वित्वप्राप्तेर्वेति लभ्यते । अवधिसप्तकल्पनेऽपि निमित्तमत्र वर्णनाल्लभ्यते । तच्चाहस्वित्वतारतम्यम् । अवधयोऽनेके बहुवचनात्, मर्यादा इति बहुवचनम् । तासामेकामभिगन्तुरहस्वित्वमिति वचने विशेषावचनात्सर्वासामभिगमनेंऽहस्वितेत्यर्थो लभ्यत । एकापदेन तन्मध्यवर्तिन्या कस्या अपि ग्रहण प्राप्तमिति सर्वासामभिगमनेंऽहस्वित्वमित्यर्थलाभ. ।

मर्यादाना बहुवचनेन भेदाद्भिन्नकारणवशत एकविधस्यैकस्यैव कार्यस्य वक्तुमशक्यत्वेन कारणभेदे कार्यतारतम्य लभ्यते इति तत्तारतम्यमेव कारणसख्याकल्पनेऽपि निमित्तमिति । यद्यपि कार्यभेदेन कारणभेदो वर्णयितु शक्यो न तु तस्येयत्ता, तथापि कार्यविशेषस्य प्रमाणान्तरेण सख्यानियमने कारणसख्याया अपि नियमनस्य तेनैव प्राप्ते । एवञ्चात्र कारणभूतावधे सप्तत्व मूल उच्यमान कार्यसप्तत्वमप्यनुमापयतीति मर्यादासप्तकवशत कार्यभूतमहुरसप्तक कल्प्यते ।

अहुर शब्दस्याहस्विपरतयाऽहस्विशब्दे मतुबर्थकविनिप्रत्यययोगेनाहस्वितारतम्यमहस्तारतम्ये पर्यवस्यति । तस्मादहस्तारतम्यस्य सप्तविधत्व मर्यादया उच्यमान मन्त्रेंऽहसस्तारतम्य साधयतीति सिध्यति । सर्वमेवेदमह. पदार्थविज्ञाने सभवेत् । अहः शब्दे पदार्थस्तु न मन्त्रे स्पष्टमुक्त इति सर्वमिद सदोषमिति चेन्न ।

वेदे आदित्यस्यैवंकस्य वर्णनमिति पूर्वाचार्यणामबाधितसिद्धान्तत्वेन तदनुरोधेनाह स्वरूपनिर्णय. । अह. शब्दस्य मलवाचकत्वेनादित्यस्य वर्णने तत्र तमसोऽपेक्षया मलान्तरस्यासभवेन तमोरूप. एवाह. पदार्थोऽत्र ग्रहीतव्य । तस्य

तारतम्यमुपाधिवशत इति । उपाधिवशतोऽन्यूनाधिकभावं विभिन्नसंख्याकत्वमुपगतस्यांहसो मर्यादासप्तकं निमित्तमित्यर्थोऽहः पर्यवस्यति ।

अंहोरूपं तमश्च रात्रिरावद्धं रात्रिभेदरूपोपाधिवशतो भेदमापद्यते । रात्रिभेदोऽपि हि उपाधिवशतोऽनेकविध इति पूर्वं प्रपंचितम् । तत्र ये भेदका उपावयस्ते रात्र्याः साक्षाद्दृष्टार इति गृहीत्वा रात्रिसूक्ते प्रतिपादितं "ये ते रात्रि नृचक्षसो युक्तासो नवतिर्नवेत्यादिना । ते च तमसो विभेदा अवधिसप्तके भवन्तीति" प्रकृतमन्त्रे प्रतिपादितम् ।

एवं सतीमे अवधेः सप्त भेदास्तत्रैकमपि अवधिभेदं प्राप्तः, अर्थाशादित्यस्तमसा युक्तो भवति, अर्थात्तत्र रात्रिप्रवृत्या तस्यादर्शनादिना मलिनत्वं भवतीति । तच्च मलिनत्वं कियत्कालपर्यन्तं भवतीत्येतद्ये ते रात्रिनृचक्षस इत्यादिना प्रतिपादितम् । तत्रैतत्सर्वमित् पृथिवीसम्बन्धि भवति । सत्येतं पृथिवीन्यायो द्योलोकेऽपि भवतीति द्योलोकेऽपि तादृशाः सप्तावधयो वक्तव्याः ।

ते चेत्तादृशा अवधयः प्रोक्तसंख्याका उक्ता लभ्येरंस्तर्हि अत्रापि मन्त्रे तत्साम्यादस्मदुक्तार्थपरत्वमेवोपोद्वलित भवति । तच्चानुपदं विचारयिष्यत एव । एवञ्च मन्त्रपूर्वार्धे मर्यादारूपास्सप्तावधय उक्तास्तेषामभिगमनेंऽहस्विता भवतीति प्रतिपादितम् । ते चावधयः पृथिवीसम्बन्धिन इति इच्छब्देन तत्रैव मन्त्रार्धे वर्तमानेनोक्तम् ।

अवधीनां स्थानानि परं वक्तव्यानि । तत्रावधयः सप्तेति तत्स्थानान्यपि सप्तापेक्षणीयानि । तानि मन्त्रापरार्धे सप्तम्यन्तेनोच्यन्ते । तथाहि मन्त्रोत्तरार्धम्–"आयोर्ह स्कम्भे, उपमस्य नीळे, पथां विसर्गे, धरूणेषु तस्थौ" इत्यनेन । तत्र आयोःस्कम्भे एकम्, उपमस्य नीळ द्वितीयम्, पथां विसर्गे तृतीयम्, धरुणेषु चत्वारीति मिलित्वा अवधेः सप्त स्थानानि निर्दिश्यन्ते तद्वशतस्तेषां पूर्वोक्तमर्यादाभिरेव सम्बन्धो व्यक्तो भवति ।

आयोःस्कम्भ एकं स्थानम् । तत्रैकस्मिन्दिनेऽर्थात् सुमेरुकुमेर्वोः पर्याये यदोभयोरपि लोकयोरादित्ययोगः पर्यायेण स्वल्पकालं भवति तत्रत्यस्यादित्यस्य पर्यायेणोभयलोकाभ्यां तत् स्यादित्याभ्यामीपन्मिश्रणात्तत्रादित्यस्य आयुशब्देन वचनं, तत्रैकस्मिन्पर्याये यदा कियत्कालपर्यन्तमादित्यस्य एकस्मिन् भुवोदक्षिणार्धगतकुमेरुसम्बन्धिप्रदेशसम्बन्धेन दर्शनं तदैव तस्मिन्नेव पर्याये भुव उत्तरार्धगतसुमेरुसम्बन्धिप्रदेशसम्बन्धेनादर्शनं यदा वा तत्सम्बन्धेन दर्शनमपरस्मिस्तददर्शनमिति ।

स च भावः सुमेरौ कुमेरौ वा पाण्मासिकदिनप्रारम्भतः पूर्वं भवति कियत्कालम् । तदभिप्रेत्यैवादित्ये शुनो लांगूलत्वादिकल्पनमिति पूर्वमुक्तम् ।

एवञ्चास्य आदित्यो यदैकस्मिन् स्वल्पकालसम्बन्धेन युक्त पर्याये, तदानीमपरत्र तावत्या मात्रया अधिकसम्बन्धा भवति । यदा चैव स्वल्पकालसम्बन्धस्यात्ययस्तदानी तस्य तत्र देश उदीयमानतेति तत परस्तात्सोऽनेकपर्यायपर्यन्तमुदित एव दृश्येत, तस्योक्तरीत्यानेकपर्यायपर्यन्तमुदितत्वेन दृश्यमानस्य परा काष्ठा षण्मासा इति । तदेतदुभयस्मिन सुमेरौ कुमेरौ वा भवति ।

प्रकृते कुमेरुसम्बन्धो विचारणीय इति तत्र सर्वात्मना पर्याये आयुर्मात्रसम्बन्धित्व तदायुषो विवर्धनमन्त्रे आशास्यमुच्यते । तत्रायुशब्दस्य सान्तत्वमुकारान्तत्व वेति गृहीत्वा श्लेषेणायुषोऽपि सम्बन्धस्य विवक्षितत्व तत्रायु शब्देन सान्तेन वचनम् । तच्च तादृश बहुषु स्थलेषु प्रतिपादितम् । उदाहरणार्थमुच्यते—

> सविता पश्चातात् सविता पुरस्तात् सवितोत्तरात्तात् सविताधरात्तात् ।
> सविता न: सुवतु सर्वतातिं सविता नो रासतां दीर्घमायु [1] इति ।

अत्र सवित्रा दीर्घस्यायोर्दानमेव दीर्घस्यायुषे दान तत् प्रार्थ्यते । आयुष्यादिशब्दानामप्युक्तविधायुष सम्बन्धेनैव प्रवृत्तिरिति परस्तात् प्रतिपादयिष्यते । समवायु, गृहीत्वा मन्त्रे प्रोच्यते आयु पवत आयवे इति । यदायुभावस्तदानीमेकस्मिन्पर्याये स्थानभेदेन भिन्नायुद्वययोग. ।

तत्रोच्यत एक आयुः परस्मा आयवे पवते गच्छति । पूधातोर्गमनार्थेषु निघण्टौ पाठ । तच्चायव आयोर्गमन पूर्वमुक्तरीत्या । एवञ्चायो स्कम्भे यत्रायुभावोऽवसितस्तत्तैक मर्यादास्थानम् । तच्च आयोह स्कम्भे इत्यनेन सप्तम्यन्तेनोच्यते । द्वितीयमुच्यते उपमस्य नीळे । नीडशब्दस्य गृहबोधकेषु नामसु निघण्टौ पाठान्नीड गृह तच्चास्तरूपम्, तत्रास्तशब्दस्यापि पाठात् ।

एव सति तच्च गृहमुपमस्य । उपमशब्देनाप आयो. सविधे मिमीत प्रकाशयन्ति इति उपमशब्द आदित्यस्य बोधक. । आयो स्कम्भोत्तरमेवासौ उपमशब्देनोच्यते । तस्यास्तो यदा तदानीं द्वितीय मर्यादास्थान तत्रेति तत् नीळ इति सप्तम्या बोधितम् । तृतीय यथा विसर्गे इति सप्तम्यन्तेनोच्यते । तत्र पथामिति बहुवचन पथिचतुष्टयाभिप्रायम् । पन्थास्तु देवयानपितृयानरूपो भवति । तस्य प्रत्येक चातुर्विध्य पूर्वं विस्तरेण प्रतिपादितम् ।

तत्र सर्वेषा चतुर्विधानामपि पथाम्, अर्थात् पृथिवीसम्बन्धात् पितृयानरूपाणा सर्वेषा विसर्गेऽवसाने समाप्तावेव । तद्विसर्ग इत्यनेनावसान समाप्तिर्वा बोध्यते । स च पथा विसर्गो रात्रिमध्ये भवति तदेतत्तृतीय मर्यादास्थानम् । चत्वारि धरुणानि मर्यादास्थानानि इति मर्यादासप्तके उक्तविधेऽवधिस्थाने

---

१. ऋ स १० ३६:१४

वर्तते इति मर्यादाया एकवचनाभिप्रायेण तस्याविव्याख्याते एकवचनम् । धरुण-स्वरूपं पूर्वमुक्तम् । यथा चातुर्विध्याभिप्रायेण धरुणानामपि चातुर्विध्यम् ।

एवञ्चोत्तरार्धेन मन्त्रस्य मर्यादास्थानान्येव बोध्यन्ते । तथा सति तत्रोक्त-रीत्या टीकाकृतो व्याख्यानमत्रानवसरप्राप्तम् । एवञ्चायं मन्त्रो नोक्तविधपाप-सप्तकबोधको यथा निरुक्ते व्याख्यातम् । एवञ्चादित्यपरतयैवात्र मन्त्रार्थं स्पष्ट-त्वमिति सिध्यति । सुमेरुकुमेर्वोर्यविद्दूरं समानन्यायतां, हित्वा प्रत्येकं ये विशेषा-स्तान् । एवं सति कुमेरावुक्तमन्त्रेणोक्तविधमर्यादासप्तकबोधनेन सुमेरावपि अवधिसप्तकमपेक्ष्यते । तदुल्लेखस्यासत्वेऽपि कुमेरुसमानन्यायेन सुमेरौ तस्य कल्पनं कर्तव्यमेव । तथापि न सर्वथा तदुल्लेखो नास्तिति । तदुक्तं पुरुष-सूक्ते—

> सप्तास्यासन् परिधयः त्रिः सप्तसमिधः कृताः ।
> देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥[1] इति ।

अत्र देवानां यज्ञकर्तृत्ववचनेनायं यज्ञः सुमेरावनुष्ठीयमान इति भवति । देवानां यज्ञः सुमेरौ मनुष्याणां यज्ञः कुमेराविति पूर्वमुक्तम् । एवञ्च पूर्वमर्यादा-सप्तकरूपावधिसप्तकमिदित्यनेनपृथिवीसम्बन्धीति पूर्वमुक्तम् । पृथिवीसम्बद्धो यज्ञश्च मानुषो न दैवः । दैवो यज्ञश्च सुमेराविति देवानुष्ठेये यज्ञे सप्तानां परिधीनां वचनं तत्राप्युक्तविधावधिसप्तकस्य बोधकमिति ।

एवञ्च सुमेरुव्यवहारसाम्यात्तत्रावधिसप्तकवचनादत्र मन्त्रे मर्यादाशब्देना-वधेरेव ग्रहणम् । तस्य सप्तेत्यनेन सप्तकं बोध्यते । तस्यैवावस्थानस्थानानि उत्तरार्धेन मन्त्रस्य प्रतिपाद्यन्ते, एवञ्चात्र पापादिपरत्वेन व्याख्यानं न सम्भव-तीति दिक् ।

### ४५. वराहशब्दार्थविवेचनम्

एवं विश्वेत्तेति मन्त्रे वराहशब्दस्यार्थाविज्ञानान्मन्त्रस्याविस्पष्टार्थता । तथाहि अयं मन्त्र एवम्—

> विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः ।
> शतं महिषान् क्षीरपाकमोदनं वराहमिन्द्र एमुषम्[2] ॥ इति ।

अयं मन्त्रो निरुक्तकारेण वराहशब्दस्य मेघातिरिक्तार्थे प्रयुज्यमानस्य वराहारूपनिरुक्तिवशत एवं प्रवृत्ति मत्वा वराहशब्दस्य निगमत्वेन खण्डश उपात्तो वराहमिन्द्र एमुषमिति ।

---

१. ऋ. सं. १०:९०:१५
२. ऋ. वे. ८:७७:१० निरुक्तम् ५:४:१

दुर्गाचार्येण चोपर्युक्त निगम सम्पूर्णमन्त्ररूपेण विलिख्य व्याख्या क्रियते। यथा-कण्वस्य कुरुमुतेरार्षम्। ऐन्द्रो। विश्वा इत्ता विश्वान्येव तानि विष्णुराभरत्। उरुक्रमो बहुविक्रान्त। त्वेषित सन्दीपित इन्द्रवाक्येन दुर्गाह्वया त्वा आहेंत्यवोचथा एतदाहरेत्यनेन। त्वा इषित इति पदविभाग। यदि त्वा इषित इति पदविभागमकृत्वैव निरुक्तम। परोक्षकृतत्वान्मन्त्रस्य। नान्यथार्थे उपपद्यते। कानि पुनस्तानि वस्तून्याहरदिति।

उच्यते। शत महिषान्बहून्महतो यज्ञानाहरत। किं लक्षणानित्युच्यते। क्षीरपाकमोदनम्। प्रायणीयाख्यमादितः कृत्वा ते क्रियन्ते तान। सामक्रतूनित्यभिप्राय। कुत पुनराहरदित्युच्यते असुर वराहरूपेणावस्थितम। सर्वेषामसुराणा मध्ये एमुष मोहस्थानीयम्। मायया यमिन्द्रो जघान तन्मध्यादाहरत्। यदय वराहमिन्द्र एमुषमेकविंशत्या पुरा पारे इत्युच्यते। एव ब्राह्मण मैत्रायणीये। तदभिवादिनी चैषा ऋगिति।

अत्र टीकाकृदभिप्रतार्थबोधनार्थं बहूना पदानामध्याहारो विभक्तिविपरिणामादिक कल्पनीयम। तावतापि पूर्वार्धोक्ताहर्तव्यवस्तूना विश्वा इति विशेषस्यानुपपत्ति। तेन शब्देन सर्वत्व बोध्यते। तद्यदि सोमक्रतुविषयक तर्हि महिषानिनि बहुवचनेनैव सिद्धिरिति शतपदोपादानमनर्थक, बहुवचनेनैव सख्याविशेषानियमात सर्वे इत्यर्थलाभ।

अथ सख्याविशेषाभिप्रायक शतशब्दो मूल इति, तथा सति के ते कुल खते इति सख्याविशेषग्रहणस्याभिप्रायो वक्तव्य स्यात्। किञ्च आहर्तव्यसर्ववस्तुबोधनाय मन्त्रोत्तरार्ध प्रवृत्त। अतएव तेषामाहर्तव्यतावोधनाभिप्रायेणोत्तरार्धोक्तानामाहरणकर्मताबोधकद्वितीयान्तत्वेनोल्लेख। तथासति ओदनस्य वराहस्य आहरणेन कर्मत्वेन सम्बन्धो वक्तव्य।

तथासति ओदनशब्दस्यादित्यप्रायणीयचर्वर्थकत्वेन सोमसम्बन्धे आहरणेन साक कर्मत्वस्य साक्षात्सम्बन्धेन प्रतीयमानस्यानुपपत्ति। किञ्च यत्र स चरुहोम क्रियते तादृशानित्यध्याहारेणार्थकल्पने ओदनशब्दस्य प्रथमान्तत्वे प्रक्रमभग। द्वितीयान्तत्वे होमकर्मता प्रतीयेत न त्वाहरणकर्मता।

किञ्च वराहशब्दस्यापि आहरणकर्मतया प्रतीयमानस्यासुरपरत्वेऽनुपपत्ति। न हि असुर आह्रियत। किञ्चैकरूपत्वेनोच्यमानस्याभरदिति पदस्य सोमक्रतवभिप्रायेणान्यार्थत्व वराहाभिप्रायेणान्यार्थत्व वक्तव्य स्यात्। समानरूपेणान्वयसम्भवे तादृशकल्पनाया अयुक्तत्वम। किञ्चैवमाद्यन्तयोरेकरूपेणाहरणकर्मतयान्वये मध्यवर्तिन ओदनपदस्यापि आहरणकर्मता यथा स्यात्तादृशोऽर्थो वक्तव्य स्यात्।

तथा सति ओदनमित्यस्याहरणकर्मत्वे सोमक्रतुबोधकलिङ्गाभावान्महिष-शब्दस्य तदर्थबोधकत्वं न स्यात् । ब्राह्मणोक्तस्यैकविंशत्याः पुरां पारे इत्यस्यानुप-पत्तिरेव स्यादिति तस्मादेवमर्थो नोचितः । तस्मादेतन्मन्त्रस्यास्पष्टार्थत्वम् ।

तत्रोच्यते–मन्त्रे ता तानि । तेन च तच्छब्देन प्रसिद्धार्थ उच्यते । अतएव ब्राह्मणे विष्णोरभिप्रायेणेन्द्रवाक्यमुच्यते दुर्ग्राह्या त्वा आहर्ता दुर्ग्राह्याणि त्वया आनेष्यन्त इत्युच्यते, तर्हि इमानि दुर्ग्राह्याणि तान्याहरेत्यर्थं परमिन्द्रवाक्यमुच्यते एतदाहरेति । तत्रैतच्छब्दबोध्यस्य दुर्ग्राह्यत्वं प्रसिद्धमिति प्रतीयते । तानि च दुर्ग्राह्यत्वेन प्रसिद्धानि वस्तुनि मन्त्रद्वितीयार्धेनोच्यन्ते ।

नचात्र ब्राह्मणे एकवचनेन वराहविषयत्वमेव तेन बोध्यते, नेतरशतमहि-षादिविषयत्वं तेन बोध्यत इति वाच्यम् । एतदिति नपुंसकलिंगैकवचनेन सर्वेषां मन्त्रोक्तानां बोधात् । वराहमात्राभिप्रायकत्वे एवमिति पुल्लिगो निर्देशः कृतोऽभविष्यत् । तत्रैतेषां दुर्ग्राह्यत्वं भवेत् तथा तानि व्याख्येयानि ।

मन्त्रे उरुक्रम इति विशेषणेन एकेनैव क्रमेणाहर्तव्याहरणे तव क्लेशो नास्तीति प्रतीयते । स हि विष्णुः पदत्रयन्यासेनैव सर्वं जगद्व्याप्तवानिति उरुक्रमः । त्वेषित इत्यत्र त्वा इषित इति पदद्वयम् । त्वा त्वया इषितः प्रेरितः । तत्रेन्द्रं प्रति प्रतिपाद्यते हे इन्द्र त्वा त्वयेषितः प्रेरितो विष्णुस्ता तानि दुर्ग्राह्य-त्वेन प्रसिद्धानि विश्वा सर्वाणि इदाभरत् । सविधवर्तिन्यर्थे आभरत् आनयत् क्रमेणेत्यर्थः । तत्र प्रथमं महिषा आहरणीयविषयाः तेऽत्र रात्रिकालीनतमोवि-शिष्टाः परिक्रमाः ।

अयं भावः– अत्र रात्र्यवसानकालिकोऽर्थ इच्छब्देन बोध्यते । तथा च सर्वमिदं वक्ष्यमाणमिद हृतम् । सर्वमिदं रात्रिकालिकम् । तत्र मेरौ षाण्मासिक-दिनरात्राभ्यां संवत्सरो व्याप्यते । तत्र दिनमानं द्वयधिकाशीत्यधिकशतपरिक्रम-रूपम् । तत्रादित्यमण्डलं परिक्रमद् भवति तद्भ्रमवशतो दिने परिक्रमा गण्यन्ते ।

एवं रात्रिमानमपि तावत्परिक्रमरूपम् । तत्र रात्रौ दृश्यमाननक्षत्रतारा-दिपरिभ्रमतो मीयन्ते परिक्रमाः । रात्रावादित्याभावेन तमोविशिष्टास्ते परि-क्रमास्तमसो न्यूनाधिकत्ववशतो दुर्गत्वेन व्यवह्रियन्ते । तानीमानि रात्रिकालि-कानि वस्तूनि तमसावृतानीति दुर्ग्राह्याण्युच्यन्ते । तत्रादित्यास्तोत्तरं कियत्कालं प्रकाशस्य प्रकृष्टत्वेन न सम्यक् तमस उपलम्भः । स च विंशतिपरिक्रमपर्यन्त प्रकृष्ट इति विंशतिपुरा पारे परस्तादित्यर्थः । अर्थादेकविंशपरिक्रममारभ्य स्वल्पतमसः प्रवृत्या तदारभ्येत्युक्तम् ।

यद्यपि पूर्वं चत्वारिंश्यां शरदि लाभ इत्युक्तं ततोऽकिंकंविस्पष्टंतमः प्रवर्तत इत्यभिप्रायेण । किञ्चात्र मैत्रायणीयके विंशतिपुरां पारे इत्युक्ततया ततो

गृह्यते, तत परस्ताच्छतसख्याका महिपा महान्तस्त परिक्रमास्तमोवैशिष्ट्येन महिपा महिपसदृशा इत्यपि वक्तु शक्यम्। एव सति ग्राभरदित्यस्य सम्यगन्वय।

यद्यपि ग्रानयनमपि कल्पितमेव तथापि शब्दान्वयसौकर्याय महिपकल्पनेति। तत परस्तात् क्षीरपाकमोदनमुपोत्प चरुसाधनभाण्डम् [सम्भवत्युपसि मण्डलतस्तिर्यक्प्रसरत्तजोवशतोऽन्युब्जभाण्डकल्पना। ग्रथवोत्तानभाण्डकल्पना। चरुशब्दस्य भाण्डपरत्वस्य मीमासकैर्व्यवस्थापनाद्भाण्डरूपता। किञ्चात्र क्षीरपाकमिति विशेपणेनाऽपि भाण्डरूपत्वमेवोचितम्। न हि ग्रोदनशब्देनोदन गृहीत्वा तत्र क्षीर पक्तु शक्यम्। तस्मादोदनशब्दस्तत्साधनभाण्डपर इति तत्साजात्यादत्र ग्रोदनशब्देन तत्साधन भाण्ड ग्रहीतव्यम्, तच्चोक्तरूपम्।

एव सति उपसमिति द्वितीयमिदमाहरणकर्म। ततो वराह एमुप। स च सवितृरूपो वा मण्डलरूपो वा। द्वितीयकल्पनैवात्र समुचिता। उपसो भाण्डकल्पनया तस्या ग्रामण्डल सत्ता ग्रभिप्रेयते। सावित्रकालमन्तर्भाव्यापि उपस कालवर्णनात्। एव सति रात्रिकालिकाना सर्वेपा परिक्रमाणा वचन भवति।

पूर्वं विंशतिपरिक्रमा पुरोरूपत्वेन गृहीता। तत शतपरिक्रमपर्यन्ता महिपास्तत सावित्रकालमन्तर्भाव्य उपस पष्टिपरिक्रमा इति मिलित्वा २०+१००+६० साकल्येनाशीत्यधिकशतपरिक्रमा रात्रिकालिका पूर्णा भवन्तीत्यर्थं। यद्यपि रात्रिपरिभ्रमाणा द्वाभ्यामाधिक्य पूर्वमुक्त तथापि सामान्यतो वत्सरमान पष्ट्यधिकशतत्रय निगद्यते। यथा ब्राह्मण उच्यते–"त्रीणि च शतानि पष्टिश्च सवत्सरस्याहानि"इति। रात्रेरप्यहस्त्वेनग्रहणान तावन्ति सवत्सरस्याहानीत्युक्तम्। रात्र्या ग्रहस्त्वेन वर्णन मन्त्र "ग्रहश्च कृष्णमहरर्जुनचे" त्यादौ। मन्त्रेऽप्युच्यते यथा—

द्वादश प्रधयश्चक्रमेक त्रीणि नभ्यानि न उच्चिकेत।
तस्मिन् त्साक त्रिशता न शकवोऽर्पिता पष्टिर्न चलाचलासा[1]॥ इति।

तावती रात्रिस्तावत्परिक्रमा तत परस्तादादित्यबिम्बमुदेतु परिक्रमते। तत्रेन्द्रो मण्डलमध्य पूर्वदिक्स्थान। तत्रेन्द्ररूपताप्राप्त्यर्थं मण्डलस्य परिक्रमाद्वयमपेक्ष्यते, तच्चेद्रात्रिपरिक्रमेपु गण्यते तावता पूर्वोक्ताना द्वयधिकाशीत्यधिकशतरूपा १८२ सख्या सम्पद्यते।

ग्रत्र वराहस्येन्द्र एमुपत्ववचनात्। इन्द्र उक्तरीत्या मण्डलमध्यस्थान. पूर्वस्या दिशि। ग्रत एव इन्द्रस्या प्रत्यक्षत्वमुच्यते। ग्रत एव सजनीये सूक्ते कार्यमुखेनानुमानेन तत्सत्व सजनास इन्द्र इत्यनेनोच्यते। ग्रत एव ब्राह्मणे–ऋपयो

---

१. ऋ स १ १६४ ४८

हैनं न ददृशु रिति वर्णनम्। तत्रेन्द्रे एमुपत्वं वराहस्योच्यते। एमुपमित्यनेन जग्मिवांसमित्यर्थः प्रतिपाद्यते।

अमधातोर्गत्यर्थात् क्वसौ एत्वे अभ्यासलोपे छान्दसत्वादम्यपि सम्प्रसारणे एमुपमिति जग्मिवांसं, तच्चेन्द्र इति सप्तम्यन्तत्वेनेन्द्रे जग्मिवांसमिन्द्ररूपत्वं लब्धुमिन्द्ररूपापादनार्थं वा आगच्छन्तमित्यर्थः। तादृशो वराह आदित्यमण्डलस्वरूप एव वराहरणात्। वराहशब्दो वराणि वस्तूनि आहरतीति कृत्वा वराहारो वराह शब्देनोच्यते।

अथवा वरं गृहं अर्थादादित्यस्य तच्चास्तमये तस्य। अस्तशब्दस्य गृहनामसु पाठादस्तमयशब्देन तस्य गृहप्राप्तिरुच्यते। तस्माद् वराद् गृहादाह्रियत इति वराहारो वराह इति तेन शब्देनादित्यस्य वचनम्। तस्येन्द्रे आगमनवचनान्मध्यपर्यन्ता प्राप्तिरभिप्रेयते। तावत्पर्यन्त प्रापणार्थमादित्येन परिक्रमद्वयं कर्तव्यं भवति।

अयं भावः-आदित्येन तत्र सुमेरौ कुमेरौ वा मध्यस्थानात् अर्थाद्विषुववृत्तस्य क्रान्तिवृत्तेन संवत्सरप्रारम्भे यत्र संम्पातः क्रियते दक्षिणोत्तरवृते तत्रत्यबिन्दुतो दक्षिणस्यामुत्तरस्यां वा स्थूलेन मानेन चतुर्विशत्यशपर्यन्तं सूक्ष्मेण सार्धत्रयोविशत्यंशपर्यन्त गत्वा आगम्यते। दक्षिणस्यामुत्तरस्यां वा उभयतो गमनागमनाभ्यां वत्सरः पूर्यते।

तत्रैकस्मिन् पार्श्वे तावन्तोंऽशागमनार्थं तावन्तश्चागमनार्थमुपयुज्यन्ते। तच्च गमनं मासत्रयेण, आगमनञ्च मासत्रयेण सम्पद्यते। तत्र मासत्रयेण मासत्रयार्थमपेक्षमाणाः परिक्रमा नवतिसंख्याकास्तावद्भि; परिक्रमेश्चेत्सार्धत्रयोविशत्यंशा अतीयन्ते, तदेकेन परिक्रमेण कियदतिक्रमणमित्यनुपातेन—९०:१::२३॥::?

$$=\frac{१ X २३\frac{1}{2}}{९०}=\frac{१}{९०}\times\frac{४७}{२}\times ६०=४७\times ६०/९0 X २=२८२०/१८०=१५\frac{२}{३}$$

—स्थूलेन मानेन पञ्चदशकलाः प्रतिपरिक्रममतीयन्त इति भवति। आदित्यबिम्बं चैकांशव्यासमापाततः प्रतीतम्।

तदेव गृहीत्वा मन्त्रे उच्यते "गायत्रेण प्रतिमिमीते अर्कम्" इति। गायत्रेण दैव्येन छन्दसा अर्कमादित्यं मिमीत इति।

दैव्यं गायत्रं छन्द एकाक्षरं छन्दः सूत्रे प्रोच्यते "दैव्येकम्" इति। अक्षरं चांश इति समानार्थम्। एवं चैकांशात्मकबिम्बस्य पूर्णस्यात्ययनार्थमुदयार्थ वा परिक्रमचतुष्टयं भवति। तत्र बिम्बमध्यप्राप्तिपर्यन्तं परिक्रमद्वयं तत इन्द्ररूपबिम्बमध्यप्राप्तिरिति तस्य परिक्रमद्वयस्य पूर्वोक्तरात्रिपरिक्रमेषु योजनाद्वयविकत्वं भवतीति।

एवं चात्र मन्त्रे शतं महिषा, क्षीरपाकमोदनं, वराहश्चेति क्रममेवाहर्तव्यं बोध्यते, न तु टीकाकृता यथोक्तं मैत्रायणीयानुसारेण वराहनामकमसुरं हत्वा तन्मध्यान्मह्यान्तं सोमयागाः शतसंख्याका इन्द्रवचनेन त्वेपितो विष्णुराहरदिति। क्षीरपाकमोदनमिति वचनं सोमयागबोधकं यतस्तेन वचनेन य आदित्यं चरुं प्रायणीयमनुष्ठाय क्रियते स यागो बोध्यते, तादृशश्च सोमयागो भवतीति महिषशब्देन सोमयागं गृहीत्वा शतशब्देन तावत्संख्याका सोमयागा इत्यर्थः। एवं च टीकाकृता कृतः प्रयत्नः स तु सर्वात्मना न सुसंगतोऽत्र मन्त्रे।

४६. वृषाकपिशब्दार्थप्रतिपादनम्

किञ्च मन्त्रान्तरानुगुण्येनास्मदुक्त एवार्थोऽत्र मन्त्रे वक्तव्यो न तु टीकाकृदभिप्रेतः। एतावता वराहः उदेष्यन्नादित्य एवेति त्रीणीमानि मन्त्रोक्तानि वस्तूनि शतं महिषा, क्षीरपाकमोदनं, इन्द्र एमिवान् वराहश्चेति दुर्ग्राह्याणि वस्तूनि सर्वाणीमानि विष्णुराभरद्यतो यमुरुक्रमः। अत एवैतेनैव क्रमेणैतान्याहृतानीति। इमानि च सर्वाण्युदयस्थलाभिप्रायेणैव क्रमाणि। अस्तस्थलाभिप्रायेण क्रमविवक्षित चैतानि विपरीतक्रमाणि भवेयुः।

तादृरूप्येण च वृषाकपिसूक्ते वचनमुपलभ्यते। तच्च स तादृशं वृषाकपिसूक्तगतं वर्णनमस्य मन्त्रस्यैवविधार्थकरणे उपोद्घलकमेतद्वशतश्च तत्रत्यमन्त्रस्यार्थकरणमुपपद्यते परस्परसम्बद्धत्वात्। तथाहि तत्रास्तमुपयन्नादित्यो वृषाकपिसूक्तेनोच्यते। तत्रत्यपरिस्थित्यनुसारेण तदीयमन्त्रे विपरीतक्रमेणैतानि वस्तूनि उच्यन्ते। तथाहि स मन्त्रः —

> अयमिन्द्र वृषाकपिः परस्वन्तं हतं विदत्।
> असिं सूनां नवं चरुमादेधस्यान आचितं विश्वस्मादिन्द्र उत्तरः[1] ॥इति।

अत्रास्तमुपयन्नादित्यो वृषाकपिरुच्यते। अस्तमुपयतश्चादित्यस्य मध्यमं स्थानत्वमिति तद्विष्णोः पादनिधानस्थानमर्थाद्विष्णोरपीदमेव स्थानमित्यसावस्तमुपयन्नादित्यो विष्णुः। एवमस्तमुपयतिश्च पश्चिमाया, पश्चिमायामुपयन्नस्तार्थमादित्यो रुद्रोऽपि। अत एवेन्द्रः प्रत्युच्यत मन्त्रे—रुद्राणामेति प्रदिशा विचक्षण इति।

रुद्राणां प्रदिशा विरुद्धया दिशेन्द्र एतीति वर्णने इन्द्रस्य पूर्वदिक् सम्बन्धितया बहुषु स्थलेषु वेदे उक्तेस्तद्विपरीतोऽपश्चिमारूपिणी रुद्रस्य दिक् भवति। एवञ्च पश्चिमां दिशमुपयन्नादित्यो रुद्रोऽपि। तदेव गृहीत्वा वृषाकपिशब्दबोध्यत्वमुभयोः। तदभिप्रायेण काशे उच्यते "हरविष्णू वृषाकपी" इति।

---

१ ऋ ५ १० ८६ १२

एवञ्च वृषाकपिस्तमुपयन्नादित्यस्तत्सम्बन्धितयाऽत्र वृषाकपिसूक्तगते उपरितने मन्त्रे असिः, चरुः, अन इति त्रयाणां विश्वेत्ते ति मन्त्रोक्तविपरीतक्रमेण वचनम्। अत्रास्तावसरीयं खण्डितं विम्बमसिः, स च तत्रत्यं विनाशयतीति वा पूर्वस्य यत्रासावस्तमेति तस्य विश्वस्य स्वगमनेनान्धकारयुतत्वसम्पादनेन वा हिंसक इति तस्य सुनेति विशेषणम्।

ततः परवर्तिसान्ध्यप्रकाशात्मोषसश्चरुशब्देन वचनम्। चरुशब्देनौदनपाकसाधनं पात्रमुच्यते। चरुशब्दस्य पात्रपरताया बहुत्र वेदे व्यवहारो मीमांसकसम्मतः। तच्चेदानीं नवमिति विशेषणेन विशेष्यते। ततः पर चैधस्यं काष्ठपरिपूरितमनः। तच्च काष्ठपरिपूरितवचनेन समेधनार्हमिति प्रतीयते। तच्च तमोरूपम्। पचनीयत्वेन तमसः वचनमन्यत्र। तमस्तेजः संयोगयाग्य, तेजः संयोगश्च पाकपदवोध्यः।

एवञ्च पाकयोग्यं पचनीयमिति तमसः पचनीयत्वेनैधस्यत्ववचनम्। आचीतमित्येन आ समन्ताच्चितं पुञ्जीभूतमिति विशेषणमनसः। तमसः पचनीयत्वाभिप्रायेण ब्राह्मणान्तरे उच्यते वरुणस्याभिषेच्यमानस्येन्द्रियं वीर्यमपाक्रामत् तत्रेधाभवत्, भृगुस्तृतीयं श्रायन्तीयं तृतीयं सरस्वती तृतीयमिति।

तत्र श्रायन्तीयमित्यनेन पचनीयत्वमुच्यते तमसः। श्रा पाके इत्यस्माच्छ्रायन्तीयपदस्य सिद्धेः। तृतीय सरस्वती तेजोयुक्ता उषाः। तस्याः सरस्वतीत्वेन ग्रहणे ततः पूर्ववर्तिनस्तमस एव श्रायन्तीयशब्देन वचन तच्चोक्तार्थकं तमसो वोधकम्। प्रथमतृतीयस्य भगवोधनेनापि उक्तमध्यवर्तितमस एव श्रायन्तीयत्वप्रतीतिः।

एवञ्च पचनीयमिति विशेषणात् पचनीयं तम एवात्र एधस्यानः शब्देन गृहीतम्। तथा च विश्वेत्तेतिमन्त्रे उक्ताः शतं महिषाःक्षीरपाकमोदनं वराहमिन्द्र एमुषमित्येवंरूपास्त्रयोऽत्र विपरीतक्रमेणोच्यन्ते। तत्रादित्यः सूनापदवोध्यः प्रथमस्ततो नवचरुवोध्योषास्तत आदितमेधस्यमनः इति पूर्वविपरीतक्रमेणोच्यन्ते त्रयः पदार्थाः।

एवञ्चैतेषामर्थानामत्र ग्रहणं क्रमश्च तद्वशतो विश्वेत्तेतिमन्त्र इमे एवार्था एतद्विपरीतत्वेन गृह्यन्ते। तत्रेवात्रापि विपरीतक्रमेणेम एवार्था गृह्यन्त इति परस्परमन्त्रार्थप्रतिपादने परस्परमन्त्रार्थस्य साहाय्यकत्वमिति।

अत्र मन्त्रे पूर्वार्धे अयमिन्द्र वृषाकपिः परस्वन्तं हतं विददित्यत्र हनशब्देन न हिंसितत्वं गृह्यते किन्तु अशोभनत्वं तच्च परस्वत्वात्। अर्थाद्विदूरदेशवर्तितया शोभनं तच्च परार्धोक्तमस्यादिकं विददित्येवार्थो न तु मृगादिरनुपस्थानात्। सन्निहितस्यान्वययोग्यस्य सत्वे तत्परित्यागेनानुपस्थितेन सम्बन्धस्यायोगात।

किञ्च विददित्यस्य स्वातन्त्र्येण हतमित्यस्य मृगपरस्य कर्मतया सम्बन्धित्वे परार्धोक्तानामसरलग्नकतापत्तिरिति तत्परत्वे व्याख्यानमयुक्तम् ।

४७ उक्ष्णो हि मे पञ्चदशेत्यादि मन्त्रार्थविचार —

उक्ष्णो हि मे पञ्चदश साकं पचन्ति विंशतिम् ।
उताहमद्मि पीव इदुभा कुक्षी पृणन्ति मे विश्वस्मादिन्द्र उत्तर[1] ॥

इति मन्त्रे सङ्ख्येयरहितसङ्ख्यामाननिर्देशेन तस्य पञ्चान्तिशब्दसान्निध्यादुक्ष्णो विशेषणत्वेन तावत्सङ्ख्याकान् वृषभान् मदर्थं पचन्ति ऋत्विज । तानह भक्षयित्वा पीवएव स्या मम कुक्षिद्वय पूरित स्यादित्यर्थकरण, तदाकस्मिक, कुत एतावतो वृषभान् ऋत्विज पचन्ति, कुत्र चैतद्भक्षणमिन्द्रस्य, अकस्मात् कथमिदमुच्यते मन्त्रे, उताहमद्मि पीव इदित्यस्योक्तभक्षणेन पीवो भविष्यामीत्यस्य करण तत्तु उतशब्दग्रहणस्य स्वारस्यविरुद्धम् । उतशब्दस्त्वत्राप्यर्थ. । अह पीवोऽपि सन्नद्मीति प्रतीते । उभा कुक्षी पृणन्ति इत्यत्र कर्तृत्व कुक्ष्यार्न भवितुमर्हति पृणन्तीति बहुवचननिर्देशात् ।

एतदर्थं पूर्वार्धोक्तस्य कर्तुरनुपगे ऋत्विजा सम्बन्धो भवेत्, नहि ते कुक्ष्या पूरका. । अथ यदि उक्ष्णा सम्बन्ध' कर्तृत्वेन तर्हि पूर्वस्मिन् वाक्ये कर्मत्वेन द्वितीयान्तस्योक्ष्ण पदस्याननुपगो विभक्तिविपरिणामश्च कर्तव्य इत्यनेका. कल्पना. कर्तव्याः भवेयु । तावताऽऽकस्मिकत्व तु दुर्वारमेव । यत्तु उक्ष्णा पाक सर्वसाधारण इति न स्थानविशेषापेक्षा । अत एव मन्त्रान्तरे उच्यते–उक्षाण पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन् । इति मन्त्रवशत उक्षपाक. पूर्वमासीदिति साधन, तथा पूर्वस्मिन् काले धर्मत्वमासीत् न तु तन्मन्त्रकाले इति, तदपि न साम्प्रदायिकमर्थकरणमिति पश्चात् प्रतिपादयिष्यते ।

एतावता उक्ष्णो हि मे इति मन्त्रस्य वेदकालत प्रवर्तमानमतेनानुक्रमणिकाकारोल्लिखितेन विरुद्ध, तेन वेदे सूर्यस्यैकस्य स्तव इति प्रतिपाद्यते । यद्यपि इन्द्रादिपरत्ववर्णनया नैतेन तन्मतविरोध इत्यपि सम्भवेद्वचस्तथापि सूर्येण तदभिन्नेनेन्द्रेण वस्तुत ऋषभाना भक्षणस्यासम्भवेनैतद्वर्णनस्य न वाच्यनिकार्यपरत्व किन्तु भिन्नतात्पर्येण तादृश वचन तर्हि तस्याप्रदर्शनेन न्यूनता ।

यत्तु तादृश वचन मृगशिरसि सम्पातनक्षत्रत्वसूचनायेति तावतापि उक्तसङ्ख्याकानामुक्ष्णा पाको भक्षणमित्यादेरतत्परत्वेनायुक्तत्वम् । वस्तुतस्तदपि न, नक्षत्रियप्रजापत्यादिबोधकवाक्यविरोधात् । तस्मादस्य मन्त्रस्य न स्पष्टार्थत्व सगतार्थत्व चेति ।

---

१. ऋ० स १०:८६·१४

एतच्च पाकोऽत्र प्रकाशानमेव न विविनक्ति तेन मे उभा उभौ कुक्षी पाकात्र भागौ पूरितौ भवतः । एवञ्च पृणन्तीत्यत्रापि पूर्वोक्तविंशतेः प्रकाशकानां पञ्चदशानामेव कर्तृत्वम् । न तु ऋत्विजां नापि उक्ष्णाम् । तदिदं विंशत्यन्तपर्यन्तभागस्यादनं प्रकाशेनात्मसात्करणम् । तावद्भागापाधिक्यानामुपमाम् इ न विन्द्यादादित्येनेन्द्राभिन्नेन तदद्नमित्यर्थः ।

इदित्यनेनादित्यसविधवर्तिपूर्वरत्नोभयकुक्षिपूरणम् । स्वयं पूर्णत्वात्तु नदद्मि । पीव इत्यनेन पूर्णता बोध्यते न तु रूप प्रकाशविलयन पूर्णता । अत्र विंशतेरदनवचनेन तावतोभयकुक्षिपूरणवचनात् पीव इत्यनेन स्वयं पूरणवचनाच्चादित्यप्रकाश उदयास्तादिस्थले तावदन्तपर्यन्तमेव प्रसरति, नानन्तपर्यन्तं स उदितो दृश्यत इत्यर्थः । एवं सति नात्र मन्त्रे ऋषभपाकः । विंशतिश्च पञ्चदश च न प्राच्यपर्यसस्यस्यादिकं सिध्यतीति पूर्वोक्तार्थकरणमनवनेव ।

यत्तु उक्ष्णः पृदिनमिति वचनेन ऋषभपाको वस्तुतः प्राचीन आसीन्मन्त्रकाले । स प्राचीन इति तानि धर्माणि प्रथमान्यासन् वर्णनम् । तदपि न स्वारस्यपरम् । तस्य भिन्नार्थत्वान्नाक्तसाधकत्वमिति परस्तात्प्रतिपादयिष्यते । यत्तु अत्र प्रयुज्यमानसंख्याद्वयं पञ्चदशरूपं तथा विंशतिरूपं द्वयं सङ्कलनेनैकाद्भुत्य सप्तस्नाया, संख्याया पञ्चत्रिंशदूपाया ग्रहनक्षत्रसंख्यापरत्वेन व्याख्यानाशयः । सा त्वतिस्थवीयसी । ग्रहनक्षत्राणामत्रानुपस्थानात् संख्यानुपपत्तेः । तत्कल्पनं तु तत्कुमशक्यं, प्रकारान्तरेण तदुपपादनात् ।

किञ्च तथात्वे तदीयसंख्यारूपावयवद्वारेणैव ग्रहनक्षत्रसंख्या प्रदर्शिता अभविष्यत् । पञ्चत्रिंशत्संख्याया अनेकावयवकत्वे न ग्रहनक्षत्रापेक्ष्यावयवद्वारेणाष्टाविंशतिर्नक्षत्राणि सप्त ग्रहाः इति संख्येव २८–७ रूपावयवकथनद्वारेणैव तत्प्रदर्शनं कृतमभविष्यत् । न तु पञ्चदश-विंशतिरूपावयवप्रदर्शनेन तत्प्रदर्शनं युक्तं स्यात् । तस्मान्न तादृगर्थकरणमुचितमिति दिक् ।

—0—

## अथ द्वितीयो विवेकः

१. मन्त्रभाग इव ब्राह्मणेष्वपि अर्थविसंगतिः, तन्निराकरणार्थमादित्यपरं व्याख्यानम्—

यथा मन्त्रभागेष्वेतावत्पर्यन्तमर्थस्य स्पष्टत्वायादित्यपरत्वमाश्रित्य प्रयत्नः प्रदर्शित एवं ब्राह्मणभागेऽपि आदित्यपरत्वं विना न सामञ्जस्यम् । टीकाकाराणां व्याख्या अपि यथाकथञ्चन प्रवर्तमाना न मनसस्तोषावहा इति कानिचन स्थलानि गृहीत्वा प्रदर्श्यन्ते ।

यद्यपि मीमांसकैर्ब्राह्मणभागस्यार्थविषये बहुलं प्रयतितम् । तैर्वेदीयब्राह्मणभागस्य भागद्वयं प्रकल्प्य अपूर्वार्थबोधको भागो विधिभागस्तदितरोऽर्थवादभाग इति विभागं कृत्वा विधिभागस्य विधेयार्थप्रकाशनेनार्थवत्त्वमुक्त्वा तत्सविधे उच्यमानस्य भागस्य प्रकारान्तरेण सार्थक्याभावेन वैयर्थ्ये प्राप्ते लक्षणावृत्या विधेयार्थप्रशंसाद्वारेण विध्येकवाक्यतया सार्थक्यं प्रदर्शितम् । तावतापि तत्र तेषां प्रयत्नः पुनर्न्यून एव भवति ।

यतोऽर्थवादभागस्य लक्षणावृत्या विध्येकवाक्यतया सार्थक्यसम्पादनेऽपि विधिनाऽपेक्षितविधेयार्थप्रशंसाया लाभार्थं कुत एतादृशो वाग्विन्यासो लक्षणावृत्या प्रशंसार्थमपेक्षितः । तादृशं वर्णनं कृत्वान्यथानुपपत्या लक्षणया विधेयप्राशस्त्यार्थो वर्णनीयो नहि साक्षाद्वाच्यवृत्यैव विधेयार्थप्रशंसको ब्राह्मणभागो ब्राह्मणेन कुतो नोक्तः । लक्षणया प्रशंसाबोधनार्थमेतादृशभागस्य वचनेन भवति किञ्चित्प्रयोजनम् इति न्यायेन तस्य कश्चन उपयोगो वक्तव्यः, किमित्येतादृशं शास्त्रलोकविरुद्धवर्णनं कृतमित्यस्य तैर्न सम्यक् समाधानं कृतम् ।

२. अहल्यायै जार इत्यस्य आदित्यपरंव्याख्यानम्—

यद्यपि शवरेण भाष्यकृता तादृशस्थले वाच्यस्यार्थस्य नित्यं कञ्चन वायुमाकाशं सूर्यं वा अर्थं गृहीत्वा वर्णनं कर्तव्यमित्युक्तं परन्तु तस्य विस्तरार्थं न प्रयतितं तावता तदीयः प्रयत्नस्तदंशे न्यून एव । यद्यपि कुमारिलभट्टाचार्यैरवतोदाहरणत्वेन सुब्रह्मण्याख्यनिगदीयमेकं वाक्यं गृहीत्वा नित्यार्थपरतया

व्याख्यान प्रदर्शितम् । यथा–निगद वाक्य "अहल्यायै जार[1]" इति । तस्य अहनि लीयत इत्यहल्या रात्रिस्तस्या जारो जरयिताऽऽदित्य इति व्याख्यान प्रदर्शितम् । तावता स प्रयत्नो न्यून एव । तदर्थं कतिपयार्थवादादिभागविषये प्रयत्यते ।

तत्रानुक्रमणिकाकारोपदर्शितप्राचीनमतान्तरानुसारेण सर्वस्य ब्राह्मणभागस्यार्थाद्विधिरूपस्यार्थवादरूपस्यापि आदित्यपरता अपेक्षणीया यतस्तेन पूर्वाचार्यमतमेव प्रकाशितम् एकैव वा देवता वेदे स्तूयते स महानात्मा स सूर्य इत्याचक्षत इति । तत्र वेदे इति वचनाद् ब्राह्मणभागस्यापि वेदभागत्वेन अर्थाद्वेदत्वेन तत्र सूर्यस्यैवैकस्य वर्णना ।

एव चार्थवादभाग इव विधिभागेऽपि सूर्यस्यैव वर्णना कर्तव्या । वर्णना स्तुतिरूपा गुणक्रियाप्रदर्शनद्वारेणेति विधिभागे विधीयमानक्रियादीनामप्यादित्यपरत्व यथा स्यात्तथा व्याख्यानप्रदर्शनमपेक्ष्यते । अर्थवादभागेऽपि आदित्यपरत्वेनैव सामञ्जस्य प्रदर्शनीयम् । तत्र मीमासकैर्विधिभागे विधेयार्थमात्रप्रदर्शनेनादित्यपरचायास्तत्रापेक्षणीयाया अप्रदर्शनान्न्यूनतैव व्याख्यानस्य ।

अर्थवादभागेऽपि लाक्षणिकार्थस्य विध्येकवाक्यतया सार्थक्यप्रदर्शनेऽपि वाच्यार्थस्योपादान तस्यादित्यपरतादिकस्याप्रदर्शनान्न्यूनतैव प्रयत्नस्य । तदर्थमर्थवादभागे आदित्यपरत्वेन व्याख्यानार्थं प्रथम प्रयासः ।

३. पुनर्वा एतमृत्विजो गर्भं कुर्वन्तीत्यादि दीक्षाब्राह्मणस्यादित्यपरं व्याख्यानम्–

तत्र सोमयागे यजमानेन प्रथमतो दीक्षाग्रहण कर्तव्य तेन तस्य पुनर्जन्मसपादनमिति ब्राह्मणे उच्यते पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति य दीक्षयन्तीति वचनेन दीक्षया यजमानस्य पुनर्जन्मसपादनमिति प्रतिपादितम् । जन्मग्रहणे प्रथमत आरम्भक्रिया. अत्रापि साजात्येन वर्णनीया इति तदर्थं ब्राह्मणे प्रतिविधेय गर्भसाजात्य प्रदर्श्यते । तत्र प्रथमतो यजमानस्याद्भिरभिषेक. कर्तव्य इत्युच्यते अद्भिरभिषिञ्चन्तीति ।

तस्य गर्भसारूप्याय तत्रोच्यते "रेतो वा आपस्सरेतमेवैन तत् कृत्वा दीक्षयन्ति" इति । यथा गर्भस्थाने प्रथमा अवस्था रेतोभावापत्ति सा अत्र यजमानस्याभिषेकेण सपादयन्ति ऋत्विज । रेतो जलरूपम् । या आपस्ता रेतोरूपिण्य. । एव सति यजमानस्याद्भिरभिषेकस्तस्य रेतोभावापत्तिरूपा गर्भस्य या प्रथमावस्था तत्सपादक इत्यर्थ. । तत ऊर्ध्वं द्वितीयो यजमानस्य सस्कार उक्तस्तत्र नवनीतेनाभ्यञ्जन्तीति । नवनीतेन यजमानगात्रे अभ्यञ्जन कुर्वन्ति ऋत्विज ।

तत्र गर्भयोग्य नवनीतमिति तेन गर्भभावापन्नस्य यजमानस्याभ्यञ्जन कर्तव्यमित्युक्तम् । नवनीतस्य गर्भयोग्यतास्थापनार्थं ब्राह्मणे अर्थवादः । यथा–

---

१. प. ब्रा. १:१

"आज्यं वै देवानां सुरभि घृतं मनुष्याणामायुतं पितृणां नवनीतं गर्भाणामिति" । तत्र मुख्यं विवक्षितं नवनीतं गर्भाणां योग्यं परन्तु प्रसंगान्नवनीतस्यावस्थान्तराणि विभिन्नानां योग्यानि प्रियाणि प्रतिपादितानि । तत्र नवनीतावस्थैव गर्भस्य योग्या । नवनीतस्य गर्भपोषकत्वाद्योग्यत्वम् तत्राज्यावस्था देवानां प्रिया तत्र प्रसिद्धिर्वैशब्देन द्योत्यते । तदुक्तम–"आज्यं वै देवानाम्" इति ।

अत्र योग्यं प्रियमित्याध्याहार: । आज्यस्यावस्थारूपत्वमुच्यते साम्प्रदायिकै: ईपद्विलीनमाज्यं स्यादिति । नवनीतस्य पाकेन संपाद्यमाना ईपद्विलीनघृतावस्था सा आज्यशब्देनोच्यत इति तदर्थ: । अपरावस्था घनीभूतता सा मनुष्याणां प्रियेत्युच्यते ब्राह्मणे "सुरभि घृतं मनुष्याणामिति" ।

अत्रापि योग्यं प्रियं चेत्यध्याहार: । घृतावस्थावर्णनं साम्प्रदायिकै: घनीभूतं घृतं विदु: इत्युच्यते । अर्थात् नवनीतपाकोत्तरं घृतभावापत्तौ या पूर्वा ईपद्विलीनभावावस्था सा देवानां, योत्तरा घनीभावावस्था सा मनुष्याणां योग्या प्रिया चेति । या च मध्यवर्ति अवस्था ईपन्मिश्ररूपा । घनीभावप्रारम्भे देवप्रियत्वं, स्वल्पे घनीभावे स्वल्पे विलीनभावे पितृणां प्रिया सावस्था, या च परवर्तिनी घनीभावावस्था सा मनुष्याणां योग्या प्रिया च । या च मूलभूता नवनीतावस्था सा च गर्भाणां योग्या । अतिमृदुलत्वाद्गर्भाणामतिमुदुलचिक्कणभावापन्नं नवनीतं गर्भप्रियं गर्भयोग्यम् । तत्पोषकत्वादित्युक्तमेव ।

तत्र भाष्यकारेणास्यार्थवादस्य व्याख्यानं कृत्वोक्तम्–यद्यपि तैत्तिरीयै: "घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणां नवनीतं गर्भाणामिति वर्ण्यते" इति वर्णनाया विभिन्नरूपत्वेन विरोधं प्रदर्श्य समाधानमेवं कृतम् । उभयत्र ऐतरेये तैत्तिरीये च नवनीतार्थवादत्वेन प्रदर्शितो विरोधो किञ्चित्कर इति ।

तत्रोच्यते–भवतूभयत्र नवनीतार्थवादता तावता वर्णने भेद: किन्निबन्धन इति शंकाया असमाधानमेव । तत्रापि पुनरेवं भवति नवनीतं विधेयम् । तस्यैव केवलं प्रशंसा कर्तव्या नवनीतं गर्भाणां योग्यमिति तावतैवात्र सार्थवादसंपत्त्या किमिति प्रकृतेऽनुपयुक्तम् आज्यं वा इत्यादिकं वर्ण्यते । तदनपेक्षणादनपेक्षिते पुनर्भेद: किमित्याश्रीयते ।

अथ प्रसंगान्नवनीतावस्था वर्ण्यन्ते तासां तत्तत्प्रियत्वमिति । तत्रापि केवलं नवनीतावस्थावर्णनं भवतु तासां पुन:प्रशंसा आज्यं वा इत्यनेन किमित्युच्यते । विधेयार्थस्य प्रशंसाऽनुष्ठानायापेक्ष्यते । अविधेयार्थस्य प्रशंसा सर्वात्मनाऽनुपयुक्तैव । नहि अत्र आज्यादीनि विधीयन्ते । अथ नवनीतसम्बद्धत्वात्तेषामपि वर्णनं विधेयनवनीतप्रशंसैवेति । तदपि न युक्तम् । विधेयनवनीतसम्बद्धानामपरेषामप्यर्थानां सत्त्वाविनिगमनाभावात्तेषामवर्णनेन न्यूनतापात इति ।

तस्मादादित्यपरत्व वणनस्येनि ख्यातयितुमेव तदुपादानम । तथाहि अत्रा-दित्यक्रियासारूप्येणैवेमे दीक्षितसस्कारा विधीयन्ते । अतएव तेपा गर्भत्वसम्पा-दनार्थतोच्यते पुनर्वा एतमृत्विजो गर्भं कुर्वन्तीति । अन्यथा कर्मकर्त्तव्य मशोधनार्थो दीक्षासस्कारो वक्तव्य , तदगतया स्नपनादिक विधयमित्येतावतैवापपत्ती तत्र गर्भसम्पादकत्ववर्णनस्य सर्वात्मनाऽनुपयुक्तत्वम् । आदित्यक्रियासारूप्येव गर्भ-रूपत्ववर्णनम् ।

तथाहि आदित्यस्य वस्तुत एकस्यापि सत उपाधिवशतो भेद प्रकल्प्य यज्ञयजमानरूपकल्पना । अत एव यज्ञेन यज्ञमयजन्तेति पुरुषसूक्त उच्यते । यज्ञो विष्णुरादित्य इति तस्यैव यजमानत्व साधनद्रव्यरूपत्व यागे इज्यमानदेवतारूप-त्वमिति । एवञ्चादित्य एव यजमानस्तस्य तदा तदा तत्तत्कार्यकर्तृत्वेन तदा तदोपस्थिता रश्मय एव ऋत्विजस्ते तमादित्य पुनर्गर्भं कुर्वन्ति ।

आदित्यो यत्र प्रकाशनार्थं प्रवर्तते तस्मिन लोके सोऽन्त प्रविष्ट इत्युच्यते, गर्भोऽपि तथा मातुरुदरे प्रविष्टो भवति । यदाचास्तमेति तताऽस्य जन्मेति वणना । अत एव वेदे कूटप्रश्नत्वेन वर्णना को वै तद्विजानाति यद् गर्भस्य सत सर्वविज्ञान प्रसूतमुत्पन्न न कोऽपि जानातीति । दशेम त्वष्टुर्जनयन्त गर्भमित्यादिना तस्य गर्भभावा वर्ण्यत । यदोदेतु प्रवर्तन स तत्र गर्भरूप , तस्य गर्भरूपतापादनार्थं पूर्वं रेतोरूपप्राप्त्यादिकास्तस्य वर्णनोरा भवन्ति ।

वेदे साजात्येन वर्णनदर्शनादत्राप्यादित्यस्य गर्भसाजात्याद् गर्भत्व तस्य रेतोभावादिर्वक्तव्या गर्भधर्म । तत्र तस्य गर्भरूपता पादनाथ स यत्रासावुदेष्यति तत्रत्यपूर्ववर्तिराभ्या उत्तरेऽर्धेऽद्भिरप्रत्यक्षतेजोभि. स सपृक्तो भवतीति कल्पना । अत एव तत्रादित्ये पादरूपकल्पनया दिवा भागे तेजायुक्तत्वेन स्वच्छत्व रात्रौ तेजसा विहीनत्वेन मलिनत्वमिति गृहीत्वा पादावनेजनकल्पना ऐतरेय-ब्राह्मण उच्यत दक्षिण पादमवनेनिजे" इत्यादिना ।

एतावता रात्रौ तस्याव्यक्ताभिस्तेजोरूपाभिरद्भिर्योगो देवकृतस्नपनाभिषेक-रूपो भवति । तत्साजात्यान्मानुषकोऽपि यजमान यजमानत्वरूपगर्भत्वसम्पत्त्यर्थं प्रथमत ऋत्विग्भिरभिषच्यते । तस्मिन्नव्यक्ततेजोरूपाभिरद्भि सम्पर्कमात्रेण विशेषोऽभिप्रेता न सिध्यति । तत्सिद्ध्यर्थं द्वितीयो व्यापारे नवनीतेनाभ्यञ्जन नामोच्यते ।

अत्रैव विशेषो यदसावादित्य याभिरद्भिर्गर्भभावायं सपृक्तो भवति । तासा विशेषो मन्वात । तत्रापो वा तजासि वा द्विरूपाणि पूर्वाह सम्पादकान्येक-विधानि, द्वितीयाह सम्पादकानि तु पूर्वेभ्यो भिन्नानि । तेपा मध्ये पूर्वाणि पूर्वाह. समाप्तिपर्यन्त व्याप्रियमाणानि भवन्ति । पूर्वाह.समाप्तौ तेपा व्यापारा-

भावः, पूर्वाह्नःसमाप्तिस्तु रात्र्या मध्ये। अत एव देवयानप्रदर्शनावसरे तच्चातुर्विध्यं प्रदर्शित, तत्र प्रथमं देवयानं पितृयाणावसाने देवयानप्रवृत्तितः प्रवर्तते, तच्च मकरसंक्रान्ति प्रारम्भे।

तत्प्रारम्भश्च सुमेरौ रात्र्यवसरे कुमेरुं प्रति प्राप्तस्यादित्यस्य तत्रत्यदिनमध्यसमारोहे। सुमेरौ रात्रिः कुमेरौ दिनमित्युक्तम्। एवं च सुमेरौ रात्रेर्मध्यः कुमेरौ दिनमध्यस्ततोऽसावादित्यो दक्षिणायनं परित्यज्योत्तरां गन्तुं प्रवर्तत इति तत्प्रथमं देवयानं तत एव मकरसंक्रान्तिः प्रवर्तते इति देवयानचातुर्विध्यप्रदर्शनावसरे पूर्वमुक्तमेव। या रीतिः सुमेरुकुमेर्वोरहविषये सैव षष्टिदण्डैर्यत्र दिनरात्रिभावः पूर्यते तत्रापि।

एवं सति पूर्वं दिनं रात्रिमध्येऽवसितं द्वितीयं च दिनं ततः प्रवर्तत इति पूर्वदिनसम्बन्धिनां व्यापाराभावो द्वितीयदिनसम्बन्धिनां तेजसां प्रवृत्तिर्भवति। तानि यानीमानि द्वितीयदिनसम्बन्धीनि तेजांसि पूर्वापेक्षया नवान्यातीतानि देवैः किरणैरिति कल्पना। तैर्नवनीतैस्तेजोभिरस्यादित्यरूपस्य यजमानस्य सम्बन्धस्तद्रूपविशेषबोधनार्थं तेजसां नवनीतशब्देन व्यवहारः तत्र नवनीततेजोभिरस्य आदित्यरूपस्य यजमानस्य सम्बन्धोऽभिषेक इवाद्भिः सर्वाङ्गीणः। तत्साजात्याय लोकेऽपि मानुषयजमानस्याभिषेकोत्तरं नवनीतसम्बन्धः।

आदित्याभिप्रायकनवनीतशब्दे श्लेषेण पयसो दध्यातञ्चनपूर्ण मन्थनेन निष्पादितस्साररूपःपदार्थो लोके नवनीतशब्देनोच्यते तस्य च ग्रहणम् स च मसृणो द्रव इति तेन स्नपनस्य लोकोऽप्रसिद्धेस्तत्सम्बन्धः सर्वाङ्गीणाऽभ्यञ्जशब्देनोच्यते इति दीक्षतकृते द्वितीयः संस्कारो नवनीतेनाभ्यञ्जनरूपो ब्राह्मण उक्तो नवनीतेनाभ्यञ्जन्तीति। तदयं तेजोगतो विशेषो मन्त्रान्तरे उच्यते—

समानमेतदुदकमुच्चैत्यवचाहभिः।
भूमिपर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयेः[1] ॥ इति।

तजसोऽव्रूपत्वमित्युक्तं, तस्य समानस्य सत ऊर्ध्वगमनमधोगमनमनेकैरहोभि. सुमेरुकुमेर्वोरभिप्रायेण। उदकस्यावागमेन वृष्टिव्यवहार ऊर्ध्वगमने वाष्पशब्देन व्यवहारः। अत्र तादृशो विशेषो नोक्तः। वृष्टिकरणं पर्जन्यस्येत्युक्तं भूमिं पर्जन्या जिन्वन्तीति। वाष्परूपतासंपातकत्वं वह्नेरित्युक्तं मन्त्रे दिवं जिन्वन्त्यग्नय इति। आदित्यकिरणानां गतिप्रतिवन्धेऽग्निरूपत्वमितिपूर्वं प्रतिपादितम्—अग्ने य यज्ञम् इति मन्त्रव्याख्यावसरे।

एवं च दीक्षितस्य नवनीतेनाभ्यञ्जनरूपः संस्कार आदित्यव्यवहारानुकारायैव। अदृष्टार्थं इति वर्णनमनुष्ठाने शैथिल्याभावाय। तस्य तेजस आदित्य-

---

१. ऋ० स. १:१६४:५१

पक्ष देशभेदेन विभिन्नै. सम्बन्धिभि सम्बन्धो विभिन्ननामभिरुच्यते। तस्य वचनाभिप्रायेण नवनीतावस्थाप्रतिपादनव्याजेन नवनीतस्योक्तरीत्या दिनान्तरे गर्भरूपतामापत्स्यतो योग्यत्वमिति नवनीतप्रशंसारूपोऽर्थवादोऽत्रोच्यते "आज्य वै देवाना सुरभि घृत मनुष्याणामायुत पितृणा नवनीत गर्भाणा तद्यन्नवनीतेनाभ्यञ्जन्ति स्वेनैवैन तद्भागधेयेन समर्धयन्तीति।

तत्राज्यं देवानामित्यनेन देवाना देवनाना प्रकाशकाना रश्मीनामादित्यसम्बन्धार्थं गमनावसरे आज्यशब्देन व्यवह्रियते तत्सम्बद्ध तेज । तस्याज्यशब्देन व्यवहारे निमित्त वेदे प्रतिपादितम्। स्तोत्रशस्त्रादावपि आज्यशब्देन व्यवहार उक्तनिबन्धन एवेति तत्परस्तात्प्रतिपादयिष्यते । आज्यशब्दस्य व्युत्पत्तिस्तत्रैव प्रतिपाद्यते यदाजिमीयुस्तदाज्यानामाज्यत्वमिति ।

स्तोत्रशस्त्रस्थले आज्यशब्देन व्यवहार आजिधावननिबन्धन । स्तोत्राणा शस्त्राणा चामूर्तानामाजिधावनासम्भव इति व्युत्पत्तौ आजिमीयु इत्याजिधावन रश्म्यभिप्राय वक्तव्यम्। रश्मीनामाजिधावन वेदे वर्ण्यते, यथा मन्त्रे–ईर्मान्तास शिलिकमध्यमास इत्यत्र। तत्तन्मन्त्रव्याख्यानावसरे पूर्वमुक्तम्। एव चाजिधावनस्थले रश्मिसम्बद्ध तेज आज्यशब्देनोच्यते।

नवनीतस्यापि पाकेन सपाद्यमाना विशिष्टावस्था सा आज्यशब्देनोच्यते, दैवकर्मसु तदवस्थस्य तस्योपयोग इति सा अवस्था आज्यरूपिणी देवानां प्रिया देवाना योग्या चेति। तदर्थविवरणे साम्प्रदायिकैरुच्यत ईषद्विलीनमाज्य स्यादिति।

अतएवोच्यते"आज्य सुराणामाहार आज्य यज्ञे प्रतिष्ठितमिति"। आजिधावनं च विशिष्टस्थानतो विशिष्टदेशपर्यन्त धावनमाजिधावनशब्देनोच्यते। ते च रश्मय आजि धावन्त आदित्यपर्यन्त धावन्तीति वेदे प्रतिपादन तेऽग्नेर्बृहस्पतेरादित्य काष्ठामकुर्वत इत्यनेन ।

एवं सत्युदीयमानादित्यावसरे तत्प्राप्त्यर्थं रश्मीना धावने यन्नवनीत तेजस्तद्देवाना भवति न तु गर्भरूपतामापन्नस्येति विशेष: क्रोडीकृत आज्य वै देवानामित्यनेन। नवनीत तेजो गर्भार्थं, गर्भभावश्च आदित्यस्य सुमेरुकुमेर्वोरपि। तत्र कुमेरौ गर्भभावापत्तिर्न प्रकृते वर्ण्यते किन्तु सुमेरुगता।

तत्र आदित्योदयपर्यन्त देवाना धावनमाजिरूप तस्य समाप्तिरादित्यस्योदये। तस्यामवस्थाया कुमेरावादित्यबिम्बस्य उदितस्य तस्य घनीभूताज्यसदृक्षता। कुमेरौ च मनुष्यनिवास इति तद्घनीभूतघृतसदृशमादित्यमण्डल मनुष्याणामित्युक्त, तच्चादित्यमण्डल तत्र सुरभि शोभनारम्भयुतम्। आदित्यस्य शोभन आरम्भो दिनकरत्वेन। तद्बोधयितु तत्र सुरभिपद घृतविशेषणम्।

लोके सुरभिपदेन श्लिष्टेन सुगन्धयुतत्व बोध्यते तच्च मनुष्यप्रियमिति नवनीतस्यापरावस्था बोधिता। सुमेरावुदयात्प्राक् तत्प्रतिवेलायां कुमेरावादि-

त्यस्यास्तत्सविधदेशप्राप्त्या तस्य मध्यमदेशसम्बन्धिता, मध्यमो देशश्च दक्षिणस्यां पितृसम्बन्धो, तदानीं मध्यमदेशे आयुरूपेण प्रवृत्तमादित्यविम्बं स्वल्पकालेनोदयदस्तमयच्चेति तस्य तेजस आयुतशब्देन व्यवहारः ।

तदायुतं तेजः पितृणामित्युक्तं लोके नवनीतस्यावस्थान्तरे आयुतभाव ईपद्विमिश्रभावापन्नं घृतं पितृणां योग्यं प्रियमित्यभिप्रायेण अर्थवादे आयुतं पितृणामित्युक्तिः । एव चैकस्यैव तेजसो घृतशब्देन व्यवहारो मनुष्यलोकाभिप्रायः मनुष्यलोकशब्देन कुमेरुर्गृह्यत इत्युक्तम् । उदय सविधप्राप्त्या आज्यशब्देन देवाभिप्रायो व्यवहारः, एवमन्तरिक्षलोकवासिपित्रभिप्रायेणायुतशब्देन व्यवहारः । तच्च नवनीततेजो गर्भभावापत्ता उपयुक्तमिति नवनीतं गर्भाणां योग्यमिति प्रतिपादितम् ।

प्रकृते केवलं नवनीतस्यैव सम्बन्धो यज्ञे आदित्यव्यवहारानुकारे मानुषके यजमाने इति सर्वमिदं वचनं नवनीतार्थवादः । एवंरूपो नवनीतार्थवाद ऐतरेये उच्यते । तत्तिरीये तु घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणामिति विभिन्नरूपतार्थवादे । तत्र भाष्यकृतोच्यते—

अत्रोभयत्र नवनीतार्थवादत्वेन उक्तोऽर्थवादगतविरोधो किञ्चित्कर इति ।

भवतु तत्रोभयत्र नवनीतार्थवादता । तावता वर्णने भेदः किं निबन्धन इत्यस्यासमाधानमेव । तदर्थमादित्यपरतया वर्णने ऐतरेयगतं वर्णनं देवतास्थानगतम्, तैत्तिरीये च कुमेरुगताभिप्रायेण । अथवा अर्थवादगतमैतरेयवर्णनं देवतास्वस्ताभिप्रायेण । अस्तोत्तरमपि देवतानामाजिघावनवर्णनात्तदाज्यं देवानाम्, सुमेरावस्ते कुमेरावुदयः । उदये च आदित्यविम्बं घनीभूतघृतरूपम् । घृतं तेजस्तद्रूपमिति घृतं मनुष्याणामित्युक्तिः ।

तच्च तत्र दिनप्रारम्भीयमिति शोभन आरम्भो दिनप्रवर्तनात्मा यस्य तादृशं सुरभि भवति । कुमेरावस्तोत्तरमप्यायुरूपेणान्तरान्तरादित्यदर्शनस्थानं पितृणां, तत्रोक्तरीत्या तमसा मिश्रणे नायुतं पितृणामित्युक्तिः । ततः परस्ताद्दिनान्तरारम्भवेलायां पर्वदिनसमापकतेजोऽपेक्षयेदानीं नूतनप्रवर्त्यमानदिनप्रारम्भाभिप्रायकं तेजो नवनीतं तस्य दिने गर्भत्वमुपेष्यतोऽनुगुणमिति नवनीतं गर्भाणामित्युक्तिः ।

एवञ्च नवनीतविध्यर्थवादे नवनीतवर्णनं हित्वा आज्यादीनां क्रमिकं वर्णनमुपपद्यते । एतदैतरेयं वर्णनं देवतास्वस्तगमनाभिप्रायेण । यत्तु तैत्तिरीये घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणां नवनीतं गर्भाणाम् इति वचनं तन्मनुष्येष्वस्ताभिप्रायेण । यदा च मनुष्येष्वस्त आदित्यस्य तदानीं देवेषूदयेन तत्रत्यं मण्डलं घनीभूतघृतसदृशं घनीभूतघृतात्मकं तद्देवानामित्युक्तिरिति न ऐतरेयेण वचनेन विरोधः ।

मनुष्येषु तदानीमस्तोत्तरभावि आज्यरूप तेज. तद्युक्तत्व तत्प्रकारान्त-रेणात्र निष्पक्वशब्देनोच्यते । निष्पक्व नितरा पक्व द्रवीभूतमाज्यरूपमित्यर्थः । एव तत्रापि पूर्वोक्तरीत्या आयुतभात्रो दक्षिणदिक्को मस्तुशब्देनोच्यते स च पितृणामिति ।

अयं भावः—सुमेरुकुमेर्वोरादित्यस्योदयावसरेऽस्तमयावसरे वा तदधस्त-नदेशेषु स्वल्पाधिककाल मण्डलस्य दर्शनादर्शने प्रवर्तते । तत्रोदयावसरे दर्शन-कालस्याधिक्यमदर्शनकालस्य न्यूनता । अस्तावसरे च दर्शनकालस्य क्रमेण न्यूनताऽदर्शनकालस्य क्रमेण वृद्धिरिति प्रकार उभयत्र सुमेरुकुमेरु सविधवर्ति-देशेषु सम. । तत्र दक्षिणदिक्कस्य तस्य पितृसम्बन्धिता तत्रोदयावसरीया आयुतता पूर्वमायुतशब्देनोक्ता । अत्र तु अस्तावसरीया मस्तुशब्देन बोध्यते ।

मस्तुशब्देन दधिभवोमन्थनजन्यो द्रवाभाव उच्यते । आदित्यमण्डलस्य दधिरूपत्वेन वर्णना, तज्जन्यस्योक्तरीत्या द्रवभावरूपविमिश्रभावस्य मस्तुशब्देन ग्रहणेन तादृश तेज. पितृणामित्युक्त भवति । एवञ्चेद वर्णन देवेषूदयावस-रीयमिति । एव च कुमेरावुदेप्यता गर्भरूपत्वमेष्यतस्तत्र नवनीतसम्बन्धादिक पूर्ववद्वर्णनीयमिति विशेषाभाव इति तदनुल्लेख. । एवञ्च नवनीतप्रस्तावे आज्यादीना वर्णनमुक्तरीत्या आदित्यक्रियानुकारात्मकता बोधनायेति भवतीति ।

४ देवा वै यज्ञमनुष्ठायेत्यादियूपशब्दनिर्वचनमर्थकरणे संगतिश्च

एवमैतरेये यूपशब्दे निर्वचनाख्यायिकोक्ता । देवा यज्ञमनुष्ठाय स्वर्गं गच्छन्तो भीता व्यचारयन् । अस्माक स्वर्गप्राप्तिमनु मनुष्या ऋषयश्चैवं यज्ञं विज्ञाय स्वर्गं लोकमागच्छेयु. । कथ वा अत्रैषा भ्रमो व्युत्पादित. स्यादिति । तेषा यज्ञसमाप्तेरूर्ध्वं यूपस्तथैवोर्ध्वोऽवस्थित आसीत् । तैर्यूपस्य वशतो भ्रम उत्पादनीय इति स्थिरीकृत्योर्ध्वाग्रस्य यूपस्य स्वर्गगमनावसरेऽवाचीनाग्रत्व सपाद्य भ्रम उत्पादितः । यतस्तरूर्ध्वाग्रस्य यूपस्यावाचीनाग्रत्व सपाद्य भ्रम उत्पादित इति योपनस्य साधनत्वाद्यूप इति तस्य नाम सम्पन्नमिति ।

ततो मनुष्याश्च ऋषयश्च देवाना यज्ञगृहमागताः, यज्ञस्य किंचिद्वस्तु लब्ध्वा तद्वशतो यज्ञस्वरूप विजानीमह इति । तैस्तत्रावाचीनाग्रो यूपो लब्ध. । अवाचीनाग्रस्य तस्य यूपस्य तैरूर्ध्वाग्रत्वेन निमान कृतम् । ततस्तैः स्वर्गोऽविज्ञा-तोऽनुष्ठानेन च स लब्ध इति ।

अत्र देवानां कथ भीतिः, कथ भ्रमोत्पादनकल्पना, कथ च यूपस्यान्यथा-करणमात्रेण भ्रमोत्पाद, कथ चर्षिभिर्मनुष्यैश्च प्रयत्नेन सपादितभ्रमोत्पाद-स्यानायासतो विज्ञानेन यथावद्रूपविज्ञानमिति नानाविधाः सशयाः प्रादु-र्भवन्ति । तत्र मीमासकैर्याज्ञिकैश्चोच्येते, यूपकरणार्थायमर्थवाद इति तस्य

स्वार्थतात्पर्याभावेन अस्थाने सर्वे इमे संशया इति । श्रुतौ वचनादेव यूपमात्रेण भ्रमो निरासश्चेति नात्र सन्देहावसर इति । तथा सति तात्पर्याभावेनाविवक्षितार्थस्य ग्रन्थस्य व्याख्याने भ्रमस्य भाष्यकारादीनां कथं प्रयासः ।

अथ मीमांसाभाष्यरीत्या नित्यं कञ्चनार्थं गृहीत्वैतादृशस्थले व्याख्यानं कार्यमिति तर्हि स नित्योऽर्थोऽत्र कीदृश इति तस्य प्रदर्शनं कार्यं, तदव्याख्यानाद्भाष्यकारस्यात्र न्यूनतेति चेत् । अत्रोच्यते–आदित्यरूपमर्थं गृहीत्वा व्याख्यानान्न न्यूनतेति । तथाहि देवा अत्र द्योलोकस्थानवासिनस्तैः स्वर्गार्थयागोऽनुष्ठितस्तत्र पुरुषादिरूपस्य पशोर्बन्धनार्थं यूप उपयुक्तः । तस्योर्ध्वाग्रतया निमानं कृतमवसिते यागोपयुक्तसर्वपदार्थानां वह्नौ प्रहरणं कृतं, केवल यूप एवावशिष्ट आसीत् । तस्यैवावोऽग्रत्वं सम्पादितं तावता देवयज्ञविपरीतभावः ।

तत्रादित्येन सुमेरौ भ्रमता यस्मिन्देशे दक्षिणोत्तरवृत्ते उदयबिन्दुविशिष्टे उत्तरस्यां दिशि सार्धत्रयोविंशत्यंशा आरूढाः स तद्वृत्तीयो भागो यूपत्वेनोच्यते । तत्रैवादित्यस्य पशोर्नियोजनात् । तस्यैव च देवयज्ञस्य सुमेरावादित्यदर्शनावसानपर्यन्तत्वादादित्येऽस्तमिते परस्तात्कुमेरौ दिनप्रवृत्या तत्रत्ययज्ञस्य प्रवृत्तिः ।

न च स दैवो यज्ञः । अवसिते च यज्ञे सर्वस्य सुमेरौ दिनावसानत्वेनास्तमयेन तमसोव्याप्त्याऽसत्कल्पत्वात् । केवलदक्षिणोत्तरवृत्तभागस्यैवावस्थितिमरिति यूपस्यावस्थितिरिति पूर्वमवोचाम् । द्योलोकेऽस्तत उर्ध्वं कुमेरौ दिनप्रवृत्तिः कुमेरुश्च दक्षिणदिक्कः । दक्षिणा च दिगधोवर्तिनीति तत्रादित्येनोक्तदक्षिणोत्तरवृत्ते सार्धत्रयोविंशत्यंशपर्यन्तमवो गम्येत ।

एवं च यूपो यो देवयज्ञे ऊर्ध्वाग्र आसीत्सोऽयमेवेदानीमवाचीनाग्रोऽवोऽग्रः संपन्नः । स देवैर्भीतया तथा संपादित इत्यर्थवादे कल्पना । तस्य यूपस्यावोऽग्रत्वमित्यनुक्त्वाऽवाचीनाग्रत्ववर्णनेन तस्य दक्षिणाग्रत्वंसूचनेनाप्युक्त एवार्थः सूचितः। दक्षिणस्या दिशोऽवाचीअपाचीशब्दाभ्यां बोधनात् । ततो मनुष्यैर्ऋषिभिरपि च तस्योर्ध्वाग्रत्वं कृतम् । तद् द्वेधा संभवति । तस्यां दशायां तत्रत्यैरादित्यस्योर्ध्वं एव समारोहो मन्यते ।

एवं च या वस्तुतोऽवाची दिक् सा तैरुत्तरा मन्येतेति तत्र याम्योत्तरवृत्तभागरूपयूपस्योर्ध्वाग्रत्वं तद्वशतो यज्ञस्वरूपविज्ञानम् । यज्ञो हि आदित्यः । तत्सम्बन्धेन दिनं तत्स्वरूपविज्ञानं तैरिति । अथवा वास्तवमूर्ध्वाग्रत्वं कल्पनया विज्ञाय देवयज्ञस्वरूपं विज्ञातमिति । एवं भ्रान्तिजनकतयायूपनामतेति । यूपदर्शनं च मनुष्यैर्ऋषिभिश्च देवानां यज्ञवास्तूनि । वास्तुशब्दो गृहार्थकं नाम । गृहं चादित्यस्यास्तमयस्थले, तत्र यूपदर्शनवर्णनेन स एवार्थ इति ।

## ५. सप्तदशाक्षरसमुदायस्य छन्दस्यत्वविषये सोपपत्तिक समाधानम्

एव यजुर्वेदे सप्तदशाक्षरसमुदायस्य छन्दस्यत्वमुक्तम्। तस्यैव प्रजापतिरूपताप्युच्यते। सप्तदशाक्षराणि तत्रैव प्रदर्शितानि। "ओ३श्रा३वयेति चतुरक्षरम्। अस्तु श्रौ३षडिति चतुरक्षरम्। यजेतिद्व्यक्षरम्। ये३यजामहे इति पञ्चाक्षरम्। द्व्यक्षरो वषट्कार'। एप वै सप्तदशाक्षरश्छन्दस्य" इति। एतस्य सप्तदशाक्षरसमुदायसमूहरूपवाक्यजातस्य यज्ञे प्रयोगेण छन्दोरूपत्वम् छन्दोऽर्थत्वमिति वा एप वा इत्यादिना स्तुति.।

तत्रोच्यते यज्ञेऽपरेपामपि वाक्यानाम् 'उद्धराहवनीयम्" इत्यादीना प्रयोगात्तपामपि यज्ञार्थतया कुतो न छन्दस्यत्वेन वचनम्। को वा एतेपामेव वाक्यानामक्षराणा विशेपो यत इमान्येवाक्षराणि वाक्यानि छन्दस्यत्वेनोच्यन्ते नान्यानीति।

याज्ञिकैरुच्यते, एतेपामेव समूहरूपत्वेन विशेपतया वचनादेतान्येव छन्दस्यरूपाणि नान्यानीति। अपरे केचनैकदेशिना ब्रुवते यज्ञे हविप प्रदानमेव मुख्य तदर्थतयैतेपा विशिष्टतेति छन्दस्यत्वेनैतेपां स्तुति। अपरेपामपि यज्ञगताना वाक्याना यज्ञार्थत्वेमस्ति परन्तु तत्परम्परया तेपाम्। इमानि तु साक्षाद्यज्ञोपयोगीनीत्येतेपामेव स्तुतिर्नान्येपामिति।

परन्त्वेतत्समाधानवर्णन न मनस्तोपावह, यत एतस्याक्षरजातस्य न सर्वयज्ञार्थता। सोमस्यन्ने तस्य तादृशत्वाभावात्। किञ्च साक्षाद्यज्ञोपयोगित्वोक्तिरपि न समञ्जसा। यतो यजमानेन देये वस्तुनि स्वस्वत्वनिवृत्तिपरस्वत्वोत्पत्तिरूपदानपदार्थरूपयागपदार्थस्य बाधनाय प्रयुज्यमानस्य देवायेद न मम इति वाक्यस्य तत्रासग्रहात्। यजमानव्यापारस्यैवात्र मुख्यत्वात्। किञ्च साक्षाद्यागोपयोगित्वस्य तत्प्रवर्तनारूपस्याद्यवाक्यत्रये सम्भवेऽपि चतुर्थस्य वाक्यस्य होतृप्रेरणा सम्बन्धितया तस्यात्र सग्रहस्य न समुचितत्वम्।

शुद्धेन कर्म कर्तव्यमिति स्वशौचबोधनार्थतया प्रकृतार्थतेति चेत्—अध्वर्योराग्नीध्रस्य चोक्तप्रेरणासम्बद्धवाक्यप्रयोगयोग्यत्वाय तादृशवाक्यप्रयोगस्य तस्य सग्रहस्य चाभावेन न्यूनताप्राप्तेः। स्तुतिकर्तृत्वाद्धोतुरेव तादृश वचन योग्यमव्यवधानात्स्तुतेरपरयोस्तु व्यापारो न साक्षात्स्तुतेरव्यवहित इति।

तदपि न युक्तियुक्तम्। स्तुतिरूपस्य यागेऽत्यन्तापेक्षितस्य व्यापारस्य कर्तृत्वेन होतुस्तद्युक्तत्वेन प्रधानकार्यदेवतास्तुतिबोधकयाज्याक्षराणामसग्रहो नियुक्तिक' स्यात्। न च याज्याक्षराणामनियतत्वेन प्रजापतिसारूप्यरूपसप्तदशाक्षरत्वस्य तै. सपादनासम्भवेन तदग्रहणम्। मुख्यस्य दानबोधकस्य याज्यासश्लिष्टस्य वषट्कारस्य द्व्यक्षरस्य तत्र ग्रहणेन याज्याशग्रहणकल्पनया न्यूनत्वाभाव इति।

स्वाहाकारादीनां चोक्तरीत्या याज्यासंपृक्तानामप्युक्तरीत्याऽध्वर्युणाग्नीध्रेण च प्रयुज्यमानवाक्यपूर्वत्वाभावेन नात्र ग्रहणम्। होत्रा वषट्कारवचनोत्तरमुच्यमानस्य वागोजः सह ओजो मयि प्राणापानावित्यस्यानुमन्त्रणावाक्यस्याप्यत्राग्रहणम्। सप्तदशाक्षरत्वसमाप्तेः। प्रत्युत तद्विघातकत्वात्तस्येति। अत एव सोमस्थलेऽशोंऽसावों प्रभृतीनां स्तुत्यर्थानामपि क्रमिकतया सप्तदशाक्षरसमूहपूरकत्वाभावेन तदग्रहणम्। शस्त्रे तेषामभिगरादीनां वाक्यानामनेकवारमात्रेऽनेन नोक्ततादृशसंख्यापूरणसम्भव इति, तन्न।

प्रजापतिसारूप्यस्य संख्यासाम्येन निष्पत्तिरिति संख्यासाम्यायैव इमान्येवाक्षराण्यपेक्षन्ते इति नियमाभावात्। आग्नीध्रवाक्ये अस्तुश्रुतमिति चतुरक्षरस्य प्रकृतार्थबोधकस्य ग्रहणेनापि साम्यनिष्पत्तेः। वेदे तस्यावचनात्प्रत्युत अस्तुश्रौषट् इत्यस्यैव वचनात्तस्याग्रहणमेतस्य ग्रहणमिति त्वगतिकभूतम्। युक्तिकल्पनसम्भवे तस्याश्रयणस्यायुक्तत्वात्। तस्मात्कुत इमान्येवाक्षराणि छन्दस्यत्वेन स्वीकार्याणि कश्चैषां विशेष इति चेदत्रोच्यते—

अत्राक्षराणामेव प्राधान्येनाश्रयणम्। तान्यभिप्रेत्यैवाभिप्रेतसप्तदशसंख्यापूरणात्। अत एव ब्राह्मणे "एष वै सप्तदशाक्षरश्छन्दस्य इत्यक्षरग्रहणेनैव तन्निर्देशः। एतदक्षरविशिष्टवाक्यत एवाभिप्रेतार्थलाभात्। तथाहि एतदक्षरविशिष्टवाक्यानां तावत्कोऽर्थ इति विचारणीयम्। न च वक्तृसम्बन्धमात्रेण योग्यतयार्थकरणं, यथा साम्प्रदायिकैः क्रियते।

तथाहि ओ श्रावयेत्येवमध्वर्युराग्नीध्रमभिप्रेत्य ब्रवीतीति ओ इत्यनेन सम्बोधनपूर्वं श्रावयेत्यनेन श्रुतिविषयतां प्रापय श्रुतिर्यथा स्यादभिप्रेतपुरुषस्य तथा संपादयेत्यर्थः। अभिप्रेतः पुरुषश्च होता। यतः श्रावणीयतया विवक्षितस्य यज इति वाक्यस्य याज्यां पठेत्यर्थकस्य याज्यापाठे प्रेरणापरत्वेन याज्यपाठकर्तृत्वेन होतुरुपस्थितत्वात्। उपस्थितपरित्यागे कारणाभावात्। एवमध्वर्युणा प्रेरितस्याग्नीध्रस्य प्रत्युत्तररूपं द्वितीयंवाक्यं अस्तु श्रौषट् इति, तस्य मुख्यं वक्तयं श्रुतं भवतु। अर्थादस्तु भवतु संप्रतिपद्यत इत्यर्थः।

श्रौषट् इत्यस्य मुख्यं वक्तयं श्रुतं भवतु इत्यभिप्रायेण छान्दस्या प्रक्रियया तव्यार्थत्वं प्रकल्प्य श्रौषट् श्रोतव्यमित्यर्थः। यन्मया श्रावणीयं तच्छ्रुतं भवत्विति परमार्थः। ततोऽध्वर्युणा पुनर्वाक्यं प्रयुज्यते यजेति। यजेत्यस्य याज्यां पठेत्यर्थः। तदिदं याज्यापठनं होतुः कार्यमिति होतारं प्रति वक्तव्यमित्यर्थः।

ततो होताऽध्वर्युप्रेरितः स्वीयपाठपठनावसरे प्रारम्भे ब्रवीति ये ३ यजामहे इति। इदं चतुर्थं वाक्यं छन्दस्यगतम्। अनेन होत्रा स्वस्य वंशशुद्धिः प्रतिपाद्यते, शुद्धिश्चानेकविधा। तत्र बीजशुद्ध्यर्थं देवतामेव विज्ञां प्रकल्प्योच्यते ये यजामह इति। ये वा के वा यजामहे। वस्तुतो मदीयस्वरूपोत्पत्तिः प्रसिद्ध-

अनुसारेण मया वक्तुं शक्या। न परं परमार्थायाऽस्या वर्णने मम शक्तिरस्ति। यतस्त्र्यपराधात्परयु पुत्रदर्शनेन तत्र दोषसम्भवात्। तस्मान्न तस्या यथार्थतो ज्ञानं मम। ममेति किं मनुष्यमात्रस्य,। केवलं तद्विज्ञाने दवनैव समर्थेति।

हे देवते ये या के वा यज्जातीया यद्गोत्रीया वा वयमिति भवत्या विज्ञायते ते वयं यजामहे याज्या पठाम इत्यर्थः। एवं वंशशुद्धिं प्रतिपाद्य परस्तात्त्वेन पठनीया प्रकृतयागीयप्रकृतदेवतासम्बन्धिनी याज्या प्रपठ्यान्ते हविष्प्रदानार्थकं वषट्कारं योजयित्वा वषट्कारं ब्रवीति। तस्य वषट्कारस्य याज्याङ्गत्वं प्रकल्प्य याज्यांशस्य वषट्कारस्य पाठ इति।

अत्रोक्तार्थकल्पने कुत्रचन वक्तुर्वशतः कुत्रचन समाविशुकर्तृं तयाऽर्थविशेषवचनम्। यथात्र प्रथमे वाक्ये केवलम् ओश्रावयेति पठ्यते, वक्ता श्रोता चोभयमव्यक्तम्। अस्तु श्रौषडित्यनेन प्रतिवचनमात्रं निरूप्यतेऽत्रापि वक्तृश्रोत्रोरव्यक्तत्वमेव। एवं यजेत्यस्य यागं कुरु इत्यर्थस्य श्रुतिसिद्धस्य त्यागेन याज्या पठेत्यर्थस्य स्थलविशेषानुरोधेन लभ्यत्वम्। यावत्पर्यन्तं तदर्थानुपस्थितिस्तावत्पर्यन्तं तत्कर्तृत्वेन होतुरप्राप्तिः।

यजेत्यस्य यागकरणार्थत्वे ये यजामहे यजामहे इति बहुत्वविशिष्टप्रयोगस्यासङ्गतिः। एवं ये इति बहुवचनं व्याख्यातम्। तस्यापि सङ्गत्यभावात् होतृपरतया व्याख्याने आत्मनेपदविरोधश्च। नहि तेन स्वात्मार्थं यागं क्रियते, तज्जन्यफलभोगित्वं वा तस्य, येन स्वरितञित इत्यात्मनेपदमनुगुणं स्यात्। किञ्च होतुपरत्वे ऋङ्मन्त्रपाठमात्रं प्राप्नुयात् न तु तदन्ते वषट्कारः। तत्र प्रेषणाभावात्।

किञ्चैषां वाक्यानां क्रमोऽपि वचनादेव तया स्वीकार्यं उत तस्य निमित्तान्तरसव्यपेक्षत्वम्। विध्यन्तरानुरोधेनाक्तवाक्यानां पूर्वोक्तार्थपरत्वं पूर्वोक्तक्रमपरत्वं चेति चेद्, अस्तु। परं त्वेतद्वाक्यबोध्यानां क्रियाणां मूलभूतसौरक्रियानुरूप्यं वक्तव्यं, कीदृशं चेदिति विचारणीयमेव। ब्राह्मण एव तत्र तत्र दक्षाताया-गमनु सौरी क्रियामनु यागे तयानुष्ठानस्य बहुश उक्तं। दिङ्मात्रं तु पूर्वं प्रदर्शितं नवनीतार्थवादप्रसङ्गेन। प्रपञ्चयिष्यते च परस्तात्सविस्तरम्।

६. वेदे उदात्तादिस्वराणामिव प्लुतादिस्वराणामपि विशेषार्थप्रतिपादकत्वम्-

तदर्थमुच्यते–इदं पूर्वोक्तवाक्यसमूहगतं प्रथमं वचनमध्वर्योरेव तच्च ओ ३ श्रावय इति। अत्र वाक्ये प्लुतिः स्वरस्य क्रियते। प्लुतिस्तु शब्दधर्मस्तावता शब्दस्वरूपे आधिक्यं प्रतिपन्नं भवति। तावता तद्बोध्येऽर्थे लोके न कोऽपि विशेषो भासते। वेदे तस्यापि स्वरस्येव विशेषार्थप्रतिपत्तिकरत्वम्। यथा स्वर उदात्तादिः अर्थविशेषप्रतिपादको वेदे, यथा इन्द्रशत्रुशब्दे।

तद्विषये ब्राह्मण उच्यते—"पूर्वं[1] विश्वरूपस्त्वाष्ट्रो देवानां पुरोहित आसीत्। स देवविरोधिकमंकरणादिन्द्रेण हतः। सा च विश्वरूपवधवार्ता त्वष्ट्रा होमकरणवेलायां होमार्थं हविर्गृहीत्वा तस्य देवतोद्देशेनाग्नौ प्रक्षेपनवेलायामुपलब्धा। तद्वशतः क्रुद्धस्त्वष्टा तदेव होमार्थं गृहीतं हविर्देवतायै अदत्वा मन्त्रविशेषपाठेनाग्नौ अभिचारफलार्थं हुतवान्"। मन्त्रविशेषसम्बन्धादेव तस्य कर्मण आभिचारिकत्वम्। अभिचारो नाम शत्रुहिंसाकरं कर्म।

इदानीं पुत्रघातकत्वेनेन्द्रः शत्रुस्तस्य हिंसाभिप्रायेण तेन त्वष्ट्रा गृहीतं तद्धविर्मन्त्रविशेषेणाग्नौ हुतम्, मन्त्रश्च तेन तत्र प्रोक्तः—इन्द्रशत्रुर्वर्धस्व इति। तद्धविस्त्वष्ट्रा तेन मन्त्रेण इन्द्रस्य घातक यथा स्याः एवं वर्धस्वेत्यभिप्रायेण हुतम्। तद्धुत हविरग्निं प्राप्य केषांचिन्मतेऽग्निमप्राप्य सर्वासु दिक्षु इषुमात्रमिषुमात्र विवर्द्धितुमारेभे। वृत्तेन तेन सर्वं विश्वमावृतम्। आवरणाद्विवर्धनाद्वा तस्य वृत्रशब्देन व्यवहारः।

अत एव ब्राह्मणे उच्यते यदवृणोत्तद्वृत्रस्य वृत्रत्वम्। यदवर्धत तद्वृत्रस्य वृत्रत्वम्। सर्व व्याप्य स्वरूपेणावर्ततेति वर्तनवशतो वृत्रनामेति ब्राह्मण प्रतिपादितम्। तत्तस्य सर्वव्याप्ति दृष्ट्वेन्द्रेण तस्य वधः कृतः। तत्र त्वष्ट्रा इन्द्रशत्रुशब्दस्येन्द्रघातकाभिप्रायेण षष्ठीतत्पुरुषरूपेण तस्य शब्दस्य प्रयोगः कर्तुमिष्टः परन्त्वनवधानाद्बहुव्रीहिरूपेणैव स मन्त्रः उक्तः।

तत्रानुपूर्व्या स एव शब्दः षष्ठीतत्पुरुषरूपो वा बहुव्रीहिरूपो वा भवितुमर्हतीति तत्कृतस्तु न तत्र विशेषः किन्तु स्वरकृतः। षष्ठीतत्पुरुषे तस्य शब्दस्य समासस्य इति पाणिनीयसूत्रणान्तोदात्तता भवति। बहुव्रीहौ तु बहुव्रीहौ प्रकृत्या पूर्वपदम् इत्यनेन पूर्वस्य पदस्य समासे प्रवेशदशायां यः स्वरः स समासे प्रवेशेऽपि समासस्य स्वरो भवति।

प्रकृतेन्द्रशत्रुशब्दे बहुव्रीहौ पूर्व पदमिन्द्ररूपं तस्य समासे प्रवेशदशायामाद्युदात्तत्वम्। नित्स्वरेण तस्माद्युदात्तत्वात्। ततस्तेन बहुव्रीहिकरणेऽपि स एव समासस्वर इति इन्द्रशत्रुशब्द आद्युदात्तो भवति। अत इन्द्रस्य घातक इत्यर्थे तेन स शब्दोन्तोदात्तो वक्तव्यः।

न च शत्रुशब्दस्य रिपुबोधकत्वेन षष्ठीसमासे बहुव्रीहौ वा समासेऽर्थे तादृशो घातकोऽर्थो न प्रतीयते। षष्ठीसमासेन इन्द्रस्य वृत्रो रिपुरिति प्रतीत्या वाच्यवृत्येन्द्ररिपुत्वं वृत्रे भासते, समानवित्तिवेद्यन्यायेनार्थादिन्द्रे वृत्ररिपुत्वं भासत एव। एवं बहुव्रीहौ समासे इन्द्रः शत्रुर्यस्येति करणेन वृत्ररिपुत्वमिन्द्रे वाच्यवृत्त्या बोध्यते, तत्रापि उक्तन्यायेनार्थाद् वृत्रेऽपि इन्द्रशत्रुत्वं बोध्यत एवेति न कोऽपि

---

१. त. ब्रा. २:५:४:३

षष्ठीतत्पुरुषबहुव्रीहिसमासकृतो विशेषः प्रकृते इति न वाच्यम् । यतोऽत्र शत्रुशब्द शदिर्विशरणे इत्यस्मात्कर्तरि त्रु प्रत्ययेन निष्पन्नो घातकमर्थमाह ।

एवं सति षष्ठीसमासे इन्द्रस्य घातक इत्यर्थादिन्द्रो घात्य वृत्रो घातक इत्यर्थः । बहुव्रीहिसमासे तु इन्द्रः शत्रुर्घातको यस्येति वृत्रस्य घात्यता इन्द्रस्य घातकता प्रतीयते । तत्र क्रुद्धस्य त्वष्टुरभिप्राय आसीदिन्द्रस्य घातको वृत्रो भवतु परन्तु बहुव्रीहिप्रयोगेण इन्द्रघात्यत्व वृत्रे प्रकाशितमितीन्द्र एव घातकस्तस्य सजातः ।

तच्चेद विशेषार्थप्रत्यायन स्वरेण कृतमेवमत्र प्लुतिकृतो विशेष प्रतीयते । प्लुतिर्हि स्वरे मात्रापरिच्छेदः । स हि उच्चार्यमाणवर्ण कालस्य मात्राणा पर-परवर्तिनीनामधिकरणत्वे प्राप्ते तस्य स्तम्भो बन्ध इति यावत् । प्लुतो मात्रात्रये बन्धप्रतीतिः । मात्रायास्तु स्वभावतो वर्णाधिकरणत्वबन्धस्तस्मात्र मात्रात्रये बन्धप्रतीत्या यस्य वर्णस्य बन्धत्रय स प्लुत इत्यर्थ सपद्यते ।

बन्धत्रयसाम्यात् स्वरस्याय धर्मः प्लुतिर्नाम न तु व्यञ्जनस्येति स्वररूप-त्वमादित्यस्य वेदे प्रतिपादनात्तस्यासौ धर्मो बन्धत्रयमिति आदित्य एवात्र प्लुत-शब्देन बोध्यते । आदित्यस्य स्थलत्रये बन्धो वेदे प्रतिपाद्यते त्रिणाभिचक्रमजर-मनर्वमित्यादौ । आदित्यस्यैवाग्निरूपत्वम्, अग्नेस्त्रिबन्धः त्रिधा बद्धो रारवीति इत्यादावुक्तः ।

एव च प्रकृते प्रथमे ओ३श्रा३वयेति वाक्ये न केवल सम्बोधनमात्रमुच्यते किन्त्वादित्यरूपमपि इति तदादित्य सम्बोध्याध्वर्युर्ब्रवीति । ओ३ हे आदित्य ! श्रा३वयेति । यद्यपि आदित्य एक एव परन्त्वसावुपाधिभेदाद्भिन्न इव भवति । अत एव उदयस्थानसविधवर्ती आदित्योऽध्वर्युशब्देनोच्यते । आदित्यशब्देनात्र दैनदिने वृत्ते दिनरात्रिसपादनार्थं गच्छन् स उच्यते, स च रात्रि प्राप्तस्तेजोरहित इति कल्पना पूर्वमुक्ता आदित्येनास्त गच्छता स्वीय तेजोऽग्नौ निधीयत इत्यनेन ।

एव च स तत्र तेजोरहितः कृष्णवर्ण इवेति । अत एव स्थलान्तरे कृष्णो रूप कृत्वा वनस्पति प्राविशदित्युच्यते । त प्रत्यध्वर्युणोच्यते श्रा३वयेति । आदित्यस्य रश्मयोमण्डलस्य सर्वासु दिक्षु तिर्यक्त्वेन प्रसृताः प्रसिद्धास्तेषा सर्वेषा रश्मीना केन्द्ररूपमध्यस्थाने मण्डल भवति । ते चेमे रश्मयो देशप्रमितिकारका इति करशब्देन भुजशब्देन वोच्यन्त ।

अत एव आदित्यस्य सहस्रकरादिशब्दैर्व्यवहारः । यथा क्षेत्रमाने क्षेत्र-परिच्छेदकारिणी मर्यादा रेखा करभुजादिशब्दैर्व्यवह्रियते त्रिभुज क्षेत्रमित्यादिषु, एव तस्या मर्यादारेखायाः कर्णतत्समानार्थकशब्दैर्व्यवहारस्तत्र प्रसिद्ध लम्बकर्ण

क्षेत्रमित्यादौ। एतावता रश्मीनां यथा करभुजप्रभृतिशब्दैर्वचनमेवं कर्णश्रुति-प्रभृतिशब्दैरपि वचनं स्थलविशेषे।

एवं सति अध्वर्युणा तद्रूपेणादित्येन स्वीयस्तिर्यक्प्रसारिविघतमो रश्मिरत्र श्रुतित्वेनाभिप्रेत्य तत्र तत्सम्बद्धदेशे आदित्स्यायनं प्राप्तिः प्रतिपाद्यते, हे आदित्य ! उक्तरीत्या दिनरात्रिसंपादक। श्रुतावय श्रुतस्थानं प्राप्नुहीति। यत्रावस्थितस्य मम श्रुतियोगः, अर्थापत्तिर्यक्प्रसारितविघवर्तिरश्मियोगस्तत्स्थानं प्राप्नुहीत्यर्थः।

इदं प्रकारान्तरेणापि वक्तुं शक्यम्। यत्र स्थाने स्थितस्यादित्यस्य रश्मय उदयदेशं प्राप्ता भवन्ति तत्स्थान प्राप्नुहि। तत्रादित्य आगतो भवतु इत्यभिप्राय-निवेदनं मन्त्रेण। आदित्यस्य च रश्मयो दैनन्दिनवृत्ते आदित्योदयविन्दुतः पूर्ववर्तित्रिशदंशरूपवृत्तभागपर्यन्तं व्याप्नुवन्ति।

अर्थात्ततः पूर्ववर्तिस्थाने स्थितस्यादित्यस्य यत्र स्थाने उदयस्तस्य तत्र तदीयरश्मीनामदर्शनमिति स ततो न दृश्यते। तदेव गृहीत्वा भाष्यकृतोक्तम–आदित्यो यस्मिन्देशे गच्छति ततः प्राक् त्रिशद्योजनभूभागवर्तिनां स उदितो दृश्यते इति।

एवञ्चात्र त्रिंशद्योजनपर्यन्ता श्रुतिः कर्णो वा अध्वर्योर्यत्र तं देशं प्राप्नुहि इति। तदेवोच्यते श्रा३वयेति शब्देन। अत्रापि श्रा३वयेति शब्दे प्लुत्या श्राविति पृथक्पदत्व प्रतिपद्यते। तस्य च श्रुतिसमानार्थता। एवं श्रौ श्रुतौ पूर्वोक्तरीत्या कर्ण स्थानं तदय गच्छ प्राप्नुहि इति। तदनुकाराय अध्वर्युणा आग्नीध्रप्रेषणे उक्तार्थक्रोडीकारकं प्रेरणवाक्य प्रयुज्यते ओ३श्रा३वयेत।

तत्र प्लुतद्वयेन पूर्वोक्तवाक्यान्तरसंश्लिष्टता प्रतिपाद्यते। अयमेव वाक्या-न्तरसंश्लेषोऽत्र प्लुतेन बोध्यते। आदित्यानुकारश्च पूर्वोक्तरीत्या। अयं चाध्वर्योः कर्णस्त्रिशदंशपर्यन्त उदयस्थानात्, स च वेदिरूप इति मन्त्रव्याख्याने विस्तरेण प्रतिपादितम्। तत्र वेद्यामेव वैदिकानि कर्माण्यनुष्ठीयन्ते तेषां कर्मणां श्रौतत्व-व्यवहारोऽपि उक्तार्थस्य साधकः।

### ७. स्त्रीशूद्रयोः श्रुत्यसंबन्धप्रतिपादनमादित्यपरव्याख्यया

किञ्च शूद्रस्य श्रुत्यसम्बन्धोऽपि उक्तार्थवशत एव। तथाहि शूद्रस्योत्पत्ति-रुच्यते पद्भ्यां शूद्रोऽजायत इति पुरुषसूक्ते। तत्रोदितस्यादित्यस्य पदरूपता। उदयश्च दक्षिणोत्तरा सुमेरुकुमेर्वोक्ततत्रोदितस्य तस्य पदरूपत्वं, स्थानद्वयाभि-प्रायेण द्वित्वं, तादृशपदद्वयसकाशतः शूद्रस्योत्पत्तिरुच्यते। अत्रोत्पत्तिमत उत्पत्ति-कारणतो भिन्नत्वम्। अत एव मुखं ब्राह्मणो बाहू राजन्य उरू वैश्य इति प्रक्रमे पाठात्पादात्रैव शूद्र इति भवति।

शूद्रशब्दस्यार्थो निरुक्ते उच्यते शु आशु द्रवति गच्छति इति शूद्र । उदितस्य तस्यादित्यस्य शीघ्रा गतिमपेक्ष्य तस्य शूद्रत्वव्यवहार । यद्यपि आदित्यस्य पृथिव्या वा गतिः समानरूपिण्येव तथापि दिवाभागे कार्यान्तरव्यापृतत्वेन मनुष्याणा दिनस्य शीघ्र समाप्त्यवभासनाद्दिने आदित्यस्य शीघ्रा गतिरिति । गतिमद्भावश्चोदिते पदरूपतापन्ने आदित्य इति तस्य शूद्रत्वेन शीघ्रगतिमद्रूपेण व्यवहार. ।

रात्रौ तमसा व्याप्त्या विश्वस्य निद्रा हित्वा पर मनोविनोदस्थान न भवति, तत्र निद्राभावे रात्र्या दीर्घत्वेनावभासोऽनुभवसिद्ध । स चादित्यस्य रात्रिसपादकस्य मन्दगति विना न समवतीति रात्रौ तस्य मन्दगतित्वेन व्यवहारो वेदे ।

तदुक्त मन्त्रे—षष्टिश्चाध्वर्यो नवतिश्च पाशा अग्नि होतारमन्तरा विचृताः। सिनन्ति पाकमतिघोर एति[1] इति ।

अतिघोरोऽतिमन्द एति मन्दत्व च गताविति । एव च पदरूप आदित्यः शीघ्रगमनत्वाच्छूद्र इति । तत्रानुपदमुदितस्यादित्यस्या पृथक्तया रश्मीनामनवभासात्तत्र कर्णादिरूपाभाव. । कर्णत्वाभाव श्रुत्यभावः। तदेव गृहीत्वा स्त्रीशूद्रद्विजबन्धूना त्रयी न श्रुतिगोचरा इत्युक्तम् ।

श्रुतिः श्रुतिविषया न भवति तदानुगुण्येन शूद्रस्य श्रुत्यभावो धार्मिकव्यवहारे, यथा शूद्रस्य कर्णाभावाच्छ्रुत्यभाव एव स्त्रीरूपाया उषसोऽपि तदभाव इत्यनुकरणात्स्त्रिया अपि श्रुत्यभाव उक्त । यथोदितस्यादित्यस्योदयसन्निकटे देशे तदभाव एव परस्तादपि आदिनावसान तद्वद्भाव इति तेषा द्विजबन्धुत्व गृहीत्वा तेषामपि श्रुत्यभावस्तदनुसारेण व्यवहारे तेषा श्रुत्यभाव उच्यते । एतावता श्राश्रवयेत्यनेन श्रुतिप्राप्तिरुच्यते, सा चोक्ततद्वाक्यगतप्लुतिवशत इत्युक्तम् ।

ततो द्वितीय वाक्यम् अस्तु श्रौ३षट् इति । अत्रापि श्रौशब्दे प्लुत्या श्रौषट्शब्दे पदद्वयकल्पनयाऽर्थान्तर प्रतीयते । तत्र पदद्वयकल्पनाया श्रौ श्रुतिभावे षट् । षडित्यनेन ऋतुचक्रप्रवर्तकस्य मण्डलस्य सत्व बोध्यते, अर्थात्तन्मण्डलमादित्य श्रुतिभावान्न भवतु इति आदित्यस्तद्देश प्राप्तो भवत्विति परमार्थ. ।

तदनुसारेण श्रावयेत्यस्य प्रेरणार्थकताप्रतीत्या तदुत्तरवर्ती व्यापार. श्रौषडित्यनेन प्रतीयते । तत्र तस्यार्थ अस्तु भवतु श्रौषट् श्रुत भवत्विति । तत. परस्ताद्यजेत्यस्य तृतीयवाक्यस्य प्रेरणारूपस्य प्रयोग. । यजेत्यस्य सम्मुखो

---

१. आ. श्रौ. सू १:२

भवेत्यर्थः। यजधातोर्यज् देवपूजासंगतिकरणमित्रकरणदानेष्वित्युक्तेः। संगतिकरणार्थत्वं गृहीत्वा तदर्थः। संगतिः साम्मुख्यम्। अभिमुखीभाव इत्यर्थः।

आदित्यस्य रश्मयस्त्रिरूपा अवभासन्ते तिर्यक्त्वेन साम्मुख्येन च। तिर्यक्त्वं साम्मुख्यात्पूर्ववर्ति परिवर्ति चेति द्विविधम्। रश्मिसन्दर्शनमेवादित्यसन्दर्शनमिति। तत्त्रैविध्यं गृहीत्वा रश्मीनामृभुरूपतेति प्रतिपादितम्। ऋभवस्त्रयस्तेषां रश्मिरूपत्वं निरुक्तकारेण सूक्तेषु चोच्यते। कार्यञ्च तेषामादित्योदयात्पूर्वमुदित आदित्येऽस्तमयोत्तरं चेति। तत्तु वाजो देवानामभवत्सुकर्मेति मन्त्रेण पूर्वं प्रतिपादितम्।

देवा आदित्यरश्मय उदयपूर्ववर्तिनस्तेषां सुकर्मत्वमेकस्य वाजरूपस्य ऋभोः कार्यं तच्च साम्मुख्यात्पूर्ववर्ति। इन्द्रस्य सुकर्मत्वमृभोस्तत्साम्मुख्यरूपम्। वरुणस्य सुकर्मत्वं विभ्वरूपस्य ऋभोस्तच्च साम्मुख्यपरवर्तितिर्यक्रूपत्वेन। तच्च साम्मुख्यरूपं संगतिकरणं यजेत्यनेन बोध्यते। श्रुतिभावप्राप्तेरूर्ध्वं सम्मुखभावस्यैवेषणात्।

किञ्च संगतिकरणमेवात्र दानं पूर्वस्यादित्यास्मिन्नुदीयमाने आदित्ये दानं तेन, पूर्वस्तु यज्ञे उपयुक्त उत्तरस्त्विदानीं कार्यकर्तेति। याज्यापाठः याज्यया गमनम्, पठधातोर्निघण्टौ गमनार्थेषु पाठात्। याज्या च हविर्दाने प्रोच्यमाना ऋक्। ऋक्त्वं चादित्यस्य, सादैनन्दिनगमनोपयोगवृत्तरूपा। अतएवैतरेयब्राह्मणे ऋक्सामयोः संवाद उक्तः संगच्छते।

## ८. ऋग्वा इदमग्रे साम चास्तामित्यादिभागस्यादित्यपरं व्याख्यानम्

तत्रोच्यते— "ऋक् वा इदमग्रे साम चास्तां सैव नाम ऋगासीदमो नाम साम सा वा ऋक् सामामोपावदन् मिथुनं सम्भवाव प्रजात्या इति नेत्यब्रवीत्साम ज्यायान्वा अतो मम महिमेति ते द्वे भूत्वोपावदतां ते न प्रतिचन समवदत्त तास्तिस्रो भूत्वोपावदंस्तत्तिसृभिः समवदन् यत्तिसृभिः समभवत्तस्मात्तिसृभिः स्तुवन्ति तिसृभिरुद्गायन्ति तिसृभिर्हि साम सम्मितमिति[1]"। तत्र साम्न ऋग्भिः संवाद उक्तः। प्रथममेकयर्चा साम्नः सहभावप्रार्थने साम्ना निराकरणं ततस्तस्याधिक्यात्।

द्वाभ्यां प्रार्थनेऽपि निराकृते तिसृभिः प्रार्थने साम्नानुमननम्। अतएव गानावसरे एकं साम तृचे क्रियते तदेव स्तोत्रियं न गानमात्रम्। तस्य गानमात्रस्यैकस्यामृचि पर्याप्तत्वात्। तथा च तिसृभिः स्तोत्रियस्य साम्नः समत्वं नाम

---

१. ऐ. ब्रा. ३:२:१२

आधिवर्षाभाव स च कथमुपपद्यते। यद्यादित्यपरत्वेनात्र विचारस्तदानीं तस्य वचनस्योपपत्तिः।

तथाहि ताण्ड्यब्राह्मणे चतुर्विध सामोक्तमपरासां विधानामेकस्मिन्स्वरान्तरूपाया विधायामन्तर्भावमुक्त्वा एकमेव सामेत्युक्त्वा स्वररूपमेव सामेत्युक्त्वा स्वरस्त्वादित्यरूप इत्युक्तम्। ततश्चादित्यरूपस्य साम्नस्तिसृभिर्ऋग्भि समता प्रतिपादनमुक्तरीत्या त्रिभि पर्यायैरुदयस्थलाभिप्रायम।

पूर्वं सूक्ष्मेण मानेनादित्येनोदयबिन्दुत उद्य् दक्षयाम्योत्तरवृत्त उदयबिन्दुत. प्रतिपार्श्वं सार्धत्रयोविंशत्यंशपर्यन्त नवतिपर्यायैर्गमनमुक्तम्। तेन च प्रतिपर्याय पञ्चदशकलानामुपयोगेन सर्वस्याशात्मकस्य बिम्बस्योदयार्थं पर्यायचतुष्टयमित्युक्त, स्थूलेन मानेनादित्येन याम्योत्तरवृते मध्यबिन्दुनो नामोदयबिन्दुत. प्रतिपार्श्वं चतुर्विंशत्यंशपर्यन्त गमनागमने क्रियेते। तावता वत्सर. पूर्णो भवति। तच्चेद तावदशपयन्त गमनमागमन च सुमेरुकुमेर्वोर्भवति। तत्रैकस्मिन्स्थाने समुदित आदित्यो मासत्रयेण चतुर्विंशत्यंशपर्यन्तमारोहति, तावता कालेन च पुनः प्रत्यारोहति।

ततस्तत्रास्त मेति ततो भुवोऽपरस्मिन्पार्श्वे उदयबिन्दुत उपरिष्टात्तावदन्तर मासत्रय नवतिपर्याया वा अपेक्षितास्तहूर्यकाशातिक्रमणार्थं कियन्त इत्यनुपातेन प्रत्यश त्रयः पर्याया भवन्ति पूर्णा.। चतुर्थस्त्वपूर्ण इति त परित्यज्य पूर्णाना ग्रहणे पर्याया भवन्ति।

तत्र पर्यायेषु ऋक्त्वग्रहणे तिसृभिर्ऋग्भिस्त्रिभिः पर्यायैर्वा आदित्यबिम्बस्योदयेन तैर्बिम्बस्य साम्यमिति गृहीत्वा तिसृभिर्ऋग्भिः साम्नः समत्वप्रतिपादनमुपपद्यते। एव चैकस्यैव पर्यायस्य ऋक्त्वमिति भवति। पर्यायस्यैव सुमेरुकुमेर्वोविषुववृत्तादिस्थलेषु दिनशब्देन व्यवहारः।

एव च प्रतिदिनमादित्येनानामणीयवृत्तस्य ऋक्त्वमिति भवति तत्र सुमेरुकुमेर्वोरुदयावसरे योऽन्तमः पर्यायोऽन्तिम दिनार्धवृत्त तद्रूपा ऋक् याज्येत्युच्यते, तयैवर्चा आदित्यस्य विरुद्धदेशत उदयदेशे दान क्रियते। या दानार्था ऋक् तस्या याज्यात्वम्। याज्याया दानरूपत्व ब्राह्मणे उच्यते—

तदुक्तम्—याज्यया यजति प्रतिर्वै याज्या पूष्येव लक्ष्मीः पुण्यामेव तल्लक्ष्मी सम्भावयति पुण्या लक्ष्मी संस्कुरुते इत्यनेन। एव च यजेति तृतीयेन वाक्येन याज्यापाठ, याज्यया गमनरूप एव याज्यया यजनात्मक. तस्य वचनम्। तच्च गमन सम्मुखमित्युक्तम्। तदनुकारेण होता ऋत्विजः याज्यापाठः। याज्याया ऋचो वचन, तत्कर्तव्यमिति यजेति वचनेन बोध्यते।

ततः परस्ताच्चतुर्थेन वाक्येन येऽयजामहे इत्यनेन वस्तुतो रश्मीनां यागकर्तृत्वं तदभिप्रायेण ये यजामह इति बहुवचनम्, ये इत्यनेन सर्वेषां रश्मीनां न तादृग्रूपत्वं किन्तु केषांचिदेवेति बोधनाय ये इति बहुवचनान्तो निर्देशः। लोके यज्ञानुष्ठाने यच्छब्दस्यार्थाविज्ञानेन तत्सार्थक्यायाज्ञानादिवशतः स्वरूपाज्ञानेनाव्यक्तार्थाभिप्रायेण यच्छब्दप्रयोगः।

तत्रैवाज्ञाने सम्भविनो दोषस्य निमित्तत्वेन कल्पनं स्त्रपराधादित्यादिना सूत्रकारेण। परवर्तिभिर्याज्ञिकैर्मीमांसकैरपि तस्यैवानुसरणम्, परन्तु तत्र बहुवचनस्यात्मनेपदस्य सार्थक्यं तु यथाकथंचन प्रयोगभेदाभिप्रायेण होतृणामानन्त्येन बहुवचनस्य कथञ्चनोपपत्ति समथ्यत्मिनेपदमनित्यत्वादिनासमर्थ्यते, तत्तु सर्वथाऽयुक्तमेव।

भवतु यथाकथञ्चित्। यागकर्तारोऽत्र रश्मयस्तेषां विभिन्नेऽवसरे तथात्वेन प्राप्त्या ये इति सर्वनाम्ना बहुवचनेन निर्देशः, यागफलस्यापि तेष्वेवेति यजामह इत्यात्मनेपदस्याऽप्युपपत्तिरिति प्रतिपादितम्। पञ्चमं वाक्यं तु द्वयक्षरं वौषट्रूपम्। अत्र वौ इत्यनेनादित्यस्य बोधस्तत्र षडित्यनेन ऋतुषट्कं, तत्त्रार्पितमिति तस्योदयात्परवर्त्यवस्थाबोधकत्वम्।

एवं सत्यमनेन वाक्यजातेन पूर्वोक्तावस्थात्रयं बोध्यते साम्मुख्यं तदुभयपार्श्वयोस्तिर्यक्त्वेन प्रवृत्तिरिति सर्वथाऽऽदित्यगत्यनुकारबोधकत्वमत्रेत्येतस्मिन्प्लुत्यादिना द्विविधार्थबोधकपदसंश्लेशबोधकत्वं प्लुतेरित्येतेषामेव वाक्यानामक्षराणां तथात्वसंभवो नान्येषां वाक्यानामक्षराणामित्येषामेव छान्दस्यत्वेन स्तवः। स्मृतावप्येतेषामेव विष्णुरूपत्वेन स्तुतिः।

तदुच्यते— चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु[1] ॥ इति।

### ६. सप्तदशो वै प्रजापतिरित्यैतरेयब्राह्मणस्यादित्यपरं व्याख्यानम्

प्रजापतेः साप्तदश्यं ब्राह्मणे बोध्यते, यथैतरेये उच्यते "सप्तदशो वै प्रजापति[2] रिति"। अत्र वैशब्देन प्रजापतेः साप्तदश्यं प्रसिद्धं बोध्यते। तस्य कथमुपपत्तिरिति। तत्प्रतिपादनार्थं ब्राह्मण-उच्यते-सप्तदशो वै प्रजापतिर्द्वादश मासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन तावान्संवत्सरः संवत्सरः प्रजापतिरिति।

---

१. म. भा. ४७:४३
२. ऐ. ब्रा. १:१:१

अत्र प्रजापतेः सप्तदशत्वं कथमिति कथनार्थं ब्राह्मणे प्रथमतः प्रजापतिः संवत्सराभिन्न इति प्रतिपाद्य संवत्सरे सप्तदशत्वं व्यवस्थापयितुमुच्यते द्वादश मासाः पञ्चर्तव इति । तत्र संवत्सरे साक्षात्सप्तदशसंख्या योगेन सप्तदशत्वस्य व्यवस्थापयितुमशक्यत्वात्तदवयवगतसंख्यया तद्व्यवस्थाप्यते । अवयवसंख्ययाऽवयविनः संख्याव्यवस्थापनेऽनात्र ऽतिप्रसङ्गेणावयवसंख्यायोगो वक्तव्यः । स चात्र न सम्भवतीति संवत्सरमात्रेऽपि संवत्सरद्वये विभिन्नावयवसंख्यावशतस्तत्साप्तदश्यं व्यवस्थाप्यते ।

यथा संवत्सरस्य मासरूपोऽवयव एकः ऋतुरूपोऽवयवश्चापरः । नह्येकस्मिन् संवत्सरे मासानां द्वादशसंख्या, ततः पृथगृतुसंख्या भवति । संवत्सरेऽवयवसंख्याप्रदर्शनार्थं मासरूपमानग्रहणं तद्द्वादशत्वसंख्यया संवत्सरः पूर्णो भवति । तावतैव तस्य प्रदर्शनसम्पत्तेर्ऋतुरूपमानान्तरानपेक्षा ।

ऋतुरूपमानग्रहणे च तेनैव संवत्सरस्य पूर्णतया प्रदर्शने न मासरूपमानान्तरानपेक्षा भवति । यद्यपि मासाभ्यामेव ऋतुर्घटितो भवति तथापि ऋतोर्मासद्वारको मासस्य वा ऋतुद्वारकः सम्बन्धो नात्र विवक्षितः । अन्यथा मासानामृतुद्वारकसम्बन्धविवक्षणे संवत्सरेण ऋतूनामेव सम्बन्धः साक्षात् स्यात्, न तदा माससंख्या संवत्सरेण सम्बन्धुं शक्या । उपस्थितत्वं संख्ययैव तत्सिद्धेः ।

एवमृतूनां मासद्वारकसम्बन्धविवक्षणे मासानामेव साक्षात्सम्बन्धः संवत्सरेण स्यात्तदानीमृतूनां संवत्सरेण साक्षात् सम्बन्धाभावेन तदीयसंख्यायाः संवत्सरसम्बन्धायोगः । साक्षादवयवगतसंख्यायोगावसरेऽवयवावयवसंख्यायोगस्यापि विवक्षणेऽनेकपारम्परिकावयवसत्त्वे एतावतामेवावयवावयवानां संख्या विवक्षणीया नान्येषामिति विनिगमनाभावः ।

यथा संवत्सरस्यावयवा मासा एवमृतवो दिनानि दिवारात्रं घटीमुहूर्तादिक्षणपर्यन्तं तदवयवाः । तत्रर्तुपर्यन्तमेवावयवावयवसंख्या नियन्तव्या, न परस्तादित्यत्र न विनिगमकम् । यथोक्तेन प्रजापतेः सप्तदशत्वव्यवहार एव संवत्सरे ऋतुपर्यन्तावयवावयवसंख्याग्रहणनियामकः ।

आदित्याभिन्नप्रजापतेः स्वातन्त्र्येण सप्तदशत्वसिद्धेः तदानुकूल्याय संवत्सरेऽपि उक्तवशात् सा नियम्येत । अत्र तु संवत्सरसम्बन्धिसंख्ययैव प्रत्युतादित्याभिन्नप्रजापतिसंख्याव्यवहारः उपपाद्यते । अस्यां दशायां नियामकस्यासत्त्वे उक्तविधनियमनासम्भवोऽन्योन्याश्रयदोषापातात् ।

किञ्चादित्याभिन्नप्रजापतौ सप्तदशत्वमुपपादयितुं किमिति संवत्सरावयवावयवसंख्यया नियतया तदुपपादनम् । सप्तदशवारं संवत्सरावृत्त्यापि संवत्सरे सा सङ्ख्या स्यात्, तत्साम्यादपि प्रजापतेः सप्तदशत्वमुपपादितं स्यात् ।

अथ संवत्सरे संख्या वृत्तिगतसंख्यानुरोधेनेति सप्तदशवारमेवावृत्तिस्तत्र वक्तव्या न न्यूना नाधिकेत्यत्र प्रजापतेः सप्तदशत्वमेव नियामकमिति समाधिस्तु-त्यः। अवयवावयवसंख्या ग्रहणे आवृत्तिसंख्याग्रहणे चेति। तस्मान्नेदमुपपादनं सम्यक्। किञ्च भक्षितेऽपि लशुने न शान्तो व्याधिरिति नयेन नात्र निस्तारः। मासतु रूपावयवसंख्याविवक्षणेऽष्टादशैव संख्या भवेत्।

मासानां द्वादशसंख्याकत्वात्, ऋतूनां च संवत्सरे पट्संख्याया एव प्रसिद्धेः अतएव अनुपपत्त्या ऋतुष्वपि अन्याय्यकल्पनाश्रयणेन संख्यान्तरं व्यवस्थाप्यते हेमन्तशिशिरयोः समासेनेति। तावता ऋतुपञ्चकमर्थः। तत्रापि किमित्यनयो-रेवर्त्वोः समासो नापरेषामृतूनामिति विनिगमकाभावः।

अथान्यतु द्वयसमासस्यापीदमुपलक्षणं तावता किमित्येषा क्लिष्टा कल्प-नाश्रयणीया प्रकारान्तरेणापि संवत्सरगतत्वेन सप्तदशत्वसंख्याया व्यवस्थापन-संभवः। यथा—मासा द्वादशायने द्वे ऋतुदिनरात्रिरूपविभागत्रयमित्यनेनापि सप्त-दशत्वसंख्यासंपत्तेः। तस्मादादित्याभिन्नप्रजापतौ सप्तदशत्वं कल्पनान्तरमूलकं प्रसिद्धमेव च प्रसिद्धिः वै शब्देन द्योत्यते। तदनुसारेण संवत्सरेऽपि सेति वक्त-व्यम्। तथा सति प्रजापतौ स्वातन्त्र्येणोक्तसंख्यासिद्धिः कथमिति चेत्,अत्रोच्यते।

प्रजापतिर्हि आदित्यस्तस्य बिम्बतः पृथिव्या आसमन्तात्तदीयं भास्वरं तेजो बिम्बादर्शनकाले दशिकषोडशांशपर्यन्तं भासते। ते षोडश बिम्बादर्शनकालिका दैशिकांशास्तानपेक्ष्याय सप्तदश इति सप्तदशत्वसंख्यायास्तत्र प्रसिद्धिः। अत एव सुमेरुकुमेर्वोरादित्यस्योदयतः पूर्वमेकमासपर्यन्तः सावित्रः प्रकाशस्ततः पूर्वं चैकमा-सपर्यन्त औषसः प्रकाशः प्रकाशते। एकमासार्थं च तत्रांशाष्टकमारोहार्थमादित्ये-नापेक्ष्यते।

अयं भावः—आदित्येन दक्षिणोत्तरयोरनयनयोर्गमनागमनाभ्यां दक्षिणो-त्तरवृत्तगताश्चतुर्णवत्यंशा ऊर्ध्वावरभावेन उपयुज्यन्त तावता च संवत्सरः पूर्यते द्वादशमासात्मकः। इत्थं च द्वादशभिर्मासैश्चेदादित्येन चतुर्णवतिरंशा उपयुज्यन्ते तदेकमासेन कतीत्यनुपातेनांशाष्टकं लभ्यते।

एवञ्चोदयात्पूर्वमंशाष्टकं सावित्रमासरूपं तत्पूर्वमंशाष्टकमौषसमास-रूपमिति षोडशांशानामादित्यप्रकाशसम्बन्धिनामपेक्षया आदित्यरूपः प्रजापतिः सप्तदशः। न चापरसंख्यापूरणमपरेणेति वाच्यम्। अन्यगतसंख्यापूरणस्य यजमा-नपञ्चमा इडां भक्षयन्ति इत्यत्र वेदे ऋत्विग्गतसंख्यापूरणस्य यजमानेन दृष्टत्वात्। अत एव तस्य सप्तदशत्वेन व्यवहारः प्रजापतिश्चादित्य इत्युक्तम्। औषस अंशा अष्टौ भवन्ति। अत एव तस्यास्तत्र त्रिंशत्पर्यायपर्यन्तं सम्बन्धो वेदे प्रतिपाद्यमान उपपद्यते।

तत्र प्रतिपर्यायमेकैकपादन्यासमपेक्ष्य त्रिंशत्पादन्यासे क्रमवर्णनस्य श्रीपस-सूक्तगतस्योपपन्नत्वेन, तदुक्तम् —हित्वी शिरो जिह्वया वावदच्चरत्त्रिंशत्पदान्य-क्रमीदित्यूषस प्रत्युच्यते वेदे। अतएव त्रिंशदुपस्तावक सूक्तमप्युपपद्यते। प्रति-पर्याय भिन्नामुषस गृहीत्वा त्रिंशत्त्वस्याप्युपपत्तिः। त्रिंशदुपस्तावके सूक्त उषसा त्रिंशत्व तत्समूहपञ्चत्वेन वर्ण्यते।

तत्र उषसा पञ्चक पृथगुक्त्वा तत्र प्रत्युषस पञ्च-पञ्च भगिन्य इति वर्णनेन उषसा सप्तपञ्चकमुच्यते, तेन सप्तपञ्चकेन उषसा षडहपञ्चकयोगा विज्ञायते तद्वशतस्तासा पञ्चत्वयुक्तत्ववर्णनया मासरूप काल उपप इत्यपि भवति। यथोषस उक्तरीत्या पञ्चसम्बन्धियोग एव सवितुरपि पञ्चसङ्ख्याक-यागाभिप्रायेण मित्रसूक्ते "मित्राय पञ्च येमिरे" इत्युच्यत इत्यादिक पूर्वं प्रति-पादितम्।

एव चोक्ताशगतषोडशसख्या गृहीत्वाऽधिकसङ्ख्यापूरणेन प्रजापति सप्तदश.। किञ्च सुमङ्कुमेर्वोऽदयन्नाशित्य प्रतिपर्यायषोडशकनाभिरुदेतो रथतस्तस्य उपनिषत्सु षोडशकलापुरुषत्वेन व्यवहार। ताः षोडशकलास्तासु सम्पूर्णस्य सामान्येनैकत्वेन प्रजापतिसम्बन्ध इति सप्तदशत्व तस्य। प्रजा-पतित्वचादित्यस्य, रश्मोना प्रजात्वेन वर्णनात्। किञ्च वेदे आदित्यस्यैव स्तव स्तूयमान. प्रजापतिरादित्य एवेति दिक्।

## १०. इन्द्रियवीर्ययोरपगमस्तयोस्त्रेधाभावश्चेति सविस्तरं विवेचनम्

एव ब्राह्मणे सरस्वतीभृगुप्रभृत्युत्पत्त्याख्यायिकोच्यते। शतपथे राजसूये वरुणस्याभिषेके सारस्वतोनामपामयवादे उच्यते—"वरुणस्य वा अभिषिच्यमान-स्येन्द्रिय वीर्यमपाक्रामत्। तत्त्रेधा भवत्। भृगुस्तृतीय, श्रायन्तीय तृतीय, सरस्वती तृतीयम्[1]"इति। तैत्तिरीये इन्द्रसम्बन्धेनेदमवाच्यत। यथा—'इन्द्रस्य सुषुवाणस्ये-न्द्रिय वीर्यमपाक्रामत्। तत्त्रेधा भवत्। भृगुस्तृतीयमभवत्। श्रायन्तीय तृतीय, सरस्वती तृतीयम्[2]" इति।

अत्राभिषेकेण कथ वरुणस्येन्द्रियवीर्ययोरपक्रमः। कथ च तयोर्भागत्रय भृग्वादिरूपमभवत्। एवमिन्द्रस्य सवनेनेन्द्रियवीर्ययोरपगम। कथ चेन्द्रियवीर्य-योरस्तवद्भृग्वादिरूपनेति। अर्थवादात् स्वार्थतात्पर्याभावेन दोषाभाव इति तु न युक्तम्। अर्थवादत्वेऽपि न सर्वथा तात्पर्याभाव, किन्तु विध्यभिप्रायेण तात्प-र्याभावेऽपि वाच्यार्थस्य नित्यार्थपरतया व्याख्याने तात्पर्यस्य मीमांसकै. स्वीकृत-त्वात्।

---

१. तै. ब्रा. १ ८ ६ १

२. तै. ब्रा. ५:६ ३-१०

अत्रोच्यते–ऐतरेयब्राह्मणानुसारेणार्थकल्पने उपपन्नतायाः संभवः। तथाहि अत्र प्रथमेऽर्थवादे वरुणस्याभिषेकावसरे इन्द्रियवीर्ययोः परा गतिरुच्यते। द्वितीये च इन्द्रस्य सवनावसरे तथा। तावता विज्ञायतेऽभिषेकः सवनं वा यदा तदानी-मिन्द्रियाभावः। इन्द्रियत्वेन चादित्यस्यैव निरूपणम्। अत एव वैष्णवे सूक्ते विष्णोः शिपिविष्ट इति नाम्न इन्द्रियार्थकता वेदे उच्यते।

तदुक्त निरुक्तकारेण, शिपिविष्टः विष्णुरिति विष्णोर्द्वे नामनी भवतः। कुत्सितार्थीयं पूर्वमित्यौपमन्यवः इति। तदर्थं मन्त्रोऽपि तेनोक्तः–किमित्ते विष्णो परिचक्ष्यं भूत्प्रयद्ववक्ष शिपिविष्टो अस्मि इत्यादि। तदर्थन्तेन व्याख्यातः, किं ते विष्णो प्रख्यातमेतद्भवति अप्रख्यानीयं यन्नः प्रब्रूपे शेप इव निर्वेष्टितोऽस्मि अप्रतिपन्नरश्मिः इति।

दुर्गाचार्येणात्रोच्यते तदर्थः। किमेतदेवैकं विगतरश्मिरूपं परिचक्ष्यं परि-ख्यापनीयं भूत् भवति, नान्यानि तव रूपाणि सन्ति येनैवं प्रववक्षे पुनःपुनर्ब्रूपे अस्माकमग्रतः शिपिविष्टो ऽस्मीति। अप्रतिपन्नरश्मिर्हि सूर्य उदयकाले निर्वेष्टितः शेपस्वरूपा भवति। ततस्तद्रूपगुणयोगित्वं कुत्सितार्थमित्युपपद्यते इति। यद्यपि वरुणेन्द्रियवीर्ययोरपि आदित्यरूपत्वं तथापि क्रियाभेदाद्भेदं मत्वोच्यते वरुणस्येन्द्रियापराम इति। तस्यार्थः–वरुणोऽभिषेकावसरे इन्द्रिय-भावानापन्न इति।

**११. ऐतरेयब्राह्मणोक्तमन्त्राणां सायणव्याख्यया अनिर्णीतार्थत्वेनादित्य पर–व्याख्यया समाधानम्—**

एतरेयब्राह्मण ऐन्द्राभिषेकावसरे मन्त्रा उच्यन्ते—

[1]अस्मिन् राष्ट्रे श्रियमावेशयाम्यतो देवीः प्रतिपश्याम्यापः।<br>दक्षिणं पादमवनेनिजेऽस्मिन् राष्ट्र इन्द्रियं वर्धयामि ॥<br>पूर्वमन्यमपरमन्यं पादाववनेनिजे ॥<br>देवा राष्ट्रस्य गुप्त्या अभयस्यावरुध्यै।<br>आपः पादावनेजनीर्द्विपन्तं निर्दहन्तु मे ॥ इति ॥

यद्यप्यत्र भाष्यकारेण सायणेन इन्द्रियशब्दस्येन्द्रियसामर्थ्यप्राप्तिरर्थ उच्यते तथापि तावद्विदूरार्थकलक्षणस्वीकारापेक्षया तां विना प्रकारान्तरेणार्थ-कथनस्य समुचितत्वम्। एवं चात्रोच्यते–यस्मिन् राष्ट्रे श्रियमावेशयामि अतो राष्ट्रतो विरुद्धदेशे भासुराणामपां सन्दर्शनं मम। तच्च वर्तमानकालं पश्यामी-त्यनेनोच्यते। यद्यप्यत्र कर्ता न स्पष्टमुच्यते तथाप्यत्र कर्तृत्वेन इन्द्रस्य वा आदि-त्यस्य वा ग्रहणम्। ऐन्द्राभिषेकसम्बन्धात्। वेदे आदित्यस्यैव स्तव इति सर्वा

---

१. ऐ. ब्रा. ८:५:४

वर्णना आदित्यपरेति वा। एवं सति वक्ता आदित्यो ब्रवीति, यदा एकस्मिन् राष्ट्रे श्रिय आवेशन ततो राष्ट्रादपरदेशेऽपि प्रतिपश्यामीति।

अयं भाव—आदित्यो यदादित्येकस्मिन् देशे व्यक्त तदानीं तद्विरुद्धदेशे तस्यास्तमय। ततश्च तत्रास्तोत्तर व्यक्तस्य तेजस क्रमेण न्यूनीभावेनाव्यक्त-तेजस प्रवृत्ति। तेजसश्चाप्त्वेन वर्णना वेदे इत्युक्तम्। अत एव वदे आदित्यस्यत्र वर्णनेन तस्येन्द्रत्वात्तेन विनाश्या वृत्रादिरसुराऽन्धकाररूपस्तनापि निरोध उच्य-मानोऽपि तेजरूपत्व एव सम्भवति। इन्द्रेण च वृत्रस्य विनाशननापि प्रवर्तनमुच्य-मानमपि तदेव सगच्छते। अतएव चेन्द्रस्य वृष्टिकर्तृत्वमुच्यमानमपि सगतिमित्य-न्यत्र विस्तरेण निरूपितम्।

श्रीश्च प्रात कालिकी सन्ध्या तद्रूपिण्युषा वा। अत एव यजुर्वेदे श्रीश्च[1] ते लक्ष्मीश्च पत्न्या इति प्रोच्यमान सगतम। तत्र श्रीर्मण्डलाश्रयणात् प्रात कालिकी, लक्ष्मीश्च लक्षणात्सायन्तनीति पत्नीद्वयम्। अन्यथा श्रीलक्ष्मीशब्दयो-रेकार्थत्वेन भेदबोधकद्विवचनयुतत्वेन वर्णनमसगत स्यात्। अत एव तत्रैव मन्त्रे-ऽग्रेऽहोरात्रे रूपमित्युक्तम्। तदनुसारेण श्रिय प्रथमेनाह्ना द्वितीयस्या लक्ष्म्याश्च द्वितीयया रात्र्या क्रमिक सम्बन्धो भाति तस्योपपत्ति।

एव च श्रिय आवेशनवचनादेकस्मिन् देशे उदयावसरप्राप्ति। ततो विरुद्धेऽन्धकारयुते देशेऽपामव्यक्ततेजसा सत्व तद्दर्शन च। प्रतिपश्यामीत्यत्र प्रति-शब्देन विरुद्धभावप्रतीति। एव भिन्नदेशस्थितेनादित्येनोदितेन तद्विरुद्धदेशे यत्रानेन पूर्व स्थित तत्र देशभेदेन भिन्नस्यास्तगतस्यादित्यास्ते वह्नौ स्वतेजो-निधानान्मलिनस्य तेजस प्रदानेन तदरूणाभिरद्भिस्तस्य निर्णेजन शुद्धि सपा-द्यते। तच्च निर्णेजन पुनस्तत्रोदयपर्यन्त भवति।

उदये च तत्रादित्यबिम्बस्य भास्वरत्व दृश्यते तच्च भास्वरत्व तत्राद्भि-र्निर्णेजनात्सञ्जातमिति कल्पना। एव रूपता चोदयास्तमययो पर्यायेण सर्वत्र प्रवृत्त्या सर्वत्र भवेत्। तत्र विशेषबोधार्थं पूर्वोक्तनिर्णेजन परवर्ति मन्त्रेण स्पष्ट-मुच्यते। तथाहि–"दक्षिण पादमवनेनिजेऽस्मिन् राष्ट्र इन्द्रिय दधामि। सव्य पाद-मवनेनिजेऽस्मिन् राष्ट्र इन्द्रिय वर्धयामीति"।

अत्र पादयोर्दक्षिणसव्यशब्दाभ्या विशेषणाद्दक्षिणशब्दो दक्षिणावर्त सुमेरु गत पाद बोधयत्यादित्यरूपम्। एव सव्यशब्दो वामावर्त कुमेरुगत पाद बोधयति। एव चैतत्पादयोरद्भिर्निर्णेजन मलनिरासार्थम् अद्भिर्मलनिर्णेजन एव निश्शब्द-पूर्वस्य निज्धातो. प्रयोगात्। मलसम्बन्धश्चादित्यरूपे पादे रात्राविति पूर्व-मुक्तम्।

---

१. शु. य वे ३१·२२

एवं सति दक्षिणं दक्षिणावर्तं पादं सुमेरुस्थमवनेनिजेऽद्भिः प्रक्षालयामि, तदानीमस्मिन्कुमेरूपे राष्ट्रे भ्राजमाने इन्द्रियं दधामीति । तत्रत्यभासमानादित्यमण्डले इन्द्रियं इन्द्रियभावं दधामि । मण्डलस्यैवेन्द्रियत्वेन रूपणम् । सुमेरौ रात्रिप्रवृत्या कुमेरौ दिनप्रवृत्येन्द्रियस्थापनोक्तिः ।

एवं कुमेरौ सर्वस्य पादस्य मालिन्येऽर्थात्तत्र रात्रिप्रवृत्ती तस्याद्भिः प्रक्षालने सुमेराविन्द्रयवर्धनमिन्द्रियस्य प्रवर्तनम् । सुमेरोरूर्ध्वमुत्तरस्यां वर्तमानत्वेन वर्धनमूर्ध्वारोपणमित्युक्तिः । तदुक्तं 'सव्यं वामं वामावर्तं पादमवनेनिजेऽद्भिः प्रक्षालयामि । तदानीमस्मिन् सुमेरुरूपे राष्ट्रे इन्द्रियं वर्धयामीति"।

तयोः सव्यदक्षिणयोः पादयोः पूर्वापरशब्देन व्यवहारपूर्वकमवनेजनमत्र वोच्यते मन्त्रे । तच्चावनेजनं राष्ट्रस्य भ्राजमानस्य गुप्त्यै रक्षणायाभयस्य तमःसकाशत इति शेषः, अवरुद्धिर्लाभस्तस्मै भवति हे देवा इति । तदुक्तम्—"पूर्वमन्यमपरमन्यं पादावनेनिजे । देवा राष्ट्रस्य गुप्त्या अभयस्यावरुद्ध्यै" इति । तदुक्तं पूर्वं पूर्वाञ्चनं पूर्वामभिप्रेत्य गच्छन्तं कुमेरुस्थमिति यावत् ।

अयंभावः—कुमेरावादित्यस्य पश्चिमायामुदय उदितस्य तस्यास्तार्थं पूर्वामभिमुखीकृत्य प्रवृत्तिः । तत्पूर्वामभिमुखीकृत्य गमनं पूर्वाञ्चनम् । तदभिप्रायेणादित्यस्य पूर्वप्राङ्प्रभृतिशब्दैर्व्यवहारो वेदे । तच्चाग्निः पूर्वेभिरित्यत्र विस्तरेण प्रपञ्चितम् । तथा च पूर्वमन्यं भिन्नं पादम् । एकस्यैवादित्योपाविभेदेन भिन्नता ।

एवमपरं पश्चिमाञ्चनं पश्चिमामभिमुखीकृत्य गच्छन्तम् । तच्च सुमेरौ, तत्रादित्यस्य पूर्वस्यामुदयेनास्तार्थं पश्चिमामभिमुखीकृत्य गमनात् तस्य प्रत्यङ्गादिशब्दैर्व्यवहारो यथा—प्रत्यङ्देवानां विशः प्रत्यङ्ङुदेपि मानुपान् इत्यादौ । तावुभौ पादावनेनिजे प्रक्षालयामि, अर्थाद्भिन्ने काले भिन्ने देशे इति यावत् । राष्ट्रगोपनार्थमभयप्रापणार्थमित्युक्तं देवा राष्ट्रस्य गुप्त्या अभयस्यावरुद्ध्यै इत्यत्र । इमाः पादावनेजनीरापो मे द्विषन्त शत्रुभूतं तमो निर्दहन्तु निरासयन्त्वित्यर्थः ।

तदिदं पादावनेजनमद्भिः सेचनम् । अयमेवाभिषेको यदा वरुणस्य तदानीं तस्येन्द्रियमिन्द्रियभावो वीर्यं तेजश्च व्यपगतम्, विनष्टम् । वरुणो हि पश्चिमायां दिशि यत्रोदयो दक्षिणस्यां दिशि । तत्र स्थितस्यादित्यस्य वरुणरूपतेति । स च कुमेरुस्थ आदित्य इति यावत् ।

तस्याभिषिच्यमानस्योक्तरीत्यास्तगमने तदीयं द्वयमिन्द्रियं वीर्यं च विनष्टम् । तस्यैवास्तोत्तरवर्तितेजोरूपत्वम् । मध्ये च अपणीयतमोरूपत्वं सञ्जातमिति गृहीत्वास्तोत्तरकालिकस्य भृगुरूपत्वम् । तदुक्तं तत्रैवाऽभवत ।

तत्र तृतीयमस्तोत्तरकालिकं तेजस्तद्रूपो भृगुरभवत्। मध्यमकालिकतृतीयरूप च श्रपणयोग्य तमोऽभवत्।

अय भाव.—तेजसा हि विभिन्नस्य वस्तुन पाक.। पाक पचन स्वरूपत-श्च्यावनम् तद्योग्यता च तमसि इति तत्पचनीयत्वेनोच्यते—श्रायन्तीय तृतीयमिति। श्रं पाके श्रा पाके इत्यस्माद्धातोरुक्तरूपसिद्धि। तस्य तृतीयभाव उक्त। उदय-प्राक्कालिकतेजोऽभिप्रायेणोच्यते--तृतीयभागकालिक तेजश्च सरस्वती श्रभवत्। सरस्वतीतेजोयुक्ता उषा इतियावत्। सर शब्द उदकनामसु पठ्यते, उदक च तेज-स्तद्युक्ता उषा इति पूर्वमुक्तम्। यद्यप्यत्र भृग्वादीना तृतीयभागत्वमुक्त तथापि प्रजापतिदुहितृव्याख्यानब्राह्मणानुरोधेन प्रथमतृतीयभागत्व भृगोर्विज्ञायते। तत्र हि प्रजापते रेते प्रथममुद्दीप्तमादित्यरूप तदभवत्। द्वितीयमुद्दीप्त भृगुरभवत्।

तत्र प्रथम पूर्वं पूर्वोक्तरीत्या पूर्वाञ्चित भूमेरस्यादित्यरूप तदभवत्। तत परस्तादादित्यास्तमये यदुद्दीप्त स भृगुरूपमभवत्। श्रत एव स्थलान्तरेऽस्तात्तर यावद्रश्मयो भवन्ति तत्र भृगुरभवदित्यभिप्रायेणोच्यते—श्रर्चिषि भृगुरभवदिति। इन्द्रियकल्पना उदयोत्तर प्रवर्तते। उदयावसरेऽस्तावसरे रात्रौ च सा न भवति। तदेव गृहीत्वोक्तेन ब्राह्मणद्वयेनेन्द्रियवीर्ययोरपगम उक्त इन्द्रवरुणयो.। उदया-वसरे चेन्द्रियभावो मैत्रावरुणसूक्ततो व्यक्तम्।

तत्र मित्रावरुणयो.सूक्ते उच्यते "तयो· दक्ष दधाते श्रपसमिति"। मित्रा-वरुणयोरादित्यस्योदयाव्यवहितपूर्वकालवर्तित्वमस्ताव्यवहितोत्तरकालवर्तित्वम्। ताभ्यामुदयतोऽस्तमयतो वा धारणमनेनोच्यते। तत्र दक्षस्य विशेषणमपसमिति तेन तदानीमनिन्द्रियभावो बोध्यत इति पुरस्ताद्विस्तरेण प्रतिपादितम्।

*एव[1] मा शिश्नदेवा श्रपिगुर्ऋतं न* "इत्यनेनापि उदयावसरेऽनिन्द्रियभावो बोध्यत इति प्रतिपादित पुरस्ताद्विस्तरेणेति। एवञ्चोक्तरीत्या श्रभिषेकावसरे वरुणस्य सवनासरे इन्द्रस्येन्द्रियवीर्ययोरभाव उच्यमान उक्तरीत्या रात्रिसम्बन्धा-दुपपद्यते। एवञ्च तस्य त्रेधाभावेन भृगोरुत्पत्ति श्रायन्तीमस्य सरस्वत्याश्च सत्वमप्युक्तरीत्योपपन्नमवेति।

१२. पुरुष वै देवाः पशुमालभन्तेत्यादिब्राह्मणांशस्यादित्यपरं विवेचनम्

एव पुरुष वै देवा. पशुमालभन्तेत्यैतरेयब्राह्मणगताख्यायिका श्रादित्य-परत्वेनैवोपपद्यत। तथाहि ऐतरेये पशुयागाङ्गपुरोडाशयागस्य विधावाख्यायि-कोच्यते[2] पुरुष वै देवा पशुमालभन्त तस्मादालब्धान्मेध उदक्रामत् सोऽश्व प्रावि-

१. ऋ. वे. ७ २१:४

२. ऐ. ब्रा. २:१:८

शत्तस्मादश्वोऽमेध्योऽभवदथैनमुत्क्रान्तमेधमत्यार्जन्त स किंपुरुषोऽभवत्तेऽश्वमाल-भन्त सोऽश्वादालब्धान्मेध उदक्रामत् स गां प्राविशत्तस्माद् गौ मेध्योऽभवदथैन मुत्क्रान्तमेधमत्यार्जन्त स गौरमृगोऽभवत्तेगामालभन्त स गोरालब्धान्मेधउदक्रामत् सोऽविप्राविशत्तस्मादविमेध्योभऽत्वदथैनमुत्क्रान्तमेधमत्यार्जन्त स गवयोऽभवत्तेऽ विमालभन्त सोऽवेरालब्धान्मेध उदक्रामत् सोऽजं प्राविशत्तस्मादजो मेध्योऽभवद-थैनमुत्क्रान्तमेधमत्यार्जन्त स उष्ट्रोऽभवत् सोऽजेज्योक्तमाविवारमत तस्मादेष पशूनां प्रयुक्ततमो यदजस्तेऽजमालभन्त सोऽजादालब्धान्मेध उदक्रामत्स इमां प्राविशत्तस्मादियं मेध्या भवदथैनमुत्क्रान्तमेधमत्यार्जन्त स शरभोऽभवत्, त एत उत्क्रान्तमेधा अमेध्याः पशवस्तस्मादेतषां नाश्नीयात्तमस्यामन्वगच्छन् सोऽनुगतो व्रीहिरभवत्तद्यत् पशौ पुरोडाश मनुनिर्वपन्ति समेधेन नः पशुनेष्टमसत्केवलेन न पशुनेष्टमसदिति ।

अत्र पुरुष-अश्व-गो-अवि-अजरूपाणां पञ्चानां पशूनां देवैर्यज्ञ आलम्भः । आलब्धात् पशोर्मेधनिर्गमोऽन्यत्र तस्य प्रवेशः । ततो मेधाभावादालब्धस्य पशोः परित्यागः । परित्यक्तस्य प्राण्यन्तररूपत्वम्, अन्ते अजादालब्धान्निर्गतो मेधो भूमौ प्रविष्टस्तस्य तत्र व्रीहिभावः । तस्माद् व्रीहिजन्यपुरोडाशयागः पशुयागे मेधयुक्तत्वायानुष्ठेयः । तावता पशोर्यागे मेधयुक्तता भवति ।

तदुक्तं ब्राह्मणे—"तद्यत् पशौ पुरोडाशमनुनिर्वपन्ति समेधेन नः पशुनेष्ट-मसदिति ।" यागे कृत्स्नस्य पशोरेव द्रव्यत्वेन विधानात्तस्यैव हविष्ट्वं भवति । हविःशब्दो हूयमानपदार्थार्थकः । एवञ्च पशोर्हविष्ट्वे तस्यहूयमानताऽपेक्षिता । न च सा तस्य । पशुयागे हृदयाद्यंगानामेव हूयमानत्वम् । तदर्थश्चावदानरूपः संस्कारो हृदयादीनामङ्गानामुच्यते न तु पशोः ।

तदुक्तं "हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस[1]" इत्यादिना । एवञ्च कृत्स्नः पशुर्देयत्वेनोच्यते, होमावसरे च कतिपयानि तदङ्गानि हृदयादीनि हूयन्ते इति पशोर्भूयान् भागो दत्तो हुतो विनष्टो भवति । तदुक्त ब्राह्मणे तदाहुर्ह-विरेप यत पशुरथास्य वहूवर्पति लोमानि त्वगसृक्कुष्ठिकाःशफा विषाणे स्कन्दति पिशितमिति ।

एतैर्भागैर्न्यूनस्य कथं पूर्णत्वमित्याशंका ब्राह्मण उच्यते केनास्य तदापूर्यते इति, तदुत्तरं तत्रैवोच्यते केवलेन नः पशुनेष्टमसत् इति । अस्यार्थो भाष्यकारे-णोच्यते—केवलेन साधनान्तरनिरपेक्षेण मेधपूर्णेन पशुनेष्टं भवत्विति तदभि-प्राय इति ।

---

१. श. ब्रा. ३:६:४:१५-१७

न च पशुयागस्थले पिष्टमयमेव पशु कृत्वेष्टसिद्धि । पिष्टमये पशौलामादीनामपगमाभावेन न्यूनत्वाभावादिति वाच्यम । पशुविधायकवाक्ये[1]— 'अग्नीषोमीय पशुमालभेतेत्यादौ" वास्तवपशोरेव विवक्षात् । न च लक्षणया पिष्टपशोर्बोध इति वाच्यम् । न विधौ पर शब्दार्थ इति तद्विरोधात् । एवञ्च पिष्टमयपशुना यागकरणे विहिताकरणादविहितकरणाद्यागस्य प्रायश्चित्तीयता व्यगत्वञ्च स्याताम् ।

एवञ्च पशुयागे पशुस्थाने पिष्टमय पशु गृहीत्वा यागानुष्ठानमवैधमेव भवतीति वास्तवपशुनैव यागस्तत्रोक्तरीत्या न्यूनतापूर्त्यर्थ पुरोडाशयाग । तयोरगागिभावस्य मीमासाया निर्णयात् । तत्र पुरोडाशप्रशसार्थेवतास्यायिका पुरुष वा इति ।

तत्र किमिति पञ्चैव पशव उपादेया उक्ता, किमिति पुरुषादय एव ते । अन्येषा कुतो न ग्रहणम् । तत्र मेधव्यपगम कथम, कथञ्च तस्यान्यत्र प्रवेश । उद्गतमेधस्य पशो कथ पश्वन्तररूपता । अन्ते व्रीहिप्रवेशो मेधस्य कथम्, को वा मेधपदार्थो यस्यैव गमागमौ भवत कश्चित कालभेदेन उपपादनार्थं प्रयतते, पूर्वं पुरुषाणामेव यज्ञ पशुत्वेनोपयोग आसीत् । तत क्रमशोन्नतविचारास्ते पुरुषान् परित्यज्याश्वादीनुपयोजितवन्त इत्यादिना । अतो प्राणिवधे दोषदर्शनेन पशुस्थाने पुरोडाशस्य प्रवर्तनमिति अपरे पुनर्वर्णयन्ति पूर्वं गृहीताना दोषदर्शनेन परित्यक्ताना पुनस्तत्वेनोपयोगाभाव इति ।

दोषदर्शनेनाजस्य परित्यागे पुरोडाशस्योपयोगनिर्णये कथ पुनरजस्य पशुत्वेनोपयोग इति । किञ्च परित्यक्तस्य पश्वन्तररूपत्व तावताऽनुपपन्नम् । अवि परित्यक्त उष्ट्र सञ्जात इति हि वर्ण्यते आख्यायिकायाम् । तस्मान्नेद परेषा वर्णनेति ।

मीमासकादयस्त्वत्र ब्रुवते–अय स्वर्थवाद । शास्त्रदृष्टविरुद्ध तत्रोच्यमानमपि न तत् प्रमाणम् । तस्य विधिस्तावने तात्पर्यात् । अतात्पर्यार्थस्य विरोधे सामञ्जस्येऽपि दोषाभाव इति । ननु तात्पर्याविषयत्वेन मुख्यार्थस्य विरोधेऽपि न दोषस्तर्हि किमित्येषा विरुद्धा उन्मत्तकल्पा वर्णना क्रियते । किमित चैतादृशस्य ग्रन्थस्य व्याख्यानार्थं व्याख्यातृणा प्रयास ।

नहि विष भुङ्क्ष्वेति वाक्यस्य पित्रादिहितकृत्प्रयुक्तस्य स्वार्थे तात्पर्याभावे तद्व्याख्याने प्रयासा दृश्यन्ते, विषमित्युच्यते कीदृश तद्विषमित्यादिक । एव चैतस्या आख्यायिकाया अर्थवादत्वेऽपि तत्वेन विध्युपयोगेऽपि स्वार्थे किमित्येषा वर्णना एवक्रमिका । कथ च मेधव्यपगम । का वा मेधपदार्थ । कथ च तस्या-

१. तै ब्रा. ६.१ १ १

न्यत्र प्रवेशः। कथं च त्यक्तमेधस्य पशोः पश्वन्तररूपत्वमिति वर्णिता अंशा निर्णयमपेक्षन्त एव।

अथ मीमांसाभाष्यरीत्यैतस्य व्याख्यानम्। तत्र हि भाष्ये वपायागप्रशंसार्थेऽर्थवादे स प्रजापतिरात्मनो वपामुदक्खिदत्। तामग्नौ प्रागृह्णात्। ततोऽजस्तूपर उदपद्यतेति रूपे उच्यते, कथं पुनरनुत्खिन्नायां वपायां प्रजापतिरात्मनो वपामुदक्खिददित्याह ? उच्यते–असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्। इहान्वाख्याने वर्तमाने द्वयं निष्पद्यते यच्च वृत्तान्वाख्यानं यच्च कस्मिश्चन प्ररोचना द्वेषो वा।

तत्र वृत्तान्तान्वाख्यानं न प्रवर्तकं निवर्तकं चेति प्रयोजनाभावादनर्थकमित्यविवक्षितम्। प्ररोचनया तु प्रवर्तते द्वेषान्निवर्तते इति तयोर्विवक्षा। वृत्तान्वाख्याने आदिमत्तादोषो वेदस्य प्रसज्जेत। कथं पुनरिदं निरालम्बनमन्वाख्यायते इति। उच्यते। नित्यः कश्चिदर्थः प्रजापतिः स्याद्वायुराकाश आदित्यो वा।

स आत्मनो वपामुदक्खिदत्, वृष्टिं वायुं रश्मिं वा। तामग्नौ प्रागृह्णाद्वैद्युत आर्चिषे लौकिके वा। ततोऽज इत्यन्नं बीजं वीरुद्वा। तमालभ्यतमुपयुज्य प्रजाः पशुनाप्नोतीति गौणाः शब्दा इति। तदनुसारेणात्र प्रकृते तर्हि कीदृशी व्याख्या। भाष्यकारेण तदप्रदर्शनान्न्यूनता भाष्यस्य। तस्मात् कथमिदमुपपादनीयमिति चेदत्रोच्यते—

अत्र देवा रश्मयः। रश्मीनां देवत्वं शतपथब्राह्मण उच्यते–"रश्मयो वै विश्वेदेवा" इति। ते आदित्यरूपं पुरुषं पुरुषत्वेन पशुत्वेन आलब्धवन्तः।। पुरुष इत्यनेन पूरणात् पुरुष इति। पूर्णं रूपं विवक्षतम्। पूर्णत्वं तु तेजसा रश्मिभिर्वा। तादृशेन पूर्णत्वेन पुरुषत्वेन पशुरूपेणालब्धवन्तः। मेधः सारांशः सोऽत्र पुरुषत्वरूपः। तस्य ततो व्यपगमः। पुरुषत्व ततो व्यपगतम्। पुरुषत्वं च पूर्णत्वं तत्ततो व्यपगतं नाम तत्र पूर्णत्वस्याभावः संवृत्तः। एषात्रादित्यस्यास्तमयकालिकी वर्णना। सापि सुमेरुगता। सापि सुमेरौ देवानां निवासात्।

आदित्यस्योदयेऽस्तमये च नानाविधाः कल्पना वेदे। अस्तगमनं मरणमुदय उत्पत्तिरित्येकविधा कल्पना। अस्तगतस्यान्यत्र दानं यत्रासावुदित इत्यपि कल्पना। दानं च प्रकृते सुमेरावस्तमयवर्णनाद्देवैः क्रियते इति सुमेरावस्तं गन्तुं प्रवृत्त आदित्यो दीयते। दानस्य होमरूपत्वं यागरूपत्वम्। देवस्य च पशुत्वं हविष्ट्वमित्येवं नानाविधाः कल्पनाः। स तत्रादित्यादेवैर्देयत्वेन पुरुषत्वेन गृहीतः।

अस्तमये चादित्यस्य तेजसो न्यूनत्वमिवेति गृहीत्वाऽऽख्यायिकायामुक्तं ततः पुरुषरूपादर्थात्पूर्णरूपान्मेधः सारांशः पूर्णत्वरूपो व्यपगतः। अर्थान्न्यूनतेजाः

स सम्वृत्तः। तदिदं न्यूनतेजस्कत्वं पूर्णतेजस्कत्वरूपगुणस्य पूर्णत्वस्य व्यपगमेनेति।

तदुक्तम्–"तस्मादालब्धान्मेध उदक्रामत्, तत्राग्नौ निर्गतो विनष्टः" इति। ततस्तदादित्ये वर्तमानेन द्वितीयरूपेणालम्भः कृतः। द्वितीयं च रूपमश्वत्वम् अश्वत्वमवृद्धत्वम्। अश्वशब्दस्य टु ओ श्वि गतिवृद्ध्योरिति वृद्ध्यर्थाच्छ्वि धातोर्निष्पन्न-श्वशब्देन नञा समासेन सिद्धिः। श्वयतीति श्वः। न श्वोऽश्वः इति। अवृद्धः अपूर्ण इति यावत्।

तेनैवाश्वत्वेनावृद्धत्वरूपेण पशुत्वेनालब्धवन्तः। गतसारस्य पूर्वस्य पुरुषस्य पूर्णत्वं रूपं परित्यज्य द्वितीयं रूपमवृद्धत्वरूपाश्वत्वं तद्गृहीत्वाऽऽलम्भः। तदुक्तं तेऽश्वमालमन्तेति। उत्क्रान्तमेधमत्यार्जन्त तं परित्यक्तवन्तः। परित्यक्तः स उत्क्रान्तमेधः पुरुषः किम्पुरुषः कुत्सितः पुरुषः किम्पुरुषः स तादृशोऽभवत्। तेजसो न्यूनतया किम्पुरुषत्वम्।

एवं पूर्वं यद्रूपं गृहीतमासीत्तदभावेन तद्रूपवतः पुरुषस्य परित्याग इति वर्णना। ते देवास्तदानीमादित्यवर्तिद्वितीयरूपमवृद्धत्वमश्वत्वरूपं तेन रूपेण पशुत्वेन तमालब्धवन्तः। किंवा पूर्वोक्तधातोर्गत्यर्थत्वेन श्वयतीति श्वा गन्ता न श्वोऽश्व इत्यगन्ता गमनातन्स्थिर श्वेति अश्वत्वं,तेन रूपेण पशुत्वेन तमालब्धवन्तः। तदपि अवृद्धत्वरूपं सारोऽशस्तस्मादश्वादपगतः। अवृद्धत्वाभाववान् सवृत्तः।

नचावृद्धत्वाभावो वृद्धत्वमिति कल्पना अभावाभावस्य प्रथमाभावप्रतियोगिरूपत्वादिति वाच्यम्। अभावाभावस्य प्रथमाभावप्रतियोगिनश्च समनियतत्वेऽपि एकरूपत्वाभावात्। प्रथमाभावप्रतियोगिनश्च भावत्वेन अभावाभावस्य स्वभावत्वेन बुद्धिविषयत्वाद्भेदात्। अथवा पूर्वोक्तमगन्तृत्वरूपमश्वत्वं तेन रूपेण पशुत्वेनालम्भः। तत्र सारोऽशो गन्तृत्वरूपमश्वत्वं तस्य व्यपगमः। पूर्वोक्तमगन्तृत्वरूपं स्थिरत्वद्भावं परित्यज्यास्ताचलं गन्तुं प्रवृत्तः।

एवं सति अगन्तृत्वरूपाश्वत्वरूपस्य सारस्य व्यपगमः। ततो देवैरादित्ये वर्तमानमश्वत्वरूपमपि हित्वा तृतीयेन रूपेण तस्यालम्भः कृतः। तदुक्तं तस्मादालब्धान्मेध उदक्रामत् गां प्राविशत् इति। अर्थात्तृतीयं रूपं गोत्वं गमनकर्तृत्वं तेन रूपेण पशुत्वेन तस्यालम्भः।

गोशब्दस्य निरुक्तकारेणार्थ उच्यते गौर्दूरं गतो भवतीति दूरदेशश्च प्रकृतेऽस्तसविधवर्ती। पूर्वं रूपमश्वत्वं तस्य परित्यागात्तेन रूपेण मा मेध्यः सवृत्तः। उत्क्रान्तमेधस्य परित्यागे सोऽश्वो गौरमृगः सञ्जात इति। अत्र गौरमृग इत्यत्र नैकं पदं किन्तु पदद्वयम्। गौः, अमृग इति तादृशः सजातः।

अयं भावः—गन्तुरादित्यस्य द्वे रूपे, एकं मृगत्वमपरममृगत्वम्। मृगशब्दस्य निरुक्तकारेण मार्गणीयार्थत्वमुच्यते, तच्च मार्गणीयत्वं वस्तुनो सन्नि-

धाने भवति । प्रकृतेऽपि आदित्यस्यासन्निधाने मार्गणीयत्वरूपमृगत्वम्, सन्निधाने मृगत्वम् ।

गन्तृत्वं चोभयविवत्वेऽपि तदेव गृहीत्वाऽश्वत्वस्य परित्यागेन अर्थादगन्तृत्वस्य परित्यागेन स गन्ता सञ्जात इत्यर्थः। सचेदानीमपि अस्ताप्राप्त्या सन्निहित इति सन्निधानादमार्गणीयता मार्गणीयत्वेनामृगरूपतेति । तद् गृहीत्वाऽश्वो गौरमृगः सञ्जात इत्युक्तिः ।

एवं चादित्यस्य बहुदूरमस्तसविधे गमनेन गोरूपत्वम् । तच्चास्तात्पूर्वमेकमस्तोत्तरवर्ति चापरं, तत्रास्तोत्तरवर्तिरूपस्य व्यावर्तनाय अमृग इति गोविशेषणम् । एवञ्चामृगो मार्गणीयोऽनस्तं गमित इति यावत् । तादृशो गोर्दूरं गतोऽस्तसविधं प्राप्तः संहितया गौरमृग इत्युक्तम् । तादृशः संवृत्तः ।

एवं च तदानीमादित्ये वर्तमान गन्तृत्वरूपं गोत्वं गृहीत्वा गोत्वेन पशुत्वेनालम्भ इत्युक्तम् ते गामालभन्त इति । तदपि रूपं गतमित्यभिप्रेत्य ततो मेधनिर्गमवचनम् स गोरालब्धादुदक्रामत् इति । अयं च गच्छन्निव भासमानः पृथिवीप्राप्त्या स्थिर इवेति गृहीत्वा तस्य गन्तृत्वरूपस्य गोत्वरूपसारांशस्य विगमेन तत्परित्यागः । ततो गोत्वरूपस्य परित्यागादादित्ये विद्यमानं चतुर्थं रूपमवित्वं तेन रूपेण पशुत्वेन तदालम्भः । तदुक्तं स गोरालब्धादुदक्रामत्सोऽवि प्राविशत्तस्मादविर्मेध्योऽभवदिति ।

वयतेर्गत्यर्थस्य वि रिति रूपम्, तस्य नञा समासे अविरगन्ता स्थिर इति यावत् । अथवा पूर्वोक्तममृगगोरूपं व्यपगतमादित्यात्तस्यास्तगमनप्रवृत्तेः । अस्तं गच्छन्तं भूसंपर्किणं तं गृहीत्वा अवित्वेन तस्यालम्भः । अविशब्दे विः पक्षी स न भवतीत्यविः । पक्षिणश्च भूपरित्यागेनोड्डीयमानता । अयं च प्रत्युत भूसम्पर्क्येवेत्यविरूपः । भूसम्पर्काद् भूपरित्यागाभावेनापक्षिरूपत्वात् । तच्चादित्यवर्ति चतुर्थं रूपमवित्वं तेन रूपेण पशुत्वेन तस्यालम्भः । ततो गोत्वरूपपरित्यागेन परित्यक्तस्य गोरादित्यस्य गवयरूपता संजाता ।

तदुक्तम्—अथैनमुत्क्रान्तमेधत्यार्जन्त स गवयोऽभवदिति । गवयशब्दो गामयते गच्छतीति गोसम्पर्की भवतीति गवयः । गोशब्दोऽत्रभूवाची । पृथिवीसम्पर्कादविरूपत्वं तेन रूपेण तमालब्धवन्तः, तदुक्तं तेऽविमालभन्तेति । तदपि अविरूपमस्तं गन्तुं प्रवृत्तेऽत एव खण्डिते आदित्ये विद्यमानम् । यतस्स भुवं प्राप्तो भूसम्पर्क्यखण्डितमण्डलरूप एवाधारोऽवित्वस्य, स चाधारोऽस्तगमनप्रवृत्त्या खण्डितभावेन विनष्ट इति आधाराभावादवित्वमपि व्यपगतमित्युच्यते सोऽवेरालब्धादुदक्रामत् इति ।

अत्रालम्भेऽवित्वमेव सारांशस्तस्याधाराभावेन व्यपगमात्सो मेध्यः संजातः । तदुक्तं—सोऽवेरालब्धादुदक्रामत् इति । अस्तं गच्छतः खण्डितत्वेना-

खण्डिताधाराभावेनाचिरत्वरूपमेधस्य व्यपगम इत्युक्तम्। अथ चेदानी सुमेरावस्तं गच्छन् कुमेरावुदयन् भवेत्। तत्र परदेशे सम्पद्यमान जन्य रूपं तस्याभावाभिप्रायेणैतस्मिन् ग्रस्त गच्छत्यादित्ये न जायते इत्यज इति अजत्व पञ्चम रूप तद्गृहीत्वा तेन रूपेण पशुत्वेनोपलम्भ इत्युक्तम्, सोऽवेरालब्धादुदक्रामत्सोऽज प्राविशत्। तस्मादजो मेध्योऽभवदिति। तेऽजमालभन्तेति। ततस्तस्मादुत्क्रान्तमेधत्वेन परित्यक्तोऽविरुष्ट्रोऽभवदिति।

स च परित्यक्ताविरूपः स आदित्योऽस्तोत्तरसन्ध्यारूप सजात इत्युच्यते। इ सन्ध्या चोपः शब्देनोच्यते। उपस् शब्दश्च यथा असुन् प्रत्ययान्त एव ष्ट्र प्रत्ययान्त उष्ट्रशब्दः सोऽपि समानादेव धातोर्निष्पन्नस्सन्ध्यामर्थमाह। एवं च परित्यक्ताविरूप. सायन्तनसन्ध्यारूप सजात इति यावत्। सोऽजे वर्तमानोऽजन्यभावरूपो धर्म, अजत्वमित्यर्थ। तस्यापि खण्डितादित्यरूपवृत्तित्वेऽपि तस्य खण्डितस्य रूपस्यापि कलामात्रावशेषितत्वदशायामभावेनाधाराभावादजन्यत्वरूपाजत्वस्य तद्रूपस्य मेधस्य व्यपगम इत्युच्यते सोऽजादालब्धादुदक्रामत् स भूमिं प्राविशदित्युच्यते स इमां प्राविशदिति।

तस्योत्क्रान्तमेधस्याजस्य परित्यागे सोऽजः शरभो भवदित्युच्यते। स शरभभावो द्वेधा भवति। कलामात्रावशेषितत्वेन शर इव भासनाच्छरभ इति, अथवाऽस्तेनापरत्र कुमेरावुदित इत्यनेन पूर्वस्यानवर्तिनो हनन क्रियते इति कल्पना।

अस्त गच्छत आदित्यस्य सिंहत्वेन वर्णनादसावत्रोदित पूर्वस्यानवर्तिन सिंहस्य हन्ताऽष्टास्वपि दिक्षु रश्मिरूपपादयुत इत्यष्टापद. प्राणिविशेषइव सजात इति वर्णना। भाष्यकारेण शरभोऽष्टापद. सिंहघाती प्राणिविशेष इति शरभपदस्यार्थ उक्तः।

एवं च देवेष्वस्तमित आदित्यो भूमौ प्रविष्टस्तस्य देवै. किरणैरनुगमोऽन्वेषणम्। अन्विष्टश्च स मेधो व्रीहिरभवत्। व्रीहिशब्दो न धान्यवाची किन्तु आदित्यमभिप्रेत्य प्रयुक्तः। वरि ईहा चेष्टा यस्येति व्युत्पत्त्या व्रीहि.। वरशब्दवद् वृधातुतो निष्पन्न वृशब्दस्यापि गृहार्थत्वम्। गृह चादित्यस्यास्तमये। अस्तमयशब्दस्य गृहगमनमर्थः। अतएव निघण्टुषु गृहबोधकेषु नामसु अस्तशब्दस्य पाठः। एवं च वरि गृहे ईहा चेस्टा यस्य स व्रीहिः। चेष्टा चात्र प्रकाशनरूपो व्यापारः। एकत्रास्तमितोऽन्यत्र तदानीमुदितस्तत्र प्रकाशमान आसीदिति यावत्।

एवं रूपेणादित्यस्य पञ्चावस्थाभिप्रायेण रूपपञ्चकवत्त्वेन सुमेरौ तस्यास्तावसरीया वर्णना। अस्ते दानमादित्यस्येति वर्णनादिदं दानं सुमेरौ वर्तमानैः किरणैरिति वर्णना। सर्वोऽयं प्रकारो देवकर्तृकयागाभिप्रायेण। देवैर्यथाऽऽदित्यो

दीयते कुमेरावेवं तत्रास्तमयावसरे तत्रत्यैरप्यसौ दीयते सुमेराविति सोऽपि यज्ञस्तत्रत्यैरनुष्ठीयमानः। तत्राप्यादित्यस्यास्तगमनावसरे उक्तविधनञ्चानस्योपेतत्वसम्भवः। तत्रत्यैः क्रियमाणस्य यागस्य मनुष्ययज्ञत्वेन व्यवहारः। तत्रापि उक्तविधपंचावस्थाः संसूच्यते शस्त्रादिषु।

## १३. यज्ञे स्तोत्रशस्त्रयोः सारूप्य प्रतिपादनपूर्वकमादित्यस्य सामरूपत्वप्रदर्शनम्

यज्ञे स्तोत्रशस्त्रयोर्वचनं भवतीति प्रसिद्धम्। स्तोत्रशस्त्रयोः सारूप्यं भवतीति च प्रसिद्धम्। अत एव "यथा वै स्तोत्रमेवं शस्त्रमिति" ब्राह्मणे उच्यते। स्तोत्रं च सामयुतं, शस्त्रं च तद्रहितमिति व्यक्तम्। आदित्यस्य सामरूपत्वं तलवकारब्राह्मणे उच्यते। तत्रोच्यते--"साम चतुर्विधं स्वारं निधनवद् ऐळम् ऋक् सममिति"। तत्र ऋक्समं नातिरिक्तं किन्तु स्वाररूपमेव।

अयं भावः—साम्नो हि गानरूपता। गानं च स्वराणामारोहादिरूपमिति स्वरं स्वरसम्बन्धिरूपमित्युच्यते। ते च आरोहावरोहरूपविशेषयोगिनः स्वारा ऋक्षु भवन्तीति ऋक्समरूपता तस्य। वस्तुत ऋचोऽपि स्वररूपत्वमेव। तत्रत्या व्यञ्जनवर्णाः स्वराणामर्थाभिव्यक्त्युपकारकाः, अर्थवत्त्वं तु स्वराणामेव। ते च स्वरा ऋग्रूपा एवेति ऋक्समरूपं सामापि स्वाररूपमेव। न तत्र ऋक्समरूपो भेद इत्यभिप्रायेणोक्तम्—"त्रिरूपं साम स्वारं निधनवद् ऐळमिति"।

ऋक्समं तु स्वाररूपमेवेति तत्र। ऋच्यन्ते इळाशब्दयोगितया साम्न ऐळरूपता। सा च साम्नोऽन्तिमभागस्य निधनशब्देन व्यवहरणात्साम्नो निधनवतो भेद एव ऐळमिति गृहीत्वा द्विरूपमेव साम स्वारं निधनवच्च नास्त्येवैळमिति पृथग्भेदः। निधनवत्येवैळस्यान्तर्भावात्। वस्तुतो निधनरूपताप्युक्तरीत्या स्वरस्यैवेति स्वाररूपमेकरूपमेव साम। नास्ति निधनवन्नामातिरिक्तो भेदः। तदुक्तं तत्र "तदेकरूपमेव साम स्वाररूपमेवेति"। तत्र स्वारशब्देन स्वराणां सम्बन्धितोच्यते। साम सञ्चारोहावरोहादीनामित्युक्तं प्राक्। सञ्चारोहावरोहोऽपि स्वरूपस्यैवेति स्वरस्यैव सामरूपता। स्वरश्चादित्यरूप एव, तच्छब्दव्युत्पत्तेः।

तत्र स्वयं राजनात्स्वरत्वमुच्यते। तच्चादित्ये स्पष्टमेव। "स्वृ" धातोरुपतापार्थकादुपतपति स्वरतीति स्वररूपत्वं तदप्यादित्ये एवेति आदित्यस्यैव स्वररूपत्वं स्वररूपत्वात्सामरूपत्वमप्यादित्यस्यैवेति। तदुक्तं तत्रैव ब्राह्मणे—"तदेकरूपमेव साम स्वाररूपमेव योऽयं पवते तदिति"। "योऽयं पवत" इत्यनेन ब्राह्मणे सर्वत्रादित्यस्यैव वचनमिति आदित्यरूपत्वं साम्नो विस्पष्टम्। प्रपंचयिष्यते चायमर्थं उपरिष्टात्।

एवं चादित्यस्य सामरूपत्वम्। स्तोत्रं च सामयुतमिति तेनादित्यसम्बन्धिता व्यज्यते। तत्सम्बन्धश्चोदयमारभ्येति तदारभ्य तत्सम्बन्धः स्तोत्रेऽपि

बोध्यते। उत्र च सामरहितमिति तेन तस्यासम्बन्धो बोध्यते। तस्यासम्बन्ध-श्चास्तमारभ्येति शस्त्रेणास्तमारभ्यादित्यासम्बन्धिता प्रतिपाद्यते। आदित्या-स्तमयमारभ्य प्रवृत्तैः शस्त्रसम्बन्धित्वे तदस्तमयपूर्वभाविन्या परिस्थिते शस्त्रा-दिरूपत्वम। शस्त्रादौ होतृजपत्वेनोच्यमाना भागोऽस्तावसरीय इति भवति।

एव च होत्रा शस्त्रादौ होतृजपत्वेनोच्यमानाक्षरपचकात्मको भाग एकैके-नाक्षरेणैकैकामवस्था बोधयन्नक्षरपचकेनावस्थापचक प्रतिपादयन्यागरूप एवानेन बोध्यते। अत एवैतस्याक्षरपचकयोगिन एतस्य भागस्याक्षरपक्तियज्ञत्वेन व्यव-हारो ब्राह्मणे। तानि च पचरूपाणि अक्षराणि देवयज्ञवदेवैकैकाक्षरेणैकरूपस्या-भिधानक्रमेणोच्यन्ते। अक्षरशब्दस्यादित्याभिप्रायेण वेदे वचनात् पचाक्षराणि अवस्थापचकयुतान्यादित्यबिम्बान्येवेति। तानि चाक्षराणि अवस्थापचकाभि-प्रायेण पचैव भवन्तीति तत्सूचकाक्षरपचकस्यैव तेन क्रमेणावस्थाना प्रवृत्याक्र-क्रमयोगित्व यज्ञत्व च ब्राह्मणे उच्यते। तानि चाक्षराणि समुत्पद्यान्देव इत्येव पञ्चैव क्रमिकाणि।

## १४. बहिष्पवमानादि स्तोत्रस्वरूपनिरूपणम्

तत्र सु इत्यनेन शोभनवचनेन पूर्णतः गृहीत्वा पुरुषत्वरूपिणी प्रथमावस्था बोध्यते। मदी हर्षग्लेपनयोरिति धातुनिष्पन्नेन मदित्यनेन ग्लानत्वेनापूर्णत्वेना-वृद्धत्वरूपमशक्त्व तद्रूपा द्वितीयावस्था बोध्यते। पदित्यनेन गारूपत्व तद्रूपिणी तृतीयावस्था बोध्यते। पद गताविरयस्मात्पद्शब्दः। वगित्यनेन वज व्रज गता-वित्यतः सिद्धेन देशान्तरगमन गवयवदभिप्रेत्य विरूपभावेनावित्व तद्रूपिणी तुरीयावस्था बोध्यते। अथवा वच परिभाषण इत्यतो निष्पन्नवगित्यनेन वग्नु-शब्दवद्वाचो बाधनम्। वाचश्चास्तोत्तर प्रवृत्तिवचनेन वगृशब्देनोष्ट्रशब्दवद्रुपसो बोधनमित्यविरूपावस्थाबोधनम्। अन्तिम रूप च देशान्तरे उदितत्वरूप दे इत्यनेन बोध्यते।

तत्र पुरुष वा इत्यस्य सुमेरावस्ताभिप्रायकत्वे सुमदित्यनेन कुमेरावस्ता-भिप्रायकता व्यज्यते। कुमेरावस्तमितः सुमेरावुदित इति सुमेरोर्देवनिवासा-द्देवत्व प्राप्त इति दे शब्देन देवत्वेन तस्य बोधः। शरभशब्दवाच्यवत्तस्यापि अष्टदिक्प्रकाशत्वेनाष्टापदत्वादिसभवात्।

एव चैतेनाक्षरपचकेन कुमेरुगतास्तावसरीयावस्थापचक बोध्यते इति प्रकृते सुमेरुगतावस्थापचकाभिप्रायेण पचानामेव पशूना तेषामप्युक्तेनैव क्रमेण वचनम्। तथावस्थापचकबोधकशब्देषु उक्तपचपशुबोधकशब्देष्वेव श्लेषेणोक्ता-वस्थाबोधनमिति पशुबोधकशब्दस्ता अवस्था उच्यन्ते। तासा क्रमिकत्वादि उप-रिष्टाद्विस्तरेण प्रतिपादितमित्यस्यार्थवादस्य स्पष्टार्थत्वमिति दिक्।

पुरुषं वा इत्यत्रावस्थापंचकयोगित्वेनास्तमयत आदित्यस्य पंचावस्थाः श्लेषेण पुरुषादिशब्दैः प्रतिपादिताः। ताश्च सुमेरावस्तावसरीया इति प्रतिपादितं पुरस्तात्तदनुरोधेन कुमेरावपि अस्तं गच्छत आदित्यस्य समानन्यायेनावस्थापंचकं स्यात्। वेदे यथा मानुषो यज्ञः प्रोच्यते एवं दैवोयज्ञोऽपि बोध्यत एव। स्वल्प-प्रदेशेषु दैवयज्ञस्य साक्षात्परम्परया निर्देशो वर्तते, नेतावता स नोच्यत इति।

एवं सति उपर्युक्तार्थवादे दैवयज्ञस्य वचनात्तदनुरोधी मानुषो यज्ञोऽ-प्यपेक्ष्यत एव। तथा च सुमेरुसमानन्यायतया दैवानुरूप्याय च कुमेरावस्तं गच्छत आदित्यस्यावस्थापंचकं यज्ञशब्दव्यवहारार्थमपेक्ष्यते। तच्चावस्थापंचक सुमत्पद्वद्दे इत्यक्षरपंचकेनोच्यते। अत एवैतस्याक्षरपंक्तियज्ञत्वेन ब्राह्मणे व्यवहारः। किञ्चैतस्याक्षरपंचकस्य यज्ञे शस्त्रप्रारम्भे होत्रा वक्तव्यत्वेन होतृजप इति संज्ञा।

शस्त्रशब्दस्य गानराहित्येन स्तुतिपरत्वं सांप्रदायिकैरुच्यते। स्तोत्रं च गानयुतं तदुभयोः स्तोत्रशस्त्रयोः सोमे प्रयोगः। सोमस्येतिकर्तव्यता ज्योतिष्टोमे प्रोच्यते। तस्य ज्योतिष्टोमत्वं द्वादशभिः स्तोत्रैः शस्त्रैर्योगात्। सोमस्यानुष्ठानं सवनत्रयेण, त्रीणि सवनानि कालानुरूपनामभिर्बोध्यन्ते, प्रातःसवनं माध्यन्दिनं सवनं तृतीयं सवनमिति।

आदित्योः कालवाचकशब्दयोगेनानुष्ठाने कालोऽपि बोध्यते प्रातःसवनं प्रातःकाले माध्यन्दिनं सवनं मध्यन्दिने। तृतीयस्य तु कालबोधकशब्दायोगेन मध्यन्दिनोत्तरं सायंकालतः पूर्वमनुष्ठानमिति भवति। प्रतिसवनं च स्तोत्रशस्त्रे उपयुज्येते। तत्र स्तोत्रप्रवक्तार उद्गातृप्रमुखाः, शस्त्रप्रवक्तारश्च होतृ-प्रमुखाः।

तत्र ज्योतिष्टोमे प्रातःसवने पंचस्तोत्राणि पंचशस्त्राणि च भवन्ति। बहिष्प-वमानस्तोत्रमेकं चत्वारि आज्यनामकानि स्तोत्राणीति पंचस्तोत्राणि। होतुराज्य-नामकं शस्त्र प्रउगनामकं चेति शस्त्रद्वयम्, तदितरेषां होतृगणस्थानां त्रयाणां मैत्रावरुणब्राह्मणाच्छंस्याच्छावाकानामेकैकं शस्त्रमिति त्रीणि, मिलित्वा प्रातः सवने शस्त्राणि पंच भवन्ति।

यथा वै स्तोत्रमेवं शस्त्रमिति स्तोत्रसारूप्यस्य शस्त्रे विहितत्वात्प्रातःसवने प्रथमं स्तोत्रं बहिष्पवमाननामकम्। तस्येतरस्तोत्रवत्सदस्यवस्थाय न वचनं किन्तु वेदितो बहिरुत्करदेशे गत्वा वचनम्। अतएव तस्य बहिर्देशयोगात् पवमान-सम्बन्धित्वाच्च बहिष्पवमाननामत्वम्। पवमानशब्दश्च पूधातुतो निष्पन्नः पवनकर्तारं निर्दिशति, स चात्र तन्नामको देवः। स तु तेन नाम्ना व्यवह्रियमाण आदित्य एव। स च पवमानो गच्छन्, पूधातोर्निघण्टुषु गमनार्थकधातुषु प्रयोगात्।

एवं च तस्य गच्छतो दिनसम्पादनार्थं या वहिर्देशयागोऽर्थाचिन दिन सम्पादनीय ततो भिन्नो देशो वहिर्देशस्तस्य तत्स्यस्य स्तुत्यभिप्रायेण ऋत्विग्भि-स्तदनुकारिभिर्विदितो वहिर्देश गत्वा स्तोतवचनमिति तस्य बहिष्पवमाननाम-त्वम् । तच्चानुकार यज्ञक्रियासु सूचयति ।

एव तस्य स्तोत्रस्यानुरूप्याय होत्रा आज्यनामक प्रथम शस्त्रमुच्यते । यद्यपि स्तोत्रसादृश्य शस्त्र नामतो मन्त्रतच्छन्दस्तो देवतोऽर्थतश्चेति सर्वविधम पेक्ष्यते । तदत्र शस्त्रे न नामत सादृश्य प्रत्युत परवर्तिस्तोत्रसादृश्यमत्र भवति, परवर्तीनि स्तोत्राणि आज्यशब्देनोच्यन्ते । एतस्य शस्त्रस्यापि नाम आज्य-मिति ।

एव सति नामत सादृश्येनैतस्याज्यस्तोत्रोत्तर वचन युक्त परन्तु सर्वेभ्य सादृश्येभ्योऽर्थकृतसादृश्यस्य प्रवलत्वेनार्थसादृश्यानुरोधेनैतस्य शस्त्रस्य वहिष्पवमा-नस्तोत्रोत्तरत्व न तु नामसादृश्यवशत आज्यस्तोत्रोत्तरत्व तस्येति । तदेतदभिप्रेत्य ब्राह्मण आज्यप्रउगशस्त्रयोर्विहरणमुक्तम्, विहरण वैपरीत्य स्थानवैपरीत्यादिति परस्ताद्विस्तरेण उच्येत ।

प्रकृतेऽर्थसादृश्यवशत आज्य शस्त्र बहिष्पवमानस्तोत्रोत्तर शस्यते । आज्य शस्त्र भागत्रयेण युक्त ते च भागास्तूष्णींशसो निविद सूक्त चेति । तदुक्त तूष्णींशसनिवित्सूक्तैराज्यशस्त्र त्रिपर्वकमिति । तत्राद्यो भागस्तूष्णींशसनामक । तस्य तूष्णींशसत्व तूष्णींत्ववशत । तदुक्त ब्राह्मणे तूष्णी सारो वा एप यत्तूष्णीं-शस इति । तूष्णी शब्दप्रयोगश्च वाचा सम्बन्धन, वाक्सम्बन्धश्चादित्यासत्व इति मन्त्रव्याख्याने सविस्तर प्रतिपादितम् ।

वाक्सम्बन्धो यत्र प्राप्तस्तत्र तदसम्बन्धस्य तूष्णीत्वेन वचनात्तादृश स्थलमुदीयमानवेलायाम । नहि तदानी पूर्ण मण्डलमादित्यस्येति तस्यासत्ता, असत्वेऽपि खण्डिततत्सम्बन्धेन वाण्या असत्वात्तूष्णीत्वम् । दिनप्रारम्भत आदि-त्यस्य सामरूपता । दिनप्रारम्भश्च सम्पूर्णमण्डलोदयोत्तरमिति खण्डितमण्डल-स्थलीयो भागो दिनवहिर्भूत इति तस्य वहिर्योगिता पवमानतेति ।

बहिष्पवमानस्तोत्रे यथा खण्डितमण्डलसम्बन्धिता एव तूष्णींशसम्ये आज्यशस्त्रभागेऽपि उक्तरीत्या खण्डितमण्डलयोगितेति नामत प्राप्तसादृश्या-नुरोधेन प्राप्त देश विपरिवर्त्यार्थत सादृश्यानुरोधेनाज्य शस्त्र प्रथममुच्यत । आज्यशस्त्रस्य प्रारम्भ खण्डितमण्डलकालत इ युक्तम । खण्डित च मण्डल सायमस्तावसरेऽपि भवति तथाप्यत्र प्रातस्सवनगतस्तोत्रानुरूप्यायादयकालिक-स्यैव तस्य ग्रहणम् ।

एव चादित्यस्योदीयमानावस्थादशाया प्रोच्यमानशस्त्रे तत्प्रारम्भत पूर्व-मुच्यमानो होतृजप सोऽपि उदयावस्थापूर्वभावमभिप्रत्येति होतृजपत्वेनोच्यमान-

एतेन भट्टभास्करोक्तिरपि प्रत्युक्ता, सुष्ठु माद्यन्तीति सुमदः ईदृशा भवन्ति प्रपत्तारो यस्याश्च प्रदातारः स्नातारो यस्य च हवींषि प्रदानाः सा वाक् "सुमत्पद्वग्दा" इति। स्वातन्त्र्यएार्थबोधकानि अक्षराणि अत्र गृह्यन्त, उक्तरीत्या वाग्रूपैकार्थबोधने तथा तादृशत्वाभावात्। असम्बद्धवचनता तु दुर्वारैव। शस्त्र हातृजपेऽयमक्षरसमूहः पाठ्यते। तत्र प्रकृतत्व शस्त्रदेवताया न तु वाच इति तत्परत्वेन व्याख्यानस्याप्रकृतत्वात्। अध्याहारादिना सार्थक्यवचन त्वन्ततो-वागतिकगतिभूतम्।

एव पदेभ्यः पदेतरार्थसंस्काररूप शाकटायनमतमाश्रित्य यथा कथञ्चन हविष्पक्तियज्ञसम्बद्धव्याख्यानं यथा–धानानां मांगलिकत्वस्य प्रसिद्ध्या सुशब्देन मांगलिकेन तासां ग्रहणम्। करम्भ इत्यत्रत्यमकार गृहीत्वा मच्छब्देन करम्भ-निर्देश, परिवाप इत्यत्र पकार इति पच्छब्देन स बोध्यते, पुरोडाशशब्दो वज्र स्मारयतीति वग्शब्द पुरोडाशबोधक, पदशब्दगतश्च दकारो विष्णुपदे इति तेन पयस्या बोध्यत इति। तदपि बहुदोषग्रस्तम्। एवमेवाशो मरुत्वादिवच-नमपि प्रत्युक्तम्। तस्मादुक्तरीत्या देवयज्ञसारूप्याय उक्ताक्षरपञ्चकस्य पूर्व प्रतिपादितम् एवार्थ इति दिक्।

## १५. कृष्णयजुर्वेदे नक्षत्रियप्रजापतिविषये वास्तविको विचार

कृष्णयजुर्वेदे नक्षत्रियप्रजापतिरुच्यते—यथा "हस्त[1] एवास्य हस्तश्चित्रा शिर. स्वाती हृदयम्, विशाखे ऊरू अनुराधा प्रतिष्ठा, एष वै नक्षत्रिय. प्रजापति। य एवं नक्षत्रियं प्रजापतिं वेद उभयोरेन लोकयोर्विदु" इति। अत्रा-ध्वोत्तोलितहस्तपुरुषस्वरूपकथन तेन रूपेण नक्षत्रियप्रजापतिवर्णन नक्षत्र-पंचके।

तत्र विचार—किमिति नक्षत्रपंचके प्रजापतिस्वरूपकथन नान्येषु, यथा सर्वान् राशीन् अभिप्रेत्य पुरुषस्वरूपकथनमेव कुतो न सर्वेषु नक्षत्रेषु तत्स्वरूप-कथनम्। यदा च नक्षत्रपंचक एव तत्कथन नाधिकेषु नक्षत्रेषु, यदा च नक्षत्र पंचक एव तत्स्वरूपकथन तदापि कुत एतस्मिन्नेव नक्षत्रपञ्चके तत्कथनं कुतो नान्यस्मिन् नक्षत्रपञ्चक इति।

अथोच्येत–हस्तनक्षत्र हस्ताङ्गुलिसदृक्षभावदर्शनात्तदनुरोधेन तत्र हस्त-कल्पना, विशाखयोर्नक्षत्रयोर्विभक्तोरुद्वयसाजात्येन विभक्तत्वेनोरुद्वकल्पनयाऽ-वशिष्टेषु शिर आदिकल्पना, विशाखयोरूरुत्वे सविधवर्त्यनुराधाना प्रतिष्ठात्व-मित्येवमूर्ध्वोत्तोलितहस्तकल्पना अस्मिन्नेव नक्षत्रपञ्चके नान्यस्मिन् नक्षत्रपञ्चके न वाऽन्येषु नक्षत्रेष्विति चेन्न।

---

1 तै ब्र १ ५ २:२

तथा सति तदेतन्नक्षत्रपञ्चके उक्तरीत्या नक्षत्रियप्रजापतेःकल्पने तद्विज्ञाने उभयलोके विज्ञानत्व कथं स्यात् । न चार्थवाद इति वर्णनेन निस्तारः । अर्थवादेसत्यपि वृत्तान्तविशेषबोधनस्यानुपपत्तिरेव । किञ्च ओषधिसूक्ते उच्यमानानां सप्तोत्तरशतधाम्नां सांपातिकत्वं विनानुपपन्नानां तत्सम्बन्धिनां पञ्चनक्षत्राणां वासन्तिकत्वबोधनमनुपपन्न तद्वशत एतेषामपि पञ्चानां नक्षत्राणां शारदसाम्पातिकत्वमवश्यं वक्तव्यमिति शारदसाम्पातिकत्वेनैतेषामेव पञ्चानां नक्षत्राणां प्रजापतिवर्णनस्यावश्यकत्वात् ।

किञ्च शतं जीवेति मन्त्रे शरद्धेमन्तवसन्तानां प्रत्येकं शतशब्दयोगित्वेन निर्देशस्यान्यथानुपपत्तिरिति पूर्वं सविस्तरं प्रतिपादितम् । एतच्च सम्पातस्यासर्ववृत्तपरिभ्रमे एव सम्भवति नान्यथा । सर्ववृत्तपरिभ्रमेऽन्येषामपि नक्षत्राणां साम्पातिकत्वेनैषामेव पञ्चनां ग्रहणस्य प्रजापतित्वेन वर्णनस्य ओषधिसूक्तसम्पातपरिभ्रममात्रेणोपपाद्यमानस्य सख्याविशेषस्यानुपपत्तिः । शतं जीवेति मन्त्रार्थस्याप्यनुपपत्तिः । एतेन वेदकाले संपातगत्यविज्ञानमिति परास्तम् । न च गीतायां मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकर इति वर्णनेन द्वयोरपि सह प्रवृत्तिवचनम् । मासानां मध्ये मार्गशीर्षस्य वत्सरारम्भकत्वेन ऋतूनां मध्ये कुसुमाकरस्यार्थाद्वसन्ततोर्वत्सरारम्भकत्वेनोभयोर्भगवद्विभूतिमत्ववचनम् ।

## १६. नक्षत्रियप्रजापतिविषये विभिन्नानि मतानि

यत्तु आनन्दगिरिणा समृद्धिमत्वेन मार्गशीर्षस्य विभूतिमत्वमुक्तम् । तत्तु न युक्तम् । यथा ऋतूनां मध्ये वसन्तोऽर्थाद्वत्सरारम्भकत्वेनभगवद्विभूतिरूप एवं मासानां मध्ये मार्गशीर्षोऽपि वत्सरारम्भकत्वेन भगवद्विभूतिरूप इति वर्णनस्यैव युक्तत्वम् । ऋतुषु सम्भविना धर्मेण वत्सरारम्भकत्वरूपेणैव मासानामिति वचनस्याप्युपपत्तौ धर्मान्तरकल्पने मानाभावात् ।

प्रकृतस्यैवांशस्य परमार्थप्रमा नामिकायां सूर्यपण्डितेनापरोऽर्थ उक्तः "यद्वा मृगशिरः पूर्णिमासम्बन्धेन वर्षादिरभिहितः, तस्मिन्नेवाग्रहायणीत्यभिधानावत् । अग्रे हायनं यस्यां साग्रहायणी । अतएवाग्रहाणिक इति मार्गशीर्षनाम । अतोऽस्य मासस्य मुख्यत्वाद्विभूतिमत्वमिति" । एवञ्चाग्रे हायनं यस्या इति वचनेन हायनप्रारम्भपूर्वभाविनी रात्रिस्तत्रत्या पूर्णिमा तद्योगान्मासनाम आग्रहायणिक इति।

### गीतामतम्

तदाशयः—अत्राग्रहायणीपूर्णिमायोगादाग्रहायणीक इति मार्गशीर्षनामेत्येषा व्युत्पत्तिस्तु मूलभूतोक्तभगवद्गीतास्थवाक्यस्येति प्रतीयते । परन्तु आग्रहायणिक इति यौगिक नाम न तु रूढमिति तन्नामको मास इति मासनामताया वक्तुमशक्यत्वम् । यौगिकशब्दस्य रूढिशब्दत्वाभावेन तन्नामकमासस्य वर्षारम्भ-

वत्वस्याभावेऽपि प्रमादेन तमेवार्थं गृहीत्वा गीताया मार्गशीर्षस्य वर्षादित्वाद्विभूतिमत्वमुक्तम् ।

अयं च वर्षादिरिति वर्णनेनासौ मकरसंक्रमणादिरूप एव वर्षादिरुच्येत, मकरसंक्रमणस्य तु न वर्षादिता, वसन्तऋतुना वर्षादि साहचर्यस्य प्राचीनग्रन्थेषक्ते । आग्रहायणी पूर्णिमा अग्रे हायनसम्बन्धात्संवत्सरस्यान्तिमरात्रिरूपेति द्वितीयदिने उत्तरायणप्रारम्भ । अर्थात्तत उत्तरायण प्रवर्तेत मृगशिर. सम्बन्धादेषा पूर्णिमा मार्गशीर्षमासस्य ।

पूर्णिमायाश्च सूर्याचन्द्रमसो. परस्परमशीत्यधिकशतांशदिप्रकर्षेण मृगशिरसस्तावदशविदूरस्थले सूर्यस्य नक्षत्र भवेत् मृगशिरो नक्षत्र दक्षिणायनान्तस्थाने भवेत् । दक्षिणायनान्तस्थानत. पश्चान्नवत्यशे वसन्तसम्पातस्य स्थान स्यात् । सूर्यसिद्धान्ते विषुवस्थानतो मृगशीर्षस्य त्रिषष्ट्यशविदूरितत्वमुच्यते ।

एव च नवत्यशेषु त्रिषष्ट्यशाना न्यूनीकरण अवशिष्टफल सप्तविंशत्यशास्ते च विषुवस्थलमर्थाद्रेवतीनक्षत्र तत पश्चात्सप्तविंशत्यशविदूरस्थाने भवेत् । परन्तु वैदिकग्रन्थेषु कृत्तिकाया नक्षत्रादित्व माघमासतश्चोत्तरायणमिति वचनाद्रेवतीत: पुरस्तात् सप्तविंशत्यशस्थान वसन्तसपातस्येति प्राप्नोति ।

एव सति गीतावचनस्य मार्गशीर्षस्योत्तरायणादित्वसाधकस्य वशतो वसन्तसपातो रेवत्या: पश्चात्सप्तविंशत्यशस्थाने लभ्यते, कृत्तिकाया नक्षत्रादित्वे रेवतीत:पुरस्तात् सप्तविंशत्यशत्यशस्थान वसन्तसपातस्येति विरोध प्राप्ते प्राचीनैस्तत्राविरोधसपादनाय सपातस्यान्दोलितगति. स्वीकृता । तेन गीताया अपि प्रामाण्य वेदस्यापीति कल्पना कृता । एतस्या आन्दोलितगतेरपर हेत्वन्तर यावत्कैरपि न दीयते तावत्पर्यन्तमान्दोलनकल्पनाबीजमुक्तमेव भवेत् । अतो मार्गशीर्षपौर्णमास्या. सवत्सरस्यान्तिमा रात्रिरिति वचनस्योपपत्तये तदानीं सूर्यस्याभिजिन्नक्षत्र स्थितिर्भवेत् ।

एव सति तत्र वसन्तसपातो भवेत् । सम्पूर्णवृत्तपरिभ्रमे वसन्तसपातस्योवन-ईशवीयशकप्रवृत्त. पूर्वं विंशतिसहस्र वर्षाणि तत्समकालो भवेदिति नैषा कल्पना योग्या । एव च सर्वथा अस्या कल्पनाया बीजत्व आग्रहायणीति पूर्णमासीग्रहणसम्बन्धिनी व्युत्पत्तिरिति । तस्मात्ता हित्वा प्रकारान्तरेण आग्रहायणीशब्दस्य व्युत्पत्तये प्रयत्न. कर्तव्य' । यथा–उक्तरीत्या आग्रहायणीत्यस्य पूर्णिमापरत्वे वर्षारम्भवादाग्रहायणीति नक्षत्रनाम गृहीत्वा वर्षारम्भ. साधनीय. ।

एव च तस्य नक्षत्रस्य वर्षारम्भस्थत्ववशात्तस्याग्रहायणीति नाम । तस्य नक्षत्रनामत्वे ततो वसन्तसपातप्रवृत्त्या फाल्गुने मासि उत्तरायणप्राप्तिः । एव

च मृगशिरस आग्रहायणीति नामवशतो वसन्तसंपातः फाल्गुनीपौर्णमास्यां भवेत्। तदा शारदसंपातो मूलनक्षत्रे स्यात्। अतएव तस्य मूलेति नाम प्रवृत्तं स्यात्। मृगनक्षत्रस्य वसन्तसंपातनक्षत्रत्वे तदानीं सूर्यस्यास्तावसरे मूलनक्षत्रमेवोदीयमानं भवतीति मूलच्छेदनार्थकमूलवर्हणीति नाम। अस्तावसरे उत्तरायणस्य विनाश इति तन्नामेति।

वसन्तसम्पातः

एवं चोत्तरायणशब्दस्य वेदकालिकोऽर्थः वसन्तसंपातमारभ्य शारदसंपात-मध्यवर्ती कालः। गीताकालिकश्चार्थो मकरसंक्रमणमारभ्य कर्कसंक्रान्तिपर्यन्तः कालः। तदनुसारेण पितृयाणस्य प्रारम्भः कर्कसंक्रान्तित इति। एवं चोदयनं फाल्गुनपूर्णमास्यां यदि तदा पितृयाणं दक्षिणायनं वा भाद्रपदपौर्णमास्यां भवेत्। तदा च भाद्रपदस्य कृष्णपक्षः पितृयाणस्य प्रारम्भीयः पक्षो भवेत्।

अयमेव च पक्षः पितृपक्ष इत्यस्माभिस्तत्र पितृश्राद्धादीनि क्रियन्ते। न केवलमस्माभिः पारसीकैरपि अयमेव पक्षः पितृपक्ष इति मन्यते। पारसीककाल-गणनाप्रारम्भो दक्षिणायनतः प्रवर्तते। अयमर्थः पाश्चात्येन डाः गिडगरमहोदयेन "मध्यर्यो" इति पारसिकधर्मग्रन्थेषु प्रयुज्यमानपदवशतः साधितः। "मध्यर्यो" इति पदस्य तेन वर्षमध्य इत्यर्थं स्वीकृत्य वसन्तसंपाततः प्रारब्धस्य वत्सरस्य मध्यः कालः दक्षिणायनारम्भे इति तत आरभ्य तेषां कालगणना प्रवर्तत इति पूर्वोक्तार्थस्यैव साधकम्।

पारसीकानां धार्मिकादयः सर्वे व्यवहारा वैदिकव्यवहारविपरीता इति वैदिकानां वत्सरारम्भो वसन्तसंपाते वा उत्तरायणे वा। तेषां तदारम्भो दक्षि-णायने शारदसंपाते वा भवति। एको विशेषस्तु पूर्वमुक्तो यद्भाद्रपदमासि उभयोः पितृपक्ष इति।

तत्रापि उभयोर्विरोधो वरीवर्त्येव। यतो वैदिकानां पितृपक्ष उत्तरा-यणान्ते, पारसीकानां दक्षिणायनारम्भे इति तेषामयं मासः "फ्रवशिनम्" पितृमास इत्युच्यते तैः। ततश्चतुर्थो मासः तिष्ट्रे हे इति वा तिष्ट्रस्य मास इति वोच्यते। तिष्ट्र्यमिति मृगव्याधरूपेणाकाशे दृश्यमानस्तारकाविशेषस्तद्रूपं सिरिअस् इति तैर्व्यवह्रियमाणं नक्षत्रमिति।

भाद्रपदमासतश्चतुर्थो वैदिकानां मार्गशीर्षमास इति। मृगशिरसो व्याधस्य सन्निधवर्तितया मार्गशीर्षमास एव तेषां तिष्ट्र्यमास इति। तेषां फ्रवशिनम् मासे दक्षिणायने वत्सरारम्भे ततः सप्तमस्तेषां मासो वसन्तसंपातारम्भे प्रवर्तते। अयं च मासस्तैर्दत्रुपो मास इत्युच्यते।

अय च मासस्तदंघुपो अर्थात्सृष्टिकर्तुं अहुरमजदा इत्यस्य अर्थादहिर्बुघ्न्य-मास उच्यते । पारसीकव्यवहारत मृगशिरसि वसन्तसम्पात कदाचनासीदिति लभ्यत इति । तदेतत्सर्व मृगशिरसि वसन्तसाधक न भवति, नक्षत्रियप्रजापति-प्रतिपादकवचनविरोधात् । अत जीवेति मन्त्रे त्रयाणामृतूना शतमिति विशेष-णत्वेन प्रयोगविरोधात् । उभयमपि विस्तरेण प्रतिपादितम् ।

यत्तु प्राचीने वैदिककाले उत्तरायणशब्दस्य वसन्तसपातस्थलत आरम्भ कृत्वा शारदसपातपर्यन्त काल एवार्थो नान्यो मकरसक्रमणादि कर्कसक्रान्ति-पर्यन्त काल । स च गीतागतमार्गशीर्षस्य भगवद्विभूतित्वप्रतिपादनवशतो लभ्यत इति । तन्न । वैदिककालेऽप्यपि उत्तरायणशब्देन च देवयानशब्देन विज्ञा-नमासीत् । न केवलमनयोरेव किन्तु अन्यप्रकारद्वयेनापि देवयानस्य प्रसिद्धि-रासीत् । अत एवाश्विनसूक्ते अश्विनौ प्रति उच्यते 'एह यात पथिभिर्देव-यानै" इति ।

अत्र बहुवचननिर्देशात् देवयानानामनेकत्व देवकालिकमिति सिध्यति । देवयानानामनेकत्वे पितृयाणान्यपि अनेकविधानि सिध्यन्ति । अत एव यम प्रति उच्यते 'यस्ते स्व इतरो देवयानात्" इति । यमस्य दक्षिणदिक्सम्बन्धाद्दक्षि-णस्या दिशि यान पितृयाण यमस्य पितृयधिपत्वेन पितृणा दक्षिणस्या दिशि सत्वेन यमस्यापि मार्ग पितृयाणरूप एव ।

अत एवापर्युक्ते मन्त्रे उच्यते यम प्रति हे यम त्वदीयेन पथा आगच्छ यस्तु त्वदीय पन्था पितृयाणरूप स देवयानाद्भिन्न इति । किञ्च विष्णो-र्वर्णके विष्णुसूक्ते "चतुर्भि साक नवति च नामभिश्चक्रन्न वृत्त व्यतीरवीविपदि" त्यत्र चतुर्णवतिसख्याना वेपनवर्णनत वृत्त चक्रमिवेति दृष्टान्तेन तस्य उत्तर-दक्षिणसधस्थशब्देन विशेषणान्मकरसक्रमणादिर्देवयानमार्गो वेदकाले विज्ञात आसीत्, नहि स पाश्चात्य । तदेतद्विस्तरेण पूर्वं प्रतिपादितम् ।

अत्र मकरादि कर्कान्त एव मार्गो विवक्षणीयस्तथा सत्येवोक्तचतुर्णवति-सख्याया उपपत्ति । उक्तमन्त्रेण चतुर्णवतिरेव सख्या विवक्षणीया, न तु नवति-चतुष्टयम् । ऐन्द्रसूक्त उच्यमाननवतिसख्याविरोधात् नवनवतिसख्याया अभि-प्राय. पूर्वं प्रतिपादितम् । एव च मकरसक्रमणादिर्देवयानस्य प्रकारोऽयंकर्क-सक्रमणादि पितृयाणस्य प्रकार. पूर्वसिद्ध. ।

"वसन्तो ग्रीष्मो वार्षास्ते देवा ऋतवो देवेष तर्हि सो भवति"। शरद्धमन्त-शिशिर इति ते पितर इति पितृषु तर्हि भवतीति वर्णनेन देवदिनात्मक दवयान-स्वरूपम् । देवदिन च यथा वसन्तप्रारम्भे भवति एवमुप कालारम्भेऽपि देवया-नप्रारम्भ ।

अत एवोषसो ज्यायसो स्वसेति वर्णनं 'स्वसा स्वस्रे ज्यायस्यै योनिमारै-गि'त्यादिषु। अत एव ऋतावरीति उषसो बोधकं नाम निघण्टुषु उच्यते। वैदिकेषूषःसूक्तेषु तन्नामप्रयोग इत्यपि पूर्वं प्रतिपादितम्। एवं चायमपि देवयानमार्ग एव। एवं सवितृकालमारभ्यापि देवयानप्रारम्भः। अत एव सावित्रसूक्ते ऋत कृण्वते इति सवितुर्विशेषणमुपपद्यते इति पूर्वं प्रतिपादितम्। अत एव देवयानाः पन्थानश्चतुर्विधा भवन्ति, मकरादिरेक उषःकालादिर्द्वितीयः सवितृकालादिस्तृतीयो वसन्तादिश्चतुर्थ इति। अत एव मन्त्रे उच्यते—

ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति।
तेषां यो ज्यानि मजीतिमावहात्तस्मै नो देवाः परिदत्तेह सर्वे[1] ।। इति।

अत्र स्पष्टमेव चत्वारो देवयानाः पन्थानः। अत एव 'एह यातं पथिभिर्देवयानैरि'ति बहुवचननिर्देश इत्युक्तम्। देवयानचातुर्विध्ये पितृयाणानामपि चातुर्विध्यमुक्तप्रायम्। एवं च देवयानस्य मकरसंक्रमतः प्रवृत्तौ देवदिनप्रवृत्तिस्ततो वक्तव्या।

तथा सति भास्कराचार्यवचनमेव युक्तं स्यात्, यत्तैरुच्यते--दिनोन्मुखेऽर्के तत्फलकीर्तनाय दिनमेव तन्मतमिति। तथा सति दीक्षाब्राह्मणे संवत्सरसत्रार्थमुच्यमानाः संवत्सरप्रारम्भीया दीक्षाकालाः किंस्वरूपाः। किं तत्र मकरसंक्रान्त्यादिर्वा काल उतोषसोऽर्थादैन्युषःकालादिर्वा आहोस्वित्सावित्रकालादिर्वा अथवा सूर्योदयकालादिरूपवसन्तादिर्वा काल इति।

## १७. दीक्षाकालस्वरूपविचारः

दीक्षाकालबोधकं ब्राह्मणं तैत्तिरीयसंहितागतोऽनुवाकश्च तथा। ताण्ड्यब्राह्मण उच्यते–'[2]एकाष्टकायां दीक्षेरन्। एषा वै संवत्सरस्य पत्नी यदेकाष्टका एतस्यां वा एतां रात्रिं वसति साक्षादेव तत्संवत्सरमारभ्य दीक्षन्ते। तस्य सा निर्या यदपोऽनभिनन्दन्तोऽभ्यवयन्ति। विच्छिन्नं वा एते संवत्सरस्याभिदीक्षन्ते य एकाष्टकायां दीक्षन्तेऽन्तनामानावृतू भवतः। आर्तं वा एते संवत्सरस्याभिदीक्षन्ते येऽन्तनामानावृतू अभिदीक्षन्ते। तस्मादेकाष्टकायां न दीक्ष्यम्। फाल्गुने दीक्षेरन्। मुखं वा एतत्संवत्सरस्य यत्फाल्गुनी, मुखत एव तत्संवत्सरमारभ्य दीक्षन्ते। तस्य सा निर्या यत्संमेघे विषुवान् संपद्यते। चित्रापूर्णमासे दीक्षेरन्। चक्षुर्वा एतत्संवत्सरस्य यच्चित्रापूर्णमासो मुखतो वै चक्षुर्मुखत एव तत्संवत्सरमारभ्य दीक्षन्ते तस्य न निर्यास्ति। चतुरहे पुरस्तात्पौर्णमास्या दीक्षेरन्। तेषामेकाष्टकायां क्रयः संपद्यते तेनैकाष्टकां न छंबट् कुर्वन्ति। तेषां पूर्वपक्षे सुत्या

---

१. छा. म. ब्रा. २:१:१०
२. ता. ब्रा. २:१

सपद्यते पूर्वपक्षे मासा' सन्तिष्ठमाना यन्ति ते पूर्वपक्ष उत्तिष्ठन्ति तानुतिष्ठन. पशव ओषधयोऽनूत्तिष्ठन्ति तान् कल्याणी वागभिवदत्यरात्सुरिमे सत्रिण इति ते राध्नुवन्ति" इति । तैत्तिरीयसहितायामुच्यते यथा—

"[1]संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नेषा वै सवत्सरस्य पत्नी यदेकाष्टकैतस्या वा एष एता रात्रि वसति साक्षादेव सवत्सरमारभ्य दीक्षन्ते । आर्तं वा एते सवत्सरस्याभिदीक्षन्ते य एकाष्टकाया दीक्षन्तेऽन्तनामानावृतू भवत । फल्गुनीपूर्णमासे दीक्षे रन्मुख वा एतत्सवत्सरस्य यत्फल्गुनीपूर्णमासो मुखत एव सवत्सरमारभ्य दीक्षन्त तस्यैकैव निर्या यत्साम्मेघ्ये विषुवान् सपद्यते । चित्रापूर्णमासे दीक्षेरन्मुख वा एतत्सवत्सरस्य यच्चित्रापूर्णमासो मुखत एव सवत्सरमारभ्य दीक्षन्ते तस्य न काचन निर्या भवति । चतुरहे पुरस्तात्पौर्णमास्यै दीक्षरन् । तेपामेकाष्टकाया क्रय. सपद्यते तेनैकाष्टका न शवट् कुर्वन्ति । तेषा पूर्वपक्षे सुत्या सपद्यते पूर्वपक्ष मासा अभिसपद्यन्ते । ते पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठन्त ओषधयो वनस्पतयोऽनुत्तिष्ठन्ति तान्कल्याणी कीर्त्तिरनूत्तिष्ठत्यरात्सुरिमे यजमाना इति तदनु सर्वे राध्नुवन्ति" इति ।

तत्र सवत्सरादिव्यवहारस्य चतुर्विधदेवयाने उत्तरायणत्वाऽविशेषाद्यस्य कस्यापि ग्रहणमिति प्राप्ते नायस्तत्र विवक्षयन काल. । तथा सति हि एकाष्टकाशब्देनोच्यमानमाघकृष्णाष्टम्या मकरसक्रमे उत्तरायणारम्भ स्यात् । ततस्तृतीयमासान्ते वैशाखकृष्णाष्टम्या मेषसक्रान्त्या वसन्त प्रवर्तेत सूर्यस्य चोदय: स्यात् । ततो मासद्वयमर्वाज्ज्येष्ठकृष्णाष्टम्यापाढकृष्णाष्टमी यावद्वसन्त स्यात् । परस्ताच्छ्रावणकृष्णाष्टमीभाद्रकृष्णाष्टमीति मासद्वये ग्रीष्म स्यात् । आश्विनकृष्णाष्टमीकार्तिककृष्णाष्टमी यावद्वर्षतुं स्यात । अस्मिश्च सावत्सरिके काले आनुष्ठानिकसवत्सरदीक्षारम्भस्य मकरसक्रान्त्यामेकाष्टकाया स्वीकारे हैमन्तमासि दीक्षाप्रारम्भ. स्यात् ।

अत्र माघकृष्णाष्टमीमारभ्य फाल्गुनकृष्णाष्टमी यावद्धेमन्तर्तो. सत्त्वात् । हैमन्तमासाम्या दीक्षाप्राप्त्यभावश्चैतरेयब्राह्मण उच्यते, तेन साक विरोध. स्यात् । किञ्चात्र ब्राह्मणे एकाष्टकाया मकरादिकालस्य सावत्सरिकस्य विवक्षणे तत्रैव परवर्तिफल्गुनीपूर्णमासचित्रापूर्णमासयोर्दीक्षार्थत्वेन वर्णनस्य तयोरपि पूर्वं कदाचन मकरसक्रान्त्यान्धारत्वमासीदिति तयोरत्र दीक्षार्थं स्वीकारे चित्रापूर्णमासे दीक्षाप्रारम्भकल्पे दोषाभाववर्णनमेतद्ब्राह्मणसहितोभयगत विरुध्येत ।

---

१. तै. सं. ७:४.८:१

चैत्र्यां दीक्षाप्रारम्भे वैशाखशुक्लनवमीतः सुत्याप्रारम्भेणानुष्ठानिके संवत्सरे वैशाखशुक्लनवमीतो मासगणना प्रवर्तेत । तथा सति ज्येष्ठशुक्लनवमी आसाढशुक्लनवमीति प्रथमं मासद्वयम्, श्रावणशुक्लनवमी भाद्रशुक्लनवमीति द्वितीयं मासद्वयमाश्विनशुक्लनवमीति कार्त्तिकशुक्लनवमीति तृतीयं मासद्वयमिति षण्मासा भवेयुः ।

ततः कार्तिकशुक्लदशम्यामानुष्ठानिको विषुवान् प्रवर्तेत तदानीं च कालिकसंवत्सरस्य वर्षर्तोः सत्वेन संमेघे विषुवतः प्राप्तिरूपस्य दोषस्य सत्वात् । एवं चास्मिन् कल्पे तस्य न काचन निर्या, तस्य न निर्यास्ति इति संहिताब्राह्मणगतं दोपाभाववचनं विरुध्येतेति ।

अथ एतदनुसारेण संपातस्य यतः कुतः प्रवृत्तिर्भवतु वसन्तादिऋतुव्यवहारश्चैत्रमारभ्यैव । तथा सति आश्विनकार्त्तिकयोः शरदृतुत्वेन वर्षाकाले विषुवतः प्राप्तिरूपो दोषो नास्तीत्युच्येत । तत्तु न युक्तम्, 'वसन्तो ग्रीष्मो वर्षास्ते देवा ऋतवो देवेषु तर्हि' इति वचनविरोधापातात् ।

एवं फाल्गुनीपूर्णमासदीक्षाकल्पेऽपि अवभृथश्चैत्रशुक्ले प्राप्नोति, तदानीमेकाष्टकायां मकरसंक्रमणादित्वदशायां वसन्तस्य वैशाखकृष्णाष्टम्यां प्रवृत्त्या चैत्रशुक्ले शिशिरस्यैव सत्वेन अवभृथे अपामनभिनन्दनरूपस्यापि दोपस्य सत्वात् तस्यैकैव निर्या यत्सांमेघ्ये विषुवान् सपद्यते इत्येनेन विरोधः । तस्मादत्रैकाष्टकायां दीक्षारम्भे न मकरसंक्रमणादिः कालो विवक्ष्यत इति । नायनरूपो देवयानः पन्था अत्र विवक्षितो भवति दीक्षाब्राह्मण इति ।

## एकाष्टकाचिन्तनम्

अथ वसन्तादिरूपोऽत्र काल एकाष्टकायां विवक्ष्येत । तथा चात्र कल्पे माघकृष्णाष्टम्यां वसन्तप्रारम्भे फाल्गुनकृष्णाष्टमी चैत्रकृष्णाष्टमी वसन्तः, वैशाखकृष्णाष्टमी ज्येष्ठकृष्णाष्टमीति मासद्वयं ग्रीष्मः, आपाढकृष्णाष्टमी श्रावणकृष्णाष्टमीति मासद्वयं वर्षर्तुः कालिके संवत्सरे भवेत् । अत्र कल्पे माघकृष्णाष्टम्यां दीक्षाप्रारम्भे द्वादश दिनानि दीक्षाः फाल्गुनशुक्लचतुर्थी यावद्भवेयुः । ततो द्वादश दिनानि सुत्याः फाल्गुनकृष्णद्वितीयां यावद्भवेयुः । फाल्गुनकृष्णद्वितीयातः सुत्याप्रारम्भे आनुष्ठानिकी मासगणना ततः स्यात् ।

तत्र चैत्रकृष्णद्वितीया वैशाखकृष्णद्वितीयेति प्रथमं मासद्वयम् । ज्येष्ठकृष्णद्वितीया आपाढकृष्णद्वितीयेति द्वितीयं मासद्वयम्, श्रावणकृष्णद्वितीया भाद्रकृष्णद्वितीयेति तृतीयं मासद्वयमिति षण्मासा भवेयुः । ततो भाद्रपदकृष्णतृतीयायां विषुवतः प्राप्तिः स्यात् । तत्रैकाष्टकायां दीक्षापक्षे संवत्सरस्यातिव्यत्यासरूपौ दोषौ ब्राह्मण उच्यमानावसंगतौ स्याताम् ।

किञ्चात्र पक्षे परवर्तिनो फाल्गुनी पूर्णमासस्य चित्रापूर्णमासस्य च मकरसङ्क्रान्तिमासत्वेन पूर्वं स्थितिरासीदिति संवत्सरमुखादित्वकल्पनया दीक्षार्थं वचनमिति स्वीकारे वसन्तादिमासस्य दीक्षार्थं ग्रहणप्रस्तावे पूर्वसत्वेन सम्भावितान्वसन्तादिमासानव्यवहितान्परित्यज्याकस्मिकं व्यवहितं मकरादिमासत्वेन ग्रहणमापद्यते, प्रक्रमश्च भज्येत । अत इमावपि पर्वं वसन्तादिमासावास्तामिति संवत्सरमुखत्वकल्पनया तत्र दीक्षादिवचनमित्युच्येतेति न तत्र व्यवधानकल्पनेति, तावतापि वासन्तिकमासयोर्दीक्षाप्राप्त्यभावश्शैशिरकैतरेयब्राह्मणविरोधस्तदवस्थ एव ।

किञ्चात्र पक्षे फाल्गुन्या दीक्षारम्भे सुत्याप्रारम्भश्चैत्रशुक्लदशम्यां स्यात्तश्च मासगणनाप्रवृत्तौ षण्मासा आश्विनशुक्लदशम्यां पूर्येरन् । ततश्चाश्विनशुक्लैकादश्यां सम्पद्यमानो विषुवान् न सम्मेघकाले भवेदिति तद्दोषवचनं फाल्गुन्या दीक्षायामेकाष्टकायां वसन्तप्रवृत्तिपक्षे सङ्गतं स्यात् । न हि तदानीं वर्षर्तुकालः । तस्यैकाष्टकायां वसन्तप्रवृत्तिपक्षे श्रावणकृष्णाष्टम्यामेव समापनात् । शैशिराभ्यां मासाभ्यां दीक्षाप्राप्तिबोधकब्राह्मणविरोधश्च । तस्मादत्रैकाष्टकाशब्देन न वसन्तादिःकालो विवक्षित इति ।

अथात्रैकाष्टकाशब्देनाभिलप्यमानमाघकृष्णाष्टमी सवितृकालादित्वाभिप्रायेण संवत्सरप्रारम्भकालत्वाद्दीक्षार्थमुच्यते इति कल्प्यः । अर्थात्तृतीयदेवयानं सवितृकालादितः प्रवर्तमानः स च काल एकाष्टकायां प्रारभ्यत इति तदभिप्रायकं तत्र दीक्षाप्रारम्भवचनमिति । अत्र च कल्पे शैशिरमासाभ्यां दीक्षाप्राप्तिबोधकब्राह्मणविरोधो न भवति । सवितृकालस्यैव शैशिरत्वात् । तथापि परवर्तिनो फाल्गुनचैत्र्योरपि प्रक्रमाभेदाय पूर्वं सवितृकालादित्वाभिप्रायेण संवत्सरमुखादित्वकल्पनया दीक्षार्थमुपादानमिति वक्तव्यम् ।

तत्र फाल्गुन्या दीक्षाप्रारम्भे दीक्षोपसत्प्रक्रमेण सुत्यानां षण्मासपूर्तिराश्विनशुक्लदशम्यां स्यात् । तदानीं चैकाष्टकायां सवितृकालादित्वपक्षे वर्षाकालस्यातीतत्वेन सम्मेघे विषुवतः प्राप्तिरूपदोषवर्णनमनुपपन्नं स्यात् । तथाह्यत्र कल्पे एकाष्टकायां सवितृकालादित्वे फाल्गुनकृष्णाष्टम्यां वसन्तारम्भ आदित्यादयश्च स्यातामिति ततश्चैत्रवैशाखौ वसन्तः ज्येष्ठाषाढौ ग्रीष्मः, श्रावणभाद्रपदौ वर्षामासौ स्याताम् । ततश्चोक्तदोषानुपपत्तिरिति ।

तस्मादत्रैकाष्टकाशब्देनोपसः कालो विवक्ष्यते । तथा चैकाष्टकात उषःकालप्रवृत्त्या देवयानप्रारम्भ इत्यभिप्रायेण तत्रोच्यते एकाष्टकायां दीक्षरन्निति । एकाष्टकोषो रूपिणीति संवत्सरस्य पत्नी । उषस आदित्यपत्नीत्वेन ऋग्वेदे बहुश उक्ते । संवत्सरश्चादित्याभिन्न इति एकाष्टकायाः संवत्सरपत्नीत्ववचनस्य युक्तत्वम् । एकाष्टकाया माघकृष्णाष्टमीरूपाया रात्र्या संवत्सरस्य वासकल्पनया

संवत्सरस्य पूर्वस्यावसानं परस्य च प्रारम्भः, उषःकालतो देवयानप्रवृत्तेः। तत्र नूतनसंवत्सराभिप्रायेण साक्षात्संवत्सरमारभ्य दीक्षावचनम्।

तत्र दीक्षायां शैशिरमासत्वेन ऐतरेयब्राह्मण विरोधोऽपि न। माघ-फाल्गुनयोः शैशिरमासत्वात्। तत्र दीक्षायां फाल्गुनकृष्णद्वितीयातः सुत्याप्रारम्भ इति मासगणना आनुष्ठानिके संवत्सरे प्रवर्तेत।

मासानां कृष्णपक्षादित्वमित्यन्तनामत्वमृत्वोर्मासयोर्दोष एकाष्टकायां दीक्षणे। एवमेकाष्टकाऽन्तिमा रात्रिः संवत्सरस्येति संवत्सरविच्छेदो दोष इति। फाल्गुने सुत्याप्रारम्भे फाल्गुने एवावभृथप्राप्तिस्तदानीं मुख्यस्योत्तरायणस्य चैत्र्यां प्रारम्भेण फाल्गुने शिशिरत्वेन शैत्यसत्वादपामनभिनन्दनावितः। अत एवैकाष्टकायां दीक्षणे संवत्सरस्यार्तिर्दोष इति।

तस्मादेकाष्टकायामुषःकालप्रवृत्त्या देवयानप्रारम्भेऽपि न दीक्षा युक्ता। ततः सावित्रकालाभिप्रायेण फाल्गुनीपूर्णमासीरूपो द्वितीयो दीक्षाकाल उच्यते तद्वत्सरीय एव। न तु पूर्वं कदाचन तस्य संवत्सरादित्वमित्यभिप्रायेण। तदुक्त फाल्गुनीपूर्णमासे दीक्षेरन्निति। फाल्गुनीपूर्णमासस्य संवत्सरमुखत्वोक्तिस्तस्य संवत्सररूपादित्यस्य दिनरूपदेवयानप्रारम्भाभिप्रायेण। सावित्रकालमारभ्यापि देवयानप्रवृत्तिः पूर्वमुक्ता। तस्मिन् दीक्षणे चैत्रशुक्लनवम्यां सुत्याप्रारम्भेण ऋतोरन्तनामत्वाभावः।

संवत्सरस्यैकाष्टकायामन्तिमरात्रित्ववचनेन व्यस्तत्वमिवात्र दिन एव दक्षिणेन व्यस्तत्वरूपदोषाभावो विच्छिन्नत्वस्यापि दोषस्याभावो रात्रिसम्बन्धाभावः। एवं पूर्वोक्तदोषाभावेऽपि अत्र सम्मेघं विषुवतः प्राप्तिरूपदोषस्य प्राप्तिः फाल्गुनीपूर्णमासस्य सावित्रकालादित्वे आदित्योदयात्दिनप्रारम्भश्चित्रापूर्णमासे, तथा देवयानरूपदैवादिनप्रवृत्त्या वसन्तादिऋतुत्रयं ततः प्रवर्तेत। एवं वैशाखज्येष्ठ-पूर्णमासीपर्यन्तं वसन्तः आषाढश्रावणपौर्णमासीपर्यन्तो ग्रीष्मो भाद्रपद-आश्विन-पौर्णमासीपर्यन्तो वर्षर्तुः।

चैत्रशुक्लनवम्यां सुत्याप्रारम्भतस्तत आनुष्ठानिकमासप्रवृत्तौ वैशाख-ज्येष्ठशुक्लनवमीपर्यन्तं प्रथमं मासद्वयं आषाढशुक्लनवमीपर्यन्तं द्वितीयं मासद्वयं भाद्रपदाश्विनशुक्लनवमीपर्यन्तं तृतीयं मासद्वयमिति आश्विनशुक्लदशम्यां विषुवतः प्राप्तिरिति वर्षाकाले विषुवतः प्राप्तिरूपोदोषः।

न च सम्मेघशब्देन प्रभूतमेघयुक्तत्वरूपत्वं विवक्षितं वर्षान्ते मेघप्राचुर्याभावेन सम्मेघत्वाभाव इति वाच्यम्। तैत्तिरीयसंहितावशतो वर्षर्तोरेव विवक्षणाद्वर्षर्तोरत्र सत्त्वाद्दोषः। तैत्तिरीये साम्मेघ्ये विषुवतः प्राप्तिरूपो दोष उच्यते,

तत्र साम्मेघ्यशब्देन प्रचुरमेघार्हे काले इति भवति स च वर्षाकाल इति। न ह्यय नियमो वर्षाकाले नियतेऽवसर एव मेघप्राचुर्यम्। अत एव ऋङ्मन्त्रे—

पञ्चपाद पितर द्वादशाकृति दिव आहु. परेऽर्धे पुरीषिणम।
अथेमे अन्य उपरे विचक्षण सप्तचक्रे षळरआहुरर्पितम्[1]॥

इत्यत्रोत्तरार्धेन सुमेरुगत प्रकारो वर्ण्यते। तत्र उपरे विचक्षणमिति विशेषणादन्तरान्तरा मेघाना प्राचुर्याभावो बोध्यते। उपरे मेघे विचक्षण दृश्यमित्यर्थ। प्रचुरमेघे आदित्यदर्शनाभाव। अत्र तद्दर्शनमविशेषेण वचनात्सम्मेघयुक्तत्वनियमाभावेन साम्मेघ्ये सम्मेघार्हवर्षाकाल इत्येव विवक्षणाद्वर्षाकालस्य तदानी सत्त्वाद्दोष इति। तत्रैकैव निर्येति वचनेनात्र पक्षे दोषान्तराभाव। ततस्तृतीय कालो मुख्यदेवयानरूप आदित्योदयस्वरूप उच्यते "चित्रापूर्णमासे दीक्षरन्" इति। तस्य विशेष उच्यते "चक्षुर्वा एतत्सवत्सरस्य यच्चित्रापूर्णमास" इति।

आदित्योदयेऽपि सवत्सरस्य मुखमेव तत आरभ्य सवत्सरप्रवर्तनात्। अतएव तैत्तिरीये "मुख वा एतत्सवत्सरस्य यच्चित्रापूर्णमास" इति मुखत्वेनैव वर्णनम्, ताण्ड्ये तत्रादित्यसन्दर्शनात्मविशेषबोधाभिप्रायेण चक्षुर्वेत्युक्तम्, तथा सति तस्य मुखत्वाभावशका भवेत्तद्वारणाय तत्रोक्त मुखतो वै चक्षुरिति। तत्र मुखशब्देन न केवलमास्य गृह्यते किन्तु परिचययोग्य. शिरोरूपो भागस्तत्र चक्षुषोऽपिसत्त्वान्मुखत एव सवत्सरारम्भ इति।

तादृशेन मुखशब्देनार्थे प्रारम्भस्य विवक्षणाच्चित्रापूर्णमासे सवत्सरस्य मुख्यदेवयानात्मकस्य प्रारम्भस्य सत्त्वम्। उदीयमान बिम्ब तदानी प्रवर्तत इति सूर्योदयरूपस्य मुख्यस्य देवयानस्य प्रारम्भवचनम्। उदितस्य बिम्बस्य चक्षुष्ट्वेन वचन मन्त्रे प्रतिपाद्यते, तत्रोक्त 'चित्र देवानामुदगादनीक चक्षुर्मित्रस्य वरुणस्याग्नेरि'ति। अत्र कल्पे शुक्लादय एव मासा भवन्तीति भन्तनामत्वाभावः। सवत्सरप्रवृत्या आर्तिविच्छेदो वेति दोषयोरभाव.। वैशाखशुक्लनवम्या सुत्याप्रवृत्या तत आनुष्ठानिकमासगणनाप्रवृत्ति.।

ज्येष्ठाषाढशुक्लनवम्या प्रथम मासद्वयम्। श्रावणभाद्रपदशुक्लनवम्या द्वितीय मासद्वयम्। आश्विनकार्तिकशुक्लनवम्या तृतीय मासद्वयमिति षण्मासा भवेयुस्तत कार्तिकशुक्लदशम्या विषुवान् प्रवर्तेत। तदानी वर्षाकालस्यातीतत्वेन साम्मेघ्ये विषुवत प्राप्तिरूपदोषाभाव इति। तदुच्यते "तस्य न काचन निर्यास्ती'ति।

---

१ ऋ वे १० १६४ १२

एवं रूपेण दीक्षाकालत्रयं प्रतिपाद्य निर्दोषस्य तृतीयस्य कालस्य सत्वेन चतुर्थप्रकारस्य कथनं चतुरहे पुरस्तात्पौर्णमास्या दीक्षेरन्निति वचनेनात्रापि पक्षे कस्यचन दोषस्य सत्ता विद्यत इति सूच्यते। न कापि निर्येति वचनेन तु पूर्वोक्तदोषाणां मध्ये न कोऽपीत्यर्थः। न सर्वथा दोपाभाव इति।

ततः पुरस्तात्पौर्णमास्याश्चतुरहे इति वचनेन सन्निहितत्वाच्चित्रापूर्णमास्याः पुरस्तादित्यर्थो लभ्यते। तथा सति केवलं चतुरहे पुरस्तादिति वचनेनेष्टार्थलाभे पौर्णमास्या इति ग्रहणस्य वैयर्थ्यं स्यात। तस्मात्का पौर्णमासी अत्र विवक्षणीयेति विचारे सन्निहिताया अपि चैत्र्याःपरित्यागो दोषवत्त्वात्। दोषश्चात्रैतरेयब्राह्मणानुरोधेन दीक्षाप्राप्त्यभावः।

तत्रोच्यते—"वासन्तिकाभ्यां मासाभ्यां दीक्षया अप्राप्तिरिति। एवं सति पूर्णिमाविशेषनिर्णये विनिगमनाभाव इति चेत्तदपि न। तत्रैवापरेषां सर्वेषामृतूनां मासद्वयेन दीक्षाया अप्राप्तिं प्रतिपाद्य केवलं शैशिराभ्यां मासाभ्यां दीक्षाप्राप्तिरुक्ता। शैशिरत्वं द्वयोर्मासयोःरति तत्र द्विवचनेन निर्देशः।

एकाष्टकायां दोषदानेऽपि अन्तनामानाविति द्विवचनं तदभिप्रायमेव। एवञ्चान्तनामत्वं शैशिरीयत्वोरित्यभिप्रायस्तत्र। अन्यथा एकस्मिन् प्रारम्भस्थले ऋतोरन्तनामत्वे सर्वेषु ऋतुषु तदीयमासेषु प्राप्त्या अन्तनामानवृतू इति वचनस्यासंगतिरेव स्यात्। एवं च शैशिरीया पूर्णमासी अत्र विवक्षणीया, सा च शैशिरस्य द्वैमासिकत्वेनानिर्णये प्राप्ते द्वितोयस्य शैशिरोयमासस्य फल्गुनीपूर्णमासरूपस्य दोषवत्त्वाद्दीक्षानुपयोगित्वेन तदीयपौर्णमास्याः परित्यागेऽवशिष्टा शैशिरोया पौर्णमासी माघपूर्णमास्येवेति तस्याः पौर्णमास्याः पुरस्ताच्चतुरहे दीक्षा कर्तव्येति। एवं सति शुक्लपक्षे सुत्याप्रवृत्याऽत्र पक्षे दोषाभाव इति।

एतेनैकाष्टकायाः परित्यागाभावरूपगुण इति मूले उक्तम्। तेन सर्वदा एकाष्टकाया अपरित्यागो दीक्षायामिति वचनादेकाष्टकायाश्च माघकृष्णाष्टम्यामेव प्रसिद्धिरिति बोध्यते, परस्तात्फाल्गुनचैत्रयोरेवोपादनात्सर्वत्र ऋतुशब्दव्यवहारश्चैत्रादित्वेनैव वसन्तादिप्रवृत्त्या बोध्यत इति ज्ञायते।

एवं कृत्तिकादिनक्षत्रेषु संपातप्रवृत्यापि चैत्रादिरेव वसन्तादिऋतुव्यवहारो नापरमासादिः। मासानां च शुक्लपक्षाद्यमान्तत्वमेवेति विज्ञायते। यद्यपि पूर्णमासशब्दे कृष्णपक्षादिपूर्णमान्तता मासव्यवहारस्य प्रतीयते तथापि न सा देवयानसम्बन्धिनीति परस्तादनुपदं बोध्येतेति।

एवं च दीक्षाब्राह्मणे चैत्रपूर्णमास्या वत्सरादित्वेन चैत्र्या चित्रानक्षत्रयुक्तत्वं चित्रा च तदा दिननक्षत्रमिति चन्द्रमसस्तत्। पूर्णमास्यां सूर्याचन्द्रमसोः

परस्परमशीत्यधिकशतांशविप्रकृष्टत्वेन चित्रातस्तावद्विदूरे स्थितं नक्षत्रमश्विनीति तत्र वसन्तसम्पातनक्षत्रता सूर्याधिष्ठितत्वं चेति ।

एवं तैत्तिरीये कृत्तिकानां सम्पातनक्षत्रत्वस्य "एता वै प्राच्यै दिशो न च्यवन्ते यत्कृत्तिका" इति वचनेन प्रतीत्या कृत्तिकासम्पातस्य विज्ञत्वदशायामेव परस्तात्सम्पत्स्यमानाश्विनीसम्पातस्य सूचकस्य चित्रापूर्णमासस्य संवत्सरमुखत्वस्य वचनेन इदमश्विनीसम्पातस्यैतत्पर्यायगतत्वस्य वक्तुमशक्यत्वेन पूर्वपर्यायगतं तदिति वक्तव्यम् ।

तथा सति सम्पातस्य सर्ववृत्तपरिभ्रमे विंशतिसहस्रवर्षात् पूर्ववर्तित्वस्य वक्तव्यत्वं स्यात्तथा सत्यपरापरनक्षत्रम् सम्पातस्थित्या नक्षत्रियप्रजापतिवचनस्यायुक्ततापात इति तदनुसारेण नक्षत्रपंचक एव सम्पातपरिभ्रमो न सम्पूर्णवृत्तेऽत एवौषधिसूक्तगतनक्षत्रपञ्चकस्य वसन्तसम्पातनक्षत्रत्वस्य सम्पातपरिभ्रमाधिप्रायकानां सप्तोत्तरशतसंख्याकानामंशानामुपपत्तिः । शतक्रतुशब्दस्यार्थस्याप्युपपत्तिः । शतजीवेति मन्त्रार्थस्याप्युपपत्तिरिति पूर्वं प्रतिपादितम् ।

१८. पितृयाणानामनेकविधत्वप्रतिपादनम्

देवयानानामनेकविधत्वं पूर्वं प्रतिपादितम् । तदनुसारेण पितृयाणानामपि तावद्विधत्वमुक्तप्रायम् । मुख्यं देवयानं सुमेरावर्धद्विवनिवासे, तस्य स्वरूपं छान्दोग्योपनिषदादौ प्रोच्यते । तत्रोच्यते–अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य इति मासेभ्यो देवलोकं तेषां न पुनरावृत्तिः इति ।

आदित्यस्य प्रातरुदयावसरेऽग्नेः सकाशात आदित्य उदेतीति अग्नेरर्चिस्त्वेन ग्रहणं कृत्वाततोऽह्न प्रवृत्तिरह्नः. शुक्लाद्या अमान्ता मासाः षट्, तावत्पर्यन्तमादित्य उदङ् उदीच्यां दिशि वर्तमान इति ततो मासेभ्यो देवलोकं प्रति प्राप्तिरिति तेषां पुनरावृत्त्यभाव इति ।

यथेदं देवता स्वह्नो रूपं देवयानस्यैवं पितृष्वपि पितृयाणरूपं तत्रैवोच्यते धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान्दक्षिणादित्य इति मासेभ्यः पितृलोकमिति । आदित्यो वा अस्तं यन्नग्निमनुप्रविशति इतिवचनेन देवलोकेऽस्तमितस्यादित्यस्याग्नौ प्रवेशोऽग्नेर्धूमोत्पत्तिरिति धूमाद्रात्री रात्रेः क्रमिकापह्रियमाणपक्षस्तदाद्याः षण्मासा आदित्यो दक्षिणेतीति मासेभ्यः पितृलोकमिति पितृलोकस्य रूपमुच्यते । इदमपि सुमेरुस्थं कल्पनयोच्यते ।

यथा सुमेरौ सूर्यादेः स्थितेः षण्मासास्तदभावेन रात्र्या अपि स्थितिर्मासषट्कं तथा कुमेरावपि सा तथैव, केवलं दिवा सुमेरावुत्तरस्यामादित्यस्थितिरेव

कुमेरौ दक्षिणस्यामिति विशेषः। सुमेरावुदङ्डावृत्तिरेवं कुमेरौ दक्षिणावृत्तिरिति विशेषः। एवं सति सुमेरौ षण्मासावसाने आवृत्यभाव उक्तः स तु सूर्यस्य तद्रश्मीनां तत्र, एवमेव कुमेराविति समानन्यायात् । इदं तु मुख्यदेवयानपितृयाणयो रूपे अभिप्रेत्य ।

उक्तविधमुख्यदेवयानादेः स्वरूपाभिप्रायेण मुखं वा एतदृतूनां यद्वसन्तः इति वचनस्योपपत्तिः। तदभिप्रायेणैव "वसन्तो ग्रीष्मो वर्षास्ते देवा ऋतवा देवेषु तद्भूयसौ भवति देवांस्तद्भूयं भिगोपायतीति'। शरद्धेमन्तः शिशिर इति ते पितर" इति। अत्रापि देवलोकाभिप्रायेण शरदादीनां पितृषु सत्यवचनम्। तत्र तु भिन्नैरेव नमाभिर्व्यवहारः। अतएव तत्र ऋतुपञ्चकव्यवहारो देवानां माने इति मन्त्रे प्रतिपादितः। एतावता देवयानादीनामपरा विधा एव न भवन्ति, वेद नोक्ता इति मतमयुक्तम् ।

देवयानचातुर्विध्यस्य "ये चत्वारः पथयो देवयाना" इति मन्त्रेणोक्तत्वात्। देवयानचातुर्विध्ये पितृयाणचातुर्विध्यस्यापि प्राप्तिरिति पूर्वं प्रतिपादितम्। पितृयाणादीनां चातुर्विध्ये मुख्यातिरिक्तस्थले पितृयाणादिरूपदिनव्यवहारस्यायुक्तत्वे भास्कराचार्यरीत्यैव दिनोन्मुखेऽर्के तत्फलकीर्तनाय दिनमेव तन्मतमिति उपपत्तिर्वक्तव्या। नायं प्रमादः प्रत्युत तस्योपपन्नत्वं तैः प्रतिपादितम् ।

चान्द्रमासविचारः

एवं प्राचीने वैदिककाले सौरं नाक्षत्रवर्षम्, तिथ्यभिप्रायेणार्थाच्चन्द्रकलाभिप्रायेण चान्द्रा मासाः। तत्रापि शुक्लपक्षादिरमान्तो मास इति मासस्वरूपमासीत्। वर्षादिता वसन्तसंपातादित आसीन्नतु तत एवेति देवयानादिचातुर्विध्यस्योक्तत्वात्। सांपातिकं वर्षमपि ज्ञातमासीत्। यत्तु सांपातिकवत्सरविषये वेदादिषूल्लेखः सप्तविंशत्यंशपर्यन्तं प्रतिपार्श्वं गमागमविषयकस्तद्विषये मार्गशीर्षपौर्णमास्याः संवत्सरस्यान्तिमा रात्रिरिति तत आरभ्य उत्तरायणरूपो देवयानादिः स्यात्तथा च तत्रोत्तरायणस्य प्रवृत्तौ तदवसानं पितृयाणप्रारम्भे तत्रत्यान्तिमायां रात्रौ स्यात्तदा च तत्र दिननक्षत्र मृगशिरः स्यात्ततः पूर्वं नवत्यंशस्थले वसन्तसंपातरूपं देवदिनरूपमुख्यदेवयानं स्यात् ।

एवं नक्षत्रचक्रान्तरेवत्यन्ततो मृगशिरसः त्रिषष्ट्यंशविदूरि तत्वेन तावतामंशानां वसन्तसम्पातस्थलीयपूर्वोक्तनवत्यंशतो न्यूनीकारे सप्तविंशत्यंशास्तावत्पर्यन्त रेवत्याः पश्चाद्वसंतसंपातस्थानं लभ्येत। वेदेषु प्रत्यक्षं कृत्तिकाया वसन्तनक्षत्रत्ववचनेन माघे उत्तरायणवचनेन रेवत्या अग्रे सप्तविंशत्यंशस्थानं वसन्तसम्पात स्योपलब्धमिति उभयोः प्रामाण्याय संपातस्यान्दोलनगतिर्ज्योतिर्विद्भिरुक्तेति वचनं तद्वालस्यापि समाधानाय नालम्। सकृत्तत्रोपलम्भेनान्दोलनकल्पना

बालेनापि न स्वीक्रियेत। आन्दोलनगतिनिर्णयार्थमसकृत्तत्र गमागमावविज्ञायान्दोलनगतिवचनं तु साहसमेव स्यात्।

वस्तुतस्तु ओषधसूक्तानामनुसारेणेन्द्रस्य शतक्रतुशब्दवशनश्शतारवमेधानासम्पन्नत्वेन व्यवस्थापनेन नक्षत्रियप्रजापतिवर्णनेन शतजीवेति मन्त्रे च शतशब्दप्रयोगेण चान्दालनगतिविज्ञानमिति पूर्वमुक्तम्। एवं च मार्गशीर्षपूर्णिमा संवत्सरस्य रात्रिरित्यादरेकाष्टकावन्नोपपत्तिर्वक्तव्या किन्तु तस्यामुत्तरायणप्रवृत्तिरित्यर्थ इति।

उत्तरायणप्रवृत्तो पौष्यामुपक्रान्तो माध्या सावित्र काल फाल्गुन्या वसन्त इति तत्र सत्स्वप्यन्येषु मासेषु गीतायां मार्गशीर्षस्यैव भगवद्विभूतित्वमुच्यमानं कथं सगच्छेतेति विचारे गीताटीकायामानन्दगिर्यादिभि समृद्धिमत्त्वेनोक्तमासस्य विभूतिरूपेण वर्णनेति व्याख्यायते।

परमार्थप्रपाटीकाकारसूर्यपण्डितैश्चैतन्मासस्य वर्षादित्वेन भगवद्विभूतिमिति वर्ण्यते, परन्तु वर्षादित्वेन यदि भगवद्विभूतिता मार्गशीर्षस्य तर्हि वर्षादित्वमपरेषामपि मासानां वर्तत इति तेऽपि भगवद्विभूतय इति को विशेषो मार्गशीर्षस्य यदन्ये वर्षादय सन्तोऽपि न भगवद्विभूतित्वेन वर्ण्यन्तेऽस्य तु वर्ण्यत इति। यत्तत्र भगवद्गीतावाक्ये मार्गशीर्षस्य मासानां मध्ये भगवद्विभूतित्वमृतूनां मध्ये वसन्तस्य ऋतोर्भगवद्विभूतित्वमिति सहैव मासर्त्वोर्ग्रहणेन मार्गशीर्षोऽपि वसन्तादिमासत्वेन भगवद्विभूतिरिति। तदपि न। वसन्तादित्वस्याप्यन्येषु मासेषु सत्वेन अस्यैव तादृशत्व नान्यस्येत्यत्र नियामकाभावात्। किञ्च सहवचनमात्रेण वसन्तमासत्वकल्पनस्यायुक्तत्वाच्च।

यत्तु मार्गशीर्षस्यापर नामाग्रहायणिक इति तद्वशतो वर्षादिमासत्व तस्य निर्णीय तत्वाद्विभूतित्वमिति। तदपि न युक्तम् यतस्तेन नाम्ना तस्य वर्षादित्वाबोधनात्। तद्धि नामाग्रहायणीति पूर्णमासीनामत प्रवृत्तम्। पौर्णमास्याश्चाग्रहायणीनाम्ना न संवत्सरादित्व व्याप्यते। तथा सति हि तत एव संवत्सरप्रवृत्त्या नाग्रे हायनत्व तस्या भवेत्। अत एव तच्छब्दव्युत्पत्तिरप्युच्यमाना सगच्छते। तत्र तच्छब्दस्य व्युत्पत्तिरेवमुच्यते अग्रे हायनमस्या आग्रहायणी न तु हायनस्यारम्भ आग्रहायणीति।

एव च तस्या अग्र हायनप्रवृत्त्याग्रे हायनसत्वेन साग्रहायणीति पूर्णमास्या नाम। पूर्णमास्याश्चाग्रे प्रवर्तमान हायनममावास्यातः प्रवर्तते। तदत्र चादाय तस्या आग्रहायणीशब्देन व्यवहार। यद्यप्यमावास्याया प्रवर्तमान हायन पौर्णमास्या इव कृष्णचतुर्दशीपर्यन्ताना सर्वासा तिथीनामग्रे विनिगमनाविरह इति तदपि न। मासनामप्रवृत्तौ पौर्णमास्या एव निमित्तत्वेनान्येषु मासेषु गृहीतत्वेन पौर्णमास्या एव तत्व गृहीत्वा तेन नाम्ना व्यवहारात्।

यद्यपि मासान्तरीयपौर्णमासीनामप्यमावास्यायां हायनप्रवृत्तौ तन्नामव्यवहारोऽपेक्षणीय इति तासां तेन नाम्ना व्यवहाराभावेनैतस्या एव तन्नामव्यवहारे पुनर्बीजाकांक्षा अस्त्येवेति, तथापि सर्वादितयोत्तरायणमासत्वस्य मार्गशीर्षे एव सत्वेन ततः पूर्ववर्तिमासेषु उत्तरायणस्याप्रवृत्या तस्यैव मासस्य भगवद्विभूतिमत्वेन वर्णनात्। सर्वादितयोत्तरायणस्य प्रवृत्तिर्मार्गामावास्यायामेवेति तदादाय तस्या एव पौर्णमास्या आग्रहायणीशब्देन व्यवहारात्।

नक्षत्रियप्रजापतिः इन्द्रस्य शतक्रतुरिति नाम, ओषधिसूक्ते सप्तोत्तरशतधामव्यवहारेण संपातस्य, हस्तनक्षत्रपर्यन्तत्वमेव नियमनस्यावश्यकत्वेन तदनुसारेण मार्गामावास्यापर्यन्तस्यैवोत्तरायणे प्राप्तेः। एवञ्चोत्तरायणस्य प्रथमप्रवृत्तिवशत एवेमं वर्षादिमभिप्रेत्य मार्गपौर्णमास्या आग्रहायणीत्वेन व्यवहारस्तमादायैव मार्गशीर्षस्याग्रहायणिकेति नाम प्रवृत्तम्। तदुक्तं पाणिनिना "साऽस्मिन् पौर्णमासीति संज्ञायाम् इत्यधिकारे आग्रहायण्यश्वत्थाट्ठक्" इत्यनेनाग्रहायणीशब्दतस्तत्सिद्धं ब्रुवता।

यद्यपि पौर्णमास्या अग्रेहायणीत्वं न संवत्सरादित्वरूपं तथापि तस्मिन्नेव मासि अमावस्यायामुत्तरायणप्रवृत्या हायनस्य प्रवृत्तेस्तस्य वर्षादिसम्बन्धवशतो वर्षादिमासत्वेन व्यवहारः। अतएव तैत्तिरीयसहितायां दीक्षाविध्यवसरे "मुखं वा एतत्संवत्सरस्य यत्फल्गुनीपूर्णमास" इति मासस्यैव संवत्सरमुखत्वं वर्णितं न तु तिथेः। अतएव तत्र फल्गुनीपूर्णमास इति पद प्रयुक्तम्। फल्गुन्यां पूर्णमासोऽर्थात्फाल्गुन. संवत्सरस्य मुखमित्यर्थः। एतदर्थमेवोपादाय फाल्गुनस्य वसन्तमासत्वेन व्यवहारः पक्षभेदेन भाष्यकृता सायणेन प्रदर्शितस्तद्व्याख्यावसरे फाल्गुनश्चैत्रो वसन्त इति।

एतेन सुश्रुतग्रन्थोऽपि व्याख्यातः। तत्रापि फाल्गुनचैत्रयोर्वसन्तमासत्वोक्तेः। मार्गपौर्णमास्या एवाग्रहायणीत्वेन तस्मिन्नेवाग्रहायणीति कोशव्याख्यावसरे भानुदीक्षितैराग्रहायणीपदस्य नक्षत्रपरता पौर्णमासीसम्बन्धवशतः प्रतिपादिता, मासमारभ्यैव च वर्षादित्वमुक्तम्—अग्रे हायनं यस्याः, मार्गशीर्षमारभ्य वर्षप्रवृत्तेः। प्रज्ञाद्यण, पूर्वपदादीति णत्वम्। आग्रहायणी पूर्णमासी। तद्योगान्नक्षत्रमपि तथेति ग्रन्थेन।

यत्तु मार्गशीर्ष्याः पौर्णमास्या आग्रहायणीत्वं नाग्रे हायनसम्बन्धात्किन्तु मृगशिरोबोधकाग्रहायणशब्दतो नक्षत्राणि अग्रहायणनक्षत्रयुक्ता पौर्णमासी अग्रहायणी इति। पाणिनेरिदमेवाभिप्रेतम्। अतएव तेन ठक्प्रत्ययं विधातुं आग्रहायण्यश्वत्थाटठगिति पौर्णमासीपरत्वमेव तेन तत्र गृहीतम् न तु तच्छब्दस्य स्वातन्त्र्येण पौर्णमासीपरत्वसाधनाय कोऽपि प्रयत्न आरचितः।

यत्तु भट्टोजीदीक्षितैः सिद्धान्तकौमुद्यां भानुदीक्षितैरमरकोशव्याख्यायामुक्तशब्दस्य प्रज्ञाद्यणा स्वातन्त्र्येण पौर्णमासीपरतया सिद्धिरुक्ता, तत्तु मुकुटाख्यकोशव्याख्याया टीकाकारेण आग्रहायण्येति निपातनादेव प्रथमाचो वृद्धिं गृहीत्वा गौरादिङीषोक्तशब्दसिद्धिं कृत्वा प्रत्याख्यातम्।

भानुदीक्षितैस्तु ङीष्ङीषो स्वरभेदेन गौरादिगणे ङीष्मात्रेणाद्यचो वृद्ध्यभावान्निपातनस्वीकारेण वृद्ध्युक्तावपि स्वरार्थं ङीपः कृते प्रज्ञादिगणात्रयणस्यावश्यापेक्षणे तेनैवोक्तरूपसिद्धया निपातानाद्दीर्घत्वकल्पनस्यायुक्तत्वमिति प्रतिपाद्यान्ते गौरादिपाठफलं मृग्यमित्युक्तम्। तत्सर्वमुपर्युक्तरीत्या नक्षत्रार्थैव कार्त्तिक्यादिदाग्रहायण्यादेस्यापि सिद्ध्या निरर्थकमित्याहुः।

तदयुक्तम्। पाणिनेर्गौरादिपाठेनाग्रहायणीशब्दस्याभिप्रेतत्वेन तेन आग्रहायण्येति सूत्रे ठग्विध्यवसरे आद्यचो दैर्घ्यस्योक्तस्योपपत्तये प्रज्ञादिगणपाठं विनाऽनुपपत्तेः। यद्यपि सान्नायानुजावरेत्यादिवार्तिकेनैव तस्य सिद्धिस्तथापि गणपाठेनैव सिद्धौ नापूर्वत्वमित्यभिप्रायेण तदगणाश्रयणात्। नक्षत्राणां त्वन्यानिर्वाहः।

अग्रहायणशब्दस्य मृगशिरोनक्षत्रबोधकत्वे प्रमाणाभावात्। प्रत्युतामरसिंहेन आग्रहायणीशब्दस्यैव तन्नक्षत्रबोधकताया उक्ते। तस्याश्च भानुदीक्षितप्रदर्शितरीत्यैव पौर्णमासीसम्बन्धादेव प्रवृत्तिर्नक्षत्रगत्यन्तराभावात्। अन्यथा ठग्विध्यवसरे पौर्णमासीबोधकत्वस्यानुपपत्तेः। एतेन प्रज्ञादिगणेऽग्रहायणीशब्दानुक्त्या गौरादिङीषेकारान्ततच्छब्दसिद्धावपि आद्यचो वृद्धिर्दुर्लभा स्यात्। अमरानुरोधेनाग्रहायणीयशब्दस्य नक्षत्रपरत्वे नक्षत्राणां त्वनायसेनस्तत्सिद्धिरिति परास्तम्। प्रज्ञादिपाठाभावेऽपि सान्नायेति वार्तिकेनैव वृद्धेर्लाभात्। वार्तिकप्रामाण्यात्प्रज्ञादिपाठकल्पनेति त्वन्यत्।

यत्तु परमार्थप्रपाप्रामाण्यान्मृगशिरसोऽग्रहायणनामकत्वमुच्यते। तदयुक्तम्। तस्या भिन्नार्थत्वात्। तथाहि तत्रत्यो ग्रन्थः यद्वा मृगशिरःपूर्णिमासम्बन्धेन वर्षादिरभिहितस्तस्मिन्नेवाग्रहायणीत्यभिधानात्। अग्रे हायनं यस्याः साग्रहायणी। आग्रहायणिक इति मार्गशीर्षनाम। अतोऽस्य मासस्य मुख्यत्वादिभूतिमत्त्वमिति। आग्रहायणीति मार्गशीर्ष्यां नामेति तत्सम्बन्धादस्य मासस्य वर्षादित्वमभिहितम्। तस्मिन्नत्याद्यभिधानात्पौर्णमास्याः प्रदर्शितरीत्या तन्नाम भवति। तच्च नक्षत्रेऽपि तत्सम्बन्धादेव प्रवर्तते। अतएव तस्य नामाग्रहायणिक इति।

नक्षत्रपरत्वं तु तच्छब्दस्य वक्तुमशक्यं प्रमाणराहित्यात्। न च कोशादस्य पौर्णमासीपरत्वेन त्वस्य नक्षत्रसम्बन्धादेव वक्तव्यमिति वाच्यम्। कोशे

नक्षत्रनामसु प्रक्रान्तेष्वकस्मात्पौर्णमास्याः कथनस्यायुक्तत्वापातात् । नक्षत्रपरत्वादेव कोशकृता तच्छब्दस्य तत्रैव शब्दः प्रयुक्तस्तस्मिन्नेवेति । अन्यथा तस्य वैयर्थ्यं स्यात् । तत्सम्बन्धमात्रस्य पौर्णमास्यां बोधनीये हि तस्मिन्नित्येतावतैवेष्टासिद्धेः । नक्षत्रपरत्वे तु तत्सार्थक्यम् ।

आग्रहायणीशब्दस्य पौर्णमासीपरत्वस्य पाणिनीयव्यवहारतः सिद्ध्या नक्षत्रपरता न स्यादिति तद्बोधनाय तस्मिन्नेव उक्तनक्षत्रे एव आग्रहायणेत्यर्थबोधनाय तत्सार्थक्यात्। किञ्च पौर्णमासीपरत्वेऽपि तस्यास्तस्मिन्नेवेति। वचननेन तन्नक्षत्रसम्बन्धित्वबोधेऽपि आग्रहायणेत्यस्य नक्षत्रनामत्वे तत्सम्बन्धादेव च तस्य शब्दस्य पौर्णमास्यां प्रवृत्तिरित्यर्थे प्रमाणाभावात् । तथा सति हि तस्मिन्नेवाग्रहायणमित्येव वदेत् । येन तस्य मृगशिरोनक्षत्रबोधकत्वे गृहीते कार्तिक्यादिवन्नक्षत्राणां पौर्णमास्या अपि बोधकाग्रहायणीत्यस्य शब्दस्य सिद्धिरिति न किञ्चिदेतद् ।

ज्योतिषमतम्

प्राचीनैर्ज्योतिर्विद्भिः संपातस्यासर्ववृत्तभ्रमो मार्गशीर्षस्य मासानां मध्ये भगवद्विभूतिबोधकगीतावचनं प्रत्यक्षतः कार्तिक्यां सम्पातोपलम्भदर्शनमित्यत इति तदयुक्तम् । उभयकोट्योः सकृद्दर्शनमात्रेणान्दोलनगतिकल्पनस्य बालेनापि असम्भवात् । तदेतत्पुरस्तात्प्रतिपादितम् । किञ्च दर्शनोत्तरभाविनां तथा कल्पनेऽभ्युपेत्य गृहीतेऽपि गानाकान्तः पूर्वभाविवैदिकमन्त्रब्राह्मणयोरसर्वगतिकल्पनं विनानुपपत्त्या तस्या उक्तमूलत्वासम्भवः ।

उक्तं चासर्वगतिसाधकं सम्पातस्य नक्षत्रियप्रजापतिवचनं याजुषम्, ऋग्वेदीयौषधसूक्तगतानामोषधीनां सप्तोत्तरशतधाम्नां वचनमिन्द्रस्य शतक्रतुनामेत्यस्यानुपपत्त्या साधकमिति पुरस्ताद्विस्तरेण प्रतिपादितम् । एवं च प्राचीनैर्ज्योतिर्विद्भिः तदेव नक्षत्रियप्रजापत्यादिवशतः सर्वगतित्वं संपातस्य मतमिति ।

आग्रायण-शब्दार्थः

एवमाग्रहायणीशब्दस्याग्रयणशब्दस्य वा साधनार्थं भाषाशब्दविकरणप्रथामनुसृत्य विचारः सोऽपि नाभिप्रेतार्थसाधकः । तथाहि तैरुच्यते आग्रयणीशब्दस्य पूर्वमाग्रहायणीत्यनेन समानार्थत्वं समानरूपत्वं च यतो बहुषु स्थलेषु भाषिकशब्दविकारप्रथानुसारेण शब्दादेः वचनाधिकेन हकारेण योगः क्वचन सतोऽपि तस्य निरासो दृश्यते, यथा पाश्चात्यैः ईस्टॉर हिस्तरी इत्यत्र । यथा वा इन्वकेत्यत्र हिन्वका, अट् हट् अय् हय् अन् हन् इत्यादिषु दृश्यते ।

यद्यपीमे भिन्ना एव धातवो नात्र हकारयोगो वा तन्निरसनं वेति वक्तुं शक्यम् । सत्यमिमे भिन्ना एव धातवः परन्तु अर्थभेदेऽन्यतरेणैव सतार्थत्व

उभयविधधातुस्वीकारस्य निर्युक्तिकत्वात्। यद्यप्युभयविधरूपाणां सर्वत्र प्रयोगेण तदुपपत्तय एकविधस्य धातोरुभयविधरूपस्वीकारापेक्षया धातुद्वयकल्पनस्यैव युक्तियुक्तत्वम्।

न च सर्वविधरूपाणां प्रयोगाभावेन न तादृशकल्पनाया अवसर इति वाच्यम्। व्याकरणमहाभाष्यकारेणतद्विषये दत्तोत्तरत्वात्। तेनोच्यते-"[1]किमिदं व्याकरणं प्रयुक्तानां वाऽप्रयुक्तानां वा शब्दानामिति, अप्रयुक्तानामिति चेत्, न मन्येत्राप्रयुक्ताः शब्दाः। सप्तद्वीपा वसुमती साङ्गाः सरहस्या एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदो नवधा आथर्वणो वेद एकविंशतिधा बाह्वृच्यं वाकोवाक्यमितिहासपुराणानि गाथाः कल्पा नाराशंसोरिति। एतावान् शब्दस्य प्रयोगविषयः। एतावन्तं प्रयोगविषयमज्ञात्वा प्रयुक्ता इति वर्णनं साहसमेवेति।

एवं सर्वविधानां सर्वेषां शब्दानां प्रयोगसंभवेनोभयापेक्षा। तथाप्यभ्युपेत्येदं शब्दादिस्थले हकारयोगस्तन्निरसनमिति गृहीत्वोक्ताग्रहायणीशब्दे हायनीयशब्दगतस्य हकारस्य निरासे अवशिष्येत शब्दस्वरूपं आग्र-आयनीति, तत्रोभययोगेन आग्रायनी आग्रायणीति वा ह्रस्वे आग्रयणी इति। यद्यपि हकारस्य योगे तन्निरासे वा हकाररूपं व्यञ्जनमेव विवक्ष्यते न तु स्वरविशिष्टं शब्दस्वरूपम्। अतएव ह्निवकेति रूपं सिध्येदन्यथा हि शब्दस्य निरासेऽन्वकेऽत्येवमापद्येत।

एवं सति आग्रहायनशब्दे हकारमात्रनिरासे आग्र आयन इति शब्दद्वययोगे आग्रायणेति आग्रायणीति वेति रूपं भवेत्तत्र ह्रस्वो वक्तव्यः स्यात्। एवं सतीदमाग्रयणेति पदं मृगशिरसो बोधकं प्राचीनेषु वैदिकग्रन्थेषु प्रयुज्यमानं दृश्यते तदुपपत्तिः। यथा याजुषे रुद्राध्याये[2] आग्रयणश्च मे वैश्वदेवश्च मे इति।

आग्रयणेष्टिरित्यादौ श्रौतसूत्रादिषु यदि रथन्तरसामा सोमः स्यादाग्रयणाग्रान्ग्रहान् गृह्णीयादित्यादिषु। तत्र आग्रयणशब्देनायनाग्रबोधकेन मृगशिरसो नक्षत्रस्य अयनाग्ररूपत्वेन विवक्षणम्। अयनशब्देन प्रकृते देवयानं विवक्ष्यते। देवयानमपि मुख्यं वसन्तादिरूपम्। तत्र वसन्तादिरूपे देवयानेऽग्ररूपं वसन्तसंपातस्थत्वमेवेति मृगशिरसः संपातस्थत्वस्यायमाग्रयणशब्दो ज्ञापक इति।

तत्रोच्यते सत्यं वैदिकेषु ग्रन्थेष्वाग्रयणशब्दः प्रयुज्यते। विद्यते च तत्र अग्र-अयनेति पदद्वययोगः। विस्पष्टं च तत्र अग्रशब्दस्य पूर्ववर्तित्वम्, अयनशब्दस्य परवर्तित्वम्। परन्त्वर्थः को वा विवक्षितः यद्ययनस्याग्रमिति विविक्षाऽर्थस्य

---

1. व्या. म. भा.-पस्पशाह्निकम्
2. शु. य. वे. १८

तदानीमग्रशब्दस्यायनशब्दात् परत्र प्रयोगेण अयनाग्रमिति रूपं भवेन्नत्वग्रयणेति वा आग्रयणेति वा, रेफात्परत्वाभावेन णत्वानापतिश्च। तथा च षष्ठीतत्पुरुषं परित्यज्य बहुव्रीहिर्वक्तव्यः, अग्रे अयनं यस्येति वा यस्मादिति वा। तदानीमाग्रयणशब्देन न अयनाग्रमित्यर्थस्य लाभः। येन तस्य शब्दस्य मृगशीर्षपरत्वेन मृगशीर्षस्यापि देवयानाग्रत्ववसन्तसंपातस्थत्वं स्यात्।

एवञ्चोक्तशब्दे अग्रशब्दस्य प्रथमं प्रयोगात् बहुव्रीहिरसौ ततः पूर्वमयनं स्यात्। देवयानस्याग्रं देवयानस्य प्रारम्भस्ततः पूर्ववर्तिनक्षत्रे स्यादिति तस्य नक्षत्रस्य वसन्तसंपातस्थत्वं स्यान्न तु मृगशीर्षस्येति न तस्य नक्षत्रमालादिता स्यात्। न वा वसन्तसंपातस्थता स्यात्। अस्यां दशायामाग्रयणशब्दस्य न मृगशिरोबोधकताऽपि। तथात्वे आदिमस्याकारस्य दैर्घ्याभावप्रसंगः। तदर्थं प्रज्ञादिगणाश्रयणाद्यकारस्य दैर्घ्ये आग्रयणेति रूपसिद्धिः स्यान्न परं मृगशिरोनक्षत्रबोधकत्वम्। प्रज्ञादिगणाश्रयणेन ह्रस्वस्य निपातनेन आग्रयणशब्दस्य सिद्धिः।

एवं चोक्तरीत्याग्रायनसम्बन्धतः प्रवर्तमानं आग्रयणशब्दः स्त्रियां प्रवर्तमानः समाननिमित्तात्पूर्णमास्यामपि प्रयुज्येतनक्षत्रेऽपीति। अतएवामरसिंहेनोक्तम् तस्मिन्नेवाग्रहायणीति। पुंसि प्रयुज्यमानः समानेन निमित्तेन आग्रयणरूपमापन्नोऽपि मृगशिरसि प्रयज्यमानोऽपि न स मृगशिरसो वसन्तसंपातस्थत्वस्य बोधनायाऽलं स्यादिति।

यत्तु आग्रयणशब्दतो भाषिकशब्दविकारप्रथामनुसृत्य ओराइन् इति ग्रीकदेशीयपुरातनग्रन्थेषु प्रयुज्यमानस्य सारूप्यापादनम्, तत्र ग्रे त्यत्रत्यगकारस्य लोपे निमित्तानुपलम्भः। आग्रयणशब्दे प्रथमस्य आ इत्यस्योकारभावोऽग्रे त्यत्रस्य राभावो यणेत्यस्य इन भाव इति ओराइन् इति सिध्येत् परन्तु शब्दमध्यवर्तिगकारलोपोऽनियमितः कल्प्यः स्यात्।

तदपेक्षया रौहिण शब्दतस्तस्य साधनं युक्तियुक्तं स्यात्। तत्र रौइत्यस्य आकारभाव आउ इत्यादौ सिद्धः। हकारलोपो नियमसिद्धः, इण्इत्यस्य इन्भावः। शब्दस्यादावोकारयोगस्य दर्शनादत्र तद्योगे ओराइन् रूपं सिध्येत्। ग्रीकदेशीयानां वर्णनमपि तथासत्यनुगुणं स्यात्। ग्रीकदेशीयप्राचीनग्रन्थेषु ओराइन् इत्यस्य सायुधराक्षसरूपत्वं कल्पितम्।

निघण्टुपु मेघबोधकेषु शब्देषु वृत्राहिशंवरशब्दानामिव रौहिणशब्दस्यापि पाठेन तस्य वृत्रसमानार्थतया राक्षसरूपत्वेन वर्णनस्य युक्तत्वात्। मन्त्रेष्वपि यो रौहिणमस्फुरद्वज्रबाहुः रौहिणं व्यहन् इत्यादिना इन्द्रविनाश्यासुररूपत्वेन वर्णनस्योपलम्भात्तदुपपद्यते। एवं च तदीयानां श्वान् प्रश्वान् शब्दयोः श्वन् प्रश्वन् शब्दाभ्यां यथा संस्कृतरूपलाभ एवमोराइन् शब्दस्यापि मूलभूतं संस्कृतरूपमपि रौहिण इत्युपलभ्येत। राक्षसत्वेन कल्पनाया अप्युपपत्तिः स्यात्।

एवं चाग्रयणशब्दोऽग्रेऽयनसम्बन्धेन प्रवर्तमानः अयनस्याग्रस्यावधित्वेन यस्य यस्य सम्भवस्तं तमर्थं प्रतिपादयति । ततश्च मृगशिरसोऽपि अयनाग्रस्यावधित्वात्तद्बोधकत्वमाग्रयणशब्दस्य यतस्तदानीं रोहिण्या वसन्तसम्पातनक्षत्रत्वेन रोहिण्या मृगशिरसः पूर्ववर्तित्वेन पश्चात्प्रवर्तमानमृगशिरोनक्षत्रस्य वसन्तसम्पात-रूपदेवयानाग्रावधित्वात् ततोऽग्रे रोहिण्यामयनप्रारम्भादवधित्वं तस्य । रोहिण्या वसन्तसम्पातनक्षत्रत्वे वैशाखामावास्यायां भवेत् तदानीं चन्द्रमसोऽपि तदेव नक्षत्रं भवेत् । दर्शे सूर्याचन्द्रमसोरेकनक्षत्रयोगित्वात् ।

एवं चोक्तरीत्या देवयानप्रारम्भरूपवसन्तसम्पातस्याग्रे रोहिण्यां वर्तमानत्वस्यावधित्वाद् मृगशिरसोऽयनाग्रावधित्वेन सम्बन्धेन प्रज्ञादिगणवशात् आग्रयण-शब्दबोध्यता । ततो नक्षत्राणाम् आग्रयणशब्द एव तन्नक्षत्रयुक्तकालबोधकः स च नक्षत्रयुक्तः कालः पौर्णमासीरूपो यदा विवक्ष्यते तदानीमाग्रहायणी पौर्णमासी तस्मिन्नेव नक्षत्रे भवतीत्यभिप्रायेणामरसिंहेनोक्तं तस्मिन्नेवाग्रहायणीति । आग्र-यणसम्बन्धात्पौर्णमासी तत्पदबोध्या तत्कालसम्बन्धादिष्टिरपि आग्रयणशब्द-बोध्या । अतएव सा आग्रयणेष्टिशब्देन व्यवह्रियते ।

## १९. आग्रयणशब्दस्यादित्यावस्थाबोधकत्वम्

वस्तुतस्तु आग्रयणशब्दो न मुख्यया वृत्त्या मृगशीर्षं बोधयति किन्तूदयाव-सरीयामवस्थां गृहीत्वादित्यस्यैव बोधकः । यद्यप्येषाऽवस्थास्तावसरेऽपि आदि-त्यस्य स्यात्तथापि अग्रशब्दस्य प्रारम्भार्थत्वेनायनशब्दसाहित्योदयनाग्रत्वेनोदयस्य-लोयैवावस्था एनेन शब्देन बोध्यते । स चोदयः सुमेरुकुमेर्वोर्ग्राह्यः, तत्रैव तस्या अवस्थायाः प्रतीतेः । उदयशब्दोऽयधातुयोगेनोर्ध्वं गमनमाह, तच्चादित्यस्य । तच्च गमनमादित्ये सम्पूर्णे दृष्टे परस्तात्स्यात् ।

एवं च सम्पूर्णो दृष्ट आदित्यो यत्रोदयः सुमेरुप्रदेशे तत्र कलामात्रदर्शन-मारभ्य क्रमेण तत्रत्यैस्त्रिभिश्चतुर्भिर्वा परिक्रमैः सपद्येत । तावत्परिक्रमपर्यन्तं स खण्डित एव दृश्यते न पूर्णः । एवं च तस्यां खण्डितावस्थायां न स गन्तेति व्यपदिश्यते । एवञ्चास्यामवस्थायां स आग्रयणशब्देन बोध्यतेऽग्रेऽयनं यस्मादिति व्युत्पत्त्या ।

भवति हि परस्तात्पूर्णं आदित्ये उदिते तत्र देशान्तरसम्बन्धादिना गति-प्रतीतिः । सा चाग्रयणावस्थादित्यस्य सर्वादौ मृगनक्षत्रसन्निधौ दृष्टेति आग्रायण-सम्बन्धात्तस्याग्रयणशब्दबोध्यता । देवतासु अर्थात्सुमेरावादित्यस्योदयावसरे कुमेरावस्तावसरः स्यात् । एवं च सावस्थाऽस्तावसरीया दृश्येत । तथाऽस्याम-वस्थायामसौ न पूर्णादित्यस्तः खण्डितबिम्बदर्शनान्न सर्वात्मनोपोष्य इति उभयायोगकल्पनया प्रेमादिव्यवहारः । उषसो हि आदित्यपत्नीत्वेन व्यवहारव-

दादित्यमातृत्वमादित्यदुहितृत्वेन कल्पना। तदुक्त मन्त्रे अदितेर्दक्षो अजायत दक्षाददितिः परि इति।

## २०. प्रजापति दुहितृरूपारोकहथाया आदित्यपरव्याख्यानेनाश्लीलत्वनिराकरणम्

प्रातः प्रथमत आदित्यादुषसा दर्शनेन परस्तादादित्यसन्दर्शने पूर्ववर्तिन्यास्तस्या आदित्यमातृत्वेन व्यवहारः, सायं च बिम्बदर्शनं पूर्व परस्ताच्च सायन्तनो सन्ध्यारूपोषाः प्रवर्तत इति तस्या आदित्यदुहितृत्वम्। तस्या एव सन्ध्यया योगाभिप्रायेण प्रजापतेर्दुहित्रभिध्यानकथोदयः। अभिध्याने प्रेमपूर्वकत्वस्यापि सत्वेन प्रेमकथावर्णनं ग्रीक्देशीयानम्, वैदिकेष्वकार्यकर्तृत्वेन कल्पना। तत ऊर्ध्वं तस्य शास्तिरपेक्षिता सा रुद्रेणेति कल्पना। यतस्तस्यां खण्डितावस्थायामादित्यस्य प्राच्यां दिशि इन्द्रशब्देन वर्णनाऽस्तावसरे तस्य रुद्रत्वेन वर्णना।

खण्डितावस्थायां पूर्णत्वाभावेन पूर्णत्वेनेन्द्रादर्शनात्तस्य सत्वाभावे प्राप्ते सजनीयसूक्तेन कार्यमुखेन तदनुमानप्रदर्शनम्। रुद्रश्चेन्द्रविरुद्धदिक्क इति मन्त्रे प्रोच्यते रुद्राणामेति प्रदिशा विचक्षण इति। प्रशब्दयोगेन तद्युक्तार्थस्य विरुद्धसम्बन्धः प्रयाजप्रद्यौरित्यादिषु दृष्टोऽत्र दिशोयोगेन प्रदिक् इन्द्रविरुद्धा दिक्।

इन्द्रस्य दिक् प्राचीति तद्विरुद्धा प्रतीची दिक् रुद्रस्य, रुद्रस्य दिक् इन्द्रविरुद्धा चेदिन्द्रासावपि दिग् रुद्राविरुद्धा समानवित्तिवेद्यन्यायेन विज्ञायेत। तदेव गृहीत्वोक्तमन्त्रे उक्तं रुद्राणां प्रदिशा विरुद्धया पूर्वरूपयेत्यर्थः, दिशयेन्द्र एतीति। एवं चास्तावसरे आदित्यस्यैव रुद्रत्वं गृहीत्वा प्रजापतिरूपस्याकार्यकर्तुरुक्तरीत्या आदित्यस्य देवताभिः शास्तिः सा च रुद्रेणेति।

आदित्यस्यैकस्य सत उपाधिभेदेन भिन्नत्वेन व्यवहार इति बहुवारमुक्तमेव। तच्चेदं मृगनक्षत्रसविधे दृष्ट्वा मृगस्य सबाणस्य ऊर्ध्वोत्फालनकल्पनयाऽस्तमिते आदित्ये मृगनक्षत्रं दृष्ट्वाऽयमेव स प्रेमी प्रजापतिरिति। तत्र बाणस्येव तारका त्रितयस्य योगं दृष्ट्वा शरत्वकल्पना। बाणस्य त्रिभागकत्वं त्रिसन्धिर्हीपुरनीकं शल्यस्तेजनम् इति ऐतरेयब्राह्मणे उच्यते।

आदित्यस्यान्तिमाऽस्तावसरे दृश्या कला बाणत्वेनोच्यते। अतएव पशुपुरोडाशयागार्थवादे शरभरूपत्वेन तस्योक्तरैतरेये। शरभशब्दस्य शरवद्भासमान इत्यर्थकत्वमपीत्यादि विस्तरेणान्यत्र निरूपितम्। अस्तावसरीयावस्थाग्रहणात् ग्रीकदेशीयानां कुमेरुसम्बन्धता प्रतीयते त एव तंमृगनक्षत्रस्यास्तावसरे दृश्यस्य वृष्टिप्रदत्वेन वर्णना क्रियते। भवति च कुमेरावस्तमारभ्याऽरात्रेरवसानं वृष्टियुक्ततेति देवानां माने इति मन्त्रे प्रतिपादितम्।

एवं च मृगनक्षत्रस्योक्ताग्रयणसम्बन्धात्तद्बोध्यत्वेन वैदिकानां ग्रीकदेशीयादिपाश्चात्यपुराणकथानामुपपत्तिर्नतावता तत्र वासन्तिकसंपातस्थानकत्वस्य

प्रतीति । प्रत्युतास्तोत्तरवर्तिसायसन्ध्यायोगितयोषसा साकं सम्बन्धवर्णनात इद सर्वं कथाजातं रोहिण्या वसन्तमपातस्यैवलिङ्गम् । अतएव यजुर्वेदे रोहिणी-नाम्न प्रवृत्तिनिमित्तबोधनावसरे अर्थवाद उच्यते "देवा वै सर्वान्रोहानरोहन तद्रोहिण्या रोहिणीत्वमि"ति । सर्वरोहारोहवर्णनतस्तत परस्माद्वसन्तमम्पाता-भाव प्रतीयत इति ।

तथा चैवाग्रयणरूपा खण्डितावस्था कृत्तिकादिसम्पातस्थलेऽपि भवेत्तथापि न तामा तच्छब्दबोध्यता । सर्वादौ मृगसविधस्थल एव तद्दर्शनादाग्रयणयोगान्मृग शिरसोनक्षत्रस्याग्रहायणशब्दबोध्यता । अत एवामरसिंहेन तस्मिन्नेवाग्रहायणीति प्रतिपादितम । एवञ्चाग्रयणयोगे मृगशिरसि तन्नक्षत्रयोग पौर्णमास्यामपीति पौणमासीनाम्नो नक्षत्रनाम्नश्च समानरूपत्वेन मासबोधने व्यावृत्तिन स्यादिति विशिष्याग्रहायणी शब्दतो मासनामनिर्वर्तनाय ठको विधानमिति ।

यत्तु वर्षारम्भवर्षावसानयोर्मध्ये द्वादशदिनानामृभूस्वापवचन तत्र देवा मनुष्यगृहेष्वागच्छन्तीति बुद्ध्या पाश्चात्यपुराणकथासु हरिणादिक्रीडावचनादि, वेदे सुप्तोत्थितानामृभूणा जिज्ञासाया मृगेण शुनो बोधकत्वादिप्रतिपादन मृगनक्ष त्रस्य वासन्तिकसम्पातस्थत्वसाधकमिति तदपि न युक्तम् ।

ऋभवो हि किरणास्त आदित्ये पूर्णे कार्यकर्त्तारो पूर्णत्वदशाया तेषा कार्या-भावेन विराम इति स्वापकल्पना तेषाम् । सा चादित्यरूपे गृहे । तदुक्त मन्त्र "द्वादशद्यन्यदगोह्यस्यातिथ्ये रणन्नृभव ससन्त" इति । अगोह्यशब्दस्य गोपना-सम्भवेन निमित्तेनादित्यपरता ऐतरेये प्रजापतेस्तनूसञ्ज्ञकमन्त्र व्याख्याने प्रदर्शि-तम् । खण्डितत्वदशाया पूर्णादित्याभावेनर्भूणा कार्यकरण प्रवृत्तिरादित्ये वर्तमान-तेति गृहीत्वा तत्स्वापवर्णना आदित्यस्यातिथ्यवर्णना चेति ।

वृषाकपिसूक्ते इन्द्रस्य देवत्वेन नियन्तृत्वेनामननकल्पनाबीजमपीदमेव । तत्रोक्तरीत्यास्तावसर प्राप्तो गतिराहित्येन पूर्णोऽप्यसावादित्यस्तयापि तत्र तद गत्यभावेन ऋभूणा कार्यकर्तृत्वाभावेन विरामवचनम् । एव खण्डितत्वदशाया पूर्णत्वा भावेनापि कायकारणाभाव । एवमचिरादन पूर्णेऽपि बिम्बे गतेरभावेरा ऋभूणा कार्यकारणाभाव ।

एव च पूर्णबिम्बद्वय मध्यवर्तिखण्डितबिम्बावस्था च गृहीत्वा द्वादशदिन-विराम ऋभूणामिति कल्पना । प्रतिस्थल परिक्रमचतुष्टयोपयोगेन परिभ्रमस्य च दिनशब्देन व्यवहरणाद् द्वादशदिनपर्यन्त नूतनपुरातनमम्वन्यसरसन्धौ ऋभूणा विरामो वा स्वाप इति वा कथनम् । यच्च ऋङ्मन्त्रे स्वापोत्थित्यनन्तर प्रश्न-प्रतिवचने शुनो बोधकत्ववचन तदपि मृगशिरस्सविधवर्तितारकाभिप्रायेण मुख्यम् । तथाहि तत्र मन्त्र.–

सुषुप्वांस ऋभवस्तदपृच्छतागोह्य क इदं नो अबूबुधत्।
श्वानं बस्तो बोधयितारमब्रवीत्संवत्सर इदमद्या व्यख्यत[1] ।।इति।।

तत्रादित्यं प्रति पृच्छा उत्तरमपि तेनैवेति उत्तरदातेवादित्योऽत्र मन्त्रे बस्त-शब्देनोच्यते । बस्तशब्दः पशुवाची पुमजबोधको मृगशब्दबोध्यः । मृगत्वं च मार्गणीयत्वान्मार्गणीयत्वं च तस्य रात्री इति तदेतद् गृहीत्वा पशुपुरोडाशार्थवादे गौरमृग इति विशेषणेन गौरमृग इतिवचनमैतरेये । अमृग इति विशेषणान्मृग-रूपतापि तस्य भवतीति विज्ञायते । सा च रात्रावित्युक्तमेव ।

स च बस्त आदित्य ऋभूनवदत् श्वा वो बोधक इति मन्त्रे वचनम् । तत्र श्वशब्देन न वास्तवशुनो ग्रहणं किन्तु वायोः । वायोः श्वशब्देन व्यवहारो मात-रिश्वेति वायुबोधकेन शब्देन प्रसिद्धः । वायुश्च सर्वदागतिशाल्यादित्य एव । सुमे-रुकुमेर्वोः स्थानतः सविषवर्त्यवस्तनस्थाने आदित्यस्य षाण्मासिकदर्शनापेक्षया न्यूनकालिकत्वेन दर्शनम् । तत्र स्वल्पकालं तद्दर्शनादर्शने भवतस्तद्दर्शनादर्शन-युक्त आदित्यो वायुशब्देनोच्यते ।

वायुशब्दे निरुक्तकारेण वकारस्याधिकस्य योगो मुख्यः शब्दस्तु आयुरेवेति उच्यते । आयुशब्देन स्वल्पाधिकमिश्रणेन निमित्तेन वायुर्बोध्यते । तस्य तत्र दैर्घ्यस्यानेकदिनसम्बन्धित्वरूपस्य दानप्रार्थनामन्त्रेषु यथा "सविता नो रासतां दीर्घमायुः इति । तस्यैव वायोरायुष्ट्वं गृहीत्वाऽऽयुषोऽपि आधिक्यप्रार्थनेति । अतएव मन्त्रे उच्यते "आयुः पवत आयवे" इति ।

तत्रैकत्र देशे तद्दर्शनकाले तद्विरुद्धदेशे तददर्शनकाले च तद्दर्शनमिति गृहीत्वा आयुद्वयं कल्प्यते । तत्रैक आयुः वायुरपरस्मा आयवे वायवे तत्संगत्यर्थं पवत गच्छति इति । पूवातोर्गत्यर्थत्वं निघण्टुषु । वायुद्वयं च स्पष्टमेव मन्त्रे प्रतिपाद्यते "द्वाविमौ वातौ वात आ सिन्धोरा परावत" इति ।

सर्वथा वायोः श्वत्वं स एवभूणां सुप्तानां बोधक इति कल्पनोक्तमन्त्रे । वायुद्वययोगेन तत्र विरोधसम्बन्धेन श्व-प्रश्वशब्दाभ्यां वचनम् । अतएव यमं प्रति द्वयोः शुनोः पथिरक्षितत्वेन वचनम् । एवं चेदं सर्वं वर्णनमादित्यपरं नक्षत्रादिषु तत्सत्वादिना कल्पितममुख्यमित्युक्तम् ।

तथा चोक्तरीत्या द्वादशपरिक्रमासम्बन्धेन द्वादशदिनानि पूर्वस्मिन् परस्मि-न्वा अनन्तर्गतानीति आधिकत्वेन वचनादि । तदपि सर्वादौ मृगस्थल उपलक्षित-मिति, मृगादितारकासु तत् कल्प्यत इति न तत्सत्वं मृगशिरसो दासन्तिकसंपात-स्थत्वसाधनायालमित्युक्तमेव । उक्तरीत्या द्वादशदिनपर्यन्तं सवत्सरबहिर्योगो

1. ऋ. वे. १:१६१:१३

बहिष्पवमानस्तोत्रे निर्मन्नामकसोमवशतस्तदीयविष्णुनिवशतश्च विज्ञायत इति अवसरान्तरे प्रतिपादयिष्यते ।

यच्च मृगशिरस आग्रयणपात्रत्वेन यज्ञ कल्पनमित्युक्ति सा तु विरुद्धैव । तत्र बीजमुच्यते-ग्रहाणा सन्त्या सप्त, नामानि शुक्रमन्थीप्रभृतीनि शुक्रमन्थीस्य तया सोमसूर्यवाचकत्वेन प्रसिद्धग्रहवाचकत्वमिति सदृशसाम्याद्ग्रहवोधकत्वं आग्रयणशब्दोऽप्याकाशस्थ मगनक्षत्र बोधयतीति ।

यतो ग्रहसन्त्या सामयागे पञ्चदशविधा । तथाहि सवनेषु ग्रहा कर्मिका केचन पुनरुक्ता । *यथा प्रात सवने-उपांशु* १, *अन्तर्याम* २, ऐन्द्रवायव ३ मैत्रावरुण ४, आश्विन ५, शुक्र ६, मन्थी ७, आग्रयण ८, उक्थ्य ९, ध्रुव १०, वैश्वानरो ग्रहा कल्पित ११ ऋतुग्रहौ १२, १३, ऐन्द्राग्न १४ वैश्वदेव १५ इति । मध्यन्दिने सवने-शुक्र १, मथी २, आग्रयण ३, उक्थ्य ४, मरुत्वतीयास्त्रय ५ ६, ७, माहेन्द्र ८, दधिग्रहश्च ९ इति । तृतीय सवन-आदित्य १, सावित्र २, वैश्वदेव ३, पात्नीवत ४, हारियोजन ५ इति ।

तत्रापि केचन औलूखला उच्यन्त उलूखलाकारपात्रेण गृह्यन्त । केचन स्थालीग्रहा उच्यन्त । केचन उभयतोमुखा । इति तथा नानात्वत्वम । तत्र साकल्येन नवौलूखला.,चतस्र स्थाल्य (अर्थात् स्थालीग्रहाश्चत्वार ) द्वौ ऋतु-ग्रहौस्त्रुङमुखाकृतौ, उभयतोमुखौ इति १५ । ऐन्द्राग्नवैश्वदेवमारुत्वतीयमाहेन्द्राणामनुपात्रेण ग्रहणम्, दधिग्रहाऽग्निहोत्रहवण्या गृह्यत हूयत च ।

सावित्रवैश्वदेवपात्नीवतानामुपांश्वन्तर्यामयोरन्यतरेण पात्रेण हारियोजनस्य द्रोणकलशेन ग्रहो होमश्चेति । अत्र शुक्रामन्थिनोरत्व केवलमादित्यचन्द्रम परत्वेन वचसमवशिष्टेषु ग्रहाणा मगलादीनि नामानि न भवन्तीति कथ मृगशिर परत्व आग्रयणस्य साधन स्यात् । आग्रयण स्थालीग्रह इत्युच्यते । कथ तत्र मृगशिरसि तत्सम्भव ।

एतावता विस्तरेण विवेचनेन विज्ञायते यद्दीक्षाब्राह्मणे उच्यमाना दीक्षा॰ र्थस्य काला विभिन्नकालिका वर्षादिरूपास्तत्र फाल्गुनपौर्णमास्या वर्षादित्व पूर्वकालिकमेव चैत्र्या अपीत वर्णन न युक्तिमदिति विज्ञानम् । वर्षादित्व वसन्त सपातादेर्वसन्तस्यैवेति पूर्व विज्ञात मकरादित्व पाश्चात्यमिति वर्णनमयुक्तिमिति प्रदर्शितम् ।

देवयानादेश्चातुर्विध्यस्य पूर्वसिद्धत्वेनैकस्मिन्नेवावसरे त्रयाणा वर्षादीनां समव प्रतिपादित । स एव दीक्षाब्राह्मण गृह्यत । तत्रैकाष्टकाख्या वर्षादिर॰ प कालमारभ्य, माघकृष्णाष्टम्या एकाष्टकात्वमुच्यते-माघ्या परस्तायाऽष्टमी ज्येष्ठया सपद्यते तामेकाष्टकेत्याचक्षत इति वचनेन ।

तत्र संपद्यन्तां नाम साष्टमी ज्येष्ठया। एकाष्टकात्वं कुतस्तस्याः। यतोऽष्टकशब्दोऽष्टावयवकसमुदाय बोधकः, न त्वष्टम्यां तादृशत्वम्। एकशब्दार्थः प्रधानत्व मुख्यत्वं वा तद्योगश्च दूरे एव। तस्मादत्रैकाष्टकायोगादेकाष्टकात्वं तच्च मून ग्राचक्षत इति वचने संप्रदायनः प्राप्तिमिति बोध्यते। याजुषे त्रिंशदुपस्तावके सूक्त उपसि एकाष्टकाशब्देन व्यवहारः। एकाष्टका तपसा तप्यमानेत्यादिना स्पष्टः। उपस्यप्यष्टकशब्दयोगश्चौपाधिकः।

तत्र सुमेरुकुमेर्वोर्विषुववृत्तसंपतितयाम्योत्तरवृत्ते छेदबिन्दुत उभयतः पार्श्वयोश्चतुर्विंशत्यंशपर्यन्तं प्रतिसम्वत्सरमादित्यस्य गमागमौ भवतः। तत्र प्रतिपार्श्वं चतुर्विंशपर्यन्तं गमागमाभ्यां मासषट्कमुपयुज्यते। एवं चैकमासार्थं तत्रांशाष्टकमुपयुज्यते।

तत्रोदयात्पूर्वं सवितुर्मासपर्यन्ता स्थितिस्ततः पूर्वं मासपर्यन्तोपसःस्थितिरिति तानंशानुपाधित्वेनोपादायोपसोऽष्टकव्यवहारः। सा माघ्यामष्टम्यां प्रथमेति एकाष्टका तद्योगादष्टमी तच्छब्देन बोध्या इत्यन्यत्र विस्तरः।

फाल्गुनस्य संवत्सरमुखत्वेन वर्णनेन फाल्गुनादिः सावित्रकालाभिप्रायेण चैत्रादिर्मासस्य तु आदित्योदयरूपपर्वादित्वेन अयाणामेकत्र ग्रहणस्य तत्र वर्णनात्। एतावता नक्षत्रियप्रजापतेरनुरोधेन संगानस्यासर्ववृत्तभ्रमेण पञ्चानामेव नक्षत्राणां नियमनस्य सकृद्दर्शनमात्रेणासम्भवेन पुनः पुनस्तत्र प्रवृत्तिः सांपातिकपरिभ्रमांशानां संख्यानियमनस्यापि अनेकवारदर्शनसाध्यत्वेनानेकेषां पर्यायाणामपेक्षणे एकैकस्य पर्यायस्य सप्तसहस्रवर्षापेक्षया अनेकवारं पर्यायापेक्षणे पर्यायाणां संख्याया अनियमेन वेदकालस्याप्यनियमनेनावधारणं दुःशकमेवेति दिक्।

## २१. ऐतरेयब्राह्मणोक्तस्तोत्रशस्त्रविपर्यासस्य वास्तविकं निरूपणम्

आदित्यस्योदयावसरेऽस्तावसरे च खण्डितबिम्बता, तत्रोदयावसरीयखण्डितबिम्बस्य यथा आग्रयणपदबोध्यत्वमेवमुदयावसरीयस्य लोकभेदेनास्तावसरीयस्य च तस्यैतरेये स्तोत्रशस्त्रविपर्यासेन प्रतिपादनं क्रियते। तथाहि तत्रोच्यते"देवरथो वा एष यद्यज्ञस्तस्यैतावान्तरौ रश्मी यदाज्यप्रउगे तद्यदाज्येन पवमानमनुशंसति प्रउगेणाज्यं देवरथस्यैव तदान्तरौ रश्मी विहरत्यलोभाय तामनुकृति मनुष्यरथस्यैवान्तरौ रश्मी विहरन्त्यलोभाये"ति।

यथा वै स्तोत्रमेवं शस्त्रमिति स्तुतमनुशंसतीत्यादिवैदिकवचनतो याज्ञिकव्यवहाराच्च स्तोत्रं पूर्वं तत्समानरूपं शस्त्रं तत इति क्रमः सर्वत्र स्तोत्रशस्त्रवचने। परन्त्वसाज्यप्रउगशस्त्रयोर्विषये विपर्येति। बहिष्पवमानस्तोत्रं प्रथमं तत्समानरूपेण प्रउगेण शस्त्रेणानुशंसनीयम्।

एवमाज्यस्तोत्राणि परवर्तीनि तानि समानरूपेणाज्यशस्त्रेणानुशसनीयानि, परन्तु बहिष्पवमानस्तोत्रमाज्येन शस्त्रेण अनुशस्यते, आज्यस्तोत्राणि च प्रउगशस्त्रेण होत्रकशस्त्रैश्चानुशस्यन्ते सोऽयं विपर्यास उक्तब्राह्मण उच्यते। तत्र विहरतीत्यनेन विहरण विपर्यय उच्यते। अत्र कुतोऽयं विपर्यास कुतो वा विपर्यासोक्ति किन्निमित्तो वा विपर्यासकल्पनबीजभूत प्राथमिक. क्रम. कीदृशो वा स इति विचाराः प्रादुर्भवन्ति।

नैतेषां विषये ब्राह्मण किमप्युच्यते। प्रत्युत निमित्तानुल्लेखात्सिद्धवद्भावेन तद्ग्रहणाच्च प्राथमिक क्रमो निर्हेतुक. स्वाभाविक इति गृहीत्वैव परवर्तिविपर्ययमात्र ब्राह्मण उल्लिख्यते। तस्य निमित्त तत्र प्रतिपाद्यते, देवरथकल्पनासामञ्जस्यम्। अतएव तत्रस्तोत्रशस्त्रयो. रश्मित्वेन तयोर्विपर्यासो लोभाभावार्थेत्युच्यते।

स च लोभाभावो वैपरीत्याभावेन सामञ्जस्यपर्यवसायी। अतएव लोके दृश्यमानस्य रथादेरान्तररश्मिविपर्यासस्य प्रवृत्ति। वस्तुतोलोके रथादेरान्तररश्मिविपर्यास. प्रत्यक्षसिद्धवाहननियन्त्रणद्वारा दार्ढ्यमूलको न तु यज्ञे क्लृप्तदेवरथत्वोपपादकस्य आज्यप्रउगयोरश्मित्वकल्पनस्य तयोर्वा रश्मिरूपयोर्विपर्यासस्य वशात. कल्पितो भवति।

किञ्च तत्क्लृप्तावपि आन्तरयोरश्मिरूपयोर्विपर्योरश्मिरूपयोर्विपर्यासेन वस्तुतो देवरथस्य न कोऽप्युपकारः सिध्यति। कल्पनाया अव्यवस्थितत्वेन रथत्वकल्पनाया असत्त्वेऽन्यरूपकल्पनाया वा तस्य विपर्यासस्यालोभसाधकत्वस्योपपादयितु शक्यत्वात्। तस्मान्नेयं कल्पना साध्वी।

किञ्च प्रथमक्रमस्य प्रामाणिकस्य सिद्धौ तद्भिन्नरूपस्य तस्य विपर्ययोक्तिकल्पनसम्भव। स एव कुत क इत्यत्र प्रमाणानुपलम्भ। किञ्चात्रैतस्य आनुष्ठानिकक्रमस्य विपर्यासरूपत्वे मौलिकाविपर्यस्तक्रमस्यापि कुत्रचन प्रयोगस्यावश्यकता।

तदसत्त्वे तु अय विपर्यस्यत्वेनोच्यमान क्रम एव मौलिक इति तस्य विपर्ययस्तत्वरूपस्यैवाभावापत्तेर्यज्ञे देवरथकल्पनोपपादकत्वस्याप्यभावापत्तेः। तस्माद्विभिन्नमूलनिबन्धनत्व तस्य वक्तव्यमिति। अहेतुकत्व तु विपर्यासकल्पनस्यैवानुदयाद्दृश्यक्रमस्यैवाविपर्यस्तरूपत्व स्यादिति।

यत्तु आज्यनामवशात क्रमस्य मौलिकत्वम्। आज्यस्तोत्रस्याज्यशस्त्रेणानुशसनस्यौचितत्व नामसाम्यात्। तद्वैपरीत्ये च प्रउगस्यापि विपर्यासोऽर्थ सिद्ध इति। तदपि न मनस्तोपमावहति। अस्तु नाम नामसाम्य मास्तु विपर्यय

इत्यस्यापि संभवात्। मूलक्रमयोगिस्थलानुपलम्भेन विपरीतापादनासंभवात्। तस्मादन्यनिमित्तनिबन्धनत्वं व्यवस्थाप्य विपर्यासादेर्वचनं कर्तव्यम्।

ब्राह्मणे च तदनुपलम्भ इति चेदत्रोच्यते–ब्राह्मण प्रामाण्यादत्र विपर्यासो मन्तव्यः। विपर्यासार्थं च मूलक्रमोऽन्यरूपः स्वीकार्यः। स च नामसाम्यनिबन्धन एव। ननु चोक्तं नामसाम्यस्या प्रयोजकत्वमिति।

भवेदेतदेवं यदि अहेतुको नामोपनिबन्धः स्यात्। न च तथा। ब्राह्मणान्तरे आज्यशब्दस्य निर्वचनमुच्यते, "यदाजिमीयुस्तदाज्यानामाज्यत्वम्' इति। आजि-धावनस्य तत्पदनिर्वचने हेतुत्वबोधनात् तच्च प्रकृते कथं संभवतीति विचार्यम्। स्तोत्रशस्त्राणां शब्दरूपाणामचेतनानामाजिधावनासम्भवात्। यत्वर्थवादत्वेन स्वार्थे तात्पर्याभावेन विरोधेऽपि न दोष इति। स्वार्थे तात्पर्याभावेनाप्रामाणिकत्वे आज्यशब्दप्रयोगाधीनक्रमविपरीतक्रमकल्पनाया ब्राह्मणोक्ताया उपपादनासम्भवात्।

न च विरोधोक्तिरपि अर्थवादान्तर्गतेति न तत्र साक्षोदक्षमर्हतेति। तद-युक्तम्। प्रशंसार्थमुपादीयमानोऽप्यर्थवादः साक्षात्प्रशंसामबोधयंस्तदर्थं प्रकारान्तर-मनुसरंस्तदर्थहेतुविशेषनिबन्धनत्वमेवेति संसूचयति। एवं च प्रकृतेऽपि साक्षा-त्प्रशंसाबोधनमकृत्वा प्रकारान्तरेण प्रशंसा बोधयंस्तस्य हेतुविशेषनिबन्धनत्वं सूचयति इत्येव युक्तम्।

प्रशंसाया तस्याविवक्षितार्थत्वमिति वचनमात्रेण तत्परित्यागकल्पनानौ-चित्यम। अविवक्षितार्थत्वेन तद्व्याख्याने व्याख्यातॄणां प्रयत्नवैयर्थ्यात्। किञ्च शबरस्वामिभिस्तादृशस्थले नित्यं कञ्चनार्थं गृहीत्वा तदुपपादनस्य वचनम्। वार्तिककृता तादृशस्थले दिक्प्रदर्शनार्थं नित्यार्थपरत्वेन व्याख्यानं तत्सर्वमयुक्त-मापतेत्।

किञ्चात्र रश्मिरूपत्वेन विहरतीति विहरणस्य विधिः, प्रकारान्तरेण तस्याप्राप्तत्वात्। विहरतीति पदस्य विपर्यासार्थकत्वेन कथं स इति विचारः। भाष्यकृता तत्पदस्य संपादनार्थत्वव्याख्यानेन विरोधानुपस्थापनमेव। परन्तु तथा व्याख्यानेनात्र विरोधाभासनेऽपि वचनान्तरेण प्राप्तस्य विरोधस्यानुपपादनं स्यात्।

यथा वै स्तोत्रमेवं शस्त्रम् इत्यनेन साम्ये प्राप्तेऽत्र प्रकारान्तरस्याश्रयणेन विहरतीत्यस्य विरोधकार्यकत्वस्यैवोचितत्वम्। अत एवार्थवादेन विरोधस्यैव विधिप्राप्तस्य प्रशसनं क्रियत इति तस्य संगतिः। तस्मान्मीमांसाभाष्यवार्तिक-कारवचनानुसारेण कथमस्य ब्राह्मणोक्तार्थवादस्य नित्यार्थपरतयोपपत्तिरिति विचारणीयम्। तदर्थमुच्यते—

सत्यं, शब्दानामचेतनानामाजिधावनं न सम्भवति । समानात्स्थानान्नियतावधिदेशपर्यन्तं यत्किञ्चिद्वस्तुनामकर्त्तं सभूय धावनस्याजिपदार्थत्वात्। तत्र फलेच्छया धावनस्य चेतनसम्बद्धस्याचेतनेष्वसम्भवस्तथाप्याजिसम्बद्धार्थप्रकाशकत्वाद् गौणं आजिसम्बन्धस्तद्वशतः शब्दात्मकस्तोत्रस्याप्याज्यशब्दव्यवहार्यत्वम्। यदाजिमीयुरित्यत्राज्ययने शब्दप्रवृत्तौ निमित्तमर्थवृत्तीति तेषामाज्यशब्दवाच्यता ।

अर्थेऽपि यदाजिमीयुरित्यत्रास्पष्टता कर्तृ पदानुपादानात्, तथापि स्थलान्तरे ब्राह्मणे "देवा वै सोमस्याग्रपेये न समजानत तस्मिन्देवा न समजानत ममेदमस्तु ममेदमिति । ते सञ्जानाना अब्रुवन्नाजिमस्यायामहै स यो न उज्जेष्यति तस्येदं भविष्यति" इति देवानामाजिधावनस्य वर्णनात् । तथा अश्वतरीरथेनाग्निराजिमधावत् इत्यादिना देवतानामाजिधावने वाहननिर्देशाद्देवताया वाऽऽजिधावनकर्तृतया ग्रहणम् ।

आजिधावनदेशश्च 'तत्र ब्राह्मणे तेऽग्नेर्गृहपतेरादित्यं काष्ठामकुर्वत' इत्यनेन आदित्यपर्यन्तो गृहपतिमग्निमारम्य देशो वर्ण्यते । तस्मिन्देशे आजिधावनं देवानाम् । देवाश्च किरणरूपाः । तेषामाजिधावनस्य—

ईर्मान्तासः सिलिकमध्यमासः संशूरणासो दिव्यासो अत्याः ।
हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः[1] ॥

इति मन्त्रे हंसा इवेत्युपमानाद्दिव्यमज्मसिति वर्णनेन किरणानामाजिधावनमिति स्थलान्तरे निरूपितम् । तेषां किरणानामादित्यास्तमये तद्बिम्बवियोगेन तस्य च बिम्बस्य सहस्रकिरणवत्तया सहस्ररश्मेः लाभार्थं बिम्बपर्यन्तं धावनम्, तच्चादित्यास्तमयमारभ्येति । आदित्यस्यास्तमयेऽग्नौ प्रवेशवर्णनेन अस्तशब्दस्य निघण्टुषु गृहार्थकेषु नामसु पाठेन गृहार्थत्वम् । एवं चास्तं गृहं प्राप्तस्याग्निरूपतापन्नस्य गृहपतित्वम् ।

तमिमं गृहपतिमग्निमारभ्य द्वितीयदिने उदेष्यत आदित्यस्य बिम्बपर्यन्तत्वात्तस्यादित्यबिम्बस्यावधित्वेन पूर्वोक्तो देश आजिधावनस्येति । तत्रास्तावसरे बियत्कालपर्यन्तं किरणानां सन्दर्शनात्तेषामाजिधावनारम्भः । मध्ये च तमोमये काले ते धावन्त एवेति कल्पना ।

पुनरुदयात्पूर्वं तेषां किरणानां दर्शनेन त एवेमे आजिं धावन्त इति विज्ञानात्तेषां किरणरूपाणां देवानामस्मुदयात्पूर्ववर्ती देशोऽऽजिधावनदेशत्वेन शेषभूतो गृह्यते । किरणाश्चोदयात्पूर्वं सवितृकालमारभ्य दृग्गोचरा भवन्तीति मन्त्रे सवितारमुद्दिश्योच्यते ऊर्ध्वभानुं सविता देवो अश्रेत् इति ।

---

१. ऋ. वे. १:१६३:१०

निरुक्ते सवितुः कालः यदा द्यौराकीर्णरश्मिरपहततमस्का भवति स सावित्रः कालः इति प्रतिपाद्यते । सवितुश्च मित्राभिन्नत्वम् उत मित्रो भवसि देवधर्मभिरित्यनेन मन्त्रे प्रतिपादनान्मित्रस्य मित्राय पञ्च येमिरे जना इत्यनेन पञ्चभिर्नियम्यत्वस्य वचनान्नियन्तारश्च पञ्चादित्योदयात्पूर्ववर्तिनो घटीपञ्चकरूपकालावयवा इत्यन्यत्र विस्तरेण निरूपितम् । तद्वशत उदयात्पूर्ववर्तिघटीपञ्चकरूपकालेनातिवाह्यः किरणोद्देशः किरणानामाजिधावनदेश इति फलति ।

तस्याजिधावनस्यादित्यमण्डलपर्यन्तत्वेन मण्डलस्यावधिरूपस्याजिधावनदेशत्वाभावान्न तस्मिन्नाजिधावनम् । द्वितीयदिनारम्भश्च सम्पूर्णमण्डलदर्शनतः प्रवर्तते इति सम्पूर्णमण्डलदर्शनतः पूर्ववर्तिखण्डितबिम्बदर्शनस्य कालो न दिनान्तरीयः । नापि स पूर्वदिवसीयरात्रिसम्बद्धः । तत्र बिम्बदर्शनप्रारम्भेण रात्र्या अवसानात् । एवञ्चायं खण्डितादित्यबिम्बसन्दर्शनकालो न पूर्वपरदिनयोरन्तः पतितो मध्यवर्तीति भवति । आदित्यकिरणविषये चेवं कल्पना वर्तते यदिमे किरणा अन्यत आगत्यादित्ये प्रविशन्ति ततो निर्गच्छन्ति चेति ।

अनयोः प्रकारयोः क्रमशोऽरनाभिभावेऽनारनेमिभावेन वचनम् । अन्यत आगत्य बिम्बे प्रविशतां तेषामराणामिव नाभौ प्रवेशो भवति । तत्र येनारेण चक्रस्य भूमिसंस्पर्शो रथचक्रस्थले सोऽरो नेमित आगत्य नाभौ संमुखं प्रविशति, यौ चारौ पूर्वोक्तस्य भूमिस्पृष्टारस्योभयपार्श्ववर्तिनौ भवतस्तौ तिर्यक्त्वेनाभिमुखं गच्छन्तौ प्रविशतः ।

एवमिमे किरणा अपीति तत्त्रैविध्यमभिप्रेत्य समानार्थकत्रिविधधातुप्रयोग एकस्मिन्नेव वाक्ये मन्त्रेषु । वह्निवर्णने वह्नि प्रत्युच्यते 'आजुह्वान ईड्यो वन्द्यश्चेति" । तत्र सम्मुखमागन्त्रभिप्रायेण ह्वेञ् धातोः प्रयोगः । सम्मुखमागत्य स्तूयमान इति तदर्थः । तथेड्यो वन्द्यश्चेति । तत्रेडनं स्तुतिर्वन्दनमपि स्तुतिः । तत्र वामभागतोऽर्थाद्रात्रिभागत आगत्य तस्मिन्पार्श्वे नमस्कुर्वन्तः स्तुवन्ति इति । यथा कश्चन गन्तुं प्रवृत्तो विरक्तः पश्चादागत्य नमस्कारपूर्वं सोऽनुनीयते तद्वत् । विश्वेषां देवानामेहिमायासोमाद्रवसः प्रभृतिविशेषणैरयं भावो व्यज्यते इत्यन्यत्र प्रपञ्चः ।

एवं सति वामभागतः समागत्य मण्डले प्रविशन्तो वन्दितारस्तैर्वन्द्य इत्यर्थः । दक्षिणपार्श्वतश्च समागत्यार्थाद्दिनभागत आगत्य बिम्बे प्रविशन्तः स्तोतारस्ते तदभिप्रायेणेड्धातोः प्रयोगः अग्निश्चादित्य इत्युक्तमेव । तेषां चैषां किरणानामयं विशेषो भवति तद्रात्रिकालीनानां केवलरश्मिरूपत्वं तत्र बिम्बवत्त्वाभावात् । दिनकालिकानां च सबिम्बरश्मिरूपतेति ।

रश्मयश्च येन मार्गेण गच्छन्ति तस्य छादनाच्छन्दांसीति कल्प्यन्त इति सामभागीयानां रश्मीनां केवलच्छन्दोवैशिष्ट्य स्तुतौ। तदेव प्रकारान्तरेणोच्यते केवलैरेव मन्त्रै स्तव इति। अथ शसनशब्देनोच्यते। दक्षिणभागीयानां तु बिम्ब-विशिष्टच्छन्दोवैशिष्ट्यम्। इदं स्तुतिस्तोत्रादिशब्दैरुच्यते। तत्र बिम्बस्य साम-शब्देन बोध्यत्वं ब्राह्मण उच्यते इति सामविशिष्टक साध्य स्तोत्रम्। तद्वहिर्न्दं-मानसाध्य शस्त्रशब्देनोच्यते इति निष्कर्षं ।

एवं चेमिर्मध्यभागमथात्खण्डितबिम्बमारभ्य स्तुति कर्तव्या। तत्रकेषां बिम्बराहित्यमपरेषां तत्साहित्यं भवति विप्रकर्षादिक तु सर्वं समं भवतीति स्तो-त्रशस्त्रयो सादृश्यम्, तदभिप्रत्योच्यते "यथा वै स्तोत्रमेव शस्त्रम" इत्यादि।

एवञ्च सति मध्यरूपे खण्डितबिम्बसन्दर्शनस्थले प्रारब्धा स्तुतिर्न रा रात्रिसम्बन्धिनी नापि दिनसम्बन्धिनीति। तस्य सपूर्वन स्तोत्रशस्त्रनामभि। एवं किरणसम्बन्धितया क्लृप्तव्यवहारानुरूप्येण यज्ञकर्मानुष्ठानेन तत्रापि तथैव व्यवहार ।

तथाहि दिनान्तर उदित आदित्य पवमान इत्युच्यते पवतेर्धातोर्गमनार्थेषु धातुषु निघण्टौ पाठात्। पवमानो गच्छन्। तदीय स्नान च दिनान्तरकालतो-बहिर्भूते खण्डितबिम्बदर्शनरूपमध्यस्थाने क्रियते। तस्य च स्थानस्य दिनान्तर-स्थानतो बहिर्भूतत्वेन तद्बोधनाभिप्रायेणैतत्स्तोत्रस्य नाम बहिष्पवमानस्तोत्र-मिति। तत्साम्याय शस्त्रस्थले विरुद्धयोगार्थकपदयुतं शस्त्रं वक्तव्यम्। तच्च तादृश पद प्रउगम् इति। प्रउगशब्दश्च प्रोपसर्गायुज्धातोर्निष्पद्यते। यकारलो-पश्च वैदिक। प्रशब्देन विरुद्धो भावो द्योत्यते। यथा दिश प्रदिश द्यौ प्रद्यौ इत्यादिस्थले।

एवमत्र रात्रिविरुद्धयोग खण्डितबिम्बदर्शनस्थले च भवति। तत्र स्तोत्रा-नुरूप्याय न रात्रिविरुद्धसम्बन्धयोगिनो दिनान्तरसम्बन्धायोगिनो बोधक प्रशब्दन युग तच्छब्दबोध्यमित्यर्थं। तादृश शस्त्र वक्तव्यम्। तच्च प्रउग शस्त्र तादृश-मित्यय शब्दबोधनाभिप्रायेण मुख्य अमस्तमप्रयुज्यपरवर्तिशब्दबोध्यमाज्यना-मकमेव शस्त्रमत्र प्रयुज्यते।

सोऽयं विपर्यास, स च यज्ञे देवरथकल्पनया विद्यते ब्राह्मणे। यथा च लोके रथस्थले पार्श्वद्वययोरश्वद्वयनियन्त्रणाय प्रत्यश्वं प्रतिपार्श्वं रज्जुद्वयबन्ध क्रियते, तावता प्रत्येकाश्वनियन्त्रणेऽपि गमनानुसारेणैकस्याश्वस्य विनियन्त्रण-मपरस्य सुनियन्त्रणमित्यर्थमश्वद्वयस्याभिप्रेतनियन्त्रकरज्जुद्वयमध्ये प्रत्येक-मश्वसविधपार्श्ववर्तिरज्जुद्वयमान्तरं पार्श्वान्तरस्य बहिष्ट्वेन तत्रत्यरज्जुद्वयस्य बहिष्ठत्वात्, तदान्तरं रज्जुद्वय विपर्यस्यते, एकस्य रज्जुपरस्य रज्ज्वा योज्यते, तदीया च रज्जुः प्रथमस्य रज्ज्वा संयुज्य रज्जुद्वयं प्रत्यश्वं संपाद्यते सारथिभि ।

तावताश्वद्वयं सुनियन्त्रितं विनियन्त्रितं च भवति गमनानुसारम्। तावता च गमनस्याभिमतदिक्कतया तदभावरूपव्यामोहाभावो भवति। सोऽयमलोभो रथस्थले ग्रान्तररश्मिविपर्यासनिवन्धनो यथा लोके, एवं यज्ञे रथत्वकल्पनायां रश्मिस्थानीयत्वेन क्लृप्तशस्त्रद्वयविपर्यासे लोभो व्यामोहाभावो भवतीति तदर्थं शस्त्रविपर्यासः कर्त्तव्य इति ब्राह्मणे वोध्यते। तत्र शस्त्रद्वयाविपर्यासे कथं व्यामोहप्राप्तिः कथं च विपर्यासेन तन्निरास इति नैतद्विशदमुक्तं ब्राह्मणे, रथदृष्टान्तवर्णनेन व्यामोहतदभावयोः सामान्येन तद्ज्ञानं तावता तद्विशेषज्ञानाभावोऽतस्तज्ज्ञानार्थः प्रयत्नोऽपेक्षितः।

स चैवं शस्त्रप्रयोगमूलभूता सौरी परिस्थितिरसन्दिग्धरूपेण वोधनीया शस्त्रद्वारा। सा चेत्तया बुद्धा न भवेत्स व्यामोहोऽत्र। यथावद्वोधाभावरूपव्यामोहाभावो विपर्यासस्य फलम्। तत्र दक्षिणपार्श्वीयरश्मिसम्बन्धाभिप्रायेण यथाऽत्र प्रथमेन स्तोत्रेण वहिष्पवमाननाम्ना सन्दिग्धदिनान्तरसम्बन्धाभावो रात्रिसम्बन्धाभावश्च वोध्येते, तथा वामपार्श्वीयसम्बन्धाभिप्रायेण शस्त्रतोऽपि दिनान्तरसम्बन्धाभावरात्रिसम्बन्धाभावयोरसन्दिग्धरूपेण वोधोऽपेक्ष्यते। स च प्रथमशस्त्रस्य प्रउगेति नामवशतो सन्दिग्धो न भवति।

यद्यपि विरोधार्थेन प्रशब्देन रात्रिविरुद्धसम्बन्धबोधो सन्दिग्धस्तथापि दिनासम्बन्धबोधस्य सन्दिग्धतया व्यामोहः। रात्रिविरुद्धसम्बन्धश्च दिनासम्बन्धे मध्यमस्थाने दिनसम्बन्धे च समान इति व्यामोहप्राप्तिः। यदा च प्रउगं प्रथमं शस्त्रनामशस्याज्यं प्रथमं शस्यते तदानीं तस्य व्यामोहस्य निवृत्तिः। न चाज्यशस्त्रवचनेऽपि व्यामोहसत्वमेव। ग्राज्यशब्देन दिनरात्र्योरुभयोः सम्बन्धस्य प्राप्तिरिति वाच्यम्। शस्त्रबोधकेनाज्यशब्देन व्यामोहप्राप्तावपि शस्त्रगतमन्त्रैस्तस्य निवृत्या दोषाभावः।

ग्राज्यशस्त्रे हि भागत्रयेण त्रिविधाः मन्त्राः पठ्यन्ते। प्रथमेन भागेन तूष्णींशंसनामकमन्त्रपाठः। द्वितीयेन निविन्नामकमन्त्रपाठः। तृतीयेन भागेन सूक्तगतमन्त्रपाठः। तदभिप्रायेणोच्यते तूष्णींशंसनिवित्सूक्तैराज्यशस्त्रं त्रिपर्वकम् इति। तत्र तूष्णींशंसमन्त्रवशतो व्यामोहनिवृत्तिः। तूष्णींशंसनामकास्त्रयो मन्त्राः भूरग्निज्योतिर्ज्योतिरग्नीम्, इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रोम्, सूर्यो ज्योतिर्ज्योतिः स्वः सूर्योम्।

एतैस्त्रिभिर्मन्त्रैः खण्डितादित्यबिम्बवर्णना। ग्रादित्योदयप्रारम्भेऽग्निज्योतिषोः पर्यायरूपता, मध्यभागे चेन्द्रज्योतिषोः पर्यायरूपता, उदयसमाप्तेः पूर्वं मध्यभागोत्तरं च सूर्यज्योतिषोः पर्यायरूपतेति। एवं खण्डितादित्यबिम्बसन्दर्शनसम्बन्धबोधनेनैते रात्रिसम्बन्धाभावो विस्पष्टं बोध्यते। तत एव च दिनसम्बन्धाभावस्याप्यसन्दिग्धतया बोधाद्व्यामोहाभावः। स चोक्तरीत्याशस्त्रविपर्ययनिबन्धन इति ब्राह्मणतात्पर्यमिति दिक्।

भाष्यकारेणोक्तब्राह्मणव्याख्यावसरे विहरन्तीत्यस्य सम्पादयन्तीत्यर्थः कृतः, स न युज्यते। तथा सति रथकल्पनाया आन्तररश्मिकल्पनाया विहरन्तीति विपूर्वकहृधातोश्चोपादानं निरर्थकं स्यात्। विपूर्वकहृधातोश्च विपर्यासार्थकत्वं विहृतं षोळशिनं शंसतीत्यादिषु स्पष्टम्। विरोधार्थत्वे विचारः उपरिष्टात्प्रदर्शित इति दिक्।

२२ ग्रावस्तुतिविषयकाख्यायिकायाः आदित्यपरव्याख्यानम्

ऐतरेयब्राह्मणे ग्राव्णः स्तुतिसम्बन्धेनाख्यायिकोच्यते। "देवाः सर्वे चरौ सत्रमनुतिष्ठन्ति स्म। तेषां पाप्मनो विनाशो न जातस्तदानीं काद्रवेयोऽर्बुदः सर्पर्षिर्मन्त्रकृन्नानुवाच, भवतामेका होत्रा क्रिया कृता, ततः पाप्मविनाशो न जातः। अहं वस्ताः क्रियां करवाणि भवतां सत्रे, तेन पाप्मनो विनाशो भवेदिति[1]"।

देवताभिः सम्प्रतिपन्नेऽस्मिन्नर्थे स काद्रवेयः प्रतिदिनं मध्यन्दिने समागत्य ग्रावस्तुतिं करोति। तथापि "सोमो राजा देवानां पाप्मनो विनाशेन देवानुन्मत्ता-ञ्चकार। तदानीं देवैः स्थिरीकृतम्, यदयमाशीविषोऽस्माकं राजानमवेक्षतेऽतस्म-दीयं विषमत्र सोमे उपसृतं ततो नो माद" इति। ततोऽस्याक्षिपिनाहं कुर्म इति स्थिरीकृत्य तथाऽनुष्ठितेऽपि पुनर्देवानामुन्मादः समभूत्।

तदानीं पुनस्तैरेव स्थिरीकृतं यदयं स्वीयैरेव मन्त्रैः स्तौतीति तन्मन्त्रेऽपि विषसम्पर्केणैव उन्मादोऽतोऽस्य मन्त्रान् स्वीयमन्त्रैः सम्पृक्तान् कुर्म इति तथानु-ष्ठिते देवानां पाप्मक्षयः सञ्जातस्तदनुसारेण ग्रावस्तुतिर्मध्यन्दिने कर्तव्या। यो विजानाति एवं तस्यापि पाप्मनो विनाशो भवतीति।

अत्रानेके विचाराः प्रादुर्भवन्ति। को वायमर्बुदः काद्रवेयः, कथञ्चैतस्या-र्बुद इति नाम, कथं च स सर्पः सन् स्तुतिमकरोत्, कथञ्चासावृषिर्मन्त्रकृच्च। कथं तदक्षिसम्बन्धात् सोमे दोषः, कथञ्च देवानामुन्मादः, अक्षिपिनाहेऽपि तदीय-मन्त्रेऽपि तदीयविषरूपदोषसङ्क्रमः, कथं मन्त्रपाठमात्रेण सोमे दोषसंक्रमः, कथं च तद्वशतो देवानामुन्मादः, कथं च तन्त्रान्तरसम्पर्कः, कथं तद्दोषनो निवृत्तिः, कथञ्च देवताभिरनुष्ठितमिति तत्सादृश्यात्, कर्मणि माध्यन्दिने एतदनुष्ठानमि-त्युक्तिः। नित्यत्वात् कर्मस्वरूपस्य देवतानुष्ठानतः पूर्वं कीदृशं स्वरूपम्।

यद्यपि न सर्पऋषिः, कथं तर्हि ब्राह्मणे तदुक्तिः। कथं तदीयोक्तविषग्राव-स्तुतिकरणेन सर्पाणां जीर्णत्वक्त्यागो नवीनत्वक्प्राप्तिरित्यादयः। अर्थवादत्वे-नाविवक्षणमिति तत्र न दोष इति। तदपि न युक्तम्। अर्थवादत्वेनाविवक्षणे

---

1. ऐ. ब्रा. ६:१:१

किमिति तदर्थव्याख्याने प्रवृत्तिः। एवं सर्वचरुशब्दोऽत्र देशबोधको यज्ञबोधको वा, पाप्मापि दुरदृष्टं वा अन्यो वेति।

तत्र वेद आदित्यस्यैवैकस्य वर्णनाद् ब्राह्मणस्यापि वेदत्वेन तत्रोक्तः कथा अपि आदित्यस्यैव कर्मविशेषमवस्थाविशेषं वा वर्णयन्ति। ताश्च साक्षात्तं वर्णयन्ति साजात्येन वा तथा प्रवर्तन्ते। तत्रोदीयमानादित्यविषयेऽनेकाः कल्पना यत उदेति यत्रोदेति तद्देशद्वयाभिप्रायेण। तत्र यत्रोदेति तत्रासावपां सकाशत उदेति, उपसः सकाशत उदति, उदयाद्रितो जायते, रश्मिर्योज्यते, उत्पत्तिरेषा तत्र तस्य, दत्तोऽसौ हुतो वा यागे, इष्टो वेत्यादयो नानाविधाः कल्पनाः।

एवं यत उदेति तद्देशाभिप्रायेण तद्देशीयैरसौ हूयते, तत्र मृतिं प्राप्नोति, तत्रत्यानामुपरि विरक्तो गुप्तभावं गन्तुं गच्छति, उपसा वापह्नियते, वरुणेन बद्धो बन्धविमुक्ति क्रमशः कर्तुं प्रवर्तते, कृष्णवर्णतामुपगत इत्यादिका नानाविधाः कल्पना दृष्टिभेदेन। तादृशीमुदयावसरीयामादित्यस्य परिस्थितिमभिप्रत्यैषा कथा। आदित्य उदयन् कतिपयेन समयेनोदितो भवति। तत्समयश्च देशभेदेन न्यूनाधिको भवति।

यथा विषुवति तत्सविधवर्तिनि वा प्रदेशे कतिपयैर्निमेषैरसावुदेति। यथा यथाऽसौ ध्रुवाभिमुखे प्रदेशे उदेतुं प्रवर्तते तथा तस्योदये कालाधिक्यं भवति। ध्रुवप्रदेशे च पूर्णग्रहणापेक्षया त्रिभिः पर्यायैस्त्रिभिर्दिनैर्वा, अपूर्णस्यापि ग्रहणे चतुर्भिः पर्यायैश्चतुर्भिर्दिनैर्वा सम्पद्यत आदित्यस्योदयः। यथा भुव उत्तरपार्श्वे एवं दक्षिणपार्श्वेऽपि।

तत्र ध्रुवप्रदेशे भुव उत्तरपार्श्वे आदित्यस्योदये विलम्बमपेक्ष्यैषा कथा। तत्र देवाः किरणाः। तेषामपि विषये विविधरूपेण कल्पनाः। अस्तमुपगतस्यादित्यस्य पश्चात् समुदितरूपेण धावन्तस्तमनुनयन्तीव एहिमायासीरित्यादि अनुनयोपयोगिवाक्यजातं प्रयुञ्जाना इवेति। तदभिप्रेत्य वेदं वर्णने तेषामेहिमायासः पदेन वर्णना। तथेमे देवा आदित्यरूपसहस्रस्य सहस्रसंख्याकथनस्य लाभार्थं सम्भूयाजि धावन्तीवेति।

यथा लोके आजिधावनस्थले किञ्चन फलं लब्धुं नियताद्देशान्नियतदेशपर्यन्तं पद्भ्यां वाहनैर्वा अश्वादिभिः सम्भूय धावन्ति। तदेतत् स्पष्टं ब्राह्मणं निर्दिश्यते यथा–"तेऽग्नेर्गृहपतेरादित्यं काष्ठामकुर्वत देवा वा ओषधीषु पक्वाप्वाजिमयुः ते सञ्जानाना आजिमयुः इत्यादिना।

आजिधावने फलमपि क्वचित् सोमस्याग्रपानम् क्वचिद्विवाहे वहुपुलाभः, क्वचित् सहस्रादिलाभ इत्यादि। एवं देवानां यज्ञकरणमिति। तादृशं यज्ञनिमित्तकृत्याख्यायामुच्यते–देवाः सर्वचरौ सत्र निषेदुरिति। अत्र सर्वचरुरिति

यज्ञनाम । मन्त्रेश्वरहूयनेऽत्र यज्ञ इति सर्वचरुर्यज्ञ । चरुशब्दनोदनस्थानी तस्य ओदनश्चोच्यते । सा च स्याली अत्र दित्यमण्डलरूपा विवक्ष्यते । आदित्ये नानाविधवस्तुसाजात्येन विविधपादशिरोऽक्षिकुम्भादिरूपं कल्पना ।

एवमत्र चरुस्थालीत्वेन कल्पना। तस्या हविष्पूर्णता, हविश्चात्र तेजारूपम । तस्या सर्वस्य यज्ञ उपयोगेन तस्य सर्वचरुशब्देन व्यवहार । सत्रशब्देन वर्णनादत्र देवाना सर्वेषामविशेषभावेन कर्तृत्व यज्ञे । आदित्य एक देश प्रकाश्या परदेशप्रकाशनार्थमुदये पूर्वदेशस्थैरसौ हूयते इत्यादिकल्पना पूर्वमुक्ता ।

तदनुसारेण पूर्वदेशस्थं सवत्ररूपस्यैतस्य होमरूपकर्मानुष्ठान भविष्यत्यपरदेशप्रकाशनार्थं तच्च तमसा विनाशेनति । तदत्रोच्यते सर्वचरुयज्ञानुष्ठायिना देवाना पाप्मा तेजारूपतस्तद्विघातो न जात इति ।

अय भाव —उदयन्नादित्यो ध्रुवप्रदेशे सुमेरुकुमेरुरूपे त्रिभि पर्यायैरुदेतीत्युक्त प्राक । तत्र देवताभिरेतस्य सवस्य चरोरुपयोगेऽपि न सर्वात्मना तमोविनाश । यत पूर्वदेशस्थैतरपूर्व विद्यमान पूर्णबिम्ब हुतम् । तत परदेशे उदयप्रारम्भश्चास्मिश्च देशे परस्तादस्तप्रारम्भस्तत्रोदयस्य समाप्ति सम्पूर्णबिम्बदर्शने, तथा अस्तस्य समाप्तिरपि कृत्स्नबिम्बादर्शने, मध्यवर्तिखण्डितबिम्बदर्शनवेलाया न सर्वथास्तो वा उदय इति वा । तस्या दशाया सम्पूर्णबिम्बदर्शननाश्यतमसो न नाश पूर्णबिम्बस्य तदानीमसत्वात् ।

एवञ्च पूर्वपूर्णबिम्बसम्बन्धिन पूर्वबिम्बसम्बन्धिनो देवा पश्चादागत्य तत्र सम्बद्धा । होमवर्णनेन पश्चात् सम्बन्धस्य प्रतीत । होमशब्देन त्याग इव स्वीकारस्यापि प्रतीते परत्रत्युदितबिम्बसम्बन्धिनामप्यत्र सम्बन्धप्रतीति । सर्वोऽय पश्चात् पुरस्ताद्वा सम्बन्धस्तियक्सम्बन्ध । सम्मुखसम्बन्धस्तु नोक्त । तद्वचनाय प्रकृते तमसोऽनपहतिवचनम् ।

ततस्तेषा पाप्मानपहतिमालक्ष्य काद्रवेयार्बुदवचनम । तस्य ऋषित्वेन वचनेन सम्मुखसम्बन्धप्रतीति । ऋषोणा द्रष्टृत्वोक्ते । उच्यते च ऋषिर्दर्शनादिति । सर्प इति वचनान्मध्यदेशसम्बन्धप्रतीति । विश्वस्य लोकत्रयकल्पनाया सुमेरोर्द्योत्वेन कुमेरोर्भूत्वेनोभयोर्मध्यवर्तिदेशस्यान्तरिक्षलोकत्वेन वचनम । एषामपि पुनर्लोकत्रितयकल्पना ।

तथा सति भवो भूलोक उदयस्थलीय पश्चाच्चान्तरिक्षद्योलोकावुपरिष्टात् । एव सुमेरावपि । तत्र भुवो भूलोके आदित्यस्य भूसमृष्टा गति । एव तदीया किरणा अपि तत्र भूसमृष्टा एव गच्छेयु । किरणानाञ्च गति सर्पणरूपा । यथा सर्पन्त सर्पादयो गन्तव्य देश सम्बद्धा एव गच्छन्ति न पुनर्मध्ये विच्छिद्य विच्छिद्य सम्बन्ध गच्छन्तीति ते सर्पणात् सर्पा उच्यन्ते ।

अय भाव'—देवा. मर्वचरूप हविर्वर्हुत्वापि सम्पूर्णादित्यमण्डलरूप तद्गत सम्पद्यमान सर्वपाप्मविनाश न कृतवन्त । यतो मध्यवर्तिस्थान उदयद्रूपखण्डितविम्ववशतो न सर्वपाप्मविनाशस्तेषाम् । तत्रापि वामभागीयपार्श्व-सम्बन्धस्योदयावसरीयप्राग्वर्तिपूर्णविम्ववशत पाश्चात्यसम्बन्धो जातस्तावतारापि पूर्ववर्तिकाले खण्डितविम्वसत्तया पाप्मनो विनाश परवर्तिसम्पूर्णविम्ब-स्थलीय सम्बन्धोऽग्रवर्तिपाप्मविनाशोत्तर इति खण्डितविम्वदशास्यस्य पाप्मनो नाशो यज्ञक्रियाविशेषस्यानुष्ठानात् । सम्पूर्णविम्वोदयात् पूर्वपर्यन्त होतु क्रिया।

तदभिप्रेत्य सम्मुखसम्बन्धरूपहोतृक्रिया अननुष्ठानेन पाप्माविनाशोऽर्बुदोक्तः । स च व्यापारः सोमाभिषवग्रावस्तुत्यात्मा । तदभिप्रेत्य तेनोक्तमेका वै वो होत्रा कृतति । ता वै वोऽहृ करवाणीत्युक्त्या सम्मुखसम्बन्धो बोधित ।

ततो देवै. सम्प्रतिपन्ने तस्मिन्नर्थे ता स्तुतिकर्तु मध्यन्दिने येन मार्गेणागच्छति स मार्ग अर्बुदोदासर्पिणी प्रपतित्युच्यते । अर्बुदस्योर्ध्वभासमन्तादभिमुखमागमनस्य पद्धतिरूपो मार्ग इति तस्यार्थ ।

अय भाव.—उदयावस्थास्थले श्रा अर्धविम्बोदय पूर्वलोकसम्बन्धिताऽर्धस्यानुदितस्य पश्चाद्वर्तिनोऽर्धविम्बस्य परदेशसम्बन्धिता । एव सति पूर्वपरदेशाभ्यामसस्पृष्ट उभयो. सन्धानदेशो मध्यदेशोऽन्तरीक्षशब्दाभिलप्यः । स तु अत्यन्त स्वल्प इति तस्य प्रपच्छब्देन व्यवहार । अर्बुदस्तु पूर्वदेशसम्बन्धी अत एव सर्प, तेन स्वदेशत ऊर्ध्ववर्तिनि अन्तरिक्षलोकदेशे सम्मुखमादित्यस्यागन्तव्यमिति तस्या अर्बुदोदासर्पिणीति विशेषणम् ।

उदयबिम्बस्थले उक्तत्रिघलोकत्रयसम्बन्धिताऽप्यैतरेये उच्यते—"देवा यज्ञ कुर्वाणास्तानसुरा आगच्छस्तदानी त्वरमाणैर्देवैराज्यप्रउगयोः पूर्वभागे निष्कैवल्यमरुत्वतीययोर्मध्यभागे वैश्वदेवाग्निमारुतयो परभागे सस्थापनमिति । सर्वथैव प्रपदुदयस्थलीयपूर्वपरदेशासम्बन्धिसकीर्णमार्गरूपेति । स्तुतौ मन्त्रै सम्पर्कस्तु सम्यक् व्यामोहाभावार्थ. । व्यामोहस्तु सम्यक् पूर्वस्या दिशो ज्ञानाभावात् ।

इयमपि स्थलान्तरे ऐतरेय उच्यते—"देवा[1] यज्ञ कुर्वाणा दिशो न प्रजान'न्नित्यादिना । यश्च तद्विज्ञानफलः सम्मुखसम्बन्धो न केवल पूर्वदेशस्थस्यैव किन्तूत्तरदेशस्थस्याप्यपेक्षित. । यतोऽयमन्तरिक्षदेश उभयसम्बन्धी । तदर्थं परदेश-सम्बन्ध्यपि व्यापारोऽत्रापेक्षित इत्यभिप्रायेण स्वैर्मन्त्रैरर्बुदमन्त्राणा सम्पर्कवचनमुक्तम् । उभयसम्बन्धित्वेनैव सम्मुखसम्पर्क इत्यर्थ. ।

---

१. ऐ ब्रा. ६ ३ ५

अक्षिपिनाहबीजं तु तदानीं पूर्वदेशसम्बन्धितः पूर्णस्य विम्बस्यादर्शनं तदेव गृहीत्वाक्षिपिनाह उक्तः। सर्वस्यैतस्य कल्पने सर्पत्वमेव मूलम्। सर्पोऽह्ययाशाविषो भवति दर्शनेनापि विषं संक्रामतीत्यादिकल्पनगा उक्तविषकल्पना। एवञ्चेदं सर्वं वर्णनं देवेषूदयावसरीयं वर्णनमिति। वैपुववृत्तस्थलोयविम्बमध्ययोगः सुमेवभिप्रायेण, तद्योगे सम्यक् पूर्वदिग्रूपादित्यविम्बमध्यसिद्धिः। तस्या अत्राख्यायिकया वचनम्।

अयमेव भावः स्मार्त्तेषु कर्मसु योनिमेखलाविरहितेषु अर्थात् स्थण्डिलरूपेष्वग्निस्थानेषु सम्यक् पूर्वदिक्साधकस्थण्डिलसंस्कारेणाभिव्यज्यते। तद्विषये गृह्यसूत्रे "षड्लेखा उल्लिखयेति षड्लेखोल्लेनं स्थण्डिले कर्तव्यमि" त्युच्यते। तल्लेखोल्लेखनप्रकारश्च परिशिष्टे एवमुच्यते–'दक्षिणेऽष्टौ प्रतीच्यां चतुः, उदीच्यां द्वे प्राच्यामर्धमित्यङ्गुलानि त्यक्त्वा षड्लेखोल्लेख' इति। याज्ञिकानुसारेण दक्षिणत्र उपक्रमामुदगपवर्गामाधारलेखां विलिख्य तया असंमृष्टे प्रागायते द्वे लेखे लिखित्वा तयोर्मध्ये परस्परमसंस्पृष्टाः प्रागायतास्तिस्त्रो लेखा विलिखेदिति।

सर्वाश्च ताः प्रादेशपरिमिता इति। तत्र कुण्डस्य चतुर्विंशत्यङ्गुलिमानेन हस्तपरिमितचतुरस्रत्वेन सम्पादनम्। तत्र होमायामपेक्षितवह्निस्थापनार्थं पूर्वदिग्विन्वन्दुज्ञानार्थंपूर्वापरदक्षिणोत्तरगतिसाम्यायोक्तविधाङ्गुलिपरित्यागेन लेखालेखः।

सोऽपि दक्षिणात उदग्गन्तुं प्रवृत्तस्यादित्यस्य या गतिस्तदनुसारेणादित्यमध्यविन्दुरूपपूर्वासाधनार्थं वास्तवपूर्वारूपोक्तकुण्डमध्ययोगार्थं दक्षिणात उदग्गन्तुं प्रवृत्तस्य दण्डकलितन्यायेन पूर्वप्रवृत्तिविम्बस्यावशिष्टा अष्टावङ्गुलयस्तन्मितदक्षिणभागं कुण्डं परित्यज्य लेखालेखप्रारम्भः। तन्मध्ये दशाङ्गुलं विम्बं दक्षिणात उदग्गामि तन्मध्य एव वास्तवपूर्वायोगी। तद्विम्बस्योदग्वर्तितेजोऽभिप्रायवतीं रेखां परित्यज्य ततः परवर्ति दण्डकलितन्यायेन परस्तात् प्रवर्तमानविम्बीययाङ्गुलिद्वयं परित्यज्यते।

एवं सति कुण्डव्यासस्य दक्षिणगता अष्टावङ्गुलयस्तत उत्तरस्यां तेजोऽभिप्रायवती लेखाद्र्यंगुलान्तरे, ततो द्व्यङ्गुलान्तराले पुनर्दशाङ्गुलाभिप्रायकं रेखात्रयं ततः परस्तात् पार्श्ववर्तितेजोऽभिप्रायवतीं रेखां विलिख्य परवर्तिद्व्यंगुलभागः परित्यज्यते परवर्तिविम्बाभिप्रायकः। तत्र कुण्डस्य व्यासश्चतुर्विंशत्यङ्गुलः।



तत्र प्रथमं ८+२+१०+२+२=२४ प्रक्रमस्यैवं तस्य एवंरूपो रेखालेखने सम्पद्यते–एवं कुण्डव्यासोपयोगो दक्षिणोत्तरः पूर्वपश्चिमव्यासे पश्चिमायां चतुरङ्गुलपरित्यागः पर-

स्तात् प्रादेशपरिमिते दण्डकलितन्यायेन पूर्वापरबिम्बे तयो' सन्धिस्थानरूपपूर्वाविज्ञानाय कुण्डसम्बन्धार्थञ्च पूर्वस्यामर्धमङ्गुल परित्यज्य तिसृषु रेखासु रेखालेख: । तदत्र पूर्वपश्चिमव्याससम्बन्धिपूर्वोक्तमण्डलद्वयसन्धिस्थलरूप मुख्यपूर्वारूप बिन्दुस्थल तस्य दक्षिणोत्तरवर्तिव्यासोयमध्यमबिम्बमध्ये प्रदर्शनाभिप्राये णात्र कुण्डे पूर्वपश्चिम प्रादेशमात्र रेखात्रय विलिख्य प्रदर्श्यते । तत्र मध्यमरेखाया पूर्वोक्तपूर्वपश्चिमव्यासोयबिम्बद्वयसन्धिस्थान वस्तुत. पूर्वेति ।

तदनेन रेखालेखनेन दक्षिणोत्तरगते पूर्वपश्चिमगते स्वल्पमन्तरनुपगत भवति । तत उक्तरीत्या सर्वात्मना पूर्वबिन्दुप्राप्तिस्थलोयसर्वपाप्मविनाशाभावस्तदर्थमर्बु देन स्वल्पान्तरस्थतीयपाप्मविनाशार्थं सवनग्राव्ण. स्तवरूपहोत्राकर्मवचनोपक्षप. । स चार्बुदकर्तृकस्तवे मण्डलरूपसोमाभिषवग्राव्ण सम्मुखस्तवरूप । अत एवात्राभिष्टव इत्यभिशब्दप्रयोगः । स च विषुववृत्ताभिप्रायेणोदयप्राक्कालिकऋग्रूप । तस्य चोदयप्राक्कालिकस्य मन् धातुना बोध इति स मन्त्रशब्देनोच्यते । इमे च विषुववृत्ताभिप्रायका इति अर्बुदमन्त्रत्वेन व्यवह्रियन्ते । मन्त्र इत्युक्तेव न सर्वथा बिम्बमध्यरूपोदयस्पर्शितेति तद्वशत एतस्य सोमसम्बन्ध' ।

अोदय सोमस्थितिरिति एव सोमवशतो देवाना मदो मोह. पूर्वाविज्ञानरूपः । आदित्यबिम्बमध्याप्राप्त्या स । तदीयमन्त्रसम्पर्कोऽपि दक्षिणोत्तराभिप्रायेण स्वल्पमन्तरमनिवृत्त स्यादिति तन्निवृत्तये स्वीयमन्त्रसम्पर्को देवै. कृत' । पूर्वपश्चिमाभिप्रायेण दण्डकलितन्यायेन बिम्बद्वयमध्यस्यैव सम्यक् पूर्वात्वमिति ।

*तयोरुदयास्तमयस्थलीययो पूर्णबिम्बयोः परित्यागोऽक्षिपिनाहशब्दे-*नोक्त. । उदयास्तमयस्थलीययो: पूर्णबिम्बयोर्मित्रावरुणचक्षुष्ट्वेन व्यवहार. प्रसिद्ध' । अर्बुदशब्दस्य व्यक्तिविशेषणोक्तरीत्यादित्यस्यैव निमित्तविशेषैस्तद्विशेषणकल्पनया रूपकेण प्राण्युचितव्यवहारकल्पने मध्यन्दिन एव समागमनेन ग्रावस्तुतिकल्पनम् । एतावताऽस्या आदित्यव्यहाररूपपरिस्थिते सनातनत्वेन तदनुकारनिबन्धन न यज्ञाऽनुष्ठाने वैषम्यम् । आदित्यपरिस्थित्यनुकार एव यज्ञानुष्ठाने बीजम् । एतदभिप्रेत्यैवात्र ब्राह्मणे तदनुकृतिमध्यन्दिने एव ग्राव्णोऽभिष्टुवन्तीति वचनम् ।

यत्तु ग्रावस्तुतौ उपयुज्यमानानामृचा सख्याविषये नानाविधविकल्पोपस्थापनम् । यच्च अपरिमितपक्षसिद्धान्तनम् । तदुभयमपि अभिप्रायभेदेन समान फलमिति सर्वसग्रहायापरिमितपक्षाश्रयणम् । यदि ग्रावस्तुत्या पुरुष. स्तुतो मन्यते तर्हि पुरुषस्य शतसम्बन्धिता शतायुर्वै पुरुष इत्यादौ प्रसिद्धेति ऋक्ष्वपि सा सख्या प्रयोज्या ।

यदि देवा: स्तुता मन्येरन् तर्हि देवाना त्रयस्त्रिशत्संख्याया वेदे त्रयस्त्रिशद् वै देवा: अथ एकादशास इत्यादौ प्रसिद्ध्या ऋचामत्र त्रयस्त्रिशत्सख्या प्रयोज्या ।

वस्तुतस्तु अस्मिन्नुदयावसरे न पूर्णबिम्बत्वमाक्रियासमाप्तेरिति न पुरुषरूपता इति न पुरुषाभिप्रायेण स्तव इति शतसंख्याया अप्राप्तिः।

किञ्चात्रादित्यस्योदीयमानत्वेन न देवानां किरणानामपि प्राप्तिः। सकलबिम्बोदयोत्तरं तद्योगात्। अतो न देवाभिप्रायकत्रिंशत्संख्यायाः प्राप्तिः। अत्रार्धोदयबिम्बस्य ग्रावत्वेन ग्रहणेन स्तुतिरिति तस्यैतावत्त्वमिति परिमाणाप्रसिद्ध्या परिमितपक्षेण स्तुतिः। अतस्तस्य सिद्धान्तत्वेन वचनम्।

खण्डितबिम्बस्थले पुरुषत्वास्वीकारः "पुरुषं वै देवाः पशुमालभन्त" इति ब्राह्मणे व्यक्तः। अर्बुदस्यागमनमार्गस्यार्बुदोदासर्पिणीनामत्वेन प्रपदो वर्णनं तदपि आदित्यसम्बन्धित्वेनोदयार्थाया अन्तिमर्च एव तत्वेन ग्रहणेनोपपादनीयम। आदित्यस्योदयावसरे यत्रोदयस्तद्भिन्नदेशतो दानमिति कल्पना अन्यत्रोक्ता। प्रतिश्च दानम्। तद्रूपत्वं यथा दानार्थाया ऋचः याज्यया यजति प्रत्तिर्वै याज्या इत्यत्र प्रतिपादितं तद्वत्।

५३. इन्द्रपञ्चापराधविषये आदित्यपरं चिन्तनम्

ऐतरेयब्राह्मण देवताभिरिन्द्रस्य पञ्चापराधानुद्दिश्य सोमपानतस्तस्य वियोगः कृत इत्युच्यते। ते च पञ्चापराधास्तत्रोक्ताः। विश्वरूपं त्वाष्ट्रमवधीत्। वृत्रमवधीत्। अरुर्मघानवधीत्। यतीन् सालावृकेभ्यः प्रायच्छत्। बृहस्पतेः प्रत्यवधीदिति। तत्र विश्वरूपविषये तैत्तिरीये उच्यते—"[1]विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्त्रीयो सुराणां, तस्य त्रीणि शीर्षाण्यासन् सोमपानं सुराणनमन्नादनम्। स प्रत्यक्षं देवेभ्यो भागमवदत् परोक्षमसुरेभ्यः। सर्वस्मै वै प्रत्यक्ष भागं वदन्ति यस्मा एव परोक्षं वदन्ति तस्य भागः उदितस्तस्मादिन्द्रो बिभेदीदं वै राष्ट्रं विपर्यावर्तयतीति तस्य वज्रमादाय शीर्षाण्यच्छिनत् इति। वृत्रविषयेऽपि तत्रैवोच्यते "त्वष्टा हतपुत्रोऽवीन्द्रं सोममाहरत्। तस्मिन्निन्द्र उपहवमैच्छत। तन्नोपाह्वयत पुत्रं मे वधीरिति। स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्। तस्य यदत्यशिष्यत तत् त्वष्टा हवनीयमुपप्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति। स यावदूर्ध्वः पराविध्यति तावति स्वमेव व्यरमत। यदि वा तावत् प्रवणमासीद्यदि वा तावदध्यग्नेरासीत्। स सम्भवन्नग्नीषोमावभिसमभवत्। स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत। स इमान् लोकानवृणोद्यदिमांल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम्, तस्मादिन्द्रो अबिभेदपि त्वष्टा। तस्मै त्वष्टा वज्रमसिञ्चत्तपो वै स वज्र आसीत्तमुद्यन्तुं नाशकत्[2]।" इत्यादिना।

अरुर्मघानां विषये भाष्यकृतोच्यते—ब्राह्मणवेषधारिणोऽरुर्मघनामकानसुरानिन्द्रोऽवधीदिति। यतीनां विषयेऽपि तेनोच्यते यतिवेषधरानसुराञ्छस्त्रेण

१. तै. सं. २:५:१:१.
२. तै. ब्रा. २:४:१२.

छित्वा मालावृकेभ्योऽरण्यश्वभ्य. प्रादात् इति । बृहस्पतेरपि सम्बन्धेन तेनोच्यते बृहस्पतेर्वाक्यं स्वकीयेन वाक्येन प्रत्यवधीत् सोऽयं । प्रतिघाघातो न युक्त ।

तथा चापस्तम्ब. स्मरति "वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेच्छ्रेयसा चेति" । ऐतरेय ब्राह्मण चैवम्—"यत्रन्द्र देवता पर्यवृञ्जन् विश्वरूप त्वाष्ट्रमभ्यमस्त, वृत्रमस्तृत, यतीन्सालावृकेभ्य प्रादात्, अरुर्मघानवधीत्, बृहस्पते प्रत्यवधीदिति" ।

अत्र बहुविचारणीयमापद्यते, किमिमेऽपराधा इन्द्रस्य वास्तवा उत कल्पिता वा । आद्ये इन्द्रस्याजातशत्रुत्व वर्ण्यते तेन विरोध । यद्यपि विश्वरूपवधविषये युद्धवर्णना नास्ति तथापि वृत्रवधे बहुविधा तादृशी वर्णना तस्मामायेत्साते इति मन्त्रोक्त्या विरोध । निरुक्तकारेणोपमार्थेन युद्धवणना भवन्तीति वचनेनासामञ्जस्यम् ।

किञ्च वृत्रवधे मन्त्रेषु सोमापानजनितो हर्षो निमित्तमिति वर्ण्यते, तेन सोम मन्यत इति मन्त्रोक्त्या विरोध । यतीना वधोऽप्यकृत्य.। वृत्रादिस्थल युद्धादिना वधमात्रमुच्यतेऽत्र वधमात्रवर्णने कर्तव्ये सालावृकेभ्य. प्रदानवर्णनया को गुण' एवमरुर्मघाना वधोऽपि कस्मिन् देशे । नेत्राह्मणैर्वपथारिण इति कथ ज्ञायते बृहस्पतिप्रतिघे किन्निमित्त कथ चेत्यादि । अन्त्ये किं निबन्धनाः कल्पना इति ।

तत्र वस्तुसन्त देवताविशेषरूपमिन्द्र गृहीत्वा नास्तापराधादीना सम्यग् विवेचनसम्भव. । बहूना पदार्थानामव्यक्तत्वात् । नैरुक्तपक्षे लोकविशेषसम्बन्धन वायुरूपमिन्द्ररूप वा गृहीत्वा मंत्रावस्या वर्णनस्य इति । अत्र आदित्यरूपत्वपक्षमर्शासा देवतानामुपाधिभेदभिन्न आदित्य एव तत्तद्देवतारूप इत्येकात्मवादमते कथञ्चनोपपत्तिसम्भव. । तथाहि आदित्यो देवेषु प्रकाशमानो देव रूपो सुरेषु प्रकाशमानो देवरूपापेक्षया भिन्नरूपः ।

तादृशप्रकाशन शतपथे उच्यते—"वसन्तो ग्रीष्मो वर्षास्ते देवा ऋतवो देवेषु तर्ह्यसौ भवति देवास्तर्ह्यभिगोपायतीति" । एवञ्च वसन्त-ग्रीष्म-वर्षा-पर्यन्तर्तुत्रये यत्रासावनस्तमितो दृश्यते तत्र देवलोकस्तद्विपरीतदिशि असुरलोको देवविरोधित्वादसुराणाम् । तदभिप्रेत्य तत्रैव ब्राह्मणे देवलोकीयसंस्कारानुरोधेनोच्यते—"शरद्धेमन्त. शिशिर इति त असुरा ऋतवोऽसुरेष्वेव तर्हि भवति असुरास्तर्ह्यभिगोपायति" इति । असुरलोकश्च देवलोकविरुद्धदिशीत्युक्तम, देवलोकश्च भुव उत्तरस्मिन् पार्श्वे यत्रोक्तर्तुत्रय सातत्येनादित्यदर्शनम् ।

तादृशश्च मेरोरुत्तर शृग सुमेरुरूप तद्विरुद्धश्च मेरोर्दक्षिणशृंगरूप , कुमेरुरूपस्सोऽसुरनिवासस्तत्रर्तुक्रमो नामानि चान्यादृशानि, न तु देवलोकीयानि । नहि तत्र वसन्ताद्या ऋतव इति शरद्धेमन्तशिशिराणामृतूना नामानि च क्रमश्च भवन्ति, तस्माद्देवलोकीयसंस्कारानुरोधेनोक्त शरद्धेमन्तशिशिरेषु आदित्यस्य स्थितिरिति ।

एवञ्चासुरलोके देवलोके च कालादिव्यवहारो भिन्नैर्नामभि: प्रकारैश्च। तद्देवानां माने इति मन्त्राव्याख्याने उक्तम्। तत्र देवलोकाभिप्रायेण दिनं रात्रिरिति कल्पना, असुरलोकाभिप्रायेण दिनं रात्रिरिति कल्पना समानैव कालभेदेन। देवतासु दिने दवताभिप्रायेण रात्रौ आदित्येन देवतासूदितेन रात्रिस्थाने तेजो दीयते तस्य तेजस: सोमशब्देन व्यवहार: स च सम्पूर्णां रात्रिं यावत् सञ्चत: सोमो रात्र्यवसानावसरे इन्द्रेण पीत्वा रात्रिकालिकस्यान्धकारादिरूपवृत्रादेर्विनाश: क्रियते।

यथा देवतासु दिनं रात्रिरेवमसुरेष्वर्थात् कुमेरौ रात्रिर्दिनञ्च भवत:। तत्र दिवाभागे विद्यमानेनादित्येन रात्रिभागे तेजो दीयते। तस्य रात्रिभागीयस्य तेजसो न रेतस्त्वेन व्यवहार:, किन्तु भिन्नशब्देन व्यवहार:।

तदुक्तं मन्त्रे-"[1]यदन्यासु वृषभोरोरवीति सो अन्यस्मिन् यूथे निदधाति रेत" इति। आदित्य एकदेशासूषस्सु भ्राजमान:। तदेव प्रकारान्तरेण भ्राजनमुच्यते "वृषभ" इत्यादिना, यथा वृषभोगवां यूथे चरन् मर्दानवन्धनेन श्वासेन रवेण च युक्तो रोरवीतीत्युच्यते।

एवमसावादित्यो गोशब्दबोध्यासूषस्सु रेतस्तद्रूपं तेजो दधातीति। तत्रान्यदेशीयासूषस्सु भासमानं तेजो दिनभागीयस्यैवादित्यस्येत्यर्थ:। रेत: शब्दबोध्यत्वं मन्त्रे उच्यते प्रश्नप्रतिवचनाभ्यां "[2]पृच्छामि त्वा वृष्णो अश्वस्य रेत:[3]" इति प्रश्न:, "अयं सोमो वृष्णो अश्वस्य रेत:" इति उत्तरम्।

एवञ्च रेत: सोमस्तस्य पानमिन्द्रेणोदयावसरे क्रियत इत्येकया "प्रतिधापिवत" इति मन्त्रे पूर्वं प्रतिपादितम्। तच्च सुमेरावर्थाद्देवलोके, तत्रैवेन्द्रत्वमुदीयमानस्यादित्यस्येति। कुमेर्वभिप्रायेणोदये तत्रोषस्सु वर्तमानेन तेन तदीयं तेजस्तत्रत्यरात्रिकालिकासूषस्सु दीयत इति समानं, परन्तु तन्न सोमशब्देनोच्यते, तथा सति तत्रत्यरात्रौ सम्भृतस्य तेजस: पानमिन्द्रेणोदयावसरे कर्तव्यम्। तत्र चोदय: पश्चिमायामादित्यस्य न पूर्वस्यामिति पश्चिमायामिन्द्रसम्बन्धाभावेन तत्रत्यरात्रिसम्भृततेजस इन्द्रकर्तृकपानासम्भव:। सोमपानं चेन्द्रकर्मेति न तत्रत्यतेजस: सोमशब्देन वचनमिति।

दिनावसानप्राप्त आदित्य: पुरुषरूपेणोच्यते इति पुरुषं वै देवा इत्यर्थवादे विस्पष्टं प्रतिपादितम्। रूपशब्दस्य निरुक्तकारेण रुच्धातो: सिद्धिरुक्ता। एवं सति रूपं तेजस्तेन परिपूर्णत्वं तच्चास्तावसरोयमस्तश्चाभयत्रादित्यस्य सुमेरौ

---

१. ऋ. सं. ३:५५:१७.
२. ऋ. सं. १:१६४:३४.
३. ऋ. सं. १:१६४:३५.

कुमेरावपि । तत्र कुमेरावस्तावसरीयो दक्षिणदिक्कः सुमेरावस्तावसरीय उत्तरदिक्क । विश्वरूपत्व तूभयो समान, तत्रोत्तरदिक्कस्य व्यावृत्तये तस्य विशेषणमुच्यते ब्राह्मणे "विश्वरूपा वै त्वाष्ट्र" इति ।

, एव सति त्वाष्ट्रो विश्वरूपो दक्षिणदिक्कास्तावसरीय आदित्य । तस्य तत्रास्त पूर्वस्या भवतीति तत्रेन्द्रसान्निध्यसम्भव । इन्द्रश्च पूर्वास्तमध्यदिक्कत्वेन दक्षिणदिक्त आगच्छत आदित्यस्योत्तरस्यामर्थात् सुमेरौ प्रवर्तनमिव तस्य मारणमपरस्योत्पादनमिति कल्पनया दक्षिणस्यामस्त गच्छतो दक्षिणस्या दिशो भूनुवेन ग्रहणादभूवश्चाग्निसम्बन्धित्वस्य वेदे प्रतिपादनादग्नेश्च त्वष्टृत्वम् उभे त्वष्टुर्बिभ्यत इति मन्त्रे प्रतिपादनादसौ विश्वरूपस्त्वाष्ट्रस्त्वष्टु. पुत्र इति वर्णयितु शक्यत्वात्तस्य चेन्द्रेणास्तावसरे वध इति गृहीत्वा विश्वरूपस्त्वाष्ट्र इति कथा स च विश्वरूपो देवाना पुरोहित इत्युक्तिर्देवानामुदयावसरीया या दिक् पूर्वा तत्र स्थापितस्ता प्राप्त इति ।

स चासुराणा स्वस्रीय. । यथोत्तरस्यामुषसो देवभगिनीत्वादिव्यवहार. एवमादित्ये तत्पुत्रत्वव्यवहार । एव दक्षिणस्यापि सान्ध्यस्य तेजस उषआदिपदबोध्यस्यासुराणा भगिनीत्वेन व्यवहर्तुं शक्यत्वम्, तत्पुत्रत्व च तत्रत्ये आदित्य इत्यसौ विश्वरूपोऽसुराणा स्वस्रीय इत्युक्ति. । तस्येन्द्रेण वधे निमित्तमुच्यते प्रत्यक्ष देवेभ्यो भागवचन परोक्षमसुरेभ्यो भागवचनम् ।

तत्र ब्राह्मणे उच्यते–परोक्षमुच्यमानप्रकारस्यैव वक्तुरभीष्टता । एव रूपेण भेदनीतेरवलम्बनेन राष्ट्र विपरिवर्तित स्यादिति तस्य उक्तरीत्यास्ताऽवसरीयस्य विश्वरूपस्य त्वष्टु पुत्रस्यास्तावसरप्राप्तस्य कुमेरौ स्थलत्रये तस्य रश्मिरस्तस्थलीयपार्श्वसम्बद्धोऽपरोऽरश्मिमश्चोदयस्थलीयपार्श्वसम्बद्ध एकश्चोर्ध्व सम्मुख सम्बद्धः । तानि तस्य शिरासि । तत्रोदयस्थलीयपार्श्वे सोमसम्बन्धात्तत्रत्य तत्तस्य शिरः सोमपान, मध्यस्थलीयस्य तस्य रात्रिमध्यसम्बन्धितेति तत्रत्य तत्तस्य शिरः सुरापानम् ।

सुराशब्देन निघण्टुषु उदकनामसु पठितेनोदक बोध्यते, उदकञ्चाव्यक्त रात्रिगत इत्युक्त पुरस्तात् । तत्पिबतीति तत्सुरापानम्, तथा वामपार्श्वीयञ्चान्नादनम्, वामपार्श्वीयोषसोऽन्नवत्त्वात् । यद्यपि उषोमात्रस्यैवान्नवत्व वाजिन्यादिशब्दैर्बोध्यते । एव सत्यत्रापि तस्या अन्नवत्त्वमिति गृहीत्वा वामपार्श्वीयोषसोऽन्नवत्वमुक्तम् । तत्सम्बद्ध च तस्य शिरोऽन्नादनमिति स त्रिशिरा इति व्यवहृत.।

अयञ्चास्तावसरीय इति तस्य करद्वयमुत्तरदक्षिणदिग्वर्ति । तत्रैकेन करेणोत्तरदिग्वर्तिना देवसम्बन्धो भाग इति प्रत्यक्षबोधन, दक्षिणदिग्वर्तिनः परोक्षत्वाद्रात्रिसम्बन्धाच्च परोक्षमसुरेभ्यो भागवचनमित्युक्तिः । तस्य च तत्रास्तमये मरण तदिन्द्रकारितमिति । स चाय विश्वरूपवध इन्द्रकृत इति तस्य दोषाः ।

एवं विश्वरूपस्यास्तोत्तरं परिवर्तिततेजसोऽपि उदयदिक्स्थे वह्नौ होम इति कल्पनया वृत्रकथोच्यते। उदयस्य समाप्तिरस्तावसाने इति अस्ते सम्पन्ने उदये च जाते पूर्वारूपमण्डलमध्यबिन्दोरपगमस्तदानीं क्रियमाणो यागो नसंम्यक् पूर्वासम्बन्धीति तस्य नेन्द्रसम्बन्धितेत्यभिप्रायेण क्रियमाणस्य तस्य यागस्य वीन्द्रता। इन्द्रेणोपहवेच्छा तदभावश्च सम्मुखीनत्वाभावनिबन्धनः कल्पितः।

तत्र मण्डलविरहितस्यास्तोत्तरवर्तिनस्तेजसो लोपे यागत्वकल्पनयोक्तिः। तस्य हविषोऽग्निरूपाधाराप्राप्तिरग्नेरुपशमनिबन्धना। अग्नावस्तस्योदयस्य वा तत्कालिकत्वेन व्यवहारात्तत ऊर्ध्वं तत्स्थित्यभावेन तदुपशमस्ततोऽग्निरूपाधाराप्राप्तिः। तत्र विद्यमानादित्यस्य सोमत्वं तस्यापि तत्राभावः। खण्डितस्थलेऽस्तोत्तरं वा आदित्यस्यावर्तमानता।

तदेव गृहीत्वा ब्राह्मणे उच्यते—अग्निमप्राप्य अग्नीषोमावभीतिवेति। तस्य च होमद्रव्यस्य तेजसो विनाशेन तमसः प्रवृत्तिः। तमश्च सर्वासु दिक्षु अविरतस्वल्पगतित्वेन निष्प्रतिबन्धं प्रवर्तमानं सर्वं व्याप्नुते, तद्दृष्ट्वेन्द्रस्य त्वष्टुश्च भीति वचनम्। त्वष्ट्रा तापरूपस्य वज्रस्य सम्पादनम्, परन्तु तापस्य गुणरूपत्वेन गुणिरूपाधारं विनोद्यमानसम्भवः। ततः क्रमेण तद्वधः सोऽपि असामानाधिकरण्यादिन्द्रस्थले तदभावेन कल्पितः। सोऽपि वृत्रवध इन्द्रस्यापराधः।

एवमरुर्मघानां विषयेऽपि। अरुर्मघाः के कुत्रत्या इति विशेषतो विज्ञानम्। केवलं ब्राह्मणे अरुर्मघानवधीत् इति वध्यत्वोक्त्या परिवर्जने दोषत्वोक्त्या च पापकल्पना तच्च परिवर्जनीयत्वेनैव महापापमिति गृहीत्वा तत्वाय ब्राह्मणरूपधरत्वकल्पना। तेषां वध्यत्वस्य युक्तत्वायासुररूपत्वकल्पनेति।

वस्तुतस्तु नास्य सर्वस्यात्रापेक्षा। देवताभिः सोमपानतो वर्जने कारणत्वेन विश्वरूपवधादिकं ब्राह्मणे उच्यते। तत्र सोमश्चादित्यासत्वस्थीयतेजोरूपस्तस्य पानं बिम्बोदये संवृत्तं परस्तात्तस्य तादृशतेजोरूपसोमाभावेन तत्स्वीकाररूपसोमपानाभावः। स च देवताभिः कृत इति कल्पना। तत्र हेतुभूतत्वेनैषां विश्वरूपवधादीनामुक्तिः।

एवञ्चेमे सोमपानाभावसंभावनापूर्ववर्तिनोऽपेक्ष्यन्ते। तत्र सोमपानाभावसम्भावना चोदयोत्तरमिति तेषां विश्वरूपवधादीनामुदयात् पूर्वकालिकत्वमपेक्ष्यते। अत एव तेषां तद्धेतुत्वकल्पनासम्भवः। तत्र विश्वरूपस्यान्यदेशीयस्योदयदेशेऽस्तगतत्वेन पूर्ववर्तिता। वृत्रस्य रात्रिवर्तितयोदयात् पूर्ववर्तित्वमिति सोमपानवर्जने यथा हेतुत्वकल्पनसम्भवः, एवमरुर्मघवधस्यापि तद्धेतुत्वप्राप्त्यर्थमुदयात् पूर्वभावित्वमेवापेक्षणीयं, तच्च ब्राह्मणादिकल्पनं विनापि वक्तुं शक्यम्।

तथाहि अरुर्मघ इति नैतत् प्रसिद्धिं नामान्यत्र तन्नाम्ना व्यवहारादर्शनात् किन्तु यौगिकम्, योगश्चारुर्मघं येषां ते तादृशा इति। तत्रारुःशब्दस्य तेजोबोध-

क्ता । अत एवोषोवोधकेषु नामसु अरुषीति स्त्रीलिंगमुषोनामोक्तम्, मघशब्दस्य धननामत्वम्, निघण्टौ धननामसु पाठात् । उषोनामसु चित्रामघेति प्रयोगादिन्द्र-मघवेतिनामनि धनार्थकमघशब्दप्रयोगाच्च ।

एवञ्चाद्रुर्मघा अरु षि तेजांसि, अरुस्तेजो वा मघ धन येषामिति विग्रह । मानधान इत्यादिषु मानप्रधाना इतिवदरुर्मघा नाम तेजः प्रधाना इत्यर्थ । तेज प्रधानाश्च उषआदय । तत्वं तु तेषा लोकप्रसिद्धम् । उषस आदित्योदये अभाव इन्द्रकारित इति गृहीत्वा तस्मिन्नुषोवधकारिता ।

तदुक्तम्-अपोषा अनस सरत्संपिष्टादह बिभ्युषी । नियत्सीं शिश्नथद्-वृषा इति । स्त्रिय यद्दुर्हणायुव वधीर्दुहितर दिवः इति च । एवञ्चेन्द्रेण उद-यात् पूर्वं रात्रौ म्रियमाण उषसो वधोऽरुर्मघवध । यथोषसो वध इन्द्रकृत एव सूर्यस्यापीन्द्रेण वध इति वर्णनात्तस्याप्यरुःप्रधानत्वादरुर्मघत्वम् । एवञ्चोदयात् पूर्वभाविनामर्थात्र देशे आदित्योदयस्तद्भिन्ने देशे तेषामस्तेनादर्शन मरणमिन्द्र-कृतमितीन्द्रस्यारुर्मघवधकारित्वोक्ति. । एव चेद सोमवर्जने हेतुत्वेनोक्त मगच्छते ।

एवं सालावृकेभ्यो यतीनां प्रदानमपि तथैव । अत्र यतिशब्देन न लोक-प्रसिद्धसंन्यासिनो गृह्यन्ते किन्तु यतयोऽत्र भिन्नरूपाः । तथाहि पूर्वमुक्त "यद-न्यासु वृषभो रोरवीति सो अन्यस्मिन् यूथे निदधाति रेत इति मन्त्रानुरोधेनैकत्रो-षोभि. सम्बद्धस्यादित्यस्यापरत्र तद्देशीयासूषस्सु रेतोनिधान, रेतसश्च सोमत्व-मिति[1] । सैषा रीति. सर्वत्र विशेषतः सुमेरुकुमेर्वो समाना ।

तत्र सुमेर्वभिप्रायेण दिने उषोभि. सम्बध्यमानस्तदभिप्रायेण रात्रिस्थलौ-यासूषस्सु सोमस्याधानम् । तदपि मन्त्रे निपूर्वक धा धातुना बोधनान्निधिसमान-रूप निधिर्गुह्यसमाहित इति सोमस्यापीद निधान गुप्त रात्रिवर्तिनीष्विति, अत एव तस्य रेतस्त्वेन व्यवहार इत्यपि सम्भावना । तदिद सुमेर्वभिप्रायेण रात्रौ रात्रिपर्यन्त वा निहित सञ्चित तत् पुनरुदीयमानेन स्वल्पोदयावस्थाया स्वस्मिन् गृह्यते, तच्च ग्रहण सोमस्य पानरूपमिति एकया प्रतिधापिबदिति मन्त्रव्याख्याने निर्णीतम् ।

सर्वमिद सुमेर्वभिप्राय कुमेरावप्यादित्यस्येयैव रीति.। तत्राप्युदयावसरीया-सूषस्सु प्रकर्षेण भासमानेन तेन तदभिप्रायकरात्रिसम्बन्धिनीसूषस्सु स्वीय तेजो निधीयेतैव । तच्च तत्र रात्रौ रात्रिपर्यन्तं दीयमान सोमरूप तेजस्तु नेन्द्रेण पीयते स्वस्मिन् गृह्यते, यतस्तत्रोदयः पश्चिमायां, न तद्दिक्सम्बन्धितेन्द्रस्येति तेन तस्य रात्रिसम्भृतस्य तेजस पानायोगः ।

---

१ ऋ. म ३.५५.१७

तद्विषये चैषा कल्पना यत्तत्तेजस्तमोभ्यो दीयते तमोभिस्तत्तेजो विलीन क्रियते। अर्थात्तस्य तेजसोऽन्धकारे विलयो न पुनरादित्यसम्प्राप्तिः। तदिदं तमोभ्यो दानमिन्द्रकृतमिति तस्य सोमवर्जने निमित्तता। तथाहि अत्र सोमस्योक्तरीत्या तेजसः कुमेर्वभिप्रायकस्य यतिशब्देन वर्णना तदुक्त मन्त्रे, तथाहि मन्त्रः–

परा व्यक्तो अरुषो दिवः कविर्वृषा त्रिपृष्ठो अनविष्टगा अभि।
सहस्रणीतिर्यतिः परायती रेभो न पूर्वीरुषसो विराजति[1] ॥ इति।

सोम्योऽयं मन्त्रः। तत्रोच्यते–अयं सोमः परा विदूरेऽर्थात् कुमेरुरूपभूलोके व्यक्तस्तत्रत्यतमसस्सकाशतोऽर्थाद्रात्र्या अवसाने उदित उदयेन स्पष्टः, अरुषस्तेजोयुक्तोऽरुणवर्णतेजोयुतो वा। अरुः शब्दस्य तेजः परताऽरुणवर्णतेजः परतापि। अतएव भाष्यकृता त्र्यरुषीणां चतुःशतम् इत्यत्र त्र्यरुषीशब्दस्य त्रिभागारुणा इत्यर्थः कृतः संगच्छते।

उषसां विभागारुणत्वं त्र्यरुण्प्सव इति विशेषणादपि व्यक्तमित्यन्यत्र प्रतिपादितम्। एवञ्चारुषः शब्दस्योक्तार्थत्वं तादृशः सोमः। दिविः कविः। अत्र दिव इत्यनेन सुमेरुरूपद्योलोकस्य वचनम्। तस्यायं कविः। कवनीयः शब्दनीय एव केवलं न तु दृश्य इत्यर्थः। अत एव रात्र्यभिप्रायानां स्तुतिवचनानां शस्त्रशब्देन व्यवहारः, शस्त्रं शंसनीयं वचनीयमेवेति।

किञ्च सोमसंस्थानामग्निष्टोमादीनां मध्ये उक्थ्यनामकसंस्थायामुक्थ्यत्वेन वचनम्। उक्थ्यत्वं च वचनीयत्वमेव रात्रिसम्बन्धात्। अत एव "एकया प्रतिधापिबदि"ति मन्त्रे त्रिंशत्सरस्त्वं त्रिंशदुक्थ्पात्रत्वेनेति याज्ञिकैर्व्याख्यायत इति पूर्वमुक्तं संगच्छते।

एवं चात्र कविशब्देन कवनीयः शब्देन वचनीय एव केवलं न तु दृश्य इत्यर्थः। किञ्च सुमेरुस्थानां कुमेरुस्थ आदित्यः सोमशब्दाभिलप्यमानो न दृश्यो भवति यथा एवं तत्रत्यानामपि रात्रिगतस्य तेजस आदित्यासन्निधानेन न दृश्यत्वं, तदेवाभिप्रेत्य तद्विनाश कल्पना। अत एव तत्र रश्मीनामृषित्वेन वचनाददर्शनेनातीतानां मृतत्वकल्पनया तेषां कविशब्दबोध्यत्वमुक्तम् "ये वै न ऋषयः प्रेतास्ते कवय" इति।

वृषा वर्षकस्तेजसः प्रदाता। त्रिपृष्ठः। भुवि लोकत्रितयं पृष्ठस्थानीयं तस्यार्थात्तत्रत्यलोकत्रयं स्पृशन् सम्बन्धेन प्रकाशयन्। अचिरमुदेतुं प्रवृत्तत्वादनिविष्टगा अप्रविष्टरश्मिः, सहस्रणीतिः सहस्राणामनन्तानां रश्मीनां तद्रूपस्य वस्तुनो नेता प्रापयिता, यतिः पूर्वप्रवृत्तस्य द्युलोकस्थस्य प्रकाशनस्य नियमन-

1. ऋ. सं ९:७१:७

कतोऽन एव यमशब्दश्चास्य । परायतीः, द्युलोकापेक्षया परा विदूरे भुवीत्यर्थ, यतीर्गच्छतीः, भुवि प्रकाशमाना इत्यर्थः ।

पूर्वा. पूर्वाञ्चना उपसो भूलोकवर्तिनीर्यान् कुमेरुस्था उपसस्तासु विराजति शोभते, तत्र दृष्टान्त रेभो न । द्यवि उदित आदित्यो यथोपस्सु विराजत एवमिति अथवा परायती: कुमेर्वभिप्रायेण परा दूर सुमेरावित्यर्थ यतीर्गच्छन्तीस्तत्रत्या उपमो यथा रेभो विराजन एवमसौ पूर्वाहपसो विराजतीत्यर्थ ।

एव द्युलोके उदित आदित्यो यथा उपसोऽनु विराजत एवमसौ भूलोकेऽर्थात् कुमेरौ उदित आदित्योऽपि तत्रत्या पूर्वीरुपसोऽनु, विराजते इति वर्णनाद्-भुवि समुद्यन्नादित्यो यमो यतिरित्यादिशब्दै प्रोच्यते, सोमस्यैव वर्णनात्सोम एव यतिरिति भवति। स च पूर्वोक्तरीत्या तत्रत्यरात्रौ तत्रत्यासूपस्सु क्रियमाण-प्रकाशरूपोऽपि तस्योपाधिभेदेनानेकत्व मत्वा यतय इति बहुवचनोक्ति । ते च सोमास्तत्रत्यरात्र्यादिकालीनास्तमस्सु विलीयन्ते नेन्द्रेण पीयन्त इत्युक्तम् ।

तदेव गृहीत्वा "द्वासुपर्णेति" मन्त्रे प्रोच्यते तयो समानवृक्षवर्तिनो सुपर्णयो. सूर्याचन्द्रमोरूपयोर्मध्येऽन्य एक सूर्यरूपोऽर्थात्सुमेरुगत आदित्य.पिप्पलमुदक तेजोरूप स्वादु शोभन प्रकाशकरत्वादत्ति भक्षयति स्वात्मनि विलापयति। अन्यश्च कुमेरुस्थ· सोमोऽनश्नन् तेज. सोमात्मक तत्तजोरूपमुदक स्वात्मनि अविलापयन्नेव केवल प्रकाशते इति । एतेन तेपा सोमानामिन्द्रेणापीताना तमस्सु विनाश: स तु इन्द्रकारित इति कल्पना । तमसा वृकत्वकल्पना "अरुणो मास-कृद्वृक" इत्यत्र प्रतिपादिता ।

किञ्च ब्राह्मणे यतीना सालावृकेभ्य. प्रदानमुच्यते, सालावृका भाष्यकृता सलावृक्या· पुत्रा इत्युच्यते ते चारण्या श्वान: । तत्र तन्मातुः सलावृकीति वचन कुत । यथापरत्रान्येपा प्राणिनामुल्लेखावसरे तन्मातृपुत्रा इति विशिष्य नोल्लेख:, एवमत्रापि वृकवचने मातृविशेपपुत्रा इति वर्णनस्यायुक्तत्वम् ।

सत्यप्येव विशिष्य सलावृक्या. पुत्रा इति निर्देशेनैपा सलावृकीशब्दबोध्या माता लौकिकमातृपदार्थतो भिन्नरूपा । सा च रात्रिरूपा । तस्या सलावृकीत्व विनाशकरवृकरूपत्वेन । तच्च तच्छब्दनो विज्ञायते, यथात्र 'स' शब्देन षोऽन्तकर्मणीति धातोर्निष्पन्नेनान्तो बोध्यते त स लाति मर्यादृभक्षयतीति सलास्तादृशी वृकीति ।

आरण्यपशूना भक्ष्यो पर्याक्रमण सर्वात्मना तद्विनाशन लोकप्रसिद्धमिति, तत् सादृश्यादत्र रात्रौ सलावृकीत्वव्यवहार. । तत्पुत्राश्च रात्रिकालीनानि तमांसि । अत एव वृत्रस्य दानवशब्देने दनुपुत्रत्वाद्वचन वेदे ऐन्द्रसूक्त उच्यमान सगच्छत इत्यन्यत्र विस्तर. ।

तमसां सालावृकत्वं तेभ्यो यतीनां दक्षिणद्विकानां तेजसां प्रदानमेवेन्द्रकर्तृकमिति ब्राह्मणे वर्णना, यतीन्सालावृकेभ्यः प्रादादिति वर्णनम्। किञ्च ताण्ड्यब्राह्मणे इन्द्रेणैव यतीनां वधः कृत इत्युच्यते। तेषां मध्ये त्रयोऽत्रशिष्टाः। पृथरश्मिः, रायोवाजः, वृहद्गिरिरिति त्रयोऽवाशिष्यन्त। तेऽब्रुवन्कोऽन्वस्मान् भरिष्यनीति. इन्द्रेणोक्तमहमेव युष्माकं भरणकर्तेति। ततस्तैः सामत्रयं सम्पादितम्।

पार्थरश्मम्, रायोवाजीयम् वार्हद्गिरमिति इन्द्रेण तेभ्यश्च पृथुरश्मये क्षत्र तेजो बलं प्रदत्तम्। वृहद्गिरये ब्रह्मचर्यम्। रायोवाजाय पशवः प्रदत्ता इत्युच्यते। तदप्युक्तरीत्या यतिग्रहणेनोपपद्यते। तथाहि–तत्र यतीनां मध्ये पृथुरश्मिः सुषम्णोः रश्मिर्योऽतिदूरं गत्वा प्रकाशकस्तत्रान्धकाररूपवृकसम्बन्धाभावात्तस्यावशेषः।

आदित्यस्यैकोरश्मिश्चन्द्रमआदिविदूरस्थलं गत्वा तस्य प्रकाशकः। नहि तस्यान्तरालवृत्यन्धकारः प्रतिबन्धकः। तदुक्तं सुषम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यादिना। तस्य विदूरं गत्वा प्रकाशकत्वाद्रात्रौ प्रकाशो दृश्यमानतारकारूपेण वर्तमान इति तस्मै क्षत्रं बलं तेजः इन्द्रि यावद्ददौ। वृहद् गिरिरपि तत्रावस्थितः। द्वितीयो वृहद्गिरिः सोऽपि यतीनां मध्येऽवशिष्टस्तस्यापीन्द्रेण परिपालनपूर्वं तस्मै ब्रह्मचर्यं प्रदत्तम्।

स च दक्षिणस्यां भुवः पार्श्वे वर्तमानो गिरिरर्थान्मेरोः शृंगं कुमेरुरूपः। तस्यापि सालावृकैरनाक्रम इति। तस्य वृहद्गिरित्वेन वचनं मन्त्रे "यत्सानोः सानुमारुहद् वृहद् वृहत एदरिः। भूर्यस्पष्टकर्त्वमित्यत्र प्रतिपाद्यते। अत्र वृहतः सानोर्वहत्सान्वारोहणमुच्यते, तच्च सोमानुष्ठायिनो यजमानस्येति भाष्यकृता व्याख्यायते।

तच्च सान्वारोहणं सोमलाभार्थम्। स च सोमो वृहति सानुनि लभ्यः। स च यागार्थः। तत्र पूर्वोक्तरीत्या सोमपदार्थस्तेजोरूपस्तस्येन्द्रेण पानेन वृत्रादीनां विनाश इति वर्णनात् सोमपानमिन्द्रस्यैवेति नियमनात्तच्च त्रिकद्रुकेष्विति प्रतिपादनात् रात्रिसम्बन्धितेज इति पूर्वं निर्णीतम्। तच्च रात्रिसंभृतं तेज इन्द्रेण स्वल्पकलामात्रोदयेन युगपत्पीयत इति एकयेति मन्त्रप्रतिपादितं पूर्वं विस्तरशो वर्णितम्।

आदित्यमण्डलस्य सोमपानपात्रत्वमिन्द्रं प्रति उच्यते "इदं ते पात्रं सनवित्तमिन्द्र पिवा सोममेना शतक्रतो" इत्यनेन। इदं चोदयस्थलीयं यत्र यत्रादित्यस्य पूर्वस्यामुदयस्तत्र सर्वत्र सम्भवति तथापि यत्र प्रतिदिनमुदय आदित्यस्य तत्र स्वल्पकालसाध्योदयाद्विवर्णनार्थं वेदे इन्द्रस्य वर्णनं सोमपानादिरूपं किन्तु यत्र बहुकालसाध्यतया अत्यन्तमुत्सुकभाव आदित्योदयं प्रति तादृशस्थलीयवर्णनाभिप्रायेणेदं

वर्णन मन्त्रेषु, प्रतिदिनं स्वल्पकालसम्पत्स्यमानोदयेऽपि अनुरूप भवतीति तत्रापि प्रवर्तत इति न तावता तन्मात्रार्थं तस्य वर्णनस्य प्रवृत्ति.।

तादृशी चात्यन्तमुत्कण्ठितत्वेनोत्सुक्यपराकाष्ठोदय प्रति समेरुकुमेर्वोरिति तद्वर्णनार्थैव प्रवृत्तिः। एव सति तत्रान्वेषणपूर्वं सोमलाभार्थं सानो. सान्वारोह स सुमेरुकुमेर्वभिप्राय एव। अत एव सानुनो बृहदिति विशेषण मन्त्रे। स चादित्यस्यैवेति अत्र यजमानशब्देनादित्यस्यैव ग्रहणम्। अत एव मान्वारोहणस्य तेन कर्तव्यकार्यस्य विस्पष्टार्थत्व तत्र मन्त्रे भूर्यस्पष्टकर्त्वमित्यनेन प्रतिपद्यते। तच्च कर्त्वं *प्रकाशन विश्वस्य*। तदपि *मन्त्रान्तरे कर्तुशब्देनोच्यते प्रकारान्तरेण* "मध्या कर्तोर्विततं सञ्जहार" इत्यनेन।

इद विश्वप्रकाशन कर्म कुर्वाणोऽसावादित्यो मध्ये एव असम्पूर्णतयैव *विस्तृत प्रारब्धं कर्म सञ्जहार* रात्र्यवसरे इति, *तस्यातीव सामर्थ्यशालिता* विस्तृतस्यापि कर्मण इच्छावशतः स्वल्पकालेनेदमेतावत् विस्तृतमुपसञ्जहारेति एवमसौ महानुभाव इति। एव चेद कर्त्वमादित्यस्यैव मन्त्र प्रतिपादित, तत्साधनार्थं. समारोह उक्तरीत्या सुमेरुकुमेर्वोरेवेति।

तत्र प्रकाशात्मनस्तेजोरूपस्य सोमस्य रात्रि यावत् सम्भृतस्य पानमुदयावसरे स चोदय पूर्वस्यां दिशि यत्र तत्रेत तादृश उदय' सुमेरौ भवतीति पूर्वमुक्तम्। कुमेरौ तु पश्चिमायामुदय इति तत्रत्यस्य नोदयावसरे इन्द्रेण पान किन्तु यतिरूपस्य तस्य सालावृकायार्थात्तमसे प्रदानमित्येवापराधितेन्द्रस्येति प्रमाणमेव। तत्रैव सति बृहन् सानुरत्र कुमेरुरूप एव तस्य रात्रौ न तमसाक्रान्ति.। किन्तु तत्र मासद्वयव्यापि बार्हस्पत्यतेजस्सदृश शुक्रादिशब्देनाभिलप्यमान तेज. प्रवर्तते तेन *तमोरूपेण सालावृकेण सर्वात्मना नाक्रमणादेषोऽवशिष्ट* इति वर्णना।

यथा सुमेरुस्थले तदभिप्रायेण सोमवर्णनावसरे ऐतरेये दुहितृपाख्यानवर्णने उच्यते "[1]प्रजापते रेतस. प्रथममुद्दिप्तो *भाग* आदित्योद्वितीयवारमुद्दिप्तो भागो भृगुरङ्गारादीनामङ्गिर आदिरूपत्वमुक्त्वा येऽवशान्ताः पुनरुद्दीप्ता इव ते सर्वे बृहस्पतिरभवदिति' वर्णनेन तत्र रात्रिकाले तमसावरणेऽपि यद्मासमान तेजस्तस्य तत्र *बृहस्पतिरूपत्वमुक्तमेवमत्रापि कुमेर्वभिप्राये रात्रौ भासमानस्य* तेजस. सत्व तद्वशतोऽस्य बृहद्गिरेस्तमसानाक्रान्त्या सालावृकतो मुक्ततेति।

तस्यैतस्य बृहद्गिरेरिन्द्रेण ब्रह्मचर्यम् प्रदत्तम्। पूर्वोक्तस्य तेजस. सुमेरौ बृहस्पतिशब्दाभिलप्यस्यैतरेये ब्रह्मशब्दबोध्यता "ब्रह्म वै बृहस्पति" इत्यादिनोक्ता यथा, एवमत्राप्येतस्य शुक्रशब्दाभिलप्यस्य कुमरुगततेजोऽपि ब्रह्मत्वेन ग्रहणेन तस्य

१. ऐ. ब्रा. ५.६.२.

ब्रह्मणश्चरणं स्थितिस्तदेव ब्रह्मचर्यं तद्रूपं प्रसिद्धं ब्रह्मरणार्थं व्रत तत्तस्मै बृहद्-गिरय प्रदत्तम् । तत्र तद्वर्तमानमपीन्द्रेण दत्तमितिकल्पना । एवं बृहस्पते: प्रति-वधः, भाष्यकृता स तदीयवचनप्रतिघातरूप इत्युक्तम् ।

आदित्यरूपस्यैकदेवस्य स्तवो वेदे इति कल्पनयेन्द्रादयोऽपि नादित्याद्वि-भिन्ना इति गुरोराचार्यस्य बृहस्पतेर्वाक्यप्रतिघातरूपः प्रतिवधो न सम्भवति । नहि "बृहस्पतिः पुरोहितो देवानां" बृहस्पतिपुरोहिता वै देवा इति वर्णनेन बृहस्प-तर्देवानां वा मनुष्योचितव्यवहारः प्राप्तो भवति ।

एतेन व्याकरणमहाभाष्यगतः शब्दानां विज्ञाने प्रतिपदपाठः कर्तव्य इति पक्षे उपक्षिप्ते तस्याशक्यताप्रतिपादनाय "[1]बृहस्पतिरिन्द्राय प्रतिपदोक्तानां शब्दानां शब्दपारायण प्रोवाच न चान्तं जगामेति" व्यवहारो व्याख्यातः । वेदे आदित्यस्यैवैकस्य वर्णनेनेन्द्रादीनां तदभिन्नत्वात्तादृशव्यवहारस्याप्राप्तः ।

एवं सतीदं बृहस्पतिसम्बन्धितयेन्द्रस्य प्रतिघातवर्णनं रूपेणान्यार्थं वक्तव्यम् । तत्रैतरेयब्राह्मणोक्तप्रजापतिदुहित्राख्याने उच्यते यदङ्गाकाराः पुन-रवशान्ता उद्दीप्यन्त तद्बृहस्पतिरभवदिति । तेन विज्ञायतेऽन्धकारप्रवृत्तेरुर्ध्वं भासमानं तेजो बृहस्पतिरिति । किञ्च पूर्वोक्तरीत्या बृहतो महतः सानुनोऽर्था-त्सुमेरुशृंगस्य पतिः पाता रक्षकस्तेजसः प्रदानेनेति । तच्च तत्रत्यं तेजो ब्रह्म तस्य बृहस्पतित्वं ब्राह्मण"ब्रह्म वै बृहस्पति"रित्यनेनोच्यते । एवं च सुमेरौ रात्रिमध्ये दृश्यं तेजो बृहस्पतिः । तस्य मधुरूपस्याव्यक्तस्य तमसि वर्तमानस्याहरणकर्तृत्व-स्योक्तिः संगच्छते । तदुक्तं मन्त्रे—

'अश्ना पिनद्धं मधु पर्यपश्यन्मत्स्यन्न दीन उदनि क्षियन्तम् ।
निष्टज्जभार चमसं न वृक्षाद् बृहस्पतिर्विरवेणाविकृत्य" इति[2] ॥

एतस्य निरुक्तकारेणार्थ उच्यते—'[3]अशनवता मेघेनापिनद्धं मधु पर्यपश्य-न्मत्स्यमिव दीन उदके निवसन्तं निर्जहार तच्चमसमिव वृक्षादिति" । एतस्य दुर्गाचार्येणार्थो व्याख्यायते—"अश्ना अशनवता व्यापनवता मेघन अपिनद्धमात्मनो मध्यमपिनीय नद्धं वद्धं विवृतं व्यवहितमदृश्यमन्यैः । बृहस्पतिर्मधु उदकं पर्यपश्यत् सर्वतोऽपश्यत् । कथं ? "मत्स्यं न दीन उदनि क्षियन्त" मत्स्यं न इव दीने उदनि उदके उपक्षीयमाणप्राये क्षियन्तं निवसन्तम् ।

यथा मत्स्यवन्धोऽल्पे उदके जिघृक्षुर्मत्स्यं परिपश्येच्छक्योऽयंऽग्रहितुमिति एव पर्यपश्यत् । निष्टज्जभार चमसं न वृक्षात् । तञ्च मधु दृष्ट्वाऽजिभार निर्जहार निर्हृतवान्, कथं ? चमसं न वृक्षात् । तच्च मधु दृष्ट्वा निर्जभार निर्ज-

१. व्या. म. भा. पश्यशाह्निकम्
२. ऋ. सं. १:६:८:८.
३. निरुक्तम् १०:१२.

हार निर्हृतवान्, कथ ? चमस न वृक्षात्। यथा कश्चित् कुशल शिल्पी वृक्षमध्याच्चमम यज्ञप त्र निर्हरेत् निष्पादयेदेव निर्जहार बृहस्पति । विरवेण विरस्य भीषणनालिमहता रवेण शब्देन मक्षोभ्य मेघ ग्रस्तसर्वाङ्गसन्धिबन्धन कृत्वा विक्लव तत एव विह्वलीभूत विकृत्य समन्ततो विशकलीकृत्य एव निर्जहार मधु यो बृहस्पति सोऽस्माकमिदमपि करोत्वि[1]"ति ।

एवञ्च सुमेरौ रात्रौ दृश्य तजो बृहस्पतिः । अत एव तमसि निमग्नस्यात् एवादृश्यस्य मधुरूपस्याव्यक्तस्योदकरूपस्य तेजसो दर्शन तन्निस्सारण च तस्योपपद्यते । तमसोऽश्नेति विशेषणेन सर्वतो व्याप्त्या दीर्घतमाभाव सूचित । स च प्रकृते सुमेराविव्युक्तम । मधुनस्तेज परत्व वहुषु स्थलेषु वेदे उच्यते यथा—"[2]विष्णो पदे परमे मध्व उत्स घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्य आसाम् । तस्मिन्नुपर्णो मनुकृत् कुलायो भजन्नास्ते मधुदेवताभ्य"इत्यादौ ।

तत्र प्रबलेन तमोरूपमेघेनापिनद्धमत एव दीन मधु छिन्नप्रवाह मधु उदकमिव तस्मिन्नुदके क्षियन्त निवसन्तं मध्वेव पिनद्धमदृश्य मत्स्य ध्रुवमत्स्यमिव उज्जहार यथा भ्रुवमत्स्यनुज्जहारैव मध्वपि उज्जहार । यथा बृहस्पतिना स्वीयेन विगतरवेण विगतश्रुतिमताऽर्थाद्रश्मिरहितेन तेजसा यथा ध्रुवमत्स्यः प्रकाशित एवमव्यक्तमुदकमपि प्रकाशितम् । तत्र दृष्टान्त उच्यते यथा वृक्षात् पूर्वोक्तरीत्या याम्योत्तरवृत्तार्धरूपाद् वृक्षाद्यन्नान्त प्राप्त आदित्योऽस्त गतस्तस्माददृश्याच्चमस सोमपात्र मण्डलरूप विवरेण रश्मिरहितेन तेजसोद्ध्रियते तद्वदिति ।

एव सति न सर्वथा सम्बद्धोपमानवर्णन स्यात् । एतावता स तत्रास्थो रात्रौ दृश्यस्तेजोविशेषो बृहस्पति. स देवाना परस्तादृष्टिविषयत्वमागमिष्यता पुरोहित इति बृहस्पतिर्देवाना पुरोहित इत्युक्ति । तेन स इन्द्रस्यापि गुरुः । तद्विरुद्धरवोपादानात्तन बृहस्पते. प्रतिवधो विरुद्धघातरूपस्त कृतवान् ।

अय भाव -तस्य बृहस्पते. विरवत्व श्रुतिराहित्य रश्मिराहित्यादथवा विशिष्टश्रुति व तद्देशत उदयदेश प्रत्यागच्छद्भिरश्मिभि. । इन्द्रस्तूदयन्नादित्यस्तस्यरश्मिरूपा करास्तु *उदयदेशान्निर्गता दक्षिणोत्तरयोर्दिशो प्रसृमरा.* । एव सति बृहस्पते करा आगच्छन्त इन्द्रस्य करास्तु ततो गच्छन्त इति परस्परयोः कररूपश्रुत्योस्तद्रूपशब्दस्य विरुद्धत्वम् ।

तत्र द्रस्य रश्मिरुदयकालिक इति विस्पष्टभा, बृहस्पतेस्तु अविस्पष्टभा इति पूर्वोक्तस्य वध इवेति रश्मीना करत्वमिव वर्णश्रुत्यादिशब्दैर्बोध इति इन्द्र-

---

१. नि. दुर्ग. भा. १०:१२.

२ ऋ. स १:१५४.५.

स्य दीर्घश्रुतमशब्दार्थविवेचने विस्पष्टमुक्तम् । सोऽयमिन्द्रेण बृहस्पतेः प्रतिवधः । तमिन्द्रः कृतवानिति तस्यापराध इवेति गृहीत्वोदिते आदित्येऽन्यतस्तेजसो ग्रहणेन सोमपानाभावः स तु देवैरुक्तरूपापराधपञ्चकगत इति कल्पनयोक्तं वर्णनमिति दिक् ।

२४. वज्रशब्दार्थविचार:

एवमैतरेये ब्राह्मणे बहुषु स्थलेषु बहुषु पदार्थेषु वज्रत्वमुच्यते–यथा–"[1]घृतेन हि वज्रेणेन्द्रो वृत्रमहन् । वज्रो वा एष यद्यूपः, वज्रो वै यूपः । यदपोनप्त्रीया वज्रः । यत्त्रिष्टुब् वज्रः, स वाग्वज्रः । वज्र एव वाक्, वाचा वज्रेण आगूर्वज्रः, वज्रो वै वैश्वानरीयम् । वज्रो वा एष यत् षोडशी, वज्रो वै षोडशी । वाग्वि वज्रो, वाक् षोडशी" इत्यादिषु ।

तत्रेदं चिन्त्यते, वैदिकग्रन्थाभिमतं वज्रस्य किं रूपमिति, कथञ्च उक्तस्थलेषु तत्तत्पदार्थानां वज्रत्वमिति । शब्दव्युत्पत्त्या वर्जनेन निमित्तेन वज्रत्वम्, वर्जनीयो हि वृत्रादिरसुरः । अत एवेदं वज्रमुपयुज्य वृत्रो हत इन्द्रेणेत्युक्तिर्बहुत्र वेदे, ब्राह्मणेऽपि । निरुक्तरीत्या देवतात्रयवादे इन्द्रोऽन्तरिक्षदेवता वायुरूपिणी तया घात्योऽसुरोवृत्रो मेघं विना नान्यरूपः सम्भवतीति तद्घातसाधनत्वं वज्रस्य वक्तव्यम् । किञ्च निरुक्तकारेण दैवतकाण्डे उच्यते "आत्मैवैषामायुधमात्मैवैषां वाहनमात्मैवैषां सर्वदेवस्य देवस्य" इति ।

तेन वचनेनेन्द्राभिन्नत्वं वज्रस्य । इन्द्रस्य वायुरूपत्वे वज्रोऽपि तद्रूप इति । एवं घृतेन हि वज्रेणेन्द्रो वृत्रमहन् । इत्यत्र घृतस्य वज्ररूपतोच्यमाना कथमुपपद्येतेति । एवमपरापरपदार्थानां विषयेऽपीयमाशंका भवत्येवेति । तदर्थं चेन्द्रादित्याभिन्नत्वं सर्वासां वैदिकदेवतानाम् ।

एकस्य सूर्यरूपस्यैवात्मनो वेदे स्तव इति इन्द्रोऽप्यादित्याभिन्नस्तदभिन्नो वायुरप्यादित्याभिन्न इति इन्द्राभिन्नो वज्रोऽप्यादित्याभिन्न इति प्राप्नोति । तदानीं घात्यो वृत्रोऽन्धकारूप एव भवितुमर्हति । तस्य वज्रेण तेजसाहननमुपपद्यते । अन्यरूपत्वे तु तदसम्भव एवेति वेदे वर्णनं निरालम्बं स्यात् । घृतेनेत्यत्र घृतशब्दस्तेजःपरः । घृक्षरणदीप्त्योरिति दीप्त्यर्थात्तस्माद्धातोस्तच्छब्दस्य साधनात् ।

एवं सति घृतेन वज्रेणेत्युक्तिः संगता भवति । अवश्यं च तेजोरूपत्वं वज्रस्य वक्तव्यम् । अत एवेन्द्ररूपादित्याभिन्नत्वेन तद्विनाश्यानां वृत्रशंबरनमुच्यादीनामसुराणामन्धकाररूपत्वं वक्तव्यं भवति । तथा सत्येवेन्द्रेण तद्विनाशवर्णनस्योप-

१. ऐ. ब्रा. ३:२:१

पत्तिः। नहि तेजसा वस्तुभूतानामसुराणां विनाशः सम्भवति। किञ्चेन्द्रस्य सोऽसुरविनाशः काल्पनिक इति स्पष्टं मन्त्रेषु। तदुक्तं "[1]मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं नं नु पुरा विवित्से" इति। अत्र युद्धस्य मिथ्यात्वेन काल्पनिकत्वमुक्तम्।

एवं सति युद्धस्य काल्पनिकत्वे तत्र विनाश्यानामपि काल्पनिकत्वमर्थं सिद्धम्। तदिदमन्धकारस्य वृत्रादित्वपक्षे सम्यगुपपद्यते। नहि तेजस्तमसोर्विनाश्यविनाशकभाव उच्यमानो वस्तुभूतः भवति। किन्तूभयोरसामानाधिकरण्येन विरोधकल्पनया परस्परशत्रुत्वकल्पनाद्वारा असामानाधिकरण्यस्य विनाशकल्पनयोपपादनम्। न तु वस्तुसन् विरोधो न वा शत्रुकल्पना नतु वा विरोधिनाशेन तदसामानाधिकरण्यस्योपपादनकल्पना।

एवं सर्वमिदं कल्पितमिति वृत्रादिवधादिकमवस्तुभूतमिति आदित्यैकदेवत्ववादे तेजसा वृत्रादिविनाशकल्पना वस्तुत्वात्माज्ञात्यनिबन्धनत्वेनोपपद्यते। वस्तुसत्त्वे त्वेतद्बहुविषममञ्जसमापद्येतेति। अत एव वृत्रस्य जगद्व्याप्त्या तेजःप्रतिबन्धकत्वकल्पना, तेजसश्च प्रवाहादिवैशिष्ट्यकल्पनयाऽप्रूपत्वम्। तद्रूपाणामपां प्रतिबन्धाद् वृत्रस्य मेघरूपत्वम्।

तथा सति शम्बरनमुचिप्रभृतीनां वृत्राभिन्नत्वमिन्द्राभिन्नादित्यविनाश्यत्वात्। वृत्राभेदाच्च मेघत्वम्। अत एव निघण्टुषु मेघनामसु वृत्रशम्बरनमुच्यादीनां पाठः सगच्छते। एवं सति नमुचेर्विनाशे इन्द्रेणापां फेनेन तस्य वधवर्णनस्य मन्त्रगतस्योपपत्तिः। "अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः" इति मन्त्रः।

अपां तेजोरूपत्वे तत्फेनोऽपि तेजोरूप इति स्पष्टम्। अत एव ब्राह्मण उच्यते—इन्द्रनमुच्योर्युद्धे सन्धिः। स च न शुष्केण नार्द्रेण वस्तुना, न दिवा न रात्रौ नमुचेर्वध इन्द्रेण कर्तव्य इति। तं सन्धिं पालयता इन्द्रेणापां फेनेन नमुचेः शिरसश्छेदनं कृतम्, तच्चोप काले। स च कालो न दिवारूपो न रात्रिरूपोऽपां फेनश्च नार्द्रं वस्तु न वा शुष्क इति तत्रैव ब्राह्मण उच्यमानं सगच्छते।

इन्द्रेण वधे वज्ररूपमायुधमुपयुज्यते इति प्रसिद्ध्याऽपां फेनस्य वज्ररूपत्वं भवति। एवं वज्रस्तेजोरूप इति भवति। तच्च कुलिशेति वज्रनाम्नापि सिद्ध्यति। निघण्टौ वज्रनामसु कुलिशशब्दः पठ्यते। तस्य नाम्नो परापरव्युत्पत्तिवत् कुलिषु शेते तिष्ठतीति कुलिश इति व्युत्पत्तिः। कुलिशब्देन रश्मय उच्यन्ते। तेषां रश्मीनां कङ्कतिकायां केशविवेचनभागस्यात्र दन्तशब्देन व्यवहारः। अत एव यजुर्वेदे वाचो मुखगताया अथा दन्तैः परिवृतत्वमेव वाचः कुलीदन्तैः परिवृतत्वमुच्यते। अथ हि तत्रत्यो मन्त्रः 'ओष्ठापिधाना न कुलीदन्तैः परिवृत्ता पविः इति।

---

1. ऋ. स. १०.५४.२

एवञ्च रश्मीनां कुलित्वे तेषु विद्यमानत्वं तद्युक्तत्वं तेज: पिण्डरूपस्य मण्डलस्य भवतीति वज्रो मण्डलरूपो भवतीति । अत एव वज्रस्य वर्तुलत्वेन लोकप्रसिद्धिरप्युपपद्यते । एवञ्च सति तेजस एव वज्ररूपत्वं तच्च तमो वर्जयतीति तमोवर्जनेन तेज एव वज्र: । अत एव घृतेन वज्रेणेत्युक्तिवृं त्रहनने ब्राह्मणे ।

अत एव फेनेन नमुचेर्वधवर्णनस्योपपत्ति: । तेजस: स्थानवैशिष्ट्येन वज्रत्वोक्तिर्यथा "वज्रो वै यूप" इति यूपस्थानीयतेजसो वज्रत्वमिति तदर्थ: । यूपश्च क्रान्तिवृत्तविषुववृत्तपातबिन्दुस्थले संपतितदक्षिणोत्तरवृत्तगत उपर्युक्तस्थानत उदीच्यामवाच्यां च यश्चतुर्विंशांशपर्यन्तो भाग: । तस्य यूपशब्देन व्यवहार्यता यूपब्राह्मणे उच्यते । तत्र देवताभिर्यागमनुष्ठाय स्वर्गे लब्धे स्वर्यद्भिस्तैर्यूपस्यान्यथात्वमर्थात् पूर्वमूर्ध्वाग्रत्वमासीत्तदवाचीनाग्रत्वं सम्पादितं व्यामोहाय । एव व्यामोहोत्पादकत्वादस्य यूपतेति ।

मनुष्यादीनां कृते देवताभिर्यूपस्याधोऽग्रत्वं सम्पादितं तच्च दक्षिणस्यां यदुक्तवृत्तस्य मध्यतोऽधोवर्ती भाग इति ग्रहणेन समञ्जसं भवति । एवञ्च तस्मिन् भागे आदित्यस्य तत्रत्यदिने आरोहावरोहौ मासषट्केनैकैकस्मिन् पार्श्वे भवत: । तत्र यदाऽऽदित्येनैकपार्श्वे उक्तपार्श्वगतोक्तभाग आरोहावरोहौ मासषट्केन क्रियेते तस्मिन्नेवावसरेऽपरस्मिन् पार्श्वगतोक्तवृत्तभागेषु तमसाक्रान्ति: । अत एव तत्र रात्रिप्रवृत्ति: । रात्र्या अर्धमारभ्य यानप्रारम्भोविभिन्नदिशि । यानचातुर्विध्यस्योक्तत्वेन तत्रत्योक्तक्रान्तिवृत्तभागस्यावरोहमारभ्य यानप्रवृत्ति: ।

एवं सति तत आरभ्य दिनान्तरप्रवृत्या तत्यानप्रारम्भोयं स्थलं तत अवरोहस्थलम् अवरोहान्त्यभागे विसारि उषोरूपतेजोयुक्तं स्थलमिति वज्रस्य भागत्रये पूर्वपूर्वापेक्षया परपरस्य स्थूलत्वम् । तदुक्तमाज्यशस्त्रे सूक्तस्य प्रारम्भोयर्च: प्रथमार्धे प्रथमपादान्ते विच्छेदविधानावसरे ऐतरेयब्राह्मणे स्पष्टमुक्तं वज्रस्योक्तरीत्या त्रिभागत्वमिति ।

एवं तत्रत्यं ब्राह्मणम्–आरम्भणतो वै वज्रस्याणिमा अथो दण्डस्याथोऽपरशोरिति[1] । तत्रोक्तप्रारम्भभागोऽणुरितिप्रारम्भेऽणुरित्युक्तिर्ब्राह्मणे । तदानीं तेजसोऽतिस्वल्पत्वेन तथात्वमणुत्वमित्यर्थ: । तत: परवर्तिभागोऽधोमुखं प्रवर्तमानं तेजो दण्ड इवेति दण्डभागात्मकस्य तेजस: पूर्वापेक्षया स्थूलत्वेन स्पष्टत्वेन तथोक्ति: ।

तत उष:काले तस्यासमन्तात्प्रसारित्वेन परशुरूपत्वमिति दण्डतोऽपि स्थूलतोक्ति: । तादृशप्रसारित्वेन तेजसस्तद्वैशिष्ट्येनोषस: परशुत्वेन निरूपणम् ।

---

१. ऐ. ब्रा. २:५:३

तदुक्तं-"पशुं ह नाम मानवी साकं ससूव विंशतिमिति[1]" । अत्र पर्शुर्मानवीति विशेषणादपरापि पर्शुर्भवतीति विज्ञायते । 'ह' शब्दप्रदानेन तस्य काल्पनिकं पर्शुत्व विज्ञायते । सा यथा मानवी पर्शुर्युगपद्विंशतिं सूते । एवमपरापि साकं विंशजतिनिका स्यादेव ।

तदिदं सर्वं यूपसम्बन्धीति यूपस्य वज्रत्वाभिधानम् । मयवोक्तयूपे उक्तरीत्या प्रथमं वर्तमान तेज. सूक्ष्मत्वेनाणु, ततो रश्म्याद्यात्मना प्रवर्तमानं पूर्वापेक्षया स्थूलं रश्मीनां शलाकिकाद्याकारतया दण्डरूपम् । ततः उदीयमानबिम्बस्य विस्पष्टतरत्वात्स्थूलतरत्वं तस्य च बिम्बस्यार्धोदितस्यार्धवृत्ताकारतया परशुत्वेन रूपणेन तस्य परशुरूपस्य भागस्य दण्डतोऽपि स्थूलत्वोक्तं ।

एवं सत्यस्योदयतो बिम्बस्योभयतः पार्श्वयोरुदयदेशेऽस्तमयदेशे चोदयादस्तमयाच्च पूर्वपरवर्तिदण्डदशकरूपकालपर्यन्तं भासमानमूप सञ्ज्ञकेनेजोजनकतया तस्या परशोर्युगपद्विंशतिसवनकर्तृत्वमुच्यमानं सगच्छते । आदित्यस्यासमन्तात् प्रतिपार्श्वं पूर्वोक्तयाम्योत्तरवृत्तगनाशदशकपर्यन्तं तेज सम्बन्धितया तदुत्पादकत्वोक्तिः ।

अयं भाव -उक्तयाम्योत्तरवृत्ते गमनागमनावसर आदित्येन तदीयमशाष्टकमेकमासेनातीयते । एवं सति तद्वृत्तगतैकाग्र्यबिन्दुतोऽपरबिन्दुपर्यन्तं येऽष्टाचत्वारिंशदशास्तेषां गमनागमनाभ्यां द्विरुपयोगेन तद्द्वैगुण्यं षण्णवतिरूपं तावता वत्सरे मासद्वादशकं पूर्यते एवं मासद्वादशकृते यदि षण्णवत्यंशा उपयुज्यन्ते एकमासकृते कियन्त इत्यनुपातेन प्रतिमासमशाष्टकोपयोगो विज्ञायते ।

सुमेरुकुमेर्वोर्ऽदयात् पूर्वमेकमासपर्यन्तं सावित्र. कालः प्रकृष्टः प्रकाशस्तत. परस्ताच्चापस कालो मासपर्यन्त. । अत एवोपससूक्ते उपसा त्रिंशद्योजनातिक्रमस्त्रिंशत्पदयुक्तता त्रिंशत्स्वसृकतोच्यमाना सगच्छते । तत्रोपस सूर्योदयसविधा भागोऽरुणो भवति स च तत्कालस्य तृतीयभाग इति तदर्थं स्थूलमानेनांशद्वयं सावित्रञ्चाष्टकमशानामिति अशदशकव्यापिता तेजसां, तदेव गृहीत्वा प्रतिपार्श्वमशाना विंशतिं तेजसा भास्वरा गृहीत्वा परशोरादित्यार्धमण्डलरूपाया युगपद्विंशतिं प्रसवकर्तृत्वेन वा वचनम् ।

एवञ्च मण्डलार्धमेव परशु. । तस्याऽपरभागापेक्षया स्थूलत्वेन ब्राह्मणोक्तमयो परशोरिनिवर्णनं सगच्छते । एवं सति पूर्वोक्तयाम्योत्तरवृत्तभागस्य तेजावैशिष्ट्येन यूपपरत्वमिति तस्य वज्रत्वोक्ति. । एवं वाचो वज्रत्वमपि तथा । तत्र वाच. सत्वमादित्यस्यासत्ताकालेऽर्धाद्वात्राविद्युक्तम् । अर्थात्तात्कालिकतेजोवैशिष्ट्येन तस्या वज्रत्वोक्ति. । सा च वाक् अविशेषात् सर्वरात्रव्यापिन्यपि प्रकाश-

---

1. ऐ. ब्रा. ५ ३.२

पुनतत्त्वरूपविशेषकार्यकारित्वेनोदयात् पूर्वं षोडशांशपर्यन्तं तेजोव्याप्त्या षोडशि-नीत्युच्यते ।

उक्तयान्योत्तरवृत्तगतसावित्रीपक्षोः सम्बन्धिनोंऽशाः षोडश, तावत्पर्यन्तं तेजः सम्बन्धस्य प्रवृत्तेः। एवं "वज्रो वा एष यत् षोडशी" इत्यस्याप्युपपत्तिः । एवं वाक् षोडशीति व्यवहारोऽप्युपपन्नः । एवं त्रिष्टुभो वज्रत्वमप्युक्तरीत्यैव । तथाहि उक्तरीत्या सावित्रमंशाष्टकं ततः परस्तादक्षरत्रययोगेन सम्पन्नत्रिष्टुभो वज्र-रूपतेति ।

अयंभावः—ब्राह्मण उच्यते, पूर्वं छन्दांसि चतुरक्षराण्यासन् । कथं चतुरक्षरत्वमिति छन्दःस्वरूपविचारे प्रोच्यते । अमुष्मिन्लोके सोम आसीत्तस्यानयनार्थं देवैश्छन्दांसि प्रार्थितानि । तदानीं जगती प्रथममुत्पत्य मध्येमार्गं श्रान्ता स्वीयानि त्रीण्यक्षराणि विहायैकाक्षरा भूत्वा प्रत्यागच्छत् । ततोऽनुष्टुबपि ऊर्ध्वं पतित्वाऽधिकं पन्थानं गत्वा श्रान्ता सती स्वनेकमक्षरं हित्वा त्र्यक्षरा भूत्वा प्रत्यावर्तत। ततो देवैर्गायत्री प्रार्थिता सा सोमरक्षकान् भीषयित्वा पद्भ्यां मुखेन च सोमं छन्दोऽन्तराभ्यां त्यक्तान्यक्षराण्यप्यानीतवती । तानि चाक्षराणि स्वाक्षरैर्यो-जयित्वा गायत्री अष्टाक्षराऽभवत् । ततस्त्रिष्टुभा जगत्या च प्रार्थिता सा

आदित्योदय. सम्पूर्णबिम्बदर्शनोत्तर इति तत परस्तादेतस्य स्तवो युक्त । किञ्चादित्योदयात्पूर्वं दिनाप्रवृत्या रात्रिस्थितिरिति रात्रिसम्बन्धेन नाय बहिष्पवमानस्तोत्रकाल प्रत्युतेममारभ्य शसन प्रारम्भणीयमस्या दशाया बहिष्पवमानस्तोत्रमुदयात् पूर्वमुच्यमान दिनप्रारम्भात्प्राक् काले इति तस्य दिनबहिर्योगवशता बहि शब्दयोगेन तन्नाम बहिष्पवमानेति ।

एव सति तद्यथा दिनप्राक्काले स्तूयते एवमनुशसनमपि रात्रेरूर्ध्वमर्थाद्रात्रेरवसानोत्तरमेव शसनीयम् । रात्रिश्चावसिता सम्पूर्णबिम्बदर्शने । एव सति परवर्तिकाल. स न रात्रावन्तर्भूत । असमग्रबिम्बदर्शनेऽपि सम्पूर्णबिम्बादर्शनात् । एवञ्चासौ कालोन दिनेऽन्तर्भूतो नापि रात्राविति ततः स्तोत्रशस्त्रयो प्रारम्भेणानुरूप्यमुभयोरेकस्यानत प्रारम्भात् । तयोस्तादृशभावबोधमनुभाभ्या स्तोत्रशस्त्राभ्या क्रियते ।

तत्र स्तोत्रनाम्ना रात्र्यनन्तर्भावता प्राप्ता, एतत्स्तोत्रनाम्ना दिनानन्तर्भावो बोध्यते, बहि शब्दयोगात् । तेन च दिनबहिर्भावो बोध्यते । तत्र पवमानो हि गच्छन्नादित्य. । पू धातोर्निघण्टौ गत्यर्थेषु पवति इति पाठेन गमनार्थता बोध्यते । पवमान इत्यनेन गमनवत्ताऽऽदित्यस्य स च दिनप्रारम्भदेशत पूर्वमिति तस्य बहिष्पवमानता, तदीय च स्तोत्रमिति ।

स्तोत्रे ऋचस्तासा सख्यातद्रूपस्तोमच्छन्दसनासु सामयोग, तत्पाठकाना स्थान पाठकास्तत्पाठे यदि किञ्चन वैशिष्ट्य तदिति सर्वमपेक्ष्यते । प्रकृते च स्तोत्रे प्रत्येकमुक्तदिनबहिर्भावो। यथाऽत्रैक साम तृचे क्रियते स्तोत्रीयमिति वचनतस्त्रित्व प्राप्तमेवमृगिति वचनाच्छन्दोवैशिष्ट्यमपि प्राप्तम् ।

यतो मीमासकैर्ऋग्लक्षण "पादबद्धा अर्थोपेता मन्त्रा ऋच"इत्युच्यन्ते । तत्र पादाश्छन्दो विना न भवन्तीति तद्वैशिष्ट्यमपेक्षणीयम् । छन्दश्चात्र गायत्रम्, गायत्रच्छन्दसश्च प्रात सवनसम्बन्धिता ब्राह्मणे उच्यते । प्रात सवन च प्रातः कालिकमिति प्रात· शब्देनोदयात् पूर्ववर्तिन. कालस्य बोधनम् ।

एव सत्यत्र गायत्रच्छन्दस्क-ऋचा सम्बन्धेन दिनबहिर्भावो बोधित । स्तोमार्थमृचा समूहनप्रकारेणापि दिनबहिः सम्बन्धः सूच्यते । तथाहि अत्र स्तोत्र स्तोमस्त्रिवृन्नामक.। त्रिवृच्छब्दस्यार्थस्त्रिरावर्तन स्तोत्रीयाणामृचाम् । एव चर्क्-नवक त्रिवृत् पदाथ । आदित्यबिम्बस्यादर्शनमारभ्य सम्पूर्णदर्शनार्थं क्रियाश्चन कालोऽपेक्षितो भवति, स च विषुवादिस्थले स्वल्पो ध्रुवस्थानादिस्थलेऽधिको भवति ।

आधिक्यपराकाष्ठा ध्रुवस्थले सुमेरौ तद्विरुद्धे च कुमेरौ भवति । तदाधिक्य तत्र पूर्णत्वेन ग्रहणेन परिक्रमत्रयरूपम् । तत्रत्यपरिक्रमस्य विषुवसस्कारानु-

रोधेन दिनशब्देन ग्रहणमिति दिनत्रयेण पूर्णं विम्बं तत्रोदितं भवति । एवं चोदयार्थमपेक्षणीयं दिनत्रयं न रात्रावन्तर्भूतं नापि दिने ।

एवं पूर्णविम्बस्य यत्र कुत्रापि ग्रहणे दिनत्रययोगस्यापेक्षितत्वेन दिनत्रयमात्रेणोदयादिस्थलीयस्यैव तस्य ग्रहणमिति नियमनासम्भवेन दिनरात्र्यनन्तर्भावो न सम्यग्बोधितः स्यादिति तदर्थमत्र दिनप्रारम्भीयं रात्र्यवसानीयं मध्यवर्तिविम्बञ्च गृहीत्वा तद्वचनेनोक्तकालिकस्य बोधः स्यादिति अत्र स्तोमः ।

स च त्रिवृत्स्तोमः । तस्यर्ग्नवकमर्थ इति प्रोक्तमेव । तत्र सुमेर्वादौ पर्यायस्य परिक्रमस्य वा ऋक्शब्दबोध्यत्वमन्यत्रोक्तमिति ऋग्नवकार्थं विम्बत्रयसम्बन्धोऽपेक्षितः सोऽत्र दिनावसानीयं विम्बमेकं मध्यवर्तिविम्बमुदयद्वास्तमयद्वा तद्द्वितीयं, दिनप्रारम्भीयं च तृतीयमिति बिम्बत्रयग्रहणेन तन्मध्यविम्बरूपस्य दिनरात्र्यनन्तर्भूतस्य सम्यक् ग्रहणं भवति । तत्र प्रत्येकार्थमृक्त्रयमिति ऋग्नवकमित्यर्थः । तस्य त्रिवृत्स्तोमत्वेन वचनमिति तन्नामतस्स दिनवहिर्भावो बोधितो भवति । तत्प्रकाररूपविष्टुत्यापि स बोध्यते ।

तथाहि त्रिवृत्स्तोमस्य विष्टुतित्रयमेकोद्यतो द्वितीया परिवर्तिनी तृतीया कुलायिनी । तत्रोद्यत्याख्यविष्टुतेः स्वरूपं ताण्ड्यब्राह्मणे उच्यते यथा—"तिसृभ्यो हिंकरोति स प्रथमया । तिसृभ्यो हिंकरोति स मध्यमया । तिसृभ्यो हिंकरोति स उत्तमया । उद्यती त्रिवृतो विष्टुतिरिति[1]" ।

अत्र पर्यायत्रयं विम्बत्रयापेक्षया । प्रतिविम्बमुद्गमनमूर्ध्वगमनं तदपेक्षया प्रथमपर्याये प्रतिविम्बं प्रथमया ऋचाऽर्थाद्विम्वत्रयवशात्प्रथमात्रितयेन प्रथमपर्याये गानम् । तत्र विम्बस्यैकैकपर्यायातिक्रमणमभिप्रेत्य तिसृभ्य इत्युक्तिः, गानाभिप्रायेण च परस्तात्प्रथमयेति तृतीयावचनं, गाने ऋचः करणत्वात् । हिंकरोति उद्गायति उद्गानमूर्ध्वातिक्रमणमित्यभिप्रेत्य तिसृभ्यो हिंकरोतीत्युक्तम् । उद्गानशब्दे गाधातोर्गमनार्थस्य ग्रहणेनोद्गानमूर्ध्वगमनमाक्रमणमित्यर्थः ।

एवं द्वितीयपर्याये मध्यमया प्रतिविम्बं मध्यमात्रितयेन गानम् । एवं तृतीयपर्याये प्रतिविम्बं योऽन्तिमः परिक्रमः स उत्तमशब्देन गृहीत्वोत्तमात्रयेण गानमित्ययं प्रकार उद्यत्याख्यो विष्टुतेस्त्रिवृत्स्तोमस्य ।

एतावतैतेन मध्यविम्बस्य ज्ञानार्थं पूर्वपरवर्तिविम्बद्वयस्य गानावसरे ग्रहणं, तत्त्रथाभिप्रायेण पर्यायत्रयेण गानं प्रतिपर्यायं च परिक्रमप्रकार इति बोधितम् । अतएवास्या विष्टुतेरभिक्रामन्तीशब्देन वचनम् । यथा वृक्षारोहे

---

१. ताण्ड्य. ब्रा. २:२:१.

क्रमेणाभिक्रमणमथ प्रत्येवमेतयाऽग्रात् परवर्तिस्थानात्परवर्तिस्थान परिक्रमरूपमभिक्रामन्ता भवतीति । अस्या च विष्टुतौ पारवसीयसी विघृतित्वमुच्यते ।

तच्च मध्यमबिम्बे पापस्य तमसो वसीयस कल्याणरूपस्य तेजस सम्बन्धात् । तावतोदयादिस्थलीयत्वमेतस्य स्तोमस्य विज्ञात भवति । प्रतिबिम्बमारोहाभिप्रायेणैपोच्यतो त्रिष्टुनीरुक्ता । त्रिवृत स्तोमस्य द्वितीयविष्टुत्या एकैकस्य बिम्बस्य क्रमिकमारोहत्रय समाप्यापरस्यैव क्रमेण बिम्बत्रयारोहाभिप्रायेणैपोच्यते । पूर्वस्या तु त्रयाणामपि बिम्बाना युगपदारोहाभिप्रायेण प्रवृत्तिरिति प्रतिबिम्ब प्रथमाया ग्रहणेन प्रथमात्रयेण प्रथमादिपर्यायत्रयमुक्तम् ।

तत्रोच्यतेऽत्र विष्टुतौ प्रथम पर्याय' तिसृभ्यो हिंकरोति स पराचीभिरिति । प्रथमबिम्बीयपरिक्रमात्रयेणोर्ध्वारोहोऽत्रोद्गान तेन ता परिक्रमा प्रथमबिम्बीयास्ताभ्यो हिंकरोतीत्युक्तम् । तासा क्रमेणैकैकस्या अतिक्रमणेनातिक्रान्त सा परा विदूर गता भवतीति सा पराचीशब्देनोच्यते । तादृश्योऽत्र पर्याये तिस्रो भवन्तीति ताभिर्गानाभिप्रायेणोच्यते पराचीभिरिति ।

एवञ्च प्रथमपर्यायेण प्रथमबिम्बस्य रात्र्यवसानकालिकस्याभिक्रमणयुक्त, द्वितीये पर्याये मध्यमस्याभिक्रमण तत्रापि परिक्रमाणा क्रमश पराञ्चनमिति तृतीये पर्याये तृतीयस्य दिनप्रारम्भीयस्य बिम्बस्याभिक्रमण बोध्यते । तत्रापि क्रमिकपरिक्रमासम्बन्धेन पराचीत्वमुक्तम् । प्रथमस्य स्तोमस्य विष्टुते प्रकारो बिम्बावर्तनाभिप्रायक इति अस्या. परिवर्तिनीति नाम । अत्र प्रतिबिम्ब यथावद्रूपेण ग्रहणेन सा समा भवतीति परस्तात्तत्र ब्राह्मणे प्रतिपादितम् ।

तृतीयो विष्टुते' प्रकारः कुलायिनी । तस्या स्वरूपमुच्यते पर्यायाणा त्रिसृभ्यो हिंकरोति स पराचीभिरिति । प्रथमबिम्बारोहणाभिप्रायेण यथावद्रूपत्वमुक्त, द्वितीयपर्याये प्रथमवर्तिन्या परिक्रमाया परित्यागेनोत्तरबिम्बाभिप्रायकपरिक्रमाया' प्रथमाया ग्रहणेन परिक्रमात्रयात्मक पर्याय उच्यते । प्रथमबिम्बीयप्रथमपरिक्रमायाः परित्यागेन द्वितीयादिमारम्य परिक्रमात्रयग्रहण क्रमिकमुच्यते ।

तत्र प्रथमबिम्बीया या मध्यमा परिक्रमा सेदानी प्रथमा सम्पन्ना, तद्बिम्बीया *या अन्तिमा परिक्रमा सात्र पर्याये द्वितीयस्थाने वर्तेति योत्तमा तस्या मध्यमात्व*मुच्यते । तदुक्त "तिसृभ्यो हिंकरोति या मध्यमा सा प्रथमा योत्तमा सा मध्यमा या प्रथमा सोत्तमेति" । एव परवर्तिबिम्बीयप्रथमपरिक्रमाया अत्र मध्यमे पर्याये उत्तमास्थाने वचनमिति ।

तृतीये तु पर्याये प्रथमबिम्बीयतृतीयपरिक्रमामारम्य परिक्रमात्रयग्रहण, तत्र तद्बिम्बीया अन्त्या एका, परबिम्बीय परिक्रमाद्वय क्रमिकमिति पर्यायः ।

तस्य स्वरूपमुच्यते तिसृभ्यो हिंकरोति योत्तमा सा प्रथमा या प्रथमा सा मध्यमा या मध्यमा सोत्तमा इति । एषा मध्यमबिम्बस्थानसंपादिकेति कुलायिनीत्युच्यते ।

एवं चात्र त्रिवृत्स्तोमेन तद्विष्टुत्या चोक्तमध्यमबिम्बकालस्य बोधनमिति । एवमेतासु गायत्रं साम गीयते । गायत्रं च साम गायत्रीछन्दस्कायामृचि गानेन प्रदर्शितम् । साम च गीतिरूपमित्युक्तम्, गीतिश्च स्वराणामारोहावरोहविशेष-रूपा । सा चैकस्यामृचि सामवेदे प्रदर्श्यते, स्तोत्रकाले च तिस्र ऋचोऽपेक्ष्यन्ते । तत्र यस्यामृचि यद्गानं प्रदर्शितं सा तस्य साम्नो योनिभूताऽऽश्रयरूपा ऋगुच्यते । तत्र प्रदर्शितस्य गानप्रकारस्य स्तोत्रावसरे तिसृषु ऋक्ष्वतिदेशः करणीयः ।

एवं च गायत्रसाम्नोऽत्र गेयत्वम्, सयत्रसाम्नः प्रातःसवनसम्बन्धित्वेनोक्त-विधप्रातःकालिकता बोधिता भवति । एतस्य बहिष्पवमानस्तोत्रस्यान्यस्तोत्र-गानस्थानतो भिन्ने वेद्या बहिर्भागे गानादस्य बहिः सम्बन्धाद्बहिष्पवमानता । तदर्थमुपयुक्तैर्ऋत्विग्भिस्तस्मिन्बहिर्देशे गानार्थं गन्तव्यम् । ते च पञ्चर्त्विजः, होता, अध्वर्युः उद्गाता प्रतिहर्ता ब्रह्मेति । तेषां गमने विशेष आश्वलायने उच्यते "प्रह्वा" इति । तेषां परस्परसम्बद्धत्वमपेक्ष्यते, तद्यथा परस्परसम्बन्धविच्छेदो न स्यात् तथा ।

सम्बन्धविच्छेदे प्रायश्चितमुक्त ताण्ड्यब्राह्मणे । ताण्ड्यब्राह्मणे "प्रक्वाणा" इति विशेष उच्यते । प्रक्वाणाः क्वाणेन स्वनेन रहिताः । तदर्थो भाष्यकृतोच्यते प्रक्रमे पदध्वनिरहिताः । ब्राह्मणे उच्यते यज्ञो मृगधर्मा तस्य शान्त्यै अप्रत्रासाय प्रक्वाणाः सरन्ति इति ।

भाष्यकृतोच्यते–यथा मृगव्याधानां पदध्वन्युपलब्ध्या मृगा विज्ञाय भीत्या पलायिता न भवेयुरेवं शनैः पादनिक्षेपेणेति, मृगरूपो यज्ञो न भीतः स्यादिति । वस्तुतो यज्ञस्यादित्यस्य मृगरूपत्वं मार्गशीयरूपत्वं रात्रिसम्बन्धात् तमसा वृत-त्वेन तद्विज्ञानाभावान्मार्गणीयत्वेन मृगरूपत्वकल्पना ।

निरुक्तकारेण मृगशब्दस्य मार्गणीयत्वार्थकत्वमुक्तम् । अतएव पशुपुरोडा-शार्थवादब्राह्मणेऽश्वस्योत्क्रान्तमेधत्वेनात्यार्जने तस्य गौरमृगभावउक्तः। गौरित्यनेन गन्तृत्वं तच्चास्ततः पूर्वं ततः परं च भवति, तत्रास्ततः परस्य तस्य व्यावर्तनाया-मृग इति विशेषणमुक्तम्, तेन गौः कीदृशो मृगो मार्गणीयोऽस्तमप्राप्त इत्यर्थ इति । एवं च रात्रौ वर्तमानस्यादर्शनान्मार्गणीयत्वं भवतीति तस्य मृगरूपतोक्ता ।

आदित्यश्चास्तगमनावसरे स्वीयं तेजोऽग्नौ निदधातीत्युक्त्या तस्य तेजोराहित्येन कृष्णरूपता । अतएव यजुर्वेदे यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीनिति तस्य कृष्णरूपतोक्ता संगच्छते । एवं सति तस्य मृगरूपत्वेना-

दर्शनेन तदीय. स्वनो न भवति । स्वनशब्देन वागुच्यते यथा तदीया वाक् न भवति ज्ञाता एवमृत्विग्भिरपि नि स्वनैर्गन्तव्यमिति ।

वस्तुतस्तु सर्पन्तीति वर्णनेनैषा सर्पवद्भूसम्बन्धिता व्यज्यते, तां व्यञ्जयितु आश्वलायने प्रह्वत्वमुक्तम् । एव च सर्पन्ति इति सर्पणेन बहिरिति वर्णनेन शब्दराहित्यवर्णनेनोक्तोदयकालसम्बन्धिता व्यज्यते । यथैव स्तोत्रेण तन्नामादिना आदित्यस्य दिनरात्रिबहिर्भावो बोध्यते एव शस्त्रेणाप्यसौ बोध्यते । तच्च शस्त्रमत्र आज्यशस्त्र, तस्य भागत्रय साम्प्रदायिकैरुच्यते तूष्णीशसनि-विदसूक्तैराज्यशस्त्र त्रिपर्वकम् इति ।

तत्र तूष्णीशसेन तन्नाम्ना तदीयमन्त्रेण च स भावो व्यज्यते । तथाहि तूष्णीशसशब्देन प्रथमतस्तस्य वागसम्बन्धो बोध्यते । स च पूर्णबिम्बस्य यथा एव खण्डितबिम्बस्थलेऽपि वाचो सम्बन्धस्तूष्णीशसेति कर्मनाम्ना बोध्यते इति तन्नाम उदयदस्तमयद्बिम्बकालबोधकम् । तत्र कर्मणि प्रयुज्यमानमन्त्रतोऽप्युक्त. कालो बोध्यते ।

तत्र तूष्णीशसस्थले मन्त्रत्रय प्रयुज्यते तथा अग्निर्ज्योतिर्भू. इन्द्रो ज्योतिर्भुव , सूर्यो ज्योति. स्वरिति । यद्यपि मन्त्रपाठावसरे भूरग्निर्ज्योतिर्ज्योतिरग्नी, इन्द्रो ज्योतिर्भुवो, ज्योतिरिन्द्रो, सूर्यो ज्योतिर्ज्योतिः स्वः सूर्योमिति पठ्यते, तथापि तूष्णीशसस्य द्वेधा वचन, त्रिपदत्वेन षट्पदत्वेनेति ।

तत्र त्रिपदत्वेन मन्त्रार्थकत्व गृहीत्वा पूर्वोक्त मन्त्रत्रितय, षट्पदत्वे तु प्रतिमन्त्र भागद्वयम् । सर्वथाऽत्र भागत्रये अग्निर्ज्योतिरिति प्रथमः पर्याय', इन्द्रो ज्योतिरिति मध्यम. पर्यायः, सूर्यो ज्योतिरित्युत्तम पर्यायो भवति । तत्पर्यायत्रय भूरादिशब्दयोगेनाभिव्यज्यते । एवञ्चात्र मन्त्रे पूर्णबिम्बाभावो द्योतितो भवति ।

एव च तूष्णीशसशब्देन आज्यपर्वबोधकेन तत्र प्रयुज्यमानमन्त्रतोऽपि खण्डितबिम्बकालेऽस्य प्राप्तिरिति बोध्यते । एव सति तस्य शस्त्रस्य स्तोत्र-सादृश्य भवति, यथा बहिष्पवमानस्तोत्र दिनप्रारम्भात्पूर्व प्रयुज्यत एवमाज्य-शस्त्रमपि रात्रिप्रारम्भपूर्वकाले प्रयुज्यते इति स्वोचितकालपूर्वकालिकत्वेनोभयोः स्तोत्रशस्त्रयो. सादृश्यमुपपद्यते । तदर्थमेव नामसादृश्येन आज्यस्तोत्रोत्तरत्वमा-ज्यशस्त्रस्येति प्राप्तक्रमवपरीत्येन प्रयोगो देवरथदार्ढ्यापादक इति देवरथो वा इत्यत्रोक्त ब्राह्मणे प्रवृत्ते क्रमविपर्यास उच्यमानः संगतो भवतीति प्रतिपादितम् ।

एव च स्तोत्रशस्त्राभ्यामसौ खण्डितबिम्बकालस्तत्काले तयोः प्रयोग इति बोधितं भवति । तत्र स्तोत्रेण स्तोमस्य विष्टुतिप्रकारेण यथोद्यतो बिम्बस्य सम्बन्धिनावारोहावरोहौ प्रतिपादितौ, यथोद्यत्या विष्टुत्या ऋग्रूपाणा परि-

क्रमाणां परित्यागावधित्वबोधनेन परिक्रमाणामवरोहो बिम्बस्यारोहश्च तिसृभ्यः पञ्चम्या परिचीभिरिति बोधितौ, एवं शस्त्रेणापि आरोहावरोहौ सूचनीयौ ।

तत्र तूष्णींशंसेन मन्त्रेण यथोभयं प्रतिपादितमेवं सूक्तेनापि सूचनार्थं तद्गतानामृचां क्रमो विपर्यस्यते । तत्राज्ये शस्त्रे सूक्तं प्रवो देवायाग्नय इति । तत्रत्यानामृचां शंसनावसरे क्रमः प्रथमा पञ्चमी चतुर्थी षष्ठी तृतीया द्वितीया सप्तमीत्येवं तत्रत्यर्चां पाठक्रमोऽनुस्त्रियते । तद्विपर्यासे बीजं ब्राह्मणं प्रतिपाद्यते । तत्र प्रथमया मध्यवर्ती अवकाशः सूच्यते ।

### २६. प्र वो देवायाग्नये इत्यादिमन्त्रार्थविचार:

आदित्येन स्वीयगन्तव्यमार्गे स्वल्पकालांशः क्रमः क्रियते । वस्तुतस्तु नादित्यस्य गमनं किन्तु पृथिव्यास्तत्तस्मिन्नारोप्य तस्य गमनमिति व्यवह्रियते इति पूर्वमुक्तं ब्राह्मणवचनेन । तत् पृथिव्या गमनं ज्योतिर्गणितसाध्यमपि स्वतन्त्रेण अनुमानेन ज्ञातुं शक्यं, यथा आदित्यस्यातपे कालविज्ञानार्थं क्रियमाणे नियतपरिमाणच्छायास्तम्भेन शंकुना स्वल्पेनातपप्रतिबन्धेन प्रवर्तमानच्छायायाः स्वल्पस्वल्पशश्चलनं दृश्यते तद्वशत इदं छायाचलनमातपचलनेन तत्प्रतिबन्धकसञ्चलननिमित्तमन्यत्रैवेति तदेव छायाचलनं रात्रौ तमसः क्रमिकप्रवृत्तावपि तथा भवतीति यजुषि विश्वरूपवधकुपितेन त्वष्ट्राऽभिचारार्थगृहीतहविषो हवने ततो निष्पन्नवृत्रस्य विषये इषुमात्रं सर्वतो विवर्द्धितुमारेभे, तत इन्द्रश्च त्वष्टा च बिभ्यतुरिति ।

तत्रेषुमात्रविवृद्ध्या स एवार्थो बोध्यते । एवं चादित्ये आरोपितगत्या तस्य गतिमत्ता, सा चेषुमात्रमेवेति क्रमिकमेव तद्गमनं, परन्तु तत्र दण्डनिपातन्यायेन गन्तव्यमार्गे मानमिति कल्पनया कुमेर्वभिप्रायेणान्तिममस्तप्रारम्भात्पूर्वं दृश्यं पूर्णं बिम्बं ततोऽस्तमयद्बिम्बं तन्मध्यवर्तिनमवकाशं मर्यादारूपं गृहीत्वा प्रथमया सूक्तगतयाऽन्तरिक्षे बोध्यते । प्रथमा च ऋक् सूक्ते—

> प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै ।
> गमद्देवेभिरा स नो यजिष्ठो बर्हिरासदत्[1] ।। इति ।

यद्यप्यनेन सूक्तेनाग्निः स्तूयते तथापि तत्रत्यमन्त्रेषु ते ते विशेषाः केनचन पदेन वर्णनेन वा सूच्यन्ते । यथा अत्र मन्त्रे प्रथमपादेन प्र वो देवायाग्नये इत्यनेन पृथक्वाक्यभूतेन अग्नेः स्तुतिवचनमुच्यते । तत्र प्रशब्देनोपसर्गेण योग्यक्रियाध्याहारः सा चात्र योग्या क्रिया स्तुतिः । वच्मीत्यादिना स्तौमीति वा कल्पना । स्तुतिकरणात: पूर्वदेशेऽवस्थायेति अवकाशसूचनम् । किञ्चात्र व इति पदं प्रोच्यते वो युष्माकं सम्बन्धिनमिति शेषः । तादृशश्च देवो अग्निः स्तोत-

---

१. ऋ. सं. ३:१३:१.

व्यत्वेनोच्यते। शस्त्रस्य रात्रिकालिकत्वेन देवस्याग्नेर्दिनसम्बन्धित्वेन तत्रागतता तस्य सूच्यते।

एवं च पूर्वं पूर्णं बिम्बमतीत परस्ताद्वर्तिनो देवस्य परवर्तिदिनसम्बन्धिन. प्रवृत्तिस्तत्र मध्यवर्तिनि अवकाशन इदमुच्यते युष्माकं सम्बन्धिन देवमग्निं प्रस्तौमि। एतद्विशेषप्रतिपादनाय ब्राह्मण प्रथमपादे विहरण भेदकरण तच्च विरोधरूपमुच्यते। तस्य प्रकारान्तरेण समर्थन क्रियते वज्रस्य अणुत्वसम्पादना-येद विहरणम्। तदुक्तमारम्भणतो वै वज्रस्याणिमेति। तत. परस्ताद्वरीयस्त्व वज्रस्य परभागस्येति तादृशत्वसपादनाय तदिति। एव सति दण्डनिपातन्यायेन बिम्बेन माने पूर्वबिम्बस्यावमान परबिम्बस्य च प्रारम्भ उभयोर्मध्यवर्त्या-काशरूपोऽवकाशो बोध्यते।

ब्राह्मणे प्रकारान्तरेणोच्यते "प्र वो देवायाग्नय" इत्यत्र वर्तमान. प्रोपसर्गोऽन्तरिक्षस्य द्योतक.। यत सर्वाणि भूतान्यन्तरिक्षमनुप्रयन्तीत्य॰ प्रशब्दस्य प्रायणाधिकरणत्वात्प्रशब्दबोध्यता तस्येति। तदुक्त ब्राह्मणे "अन्तरिक्ष वै प्रान्तरिक्ष ह्रीमानि भूतान्यनुप्रयन्ति अन्तरिक्षमेव तत्कल्पयन्त्यन्तरिक्ष-मन्वेतीति"।

एवञ्चात्र प्रशब्दयोगादन्यदीयस्य देवरूपस्याग्ने स्तवादय पूर्वोत्तरमध्य-वर्तिदेशोऽनेन बोध्यत इति प्रथमा सूक्तगता प्रथम शस्यते। ततो दण्डनिपात-न्यायेन मध्यवर्तिनो बिम्बस्याभिप्रायेण तद्बोधिकाया ऋचो द्वितीयस्थाने वचन, यद्यपि सूक्तपाठक्रमेणेषा पञ्चमी। तस्यामादित्यस्य वैशिष्ट्यबोधकपद-सद्भाव.।

तच्च पदद्वय दीदिवासमपूर्व्यमिति पदद्वयम्। दीदिवासमित्यनेन दीप्तिमत्ता बोध्यते सा चादित्यस्य। तत्तु कलामात्रसर्गकिनया रात्रिमभ्यूनतेजस आदानादत एवादित्यता तस्य। तच्च तेजआदान सुमेरावेवादित्यस्य न तु कुमेराविति। तस्य केवल तत्र प्रकाशमानत्वमेवेत्युक्त द्वा सुपर्णेत्यत्र अनश्न-न्नन्योऽभिचाकशीतीत्यनेन। यदि दीदिवासमित्यनेनादानेन न दीप्तिमत्ता किन्तु दीप्तिशालित्वमात्रमुच्यते तर्ह्येतत्कुमेरावपि सम स्यादिति तद्‌ो व्यावर्तनाय द्वितीयमपूर्व्यमिति पदम। तस्य पूर्व इति व्यवहारयोग्य पूर्व्यम्। कुमेरौ तस्य पूर्वाञ्चनवशत पूर्वशब्दबोध्यतेत्यन्यत्रोक्तम्।

तादृश नेत्यपूर्व्यमर्थात्सुमेरावुदयार्थं व्याप्रियमाणमित्यर्थात्। एवं सति अनेन पदद्वयेन पूर्वोक्तावकाशोत्तरवर्तिबिम्बरूपादित्यस्य बोधनमनेन मन्त्रेणोनि दासनेऽस्या द्वितीयस्थाने वचनम्। तादृशत्वमुक्तपदद्वयस्य, तद्योगादय द्वितीय-स्थाने प्रयोगार्ह इति मन्त्रो ब्राह्मण उच्यते दीदिवांसमपूर्व्यमिति।

असौ वै दीदाय योऽसौ तपते तस्माद्धि न किञ्चन पूर्व मस्तीत्येतमेव तत्कल्पयत्येतमप्येति इति । तद्बिम्बस्थले प्रथमदृश्यमग्निं संसूचयत्तत्पदघटित-मन्त्रस्य तृतीयस्थाने पाठोऽयद्यप्यस्या अध्ययने सूक्ते चतुर्थीत्वमिति, स च मन्त्रः–

स नः शर्माणि वीतयेऽग्निर्यच्छतु शन्तमा ।
यतो नः प्रुष्णावद्वसु दिवि क्षितिभ्यो अप्स्वा ॥[1] इति ।

स सुमेरावुदयस्थानिकोऽग्निनो रात्रिकलिकेभ्योऽर्थात्कुमेरौ वर्तमनस्यः शन्तमा सुख कराणि शर्माणि गृहाणि वीतय उपभोगाय यच्छतु ददातु । यतो ऽग्नेरस्माकमस्तोत्तरसम्बन्धीनि वसु वसूनि धनानि प्रुष्णावत्पोपयुक्तानि भवन्ति, तादृशमग्निं प्रतिपादयत्येषा ऋगिति तस्याः सूक्ते चतुर्थस्थाने उच्यमानाया अपि शस्त्रे तृतीयस्थाने वचनम् । तदुक्तं ब्राह्मणे "स नः शर्माणि वीतय इति शंसत्य-ग्निर्वै शर्माण्यन्नाद्यानि यच्छत्यग्निमेव कल्पयत्यग्निमप्येति" इति । अत्र शर्म-शब्दस्यान्नाद्यवस्तुबोधकत्वमुच्यते ब्राह्मणे, तत्प्रदत्वमग्नेर्विशेषस्त बोधयन्त्येषा तृतीयस्थाने वक्तव्येत्युक्तम् ।

एवञ्च आकाशमादित्यमग्निं चेति उदयाभिप्रायकं क्रमिकावस्थाबोधकं त्रयमुक्त्वास्ताभिप्रायेणावरोहक्रमप्रतिपादनार्थमुच्यते परस्तात्, यथोदयावसरो-यतादित्यस्याग्नेश्चेत्येवमस्तावसरीयता दक्षिणस्यां सोमस्येति सोमप्रतिपादने विशिष्टामृचं सूक्ते षष्ठी शंसने अवरोहाभिप्रायेण चतुर्थीत्वेनाच्यते ।

अत्रार्चिषोऽस्मानस्तावसरीयान् ब्रह्मन्निषि हे बृहन्व्याप्नोषीति अस्तावसर-भासमानत्वं दक्षिणस्यां सोमस्य । सोमश्च दक्षिणदिक्क आदित्य इत्युक्त पुर-स्तात्तद्बोधकं चात्र मन्त्रे ब्रह्मपदमिति । ब्राह्मणे उच्यते "चन्द्रमा वै ब्रह्म चन्द्र-मसमेव तत्कल्पयतीति" । चन्द्रमः–शब्देन सोमरूपस्यादित्यस्य ग्रहणं न तु चन्द्रमसो ग्रहस्येति । यथारोहे आदित्याग्नी उक्तावेवमवरोहे सोमः परवर्ती वायुश्चेति वायुप्रतिपादिकामृचं सूक्ते तृतीयां शंसने पञ्चमस्याने पठनं प्रति-पाद्यते—

स यन्ता विप्र एषां स यज्ञानामथा हि षः ।
अग्निं तं वो दुवस्यत दाता यो वनिता मघम्[2] ॥ इति ।

अत्र यन्तेति यदम्, तच्च यमनं दक्षिणस्यामिति तद्युक्ता ऋक्, तदुक्तं ब्राह्मणे–स यन्ता विप्र एषामिति शंसति वायुर्वै यन्ता वायुना हीद यतमन्तरिक्षं न समृच्छति वायुमेव तत्कल्पयतीति । तत्र आरोहे यथान्तरीक्षं स्थानं पूर्वमुक्त-मेवमवरोहे द्यावापृथिव्योर्द्वारा मध्यवर्त्याकाशरूपस्यान्तरिक्ष ससूच्यते ऋतावा यस्य रोदसी इत्यनया ।

---

१. ऋ. सं. ३:१३:४ २. ऋ. सं. ३:१३:२

अत्र रोदसीपदेन परस्परनिरोधनरूपान्तरीक्षकार्यसंपादकद्यावापृथिव्यो संग्रह। तदुक्तं ब्राह्मणे द्यावापृथिव्यौ वै रोदसी द्यावापृथिवी एव कल्पयतीति'। इदमारोहादिकं सर्वं यथा स्तोत्रे न्यासरूपं आदित्ये एवमिदमवरोहादिकमपि सर्वमादित्यरूपे इति तत्प्रतिपादकामन्तिमामृचमाह—

नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु।
द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम्॥ इति। (ऋ स ६ ६३ ५)

अत्र सहस्रवत्त्वादिगुणयोगेन संवत्सरगत स्तोत्रशस्त्रवहिर्भूत दिनरात्रय न्तगततत्त्वं बोधयतीति सूच्यते। ब्राह्मणमपि अमुमेवार्थं गृहीत्वा ब्रवीति संवत्सर एव सहस्रवास्तोकवान्पुष्टिमान्संवत्सरमेव तत्कल्पयति संवत्सरं समस्तम-श्येतीति। अनयाऽऽज्यशस्त्रसमापनमित्युच्यते ब्राह्मणे उत्तमया सूक्तपाठऽन्तिमया परिदधाति समापयतीति। एवं च शस्त्रगतसूक्तेनापि दिनरात्रिबहिर्भाव स्तोत्रस्येव शस्त्रस्यापि प्रतिपाद्यते तूष्णींशंसेनेव सूक्तेनापीति। एतस्मिन् सूक्तेऽध्यात्मक-ल्पनापोतमेवार्थं प्रतिपादयतीति ब्राह्मण उच्यते।

## २७ त्रिसुपर्णानुवादस्य सविस्तर निरूपणम्

वेदस्यार्थविषयेऽनुक्रमणिकाकारोल्लिखितमतस्य यथाऽत्यन्तिक उपयोग एव तत्र तत्र निरुक्तकारीय व्याख्यान भाष्यान्तरकारादीनां व्याख्यानपद्धतेरपि तदा तदा विस्पष्टभावेनोल्लिखिताया ब्राह्मणभागेऽवर्थवादादिष्वनुसृतकल्पनानां मन्त्रेष्वपि क्रियमाणानां प्रश्नपूर्वकविवरणादीनामर्थस्वभावस्य चानुसारेण यथा-यथमर्थकरणे उपयोगित्वमुक्तस्य ब्राह्मणभागस्य रूपकेण क्रियमाणभागस्य विवरणमप्यर्थविज्ञानायोपकारीति तदा तदा प्रकाराणां मन्त्रप्रदर्शनमन्त्रार्थगता-नूपपद्यमानभागानां व्याख्यानार्थमनेकमन्त्रादीनां प्रदर्शनं व्याख्यानकरणेन प्रद-र्शितम्।

इदानीं कश्चन वैदिकभाग एव कल्पनोपयोगितया प्रदर्श्यते। इदं प्रदर्शन दिक्प्रदर्शनरूपमिति ब्राह्मणान्तरीयभागादीनां ग्रहणाद्यर्थं प्रयास सुकरं स्यादिति प्रयत्यते। तत्र यजुर्वेदे त्रिसुपर्णानुवाकेऽन्तिमे खण्ड उच्यते। तच्च खण्डमेवम्—

"तस्यैवं विदुषो यज्ञस्यात्मा यजमान श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लो-मानि बर्हिर्वेद शिखा हृदयं यूप काम आज्य मन्यु पशुस्तपोऽग्निर्दम शमयिता दक्षिणा वाग् होता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद् ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चर-त्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुख तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञान तज्जुहोति यत्सायप्रातरत्ति तत्समिध यत्प्रातर्मध्यन्दिन सायं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च तेचातुर्मास्यानि

ये ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ एतद्ध जरामर्यमग्निहोत्रं सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं सलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्राह्मणो महिमानम् इति ।

तत्र सर्वात्मना सामानाधिकरण्येनोच्यमानानामात्मा यजमान इत्यादीनामाञ्जस्येनाभेदो नोपपद्यत इति तेषां रूपणेन योगाश्रयणादिना वा स उपपादनीय इति तदर्थमेकं प्रकृतमपरं तदारूप्यादिना कल्पितं रूपं भावनार्थमिति गृहीत्वा अन्ते ब्रह्मणो महिमानमेतीति फलं वेदनस्योच्यत इति भावनाया उपासनार्थत्वं गृहीत्वा भाष्यकृतोच्यते– "य एवं वेदेत्यनेन ज्ञानस्य ब्रह्मणो महिमप्राप्त्यर्थकत्वबोधतया ज्ञानमत्र ब्रह्मसाक्षात्काररूपं तत्साधनाय संन्यास एवं कर्मणामपेक्षणी योऽन्तरंगत्वाज्जिज्ञासोः संन्यास एव युक्तो न तु कर्मानुष्ठानम् । तर्हि निष्पन्ने तत्वसाक्षात्कारे कर्माण्यननुष्ठीयन्तामित्याशंकां निवारयितुमत्रतत्वज्ञानिव्यवहाराणां लौकिकानां सर्वेषां यागरूपत्वमुच्यत इति" ।

कदाचन यज्ञस्यैव व्यवहारकल्पना यज्ञाङ्गेषु तत्कल्पनं, तच्च न सम्भवति तदुक्तं तत्र भाष्ये नहि यागस्य यागाधिकारशंकाऽस्ति इति । एवं च भाष्यकारेणार्थनिरूपणं सम्मतम् । तत्र रूपणाधारता कस्य विषयता च कस्येति विचारणीयम । तत्र भाष्यकृता मन्यते तत्वज्ञानिनो ये लौकिका व्यवहारास्तेषु यज्ञाङ्गत्वकल्पनमिति । अस्माभिस्तु मन्यते सूर्याचन्द्रमसोर्महिमप्रापकेषु यज्ञाङ्गत्वं कल्पत इति । सूर्याचन्द्रमसोर्महिम्नोः पृथक्त्वे प्रत्प्रापका अपि पृथगेव भवन्ति । तत्र सूर्याचन्द्रमसोः पृथक्त्वात्तत्प्रापका यज्ञा अपि पृथग् भवन्ति । तत्र देवानां महिमानं गत्वाऽऽदित्यस्य सायुज्यप्राप्तिः, पितृणां महिमानं गत्वा चन्द्रमसः सायुज्यप्राप्तिरिति वर्णनेनैको यज्ञो देवेषु, अपरः पितृष्विति भवति ।

तत्र शतपथानुसारेण "वसन्तो ग्रीष्मो वर्षास्ते दैवा ऋतवो देवेषु तह्र्यसौ भवति, शरद्धेमन्तः शिशिरस्ता आसुरा ऋतवो सुरेषु तह्र्यसौ भवति असुरांस्तह्र्यभिगोपायतीति" वर्णनेन ऋतुत्रये वसन्ताद्ये सुमेरुशृंगे आदित्यस्यानस्तभितभावेन सत्वे स देवलोकः, शरदादिषु असुरेषु सत्ववर्णनेन तदानीं सुमेरोर्दक्षिणदिक्के शृंगे वर्तमान इति स कुमेरुरसुराणां निवास इति देवलोकीया दृष्टिः ।

असुराणां दक्षिणा यथा दिगेवं पितृणां सा दिक् । तल्लोकानुसारा च दृष्टिः, ऋतुत्रयं तत्र दिनमादित्यश्च स्याताम्, परस्तान्मासषट्के तत्र रात्रिः, रात्रौ चतुर्द्वयं, तच्च वृष्टिपूर्णमित्येषा पितृलोकीया दृष्टिः । पितृलोकीययज्ञा-

नुष्ठानेन पितृलोके मृतस्य चन्द्रेण सायुज्यप्राप्तिरिति वर्णनेन दक्षिणदिक्कश्चन्द्रमा इत्येव भवति। अर्थाद्देवलोकीय उत्तरदिक्क आदित्य सूर्य इति।

अतएव स्थलान्तरे उक्त सोमो वै वाजस्तस्य चन्द्रमास्तृतीय योऽयं पवते स तृतीयमिति। आदित्यस्य चन्द्रम शब्दवाच्यता पूर्वं निर्णीता। अतएव तया परस्पर विभिन्नधर्मतया विशेषकल्पनेति निर्णीत पुरस्तात्। एव सति दक्षिण मृतस्य चन्द्रम प्राप्तिरुत्तरे मृतस्य सूर्याभिन्नादित्यप्राप्तिरुच्यते।

एतावता देवलोकीयदृष्ट्यभिप्रायेण यज्ञे तत्स्वरूपमुच्यते, यज्ञे यागकर्ता यजमानो भवति। अत्रापि यज्ञस्य देवलोकीयस्य यजमान आत्मा भवति। अत्रात्मत्वेन सूर्यो भवति गृहीत। तस्यात्मत्व मन्त्रे उच्यते सूर्य आत्मा जगतस्तस्थुषश्चेति। समानन्यायेन दक्षिणलोकीययज्ञाभिप्रायेण तत्रत्यात्मनि यजमानकल्पनेति। देवलोके यथा सूर्ये आत्मत्वकल्पना नैव तत्र दक्षिणलोके सूर्ये आत्मत्वकल्पना। अतएवास्यवामीये सूक्ते उच्यते भूम्या असुरसृगात्मा क्व स्विदिति। तत्रत्यात्मनो विषये पृच्छोपनिबद्धा।

अतएव तत्र परवर्तिनि मन्त्रे देवानामेना निहिता पदानि इति पूर्वोत्तरमन्त्रगतानामर्थाना देवाना विषये गुप्तत्व देवैरविज्ञानमुच्यमान सगत भवति। एव सति समानन्यायेन यथा देवलोके सूर्य आत्मा, तथा पितृलोके सुरलोके वा चन्द्रमा आत्मा। यद्यपि उभयरूपत्वमादित्यस्यैव तथापि उपाधिभेदेन भेदकल्पनेति बहुश उक्तमेव। यज्ञस्यार्थाद्दक्षिणदिक्के उत्तरदिक्के वा आत्मा यजमाने। अर्थादात्मनि यजमानत्वेन कल्पनेति।

ततो द्वितीय वाक्य श्रद्धा पत्नी। श्रद्धा सत्यधात्री सत्यस्य सपादिका पत्नीत्वेन कल्प्यते। उभयत्रेद समम्। निघण्टौ सत्यबोधकेषु नामसु श्रदित्यस्य पाठात् श्रत् सत्य तस्य धात्री सपादिकेति। सत्यशब्देन सत्यमेव नासत्यमित्यर्थेना सत्यप्रतिक्षेपमुखेन सत्यमुच्यते, असत्यप्राप्ति रात्रिकाले तस्य प्रतिक्षेप क्रियते न असत्य किन्तु सत्य तच्च रात्रिकालिक तेज, तत्र रात्रिप्रारम्भकालिकस्य सान्ध्यस्य तेजस. पत्नीत्वेन कल्पना। तामादाय श्रद्धा पत्नीति।

शरीरमिध्मम्। शरीर स्वरूपमर्थात्सूर्यचन्द्रमसो. तदिध्मम्। एधनीयमभिज्वलनीयमित्यर्थ।

उरो वेदिरिति। अत्र वेद्यामुरस्त्वकल्पना। यत सूर्याचन्द्रमसोरुरो प्रसिद्ध प्रसिद्धश्च वेदिपदार्थ। तत्प्रसिद्धिर्मन्त्रान्तरसाहित्येन। तच्च पूर्वमुक्त परिष्टिश्चाद्यवोरिति मन्त्रव्याख्याने। एतावती वै पृथिवी यावती वेदिरिति वचनेन वेद्या भुव परान्तत्वस्य इय वेदिरिति मन्त्रेण प्रतिपादितत्वमिति पूर्वमुक्तम्। एव च या वेदिस्तत्रोरस्त्वकल्पनमित्यर्थ। एतावता यत्र वेदिग्रहण तत्र सति समवे

तेज इति पूर्वं निर्णीम्, अत्रापि परस्तादुच्येत । एवं च पृषन् विन्दुम्पनक्षश्मुन तेज आजिस्थानापन्नमस्तोनरभावीति तच्च सर्वमण्डलरूपसर्वशरीरहोमोत्तरमिति सङ्गच्छते ।

एवं च समिधा स्वशरीररूपेण हूयमानेन । हूयमानं शरीरमित्यर्थं उक्त एव । आहुती आहुत्या प्रकाशेन प्रकाशमित्यर्थं । अत एवात्र परस्तादुच्येत यद्विज्ञानं तज्जुहानीति । एवं मति विज्ञानं प्रकाशस्तद्रूपया आहुत्येत्यर्थं । एवं वेदेन बर्हीरूपेणार्चिषा तद्रूपमर्चिरित्यर्थ. । तयोर्दंदानीत्यर्थस्य परस्परसाहित्येन निर्णय. । अतएव वेदेन समार्ष्टीति विधानं वेदपदार्थश्च उपविष्टस्य वत्सस्य जानुनो ग्रन्थिभागोऽवशिष्टश्चोरुजङ्घाभागौ विरुद्धदिक्कौ पार्श्वगतौ भवत., एवं मण्डलस्योभयपार्श्ववनिर्यद्रश्मियोगेन उपविष्टवत्सजानु सादृश्यम् ।

मार्जनसाधनत्वं रश्मिद्वारा तमस इति सगत व्याख्यानम् । मण्डलतो निर्गच्छन्तो रश्मय. पूर्वोक्तरीत्या शिखास्तासां वेदत्वमिति वर्णना । एवं च वेदपदेन शिखाया शिखापदेन वा वेदरूपस्यार्थस्य वाधद्वारा रश्म्यादिवोध इति । शिखाया अर्चिरर्थत्वं सप्तशिख इत्यादौ व्यक्तम् । एवं सति शिखासु वेदत्वकल्पना वेदे वा शिखात्वकल्पना तद्द्वारा तेज आदित्यपरत्वनिर्णयो वर्ण्यत इति ।

हृदयं यूप. । अत्रापि परस्परं स्मरणम् । यद्हृदयं स यूपो यूपो वा हृदयमिति । तत्रैतरेये यूपस्य वर्णनप्रसङ्गे याम्योत्तरवृत्तं यद्वंषुवदिने विषुववृत्तक्रान्तिवृत्तच्छेदविन्दुद्वारा गच्छति तत्र यूपरूपना । तस्याध्वाग्रस्याधोऽग्रत्वसंपादनात्मोहोत्पाद इत्यादि विस्तरेण निरूपितम् । तस्मिन्हृदयरूपण हृदये वा तन्निरूपणमित्यनेन हृदय्या आप इत्यादिषु निर्णय इति तत्र परस्परापेक्षारूपणे उभयत्रेद सममेवेति विशिष्य वचनाभावः ।

कामं आज्यम् । काम इत्यनेन उपमा मण्डलसंयोगात्मा समरम्भाव एवाज्यमिति बोध्यते तदुक्तं मन्त्रे—

> अपोषा अनमः सरत्संपिष्टादह विभ्युषी ।
> नियत्सीं शिश्नथद्वृषा[1] ॥

इत्यत्र सीम् एनामुषसं वृषा आदित्य इन्द्ररूपो वा निशिश्नथत् । नितरां शिश्नेन समताडयदिति । अयमर्थ उर्वश्या वचनेन स्पष्ट उच्यते उर्वशीपुरूरवसोर्वाकोवाक्यसूक्ते त्रिः स्ममाहूनः श्नथयो वैतसेन इत्यादिना । उर्वशी उषा एवेति तत्पदनिर्वचनतो विज्ञायते । तन्निर्वचनं निरुक्तभाष्ये उच्यते "ऊरुभ्यामश्नुते ऊरुर्वा वशोऽस्या" इति ।

---

१. ऋ स ४.३:१०

उपसि ऊरुत्वकल्पनात्तस्याश्चोषसो मण्डलस्योभयपार्श्वयो: सम्बन्धेनो-रुद्वययोग इति । तत: परवर्तिविम्बस्य साजात्येन स्त्रीन्द्रियत्वकल्पना, तद्वशत उषस: स्त्रीत्वमन्योषोरूपतेजोमात्ररूपस्य तस्य स्त्रीत्वेन निर्देशे बीजाभाव: । तत्र पुमिन्द्रियकल्पना तद्योगकल्पना चेति पुरस्तादुक्तमिति । तं सम्पर्कं गृहीत्वा कामत्वेन वर्णना तत्रैवाज्यत्वेनापि कल्पना । अतएव 'निकामे निकामे न: पर्यन्यो वर्षतु" इति वर्णनं संगच्छते । निकामो नीचै: काम:, भूलोकदृष्ट्या स च तत्रास्तो-त्तरीय: । अस्तस्याधस्ताद्वर्तित्वमुदयस्योर्ध्ववर्तित्वकल्पना सुमेराविव तत्रापि ।

एवं सत्यस्तस्याधोवर्तितया तत्रत्य: कामोऽधोवर्ती । तत्रोच्यते निकामे प्रतिकामं तथापि उपाधिभेदेन भेदकल्पना । तत्र पर्यन्यो वृष्टो भवतु इति । भवति हि तत्रास्तादूर्ध्वं सर्वां रात्रिं यावद्वृष्टिरिति देवानां माने इत्यत्र निरूपितम् । एवं सति कामवर्णने आज्यवर्णने काम आज्यमिति वर्णनेन मन्त्रार्थबोधे उपयोग: ।

एवं मन्यु: पशु: । आदित्यस्योभयत्र मन्युरूपत्वं मन्युसूक्त उच्यते– "मन्युरिन्द्रो मन्युरेवास देव" इत्यादिना । आदित्यस्य हविरूपत्वं पशुरूपत्वमिति पुरुषं वै इत्यत्र प्रतिपादितम् । स च देवयज्ञे यथा मनुयज्ञेऽपि तथैव होतृजपेऽक्षर पंक्तियज्ञवर्णनावसरे उक्तम् ।

अग्निस्तपोरूप इत्युच्यते तपोऽग्निरिति । सर्वत्रादित्यतो नि:सरतस्तेजस: प्रतिबन्धस्थले उष्णत्वावभासनात्तपोरूपत्वमग्ने: । स्पष्टं चेदं निरुक्ते, अग्नि-रप्यादित्यरूप एव । यत आदित्यतो निर्गतस्य तेजसो दिनमध्ये सूर्यकान्तमण्या-दिना पुञ्जीभावस्य करीषे पातने ततो वह्नेर्ज्वलनं प्रसिद्धं, अयमेवादित्योऽग्नि-रूप इति ।

किञ्चाग्निं प्रत्युच्यते देवांस्त्वं परिभूरस्यावह देवानिति अग्ने नेमिररां इव देवांस्त्वं परिभूरसि इत्यनेनारनेमिभावेऽरा यथा नेम्या सम्बद्धा एवमादित्यतो निर्गता: किरणा आकाशे प्रतिबन्धस्थले पुञ्जीभवन्तो वह्निरूपा इति वह्नेर्दे-वानां परितो वचनमयमप्यर्थ: पूर्वमुक्त एव । दम:शमपिता दमो हि दमनात्मा दण्डनस्वरूपस्तस्य शमरूपत्वम् ।

एवं सति शम: शान्तिरुष्णत्वादेरभावोऽर्थादस्तादिना, किंवा शमो मरणं तस्य संपादको य: स दमस्वरूप: शमयिता विनाशक इति । रुद्रस्य प्रजापति-रूपादित्यदमनकर्तृत्वं बोध्यते दुहितृपारोहकथायां ब्राह्मणे इति स दम: शमरूपो वेति । एवं सत्येषां वाक्यानां परस्परसम्बन्धेनैकवर्णनेनापरप्रतीत्यार्थबोधे उप-कारकत्वम् । भाष्यकृता तत्त्वज्ञानिनोऽङ्गेषु यज्ञादिकल्पनेति खण्डे भागद्वय-कल्पनेन पूर्वभागेनेत्युच्यते ।

दक्षिणा वाक् होता । अत्र दक्षिणाशब्दो दक्षिणां दिशं प्रदक्षिणा वर्तमान-त्वेन दक्षिणापरिक्रमयुक्तत्वं चाह । एवं दक्षिणादिक्स्था वाक् होतृरूपिणी ।

वाचो मण्डलास्त्वदशायां सत्त्वं तच्च रात्रिकालिकमित्युक्तम्। रात्रौ विद्यमानाया वाचश्चतुर्थं पदं मनुष्या मनुष्यलोक इति वर्णनेन भूलोकस्तत्सम्बन्धश्चाभिहोतेति। सर्वमेतत्पूर्वं निरूपितमिति सुमेर्वभिप्रायेण।

कुमेर्वभिप्राये दक्षिणा दक्षिणादिकस्था वाक् तत्रापि होतृत्वकल्पनोक्तरीत्यैव। तत्रापि सुमेराविव लोकत्रयकल्पनायास्तिस्रो भूमीर्धारयस्त्रोत द्यु नित्यादिना पूर्वमुक्तमेवेति। अनेन यज्ञ उभयत्र देवलोके सुरलोकेऽपि देवयज्ञे वा तद्विरुद्धे आसुरयज्ञेऽपि वा वाचा वागभिन्नस्याग्नेर्होतृत्वमित्यर्थः।

*प्राण उदगाता। प्राण ऊर्ध्वं गच्छन्नादित्य एवोद्गातृशब्दबोध्य ऋत्विक्।* उदयादूर्ध्वंगच्छन्नादित्यस्तद्रूप इत्युभयत्र समम्।

चक्षुरध्वर्युः। उदयात्पूर्वमस्तोत्तरं च सम्पूर्णमादित्यबिम्बं चक्षुमाजास्याच्चक्षुरूपम्। अतएव तस्य चक्षुरूपत्वं चक्षुर्मित्रस्य वरुणस्याग्नेरित्यादिनोच्यते। तद्रूपत्वाभावेन भगस्थले तस्यान्धत्वेन वर्णनमिति। तस्य चक्षुरूपस्यादित्यस्याध्वर्युत्वेन वचनम्।

एवं मनो ब्रह्मा। मनसो ब्रह्मरूपत्वम्। मनश्चोदयात्पूर्वकालिकमौषसं तेजः। अतएव सूर्याविवाहवर्णने उच्यते मनो अस्या अन आसीदिति। मनोरूपमस्याः सूर्याया अनः शकटं यानसाधनमासीदित्युच्यते। उषसि शकटत्वकल्पना अपोषा अनसः सरत्सपिष्टादह बिभ्युषीत्यत्र।

अनो मनस्मय सूर्यारोहत्प्रयती पतिमित्यत्रानोमनसोरभेद उच्यते। देवतासु यानवाहनायुधादीनां स्वरूपाभेद इति पूर्वं निरूपितम्। एवं चौषसं प्रकाश एव ब्रह्मर्त्विक्रूपः। अतएव भगपूषसवितॄणां देवयज्ञे ब्रह्मर्त्विक्रूपत्वे तैः प्राशित्रभागदर्शनचर्वणग्रहणैस्तेषां चक्षुषो दन्तानां हस्तस्य वा राहित्येन विकलाङ्गत्वादिवर्णनं सगच्छते तत्पूर्वमुक्तम्। उभयत्रापि सममेवेदम्।

एवं श्रोत्रमग्नीत्। श्रोत्रमित्यनेन श्रुतिभावापन्नं तेज उच्यते, श्रुतिविषये दीर्घश्रुतमित्यत्र प्रतिपादितम्। तस्याग्नीत् अग्निसमेधनकर्तृ-ऋत्विक्रूपतोच्यते।

यावद्ध्रियते सा दीक्षा। यावत् पर्यन्तं ध्रियते तूष्णींरूपत्वेनावस्थितिः। भाष्यकृतोच्यते भोजनं विना स्थितिरिति। तत्रादित्यस्य उदयास्तावसरे खण्डितबिम्बावस्थायां गत्याद्यभाववर्णनेन केवलं स्थितिरित्युच्यते। गत्यादिकं स्वरूपेण निष्पन्ने भवति, स्वरूपं च उदयोत्तरमिति उदयावस्थायां केवला स्थितिरिति गृहीत्वोच्यते यावद्ध्रियते स्थीयते। धृङ् अवस्थाने इति धातो रूपम्। अस्तावसरेऽप्येवमेव। सावस्थितिर्वन्ध्यशब्देनाऽप्युच्यते। तस्या अवस्थितेर्दीक्षारूपत्वोक्तिः।

तस्या दीक्षाया दिनसंख्याविषये अनेके पक्षाः कर्मसूच्यन्ते। तत्र द्वादश-दीक्षाः सत्रविषये, सापीमामवस्थितिमभिप्रेत्यैवोच्यते । तत्रोदयतोऽस्तमयतो वा विम्बस्य सुमे कुमेर्वोः पर्यायचतुष्टयेन दिनचतुष्टयेन वा पूर्णता भवति। एवं सति उदयस्थानप्राप्तस्य उदये प्रवर्तमानस्य पूर्वस्य पूर्णस्य विम्बस्य कृते दिन-चतुष्टयमुदयतो दिनचतुष्टयमुदयोत्तरं पूर्णस्य विम्बस्य कृते दिनचतुष्टयमिति द्वादशदिनपर्यन्तमुदयावसरे विम्बत्रयार्थमपेक्षितं, तदानीं किरणैरसम्बन्ध इति गृहीत्वा ऋभूणामादित्यगृहे द्वादशदिनपर्यन्तमातिथ्यग्रहणे स्वाप इत्यादि वर्णनं सगच्छते ।

इयमवस्थितिर्बन्धरूपिणी, यथा बद्धो नान्यत्र गन्तुं पारयत्येवमत्रादित्य-स्यान्यत्रागमनेन बद्धत्वमिति गृहीत्वा अग्नेर्वर्णने उच्यते ,त्रिधा बद्धो वृषभो रोरवीति इति । एवं सति उक्तरीत्या द्वादशदिनपर्यन्तं दीक्षा इत्यादयो व्यवहारा इति धृतिरेव दीक्षेत्युक्तम् ।

यदश्नाति तद्धविः । अश्नाति व्यक्तं तेज आत्मनि विलापयति तत्तेजो हविरित्यर्थः । एतेन व्यक्तस्योपग्रादेस्तेजसो होम इति फलति ।

यत्पिबति तदस्य सोमपानम् । अव्यक्तस्य तेजसोऽप्त्वेन वर्णनात्तदव्यक्त-तेजोरूपमुदकं यत्पिबति स्वात्मनि विलीन करोति तत्सोमपानमिति। एतेन तेजोरूपत्वं सोमस्य, तस्य स्वात्मनि विलयः पानम् । तेजोग्रहणेन तेजस्विनेन्द्रेण वृत्रादयो विनाश्यन्ते इति वृत्रादीनां तमोरूपत्वमिति भवति । अतएवेन्द्रेण त्रिकद्रुकेषु सोमपानम्, युद्धादीनां वस्तुतो भावः, वृत्रेणापां निरोधः । इन्द्रेण वृत्रं हत्वाऽपामुन्मोक इत्यादीनां वर्णनानामपपत्तिः, प्रदर्शितं चैतत्पूर्वम् ।

यद्रमते तदुपसदः । रमणं समरसभाव उदयाद्यवसरीयः कल्पितस्ता उपसदः । तन्नामकेष्टित्वम् । तदुक्तमेव पूर्वम् । यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यः । सञ्चारः प्रकाशनार्थं नानादेशसम्पर्कः । उपवेशः धृतिः । उत्थान-मुदयस्तस्य प्रवर्ग्यत्वम् ।

यन्मुखं तदाहवनीयम् । आहवनीये मुखरूपणम् । या व्याहृतिराहुतिः । यस्य विशेषेण आ समन्ताद्धरणं तेजसः सा आहुतिशब्दवाच्या । एवं च तेजस आदानं दानं आहुतिशब्देनोच्यते । यदस्य विज्ञानं तज्जुहोति । प्रकाशप्रदानमेव होमः । यत्सायं प्रातरिति तत्समिधम् । सायं प्रातश्चोदयास्तावसरीयविम्बस्य खण्डितभावेनापेक्षिकतेजस्वितया दर्शनात्प्रज्वलत्समित्काष्ठरूपत्वकल्पनया सायं प्रातरस्तोदयावसरे यदत्ति प्रकाशयति खण्डितं रूपं सा समिदिति समित्काष्ठ-रूपमित्यर्थः ।

अतएव वृषाकपिसूक्ते नत्र चरुमादेघस्यान आचितमिति एयायुक्तम्यानमा वर्णन सगच्छते । अन.शब्देनोपा गृह्यत इति पूर्वमुक्तम् । तच्चान. काष्ठपूर्णमिति वर्णना । अन.शब्देनोपो ग्रहणे तत्र काष्ठपूर्णत्वस्य प्रकारान्तरेणासम्भव ।

यदि मण्डलस्यैवोक्तरीत्या खण्डितस्य काष्ठरूपत्व समिद्रूपत्व गृह्येत तदा तेन युक्त शकटमेगोयुनमिति वर्णनसम्भवेनोक्तरीत्या मण्डलस्यैव सायप्रातरस्तात्र-सरे उदयावसरे च खण्डितस्य प्रकाशनेन तद्रूपस्य समित्वमिति । अयमर्थो विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेपित । शत महिषान् क्षीरपाकमादनमित्यादिनाऽप्युच्यत इति तन्मन्त्रव्याख्याने विस्तरेणोक्तम् ।

यत्प्रातर्मध्यन्दिन साय च तानि सवनानि । अत्तीति पूर्ववाक्यत सम्बध्यते । एव च प्रातर्मध्यन्दिन साय यदत्ति पिबतीति तानि त्रीणि सवनानि सवनेषु पीयमानरूपसोमसम्बन्धीनीति । त्रिकद्रुकेषु सोमपानवर्णनादि च पूर्वमुक्तमेव ।

ये अहोरात्रे ते दर्शपूर्णमासौ । अहोरात्रयोर्दर्शपूर्णमासत्वम् । दर्शपूर्णमासौ-यागौ पर्वदिने अनुष्ठीयेते । पर्वदिन पक्षान्तदिन तत्र दिनस्यैवोभयरूपता वक्तव्या, अत्र तु दिनरात्र्योरुभयरूपत्वमुच्यते तत्कथ सगच्छेते । भाष्यकृताऽत्र न किमपि विशिष्य विवरण क्रियते । एव सत्यहोरात्रयोर्दर्शपूर्णमासत्वमनुपपद्यमानमनुमत्या-दिस्थले प्रतिपादितरीत्योपपद्यतेति एतद्वचनमनुमत्यादिस्थलीयव्याख्यानस्योपपा-दकमिति अनुमित्यादिवर्णनावसरे यद्वक्तव्य तदुक्त पुरस्तात् ।

येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि । ये चार्धमासमासप्रभृतयो विशेषा विषमा. प्रकारा अर्थाद्दिनरात्रयोस्तेषा चातुर्मास्यसम्बन्धिता । चातुर्मास्य-शब्देन चतुर्षु मासेषु सम्भवन्ति आदित्यस्य गतिभेदवशात कर्माणि, तदनुकार-निबन्धीनि अनुष्ठेयानि साकमेधशुनासीरीयप्रभृतिपर्वयुतानि कर्माणि । कर्मविवे-चनप्रसगे तद्विषयको विचारः प्रदर्शयिष्यते ।

ये सवत्सराश्च परिवत्सराश्च तेऽहर्गणा. । ये च सवत्सरपरिवत्सरादिनि-बन्धना विशेषास्तेषामनुकारेणानुष्ठेयानि कर्माणि अहर्गणरूपाणि कर्माणि । सवत्सरसव्यवहारार्था. काश्चन विशिष्टा सज्ञा व्यवह्रियन्ते । यथा सवत्सर परिवत्सर इद्वत्सर इदावत्सरोऽनुवत्सर इति ।

एषा क्रमेण समुदायो युगशब्देन व्यवहृतो वेदाङ्गज्योतिषग्रन्थे । तच्चोक्त "पञ्चसवत्सरमय युगाध्यक्ष प्रजापतिम् । दिनर्त्वयनमासाङ्ग व्याख्यास्यामि लगधो प्रवोदित्यादिना" । युगशब्दस्य युग्मबोधकता द्वितसंख्यायुतार्थबोधकता प्रसिद्धा । तच्च दिनरात्रादिरूपकालावयवगतसंख्याबोधक तदन्यपदार्थगततद्बोधक वेदे । यथा आ घा ता गच्छानुत्तरा युगानि, जुजुर्वान्दशमे युगे, युगे युगे विदथ्य गृणद्भ्य इत्यादिषु ।

एतस्य संवत्सराधिककालरूपकृतादिविशेषपरत्वविषये विचारः पूर्वमुक्तम्। किञ्च युगस्य सविशेषणभावेन वचनं वेदे, यथा उत्तरा युगानि, पूर्वं युगमित्यादि। तत्र पूर्वोत्तरशब्दयोर्न कालबोधकत्वं किन्तु दिक्सम्बद्धार्थबोधकत्वमिति अग्निः पूर्वेभिरित्यस्य व्याख्यानावसरे प्रदर्शितं पूर्वम्। किञ्चेमान्यपीद्वत्सरादिपदानि न केवलक्रमिकसंवत्सरबोधकानि। तथा सति आवृत्त्यैव तदर्थलाभे विशिष्टनामभिर्व्यवहारो निर्युक्तिकः स्यात्।

वस्तुतस्तु संवत्सरशब्द एव मुख्यस्तदवयवत्वादिकालविशेषात् सर्वसाधारणः। परे तु संवत्सरे विशेषवशतो व्यवह्रियन्ते परिवत्सरादिशब्दाः। यथा-हरादिविषये दृष्टिभेदेन भिन्नो व्यवहारः। दैवं दिनं दैवी रात्रिः। आसुरं दिनं आसुरी रात्रिः। तदुक्त पुरस्ताच्छतपथव्यवहारेण "वसन्तो ग्रीष्मो वर्षास्ते दैवा ऋतवो देवेषु तर्हि भवति देवास्तर्ह्यभिगोपायतीत्यादिना देवेषु तावत्कालवृत्त्या तत्र दिनव्यवहारः, परवर्ति-ऋतुत्रये असुरेषु वृत्या तेषु दिनव्यवहारः।

एवं च परवर्ति-ऋतुत्रये देवानां रात्रिव्यवहारो सुराणां यथा दिनव्यवहारः, एवं दैवदिनेऽप्यसुराणां रात्रिर्व्यवहारः: सच द्यावापृथिव्योरभिप्रायेण। तत्र द्योशब्देन उत्तरदिग्वर्तिभुवः पार्श्वे सर्वोच्चं स्थानं सुमेर्वाख्यमेवं पृथिवीशब्देन दक्षिणदिग्वर्तिभूपार्श्वे सर्वोच्चं स्थानं कुमेर्वाख्यं गृह्यत इति पुरस्तादुक्तमेव। तदनुसारेण उक्तर्तुमासादिरूपावयवयुतसंवत्सरलक्षणाक्रान्त्या संवत्सरेऽपि द्वैविध्यम्। तत्रेदादिशब्दविषये सन्निकृष्टविप्रकृष्टार्थबोधनाभिप्रायकता। यथा इत् इत्यनेन सन्निकृष्टं तदित्यनेन विप्रकृष्टं बोध्यते, यथा अर्वावित्परावदाति शब्दैस्तत्र तत्र वेदे बोधः।

यत्रोभयं सहैव विवक्षितं तादृशेषु तदित्समानमाशाथे तवेत्तत् सत्यम् त्वामच्चा चरामसि तदिदर्थं दिवे दिवे इत्यादिषु यथा। तथा चेच्छब्देन सविधवर्ती संवत्सर इद्वत्सरशब्देन बोध्यते। स च भूस्थः। तत्रैव दृष्टिभेदेन इदावत्सरस्य बोधः। एवं परिवत्सरशब्देन द्योस्थः संवत्सरो बोध्यते, अनुवत्सरशब्देन तत्रैव दृष्टिभेदेन स एव। अतएव तत्र पञ्चके युगशब्देन बोधः। नात्र संवत्सरपञ्चकस्य क्रमिकस्य ग्रहणं विवक्षितमिति वाच्यम्। युगशब्दस्य स्वार्थत्यागापत्तेः। इदादिविशेषणे तात्पर्याभावप्रसंगाच्च।

एवं चेद्वत्सरः कुमेर्वभिप्रायः इदावत्सरोऽपि तत्रैव, अतएव तन्नाम्नि आ इत्यस्याधिकस्य वचनमिदावत्सर इति। इत् सविधे स्थाने आ समन्ताद्वत्सर इति तदर्थात्। द्योरर्थात्सुमेर्वभिप्रायेण परिवत्सरशब्दः। तत्रैव अनु तदनुसारेण वत्सरोऽनुवत्सरः। संवत्सर इति तु सर्वसाधारणम्। अतएव दिनर्त्वयनमासागमिति साधारण्यं सर्वेषामिति बोधकं विशेषणम्। तत्र द्योलोके ऋतवः षट्, भूलोके

ऋतवः पञ्च । तदभिप्रायेणास्यवामीयसूक्ते "पञ्चपादं पितर द्वादशाकृति दिव आहु परेऽर्धे पुरीषिणम् । अथेमे अन्य उपरे विचक्षण सप्तचक्रे पळर आहुर-र्पितमिति[1] ।

पञ्चपदृतुत्वमिप्रायको व्यवहार इति पुरस्ताद्विस्तरेण निवेदितम् । एव तत्रैकत्र वामावर्ता पर्याया अपरत्र दक्षिणावर्ता. । विभिन्नेऽवसरे परस्परविरो-धेन दिनरात्रियोग. । ऋतुचिह्नाना विभिन्नेऽवसरे प्रवृत्ति । यथैकत्र दिने वर्षा-कालोऽपरत्र रात्रिव्यापी वर्षाकाल. ।

एकत्र केवल प्रकाशन नान्यत आदानमपरत्र प्रकाशनमन्यतस्तदादान चेत्यादयो विभिन्नाः प्रकारा इति वत्सराणा भेदेन व्यवहार इति तदेतत्सर्वं साकल्येन सक्षेपेणोच्यते"ये सवत्सरा परिवत्सराश्च ते अहर्गणरूपा इति सौरी परि-स्थिति गृहीत्वा तदनुसारेणानेकदिनसाध्या अहीनसत्रादिरूपा अहर्गणा. सोमयाग विशेषा । आनुष्ठानिकेषु सवत्सरेषु कालवाचकशब्दाना योगेन तत्क्रमानुरोधेन च आत्यर्हिकसोमयागप्रवृत्तिरिति गवामयनादिषु व्यक्त, परिदर्शयिष्यते, च परस्तात् ।

सर्ववेदस वा एतत्सत्रम् । एव चादित्यस्य तत्सम्बन्धिना च किरणाना या एना क्रियास्ता यज्ञरूपास्तदनुसारेण लोके क्रियमाणाना वैदिकीना क्रियाणा यज्ञरूपत्वम्, तत्र चैवयजमानकत्वानेकयजमानकत्वभेदेनाहीनसत्रादिभेदभिन्न-त्वम् । तदिद सत्रमनेकयजमानक सर्वस्वप्रदानपर्यन्तम् । यत एतस्य यज्ञस्याहरा-द्यवसानेऽवसानरूपत्वात्तत्र यजमानस्यादित्यादेरस्तावसरे मरणकल्पनया स्वरूप-दानपर्यन्तत्वमिति गृहीत्वोच्यते-एतत्सत्र सर्ववेदस सर्वस्वदानस्वरूपम् ।

यज्ञे च सर्वान्ते क्रियमाणेष्टेरवभृथशब्देन व्यवहारोऽत्र च यजमान-स्वरूपस्यापि होमेऽवभृथ. को वाऽस्यादित्यभिप्रायेणोच्यते-"यन्मरण तदवभृथ" इति । अथादित्यादेर्यजमानस्यास्तावसरे दर्शन मरण स एवावभृथ इत्युच्यते, लोके सर्वस्वारादियज्ञे यजमानस्य यन्मरण स एवावभृथ इति ।

एतद्वै जरामर्यमग्निहोत्र सत्रम् । एवरूपयज्ञरूप सत्र जरामरणपर्यन्त-मनुष्ठेयम् । अग्निहोमम् । अग्नये हूयतेऽग्नौ हूयत इति व्युत्पत्याग्निहोत्ररूपमुभय-विधमादित्यक्रियारूप तदनुसारिमानुषकवैदिकक्रियारूपम् ।

य एव विद्वानुदगयने प्रमीयते देवानामेव तन्महिमानं गत्वादित्यस्य सायुज्य गच्छति । उक्तविधदेवासुरोभययज्ञाभिप्रायेणोच्यते-यो' हि आदित्यादिरूपो यजमान उदगयने सुमेरावस्त गच्छति, अस्तस्य मरणत्वेन कल्पनया तत्र प्रमीयते स देवाना महिमान प्राप्नोति । उत्तरस्या सुमेरौ देवाना निवासात्तत्रास्तरूपमरण-प्राप्तस्य देवमहिमप्राप्तिरादित्यरूपत्वमेव भवतीति ।

अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं सलोकतामाप्नोति । उक्तरीत्या दक्षिणस्यां कुबेरावस्तगतस्यादित्यस्य मरणे पितृमहिमप्राप्त्या चन्द्रमः-सायुज्यसलोकताप्राप्तिरित्युच्यते । तेन दक्षिणस्यामस्तमितस्य चन्द्रमोलोकत्वप्राप्तिरिति वर्णनेन दक्षिणे चन्द्रमःसम्बन्धित्वाद्दक्षिणदिक्क आदित्यश्चन्द्रमा इति ।

एवं सुमेरुरूपोत्तरदिक्कः स सूर्यरूप इति भवति । तदेव गृहीत्वा परस्तादुच्यते-एवं वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति । उक्तरूपौ सूर्यचन्द्रमसोर्महिमानौ भवतो दक्षिणोत्तरदिक्सम्बन्धिनौ । यश्चैवं विजानाति सोऽपि ब्राह्मण उक्तविधं सायुज्यं प्राप्नोति ।

तस्माद्ब्रह्मणो महिमानम् । तस्मादुक्तविधसूर्यचन्द्रमसोर्महिमातो ब्रह्मणो महिमप्राप्तिः । नातुर्ब्राह्मणस्यापोति ।

एतावतैतेनानुवाकेन दक्षिणदिक्सम्बद्ध आदित्यश्चन्द्रमः शब्दबोध्यः, उत्तरदिग्गतस्य सूर्यशब्दव्यवहारः, दक्षिणस्यां मरणेन चन्द्रमोलोकप्राप्तिः पितृमहिमप्राप्तिः । उत्तरदिक्सम्बन्धिमरणे देवानां महिमप्राप्तिः सूर्यसायुज्यप्राप्तिः । आत्मनः सूर्यस्य यागकर्तृत्वम्, श्रद्धायाः सान्ध्यस्य तेजसः पत्नीत्वव्यवहारः, मण्डलस्यैध्मरूपत्वम्, वेद्या उरोरूपत्वम्, लोम्नां बर्हिस्त्वम्, वेदस्य शिखारूपत्वम्, हृदयस्य यूपरूपत्वम्, आज्यस्य कामत्वं, मन्योः पशुरूपत्वमग्नेस्तापरूपत्वम ।

दमस्य शमयितृत्वं विनाशकरत्वं, दक्षिणस्या वाचो होतृत्वं, प्राणस्योद्गातृत्वं, चक्षुषोऽध्वर्युरूपत्वम्, मनसो ब्रह्मरूपत्वमग्नीध्रः श्रोत्ररूपत्वं, यावन् स्थितिः सा दीक्षा, यदश्नाति तद्धविः, मानस्य सोमरूपता, रमणस्योपसद्रूपत्वं, संचारस्योपवेशनस्योत्थानस्य च प्रवर्ग्यरूपत्वम् । आहवनीयस्य मुखरूपत्वम्, आहरणस्य आहुतित्वं प्रकाशनस्य होमरूपत्वम्, सायं प्रातरशनं समित् ।

सायंप्रातर्मध्यन्दिने चाशनं सवनानि । अहोरात्रयोर्दर्शपूर्णमासरूपत्वमृतूनां पशुयागरूपत्वम्, संवत्सरपरिवत्सरादीनां संवत्सररूपत्वं चाहर्गणरूपत्वम् । सर्वदक्षिणाकमिदं सत्रम् । अग्निहोत्ररूपदक्षिणायने मरणे चन्द्रलोकप्राप्तिरुदगयने मरणे सूर्यलोकप्राप्तिरित्यादयोऽर्था निरूपिताऽर्थविज्ञाने वेदस्योपकरिष्यन्ति । तत्र केचन परस्पररूपपर्यायुतत्वेन प्रकाशकाः केचनान्यतररूपेण तद्बोधका इति । इत्येवमर्थविज्ञाने बहुलमुपकारका इति ।

२५. तदाहुः कति सामानीत्यादिभागस्यार्थानुमूलं व्याख्यानम्

सामवेदीये तलवकारब्राह्मणे साम्नश्चतुर्विधत्वमुच्यते यथा-तदाहुः कति सामानि । चत्वारीति ब्रूयात् । चत्वार्यु ह वै सामानि स्वारं निधनवदैळमृक्समम् । चतस्रो दिशश्चतुष्पादाः पशवः । चत्वारि च्छन्दांसि यनवाहा गायत्री

त्रिष्टुब्जगत्यनुष्टुप् । तान्यु ह वै त्रीण्येव, स्वारं निधनवदैळम्, यदृक्समं स्वारमेव तद् । त्रिधनणा यन्त्रम्यथ प्राणापानव्यानास्त्रय इमे लोकाः । त उ ह द्वे एव स्वारं चैव निधनवच्च । या हीळा निधनमेव तद् । द्वाविमौ लोकावित्यमाविव द्वौ प्राणापानौ द्विनात् पुरुष । तदु ह वा एकमेव । यद्धि निधनं यैळा यदृक्समं स्वारमेव तदिति ।

तदेतदन्ममेव साम स्वारमेव । य एवायं पवते तद् । याश्च ह वा अमूरुपरि पतन्ति याश्चाध सर्पन्ति ता एतमेव स्वारं प्राणमुपजीवन्ति । स य एतदेवं वेद मवमायुरेति । न यो हैव विद्वाञ्ज्ञाति कन्यत्यजाम्येवास्य तत्क्लृप्तं भवति । तत्पर्युपर्यजाम्येव विकल्पयेत् । अमिथुनं तदप्रजननं यज्जामि । यथा पुमांसौ वा सह शयातां स्त्रियौ वा । किं पुमांसौ सह शयानौ प्रजायेतां किं स्त्रियौ तौ चेन्मिथुनौ कर्तारं न लभेयाताम् । अथा यदजामि तन्मिथुनं तत्प्रजननम्, आत्मा वै स्वरः प्रजा निधनं पशव इळाऽजार्यकं समम् । समानौ वा आत्मा च जाया च । त एतमात्मनोभयतः प्रजा परिगृहीता अपरावापाय नास्य वित्तं परोप्यते य एवं वेद इति ।

अस्मिन्ब्राह्मणे साम्ना चतुर्विधत्वमुक्त्वा परेण प्रकारेण स्वरत्वे एव सामत्वमपि प्रदर्श्य स्वाररूपस्यादित्यरूपताच्यते । एवं सति सामादित्यरूपमेव । तस्यायं भाव—साम्नो हि गानरूपता । गानं च स्वराणामारोहावरोहादिरूपमिति स्वारं स्वरसम्बन्धिरूपमित्युच्यते । ते चारोहावरोहादिविशेषयोगिनः स्वरा ऋक्षु भवन्ति । अत ऋक्समता तस्य । वस्तुतस्तु ऋचाऽपि स्वररूपत्वमेव । ये तु व्यञ्जनवर्णास्तानि स्वराणामेव, स्थानकरणादिवैशिष्ट्येन स्वराणामेव विकृतानि रूपाण्यभिव्यक्त्युपकारकाणि ।

अर्थवत्त्व स्वराणामेव, ते च स्वरा ऋग्रूपा एव । ते चाकारादिस्वरा एव क्रुष्टादिगानस्वरतामापद्यन्ते । गानमेव च सामेत्युक्तम् । एवंचर्क् समरूपं सामापि स्वररूपमर्वति ऋक्समस्यातिरिक्तत्वाभाव । ऋच्यन्त । इळाशब्द-यागितया साम्न एकरूपता । साम्नोऽन्तिमभागस्य निधनशब्देन व्यवहरणा-त्सामैव निधनवत्, तदस्यैवैळमिति विशेष इति तस्य निधनवतो भेदापेक्षया नातिरिक्तत्वम् । अतः द्विरूपमेव साम स्वारं निधनवच्चेति ।

नास्त्यैळं नाम पृथग्विभेदो निधनवत्येवैळस्यान्तर्भावात् । वस्तुतो निधन-स्यनाप्युक्तरीत्या स्वरस्यैवेति स्वारमेकविधमेव साम स्वाररूपमेव, नास्ति निधनवन्नामातिरिक्तो भेद । तदुक्तं तत्र यद्धि निधनं यैळा यदृक्समं स्वारमेव तदिति । तदेतदेकमेव साम स्वारमेव । य एवायं पवते तद् इति । किन्त्व स्वार-शब्देन स्वराणां सम्बन्धिनोच्यते । स चारोहावरोहादीनामित्युक्तः भाव् । ते

चारोहावरोहादयः स्वररूपा एवेति स्वरस्यैव सामरूपता । स्वरश्चादित्यरूप एव । तच्छब्दव्युत्पत्तः । स्वयं राजनात्स्वरः स आदित्य एवेति ।

स्वृधातोरुपतापार्थादुपतपतीति स्वररूपत्वं तदप्यादित्य एवेति । आदित्यस्य स्वररूपत्वं स्वररूपत्वात्सामरूपत्वमप्यादित्यस्यैव । तदुक्तं ब्राह्मणे "तदेक रूपमेव साम स्वाररूपमेव योऽयं पवते तदिति" । "योऽयं पवत" इत्यनेन सर्वत्रादित्यस्यैव वचनं ब्राह्मण इत्यादित्यरूपत्वं साम्नो विस्पष्टम् । अपि च तत्रैव ब्राह्मण उच्यते "आत्मा वै स्वरः प्रजा निधनं,पशव इळा जाया ऋक्समभिति । तदप्यादित्याभिप्रायेणैव संगच्छते । ऋक्षु सूर्य आत्मा जगतस्तस्थुषश्चेति स्थावरजगमात्मनो विश्वस्य सूर्य आत्मोच्यते इत्यर्थादात्मा सूर्य आदित्यः स्वर इति भवति ।

सूर्यस्य चोदयोऽस्तमयश्चोत्पत्तिरूपो विनाशरूप इति निधनमुच्यते, अस्तमये च किरणा एव दृश्यन्ते इति रश्मीनां निधनरूपता, रश्मीनां प्रजारूपत्वमपि तस्मिन्ब्राह्मणे उच्यते । किञ्च ऋग्वेदे उच्यते "बहुप्रजा निर्ऋतिमाविवेश[1]" इति । स चादित्यो रश्मिपोषपुष्टो बहुप्रजा भवति । उदयावसरे च तस्य रश्मिराहित्यमिव । अतएव तस्य विष्णवभिन्नस्य शिपिविष्टशब्देन वचनम् । शिपिविष्टो प्रतिपन्न रश्मिरिति तद्व्याख्यानं निरुक्ते । किञ्चास्तगमनोरश्मीनां दर्शनेनास्तावसरे स रश्मिरहित इति भवति । एवं च बहुप्रजा रश्मियुत इति रश्मीनां प्रजात्वम् ।

एवं सत्यस्तरूपानिधनावसरे केवलानामेव रश्मीनां दृश्यत्वेन प्रजा निधनमित्युक्तिः । पशव इळा इत्युक्तिरपि आदित्यपरत्वे एव संभवति । इळा अन्नम् इळायाः पशुत्वोक्त्या पशूनामप्यन्नरूपता । उषश्च तद्रूपत्वम् । अत एव तस्या वाजिनीति नाम । उषःकाले तदा तमसो विनाशेन सर्वविश्वप्रकाशनेन भोग्यविश्वरूपान्नयोगस्तस्याः । अन्न शब्देन भोग्यतोच्यते, अतएव विशो वै क्षत्रियस्यान्नमित्याद्युक्तिः संगच्छते । किञ्चेळाया अग्निपत्नीत्वमग्निश्चादित्याभिन्न इतीळापि उषोरूपैव ।

एवं च पशूनामिळात्वमन्नत्वं तद्युक्तत्वमुषसः सा चोषा आदित्ययोनेति आदित्यस्यैव तदभिन्नस्वाररूपस्यैवेळारूपनिधनयोगितेति ऋक्समस्य जायात्वोक्तिरपि तथैव । ऐतरेयब्राह्मणगतस्य ऋक्सामयोर्वाकोवाक्यमपि तथासति उपपद्यते । एवं चर्चि साम्नोऽध्यासादृचो जायात्वादृक्समस्य जायात्वम् । एतदेवाभिप्रेत्योक्तब्राह्मणे एकमेव साम स्वारमेवेत्युक्तम् । स्वारस्यादित्यरूपतोक्तेति आदित्यस्य सामरूपतेति दिक् ।

---

१. ऋ. सं. १:१६४:३२

याज्ञिकानि कर्माणि श्रौतानि वेद्यपेक्षाणि, तत्र वेद्या आकारविषये वेदे मन्त्रब्राह्मणादिषु कश्चन प्रकार उपनिबध्यते । तस्यैव प्रकारस्य समासव्यासाभ्यां सूत्रादिषु विस्तारो दृश्यते, परन्तु तत्र मौलिकानां नियमानां हेतुस्वरूपाविज्ञानं तदुपपत्त्यभावश्च यथा कथचन समाधानेन दृढीक्रियते ।

तत्र कर्मसु याज्ञिकैर्मीमांसकैश्चोच्यते वेदिद्वयं भवति । एका प्राकृती वेदिरपरोत्तरा वेदिरिति । प्राकृती वेदिरिष्ट्यादिषूपयुज्यते उत्तरा वेदिश्च सोमयागादिषु तथैव ग्रन्थेषूच्यते याज्ञकर्मसूपयुज्यते च ।

२६. "द्वे वेदीभवत." इत्यादिब्राह्मणभागस्यादित्यपरव्याख्यानम्

ब्राह्मणे त्वेतदपेक्षया परोऽपि प्रकार उच्यते । यथा शतपथ उच्यते 'द्वे वेदी भवत.' द्वावेव लोकावित्याहुर्देवलोकश्चैव पितृलोकश्च । उत्तरान्या भवति दक्षिणान्योत्तरो वै देवलोको दक्षिण पितृलोक । उत्तरयैव देवलोकमवरुन्धे । दक्षिणया पितृलोकम्[1]" इति अत्र पूर्वोक्तवेदिद्वयेन न निस्तार । यतस्तत्र वेद्या विभाजने इष्ट्यादिकतिपयाना सोमयागात्पूर्वमनुष्ठेयाना कर्मणा कृते उपयोगिनी सा प्राकृती वेदि' । सोमयागाद्यनुष्ठानोपयोगित्वेन सा परा वेदि । तस्याः प्राकृत्यपेक्षया परत्वाभिप्रायेण तत्रोत्तरेति वेदिविशेषणम् ।

अनुष्ठानस्थले पश्चाद्भागेऽर्थादनुष्ठानोपयोगिदेशस्य पूर्वापरनाह्या प्राकृती वेदिस्तस्याः पूर्वस्या पूर्वापरनाहैव सोत्तरा वेदिर्भवति नह्यत्र दक्षिणोत्तरसम्बन्धेन वेद्या द्विरूपत्वम् । ब्राह्मणे तु दक्षिणोत्तरदिक्सम्बन्धेन वेद्या द्विरूपत्वमुच्यते । किञ्च पूर्वोक्तप्राकृत्यादिवेदिद्वये दैविकान्यपि कर्माण्यनुष्ठीयन्ते पैतृकाण्यपि कानिचनानुष्ठीयन्ते । तावतोभयोपकारकत्वमुभयोर्वेद्योरिति ज्ञायते ।

ब्राह्मणोक्तवेद्योर्हि मध्ये उत्तराया देवलोकप्राप्त्यादिफलकत्व देवतोपकारद्वारा विज्ञायते, दक्षिणायाः पितृलोकप्राप्त्यादिफलकत्व पित्र्युपकाराद्विज्ञायते, तत्पूर्वोक्तवेदिद्वयाभिप्रायेण विरुद्धम् । किञ्च यज्ञेषु प्राकृत्यादिवेदिद्वयस्यैवोपयोगः प्रोच्यते नोक्तविधदक्षिणोत्तरदिक्सम्बन्धभिन्नयोर्ब्राह्मणोक्तयोर्वेद्योरिति कथमिदनुपपद्येत ।

अथ पूर्वयोरेव वेद्योर्दक्षिणोत्तरदिक्सम्बन्धमात्रेण ब्राह्मणोक्तोभयविधत्वेन तस्योपपत्तिस्तर्हि उभयविधयोरपि प्राकृत्युत्तरवेद्योरुभयविधत्व प्रसज्यत इति ब्राह्मणे दिक्सम्बन्धेनोभयविधत्व वेद्या अनुपपन्न भवेत् । किञ्च वेद्या स्वरूपविधानावसरे उच्यमानप्रकारस्य तत्रत्याना साकेतिकपदानामर्था सत्यादिक च निरालम्बनमिव भासते । तथाहि शतपथब्राह्मणे उत्तरवेद्या विधानावसरे उच्यते—

१. श. ब्रा ३.५

[1]तद्य एष पूर्वार्ध्यो वर्षिष्ठः स्थूणाराजो भवति । तस्मात् प्राङ्प्रक्रामति त्रीन् विक्रमांस्तच्छङ्कुः निहन्ति सोऽन्तः पातः ।१। तस्मान्मध्यमाच्छङ्कोः । दक्षिणा पञ्चदश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिः ।२। तस्मान्मध्यमाच्छङ्कोः । उदङ्ःपञ्चदश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति सोत्तरा श्रोणिः ।३। तस्मान्मध्यमाच्छङ्कोः । प्राङ् षट्त्रिंशतं विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स पूर्वार्धः ।४। तस्मान्मध्यमाच्छङ्कोः । दक्षिणा द्वादशविक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स दक्षिणोंऽसः ।५। तस्मान्मध्यमाच्छङ्कोः । उदङ् द्वादश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स उत्तरोंऽसः ।६। एषा मात्रा वेदेः इति ।

भाष्कारेणैतस्य व्याख्या क्रियते यथा–सौमिकवेदिकरणं निरूप्यते । तदुक्तं कात्यायनेन औपवसथ्यात्पूर्वेऽहनि पौर्वाह्णिक्या प्रचर्य वेदिं मिमीत इत्यादि । तदेतदाह तद्य एष पूर्वार्ध्यो वर्षिष्ठः स्थूणाराजो भवति तस्मात्प्राङ् प्रक्रामति त्रीन् विक्रमांस्तच्छङ्कुं निहन्तीति । य एष स्थूणाराजः पूर्वार्ध्यः पूर्वार्धमर्हतीति पूर्वार्ध्यः । प्राचीनवंशस्य पूर्वभागे आहवनीयपुरोदेशे वर्तमानः पृथुः स्तम्भोऽस्ति सोन्तः पातः । ऐष्टिकवेदेर्महावेदेश्चान्तरालसंचरः । तस्मात्स्तम्भात्प्राङ् प्रक्रमान्प्रक्रामति त्रीन् । तत्तत्र प्रतीयमानेऽवकाशे शङ्कुं निहन्यात्स्थापयेत् ।

दक्षिणश्रोणिप्रमाणमाह–तस्माच्छङ्कोर्दक्षिणेति । मध्यशङ्कोर्दक्षिणतः पञ्चदशप्रक्रमावसाने शङ्कुं स्थापयेत् सा दक्षिणा श्रोणिमर्यादा भवति । एवमुत्तरश्रोणिवाक्यमपि तस्माच्छङ्कोरुदङित्यादि । आयामस्य पश्चाद्भागावधिं प्रदर्श्य प्राचीनावधिमाह तस्मान्मध्यमाच्छङ्कोः प्राङ् षट्त्रिंशतं विक्रमान् प्रक्रामति । अथ दक्षिणोत्तरावंसौ दर्शयति–तस्मान्मध्यमाच्छङ्कोरिति । तस्मात्पुरोदेशस्थान्मध्यमाच्छङ्कोः श्रोणितः सकाशादंसयोरीषन्न्यूनत्वादुभयतो द्वादश प्रक्रमाभिधानम् । इत्थं सर्वतोमितायां वेदिमात्रायां न्यूनाधिकत्वशङ्काम् स्वयमेव व्यवच्छिनत्ति "एषा मात्रा वेदेरिति" इति ।

अत्र पूर्वार्ध्य–वर्षिष्ठः–स्थूणाराजशब्दानां न सम्यक् तात्पर्यविज्ञानम् । यद्यपि भाष्यकृता पूर्वार्ध्यशब्दस्य पूर्वार्धमर्हतीति व्युत्पत्तिप्रदर्शनं कृतं तावता पूर्वार्धपदार्थो न विवृतः । अथ मूले मध्यमशङ्कोः पूर्वस्यामायामावधिः शङ्कुः पूर्वार्धशब्देनोक्त इति स पूर्वार्धं इति कथनं विनापि ज्ञायते । तदर्थस्यास्य स्थूणाराजस्य पूर्वार्ध्यत्वमिति । तदापि स पूर्वस्यामायामावधिभूतः शङ्कुः कुतः पूर्वार्धशब्देनोच्यत इति निमित्ताविज्ञानम् ।

एवं च पूर्वार्ध्यशब्दस्यापि सम्यगर्थविवरणाभावः । वर्षिष्ठत्वं किं कृतं ? यदि स्थौल्यनिबन्धनं तत्तु स्तूणाराज इति वर्णनेनैव प्राप्तम् । स्थूणाराजः कः

---

1. श. ब्रा. ३:५:१:१

कुतो वा। किञ्च तस्मात्स्थूणाराजात् त्रयाणां पदानां प्रक्रमाभिधानं कुत ? कुत पुन प्रक्रमत्रयान्तनिहितशङ्कामध्यमत्व, तस्योभयत पार्श्वयो पञ्चदशानामेव प्रक्रमाणामतिक्रमो न न्यूनाधिकानाम। एवं तस्मान्मध्यमाच्छङ्को किमिति षट्त्रिंशत्प्रक्रमप्रक्रमण, किमिति नात्राधिक्यं न्यूनत्वं वा सङ्ख्याया भवति। तत्रापि पुन प्रतिपार्श्वं मध्यमशङ्कोर्द्वादशानां प्रक्रमाणामतिक्रम। एवं न न्यूनानाधिका वा मात्रा वेदेरिति अनेकविधसंशयप्राप्तौ ब्राह्मणवचनात्तथेति वचनं न संशयनिरसकम्।

किञ्चात्र वेदे किमिति स्त्रीत्वेनोल्लेखो नान्यलिङ्गेन, यतस्तत्र लिङ्गाभिव्यञ्जकाभावेन लिङ्गविशेषोल्लेखस्य निमित्तविशेषनिबन्धनत्वस्य संभव। अथ व्याकरणरीत्या शब्देषु गुणानां सत्वादीनामुपचयापचयसाम्यनिबन्धनो लिङ्गव्यवहारस्तत्रापि तेषामुपचयादीनां निर्णयस्य विज्ञानं दूरापेतम। यदि प्रयोगात्तन्निर्णयस्तर्ह्यन्योन्याश्रय इति।

एवं चोक्तवेदिमानप्रदर्शनोत्तरं तद्ब्राह्मणस्थस्य पश्चाद्भागे आधिक्ययुतत्वादिविषयार्थवादोऽपि व्याख्यात। सति स्त्रीत्वे ततस्तद्दर्शनो लौकिकयोषासाम्यात्तस्या पश्चाद्वरीयस्त्वादिना प्रशस्यत्वमित्येषां संशयानां निराकरणं दु संपादमिति।

तत्राणुरपि विशेषोऽध्यवसायकर इति न्यायेन समर्पकप्रकारान्तराभावेऽन्यैस्तस्याप्रदर्शने चोच्यमान प्रकारोऽत्रादरणीय एव। तथाहि ऋग्वेदानुक्रमणीकारप्रदर्शितस्यातिप्राचीनस्य वैदिकमतस्यानुसारेणैषां प्रश्नानां निराससम्भव। तथा चादित्यस्यैव मन्त्रभाग इव ब्राह्मणभागेऽपि वर्णनम। आदित्यक्रियानुकारयुता च सर्वा यज्ञकृतिरिति प्रकृत वेदिविषयेऽपि तथैव वर्णना। यज्ञश्च सर्वो दानात्मा दानं चादित्यस्यैवेति उक्तं पुरस्तात्।

दानं चात्र होमरूपमपि। होमस्य चाधार आहवनीयाग्निरूप। आहवनीयाग्नित्वं चोदयत सूर्यस्येति शतपथ उच्यते। तथाहि तत्राच्यते असौ वा आदित्य आहवनीय इत्यनेन। वद्या चाहवनीयाग्ने स्था न पूर्वस्यां दिशिपर्यन्तभागे।

एवं च वेदिराहवनीयाग्ने पश्चाद्वर्तिनी भवति। तत्राहवनीयस्यादित्योदयस्थानवर्तित्वेन तत्पश्चाद्वर्तिनी वेदी रात्रिभागे प्राप्ता। रात्रभागश्चाहवनीयाग्निसान्निध्याय रात्र्या अवसानस्थलीय इत्यर्थात्प्राप्तम। एवं च यत्र रात्रिसद्भावस्तदवसाने वेदिप्राप्ति। रात्रिसद्भावश्च सर्वत्र भुवो मध्यवर्तिनि भागपार्श्वद्वयेऽत्युच्चादि स्थलेऽपि। तच्च पार्श्ववर्त्यत्युच्चं स्थल सुमेरुकुमेरुरूपमिति प्रसिद्धमेव। सुमेरोरुत्तरदिग्वर्तिता कुमेरोश्च दक्षिणदिग्वर्तित्वमिति।

तत्र राज्यवसानस्थलीया वेदिर्भवितुमर्हतीति तदभिप्रायेण वैदिश्य भवेत्। अतएवोक्तं द्वे वेदी भवत इति, दक्षिणान्या उत्तरान्येति च। उत्तरया देवलोक

मवरुन्धे दक्षिणया पितृलोकमिति । संगतं च सौमिकी वेदिरिति वर्णनं च । उक्तं च त्रिसुपर्णानुवाके "यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानमिति"। तत्र व्यक्तस्य तेजसोऽहविष्ट्वमव्यक्तस्य तस्य सोमत्वमिति तत्र प्रदर्शितम्। अत एव तत्रोक्तं यत्पिबति तदस्य सोमपानमिति । तेजसश्चाप्त्वेन वर्णनेति प्रदर्शितं पुरस्तात् ।

किञ्चेन्द्रस्यादित्यत्वेन तद्विनाश्यो वृत्रोऽपि तमसो भिन्नो न भवति । एवं सति वृत्रविनाशेनापां प्रवर्तनं तेजः प्रवर्तनमेवेति । किञ्च त्रिकद्रुकेषु इन्द्रस्य सोमपानमुच्यमानं संगच्छते, तच्च सोमपानमुदयावसरे स्वल्पोदयमात्रेणेत्येकया प्रतिपेत्यनेन मन्त्रेण प्रतिपादितम् पुरस्तात् । अत एव मन्त्रे "इदं ते पात्रं सनवित्तमिन्द्र पिबा सोममेना शतक्रतो" इत्यस्मिन्नादित्यरूपपात्रस्य सोमपानपात्रत्वमुच्यमानं संगच्छते, सोमपानसम्बन्धिनी वेदिश्चोत्तरा वेदिरिति याज्ञिकव्यवहार उपपद्यते ।

उत्तरस्या वेद्याः सोमवेदित्वे दक्षिणस्या अपि तथात्वं निरुक्तं भवति । अत एवोत्तरवेद्यां सोमयागो देवोद्देश्यकस्तत्फलं वृष्ट्यादिकं देवैर्दीयत इति वर्णना दक्षिणादिक्कवेद्यां दीयमानस्य वृष्ट्यादेः फलत्वमिति । उत्तरा वेदिरेव सोमवेदिरत एव उत्तरदिक्सम्बन्धादेव तस्या उत्तरशब्देन व्यवहार उक्तब्राह्मणस्यार्थः । अत एव तत्तद्वेदिसम्बन्धेन देवलोकावरोधः पितृलोकावरोधः फलमुक्तं संगच्छते ।

याज्ञिकैः प्राकृती वेदिरुत्तरा वेदिरिति प्रयोगे नान्यदेशसम्बन्धित्वमुत्तरशब्दस्यार्थः किन्तु उत्तरदिवसम्बन्ध्येवेति बोध्यम् । तत्रोत्तरवेद्याः प्रतिपादन ब्राह्मणे सोमप्रकरणात् । समानन्यायेन दक्षिणस्या वेद्या अपि तथात्वं वेदनीयम । सा च रात्र्यवसाने प्रवर्तमाना वेदिः कुत आरभ्य प्रवर्तत इत्येतस्य निर्णयबोधकविशेषणवैशिष्ट्येनोच्यते तद्य एष पूर्वार्ध्यो वर्षिष्ठः स्थूणाराज इति ।

अयं भावः–उत्तरदिनप्रारम्भा मुख्यो यथाऽऽदित्यमण्डलदर्शनत एवमुषःकालमारभ्यापि उत्तरदिनप्रारम्भो भवति, तस्योषःकालस्य आदित्योदयस न्निकृष्टपूर्ववर्तिसवितृकालतः पूर्ववर्तित्वम् । अत एव मन्त्रे उच्यते विनाकमस्य रसविता वरेण्योऽनुप्रयाणमुषसो विराजतीति । तत्रोषसः प्रयाणभागमनुसविता व्यस्थादिति वर्णनेनोषःकालः पूर्वः सवितुश्च कालः परवर्तीति भवात ।

किञ्च सवितुः कालः प्रभातकालस्तस्योषःकालत्वमपीत्यभिप्रेत्य स्वनयदानस्तुतौ वधूमन्तो दशरथासो अस्थु रिति दशानां रथानां वधूमत्वोक्तिः । वधूश्चापा एव । किञ्च सवितुर्मित्राभिन्नत्वमुत मित्रो भवसि देव धर्मभिरित्यनेन प्रतिपादनान्मित्रस्य च मन्त्रेषु पञ्चभिर्नियमनस्य मित्राय पञ्च येमिरे जना अभिष्टिशवसे इत्यत्र प्रतिपादनात् नियन्तारः पञ्च कालावयवा घटीरूपा एवेति पूर्वं निर्णीतं, ते च कालावयवा रथशब्देनोच्यन्ते ।

तथा सति यथा पञ्चदण्डरूपा कालावयवा मित्रस्य नियन्तार.। अर्थात्पञ्चकालावयवसम्बन्धित्व मित्रस्येति। तद्यथा मित्रस्यैवमुषसोऽपि पञ्चकालावयवसम्बन्धित्वम्। अत एवोपसस्त्रिशद्योजनसम्बन्धित्व सदृशीरद्येति मन्त्र हित्वोऽशिरो जिह्वया वावदच्चरत् त्रिशत्पदान्यक्रमोदित्यत्र त्रिशत्पदसम्बन्ध उच्यमान सगच्छते, त्रिशदुप.स्तावक च सूक्त सगत भवति। ते च त्रिशत्सख्याका दैनन्दिनवृत्तसम्बन्धिनोऽशरूपा भागा उच्यते।

तेषा च त्रिशत्सख्यया दण्डपञ्चक विवक्षित भवति। प्रतिदण्डमशषट्कयोगस्यानुपातत. प्राप्तिः। यथा सम्पूर्ण वृत्त षष्ट्यधिकत्रिशतभागैरशरूपैर्व्याप्तम्। एकेन वृत्तेनैक दिन षष्टिदण्डात्मकैर्भागैर्व्याप्तम्। एव च सति दण्डात्मकभागाना षष्ट्या यदि षष्ट्यधिकत्रिशतभागा वृत्तीया प्रतीयन्ते तर्हि एकेन दण्डात्मकेन भागेन कतीत्यनुपातेन षट्सख्या लभ्यते, तथा च षड्भिरशात्मकभागैर्वृत्तीय. कालात्मको दण्डरूपो भागः सपद्यते। अतएव त्रिशदुपस्तावके सूक्ते पञ्चोपस. पृथगुक्त्वा प्रत्युपस पञ्चस्वसृयोग उच्यमान· सगच्छते।

एवञ्चैका मुख्या स्वसृणा पञ्चक चेति षण्णमुषसा समूहो बोधितो भवति, ते च समूहाः पञ्चेति साकल्येन त्रिशत्सख्यासपादन तत्सूक्तगतमुपपद्यते। एव चोपसा दण्डपञ्चकयोगिता परवर्तिन. सवितुर्मित्राभिन्नस्य दण्डपञ्चकयोगितेति उभय मिलित्वा दण्डदशकयोग। एतस्य सर्वस्योपः कालत्व मत्वा दण्डाना रथशब्देन ग्रहणेन स्वनयदानस्तुतौ "वधूमन्तो दश रथासो अस्थुरिति" वर्णनसगतिरिति पूर्वं प्रतिपादितम्।

एव चोप. कालमारभ्य दिनान्तरप्रवृत्तिरिति सिध्यति, एव च भेदेन व्यवहारे औपसाः पञ्चदण्डाः साविना पञ्चदण्डा इति भवति। सावित्रकालस्य वेदिरूपता षष्टिश्चाध्वर्यो इति मन्त्रव्याख्यानावसरे विस्तरेणोक्ता। तदत्र दिनान्तरयोगतो वेदिप्रवृत्तिबोधनाय ब्राह्मण उच्यते य एष इति।

अय भाव.–भुवो हि विभिन्नदेशसम्बन्धेन दिनरात्रादीना नानारूपत्व भवतीति निरूपित, तद्विशेषपराकाष्ठा भुव पार्श्वद्वये सर्वोच्चयोः सुमेरुकुमेरुप्रदेशयोरित्यपि पूर्वं निवेदितम्। तयोस्तत्सम्बन्धिप्रदेशाना व्यवहारावसरे तत्रोत्तरदक्षिणशब्दाभ्या व्यवहारवत्पूर्वपश्चिमादिशब्दैरपि व्यवहारस्य पूर्वभिन्नं पिभि., प्रत्यङ्देवाना विश इत्यादिषु पूर्वं निरूपितम्। तदनुसारेण भुवो दक्षिणेऽर्धे कुमेरुप्रभृतिदेशेष्वादित्यादीना पूर्वाञ्चनेन पूर्वादिशब्दवत्पूर्वार्धशब्देन व्यवहारात्पूर्वार्धो भुवो दक्षिणपार्श्वीयार्धस्तमर्हति तत्रैव तस्य दर्शनात्तद्योग्यतेति पूर्वार्ध्यं। वर्षिष्ठः सर्वापेक्षया वर्षीयान् वृद्धतम. स्थूणाराजः।

अय भावः–आदित्ये तदीयरश्मिषु च स्थूणात्वेन स्थूणासादृश्याद्व्यवहारो वेदे सहस्रस्थूण विमृथः इत्यादौ रश्म्यभिप्रायेण तद्व्यवहारः। एता स्थूणा

पितरौ धारयन्तीत्यादावादित्याभिप्रायस्तद्व्यवहारः। तत्ररश्म्यपेक्षया महत्वेन पूर्वपूर्वापेक्षया वृद्धत्वेनात्र स्थूणाराजशब्देनादित्यव्यवहारः। स्थूणानां राजेव राजेति स्थूणाराज आदित्य इति यावत्। तस्य तत्रार्धे दिनावसानीयतया पूर्वार्ध्यो वर्षिष्ठस्थूणाराज इति वचनम्। अपरार्धे दिनप्रारम्भीयतादशायां तत्रार्धे दिनावसानीयता।

दिनप्रारम्भशत्रोषः—कालतोऽपीति भुव उत्तरपार्श्वे सुमेरुरूपे देवानां निवासस्थाने उपः कालप्रारम्भावसरत्वाद्दक्षिणार्धरूपे कुमेरौ दिनावसानावसरस्तदानीन्तनो य आदित्यस्तस्य स्थानतः पूर्वस्यां दिशि तद्गन्तव्यमार्गेत्रीणि पदानि त्रिपदन्यासस्थानमतिक्रम्य तत्स्थाने शंकुनिर्खेयोऽर्थात्तत्स्थानकल्पना करणीया आदित्याभिप्रायेण तदनुसाराय च भूमौ वेदिनिर्माणस्थाने पूर्वार्धान्त्यस्थानेऽऽरोपितो या बृहन्स्तम्भस्ततस्त्रीणि पदानी अतिक्रम्य शंकुनिर्खेयः, अयं मध्यमः शंकुः।

अत्र पदत्रयातिक्रमणस्यायं भावः—उषः कालः सुमेर्वादिस्थले त्रिंशत्पर्यायरूपत्रिंशद्दिनकः। विषुवस्थानसविधवर्तिषु यत्रादित्यस्य प्रतिदिनं दर्शनादर्शने भवतस्तत्रादित्येन गन्तव्यदैनंदिनवृत्तीयांशरूपा भागास्त्रयस्त्रिंशदिति पूर्वमुक्तमेव। तत्रोपसां त्रिरूपत्वं प्रथमभागदशके तमोबाहुल्यात्कृष्णवर्णप्रायता, मध्यमभागदशके तमसो न्यूनत्वेन श्वेतवर्णताऽन्तिमभागदशकेऽरुणवर्णता। अतएवोषसां त्र्यरुणप्सव इति विशेषणं तद्वर्णने।

अत एव च स्वनयदानस्तुतौ "चत्वारिंशद्दशरथस्य शोणा" इति दशरथस्य शोणाश्चत्वारिंशदिति वर्णनं, तत्र सावित्रास्त्रिंशद्भागा उपसश्च तृतीयभागीया दशेति मिलित्वा चत्वारिंशद्भागा दशरथस्य शोणाः शोणवर्णा आदित्योदयसान्निकट्यात्। तत्र घटीरूपदण्डकालमानस्य रथशब्देन व्यवहारात्। सावित्रं घटीपञ्चकमिति तद्दशकाभिप्रायेण दशरथ इति वर्णनात्।

एवं चोपसोऽन्तिमदशकस्यारुणवर्णनस्यात्र ग्रहणं तद्दशके प्रथमभागप्राप्त आदित्य उक्तस्थूणाराजरूपस्ततो भागत्रयाभिप्रायेण पादत्रयातिक्रमः। तत उपसोऽवशिष्टा भागाः षट् सावित्राश्च षट्त्रिंशद्भागाभिप्रायेण वेद्या आयामाभिप्रायेण पूर्वोक्ते शङ्कुतः षट्त्रिंशत्पदातिक्रमणे शङ्कुनिधानं परस्तादुच्यते। तस्य पूर्वार्धशब्देन वचनम्।

वस्तुत इदं स्थानं मुख्यदिनप्रारम्भरूपसूर्योदयस्थानमिति तस्य पूर्वार्धीयदिनावसानस्थानमित्येतस्य पूर्वार्धमर्यादारूपत्वेन वचनमेव पूर्वार्धं इति। एवं चोषसोऽन्तिमभागीयद्वितीयादिभागत्रयातिक्रमणाभिप्रायेण विक्रमत्रयोत्तर शङ्कुन्यास इति। उक्तरीत्या पदत्रयप्रक्रमान्तस्योत्तरदिनारम्भरूपत्वेन पूर्वदिनतोऽस्य वहिर्भात्र उत्तरदिनस्यान्तः प्रवेश इत्याभिप्रायेणात्रोक्तं सोऽन्तः पात इति।

स शङ्कुस्तद्रूप आदित्योऽन्त पात इत्यन्तगत इति अर्थादुत्तरदिनान्तगत इति एनस्मादवधिभूतान्मध्यमाच्छङ्को । उभयत पार्श्वयो श्रोणिभागसत्वेनास्य मध्यमत्वम् । तस्माच्छङ्कोर्दक्षिणा चोत्तरा च प्रतिपार्श्वं पञ्चदशपदान्तपर्यन्त श्रोतिशब्दव्यवहार्यो भाग । स तु दक्षिणोत्तरसम्बन्धाद्दक्षिणा श्रातिरुत्तरा श्रोणिरिति व्यवह्रियते ।

अत्र पञ्चदशपदातिक्रमणस्याय भाव –आदित्यमण्डलस्यावस्थितिदेशतस्तदीया रश्मय प्रतिपार्श्वं पञ्चदशाशपर्यन्त दृष्टा भवति । अत एव तस्य षोडशक पुरुष इति षोडशत्वेन व्यवहार । तत्र सुमेरौ उदयस्थलत आदित्यो याम्यात्तरवृत्त चतुर्विशत्यशान्त यावदूर्ध्वमारोहति तावता मासत्रयमतिवाह्यते, तता धोवर्तिनि उक्ते वृत्तभागे चतुर्विशत्यशपर्यन्तमवारोहति तत पुनरारोहति उदय स्थल यावत्तावता रात्रिसम्बन्धिमासषट्कमतिवाह्येत । एव रात्रावातिवाह्यमाना तेषा याम्योत्तरवृत्तभागाना मासषट्कसम्बन्धेन प्रतिमासमष्टावशा उपयुक्ता भवन्ति ।

तत्र रात्रिप्रारम्भे प्रथमो मास प्रकृष्टप्रकाश सावित्रोऽर्थात्तदभिन्नवारुण । तत्कृते प्रथममशाष्टक तत परो मास सान्ध्याया उपस इति तत परवर्ति अशाष्टकमुपस इति षोडशाशा उपयुक्ता । तत्र परस्तान्मासद्वय तमोमयी रात्रिरिति तदर्थं द्विरावृत्तमशाष्टकम् । तत्र प्रथम रात्र्यर्धपर्यन्त, द्वितीय चाशाष्टकमुदयावसरीयोष कालप्राप्तिपर्यन्त, तत उपोऽथमशाष्टक साविन चाशष्टकमिति तत आदित्यस्योदय । एव सति उप कालप्राप्तिदशाया तदीया किरणा उदयस्थान सम्बद्धा भवन्ति इति ।

तदीयरश्मीनामुष कालपर्यन्त व्याप्ति । अर्थादुदयस्योष कालप्रारम्भस्थानत षोडशाशविप्रकृष्टत्वम् । तत्रोष कालमारभ्य ततोऽवशिष्टा उदयपर्यन्ता पञ्चदशाशा व्याप्यन्ते । किरणाना च करशब्दव्यवहार्यता मध्यस्थितबिम्बाभिप्रायेण, तेषा कर्णादिशब्दबोध्यता क्षत्रमानस्थले गणितिकप्रसिद्धा । कर्णशब्द श्रुतिशब्दसमानार्थ । श्रुतिशब्देन श्रुधातुनिष्पन्नप्रत्ययान्तरयुक्तस्यापि ग्रहणम् । अत एवेन्द्रस्य दीर्घश्रुत्तम दीर्घश्रवसमिति विशेषणोपपत्तिरिति पूर्वं प्रतिपादितम् ।

## ३० श्रोणि शब्दार्थविचार

एव श्रोणिशब्दोऽयुश्रवातुतो निष्पन्नस्तादृशकिरणबोधक । तद्व्याप्तिश्चोक्तयाम्योत्तरवृत्त पञ्चदशाशपर्यन्ता यथा सुमेरावेव कुमेरावपाति तद् बाधनार्थमत्र मध्यमशङ्कुतो दक्षिणोत्तरा पञ्चदशाशपर्यन्तता श्रोणिरिति गृहीत्वा दक्षिणाश्रोणिरुत्तरा श्रोणिरिति व्यवहार । श्रोणिशब्दस्य स्त्र्यवयवविशेषेऽपि प्रवृत्तिरिति श्लेषेण तद्विवक्षणेन वेद्या स्त्रीत्वेन व्यवहार । मध्यम स्थानशङ्कुतो वेदेर्व्यास षट्त्रिशस्थानपर्यन्त इत्युक्तम् ।

स तु दैनन्दिनवृत्तगत इति तस्य शङ्कुतः प्राङ् इति प्राचीनिर्देशात्। तस्य च पूर्वोक्तमध्यविन्दुतः षट्त्रिंशस्थानप्रक्रमान्तो विन्दुरुदयस्थानप्राप्त इति तत्र त्रिखातविन्दोर्वेद्या आयामस्यावधित्वम्। तत्र पूर्वावधिं वेद्याः प्राप्तस्यादित्यस्योदयस्थानप्राप्त्यै याम्योत्तरवृत्तगततत्स्थानतो द्वादशांशा स्वावशिष्यन्ते, सावित्रा अष्टावंशा औषसाश्चत्वार इति द्वादशांशपर्यन्तमेव तत्र व्याप्तिरिति तां तादृशीं व्याप्तिं बोधयितुं तस्मान्मध्यविन्दोरुदयसन्निकटवेद्या आयामावधिविन्दुरूपादक्षिणोत्तरोक्तरूपद्वादशांशपर्यन्तानां प्रक्रमाणामन्ते शङ्कुन्यासेनांशव्यवहारः। सोऽपि भुजसमानार्थ इति क्षेत्रमानबोधकता, श्लेषेणशरीरावयवबोधकता, वेद्यां पूर्वोक्तरीत्या स्त्रीत्वकल्पनेन तदीयांसबोधकत्वम्।

एवं च पर्यवसाने वेद्याः श्रोणिस्थानेंऽशत्रयाधिक्यमंसस्थानेंऽशत्रयन्यूनतेति फलितप्रकारस्य स्त्रीरूपणेन प्रशंसनं क्रियते परवर्तिब्राह्मणभागेन। तत्रादौ वेद्याः श्रोणिमानप्रशंसोच्यते ब्राह्मणे—अथ यत्त्रिंशत्प्रक्रमा पश्चाद्भवति त्रिंशदक्षरा वै विराट विराजा वै देवा अस्मिंल्लोके प्रत्यतिष्ठस्तथो एवैप एतद्विराजैवास्मिंल्लोके प्रतितिष्ठति। अथो अपि त्रयस्त्रिंशत्स्युः। त्रयस्त्रिशदक्षरा वै विराट् विराजैवास्मिंल्लाके प्रतितिष्ठिति।

तत्र वेद्याः श्रोणिमानमुभयतस्त्रिंशत्प्रक्रमात्मकमुक्तम्। तत्र प्रक्रमस्य पदरूपत्वं, पदञ्चाक्षररूपमिति श्रोणिमाने त्रिंशदक्षराणि भवन्ति। एवं सति क्षेत्रमानेऽक्षरमित्येकं मानमंशात्मकभागरूपं सम्पन्नम्। अक्षरसंख्याविशेषेण छन्दांसि मीयन्ते। प्रकृते च त्रिंशद्भिरक्षरैर्विराट्नामकं छन्दो भवति। विराजः पादविषये नानारूपत्वं, तत्र त्रिपादपि विराड् भवतीति प्रतिपादमेकादशाक्षरसंख्यायोगेन त्रिंशदक्षराऽत्र विराडेव। त्रिंशदक्षरैरेव देवानां किरणानां भूमौ स्थितिरिति विराजा देवा भूमौ प्रतिष्टां लब्धवन्त इति यजमानेनापि वेद्याः पाश्चात्ये भागे त्रिंशत्प्रक्रमत्वसम्पादनेन प्रतिष्ठाफलं लभ्यते इत्युक्तम्।

देवानां विराजा भूमौ प्रतिष्ठालाभ इति वर्णनस्य त्वयं भावः—देवाः किरणास्ते आदित्ये वर्तमानाः प्रकाशनरूपं कार्यं कुर्वन्ति तदधीनाः। यदा त्वादित्यस्यास्तेनादर्शनेनासत्वं तदानीं केवला एव भूमिं प्रकाशयन्तीति तेषां भूमौ प्रतिष्ठा। सा चादित्यस्य प्रकाश्यभूभागतः पञ्चदशांशपर्यन्तं विप्रकर्षे एव न तु ततोऽधिकविप्रकर्षे। तच्चोदयात्पूर्वमेवस्तोत्तरं चेति उभयपार्श्वसंग्रहेण त्रिंशदंशपर्यन्तं भवतीति तावता विराट्छन्दस्कत्वसंपत्या विराजा प्रतिष्ठाप्राप्तिरित्युक्ता।

तत्साजात्याद्यजमानेनापि प्रतिष्ठालाभः फलं, वेद्याः श्रोणिभागे त्रिंशत्प्रक्रमपर्यन्तं विप्रकर्षसाधनादिति। तेन च्छन्दसां क्षेत्रमानरूपता। तत्रापि अक्षरा-

णामशरूपक्षेत्रमानरूपत्वमादित्यगत्यनुकारश्च कर्मसु इति भवति । आदित्यस्या-क्षररूपत्व तस्य एकाशव्यासत्वमित्यपि सिध्यति । अत्रोप. स्थल प्राप्तस्योप-साप्टाशमाने तदारोहणेनैकाशन्यूनतयाऽवशिष्टाः सप्ताशा औपसा.] सावित्रा-श्चाप्टावशा इति पञ्चदशासव्याप्ति. पञ्चदशप्रक्रमैर्गृहीत्वा प्रतिपार्श्वं दक्षिणो-त्तरा श्रोणिमानं त्रिशत्प्रक्रमात्मकमुक्तम् ।

अथोपसाः सर्वेऽशा अष्टौ सावित्राश्चाष्टौ इति षोडशाशग्रहण, तच्चादि-त्यस्य दक्षिणोत्तरापार्श्वभागीयमिति मध्ये आदित्यस्य बिम्बस्यैकोऽश इति साकल्येन गहणे प्रतिपार्श्व षोडशेति पार्श्वद्वयाभिप्रायेण द्वात्रिंशदशामध्यवर्तिबिम्बस्यैकोऽश इति ग्रहणे त्रयस्त्रिशदशा भवन्ति । तस्य ग्रहणेन ब्राह्मणे उक्तम्–"अथो अपि त्रयस्त्रिशत् स्युरिति, तदानीमपि विराट्त्व न हीयत इति प्रतिपाद्यते । ब्राह्मणे "त्रयस्त्रिशदक्षरा वै विराडि"त्युक्तम् । तदर्थश्च भाष्ये उक्त "न वा एकेनाक्षरेण छन्दासि वियन्ति न द्वाभ्यामिति"ब्राह्मणोक्त्योक्तविराज. पादत्रयएकाक्षराधिक्येऽपि न विराट्त्वहानिरिति ।

एव वेद्या व्यासमानस्य षट्त्रिंशत्प्रक्रमरूपस्य बृहतीरूपत्वात्तेन छन्दसा देवताभिः स्वर्गलोकप्राप्ति· कृतेति यजमानेनापि तदनुसारेण स्वर्गो लोकोऽलभ्यत इति आदित्यगत्यनुकारः कर्मस्वित्येवार्थ सिद्धो भवतीति । अथ च वेदि व्यास-स्यारम्भत परमो वधिराहवनीयरूप इत्युच्यते ब्राह्मणे सोऽस्य दिव्याहवनीयो भवतीति । अत्रैतस्य दिव्याहवनीयबोधनादाहवनीयस्य च दिनप्रारम्भीयादि-त्यमण्डलरूपत्वेन दिवि द्योलोके दिनप्रारम्भो बोध्यते ।

एवञ्चैषा द्योलोकस्थलीयोत्तरदिक्का वेदिरिति भवति । समानन्यायेन दक्षिणादिक्कापि वेदिस्तादृशीति सिद्ध भवति । तेन पूर्वोक्तस्य "द्वे वेदी भवत" इति ब्राह्मणस्यो.पपत्ति. । केवल दक्षिणदिक्कवेदिस्थले तत्साधनवाक्येषु प्राङ्-स्थाने प्रत्यङ्शब्द·, पूर्वार्ध इत्यस्य स्थाने परार्ध इति वोत्तरार्ध इति वा योजनीय-मिति विशेष । पूर्वस्या स्थितस्य वेद्या आयामस्यावधेः प्रतिपार्श्व द्वादशप्रक्रम-योगेन साकल्ये चतुर्विशतिः सख्या सपद्यते, गायत्रीछन्दसोऽक्षरसख्यापि तावतीति ।

तत्र ब्राह्मणे "पूर्वार्धो वै यज्ञस्य गायत्री"[1] इत्यनेन यज्ञस्य प्रारम्भीय: पूर्वार्धभागस्य गायत्रीरूपत्वमुक्तं, तच्च सोमयागे प्रात:सवनं प्रथमं तच्चोदयत: पूर्वं प्रवर्तते-त एव तत्र शस्त्रद्वयमध्ये होतुराज्यं शस्त्रं पूर्वं भवति। तत्र च शस्त्रे तूष्णींशंसादिभागत्रयम्। तूष्णींशंसस्य स्तोत्रे वहिष्पवमानस्तोत्रस्य यज्ञरूपदिन-वहिर्भगिता प्रातरादिकालिकोति पूर्वमुक्तम्। प्रात:सवनस्य गायत्रीसम्बन्धित्वादत्र पूर्वार्धे गायत्री भवति यज्ञस्येति गृहीत्वोक्तं पूर्वार्ध एव गायत्रीति। पश्चाद्भागे श्रोणिस्थलेंऽशापेक्षयाधिक्यस्य प्रशस्तयोपित्साजात्येन प्रशंसा ब्राह्मणे "पृथु-श्रोणिरिति" योपां प्रशंसन्तीति। तस्य प्राशस्त्यं प्रजननोपयोगीति प्रशंसा।



---

१. श. ब्रा. ३:५:३:२७

# अथ तृतीयो विवेकः

## १ वेदस्वरूपनिरूपणम्

वेदश्रुत्यादिपदार्थविषयेऽपि कल्पनाभेदेन नानाविधा वादा. प्रवृत्ता । सर्वप्रथमस्तु इदानीं व्यवह्रियमाणो गद्यपद्यात्मा ऋगादिशब्दैर्व्यवह्रियमाणो ग्रन्थविशेषो वेद इति । तद्विषये च स पूर्वमविभक्तावस्थो व्यसनेन त्रिरूपत्व चतूरूपत्व वा प्राप्त. । स च त्रयीशब्देन व्यवह्रियते चत्वारो वेदा इति वा । तेषा च यज्ञे उपयोग इति कृत्वा वेदाना याज्ञार्था प्रवृत्तिरिति प्रसिद्धि. ।

यज्ञे चान्तत ऋत्विक्चतुष्टयेन कर्माणि क्रियन्ते, तत्र प्रत्येकमृत्विजा क्रियमाणकर्मप्रतिपादनादिभेदेन हौत्रो वेद अध्वर्युवेद उद्गातृवेद इति त्रिधा व्यवहारः पूर्वोक्तानामेव वेदानाम् । चतुष्टयपक्षे ब्राह्मणो वेद इति । ब्राह्मण-ग्रन्थेऽप्येव प्रसिद्धि. । अतएवैतरेये उच्यते यदचैव हौत्र क्रियते यजुषाध्वर्यव साम्नोद्गीथ व्यारब्धा त्रयी विद्या भवति । अथ केन ब्रह्मत्व क्रियते इति आशङ्क्योत्तरमुच्यते त्रय्या विद्ययेति ब्रूयात् इति । तस्यार्थविषये व्याख्यातृणा व्याख्याभेद ।

कैश्चिदुच्यते "त्रयी विद्या नामोपयुक्तवेदत्रयमेव तेनैव ब्रह्मत्व कर्तव्य-मि"ति । एव सति चतुष्टयपक्षीयश्चतुर्थो विभागोऽथर्ववेदो नाम स त्वगृहीत इति मत्वा तैरुच्यते आथर्वणवेदस्य त्रय्यामेवान्तर्भाव इति । अतएव ब्राह्मणे त्रय्या विद्ययेति उत्तरमुक्तम् । तस्याय भाव.—यज्ञे ब्रह्मणः कार्यं सर्वेषामृत्विजा तदीयकार्येषु न्यूनतातिरिक्तत्वादिदर्शन तन्निबन्धनकर्मवैकल्यपरिहार इति, तच्चोक्ता नामृत्विजा साकल्येन कार्यविज्ञान विना दुष्कर तदर्थं वेदत्रयविज्ञाना-पेक्षा तस्य ।

एव स तत्कार्यं विज्ञाय तत्र वैकल्य विज्ञाय तत्परिहार तत्रत्यप्रायश्चित्ता-दिना कुर्यादिति नापरवेदापेक्षा । एव सत्यय चतुर्थो वेद आथर्वणो नाम नातिरिक्तोऽपेक्ष्यत इति तस्योक्तत्रय एवान्तर्भाव. । तद्वेदे हि द्विरूपत्व दृश्यते ऋग्रूपत्व गद्यरूपत्व चेति ।

तत्रर्ग्रूपस्यर्ग्वेदेऽन्तर्भावो गद्यरूपस्य यजुर्वेदे इति नास्ति अतिरिक्तो वेद आथर्वणो नामेति । अतएव मीमांसकैर्ऋग्वेदादीनां स्वरूपाणि प्रतिपादितानि–"पादबद्धा अर्थोपेता मन्त्रा ऋचो गीतिषु सामाख्या, प्रश्लिष्ट यजुः" इति । एवं सत्यृग्रूपत्वमृग्वेदे प्रश्लिष्टभागस्य यजुर्वेदेऽन्तर्भाव इति नातिरिक्तश्चतुर्थो वेद इति ।

अपरैरुच्यते ब्राह्मणोक्तत्रयीविद्येत्यस्य न वेदत्रयग्रहणमर्थः किन्तु आथर्वणवेदस्यैव त्रयीविद्येति नाम । अतएव ब्राह्मणे न केवलं त्रय्येति प्रतिपादितं किन्तु त्रय्या विद्ययेति विद्यापदसाहित्यनेन वचनम् । न च प्रत्येकं वेदस्य वेदपदसमानार्थत्वेन विद्यापदेन ग्रहणमिति त्रयीविद्याशब्देनोक्तवेदत्रयस्यैव तत्र ग्रहणमिति वाच्यम् । सत्यपि प्रतिवेदं विद्याशब्दबोध्यत्वे तथाप्यत्र त्रयीविद्याशब्दो न यौगिकार्थो ब्राह्मणे किन्तु संज्ञार्थप्रतिपादको रूढार्थः । संज्ञाया अपि प्रतिपादनं वाक्येन समानार्थेन क्रियत इति निरुक्ते प्रोच्यते ।

तदनुसारेण रूढार्थाभिप्रायेणैव ब्राह्मणे त्रयी विद्येति ग्रहणम् । अतएव तत्र शङ्कायां व्याख्या त्रयी विद्या भवतीति वचनेन रूढार्थस्यैव द्योतनम् । अतएव तत्र विपदप्रयोगः । अन्यथा आख्या त्रयी विद्येति ब्रूयात् । विपदप्रयोगेण स्वयमर्थो बोध्यते त्रयी विद्या आथर्वणो वेदा व्याख्या विशेषेण भिन्नत्वेन आख्या वर्तते संपन्ना वर्तते इति तदर्थः ।

अन्यथा होत्रादिकर्मत्रये उपयोगाभिप्रायेणोपयुक्ता विद्येति ब्रूयात् । तत्रर्गादिवेदत्रयग्रहणाभिप्राये आङ्पूर्वस्य रभ्धातोरुपयोगार्थे लक्षणा वक्तव्या स्यात्स एव दोषो भवेत् । धातूनामनेकार्थत्वाश्रयणेऽपि सैव गतिः स्यात् । तस्माद् ब्राह्मणे शंकायामुक्तं व्याख्या त्रयी विद्येति रूढाभिप्रायम् ।

एवं चोत्तरेऽपि त्रयी विद्येति रूढाभिप्रायमिति आथर्ववेदस्यैव तेन ग्रहणमिति तेनैव ब्रह्मत्वकरणमिति तदर्थः । न च त्रयी विद्येति त्रयीति वा प्रसिद्धिस्तर्हि निर्मूला अयुक्ता स्यादिति वाच्यम् । सा प्रसिद्धिः केवलयज्ञोपयोगाभिप्रायेण । आथर्वणे यज्ञोपयोगातिरिक्तानामर्थानां प्रतिपादनादिति ।

एवं च व्यसनेन चतुर्धात्वमापादितोऽपि पुनर्व्यसनेनानेकशाखत्वमापन्नो वेदवृक्षः । तदुक्तं निरुक्तकारेण "साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्यो साक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि[1]" चेति । एवं च शाखाभेदव्यसने शक्तिरेव

१. निरुक्तम् १:२०:२

निमित्तमिति स्पष्टम् । अशक्तिवशतः सर्ववेदग्रहणासम्भवे नित्योपयोगं कादाचित्कोपयोगं च निमित्तीकृत्य वेदभागविभाजनम् ।

तत्र नित्योपयोगभागः साधारणः सर्वत्र । असाधारणस्तु कादाचित्कोपयोगभागः । अतएव शाखाभेदेऽपि बहुलांशसाम्यबहुलांशवैषम्ययोश्चोपपत्तिः । व्यस्तैतेनानेकविधत्वं पुराणेषु महाभाष्ये व्याकरणभाष्यकारेण च संगृहीतं नामतो यथा "साङ्गाः सरहस्या एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदो नवधाऽऽथर्वणो वेद एकविंशतिधा बाह्वृच्यमिति[1]" ।

ते चेमे शाखाभेदा इदानीं केचनैवोपलभ्यन्ते । स्वरूपतोऽनुमानतः केचन नामतः । अपरेषां नामान्यपि विकरालकालकवलितानि च विज्ञायन्ते । तत्र तेषामनुपलम्भेऽनेकानि निमित्तानि, तन्मध्ये सम्यङ्नियमापरिपालनमपि बलवत्तरं निमित्तमध्ययनेषु इति चरणव्यूहग्रन्थे प्रतिपाद्यते । तदुक्तं तत्र "सामवेदस्य किल सहस्रभेदा आसन्ननध्यायेष्वधीयानास्ते शक्रेणाभिहताः प्रणष्टा[2]" इति । एवमशक्त्यादीनामपि निमित्तत्वमस्त्येव । तत्र वेदशब्देन भागद्वयस्य ग्रहणं मन्त्रभागो ब्राह्मणभागश्चेति । अत एवापस्तम्बेनोच्यते "[3]मन्त्रब्राह्मणयोर्वेदनामधेयमिति" । आरण्यकगाथानाराशंसीकल्पादीनां भागानां यथायथब्राह्मणभाग एवान्तर्भावः ।

### ४. नानामतोपन्यासपूर्वकं वेदापौरुषेयत्वव्यवस्थापनम्

तस्यैतस्य वेदस्य नित्यत्वविषये विवदन्ते वादिनः । तत्र मीमांसका ब्रुवते- इमे वेदा नित्या एव उत्पादे कारणानपेक्षत्वात् असम्भवाच्च कारणापेक्षणस्य, शब्दात्मकानामेषां कारणापेक्षणे पुरुष एव कारणं संभवेत् । तस्य कारणत्वं वर्णोत्पादात्पदोत्पादादर्थसम्बन्धाद्वाक्यविरचनात्स्वातन्त्र्येण वा कर्तृत्वेन प्रसिद्धेरिति ।

तत्र वर्णानां नित्यत्वेन तदुत्पादने पुरुषस्यानपेक्षा । न च वर्णानामुत्पाद्यत्वमुत्पन्नो गकारो विनष्टो गकार इति प्रतीत्या तस्योत्पत्तिविनाशवत्त्वस्यानुभविकत्वादिति वाच्यम् । गकार उत्पन्न इत्यनुभवे ध्वनिर्वर्णश्चेति द्वयं प्रतीयते उत्पत्तिश्चैको धर्मः स चैकेनैव धर्मिणा सम्बध्येत । सकृदनुभूयमानायास्तस्या उभयसम्बन्धासम्भवात् ।

स चोत्पत्तिरूपो धर्म एकोऽवभासमानः कारणव्यापारविषयत्वेनानुभूयमाने समप्रतिपन्ने ध्वनावुपक्षीण इति वर्णेन साकं तदुत्पत्तिरूपधर्मसम्बन्धे प्रमाणाभाव इति वर्णोऽनुत्पन्न एवावशिष्यत इति न तत्र तदुत्पत्तिद्वारा पुरुषापेक्षा । न च

---

१. व्या. म. भा. पस्पशाह्निकम्
२. चरणव्यूहसूत्रम् १.५
३. आप. यज्ञपरिभाषा सू. १०

ध्वनिवर्णयोर्भेदाभाव इति वाच्यम्, ध्वन्यवभास्यत्वेन वर्णस्य भेदात् । न हि अवभास्यावभासकयोरैक्यं भवति स्वयंप्रकाशपदार्थवर्जयित्वा ।

वर्णश्च न स्वयं प्रकाश इति तस्य न ध्वनिना साकमभेदः । प्रसिद्धश्च ध्वनेरभिघातेन साकं कार्यकारणभावः । दण्डाद्यभिघातस्थले तस्य कार्यकारणभावग्रहात् वर्णस्य च तत्राभावात् । न च ध्वनिमात्रेण वर्णाभेदं ब्रूमः किन्तु ध्वनिविशेषेण साकम् । ध्वनिर्द्विविधः सवर्णोऽवर्णश्च तत्र अवर्णध्वनेर्वर्णभेदेऽपि सवर्णध्वनिर्वर्णाभिन्न इति वाच्यम् ।

ध्वनिसामान्ये क्लृप्तेनावघातस्य कारणत्वेनोपपत्तौ विशेषकार्यकारणभावकल्पने गौरवात् । न च विशिष्यैव कार्यकारणभावो नास्त्येव सामान्येन कार्यकारणभाव इति वाच्यम् । ध्वनिसामान्याभावस्यैकेनैवाभिघाताभावेनोपपत्तौ यावद्विशेषाभावसाधनार्थं यावद्विशेषकारणाभावकल्पने गौरवात् । कूटादिकल्पना त्वतिगौरवग्रस्ता ।

एतावता ध्वनिसामान्यं प्रति क्लृप्तस्यावघातस्य कारणस्य ध्वनिरूपकार्यविषयत्वेन ज्ञायमानाय उत्पत्तेस्तत्सम्बन्धित्वेन तस्योत्पन्नत्वविज्ञानेऽपि वर्णस्योत्पन्नत्वाभावेन तद्द्वारा पुरुषस्यानपेक्षणात् । एवं च उत्पन्नो गकारो विनष्टो गकारइति प्रतीतिर्ध्वन्यभिप्राया न तु वर्णाभिप्रायेति वर्णस्य नित्यत्वमव्याहृतम् । अतएव स एवायं गकार इति प्रत्यभिज्ञाप्युपपद्यते । सैवेयं गुर्ज्जरीतिवद्वर्णभेदेऽपि साजात्यनिवन्धना तत्प्रतीतिरिति चेन्न, प्रामाणिकभेदसत्वे तथा तस्या उपपादनेऽपि प्रकृते भेदे अनित्यत्वे वर्णानां प्रमाणाभावेन व्यक्त्यैक्यनिवन्धनायास्तस्या वर्णनित्यत्वेनैवोपपादनीयत्वम् । एवं च वर्णानामुत्पत्त्यभिप्रायेण तद्द्वारेणपुरुषानपेक्षणम् ।

वर्णानुपूर्वीरूपपदतासंपत्त्यर्थं तद्द्वारा पुरुषापेक्षणमपि न भवति । एकवर्णस्थले वर्णस्य पदतासंपत्त्यर्थं यथा पुरुषानपेक्षणमेवमनेकवर्णस्थलेऽपि पदतासम्पत्त्यर्थंपुरुषानपेक्षणात् । वर्णा एवैकार्थवोधरूपोपाधिना पदत्वमाप्ता इति तत्रापि पुरुषानपेक्षणात् । वर्णस्यैवार्थवोधकत्वं पदत्वं चेद्घटपटेत्यादिष्वर्थभेदवोधो न स्यादिति वाच्यम्, पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतान्त्यवर्णानुभवस्यैव तादृशार्थभेदवोधे कारणत्वाद्घटपटस्थले च प्रत्येकं तादृशरूपस्य भिन्नत्वेन अर्थभेदवोधस्योपपन्नत्वम् । एवं च पदतासंपत्त्यर्थमपि न पुरुषापेक्षा । नापि पदेन सहार्थस्य सम्बन्धवोधार्थमपि पुरुषापेक्षा, स्वभावत एव पदानामर्थेन सम्बन्धात् ।

तदुक्तं जैमिनिना-"औत्पत्तिकस्त्वर्थेन सम्बन्धस्तत्प्रमाणं वादरायणस्यानपेक्षित्वात् । अतएव व्याकरणशास्त्रे वार्तिकेनोच्यते शब्दस्यार्थसम्बन्धस्य च नित्यत्वे व्याकरणशास्त्र मन्दप्रयोजनमिति" प्राप्ते उच्यते धर्मनियमार्थत्वं

शास्त्रस्येति। नित्ये शब्दार्थसम्बन्धे शास्त्रेण धर्मनियम क्रियत इति। शास्त्र-पूर्वके शब्दप्रयोगे धर्मो भवति नान्यथेति।

एवं च अर्थबोधानुकूलशक्तिरूपेऽर्थसम्बन्धेऽपि पुरुषानपेक्षा, नापि वाक्य-विरचनार्थमपि पुरुषापेक्षा। पदानामेव वाक्यार्थबोधकत्वात्। पदतोऽर्थोऽस्थितो अर्थसम्बन्धस्यापि वाक्यार्थरूपस्य तत एव वाधे तदर्थं वाक्यशक्तेरनपेक्षणात्। अतएव विस्मृतौ पदस्मरणद्वारा वाक्यार्थबोधस्यानुभवकत्वमुपपद्यते। न हि पदार्थसम्बन्धापेक्षया वाक्यार्थोऽतिरिक्तो नाम।

वाक्यशक्तिकल्पने च आनुपूर्वीविभेदेन तेषामेव पदानामनेकरूपत्वेन वाक्यानां तावत्सु शक्तिकल्पनस्य गौरवग्रस्तत्वात्। अविज्ञातचरवाक्यतः पदार्थ-विज्ञस्य वाक्यार्थबोधस्य दृष्टत्वेन वाक्ये शक्तिकल्पनस्यानुपयोगात्। एवं च वाक्यविरचनद्वाराऽपि पुरुषानपेक्षा।

नापि स्वातन्त्र्येण कर्तृतया वैयासिकं भारतमित्यादिवत्पुरुषापेक्षा। वेदे कर्तुरनुपस्थितत्वात्। न च कर्तुरनुपस्थितिर्नाभावात्कर्तुः किन्तु कालविप्रकर्षेण उत्सन्नदेशस्थितकूपारामादिवत्सप्रदायविच्छेदात्, सप्रदायाविच्छेदादेव वेदे कर्तृ-स्मरणस्यावश्यापेक्षणे तदभावेन कर्तुरभावानुमानम। काठकं कौथुमं तैत्तिरीय-मित्यादयः शब्दा न कर्त्रर्थतद्धितान्ताः, किन्तु प्रोक्तार्थप्रत्ययान्ता इति। न तैरपि कर्तुर्विज्ञानमेव पञ्चभिः प्रकारैर्वेदे पुरुषसम्बन्धस्य वक्तुमशक्यत्वेन प्रकारान्तरस्य चासत्वेन न पुरुषनिर्मिता वेदा इति वेदानां नित्यत्वमिति कारणाभावात्।

अपरे ब्रुवते ध्वन्यभिन्ना एव वर्णास्तत्र ध्वनीनामुत्पादविनाशाभ्यां वर्णा-त्मकशब्दस्योत्पत्तिविनाशाविति न वेदानां नित्यत्वम्। अनित्यत्वेन कारणापेक्षण पुरुषातिरिक्तस्य तत्र कारणाभावात पुरुष एव तत्र कारणम्। तावतापि न तत्राप्रामाण्यम्। अस्मदादीनां वेदकर्तृत्वस्यासम्भवेन सर्गादौ ईश्वरेणैव तत-द्व्यादिरूपधारणेन तदुत्पादात्। न च लौकिकशब्दवत्पुरुषगतभ्रमप्रमादादिदोष-सङ्क्रान्तिस्तत्र। ईश्वरस्य नित्यनिर्दोषत्वेन पुरुषदोषसङ्क्रान्तेस्तत्राभावेनेश्वर-प्रामाण्याद्वेदानां प्रमाणत्वात्।

अपरैरुच्यते यस्य निश्वसितं वेदा इति वचनेनेश्वरेणापि वेदविरचने विशेषप्रयत्नाभावादीश्वरस्यापि वेदविषये न स्वातन्त्र्यम्। सुप्तप्रतिबुद्धन्यायेने-श्वरेण गतकल्पीयस्यैव वेदस्यास्मिन् कल्पे उपदेशे इत्येतावतैवोपपत्तौ प्रमाणा-न्तरेणार्थमुपलभ्य कर्तृत्वस्यात्रासम्भवेन नित्यत्वं वेदानाम्। धाता यथापूर्वम-कल्पयदित्यनेनेश्वरेण गतकल्पीयस्यैवाविकृतस्योपदेशनमिति न तस्य तत्र स्वातन्त्र्यम्। शब्दविषये प्रयोगमात्रेण कर्तृत्वप्रयोक्तृत्वयोरविज्ञानम्, समान-

यैव रीत्या कर्तापि प्रयोक्तापि प्रयुनक्ति शब्दानिति न प्रयोगमात्रेण तद्विज्ञानसम्भवः ।

तस्मात्प्रमाणान्तरेण अर्थविज्ञानपूर्वकशब्दप्रयोक्ता तत्र कर्तृत्वेनाध्यवसीयते । यस्तु शब्दविज्ञानपूर्वकमेव शब्दप्रयोक्ता स प्रयोक्तैव शब्दानां न कर्तेति । कालिदासादिग्रन्थस्य कालिदासवदेव अस्माभिः प्रयोगेऽपि नास्माकं तदीयग्रन्थे कर्तृत्वं यतोऽस्माकं तदीयशब्दविज्ञानपूर्वकमेव तदीयशब्दप्रयोगकरणमिति शब्दपूर्वकत्वेनास्माक तत्र न पदानां निःसारणे योजने वा स्वातन्त्र्यमिति न वयं कर्तारस्तत्र ।

कालिदासस्तु अर्थं विज्ञाय तदनुकूलशब्दप्रयोगं कुरुत इति तस्य तत्र कर्तृत्वमिति स स्वेच्छानुसारेण तत्र शब्दं निःसारयेद्योजयेद्वा । एवमीश्वरेणापि गतकल्पीयस्यैव वेदस्योपदेशनेन न तस्य तत्र स्वातन्त्र्यमिति तस्य तत्र कर्तृत्वाभावेन पुरुषसम्बन्धरहिता एव वेदा अत एवैतेऽपौरुषेया इत्युच्यते । अपरेषु अस्मदीयेषु ग्रन्थेषु धर्मान्तरीयेषु ग्रन्थेषु कर्तृविस्मरणाभावेन पौरुषेयत्वमिति दिक् ।

### ३. श्रुतिशब्दार्थविचारः

अपरे पुनर्ब्रुवते सर्वोऽयं वेदापौरुषेयत्वसाधनेऽस्थाने प्रयासः । वेदोऽपौरुषेय इत्यस्य भिन्नाभिप्रायकत्वात् । तथाहि वेदः श्रुतिरित्यभिन्नार्थम् । श्रुतिशब्दश्च नानार्थो भवति, श्रुतिशब्दः कर्णेन्द्रियबोधको भवति च ऋग्वेदादि वाङ्मयबोधकः तद्द्वारा च कीर्त्यादिबोधकः । भवति च भू-मितौ क्षेत्रविज्ञानायोपयुज्यमानव्यवनमर्यादारेखाबोधकः । यथा समत्रिभुजादिक्षेत्रे तत्स्वरूपविज्ञानायसमप्रमाणं रेखात्रयं त्रिकोण विलिख्यते, तत्र विद्यमानरेखात्रयस्यापि भुजकर्णशब्दाभ्यां तदर्थशब्दैश्च बोधो गाणितिकप्रसिद्धः ।

तन्मर्यादारेखया सम्बद्धक्षेत्रविज्ञानमेवं वेदे प्रयुज्यमानानामेषामेतदर्थकानां वा शब्दानामुक्तरीत्या भुजाद्यर्थकत्व बहुषु स्थलेषु । यथेन्द्रं प्रति विशेषणमुच्यते दीर्घश्रुत्तमम इति । अत्र श्रुत्शब्दः श्रुतिसमानार्थकत्वेन प्रयुज्यमानो न कर्णेन्द्रियबोधकः । तथा सति एतेन शब्देन नेन्द्रे स्तुतिर्भासिता स्यात् प्रत्युत क्षेप एव विज्ञातो भवेत् । श्रुतेर्दीर्घत्वं प्रलम्बत्वम् । तदेव दीर्घश्रुत्वं लम्बकर्णसमानार्थं स्यात् । स च शब्दः कर्णयोर्दीर्घत्वं गृहीत्वा रासभे उपयुज्यते, लोके अत्र दीर्घश्रुच्छब्देनापि तदेव गृहीत्वा ये दीर्घश्रुतस्तेषामयमिन्द्रो दीर्घश्रुत्तमोऽतिशयेन लम्बकर्ण इत्यर्थस्तमर्थं बोधयतेति नेन्द्रे स्तुतिप्रतीतिर्भवेत् । नापि श्रुतिविषयतया कीर्तिपरः ।

ये दीर्घश्रुतः दीर्घकीर्तियुता अनेकविधयशोभाजस्तेषां मध्य इन्द्रः सुदीर्घकीर्तियुत इत्येवं वर्णनेन स्तुतिप्रतीतावपि बहुविधा लक्षणा कर्तव्या स्यात् ।

किञ्च तावतेन्द्रस्येतरदेवापेक्षया को विशेषः स्यात् । तेऽपि देवास्तादृशो दीर्घश्रुत्तमा इति । अथेन्द्रस्यैव तत्र नान्येषां देवानामिति तदपि न युक्तम्, देवतासु वैषम्यकल्पनायोगात् ।

तस्मादत्र श्रुतिसमानार्थः श्रुच्छब्द उक्तया रीत्या व्यक्तमर्यादारेखापरस्तत्समानरूपरश्मिपरः । आदित्यस्य सहस्रकररूपेण वर्णने उक्तविधकेन्द्रसम्बन्धिरेखारूपरश्मियोगे सहस्रकरवर्णना, नहि तत्र केवलं यथा कथञ्चिद्रश्मियोगेन सहस्रकरत्वं तस्य । अतएव रश्मीनामरात्वेनोपमितिसम्बन्धेन सहस्रारचक्रशब्देनापि तस्य वचनं भवति । एवञ्चारसमकल्पान् केन्द्रस्थानबिम्बयोगिनो रश्मीन् गृहीत्वैव तस्य सहस्रकर इत्यादिशब्दैर्वचनम् ।

एवं च श्रुतशब्देनापि श्रुतिसमानार्थेनोक्तविधा रश्मय एव विवक्ष्यन्ते । तथा चोक्तविधप्रलम्बरश्मिभाजो ये तेषां मध्येऽतिशयेन प्रलम्बरश्मियुत इन्द्रइति दीर्घश्रुतमशब्देन बोध्यते । तादृशाश्च तिर्यक्प्रसारिणः किरणाः सम्पूर्णमण्डलदृश्ये आदित्ये न भवन्ति सन्तोऽपि वा नोपलभ्यन्ते । अतएव सम्पूर्णमण्डलदृश्यादित्ययोगिनि दिने सम्मुखत्वेनैक एव किरण उपलभ्यते नापरे,तिर्यक्प्रसारिणः किरणा इत्यभिप्रेत्य ऋभुसूक्ते त्रयाणामृभूणामृभुविभ्ववाजानां मध्ये ऋभोरेवैकस्य दिवाकार्यमुच्यते आनिश्रुच. शकृदेको अपाभरदिति ।

एकस्यैव ऋभुरूपस्य रश्मेरस्तावधिकार्यकर्तृत्वमुच्यतेऽपरयोस्तु अस्तोत्तरमेकस्योदयात्पूर्वमपरस्येति कार्यवर्णना तस्मिन्नेव मन्त्रे वाजो देवानामभवत्सुकर्मा, वरुणस्य विभ्वा इति । तदेवापरस्मिन्मन्त्रे तत्राच्यते "शोणामेक उदकं गामवाजति मांसमेक. पिंशति सूनया भृतमिति"। दिनस्य प्रारम्भात्पूर्वमस्तोत्तरं च तयो. कार्यकरणं बोध्यते । आदित्ये रश्मियोगस्त्रिधेति पूर्वं प्रतिपादितं बहुश । तत्रैकस्सम्मुखीनोऽपरौ द्वौ तिरश्चीनाविति । एवं सति सम्मुखीनरश्मियोगिदिवाभागे मण्डले सम्पूर्णदृश्ये तिरश्चीनरश्मिरूपश्रुत्युपलम्भाभावेन न श्रुतियोगिता भवति ।

यथा पूर्णे मण्डले दृश्ये नोक्तविधश्रुतियोगिता एवं सर्वात्मना किरणादर्शनरूपभास्वराभास्वरतेजो युक्तायामुषसि तत्कालेऽपि तादृशकिरणानुपलम्भेन तद्योगित्वाभावः । तदेवमपि प्रकारान्तरेणोच्यते पुरुष. श्रुतिविषयो न भवेत् श्रुतिर्वा पुरुषसम्बन्धिनी न भवेत् । एवमेवोपमा विषयेऽपि उषा. श्रुतिविषयो न भवेत् श्रुतिर्वोप सम्बन्धिनी न भवेत्, तदेव गृहीत्वोच्यत श्रुतिरपौरुषेयीति ।

पुरुषशब्देन च भासा परिपूर्ण आदित्य उच्यते । तादृश. स दिवाभागे इति पशुपुरोडाशार्थवादे "पुरुषं वै देवा· पशुमालभन्तेत्यत्र" प्रतिपाद्यत इत्युक्तम् । एवं च श्रुतिस्तिरश्चीनो रश्मिरिति वा तिरश्चीना रश्मय इति वा ते पौरुषेया पुरुषसम्बन्धिनो न भवन्तीत्यपौरुषेया श्रुतिरिति वा अपौरुषेयाः श्रुतय इति बोच्यन्ते ।

स्त्रीणां श्रुत्यसम्बन्धवर्णनाऽपि उक्तोपोऽभिप्रायेण उषसि स्त्रीत्वस्य आदित्यपत्नीत्वादेर्वेदे वर्णनेन तस्या उक्तरीत्या सम्मुखीना–सम्मुखीनकिरणयोगाभावेन सापि श्रुतिसम्बन्धिनी श्रुतिविषयो न भवतीति । भारते "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा" इत्यनेनापि उषसः श्रुतिविषयत्वाभाव एव बोध्यते । एवं शूद्रस्यापि श्रुतिगोचरत्वाभावोऽपि । यथा पुरुषसूक्ते पद्भ्यां शूद्रोऽअजायतेत्यत्र । भुवो दक्षिणोत्तरपार्श्वीययोः सुमेरुकुमेर्वोरुदितस्यादित्यस्य पदत्वेन वर्णना, ते द्वे पदे दक्षिणसव्यशब्दबोध्ये ऐतरेयब्राह्मण उच्येते । दक्षिणं पादमवनेनिजे, सव्यं पादमवनेनिजे इति ।

ते च द्वे पदे सुमेरुकुमेर्वोरुदितादित्यरूपिणी दिने भवतः । ते द्वे पदे गृहीत्वा पुरुषसूक्ते "पद्भ्यां शूद्रोऽअजायते"त्युक्तिः । शूद्रशब्देन च शु आशु द्रवतीति शीघ्रगमनेन निमित्तेनादित्यस्योदितस्य शूद्रशब्दाभिधयत्वम् । रात्रौ तमसा सर्वपदार्थावरणेन मनोविनोदस्य हित्वैकां निद्रामपरस्य कस्यापि पदार्थस्याभावेन कालस्य सुदीर्घत्वेनोपलम्भः ।

स च रात्रिभागे गच्छतः सूर्यस्य मन्दगतित्वेन विलम्बितकालतेति गृहीत्वा मन्दगतिरिति व्यवह्रियते । दिवाभागे च मनोविनोदका अनेके पदार्था दृश्या वर्तन्त इति तत्सम्बद्धव्यापारविनोदितचेतस्कानां कालस्य न विलम्बितत्वप्रतीतिरिति शीघ्रमवसितं कालमभिप्रेत्यादित्यस्य शीघ्रगतिमत्वमुच्यते । तदेतच्छीघ्रगतिमत्वरूपं शूद्रत्वं गृहीत्वा तस्य शूद्रत्वेन व्यवहारः पुरुषसूक्ते "पद्भ्यां शूद्रोऽअजायत" इति ।

अत्र पादावेव शूद्ररूपावित्यर्थः । यथा ब्राह्मणोऽस्य मुखमित्यत्र मुखमेव ब्राह्मण इत्यर्थ एवं पद्भ्यां शूद्र इत्यत्र पादावेव शूद्ररूपावित्यर्थः । एवं सति दिवाभागीयसम्पूर्णमण्डलभास्वरादित्यस्योक्तरीत्या श्रुतिवियात्वाभावं गृहीत्वोच्यते शूद्रो न श्रुतिविषय इति ।

एवं द्विजबन्धवोऽपि अतिरश्चीनाः सर्वे रश्मयोऽपि न श्रुतिशब्दभाज इति श्रुतिविषया न भवन्तीत्येवार्थः । एवंरूपरश्मीनां श्रुतिशब्दव्यवहार्यत्वं गृहीत्वा प्राच्यामुदीयमानखण्डितमण्डलरूपेन्द्रोऽपि भुव उभयपार्श्वयोः प्रलम्बितिरश्चीनरश्मियुत इति दीर्घश्रुत्तमः । न हि तादृशावस्थाकादित्यस्यापेक्षयाग्न्यादिस्थानापन्नस्य तस्य तादृशप्रलम्बिकिरणयोगित्वम् । यद्यप्यग्नेः प्रलम्बिकिरणयोगित्व तावताऽपि व तस्येन्द्रवत्सुदीर्घप्रलम्बिकिरणयोगितेति इन्द्रविशेषणे तमप्प्रयोगः ।

अग्नेः प्रलम्बकिरणयोगित्वं चित्रश्रवस्तममिति विशेषणेन बोध्यते । चित्रं श्रवो येषां तेषां मध्येऽग्निश्चित्रश्रवस्तमः अतिशयेन चित्रं श्रवो यस्येति तादृशः । चित्रश्रवः शब्देनानेकविधवर्णोपेतं ग्रहनक्षत्रतारादिकं तद्युक्तं श्रवः श्रुतिर्यस्ये-

त्यर्थ । चित्रशब्दस्योक्तेन निमित्तेन ग्रहादिरूपवसुविशेषणता ब्राह्मण उच्यते तदु-क्त "चित्रावसो स्वस्ति ते पारमशीमहीति" मन्त्राशव्याख्याने उच्यते "रात्रिर्वै चित्रावसु" । "पुरा ब्राह्मणा अभैषु"रित्यादिना रात्रिसकाशतो निर्विघ्नेन पार-प्राप्तिकामना अनेन बोध्यते । रात्र्याश्चित्रावसुत्व विचित्रवर्णग्रहनक्षत्रतारकादि-रूपधनयोगित्वात् ।

वसुशब्दप्रयोगस्थले चित्रशब्दस्य केवल विचित्रवर्णबोधकत्व तद्रहितस्थले त तद्वर्णयुक्तधनबोधकत्वम् । तदेव गृहीत्वा वह्निविशेषणे चित्र विचित्रवर्ण-ग्रहतारकादिधनयुक्त अव. श्रुतिस्तिरश्चीन. कर्णौ यस्य तादृशस्तेषा तादृशा मध्ये तमपा तदतिशययोगीति प्रतिपादितम । एव चाग्ने. श्रुतियोग इति विस्पष्टम् । एतदभिप्रायेण मन्त्रद्वितय प्रश्नप्रतिवचनभावेनोच्यते ।

४. कुहश्रुत इन्द्र इत्यादि मन्त्रस्य आदित्यपर व्याख्यानम्

तथाहि कुहश्रुत इन्द्र. कस्मिन्नद्य जने मित्रो न श्रूयते । ऋषीणा वा यः क्षये गुहा वा चर्कृषे गिरा[1] ।। इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषम । मित्रो न यो जनेष्वा यशश्चक्रे असाम्या[2] ।।इति। अत्र प्रथममन्त्रेण प्रश्न उच्यते इन्द्रस्य श्रुतिः कुत्रातीता । श्रुतो नाम अतीतश्रुतिविषय. । कुत्र वा अद्य प्रवृत्तः हि मित्रो नामादित्योदयात्पूर्वस्मिन्नव्यवहित आदित्य एव । स यथा श्रूयते वर्तमानश्रुतिविषयो भवति एवमसाविन्द्र कस्मिन् जने जनेषु वा वर्तमानश्रुति-विषयो भवति ।

इन्द्रस्य श्रुतिरुक्तरीत्या तिरश्चीनो रश्मिर्वर्तमानो भवति । कुत्र वा जने लोके वा असौ भासमानो भवतीति प्रश्नः, अयमिन्द्र ऋषीणा क्षये निवासस्थाने वा वर्तमानो भवेत् । अथवा "गिरा वाचा गुहाया वा चर्कृषे कृतो वा" । अर्था-दसौ रात्रौ वर्तमानो वा भवेदिति । उत्तरमस्मिन्निह श्रुतिविषय अद्य स्तवे वज्री तदुक्त ऋचीषम ऋचा सम इति ।

अय भाव .—इन्द्रस्तु आदित्योदयार्थं सुमेरुमवपेक्ष्यमाणपरिक्रमत्रये मध्य-वर्तिपरिक्रमसमखण्डितबिम्बरूपस्यस्य खण्डितरूपेणोभयोर्लोकयो सत्वम् । अतएवेन्द्रस्य आखण्डल इति नाम आसमन्तात् खण्डरूपेण लाति गृहीतो भवती-त्याखण्डलः । परिक्रमस्य ऋग्रूपत्व वर्णितम् । तत्सम इति गृहीत्वेन्द्रबोधक विशेषण मन्त्र "ऋचीषम" इति, निरुक्तकारेणोच्यते "[3]ऋचीषम ऋचासम" इति । "स्तवे वज्री असौ इन्द्र ऋचासम" इति । तादृश इन्द्र इहास्मिन् लोके देवलोके सुमेरुरूपे इत्यर्थः ।

---

१. ऋ स १० २२ १ २. ऋ. स. १०:२२:२
३. निरुक्तम् ६·२३·२

यद्यपि अत्र देवलोकादिबोधकं किमपि पदं नास्ति केवललोकाभिप्रायेणे-हेति पदं प्रयुक्तम्। इहेति पदमिदमः सर्वनामतो निष्पन्नं सन्निकृष्टार्थबोधकात्। सन्निकर्षः सर्वत्र भवितुमर्हतीति न लोकविशेषनिर्णयः। केवलं प्रश्ने कुह कुत्र कस्मिन् लोके इति लोकस्य कस्यचन ग्रहणं, तथोत्तरे इहेत्यनेनापरलोकग्रहणस्य प्रतीत्या लोकभेदप्रतीतिः। एवं च प्रश्नविषयो यः कोऽपि लोको भवितुमर्हति एवमुत्तरेऽपि यः कोऽपि लोको विषयो भवेत्।

केवलं प्रश्नप्रतिवचनाभ्यां लोकभेदप्रतीतिः सा यत्र कुत्रापि संभवेत्। तथापि प्रश्ने ऋषीणां क्षय इति वर्णनेनेदं वर्णनं कुमेर्वभिप्राय विज्ञायते। वेदे च सुमेरुस्थानां देवत्वेन कुमेरुस्थानामृषित्वेन वर्णनस्य अग्निः पूर्वेभिर्ऋषिभि-रित्यादिषु प्रतिपादनात्। तत्र च गिरा गुहायां वा इति वर्णनेन सुमेरुप्रदेशे तस्य रात्रिसम्बन्धितायाः प्रतीतेः। न च सान्निध्याद् गुहापि ऋषीणां क्षयगतैव विज्ञा-यत इति वर्णनस्यावसरो यतस्तत्रर्षिक्षये गुहायां चाविकरणे विकल्पाभिप्रायक-वाशब्दग्रहणस्यासंलग्नकतापत्तेः।

एवं चेदं विकल्पार्थकवाशब्दवचनं च क्षयस्य गुहायाश्च वैयधिकरण्य-बोधकम्। एवं च प्रश्नविषयो लोकोऽत्रर्षिलोके उत्तरविषयश्च सुमेरुलोक इति। किञ्चात्रोत्तरे इन्द्रस्य विशेषणं वज्रीति। तच्च साभिप्रायमसुरविनाशायेति। एवं चार्षीणां क्षयव्यधिकरणे गिरौ गुहायां विद्यमानतमोरूपासुरविनाशार्थं तत्। तच्च सुमेरावेव प्रकृते सम्भवतीति सुमेरोरेवोत्तरे ग्रहणम्।

किञ्चात्र न केवलं वज्रीति विशेषणत्वेनोच्यते किन्तु कार्यविशेषे। तच्च कार्यस्तवरूपम्। अर्थात् "स्तवे स्तोत्रे वज्री"ति। स्तोत्रं च देवलोकाभिप्रायेण प्रवर्तते, देवतायास्तत्र प्रतीतेः देवरूपत्वमिन्द्रस्य सुमेरौ स्तुताविति, तत्र वज्रो विनाशकवज्ररूपायुधधरायेति प्रतीत्योत्तरे देवलोकस्यैव ग्रहणम्। ऋचीषम इति विशेषणमपि उदयावसरीयपरिक्रमारूपऋगभिप्रायम्। तत्र मध्यवर्तिपरिक्रमरूपर्क साम्यस्योक्तेरिति। तत्रोच्यते य इन्द्रो मित्र इव जनेषु लोकेष्वसामि असंपूर्णं यशस्तेजश्चक्रे आ समन्तात्।

अयं भावः—तेजसः परिपूर्णत्वं सम्पूर्णबिम्बोदयोत्तरं ततः प्राक् चासंपूर्णं तेजस्तच्च सावित्रकालवर्तिना मित्रेण यथा क्रियते दीयते एवमुदयादवस्थावतेन्द्रे-णापि सम्पूर्णमण्डलस्य तदानीमप्यसत्वात् असामि असम्पूर्णमेव तेजो दीयते। इन्द्र-स्य त्वयं विशेषस्तेन दीयमानं च तेज उभयोर्लोकयोर्यत्रासावुदयन्, यत्र चासावस्त-मयन् स्यात्। अतएव जनेष्वित्यव्यक्तरूपेणोल्लेखः। आ इति पदं च प्रयुक्तम्। मित्रेण तु यत्रोदयस्तत्रैवासम्पूर्णतेजसः प्रदानमिति विशेषः। यशः शब्दस्य च तेजोबोधकत्वम्। अतएव यजुषि यशोऽवरुरुत्समानानां मखस्य देवतानां च प्रयास उक्तः। तत्र मखेन तद्यशो लब्धमित्यादिकमुच्यते।

एवं चात्र प्रश्नेन प्रतिवचनेन च तिरश्चीनरश्मिरूपस्य श्रुतित्वं स्पष्टम्। अतएवेन्द्रस्य दीर्घश्रवस्त्वमिति विशेषणं सूक्ते। महाहस्तीति विशेषणेनापि स एवार्थ उच्यते। यथोच्यते 'आतून इन्द्र क्षुमन्तं चित्रं ग्राभं सगृभाय। महाहस्ती दक्षिणेन[1] इति। चित्रग्राभस्य ग्राह्यस्य धनस्य दक्षिणस्यां दिशि राज्ञो रश्यस्य महता हस्तरूपेण तिरश्चीनेन दक्षिणदिक्स्थले रश्मिना सगृहाण सम्यगानीया-स्मभ्यं प्रयच्छेति तात्पर्यं, तस्य च धनस्य विशेषणमुच्यते क्षुमन्तमिति।

क्षुशब्दस्यान्नबोधकेषु नामसु निघण्टावुक्ते, क्षुमत् अन्नवच्चित्रं वसु सगृहाणेत्युक्ति। उषसा प्रकाशेन प्रतीयमानस्य तमसाऽऽवृतस्य सर्वस्य पदार्थजातस्योपभोग्यस्यान्नत्वेन वचनम्। अतएवोषमो नामसु निघण्टौ पठ्यते वाजिनी वाजिवतीति चेति। एवं च तिरश्चीनरश्मे रश्मीनां वा श्रुतित्वेन ग्रहणम्। तत्प्रतीत्य-वस्थाकानि कर्माणि श्रौतानीत्युच्यन्ते।

श्रौतानां कर्मणो वेद्यामनुष्ठानम्। वेदिश्च सावित्रे काले। सवितुश्च काल उदयात्पूर्ववर्ती यत्र रश्मिसन्दर्शनम्। अतएव मन्त्रेषूच्यन्ते। "ऊर्ध्वं भानुः सविता देवो अश्रेत्"[1] इति। निरुक्ते "यदा द्यौरार्कीर्णरश्मिरपहततमस्का स सावित्रः काल"[2] इति। होतृस्थानतोऽध्वर्युस्थानपर्यन्तत्वं वेदेः। अतएव वेदे "एतावती[3] वै पृथिवी यावती वेदिरित्युच्यते"। तदर्थस्तु पूर्वंप्रतिपादित एव। एवं चैषा श्रुति तिरश्चीनरश्मिरूपा सा पूर्णं उदितबिम्बरूपे नानुभूयत इति तस्याः पुरुषसम्बन्धाभावाभिप्रायेण श्रुतिरपौरुषेयीति वचनम्। स्त्रीशूद्रयोः श्रुत्यविषयत्वोक्तिरपि तादृशश्रुतिरूपतिरश्चीनरश्म्यसम्बन्धाभिप्रायिकेत्युक्तमेवेति दिक्।

## ५. दैवमानुषभेदेन यज्ञद्वैविध्यप्रतिपादनम्

इयं चोक्तरूपा श्रुतिरुभयत्र सुमेरुकुमेर्वोर्भवतीति उभयत्र श्रौतानां कर्मणां सत्वादित्युभयत्र यज्ञरूपश्रौतकर्मप्रवृत्तिः। अतएवोभयविषयज्ञवर्णना वेदे। तत्रैको दैवयज्ञ इति व्यवह्रियते परो मानुषो यज्ञ इति। तदभिप्रायेण "पुरुषं वै देवाः पशुमालभन्त" इत्यादिवर्णनम्। मानुषयज्ञाभिप्रायेण च होतृजपे "सुमत्पद्वग्दे" इति वचनमित्युक्तम्। किञ्च प्रयाजदेवतानां मध्ये दैव्या होतारा इति प्रयाजदेवता वर्ण्यते। तत्र निरुक्ते "प्रयाजदेवताविषये अथ किन्देवताकाः प्रयाजा इत्युपक्षिप्यानेकदेवतात्वमुक्त्वा आग्नेया इति तु स्थितिः."[4] इत्युक्तम्।

मन्त्रे उच्यते[5] "प्रयाजान्मे अनुयाजाश्च केवलानूर्जस्वन्तं हविषो दत्त भागम्' इति आग्नेये वचनमपीहानुकूलम्। एवं सति सर्वाः प्रयाजदेवता अग्नि-

---

१. ऋ. सं. ८.८१.१  २. ऋ. स. ४.१३.२  ३. निरुक्तम् १२.१२.१.
४. श. ब्रा. ५.६.८.२.  ५. निरुक्तम् ८.२१.४.  ६. ऋ. स. १०.५१.७.

रूपा एवेति । तत्र दैव्या होतारावित्यनेन प्रतिपाद्यमानयोर्द्वयोर्होत्रोरप्याग्नेयत्वम् । तथा सति एकेनैव ग्रहणेनोपपत्तौ द्वयोर्ग्रहणमसमञ्जसम् । उक्तरीत्या यज्ञस्य द्वैविध्ये तद्द्विवचनं सार्थकम् । प्रतियज्ञभेदं होतुरपेक्षणात् । तत्र दैव्येति विशेषणेन दवतायागसम्बन्धी दैव्य इति प्रतीतिः ।

देवतायागस्तु द्विविधः देवताकर्तृको यागो देवतोद्देश्यको यागश्च । तत्र देवताकर्तृको यागः सुमेरौ देवतोद्देश्यकश्च यागः सुमेरौ । एकत्र दैव्यो देवताकर्तृकयागसम्बन्धीत्यर्थः । अपरत्र देवतोद्देश्यकयागसम्बन्धीत्यर्थः । सोऽपि दैव्य एवेति विशेषणं सार्थकम् । होतृद्वयाभिप्रायेण द्विवचनमुक्तरीत्या यागद्वयसाधकम् ।

किञ्च वेदे "वेद्या वेदिराध्यते" इति वचनेन "द्वे वेदी भवत" इत्यादिनापि उक्तविधयागद्वयसत्वं प्रतीयते । तत्र शतपथब्राह्मणे उक्तम् । "द्वे वेदी भवतो द्वावेवलोकावित्याहुर्देवलोकश्चैव पितृलोकश्च । उत्तरा न्या भवति दक्षिणान्योत्तरो वै देवलोको दक्षिणः पितृलोक उत्तरयैव देवलोकमवरुन्धे दक्षिणया पितृलोकमिति"[6] । किञ्च आग्नेये मन्त्रे स्पष्टमेवोच्यते । तथाहि मन्त्रः–

यथा यजो होत्रमग्ने पृथिव्या यथा दिवो जातवेदश्चिकित्वान् ।
एवानेन हविषा यक्षि देवान्मनुष्वद्यज्ञं प्रतिरेममद्य ॥

अत्राग्निं प्रत्युच्यते हे अग्ने यथा त्वं पृथिव्या होत्रं पृथिवीसम्बन्धि अर्थात् कुमे' स्थयज्ञे यो मनुयज्ञ इति व्यवह्रियते, होत्रं होतृकर्मायजः कृतवानसि । यथा वा त्वं दिवो होत्रमर्थात् सुमेरुस्थयज्ञे, यो देवयज्ञ इति, अर्थाद्दैवकर्तृके यज्ञे त्वं होत्रमयजः । एवमेवानेन प्रकृतेन हविषा देवान् यक्षि यज मनुष्वदिमं यज्ञमद्यास्मिन्दिने प्रतिर वर्द्धयेति । अत्र भाष्यकृता पृथिव्या दिव इति षष्ठ्यन्तयोरुक्तरीत्या भूलोकद्योलोकाभिप्रायकत्वमगृहीत्वा यज्ञकर्तृत्वेन पृथिवीरूपद्योलोकरूपयजमानबोधकत्वमुक्तम् । एतावतोभयविधो यज्ञोऽत्र प्रतीयते । तत्र होतृत्वं चाग्नेरिति दैव्या होताराविति द्वित्वनिर्देशो दैव्येति विशेषणयोगश्च पूर्वोक्तास्मद्रीत्या सार्थकम् ।

एवं चोभयविधयज्ञानुसारेणोभयत्र श्रुतियोगेन तदीयकर्माणि श्रौतानि भवन्ति । सत्यप्येवं सुमेरुसम्बद्धानां श्रौतत्वेन व्यवहारः, सन्निकृष्टत्वाच्छ्रुतेः प्रत्यक्षाच्चेति । तानीमानि कर्माणि ब्राह्मणादिषु प्रतिपाद्यन्ते । तेषां च देवयज्ञानुकारश्च तत्र तत्र ब्राह्मणे प्रतिपाद्यते । तेषां चेषां मानुषयजमानैरनुष्ठानार्थं

---

१. श. ब्रा. ३:५:१.

श्रुतिमूलकत्वेलभ्यत्वात्तत्प्रतिपादकानां श्रुतित्वेन व्यवहारस्तत् प्रतिपाद्यत्वात्कर्मसु श्रौतत्वम् । तत्प्रतिपादकग्रन्थानामपौरुषेयत्वविषयको विचार पूर्वमुक्त ।

यद्यप्यसावपौरुषेयत्वसाधनप्रकारो मन्त्रब्राह्मणयोरिवापरेषु श्रौतसूत्रादि-ग्रन्थेषु धर्मान्तरीयकुराणबायबलप्रभृतिग्रन्थेषु चोक्तरीत्या वर्णोत्पादपदोत्पादाथ सम्बन्धार्थबोधप्रणाल्या वेदवदेवापौरुषेयत्व प्राप्त तावतापि पुरुषाख्यावशतो न तेषामपौरुषेयत्वम् । आश्वलायन कात्यायन आपस्तम्बमित्यादिना तत्कर्तृत्वस्य तत्रोपलम्भात् । धर्मान्तरीयग्रन्थेष्वपि ईशपुत्रमहम्मदादिषु तत्कर्तृत्वस्य प्रतीतेन तेषामपौरुषेयत्वप्राप्ति ।

एव च कुमेरुस्थश्रुतिसम्बद्धकर्मणामपि श्रौतत्वेऽपि तदीयश्रुतेर्विप्रकृष्टत्वा-त्स्मृतिवशतस्तेषामुपलम्भात्स्मार्तत्वेन व्यवहार । अतएव स्मार्तानामपि कर्मणां श्रौतत्वप्रवाद उपपद्यते । अतएव स्मृत्यधिकरणे वैदिकैर्मन्वादिभि स्मर्यमाण त्वात्तन्मूलभूतश्रुतिप्रत्यक्षत्व तेषामिति वचनमुपपद्यते ।

ये च विदेशीया ग्रीकप्रभृतिदेशीया ये च पारसीकप्रभृतयस्तेषां पुराणादि ग्रन्थेषु उपलभ्यमानानां व्यवहाराणां कुमेरुदेशीयत्ववशत साजात्य सुमेरुदेशीयता विरोधश्चोपलभ्यमान उक्तरीत्योपपद्यते ।

यथा ग्रीकदेशीयपुराणग्रन्थेष उपस ओरायन इत्यस्योपरि प्रेमप्रभृतय कथास्ता सर्वा कुमेरावस्तावसरीयत्वेनोपपद्यन्ते त एव तैमृ मनक्षत्रदर्शनाद्वृष्टि-प्रारम्भदर्शनेन तस्य वर्षाकरार्थकेन इम्ब्रिकर अफोरासुनाम्ना व्यवहार । सुमेरौ तस्य दर्शनवेलायां वृष्टेरप्राप्त्या कुमेरुस्थत्वेनैव तस्योपपत्ति । तद्दर्शन च रात्रि-प्रारम्भे, तदानीं वृष्टिकरत्वस्य कुमेर्वभिप्रायेणैव सम्भव । कुमेरौ रात्रि प्रारम्भ-मनु वृष्टिप्रवृत्तिरिति दवाना माने इति मन्त्रत स्पष्टमिति पूर्वमुक्तम् ।

एव चेमे कुमेरुदेशत एव देशान्तर प्राप्ता भवेयुर्न सुमेरुदेशत । अतएव तेषां केचन व्यवहारा सुमेरुदेशीयव्यवहारै समा अपि भवन्तीति । कुमेरुदेशतो विनिर्गमश्च ब्राह्मणादिषु मनुकथातो विस्पष्ट । तत्रोच्यते, मनो पादावनेज नार्थमपामुपहारे तत्र मत्स्योपलम्भस्तेन मनो स्वरक्षार्थं प्रार्थना रक्षणप्रकारश्च स्वल्पजलाशयक्रमेण महाजलाशयप्राप्त्येति वर्णित ।

तादृशक्रमेण क्रमवृद्धस्य तस्य समुद्रे परित्यागवेलायां तेन मनु प्रति वचन, यथा त्वया मम सरक्षण कृत तथा अहमपि त्वा सरक्षिष्यामि तत्प्रकारोऽपि तत्रोक्त । कालविशेष सामान्येनोद्दिश्यास्मिन्काल ओघ आगन्ता ततस्त्वा तारयिष्यामि, केवल त्वयैका नाव विरच्य तत्र पदार्थानां बीजानां सरक्षण कृत्वाऽ वस्थातव्यमिति । यदा चौघ आगतस्तदानीं मत्स्येनागत्य मनु प्रति उक्त नौका

मदीये शृङ्गे बधानेति ततस्तां बद्धां नौकां गृहीत्वेतस्ततः परिभ्रमन्नसौ हिमवतः पर्वतस्य शृङ्गमाससाद, तत्र तन मनुरुक्तो नौकामिमां वृक्षे बधान क्रमेणौघेऽपगते निवृत्तःस्या आपत्तित इति । मनुना तथानुष्ठित निवृत्तश्चौघापत्तित इति ।

अत्र विचारकाणां भारते प्रसिद्धहिमवतो ग्रहणं हिमवच्छब्देनेति प्रमादद्विचारसंकरः । मनुश्च दक्षिणदेशस्थमेरुशृङ्गे वसन् तत्रौघागमने भुवो दक्षिणपार्श्वीयसर्वोच्चमेरु शृङ्गत उत्तरस्यां दिशि हिमवत्सन्निधिप्राप्तेरसम्भवः । यतः स औघो जलप्रलयः प्रादेशिको न तु सर्वभूव्यापी । अस्यां दशायां प्रादेशिके प्रलये नौकाद्वारा भुवः पार्श्वान्तरवर्तिहिमवत्सदृक्षात्युच्चपर्वतप्राप्तेर्नौकया असम्भवः । तस्मादिद वर्णन भुवो दक्षिणपार्श्वीयस्यंवोच्चस्य हिमवतः पर्वतस्याभिप्रायेण । अतस्तादृशभुवो दक्षिणपार्श्ववृत्तिहिमवत्पर्वतस्यैव शृङ्गं नौकापसर्पणशब्देन व्यवह्रियमाणं स्यात् ।

अवश्यं च मनुर्भुवो दक्षिणपार्श्वीयमेरुशृङ्गे निवसन् यत ऐतरेयब्राह्मणे उच्यमानकथातो विज्ञायते । सा च कथा ग्रीकदेशीयकथास्वपि भवेत् यतो मूलं तस्योभयत्र समम् । ऐतरेये दुहित्रारोहकथायामुच्यते—"रुद्रेण बाणेन विद्धः प्रजापतिरुर्ध्वमुदप्रपतत । तस्य रेतः प्रवर्तमानं मरुतश्च्यावयितुमसमर्था वैश्वानरेणाग्निना प्राच्यावयन् । तत्र प्रथममुद्दीप्तं तदादित्योऽभवत् द्वितीयमुद्दीप्तं भृगुरभवत्तं वरुणो न्यगृह्णात्तस्मात्स भृगुर्वारुणिरिति तद्प्रजापते रेतो दुष्ट मा भूदित्यभिप्रायेण देवैर्मादुषमित्युक्तं तत्परोक्षेण मानुषं संवृत्तमिति देवानां परोक्षप्रियत्वादिति" ।

अत्र प्रजापतेर्दुहित्रुपारोहः पूर्वोक्तरीत्या देवेष्वस्तावसरीयखण्डितबिम्बस्थलो न भवति किन्तु देवेषूदयावसरीयः कुमेरुरूपपार्श्वान्तरेऽस्तावसरीयखण्डितबिम्बस्थलः तदानीमेव तस्य दुहित्रुपारोहत्वम् । अस्तावसरीयायाः सन्ध्यायाः सन्ध्यारूपोपस एव दिवो दुहितृत्वसंभवः । यतः पूर्वमादित्यरूपस्य जनकस्य सत्ता तत. पश्चाज्जायमानाया उषसस्तज्जन्यत्वसंभवः । प्रातःकाले चोषाः पूर्ववर्तिना ततः परस्तादादित्यबिम्बोदयेन तस्यैव जन्यत्वात्पुत्रत्वं पूर्ववर्तिन्या उपसश्च तन्मातृत्वमेव भवेत् ।

दुहित्रुपारोहश्चोच्यते इति अस्तावसरीयत्वेनैव सम्भवति । यद्यपि देवेष्वस्तावसरेऽपि दिवो दुहितृत्वकल्पना सभवति परन्त्वत्र कथायां न सा विवक्षिता । तत्कथानुरोधेन सविधवर्तिनि मृगशिरसि आग्रयणप्रयोगस्यान्यथानुपपत्तेः । स चाग्रेऽयनसम्बन्धादिति तत उदयो वक्तव्यो भवेदुदये च नोषसो दिवो दुहितृत्वव्यवहार इत्यगत्या स भुवो दक्षिणपार्श्वीयमेरुशृङ्गे कुमेरुरूपेऽस्तावसरीयः ।

अस्तावसरे खण्डितबिम्बदर्शनेनोपसा योगं गृहीत्वा सा कल्पना । अतएव तत्र कुमेर्वभिप्रायेण ग्रीकदेशीयपुराणेपु ओरायनरूपस्य सायुधराक्षसस्य कल्पनम् ।

भोरायन् शब्दश्च रौहिणशब्दनो भापिकशब्दप्रथात सञ्जयत इत्युक्त प्राक्।
रौहिणशब्दस्येन्द्रविराधवाधकत्व निघण्टुषु वृनाहिसवरसमानार्थत्वेन वचनादिरभ्युक्त पूर्वम्। एव चास्त्रावसरीया दुहितृपारोहकल्पना तत्सम्बन्धेन प्रजापतिस्तसो देवे. परोक्षण मानुषमित्युक्तस्य मानुषत्वमित्यादिना मनाक्सूच्यते गन्धव म इति। ता च कथा पुरस्कृत्य प्रमादिवर्णना। प्राक्देशीयपुराणादिषु वर्णनात्तया भुवो दक्षिणपार्श्वीयता तत्रस्थमूलस्थानतस्तेषा विनिर्गम इति ज्ञापयन्ति। अन्या अपि तादृश्यस्तत्रत्या कथा भवेयुस्तदीयपुराणग्रन्थेषु।

उक्तकथानिबन्धनहरिणाहरिणीसप्रयोगानुकारेण क्रीडन शर्मण्यपुराणान् अपि कुमेरुशृङ्गसम्बन्धमेव बोधयन्ति तेषाम्, न सुमेरुशृङ्गीयताम्। यत मा द्वादशोभयोर्वत्सरयोर्मध्यवर्तिषु दिनेषु पवित्रत्वेन गृहीतेषु देवा मनुष्यगृहे आगच्छन्ति तेषा प्रीत्यै सति वर्णनत मृगत्रयायाश्च देवेष्वस्तावतरीयत्वस्यासम्भवन कुमेरावस्तावसरीयत्वेन वर्णनतया तेषामप्युक्तरीत्या कुमेरुसम्बन्धित्वस्यैव प्राप्ति। तेषामपि अपरास्तादृश्य. कथा भवेयु। किञ्च दशदिनत्वेनैव सवत्सरमध्यवर्तिदिनाना व्यवहारोऽपि कुमेरसम्बन्धित्व तेषा सूचयति। सुमेरुशृङ्गीयाणा तादृशानि द्वादशदिनानि सवत्सरमध्यवर्तिनीति व्यवहारः।

अतएव दीक्षासु द्वादशदीक्षा वर्णन सगच्छते। कुमेरस्थैस्तु दशैव दिनानि मध्यवर्तीनीति मन्यते स्म। अतएव पूर्वोक्तरीत्या कुमेरुस्थाना श्रौताना क्रियाणा सुमेरुसम्बद्धे. स्मार्तत्वेन वचनम्। स्मार्तासु क्रियासु दशदिनानामेव पवित्रत्वाभिप्रायेण नवरात्रकल्पना, सा चोदयात्वमरेऽस्मात्सरे चेति शारद नवरात्र व नवरात्रमिति स्मार्तमनुस्रियते। न हि तस्य नवरात्रस्य वेदे वर्णना पुराणादिषु तदुपलम्भ स तु स्मार्त इति पूर्वोक्तमेव साधयति।

पारसीकास्तु सर्वात्मना देवविरोधमनुसरन्ति। वेदेषु वत्सरप्रारम्भ पारसीकाना शरदि वत्सरप्रारम्भ., नवरात्रसमारोहस्तु तेषा नवरोजा इत्यनेन प्रसिद्ध एव। शारद चायन सर्वादौ भाद्रामावास्यायामिति आदित्योदयात् पूर्व ते पितृपक्षस्वीकार, सुमेरुस्थैस्तत्रादित्यास्तमयतः पूर्व तत्स्वीकारात्। सुमेरुस्थाना यज्ञोपवीत त्रिवृतिसूत्रात्मक तेषा पटरूप सुमेरुस्थाना स्कन्धावलम्बित पारसीकाना कट्यालम्बितमिति। तस्य वर्णनतदीयग्रन्थे पूर्वर्णिमिति विशेषणात्प्राक्शब्दसमानार्थत्वेनेति। सर्व कुमेर्वभिप्रायकत्वेनैव सभवति।

एव चाक्तवर्णनत: सर्व इमे कुमेरुसम्बन्धिनस्तत्र हिमप्रलये निर्गता देशान्तर प्राप्ता न तु सुमेरुस्तेषा विनिर्गमने देशान्तरप्राप्तिरिति, नेमे भारतीयानामार्याणा पूर्वपुरुषा इति। तेषा पुराणग्रन्थेषु मन्त्रसदृक्ष वर्णन दृश्यमान सुमेरुकुमेर्वो. समानपरिस्थितिनिबन्धन तत्। नत्वेकमूलस्थानिकत्वनिबन्धनम्। अतएव

तैः सोमस्यैव वर्णनात्तेषां पुराणग्रन्थेषु, सोमश्च कुमेरुस्थ आदित्य इति पुरस्तात्प्रतिपादितम् ।

यत्तु उपनयने वटोः प्रजापतिसारूप्येण कमण्डलुमेखलादिधारणं तत्सर्वसमार्तमुक्तरीत्या श्रौतमेवेति तद्दृशतो न वैदिकानामेकत्र स्थितिकल्पनसूचनम् । यत्तु वैदिकेषु सुसूक्ष्मगणितसाध्यविशिष्टज्ञानाभाव इति यत्तु उत्तरायण दक्षिणायनयोर्विप्रकर्षदेशभागगणनस्य त्रिष्णोश्चतुर्णवतिभागानामुत्तरदक्षिणसम्बन्धितयानुरूपप्रतिकूलभावेन वेपनवचनात्, अग्नेस्त्रयस्त्रिंशदधिकशतत्रयाधिकसहस्रत्रयमितदेवैः, सपर्यावचनात् दैनन्दिनवृत्ते आदित्येन गन्तव्यानां वृत्तगतानां नवनवत्यधिकषष्टिसहस्रभागानां संख्यानात्, वात्सरिकसंपातिकगतेः पञ्चसु नक्षत्रेषु नियमने संपाद्यभागानां स्थूलभावेनाष्टोत्तरशतभागरूपतया सूक्ष्ममानेन सप्ताधिकशतभागरूपेण संख्यानात्, तद्दृशतः संपातस्यासर्ववृत्तपरिभ्रमस्य नियमनात्, तदनुसारेणाक्षस्थानानां तावत्संख्याकांशपर्यन्तं परिचलनादिबोधनाद्विपरीतमेव ।

यत्तु प्रथमावस्थायां मन्त्रादिभागस्यासंपन्नत्वेन तदानीं स्वल्पवाक्यानां कथाभागस्य च सम्प्रदायतः प्राप्तिः पश्चात्तदनुरोधेन मन्त्रप्रादुर्भावेन मन्त्रेषु तादृशपूर्वोक्तविशेषाणां सत्वेऽपि पूर्वोक्तस्वल्पवाक्यादिसम्प्रदायावस्थाकाले तादृशवैशिष्ट्याविज्ञानमिति कल्पनं तदपि तादृशस्वल्पवाक्येष्वपि "त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा त्रयश्च त्रिंशच्च[1]' । तावन्तोऽभिपाचस्तावन्तो रातिपाचस्तावतीग्नास्तावती: पत्नीः" । तावन्त उदरणे तावन्तो निवेशने इत्यनेन देवसंख्याबोधनेनोत्तरायणादीनां बोधकविनिगमदर्शनेन विरुद्धमिति ।

## ६. वेदोक्तमहत्कालपरिमाणानां सोपपत्तिकं विवेचनम्

वेदे कालपरिमाणानि बहुशो निर्दिश्यन्ते, अयनानि निर्दिश्यन्ते ऋतवो बोध्यन्ते मासा उच्यन्ते पक्षोल्लेखो दिनरात्र्यारपि निर्देशः । तत्र कालपरिमाणेषु संवत्सररूपमेव कालपरिमाणं सर्वतो महदुपयुक्तम् । तदपेक्षया महतां युगकल्पादीनां प्रमाणानां वेदे क्वचनैवोल्लेखः । यत्रोल्लेखस्तत्र सन्देहाक्रान्तिः । यथैतरेये ब्राह्मणे "कलिः शयानो भवति सञ्जिहानस्तु द्वापरः । उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरन्[2]" इत्यनेन कृतादिनामोल्लेखः स इदानीं लोकप्रसिद्धकालपरिमाणाभिप्रायक इति सन्देहास्पदम् । यत्तु ओषधिसूक्ते "त्रियुगमिति" पदस्य संवत्सरापेक्षया महतः कालपरिमाणस्य बोधकत्वमिति वचः । तन्न, तत्रत्यस्य उक्तपदस्य कालबोधकत्वाभावेन महाकालाबोधकत्वात् । उक्तं पदं द्वौ त्रय संख्याद्वयबोधनाय प्रवृत्तं, तेनावयवद्वारा पञ्चसंख्याबोधनमिति पुरस्तात्प्रतिपादितम् ।

---

१. निविदाध्यायः ७
२. ऐ. ब्रा. ७:३:३

आ धाता गच्छानुत्तरा युगानीत्यत्रापि उत्तरदिग्वर्तीनि दिनरात्र्यात्मक-युगानि युगपदस्यार्थो न तु संवत्सराधिककालबोधकता तस्य । भाष्यकारेणोत्तरा युगानीत्यस्य तादृशपरिमाणबोधकताक्ता, सा परं विरुद्धेति अन्यत्र प्रपञ्चः। निरुक्तकारेण आगमिष्यन्ति तान्युत्तरा युगानि इत्यव्यक्तमेवोक्तम्। तट्टीकाकृता दुर्गाचार्येण तत्रोक्तम् "उत्तराणि युगानि आगमिष्यन्ति तेऽपि काला. साम्प्रतं न वर्तन्त" इत्याभिप्राय.। कलियुगान्ते तादृश संकर । न चेद कलियुग वर्तत इत्युक्त ततो युगपदस्य तादृशमहापरिमाणकालबोधकत्वमित्यत्र सन्देह. ।

एवमेव युगशब्दयुक्तेष्वन्येषु स्थलेषु । यत्र परं संवत्सरापेक्षयाधिक· कालो विवक्ष्यते तत्र प्रायेण संवत्सरावृत्त्यैव तद्बाधो यथा विश्वसृजा सत्र सहस्रसंवत्सर-मितिपदेन बोध्यते । तत्र संवत्सराणा सहस्रवारमावृत्ति.। मीमासकैरेतादृश-स्थलेषु संवत्सरशब्दस्य संवत्सरतो न्यूनकालबोधकत्वस्य तादृशस्थलेषु सिद्धान्त-नम्। तथा सति तस्यैव कालस्य तावद्वारं तत्रावृत्तिर्बोधिता स्यात् एवमेवे-तरत्रापि ।

एवं च संवत्सरापेक्षया अर्वाक्तनकालपरिमाणाना बोधस्तु बहुश ।तत्रा-यने निर्दिश्येते ऋतवो निर्दिश्यन्ते उच्यन्ते पक्षोल्लेख दिनरात्र्योरुल्लेख क्षणादि-कालस्याप्युल्लेख.। यद्यपि तैत्तिरीयसंहितायां कृतत्रेताद्वापरशब्दा उच्यन्ते परन्तु तेषां लोकप्रसिद्धयुगपरत्वे सन्दिग्धता । यतो लोके तानि युगानि कृतत्रेताद्वापर-कलिशब्दैश्चत्वारि भवन्ति । अत्र तु कृतादिषु कृतत्रेताद्वापरास्कन्दाभिभूरूप पञ्चक निर्दिश्यते। नहि युगेषु पञ्चक प्रसिद्धम् ।

एतावता तत्र युगपरनिर्देशस्य सन्दिग्धतैव । एषैव गतिर्वाजसनेयसंहिता-गतवाक्यस्य । तत्रापि चतुर्थ आस्कन्द उच्यते इति तैत्तिरीयवाक्याभिमतस्य तत्र सम्मतत्वेनोक्तदोषतादवस्थ्यात् । तैत्तिरीयब्राह्मणे परं कलिचतुर्थाना निर्देशः क्रियते । तत्रापि वाजसनेयसंहितावत्कृताद्युद्देशेन पुरुषविशेषरूपा मानुषा. पशवो निर्दिश्यन्ते ।

तत्रास्कन्दस्य यः पशुः सभास्थाणुरूपस्तस्यैव कलये निर्देशेन कल्यास्कन्द-योरभिन्नता प्रतीयते । तथा सत्यास्कन्दोत्तरवर्तिनोऽभिभूरित्यस्यापि विवक्षणे चतुष्ट्वव्याघातेन कृतादिशब्दाना प्रसिद्धयुगपरत्वस्य सन्देहात् । तथाऽग्निष्टोमे ये वै चत्वार स्तोमा· कृत तद् । ये पञ्च कलिः स इत्यादयो निर्देशा अपि व्याख्याता ।

७. वेदानुक्तसप्ताहादिकालकल्पनानां सप्रमाणं प्रतिपादनम्

एवं सप्ताहस्य तत्सम्बन्धिसप्ताना दिनाना तन्नाम्ना चानुल्लेखः । एवं सतीय सप्ताहादिकल्पना किन्निबन्धना किन्निमित्तश्च तत्र दिनक्रमस्तन्नाम्ना च

क्रम इति। किंहेतुकश्च स इति विचारणम्। तत्र प्रथमत एवं विचारणीयं किमिति सप्ताहरूपं परिमाणं प्रवर्तते। मासपूरणायेति वचस्तु न शोभनम्। यतस्तेन मासानां सम्यक् पूरणाभावात्। मासास्त्रिंशद्दिनैः प्रवर्तन्ते, तत्र सप्ताहस्य चतुर्ग्रहणे मासदिनसंख्यान्यूनता, पञ्चवारं ग्रहणे मासे दिनसंख्याधिक्यापातः। ततश्चेदं सप्ताहरूपं प्रमाणं न मासपूरणायोपयोगि। यथाकथंचन न्यूनत्वेनाधिक्येन वा पूरणोपयोगित्ववचनं चेत् किमिति सप्ताहरूपमेव प्रमाणमादरणीय नाऽष्टाहादिरूपं प्रत्युत षडहप्रमाणस्यादरणे तु मासः सम्यक् पूर्यतेति तदेव किमिति नाश्रितमिति सन्देहस्य दुरुत्तरत्वमेव स्यात्।

अथ यदि दिननामवशात इद प्रमाणं ग्रहापेक्षम्, सूर्यादयश्च ग्रहत्वेन प्रसिद्धास्तन्नामभिर्ग्रहनामभिर्दिनव्यवहारात्, दिनानां च माससाधकत्वान्मासपूरकता तन्मानस्य नत्वष्टाहादीनामिति। तदपि न युक्तम्। ग्रहापेक्षया मासपूरकत्वेनापेक्षणे ग्रहाणां नवत्वप्रसिद्ध्या तदपेक्षस्य नवाहमानस्यैव तादृशत्वेन स्वीकारस्योचितत्वात्।

अथ यद्युत्तरयो राहुकेत्वोर्ग्रहयोरदृश्यत्वेन तौ परित्यज्यावशिष्टाभिप्रायं सप्ताहकल्पनमिति तदपि यथा कथंचनागतिकगतिपरम्। यतो नामप्रदाने दृश्यत्वादृश्यत्वयोरकिञ्चित्करत्वात्। किञ्च ग्रहापेक्षया सप्ताहमानकल्पने तत्रत्यदिनानां नामपरिकल्पने ग्रहेष्वसन्तं क्रमं परिकल्प्यं दिनक्रमः कल्पितः स्यात्। न हि ग्रहाणां स्वरूपतः कोऽपि क्रमोऽस्ति। यदि आदित्यमण्डलस्यासमन्ताद्भ्रमणकक्षानुसारेण कक्षागत क्रमं ग्रहेष्वारोप्य ग्रहक्रम कल्पनेति तथा सत्यादित्यस्य भ्रमणकक्षावधित्वेन कक्षाभावात्कक्षाक्रमाभावेन तत्र तन्नाम्नो क्रमिकं ग्रहणमापद्येत।

यदि भ्रमतां ग्रहाणां पृथिव्यभिप्रायेण कक्षाक्रमं गृहीत्वा ग्रहेषु क्रमकल्पनेति चेत्तदपि न, तत्र पृथिवीमभिप्रेत्य कक्षाः चन्द्रबुधशुक्ररविमंगलगुरुशनीनां कक्षाः क्रमिका भवन्तीति सोमादिक्रमेण वारनामकल्पनापेक्षणीया स्यात्। दृश्यन्ते तु तानि नामानि क्रमान्तरयुक्तानि। तस्मात्सप्ताहे न ग्रहापेक्षत्वं, न तत्कक्षाक्रमनिबन्धनस्तत्रत्यदिनक्रम इति मासपूरकत्वविनिगमनाविरहः सप्ताहमाने इति।

यत्तु दिनस्य चतुर्विंशतिभागान् प्रकल्प्य प्रतिभागं होराशब्देन व्यवहारः। होराणामधिपतयो ग्रहाः क्रमेण कल्प्यन्ते। दिने होराश्चतुर्विंशतिरिति दण्डकलितन्यायेनावृत्या ग्रहसम्बन्धोऽधिपतित्वेनेति ग्रहाणां त्रिरावृत्या एकविंशतिहोरासम्बन्धे जाते होरात्रयमवशिष्यते। तत्र चतुर्थ्या आवृत्याः प्रारम्भे प्रथमग्रहत्रितयस्यावशिष्टहोरासम्बन्धे यश्चतुर्थो ग्रहः क्रमिकः स परवर्तिदिनीयप्रथमहोरासम्बद्धो भवति।

अनेन क्रमेण प्रथमहोराधिपतिस्तद्दिनाधिपतिरित्येव क्रमेण ग्रहाणा होराधिपतित्वनिबन्धनो दिननामक्रम इति । तदपि न सम्यक् यतो ग्रहेषु प्रथमत क्रमसत्त्वे तदनुरोधेनावृत्त्या दिनप्रथमहोराधिपतित्वनिबन्धना दिननामप्रकल्पना भवेत् । तस्मिश्चासति तत्कल्पनायोगाभावात् ।

अथ यदि पूर्वोक्त भुवमपेक्ष्य कथाक्रम ग्रहेष्वारोप्योक्तरीत्या होराधिपति-ज्ञानेन वारनामक्रम इति,भवति च शनिकक्षामारभ्य कक्षाक्रमग्रहणेन वारनामक्रम इति तदपि न। कक्षानुरोधी क्रम शनिकक्षामारभ्य ग्रहीतव्यो नान्यकक्षामारभ्ये-त्यत्र विनिगमकाभावात्। प्रत्युत सन्निकृष्टत्वादुपस्थितचन्द्रकक्षानुरोधेन क्रम-ग्रहण रविशनिशुक्रगुरुबुधमगलचन्द्रमसा नामभिर्वारक्रम आपद्येत । न हि विदूर-वर्तिशनिकक्षामारभ्य कक्षाक्रमनिबन्धनैवाधिपकल्पना, न सविधवर्तिचन्द्रम कक्षानुरोधेनेत्यत्र किमपि विनिगमकम् ।

यद्यपि सूर्यसिद्धान्ते मन्दादध. क्रमेण स्युश्चतुर्था दिवसाधिपा. । होरेशा सूर्यतनयादधोऽध क्रमशस्तथा इति प्रतिपादितम् । तथापि होरारूपकालमानस्या-प्रसिद्धया तदीयाधिपतिवशत उक्तक्रमस्य दिननाम्ना सूर्यसिद्धान्तानुसारेण यथा-कथचन सम्मतत्वेऽपि ग्रहाभिप्रायेणैव क्रमो दिननाम्ना दिनाना चेत्यत्र बलवत्तर-प्रमाणाभाव. । अतएव दीक्षितनामकैर्ज्योतिर्विद्भिरेतस्य क्रमस्यैतन्निबन्धन-त्वमस्वीकृत्येमानि नामानि क्रमश्चार्येषु अन्येषा सकाशत प्राप्त इति प्रतिपादितम्, खाडायनाना (KHALIAN) स क्रम इति ।

होराधिपाश्च शनिमारभ्यैव तै कुत स्वीकृता इति न विज्ञायत इत्युक्तम् । एव च सप्ताहकालमानस्वीकारस्तन्नामानि च किंनिमित्तानीत्यविज्ञातमेव । किञ्च शनिमारभ्योक्तरीत्या होराधिपकल्पने सप्ताहे प्रथमदिनत्व शनेरेवोचितम् । यत स प्रथमदिनप्रारम्भीयहोराधिप. । एव प्रथमत्व शनिवारस्य, तत उक्तरीत्या क्रमिका रविप्रभृतयो वारा स्यु । परन्तु वारक्रमे रविमारभ्यैव सप्ताहगणना प्रसिद्धा सर्वेषाम् । एव सति पूर्वप्राप्तशन्यादिगणनाया किन्निमित्त परित्याग इत्यस्याप्युचितोत्तरत्वाभाव । एवं सतीय सप्ताहकल्पना सप्ताहे दिनक्रमकल्पना दिनाना नामानि च ग्रहातिरिक्तनिबन्धनानीति तद्विषये निमित्तमन्वेषणीयमेव ।

तच्च निमित्त वारेति नामतो विज्ञायते । वारशब्दश्च मण्डलाकारावृत्तिनिब-न्धन । यद मण्डलाकारावृत्ति रिशब्दतो विज्ञायते वारमव्ययम्, परिवाराण्य-व्यया,परिवारेभिरित्यादौ बहुश उपलभ्यते । तदावृत्तिनिबन्धनश्च वृधातोर्वरणा-र्थाद्वारशब्द । सा च मण्डलाकारावृत्तिरादित्यस्य । अतएव परिवारेभिरर्पतीति वारेभिर्गमनमादित्याभिप्रायेणोच्यमान सगच्छते । एव च सुमेरुकुमेर्वोश्चादित्या-दीना प्रदक्षिणाप्रदक्षिणमण्डलाकारावृत्तिपरो वारशब्द । न हि तत्र तादृश्या

वृत्या दिनरात्रात्मकवासराभिधायको वारशब्दःसम्भवति । तत्रोदितस्यादित्यस्या-नेकावृत्तिपर्यन्तं सातत्येनानस्तमितभावेन दर्शनात् ।

अदर्शनेऽपि तादृशीनामावृत्तीनां यावद्रात्रिप्रवृत्या दिनवासरादिशब्दानां तत्र वत्सरपरत्वम् । विषुववृत्तस्थजनदृष्ट्या तत्र सूर्यदर्शनान्वितकालस्य तददर्शना-न्वितकालस्य मासषट्कशब्देन व्यवहार इति तत्र षाण्मासिकं दिनं षाण्मासिकी रात्रिरिति व्यवहारः । तत्र च सुमेरुकुमेर्वोः प्रतिवारं दिवसकल्पनाया अभावः । एवं च तत्र प्रवर्तमानानां वाराणामुक्तविधावृत्यात्मकानां परस्परतो व्यावृत्तये संख्याभिर्व्यवहारो वेदे । यथा चत्वारिंश्यां शरद्यन्वविन्दत्, चत्वारिंशद्शरयस्य शोणा इत्यादौ ।

एवं संख्याभिर्वारव्यवहरणे यावदादित्यदर्शनं यावच्च तददर्शनमेकाशीत्य-धिकद्वयशीत्यधिकत्र्यशीत्यधिकशतपर्यन्तं वा यावदुभयं चतुः षष्ट्यधिकपञ्च-षष्ट्यधिकशतत्रयपर्यन्तसंख्याकल्पनं क्लेशसाध्यम् । मध्ये ऋतुकल्पना यावत्तु षष्टिसंख्याया आदित्यस्यादर्शने तमोमयकाले विंशत्यधिकशतपर्यन्तं संख्यानां कल्पनेऽपि क्लेशो दुर्वार एव । अत एवाक्लेशेन यावद्वत्सरं गणनमुकरा सप्ताह-कल्पना वत्सरोपकारिणी ।

एवं सति तस्याः साक्षाद्वत्सरेणैव सम्बन्धो न मासेनेति तेन मासपूर्तौ वैषम्यदोषस्याप्राप्तिः । एवं रीत्या नापरापराष्टाहादिकल्पनानामप्यवसरः । यतस्तैर्मानैः कल्पितैरपि संवत्सरेण विषमसम्बन्धापातात् । यथाष्टाहनवाहमान-योश्चतुष्षष्ट्यधिकशतत्रयावृत्यात्मकं संवत्सरेण साकं न समः सम्बन्धः संभवति । अष्टाहमानस्य पञ्चचत्वारिंशद्वारं संवत्सरे आवर्तनेऽपि न संवत्सरपूर्तिः, पर-स्तादावृत्तिचतुष्टयस्यावशेषात् तस्यासंग्रहापत्तिः ।

उक्तमानस्य षट्चत्वारिंशावृत्तिकल्पने वत्सरान्तरीयावृत्तिचतुष्टयग्रहणा-पत्तेरिति तस्य संवत्सरेण विषमः सम्बन्धः । नवाहमानस्याप्येवैव गतिः । तस्य मानस्य चत्वारिंशद्वारमावृत्या वत्सरस्य षष्ट्यधिकशतत्रयावृत्तिसंग्रहेऽपि परत्र-र्तिनीनां चतसृणामावृत्तीनामसंग्रहः । तदर्थमेकचत्वारिंश्यास्तन्मानस्यावृत्तेः प्रार-म्भे वत्सरान्तरीयावृत्तिसंग्रहापात इति विषमः सम्बन्धः संवत्सरेण नवाहात्मकता तन्मानस्येति तत्परित्यागः । सप्ताहमानस्य तु द्विपञ्चाशदावृत्या सांवत्सरिकच्युतः षष्ट्यधिकशतत्रयात्मकानां सर्वासामावृत्तीनां संग्रहेण तदेव मानं संवत्सरपूरक-त्वेन सुकरत्वेनादरणीयं भवेत् ।

तथा चेदं मानं वत्सरपूरकं न मासपूरकम् । तत्र त्रिंशद्दिनात्मकमासकल्प-नाया अभावात् । एवं चेदं मानं सप्तभिर्वारैर्व्यवह्रियमाणं संवत्सरपूरकं वारस-म्बन्धादिति । तेषां चैषां सप्तानां वाराणामुक्तमानावयवत्वेन गृह्यमाणानां पर-

स्परतो व्यावृत्त्यर्थं नामकल्पने तत्रत्यं कञ्चन विशेषं गृहीत्वैव तत्कल्पनमुचितम् । तादृशास्तत्रत्या विशेषा वारनामभिर्बोध्यन्ते, तेषां परस्परतो व्यावृत्तिश्च प्रतिपाद्यते ।

तथाहि प्रथमो वारः सर्वत प्रकृष्टप्रकाशादित्यनाम्ना व्यवह्रियते । स चादित्य. सुमेरौ सूनुशब्देन व्यवहृतो वेदे इति तस्य तन्नाम्ना व्यवहार । पाश्चात्येष्वपि प्रयमेव सूनुशब्दो विकारमाप्तः सन् (SUN) शब्देन व्यवहृत प्रथमवारनाम्ना । प्रतएव समानेऽप्युच्चारणे (सुनु SON, SUN) शब्दयोरर्थाभिप्रायेणाक्षरविन्यासो विभिन्नो भवति । तथा च मुख्य सूनुत्वमादित्यस्यैवेति तद्बोधनाभिप्रायके सूनुशब्दे उकारसमरूपत्वेन "U" इत्यस्याक्षरस्य विन्यासे स्थिति., उकारस्य विकाररूपतया "O" इत्यक्षरस्य मानुषकपुत्रबोधके सूनुशब्दे म्राश्रयणम् ।

एव च तेषा व्यवहारतोऽप्युत्तरदिग्गतस्य सुमेरस्यस्यादित्यस्याभिप्रायेण प्रथमावृत्तिस्तदीयनाम्ना व्यवह्रियते इति । स चासौ सप्ताहमाने सुमेरुगतप्रकृष्टप्रकाशादित्यनाम्ना व्यवहृत इति । यथा सुमेरौ प्रकृष्टप्रकाशादित्यनाम्ना व्यवहृत प्रथमवार., एव सप्ताहे द्वितीयवारनाम सुमेरुगतप्रकृष्टप्रकाशादित्यनाम्ना व्यवह्रियते । कुमेरौ चादित्य सामशब्देन व्यवह्रियते । प्रतएव तस्य शतपथब्राह्मणे सोमशब्दबोध्यत्वमुच्यमान सगच्छते । तत्रोच्यते "सोमो वै वाजस्तस्य चन्द्रमास्तृतीय योऽय पवते स तृतीयमिति" । अत्राऽय शब्देनादित्यस्य ग्रहणम् । एव च कुमेरुस्थ आदित्यः सोमशब्देन व्यवह्रियते इति सप्ताहे द्वितीयवारनामत्वेन तदीय नाम व्यवहृतम् ।

आदित्यस्यैकस्य सतोऽपि धर्मभेदेन तद्भेद मत्वा भिन्नत्वेन व्यवह्रियते । धर्मभेदश्च सुमेरावेतस्य पूर्वस्यामुदयः पश्चादस्तमय प्रदक्षिण परिक्रम इति । एव तस्य तत्रोपरिष्टादूर्ध्वन्दिशमभिप्रेत्यारोहश्च भवति, कुमरावेतस्य विपरीतभावः । तत्र तस्य पश्चिमायामुदयः पूर्वस्यामस्तमथो प्रदक्षिणपरिभ्रम. । यद्वशत आदित्यादेर्वामत्वेन व्यवहार । यथा अस्य वामस्येत्यादौ उपसमभिप्रेत्यापि तथा व्यवहारो यथा सह वामेन न उप इत्यादौ । यदभिप्रायेणादित्यप्रभृतीना प्राञ्च यज्ञमकृणुत प्राची उपा पूर्वमिरित्यादौ प्राङ्पूर्वप्रथमादिशब्दैर्व्यवहारः ।

प्रतएव पारसीकाना "प्रते मज्दा श्रो वरन् ऐव्य श्रो घनेम्" इत्यस्मिन पूर्वेणिमिति विशेषणमुपपद्यते । पूर्वेणिमित्येतस्य प्राक्शब्दसमानार्थतामविज्ञाय तद्पदस्यार्थो न विज्ञायत इति केनचनोक्तम् । एव दक्षिणस्याश्च दिशोऽधोवर्तित्वेन स आदित्यस्तत्रावारोहन् भवति । प्रत एवैतरेये दक्षिणदिग्गतस्य तस्याधोऽधः पातोऽधिक. स्यादिति देवाना भीतिरत्रता ते देवा आदित्यस्य अध. पातादबिभयुरिति ।

एवं धर्मभेदेन भिन्नो यमादित्यस्तत एवोत्पन्न इति सोमनाम्ना व्यवह्रियते । कुमेरुस्थस्य तस्य मनुनाम्नापि व्यवहारो वेदे । तदभिप्रायेण पाश्चात्येषु मनुशब्देन द्वितीयो वारो व्यवह्रियते । तत्रापि शब्दे सूनुशब्दवदुकारभ्रंशेनाकारस्योकारभावे (MON) इति द्वितीयवारनामव्यवहारः ।

तृतीयवारे च सुमेरावादित्यापेक्षया न्यूनदीप्तिकत्वेन इतरापेक्ष्याविक्येन भासमानाया उषसो नाम्ना व्यपदेशः । उषसश्च मंगलेति नाम सुमंगलीरियं वधूरित्यादौ व्यक्तम् । किञ्चैतरेये सोमयागे प्रायणीयेष्टावादित्या देवत्वकथनार्थमर्थवाद उक्तस्तत्र देवानां दिग्व्यामोहे तैरदितिर्दिग्विज्ञानाय प्राथिता तयोक्तःमयैव प्राचींदिशं विजानाथ इति । तस्या देवत्वं नादितिनाम्नोक्तं किन्तु पथ्यास्वस्ति नाम्ना । तेन नाम्ना देवताभेदकल्पनाव्यावृत्यर्थमेपैदितिः पथ्या इत्यभिप्रायेण आदित्यःप्रायणीय इति यागस्यादितिदवताकत्वं प्रतिपादितम् ।

सा चोषा इति सत्र परवर्तिना पथ्यां ह्युषोऽनुसञ्चरति इति वर्णनेन विज्ञायते । तत्रैतच्छब्देनादित्यो गृह्यते, तस्य पथ्यानुसारिता तत्रोच्यते, व्यक्ता चादित्यस्योषोऽनुसारितेति पथ्याशब्देनोषा एव गृह्यते । सा च तत्र यागे स्वस्तिशब्देन विशेष्यते पथ्या स्वस्तिरिति ।

स्वस्तिशब्दस्य मंगलार्थत्वेन मंगलार्थत्वेनोषा व्यवह्रियते इति तृतीयवारस्तन्नाम्ना व्यवह्रियते । इयं कल्पना पाश्चात्येषु तृतीयवारनाम्ना व्यक्ततरा । तेषु तृतीयवारनाम न मंगलेति किन्तु (TUES) त्युस् इति । यच्च तेषु तन्नाम्नो मूलप्रतिपादनावसरे द्यु शब्देन व्यवहृतं तद्भाषामूलभाषामिति तदीयकोशतो विज्ञायते । द्यु शब्दो भुस् शब्दो वा भाषाविकारप्रणाल्योषसो बोधक इति । ततश्च तृतीयवारनाम उषसो मंगलनामाभिप्रायं, तदेव तैरपि (TUES) शब्देन व्यवह्रियत इति तृतीयवारनाम उषसोऽभिप्रायकमिति चतुर्थवारनामतोऽपि प्रमीयते । तदुत्तरत्र प्रतिपादयिष्यते ।

चतुर्थ वारनाम कुमेरुगताया उषसो नामाभिप्रायेण । तत्रत्योदयादिकालिकी सन्ध्या नोषोनाम्ना व्यवह्रियते वेदनशब्देन तत्र तस्या व्यवहारः । वेदे विदथवेदनशब्दैस्तद्व्यवहारो विस्पष्टतरः । वेदनशब्दस्थधातोर्विद् इत्यस्य बुधधातोश्च समानार्थत्वेन बुधशब्देन चतुर्थो वारो व्यवह्रियते । एवं च यथा सुमेरुस्था सन्ध्या वोषा वा मंगलेति तृतीयवारनाम्ना व्यवहृता तथा चतुर्थवारनाम्ना कुमेरुगतसन्ध्या समाननाम्ना बुधेत्यनेन तस्या व्यपदेशः ।

बुधस्य सोमपुत्रत्वव्यवहारः प्रसिद्धः पुराणेषु । सन्ध्यायाश्च स्वतः स्त्रीत्वाभावेनोपाधिवशतःस्त्रीत्वस्येव पुंस्त्वेनापि व्यवहार उपाधितो भवति । अतएव तत्र पुंस्त्वेन ग्रहणेन पुत्रत्वव्यवहारः । सोमश्चादित्यस्तत उषस उत्पत्ति-

मुपाधिवशत स्त्रीत्वेन तस्या यथा दिवो दुहितृत्वेन व्यवहारः सुमेरावभिप्रदन एव कुमेरो सोमरूपादित्यसकाशत उत्पत्तिमत्तत्मान्त्यस्य तेजसः पुस्त्वेन ग्रहे तत्पुत्रत्वेन व्यवह्रियते सोमपुत्रो बुध कुमेरुवर्ति सान्ध्य तेजस्तस्याप्यादित्यापेक्षया न्यूनदीप्तित्वेनेतरापेक्षयाधिकदीप्तित्वेन तच्चतुर्थवारनाम्ना व्यवह्रियते ।

एव च यथा प्रकृष्टप्रकाशयोरुभयलोकाभिप्रायेण सूर्यचन्द्रनामाभ्या व्यवहार एवमुभयलोकाभिप्रायेणोपाबोधकनामाभ्यामेवतृतीयचतुर्थवारन मव्यवहार । तदिद कुमेरौ बुधो वेदननाम्न व्यवह्रियते इति पाश्चात्यचतुर्थवारनामतो व्यक्तम् । तेषा तद्वारनाम (WEDNES) इति । तच्च वेदन शब्दतो निष्पन्न मिति भाषातो भाषान्तरगमने शब्दाना विकारनियमाभिप्रायेण विज्ञायते । वेदनशब्दश्चोक्तरीत्यापानामति तत्समानरूपमिदमपि उपानामव भवितुमर्हति । तत्र प्राचीनसारूप्यपरिपालनाभिप्रायेण तन्नामविकृतडकारयुक्त विन्यस्त (WEDNES) इति, उच्चारण पुनर्डकारपरित्यागेनोच्चारण सौकर्यमूलक तेषाम् ।

तदिद डकारानुसरण प्राचीनपरिपाट्यविस्मरणाभिप्रायक यथा (NIGHT) नाईडिति रात्रिबोधके नामनि नक्तशब्दस्यानुवृत्तिबाधनाभिप्रायेणानुच्चारित तं क्काराधिप्रायेण (GH) इत्यस्यानुवर्तन नोच्चारण । एव सा सज्ञा शब्दापभ्रंशाभिप्रायेण (S GHON) साइन इत्यत्र GH] इत्यस्यानुसरण लेखने, उच्चारणे सौकर्यानुसारेण परित्याग । एव प्रकृतेऽपि चतुर्थवारनाम्न उपारभिप्रायको उकारस्तैरनुसृयत तद्वशत इद नाम वेदनसमानार्थकमिति भवति ।

एव च वेदनशब्देन यथा कुमेरुगतसान्ध्यतेजोऽभिप्रायेण चतुर्थवारनामोक्तमेव तृतीयवारनाम्नापि सुमेरुगता सन्ध्यैव मगलनाम्ना व्यवह्रियत इति । पुस्त्व चोपाधिकमित्युक्तमेव । तत पञ्चमवारनाम बृहस्पतिरिति सुमेरुगतस्योपोऽपेक्षया न्यूनस्यतरापेक्षया विशिष्टस्य तेजोविशेषस्यापेक्षया । तच्च बृहस्पतित्व तेजस आदित्यापसोरपेक्षयानिरिक्तस्य ।

तद्वतमैतरेयब्राह्मणे प्रजापतिकथायाम् । तत्र प्रजापतिना दुहितृगमनापराधकरणाद्देवं रुद्रमुत्पाद्यतद्द्वारेण तस्य बाधे कारित स प्रजापतिरूर्ध्वमुत्प्लुतस्तदीय धावमान सरस्पना गत रेतस्तजोरूप तस्य देवैर्वैश्वानराग्निसाहित्येनोद्दीपने प्रथममुद्दीप्त आदित्यो द्वितीयमुद्दीप्तो भृगुर्य चाङ्गारादयस्त अगिर आदयोऽभवन् । यच्च शान्त पुनरदीदेत् तस्य स बृहस्पतिरभवदित्युक्तिः, तदुक्त तत्र यदङ्गारा पुनरवशान्ता उददीप्यन्त तत्सर्वं बृहस्पतिरभवदिति ।

एव चादित्योपसोरभावकाले भासमान तेजो बृहस्पतिरिति सुमेरौ तस्य विशेषस्यापेक्षया पञ्चवारनामाभवत्तदीयनाम्ना । यथा सुमरौ प्रकृष्टप्रकाश-

मादित्यन्तन्यूनप्रकाशामुषसं विहायावशिष्टं तेजो बृहस्पतिशब्देन व्यवह्रियत एवं कुमेरावप्युभयोः सोमसन्ध्ययोरभावेऽवशिष्टं तेजस्तत्र शुक्रवेनप्रभृतिनामभिर्व्यवह्रियते । तदेव गृहीत्वा षष्ठो वारः शुक्रनाम्ना व्यवह्रियते । पाश्चात्येषु फ्राय नामापि शुक्रसमानार्थतया प्रवर्तमानं रात्रिकान्तिकतेजोऽभिप्रायकमेव भवेत् । पूर्ववर्तिवाराणां नाम्नां सुमेरुकुमेरुसम्बन्धेन प्रवृत्तानां मध्ये इदमपि तादृशस्यैव नाम भवेदिति ।

किञ्च बृहस्पतेर्देवपुरोहितत्वेन वर्णनेन सुमेरुसम्बन्धिता यथा एवं शुक्रस्याप्यसुरपुरोहितत्वेन वर्णना, देवविरोधिदेशत्वेनासुराणां देवानां सुमेरौ निवासे तद्विरोधिनि अर्थात् कुमेरावसुराणां निवासात्तत्सम्बन्धिन एवेदं नाम वक्तव्यमिति । अत्रोभयत्र सुमेरुकुमेर्वोरादित्यस्य पूर्वोक्तषट्सु वारेषु स्वरूपेणैव ग्रहणं कृतं न तु क्रियावैशिष्ट्येन । पूर्वरीत्या षण्णां षड्विधविशेषाभिप्रायेण ग्रहणात् ।

सप्तस्य वारस्य नाम्नोऽभिप्रायेण समानरूपक्रियाभिप्रायकमुभयत्र सुमेरु कुमेर्वोरेकरूपं नाम शनैश्चर इति गृह्यते । तच्चैतत्तस्य शनैश्चरत्वं मन्दगतित्वं यज्ञेषु प्रयुज्यमानाश्वलायनश्रौतसूत्रप्रदर्शितमन्त्राद्विज्ञायते । तथाहि तत्र सूत्रे दर्शपूर्णमासयोर्होतुः कर्मकथनावसरे होत्रा स्वस्यादित्यभावनया तदीयगत्यनुकारप्रदर्शनार्थं स्वस्मात्स्थानादुत्थायाध्वर्युणोदेष्यदादित्यरूपेण सम्बन्धार्थं गच्छता प्रयुज्यमानमन्त्रेण क्रियया च आदित्यस्य शनैश्चरत्वं प्रतिपाद्यते ।

अयं हि तत्र तस्य मन्त्रः—षष्टिश्चाध्वर्यो नवतिश्च पाशा अग्निं होतारमन्तरा विचृत्ताः । सिनन्ति पाकमतिधीर एति ॥ इति ॥ अनेन मन्त्रेण विशिष्टसंख्याकाः पाशा अग्निं होतारं चान्तरेणाच्छिन्ना इत्युच्यते । ते पाशाः कस्य कुत्रत्याः केन कथमग्निहोत्रोरन्तरेण च्छिन्ना इत्यस्यादित्यपरत्वं विना नोपपत्तिरिति पूर्वं प्रतिपादितम् । तादृश आदित्यस्तान् वारुणान् तावतः पाशानस्तस्थलत आरभ्य होतृस्थानप्राप्तिपर्यन्तं छित्वा तत्स्थानं प्राप्तः । स चातिधीर अतिमन्दमेति ।

एवं मन्त्रेणादित्यस्यातिमन्दगतित्वेन शनैश्चरत्वं बोध्यते । होतृस्थानं चोदयास्थानगतः पूर्वं त्रिंशदंशावशेषे गमनमार्गे, तत्स्थान प्राप्तस्यादित्यस्याध्वर्युस्थाने किरणसंस्पर्शस्तस्यानुकरणार्थमयं होता तादृशस्थानं गच्छति अत्र गतस्याध्वर्युणा करसंस्पर्शः कृतः स्यात् तदप्याश्वलायनेन श्रौतसूत्रे उक्तम् "उत्थाय ऋतस्य पन्थामन्वेमि होता इत्यभिक्रम्यांसेऽध्वर्युमन्वारभेत पार्श्वस्थेन पाणिना" इति । यद्यपि अयं मन्त्रो वैपुववृत्तस्थले विस्पष्टं सम्बन्धं बोधयति ।

तथापि अत्र पाशानामंशरूपत्वस्य स्पष्टामनुक्त्या सुमेरुकुमेरुगतपर्यायपरमपि पाशानां वक्तुं शक्यमिति तत्स्थातयाप्यादित्यस्य अतिमन्दगतित्वं बोधयती-

त्यतिमन्दगतिनिबन्धनमस्य शनैश्चरत्वं बोधयतीति तदेव गृहीत्वा सप्तमवारस्य शनैश्चरनामत्वं सुमेरु कुमेरुसाधारण्येन बोध्यते । इदं तु पाश्चात्त्यैरपि प्रकारान्तरेणानुमन्यत इति संभावना । यतस्तेषां सप्तमवारस्य नाम (SATURDAY) सातुर् इति भाषाविपर्ययनियमेन भवितुमर्हति ।

सातुर्शब्दो दानार्थकषणु दाने इति धातुतो निष्पद्यते अर्थश्च साता दाता इति । आदित्यस्य विषये दातृत्वादिकल्पनोभयप्रदेशसाधारणीति । तस्योक्तविधदातृत्वमभिप्रेत्य सप्तमवारनाम तेषां सातुर्दिनमित्यर्थकं (SATURDAY) इति भवति । एतावता सुमेरुकुमेर्वो. साधारण्याभिप्रायेणेदं नाम प्रवृत्तमिति विज्ञायते । मन्त्रे पूर्वोक्ते होतृपदमपि दानार्थकं हु धातोर्दानार्थत्वात् । होतुश्च पूर्वोक्तरीत्याऽतिधीरगमनेन मन्दगतित्वमित्यादिवर्णनसंभवात् ।

एवं चेदं सप्ताहमानमार्याणामेव वैदिकानाम् । तच्च न ग्रहापेक्षं, नेतरं तन्नाम कल्पितमपेक्षते वाराणां तन्नाम्ना च कृते । न चैतस्य मासपूरकत्वेन कल्पना । ग्रहाणामनपेक्षणेन तदीयदृश्यादृश्यत्वादिकमपि नापेक्ष्यते सञ्ज्ञोपपत्त्यर्थम् । नापि होराधिपत्वकल्पना विषमाऽपेक्षणीया । सा च भूसकाशात् कक्षासु भ्रमतां ग्रहाणां सविधग्रहकक्षामारभ्य कल्पने उपस्थितेऽपि तदुपेक्ष्यान्तिमग्रहकक्षामारभ्यैव तत्कल्पनं तत्रापि प्रथमोपस्थितत्वाच्छनेरेव प्रथमवारनामत्वमुपेक्ष्य तदधः कक्षामनुसृत्य तत्कल्पनमिति नानाविधानां सम्भवन्तीनां कल्पनानां परित्यागेन निर्हेतुकेन विषमत्वं तत्कल्पनाया इति पूर्वमुक्तमिति दिक् ।

**८. 'दीर्घतमा मामतेयो जुजुर्वानि"त्यादि मन्त्रस्याऽऽदित्य परं व्याख्यानम्**

एवं वेदे वर्णनप्रकारो विचित्ररूपः । यथा ऋषेर्नामोच्यते दीर्घतमा इति । तत्र कोऽसौ दीर्घतमा ऋषिरिति । तद्विषये केवलं मातृद्वारकं विशेषणमुच्यते मामतेय इति । का सा ममता यस्या अयं पुत्र इत्यभिप्रायेण मामतेय इति विशेषणमुच्यते यथा मन्त्रे–"दीर्घतमा मामतेयो जजुर्वान्दशमे युगे । अपामर्थं यतीनां ब्रह्मा भवति सारथिरि"त्यत्र । ममता नाम काचित्तस्या पुत्री इत्यवमेव व्याख्यातृभिर्व्याख्यायते ।

तत्रारण्यकाद्युक्तरीत्या ऋषिनामान्यादित्यस्यैवैतानि नामानीति यदि गृह्यते तदानीमसौ दीर्घतमा अपि उपाधिविशिष्ट आदित्य एव । तस्य मामतेय इति विशेषणेन रात्रिसम्बन्धो बोध्यते । ममताशब्देन शून्यरूपा मता । मेत्यस्य शून्यार्थकत्वात् शून्यं चाभावोऽर्थात्तेजस एव । स च रात्राविति ममताशब्देन रात्रिरुच्यते । तस्या. पुत्रोऽसावादित्यो मामतेयः स च दीर्घतमा इत्यनेन दीर्घतमो-

विशिष्टः। तमसो दैर्घ्यं च कालाविक्येन, तच्च भुवः पार्श्वद्वये सर्वोच्चे सुमेरु-कुमेरुरूपे मेरोः शृङ्गद्वितये भवेत्।

तत्रैतेन दृष्टसूक्ते तदीयवाक्यत्वेनोच्यते "अस्य वामस्येति मन्त्रे" "अत्रापश्यं विश्पतिं सप्तपुत्रम् इति। वामादित्यस्य अपश्यमित्यनेन प्रत्यक्षदर्शनं कृतवानह-मित्यर्थस्योक्तेरसौ सुमेरौ रात्रिकालिक इति विज्ञायते। कुमेरौ रात्रिकालिकत्वे तु तत्रत्यैवामादित्यस्य तेन प्रत्यक्षदर्शनासम्भवः। आदित्यस्यास्तमयेऽग्नौ तेजो-निधानेन तेजोराहित्येन कृष्णवर्णत्वमिति कल्पना। तदुच्यते सोमे दर्भपिञ्जूलानां दीक्षितसंस्कारे एकविंशतिसंख्योपपत्यर्थं यजुर्वेदे–यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन्। ततस्त्वामेकविंशतिधा संभरामि सुसंभृता इति मन्त्रेण आदित्यस्य कृष्णरूपवैशिष्ट्यमुच्यते।

तत्रादित्यं प्रत्युच्यते हे आदित्य त्वं कृष्णं रूपं कृत्वा वनस्पतीन् प्राविशः। वनस्पतिशब्देन स्वप्रकाशा आदित्यप्रकाशेनाप्रकाशितास्तारका उच्यन्ते। अतएव दिवस्पृथिव्योरिति मन्त्रे वनस्पतीनां सकाशतः सहस्तमोऽभिभवकर्तृ तेजःपर्याहरण-मुच्यते तस्य संगतिः। रात्रिं प्राप्तो भूरिति तस्य तात्पर्यम्। यतस्त्वं कृष्णेन रूपेण रात्र्या विंशतिभागानतीतोऽभूस्ततस्त्वामेकविंशतिधा सम्भरामि। दर्भ-पिञ्जूलगतैकविंशतिसंख्यावैशिष्ट्येन त्वां पावयामि शुद्धं करोमीति।

तच्च कृष्णं रूपमादित्यस्य रात्रावित्युक्तमेव। यथा आदित्य उषसा सम्बद्ध उषःपुत्र इत्युच्यते एवं रात्र्या सम्बद्धो रात्र्याः पुत्र इति गृहीत्वा मामतेयशब्देन ममतायाः पुत्र इत्युच्यते। तदेवोक्तमन्त्रे उच्यते दीर्घतमोरूपो ममतापुत्रऋषि-र्दशमे युगे दशमे युग्मे जुजुर्वाञ्जीर्णोऽभवन्। अत्र युगशब्देन द्वित्वसंख्योच्यते। सा च द्वित्वसंख्या दण्डो वा घटी वेति कालपरिमाणविशेषाभिप्रायेण तद्गता। रात्र्यास्त्रिंशद्दण्डात्मिकायास्सम्बन्धिनो ये प्रारम्भप्रभृतिदशमयुगपर्यन्ता दण्डाः। अर्थाद्विंशतिदण्डाः। तत्र दशमेऽन्तिमे दण्डद्वयेऽर्थाद् विंशघटिकायां जुजुर्वान्। परस्तादर्थमन्तिमगन्तव्यं देशं गच्छन्तीनामपामव्यक्ततेजसां सारथिरग्रगामी ब्रह्मा ब्रह्मरूपो भवतीति।

एवं यजुर्वेदोक्तमन्त्रानुसारेण यज्ञे दर्भपिञ्जूलेषु एकविंशतिसंख्याया दर्भा-दिद्वारेण पावकत्ववचनेन दशमं युगं विंशतिघटिकापर्यन्तरूपमेव गृह्यते। एवं चोक्तवर्णनतः कृष्ण आदित्यस्तस्य दीर्घतमस्त्वेन ऋषितेति, स च रात्रिसम्बन्धीति मामतेय इति ममता रात्रिः। तस्याः शून्यरूपत्वं तेजःशून्यतयेति। मशब्दस्य तेजःशून्यत्वेन वर्णना गोपथब्राह्मणे मखशब्दसाधनावसरे उक्ता। तत्रोच्यते, यज्ञो मख इत्युच्यते कुतो यतोऽसौ मा खो भवति।

तदयमभिप्राय – ख. शून्यस्तस्यापि मेत्यनेन अभावापरपर्याय शून्यत्व-मुच्यते । शून्यशून्यो नाम पूरितस्तच्च पूरण तेजसेति । एव सति यथा मखशब्दे मशब्दस्याभावार्थकत्वमेव ममताशब्देऽपि मस्य तदर्थत्व । यदि गोपथब्राह्मण माशब्दस्यैवाभावार्थत्वेन ग्रहणेन तस्य मखशब्दे छान्दसो ह्रस्व इत्युच्यते तर्हि ममताशब्दे-पि सैव विधा ।

सर्वथा मशब्देनमाशब्देन वा अभाव उच्यते स च तेजस इति । तेजसोऽभावश्च रात्रौ भवतीति रात्रिरेव ममता । अतएव तस्या पुत्रत्व दीर्घतमस सभवति इति । स च ऋषिभूं सम्बन्धादिति तस्य वामादित्यादिसाक्षात्कारवचनमुपपद्यत इति । किञ्च तेजसो भावे गर्तत्वेन वचन "दानुमत्या बृहन्त गर्तमाशाथे" इति मैत्रावरुणसूक्त उच्यते । दानुमती रात्रिरिति पूर्वमुक्त तस्या गर्तो रिक्त. प्रदेश । तत्र रिक्तत्व तेजसोऽभावेनेति शून्यत्वमपि तेजस एवेति तेजसा शून्या ममतेति रात्रिरेव ममतेति ।

## ६. देवतानां विकलाङ्गविशेषणानां संगतिकरणम्

एव देवताना विषये विकलाङ्गत्वमुच्यते "अन्धो भग." "अदन्तक. पूषा" "सविता हिरण्यपाणि." इति ।

वेदे एकस्यैवादित्यस्य वर्णनाद्भगादीन्यप्यादित्यस्य रूपाणि उपाधिवशत एक एवादित्यो विभिन्नरूपेण भासते इत्यर्थ । तत्र भगविषये निरुक्तकारेणोच्यते "प्रागुत्सर्पणाद् भगकाल., तस्य काल.-प्रागुत्सर्पणात्" इति । उत्सर्पणमूर्ध्वगमन तच्चादित्यस्य तस्य तत्पूर्णबिम्बोदयादूर्ध्वम् । तत. प्राक् च खण्डितबिम्बत्वान्न गमन न चोत्सर्पणम् । खण्डितबिम्बावस्थाया विभिन्नेन निमित्तेन भगत्वमिन्द्रत्व ,पूषत्व तत्र कल्प्यते । खण्डितबिम्बता च स्थलद्वये उदयावसरेऽस्तावसरे च । तदुभय लोकभेदेनैकस्मिन्नवसरे, लोकाभेदे च विभिन्नेऽवसर इति प्रसिद्धम् ।

लोकभेदश्च यत उदेति यत्रोदेति उदयावधित्वेनोदयाधारत्वेन । तत्र मुख्या वर्णना यत्रोदयो वास्तमयो वा दिनाधिककालसाध्यस्तत्र दत्साजात्यात्स्वल्पकालिके उदये चास्तमये चेति । तादृशोऽनेककालसाध्य उदयोऽस्तमयो वा सुमेरुकुमेर्वो , सर्वाधिककालसाध्यता तस्य तत्रापरेषु तु न्यूनाधिककालसाध्येतेति सुमेरु-कुमेर्वोरेवाभिप्रायेण वर्णना ।

तत्र कुमेरावस्तमय. सुमेरावुदयश्चैककालसाध्यौ, यथा यथा कुमेरनौऽयमस्तमियात्तथा तथाऽसौ सुमेरावुदियात् । एव सति लोकभेदेनैकस्मिन्नवसरे उदय एवमस्तमयोऽपि । लोकाभेदे ,सुमेरौ वा उदयास्तमयौ भिन्नकालाविति ।

सा च खण्डितबिम्बावस्था न लोकद्वयान्तः पातिनी। सम्पूर्णबिम्बदर्शनतो लोक-भेदकल्पनात्।

एवं चास्तावसरे यत्रान्तिमं पूर्णं बिम्बमादित्यस्य दृश्यते सोऽन्तः पूर्वलोकस्यैवमुदयावसरे प्रथमतो दृष्टं पूर्णं बिम्बं स आदिरुत्तरस्य लोकस्य। तादृशलोक-द्वयमध्यवर्तित्वेन निमित्तेन तत्रत्यादित्यस्य भगशब्दवाच्यता। पूर्णे ह्यादित्यबिम्बे-शिरः पादाक्षिरूपत्वादिना नानारूपाः कल्पनाः।

यथा मित्रावरुणयोश्चक्षूरूपत्वं चक्षुर्मित्रस्य वरुणस्याग्नेः इत्यादिभिरुच्यते। अपूर्णे तु चक्षुष्ट्वयाभावः। तच्चेदमपूर्णत्वेन चक्षूरूपत्वाभावं गृहीत्वा भगस्यान्धत्वेन वर्णना। तत्र चक्षूरूपत्वाभाव एव चक्षुपोऽभावश्चक्षुरभावादेवान्धतेति। तत्र पूर्णे बिम्बे दर्शनोपाधिना पूर्णत्वं खण्डितत्वं तदुपाधित्वे चक्षुः कल्पनाया अभावस्तदभावोपाधिना चक्षूराहित्यं ततश्चान्धतेति उपाधिभेदेनेमाः कल्पनाः। तत्रापि निमित्तकल्पनाभिप्रायेण ब्राह्मणे उच्यते "प्राशित्रमस्याक्षिणी निर्जघाने" ति।

प्राशित्रं यज्ञे दर्शपूर्णमासेष्टियागे ब्रह्मणो दीयमानो भागः पुरोडाश-रूपस्तदाधारत्वात्पात्रमपि तच्छब्दबोध्यम्। तदेव गृहीत्वा देवकर्तृके यागे भगो ब्रह्मासीत्तस्मै तद्भागो दत्तः स च तेनाक्ष्णा गृहीतः। अक्षिरूपस्यैव तद्भागस्याक्ष्णा ग्रहणमक्ष्णा दर्शनमिति यावत्। ततस्तस्याक्षिणी निर्जघान स भागः। अक्षिरूप एव स भागो भेदकल्पनयाऽक्ष्णा गृहीत इत्युक्तिः। तत्र प्राशित्रभाग-रूपत्वेऽक्षिभावो विनष्टः। तदेव गृहीत्वोच्यते दृष्टेन भागेनाक्षि विनष्टमिति अक्षिभावविनाश एवाक्ष्णोर्विनाशस्ततस्तस्यान्धतेति कल्पना।

एवं पूष्णोऽपि विषये। तत्रत्यबिम्बस्यार्धभागद्वयकल्पने तत्र हस्तकल्पना। आदित्यबिम्बं हि आपातदृष्ट्या प्रादेशमात्रम्। अतएव तस्य बिम्बस्याभिप्रायेण याज्ञे कर्मणि प्रादेशस्योपयोगस्तत्र तत्र। यथा दर्शपूर्णमासयोरुच्यते श्रौतसूत्रे भूमौ-प्रादेशं कुर्यादिति। एवमेवान्यत्र। पुरुषसूक्ते बिम्बपरिमाणाभिप्रायेणोच्यते स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलमिति। तस्य बिम्बस्यार्धभागद्वयकल्पने प्रत्येकं पञ्चाङ्गुलित्वम्। पञ्चाङ्गुलियुक्तत्वेन हस्तकल्पना। तथा सति उक्तप्रकारेण पञ्चाङ्गुलिभागद्वयं हस्तौ पूष्णः।

निरुक्तरीत्या वाहनमायुधमवयवादि च देवतास्वरूपाभिन्नमिति पञ्चा-ङ्गुलिभागेनोपाधिना स एव पूषा देवः। उक्तरीत्या तन्मध्यवर्त्यादित्यबिम्बं प्राशित्रं तच्च पूष्णा हस्ताभ्यां गृहीतं तद्धस्तरूपं तत्तेन गृहीतमिति कल्पना। उक्तभागद्वयस्य पञ्चाङ्गुलित्वेन तस्य यथा हस्तशब्देन ग्रहणमेवं हस्तशब्देन कराणां किरणानामपि ग्रहणम्। अतएवादित्यस्य सहस्रकर इति वर्णनम्।

किरणानां कङ्कतिकाया केशविवेचनभागवद्दन्तत्वेन वचनम्। एवं सति पूष्णा प्राशित्रस्य हस्ताभ्यां ग्रहणं नाम च दन्तैर्ग्रहणम्। दन्तैर्ग्रहणस्य चर्वण-शब्दवाच्यतेति उच्यते। पूष्णा स प्राशित्रभागो दन्तश्चर्वित इति तद्वशनस्तस्य दन्ता. पेतुरित्यदन्तक सञ्जात इति। तस्मिन्भागे रश्मिराहित्य स्वत एव वर्तमानं पूष्णा हस्तरूपदन्तैश्चर्वणात्तत्त्वमिति कल्पना। अतएव तस्य मध्यवर्तिनो बिम्बस्य रश्मिराहित्येन तस्य च विष्णोर्मध्यमपदत्वेन वचनात्तदभिन्नत्व विष्णो-रिति गृहीत्वा विष्णोर्विशेषणमुच्यते शिपिविष्ट इति।

निरुक्तकारेण शिपिविष्ट इत्यप्रतिपन्नरश्मिरित्यर्थ उक्त। औपमन्य-वेनाचार्येणेद नाम कुत्सार्थीयमित्युच्यते, तदर्थश्च दुर्गाचार्येण निरुक्तानुभाग्येण शेप इव निर्वेष्टित इत्युच्यते। एव च पूष्णो दन्तकभावत्वेन तस्य मुक्तेऽपिष्टादन-कर्तृत्वेन वर्णन, तदुच्यते य एनमादिदेशति करम्भादिति पूषणम्। न तेन देव आदिशे इत्यत्र करम्भादिति पुष्णोर्विशेषणमुच्यते करम्भमत्तीति करम्भात। सयुक्त यवपिष्ट करम्भ। तदत्तीति स करम्भात्। सर्वं वाक्य सावधारणमिति न्यायेन पिष्टमेवात्तीति। तदेव ब्राह्मण उच्यते "पूषा प्रपिष्टभागो अदन्तको हि स" इति।

एवञ्चोक्तरीत्या भगस्येव पूष्णोऽपि प्राशित्रसम्बन्धेनादन्तकत्वमिति देवयागे तस्य ब्रह्मार्त्विक्त्वेनप्राशित्रसम्बन्ध इति भाष्ये प्रोच्यते। एव सवितुरपि हस्तच्छेद: प्राशित्रसम्बन्धात्। देवताभिस्तस्य हिरण्मयहस्तयोजनेन स हिरण्यपा-णिरिति सूक्तेषु वर्ण्यते। उक्तस्थलखण्डितबिम्बत्वेन भगत्वमर्धभागद्वययुतत्वेन पूषत्व यथा कल्प्यते एव तद्बिम्बमध्यरूपपूर्वायोगित्वेन तदुपाधित्वेन तस्येन्द्रत्व-कल्पना।

अतएव तस्य आखण्डलशब्देन वचन आखण्डल प्रहूयसे इत्यत्र। आ समन्तात् अर्थादुभयलोकयोरर्धाद्यत्रोदेति यतश्चोदेतीत्युभयत्र खण्डश एव लाति गृहीतो भवति न पूर्णत्वेनेति। तस्य पूर्णत्वेन दर्शनाभावेन तस्यास्तित्वसन्देह सूक्ते नेन्द्रो अस्तीति नेम उ त्व इत्यत्र। तस्यादर्शनादभावे प्राप्ते कार्यमुखेन तद-स्तित्व सजनीयसूक्ते उच्यते। अतएव ब्राह्मण उच्यते ऋषयो वा इन्द्र प्रत्यक्ष न ददृशु, वसिष्ठ एव प्रत्यक्ष ददर्श, सोऽबिभेदिन्द्र स मामन्येभ्यो वक्ष्यतीत्यादिना।

तस्मिन्नुदयबिम्बे आग्रयणशब्दव्यवहार इत्यन्यत्र विस्तरेण निरूपितम्। इदमेव मध्यवर्तिबिम्ब गृहीत्वोषसि स्त्रीत्वकल्पना। उष. काले हि तिर्यक् प्रसारि-व्यायततेजोदर्शनेन सुमेर्वादौ तत्रोरुत्वेन कल्पना। तदेव चादाय उर्वशीत्व तस्या। तस्य शब्दस्य निर्वचन निरुक्तकारेणोच्यते ऊरुभ्यामश्नुते ऊरुर्वा वशोऽभ्या इत्यु-र्वशीति। उषसि ऊरुत्वकल्पनाया लोकद्वये मध्यवर्तित्वसाम्येन तत्र बिम्बे भगत्व-कल्पना।

तदेव गृहीत्वा मन्त्रे "जनन्त उषसो भगम् इति वर्णना । तद्वशत: एव तस्या स्त्रीत्वेन कल्पना । तस्मिन्नेव मध्यवर्तिनि विम्वे पुमिन्द्रियत्वकल्पनापि । तदेव गृहीत्वोच्यते इन्द्रस्येन्द्रियम् इति । उभयविधकल्पनायास्तत्रैवैकस्मिन्विषयत्वमित्युभययोगकल्पना अश्वमेधे जायोपनिपातनेनोच्यते सा परस्तात्प्रदर्श्येत । सर्वथैतस्मिन्मध्यवर्तिनि विम्वे नानाविधा: कल्पना नानाविधैर्निमित्तैर्वेदे उच्यन्त इति ।

सोमयागे वहिष्पवमानस्तवो वहिर्योगादिति यथा वै स्तोत्रमेवं शस्त्रं, स्तोत्रमग्रे शस्त्रा दित्यतिदेशप्राप्तस्याज्यप्रउगशस्त्रे विपर्यास इत्यादिकमप्युवतविम्वमध्यवर्तिविम्वनिवन्धनत्वेनैवोपपद्यत इति पूर्वं निवेदितम् । कर्मविचारनिरूपणे पुनर्विस्तरान्निरूपयिष्यते । इदमेव विम्वमभिप्रेत्य तल्लाभार्थं देवासुरयुद्धादिवर्णना । इदमेव विम्वं लब्धुं शूद्रार्ययोश्चर्मणि व्यायमनमित्यादिकं कर्म सूच्यत इति दिक् ।

## 10. वेदार्थनिरूपणे आदित्यपरव्याख्यायाः प्राचीनत्वम्

एतावता वहुभिर्मन्त्रैर्ब्राह्मणभागैश्चादित्यस्यैव स्तवो वेदे इति प्रतिपादितम् । शव्दभेदेन देवताभेदवादिनां मतमप्यविरुद्धमेतन्मतेन । ते ते शव्दा विभिन्नेन निमित्तेनाऽदित्यस्यैव वोधका इत्यादित्यस्यैव तानि नामान्यौपाधिकभेदश्च तस्येति वर्णनासु न विरोधः । एवं सतीन्द्रेणोप आदीनां प्रवर्तनमुत्पादनं मारणमित्यादीनां विरोधाभावः ।

निरुक्तमतमपि न विरुद्धमनया कल्पनया । यथा शव्दानामुपाधित्वं गृहीत्वा यथैकस्य सत आदित्यस्य भेद इत्यौपाधिकनानात्वं तस्य, तथा लोकमुपाधिं गृहीत्वा देवतात्रयवादोऽपि नैतन्मतविरुद्धः । अध्यात्मवादोऽपि न विरुद्धः ।

यत एकस्य निर्विशेषस्यात्मनो भेदं विना स्तुत्यादेरसंभवेनौपाधिकत्वेन भेदं गृहीत्वा तस्य स्तवे उपाध्यर्थं जागतिकाः सर्वे पदार्था उपाधित्वेन प्राप्तास्तत्र सर्वादित्वेन तेजस उपाधित्वेन ग्रहणे तदुपलम्भ आदित्य इति तमुपाधिं गृहीत्वा स्तवो वस्तुत आत्मन एव स्तव इति । एवं च प्राचीनमतैर्नैतन्मतस्य विरोधः किन्तु एतन्मतमेव प्राचीनं सर्वसम्मतं चेति ।

आदित्यवर्णनस्थलेऽपि सर्वा वर्णना विशिष्टदेशकालस्थस्यैवादित्यस्येति गृहीत्वा पुनर्मतभेदो नूतनैराश्रीयते । यद्यपि निरुक्तकारैर्वेदे प्रतिपाद्यानामनेककथानां मध्ये वृकमुखतो वर्तिकामोचनकथा आदित्यसम्वन्धितया प्रकाशिता । तत्रापि कस्य केन मोचनं कृत इत्यस्मिन्नंशेऽश्विम्यां वर्तिकाया वृकमुखतो मोचनमित्यंशस्य समतत्वेऽपि वृकवर्तिकास्वरूपविषये मतभेदः । तत्र वृकत्वमादित्यस्य वर्तिकात्वं रात्रेर्वोषसो वेति न सम्यक् निर्णय इति पूर्वं प्रतिपादितम् ।

तस्यापरासा वेदे वर्णनाना न सम्यगुपपत्ति प्रदर्शिता । अश्विनम्प्रामनकेषा सवटमग्नाना नौकादिमाहाय्येनानेकैर्दिवसैर्मोचनमित्यादीनामुपपत्त्यशाभ्रात । अपरे पुनरुपसमेव गृहीत्वा देवा, सूर्य, प्रान् काला दिन, वसन्त इत्यादिकाना जननी, सरण्या अश्विनौरूप गृहीत्वा तस्यापत्यद्वयस्य उत्पत्ति, सूर्योदये तदभाव, सूर्याया सोमेन विवाहो वृषाकपाय्या बलीवर्दानामिन्द्रेण भक्षणमुत्रशोप्रभृति सम्बन्धिवर्णना उप परा एवेति । कथानामुप परत्यैव निर्णयार्थं तेषा प्रयास । सा नोपास्तेषा ध्रुवस्थानीयापाऽपेक्षाया भिन्नस्वरूपा मध्यवर्तिदेशसम्पृक्ता दैनन्दिनीति तेषामभिप्राय ।

एव पर्जन्यकल्पनया सूक्तानामर्थनिर्णय । यथेन्द्रेण सोमपानेनासुर-विनाश । तत्र विनाश्या असुरा वृत्रादिरूपा मेघरूपास्तेषा हननेनेन्द्रेण पजन्योऽ वर्ष्यत इति । वृत्रवधन नदीना मोचन कृतमित्यर्थस्य न सम्यगुपपत्ति । नहि मेघन नदीना रोध सम्भवति । एवमपरापरा सर्वा कथा मेत्रपरत्वेन न सूपपन्ना भवन्ति इति ।

तृतीय प्रकारो वसन्तप्रारम्भप्रकारवर्णनेनेति । तत्र हैमे काले प्रवृद्धतेजस आदित्यस्य वसन्तकाले प्रवृद्धस्तेजस्कतया च्यवानस्याश्विभ्या युवत्व सपादनम । अनस्तमसो मोचनम, कूपे पतितस्य मोचनप्रभतिवर्णनानामुपपत्तावपि वसन्तो-पपत्या बहूनि वर्णनानि नोपपद्यन्ते । वन्दनात्रिभुज्युप्रभृतीना तमस सकाशनो मुक्तिरुच्यते तच्च वसन्तोपपत्या न युज्यते, नहि शीतकाल तेजसोऽल्पत्व तम इति वर्णयितु शक्यम् ।

यत आदित्यरूपवन्दनप्रभृतीना मोचन वसन्तकाले सूर्यस्य तेजस्विरूपत्वमिति न वर्णयितु शक्यम, तमससकाशतस्तस्य मोचनरूपत्वाभावात । भुज्योर्नौकामि-र्दिनरात्रित्रयेणाश्विभ्या मोचनमुच्यते तन्नापपद्यत दीर्घतमा दशमे युगे जीर्ण सञ्जातस्ततस्यापत्ततो मोचनमश्विभ्या कृतमित्यस्यानुपपत्ति, तयोरनस्य भुज्यो-रश्विभ्या मोचन कृत यस्मात्स्थानात्तत्स्थानमनारम्भण तम इत्युक्त तस्यानुपप त्तिरिति ध्रौविकवसितिस्थानकल्पनयतस्य सर्वस्योपपत्तिरिति साऽवश्यमाश्रय-णीयेति ।

अस्यामप्युपपत्तौ भूयस्यो वर्णना उपपद्यन्ते, नैतावताऽनयाऽनुक्रमणिकाका-रमतेन विरोध परन्तु अस्या उपपत्त केवल सुमेरुमन्त्रग्रन्थित्वेनैव प्रवृत्त्या वेदोक्त-सर्वासा वर्णनाना सग्रहासम्भव । नहि आदित्यादिदेवप्रभृतीना वामत्वेन वर्णनस्य प्राङ्प्राच्यादिशब्देन व्यवहारस्य सम्यगुपपत्तिस्तत्पक्ष । किञ्च दिने ऋतुत्रयपर्यन्त तापयुक्तता, रात्रौ सर्वां रात्रि यावद्वृष्टिमम्बन्धस्य देवाना मान इत्यादिषु वर्ण्यमानस्यानुपपत्ति ।

नहि दक्षिणायने मृतस्य चन्द्रमःसायुज्यमुत्तरायणे मृतस्यादित्यसायुज्यमित्यस्य वर्णनमेतत्पक्षे उपपद्यते, अस्य वामस्येति सूक्ते भूम्या असुरसृगात्मा क्वस्विदिति पृथिव्याः प्राणादिविषये सन्दिग्धत्वेन वर्णनस्याप्यनुपपत्तिः केवलं, किन्तु तेषां तादृशानां तत्सूक्तोयवर्णनानां देवान् प्रत्यपि निहितत्वं गुप्तत्वं रहस्यरूपत्वमित्यस्य वर्णनस्याप्यनुपपत्तिः । ब्राह्मणे वेदिद्वयवर्णनस्य "द्वे वेदी भवतोद्वावेव लोकौ दक्षिणान्योत्तरान्योत्तरया देवलोकमवरुन्धे दक्षिणया पितृलोकमिति" वर्णनस्याप्यनुपपत्तिः ।

एवं बहूनि स्थलान्यनुपपन्नानि भवन्ति ध्रुवस्थानीयवर्णनमात्रपरत्वे । यानि च तत्साधकानीत्युच्यन्ते तेषामपि मध्ये अनेकेषां तन्मात्रसाधकत्वाभावात् । तथाहि तत्रोच्यते वैदिकी उषा मासादिपर्यन्तकालस्थायिनी ध्रुवस्थानीयत्वं साधयति इति । तदेतन्न ध्रुवप्रदेशमात्रसम्बन्धी भवति । ध्रुवप्रदेशेत्यनेन देवलोकनिवाससुमेरोर्ग्रहणात् । नहि सुमेरावेव मासादिकालिकत्वमुषसः किन्तु सुमेरुविरुद्धः कुमेरुरूपदेशस्तत्रापि तस्यास्तादृशत्वात् । यत्तु उषसो ध्रुवप्रदेशे दिनाधिककालिकत्वख्यापनाय मन्त्रस्योद्धरणं तत्तस्या अधिककालिकत्वं बोधयदपि न सुमेरुरूपध्रुवप्रदेशसम्बन्धितामुषसो बोधयति । तथाहि–

[1]तानीदहानि बहुलान्यासन्या प्राचीनमुदिता सूर्यस्य ।
यतः परि जार इवाचरन्त्युषो ददृक्षे न पुनर्यतीव ।। इति ।।

एतस्यां सूर्योदयात्पूर्ववर्तिषु बहुस्वहस्सु उषसां दर्शनमुच्यते तच्च न दैनन्दिनोषः परं भवितुमर्हति तावता तस्य न सुमेरुमात्रसम्बन्धसाधकत्वम् । यतोऽस्मिन्नेव मन्त्रे इच्छब्दस्य प्रयोगः । तेन शब्देन मनुष्यनिवासरूपपृथिवीरूपकुमेरुसम्बन्धस्य प्रतीतेः । तानि अहानि इत् कुमेरौ बहूलान्यासुर्यानि सूर्यस्योदयादिति शेषः, प्राचीनमुदितानि । प्राचीनशब्देन प्रागञ्चनं यथैवं प्राचीनशब्दो नात्र कालवाचकः किन्तु दिग्वाचको दिक्सम्बन्धेन प्रवृत्ताः प्रागञ्चनमाह । एकवचनप्रयोगादिदमव्ययम् ।

तदुक्तं प्राचीनं प्रागञ्चनं यथा तथा इति सूर्यस्य शब्दस्य तदुदयपरत्वेऽपि सैवावस्था । उदिताशब्दस्योदययुतार्थबोधकत्वेऽपि न तस्य सूर्येण सम्बन्धः । सामानाधिकरण्याद्यच्छब्दवाच्यदिनयोगस्यैव तेन बोधनात् । तस्मादत्रोदये इति शेषः । सूर्यस्योदये उदयावसरे प्राचीनभावेनोदितानि सुमेरौ बहुलान्यासन् ।

अथवा सूर्यस्येति कर्मणि षष्ठी तस्य परवर्तिनाऽर्थेन सम्बन्धः । यतो गच्छतः सूर्यस्य गच्छन्तं सूर्यं परिचरन्ती हे उषः त्वं ददृक्षे दृष्टा भूः । अत्र पूर्वार्धसम्बन्धाय येषु दिवसेषु इति शेषः अथवा यतः पदमावर्त्य यतः सूर्यस्य यतो येषु इति अर्थो व्याख्येयः ।

---

१. ऋ. स. ६:७६:२.

न केवल दिवसार्थकत्व यत इति गृहीत्वाऽत्रनिर्वाहः । दृष्टान्ताननुगुण्यापत्तेः । जार इव परिचरन्ती नयतीव गच्छन्तीव ददृशे । एव सति "इयमुषा गच्छतोऽपि सूर्यस्यानुसारेण यतो गच्छन्ती न ददृशे किन्तु यतोऽपि सूर्यस्य परि श्रा समन्तात् परस्ताच्चरन्ती सञ्चरन्त्येव ददृश" इति । जार इवेत्यनेन न सर्वथा तदनुसरणमिति ।

तावता उपसो बहुलदिनपर्यन्त परितस्सञ्चरणेन चरणार्थाना बहुलदिनाना वर्णनेन बहुदिनव्यापित्वावगमेऽपि नेद सुमेरुस्थलीय वर्णन इत्पदस्वारस्यात् । एव चैतद् बहुदिनव्यापित्वमुपसो बोधयदपि उभयसाधारणमपि तत् ध्रुवप्रदेशमात्रसम्बन्धीति वर्णन वेदस्य ध्रुव प्रदेशसम्बन्धिबोधकत्वमिति ग्रहणात् । एव परो द्वितीयो मन्त्रस्तदर्थस्याप्येपैव गति । तथाहि स मन्त्र :-

पर ऋणा सावीरध मत्कृतानि माहृ राजन्नन्यकृतेन भोजम् ।
अव्युष्टा इन्नु भूयसीरुपास आ नो जीवान्व ण तासु शाधि[1] ॥

अत्र वरुण प्रत्युच्यते-मदीयानि ऋणानि पर परस्तात्सावी. विदूराणि कुरु । हे राजन् वरुण अन्यकृतेनाह मा भोजम् । अन्याधीनत्व मम मास्तु, इन् सन्निकृष्टे प्रदेशे भूयस्य उपासो नु अद्यापि अव्युष्टा न सम्यगुदितास्तासूपस्सु नोऽस्माञ्जीवाञ्जीवयुक्तान् यथास्माक जीवन विपन्न न स्यात्तथा कुरु इति ।

एव चात्राव्युष्टानामित्यनेनानुदिताना ग्रहणेऽपि तासा विभिन्नदेशीयाना विभिन्नकालिकीनामसन्तताना ग्रहण न प्राप्नोति किन्तु सातत्येन कृतकरिष्यमाणोदयानामेवेति । एतावता एता भूयस्य उपसो न सुमेरुमात्रसम्बन्धिन्यः किन्तु कुमेरावपि तत्सत्वम् ।

किञ्च प्रकृते मन्त्रे कुमेरुमात्रसम्बन्धितैव प्राप्नोति वरुणस्य सम्बोधनात्, वरुणश्च पश्चिमदिक्सम्बन्धी । एव च पश्चिमदिक्सम्बन्धिनामेवात्रोपसा ग्रहणम् । न चात्र तर्हि सुमेरावस्तोत्तरवर्तिनीना सान्ध्यतेजोरूपाणा तासा ग्रहणमिति तासा सुमेरुमात्रसम्बन्धिता सुमेरावस्तावसरीयत्व वरुणस्येदानीमपि वर्णयितुमशक्यम् । अद्याप्यव्युष्टा इत्यनेनाकृतोदयाना तदानीमसताना तासा वर्णनात् ।

नहि अस्तावसरेऽस्तोत्तर सान्ध्यन्तेजो दृष्ट परस्तादृश्य भवति किन्तु सत एव तस्य क्रमेणावहीयमानत्वमिति न तद्रूपाणा तासा तदानी ग्रहण-

1. ऋ. सं २ : २८ : ९.

सम्भवः। सुमेरौ पश्चिमायां सूर्यस्योषः प्रभृतीनामस्तेऽपि कुमेरौ तत्रोदयात्। एवं च वरुणसम्बन्धादुदेष्यन्तीनामुषसां वर्णनादिदं वर्णनं कुमेरुसम्बद्धमेव न सुमेरुसम्बद्धम्।

न चैवं सति सर्वत्र कुमेरुसम्बद्धत्वमेव नासामनेकासामुषसामिति भवति, सुमेरुकुमेरुरूपोभयसाधारण्येनापि तासां वर्णनदर्शनं यथा—

कियात्या यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान्।
अनुपूर्वाः कृपते वावशाना: प्रदीध्याना जोषमन्याभिरेति[1]॥

अत्र पूर्वाः शब्दः कालपर एवेति एतस्य वर्णनस्योभयसाधारण्यम्। यतोऽत्र या उदिता याश्चोदेष्यन्त्यस्तासां मध्ये समया सम्यक् गमनशीला वर्तमाना कियात्या कियत्या कियत्या मात्रया कालमात्रया कालेनेत्यर्थः, भवाति भवति। एषा वर्तमाना कियता कालेन सम्पूर्णोदिता स्यात्। अथवा कियती कियत्संख्याका भवति। यद्यतोऽनेका उषसो व्युष्टा इतः पूर्वं परस्तान्नूनं निश्चयेनोदेष्यन्ति, तन्मध्ये एषा समया सम्यग्गमनशीला वर्तमानेत्यर्थः। कियती, अनेका उदिता अनेका उदिता भविष्यन्ति तन्मध्ये वर्तमानायाः संख्याविज्ञाने निश्चयेनावशिष्टानां ज्ञानं स्यादिति।

एका गता वर्तमाना पश्चादागच्छति अहमागतेति ब्रुवाणेवापराभिर्गच्छति तूष्णीमित्येवं क्रमो बहुकालं दृष्टः। एवं सति एषा कियती यद्दर्शतस्तासां संख्यानेनावसानं विज्ञातं स्यादुदयश्चादित्यस्य विज्ञायेतेत्यर्थः। एवं चेदं वर्णनमेकस्थानेन सातत्येन वर्तमानानामुषसामिति भवति। तच्च सुमेरुकुमेरुसाधारणमपि वक्तुरभिप्रायेण विशेषस्थलं स्यात्। एवं बहुषु स्थलेषु साधारण्यमप्युषसां वर्ण्यते। एवञ्चोषसां सातत्येन बहुत्ववर्णनं न सुमेरुप्रदेशीयत्वस्यैव बोधकं स्यादिति।

एवं शश्वत्पुरोषा व्युवास देवी इत्यत्र पुराशब्दो न कल्पान्तरार्थकः किन्तु इदानीमिव पूर्वमपि व्युवास इत्येवं बोधयति। यथोषसां दीर्घत्वमनेककालसम्बन्धित्वमेवं तमसोऽप्यनेककालसम्बन्धो न ध्रुवप्रदेशमात्रसम्बन्धी भवति। उभयत्र भुव उभयपार्श्वयोरत्युच्चप्रदेशरूपसुमेरुकुमेरुसम्बन्धात्। एवमपां निरोधादिकमप्युभयसम्बद्धं न ध्रुवप्रदेशमात्रं बोधयितुमलम्।

किञ्चापोऽत्र सूक्ष्माकाराणि जलानि सर्वस्मिन् ब्रह्माण्डे प्रतिहतप्रसराणि तद्दर्शतोऽपि ध्रुवप्रदेश सम्बन्धित्वसाधनं न भवितुमर्हति। यतोऽत्र वेदे वृत्रनिरुद्धा आपो न लोके प्रसिद्धाः स्थूलाः सूक्ष्मा वा आपः किन्तु अन्यरूपाः। यतो वृत्रादयः

---

१. ऋ. सं. १ : १०.

सर्वे वेदप्रतिपाद्या असुरा इन्द्रेण विनाश्या वर्ण्यन्ते । इन्द्रश्चादित्यात्मा, आदित्येन तु न वस्तुसता तेषा नाशन किन्तु तस्य तेजोरूपत्वेन तेजस्तमसोरेकत्रानवस्थितेस्तेजोरूपस्येन्द्रस्य सत्तादशाया तत्र तमसोऽनवस्थानेन तेन तस्य विनाश इति कल्पना ।

एव सति इन्द्रविनाश्या असुरास्तमोरूपा भवेयुस्तैश्च तमोरूपै: स्वरूपमता लोके जलत्वेन प्रसिद्धानामपा निरोधस्यासम्भवेन वृत्रनिरुद्धा आपोऽप्यव्यक्ततेजोरूपा एव वक्तव्या: । तासामव्यक्ततेजोरूपाणामपा निरोधोऽन्धकारस्य स्वल्पाधिक कालवर्तिना तमसा क्रियमाण. । तमसा च न्यूनाधिककालिकता देशभेदादिल । आधिककालिकतम: सत्ताया उभयदेशसाधारण्येन ध्रुवप्रदेशरूपमुमेरुसम्बन्धमात्रप्रतीतेर्वर्णयितुमशक्यत्वात् । एतेन तस्य तमोमयकालस्य वेदे वचन यथा नैकमात्रसम्बन्धसाधकमेव पारसीकग्रन्थेपु तत्वमपि नैकदेशमात्रसाधकमिति ।

## ११. युगशब्दस्य सोदाहरणं सविस्तरञ्चार्थनिरूपणम्

एव युगशब्दो मानुषा दैव्येत्यादिविशेषणयुक्तत्वेन वेदे नपुसकलिङगतया प्रयुज्यमान: न केवल पृथिव्या उत्तरपार्श्वीयसुमेर्वादिरूपध्रुवसम्बन्धिप्रदेशसम्बन्ध प्रतिपादयति, किन्तु तस्या दक्षिणपार्श्वीयोच्चस्थलरूपकुमेर्वादिप्रदेशसम्बन्धमपि प्रतिपादयति । तथाहि तत्र युगपदार्थ: प्रथमतो निर्णय: । यद्यपि युगशब्दस्य युज्धातोर्निष्पादेन तस्य योजन सम्बन्धनमित्यर्थकयोगार्थकत्वेन युग द्वयमिति प्रतीयते । किं तद् द्वयमिति विचारे निर्णीतयत्किञ्चिद्द्वयं गृहीत्वाऽहोरात्रे मासद्वयमृत्वोर्द्वयमित्यादिक नानाविधमर्थं गृहीत्वा वर्णन न युक्तम् । न च तस्य कालबोधकत्व गृहीत्वोक्तार्थकत्ववर्णन न विरुद्ध्यत इति वाच्य, तथा सति वत्सरद्वयार्थकत्वमपि स्यात् ।

किञ्च दीर्घतमसो विषये दशभिर्मासैर्वृद्धत्ववर्णन दाशमासिकवत्सरस्वीकारद्वारा ध्रुवप्रदेशसम्बन्धसाधकमिति न स्यात्तत्र वत्सरार्थकत्वेन दशभिर्युगैर्विंशतिवत्सरैरित्यप्यर्थो वर्णनीय: स्याद्गणितश्च स पाश्चात्यदेशीयै: पारम्परिक जीवन पीढ़ी पुस्त इत्यादितदीयभाषया ।

एव सति युगपदार्थानिर्णयेन दीर्घतमस्सम्बन्धिमन्त्रस्याव्यवस्थितार्थत्वमेव न तु ध्रुवप्रदेशादिसम्बन्धसाधकत्वम् । किञ्च तत्र द्वितीयार्धस्याव्यवस्थितार्थत्व स्वीक्रियत एव । अथ चोक्तार्थसाधकत्व निराबाधमित्युक्तिरयुक्तैव स्यात् । युगशब्दस्यानेकार्थत्वेनोक्ताशवशतोऽर्थनिर्णयासम्भवात् । तदर्थं तन्मन्त्रार्थस्याविचार्यते । अय हि मन्त्र:—

दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे ।
अपामर्थं यतीना ब्रह्मा भवति सारथि:[1] ॥

---

१. ऋ. स. १.१५८.६

अत्र युगपदस्यार्थः किं सामान्यतो मानुषकं जीवनमित्यभिप्रायस्तथा सति दशमे युगे इत्यत्र युगशब्दस्य वत्सरद्वयमित्यर्थं गृहीत्वा दशमं युगं विंशतिवर्षाणि तत्रान्तिमे भाग इत्यर्थः। अत एव तदीयकथाया अप्युपपत्तिः। तदीया कथैव मुच्यते–दीर्घतमा उचथ्यस्यांगिरसस्य ममतानामिकायाः सकाशतः सजातः पुत्रः प्रद्वेषिण्या तन्नामिकया भार्यया कृतपरिणयोऽपत्यान्युत्पाद्यापत्यर्जराजीर्णं इति तस्य भरणमनिच्छद्भिस्तस्य समुद्रे प्रक्षेपेऽश्नोऽश्विनौ तुष्टावाश्विभ्यां तस्य जीर्णस्यान्धस्य मोचनमिति। स च बृहस्पतिशापेनान्ध इति।

एवं च तस्यापत्योत्पत्तियोग्यकालपर्यन्तं जीवनमपेक्ष्यते तच्च युगशब्दस्य वत्सरद्वयमित्यर्थकत्वे कथंचन न संभवति। विंशतिवत्सरपर्यन्तं जीवने विवाहस्यापत्योत्पत्तेश्च सम्भवात्। परन्त्वत्र कथायां जीर्णस्यान्धस्य भरणमनिच्छद्भिरपत्यैः समुद्रे परित्यागस्यानुपपन्नत्वं, नहि विंशतिवर्षमध्ये कृतापत्योत्पादस्यापि अपत्यैस्तस्य भरणोपयोग्यायुष्यलाभसंभवस्तदर्थं युगशब्दस्य वत्सरद्वयार्थत्वं परित्यज्य ज्यौतिषिकवेदांग ज्योतिषरीत्या पञ्चसंवत्सरमिति रूढार्थः स्वीकार्यः।

तथासति दशमयुगेन पञ्चाशद्वर्षाणि गृहीतानि भवेयुस्तथासति तावति काले पत्यानां पितृसम्भरणयोग्यकालप्राप्तिसम्भावना जराजीर्णत्वस्यापि संभावनात्। परन्त्वस्मिन्नर्थेऽपि अपामर्थं प्रति गन्तृत्वं तत्सारथित्वं च दीर्घतमस अर्थाविज्ञानात् स्पष्टार्थं न भवति। आदित्यस्यैवैकस्य स्तव इति प्राचीनमतविरोधश्चेति।

तस्मादत्रादित्यपरत्वेन व्याख्यानं, तथा सति दीर्घतमाः उचथ्यस्य ममतायाः पुत्र आदित्य एव। स च ममतायाः पुत्र इति रात्रिसम्बन्धी प्रतीयते। ममताशब्दो रात्रिं बोधयति। ममतेति शब्दे मेति मता ममतेति व्युत्पत्तेः। तत्र मेति मशब्दस्य कृतह्रस्वस्य ग्रहणमर्थश्च शून्यभाव इति। यथा मखशब्दस्य व्युत्पत्तिर्गोपथब्राह्मण उच्यते मा खो मख इति। तत्र खेत्यनेनाकाशरूपं शून्यमभावरूपमुच्यते। तस्य पुनर्माशब्देनाभाव उच्यते। एवं सति अभावस्याभावरूपो मखशब्दार्थः। स चाभावः कस्येति विचारे मखशब्दस्य यज्ञनामसु निघण्टौ पाठेन यज्ञार्थकत्वं, यज्ञश्चादित्यरूप इति मखोऽप्यादित्यरूप एव। तथा सत्यादित्यस्याभावरूपत्वं मखशब्देनोच्यते इति प्रथमोऽभावस्तेजसो वक्तव्यः।

एवं च तेजसोऽभावस्याभावस्तेजोरूप इति मखशब्देन तेजः पूर्णत्वेनादित्य उक्तो भवति। एवं सति तेजसा पूर्णत्वस्य मखशब्देन ग्रहणे तद्राहित्यं गर्तशब्देन वर्ण्यमानं संगच्छते। तदुच्यते मैत्रावरुणसूक्ते दानुमत्या बृहन्तं गर्तमाशाथे इति। एवं च रात्र्या गर्तरूपत्वे तस्या मेत्येवं तेजोऽभावरूपत्वं गृहीतं भवति। मतेत्यनेन

स्वीकृतेत्यर्थेन कल्प्यमानता भवतीति ममता तेजोऽभावरूपिणी रात्रि स्त्रीत्वेन कल्पिता। तस्या आंगिरसस्य उचथ्यस्य सकाशत पुत्रा मामतेयो दीर्घतमा इति।

स च दीर्घतमा इति नामवशतो दीर्घतमोरूप, दीर्घतमश्च भुव पार्श्वद्वयेऽप्युच्चस्थाने सुमेरुकुमेरुरूपोभयोरपि सभवति, तथाप्यत्र मन्त्रे स सुमरुस्थलीयो भवति आंगिरसपुत्रत्वाभिधानात्। ऐतरेयब्राह्मणे प्रजापतेर्दुहितारोहकथाया दुहितु सान्ध्याया उषस कुमेर्वभिप्रायेण तस्यामारोहात्प्रजापतिना तत्रास्तम योत्तर वर्तमानैर्देवै रुद्रद्वारा वेध विद्ध प्रजापतिर्नक्षत्रात्मनावस्थित इति वर्णनात्तस्य कुमरावस्तोत्तर सम्भवोयतो रोहिण्या देवपु सुमरौ तस्योदये कुमरावस्तमय परवर्तिमृगनक्षत्रस्य तत्र सान्ध्योपसि सत्त्व, तस्य दशनतस्तत्रत्यैव् प्ट्यागमनस्यानुभवात्तस्य ग्रीस्देशीयपुराणे पर्जन्यनक्षत्रत्ववचनाद्वेदे कुमेरौ सर्वां रात्रि व्याप्य वृष्टिवर्णनस्य दर्शनेन तादृशत्व विज्ञायते।

एतद्विपये बहुलो विचार पूर्वं प्रदर्शित एव। अतएव स प्रजापतिर्विद्धस्तस्य रेत प्रवृत्ता देवताभिर्वैश्वानराग्निसाहचर्येण तत्सन्तापने घनीभावो य सपन्न स्तस्यादित्यरूपत्व ब्राह्मणे उक्तम यत्प्रथममुददीप्तत सोऽसावादित्योऽभवदिति। तत्र यत्प्रथम पूर्वाञ्चन तेज उद्दीप्त स कुमेरुस्थ आदित्यो भवदिति।

अतएव द्वितीयमुद्दीप्तस्य वारुणिभृगुरूपता। तत्परतार्द्वर्तिनो येऽङ्गारा ज्वलन्त उद्दीप्यन्त तेऽङ्गिरसोऽभवन्नित्युक्ति। तेषामङ्गिरामुचथ्यो नामैक। स उचथय उवथ्य· केवल शब्देन बोधनीय। तस्याक्षावरूपिण्या ममताया पुत्रोऽपि दीर्घतमानामको दीर्घतमोरूप, तस्यापि मातापितृवत्कल्पिनमव पुत्रत्वम्।

तस्य तमोरूपस्य जीर्णत्व रात्र्या अवसानेऽपरदिनप्रारम्भे भवेत्, स च रात्र्या अवसानरूप परदिनप्रारम्भो मन्त्र उच्यते दशम युगमिति। तत्रोत्पत्त परस्ताज्जीर्णत्वस्योत्पत्तिमारभ्य जीर्णत्वावधि कालो दश युगानीति निर्दिश्यते। एव सति कथ तस्य कालस्य दशयुगरूपत्वमिति विचारणीयम।

तत्र सुमेरुकुमेर्वोर्मासपट्क यावद्दिन मासषट्कपरिमिता च रात्रि। रात्रावपि प्रारम्भे सावित्र पश्चादुपोरूपितसान्ध्यतेजस प्रत्येकमेकैको मास इति मासद्वय परस्तात्तमस प्रवृत्ति। तच्च तमो मासद्वयव्यापि। परस्तात्परदिनीयोप सविभोश्च मासद्वय काल इति कालक्रम। तत्र तमोमय कालो मासद्वयव्यापीत्युक्तमेव। तस्य स्थानान्तरापेक्षया तमस कालाधिक्येन दीर्घतमोरूपत्वम्।

तस्य च कालपरिमाणस्य मासद्वयस्य दशयुगत्वकल्पनाया दिनषट्क युगार्थत्वेन व्यवतिष्ठते। तथा सति दशमे युगे षष्टितमदिने मासद्वयावसानरूपे

जीर्णत्वं दीर्घतमस इति भवति । दिनषट्कमेव युगस्वरूपं तच्च प्रकारान्तरेणापि सिद्ध्यति । तथाहि सुमेरुकुमेर्वोरादित्य उदयन्न हठादुदितो भवति, न वाक्षपात-स्थलरूपविषुवसविधदेश इव कतिभिर्निमेषैरुदति, किन्तु तत्र प्रदक्षिणाप्रदक्षिणा-वर्तनैः कतिपयैरुदेति । तत्रत्यैका आवृत्तिरस्माभिर्दिनशब्देन व्यवह्रियते ।

तादृशैस्त्रिभिर्दिनैस्तस्योदयस्तत्र । आदित्यबिम्बस्य षष्टिकालात्मकैकांश-परिमितो व्यासः । तत्र षोडशकलात्मकं बिम्बं प्रतिदिनमुदितं भवति । अतएव तस्य षोडशकलः पुरुष इति व्यवहार उपनिपत्सु । तस्य बिम्बस्योदयार्थमावृत्तित्रयं पूर्णमुपयुज्यते ।

यद्यपि षष्टिकलात्मकबिम्बस्य आवृत्तित्रयेणाष्टाचत्वारिंशदेव कला उदिता भवन्ति, द्वादशकला अवशिष्यन्ते बिम्बस्य सम्पूर्णत्वाय, तावतापि तदर्थं पूर्णावृत्ते-रसम्भवेन खण्डितायास्तस्याः परित्यागेननावृत्तित्रयेणादित्यो वा तद्बिम्बं वोदितं भवतीति व्यवहारः । तत्रत्यानामावृत्तीनामृग्रूपत्वेन व्यवहारः ।

अतएवादित्यस्य सुमेरुकुमेर्वोरभिप्रायेण यज्ञरूपत्वेन दानरूपत्वाद्दानार्थ-मुपयुज्यमाना ऋक् याज्यारूपत्वेन वेदे व्यवह्रियते । सा याज्या दानरूपैवेति ऐतरेये उच्यते प्रत्तिर्वै याज्येति । एवं चर्चो दानात्मकत्वोक्तेर्दानावसरीयाऽन्तिमावृत्तिर्या-ज्यानामिकर्गिति वर्णनादावृत्तीनामृगात्मकत्वं विज्ञायते । तथा सत्यैतरेये स्थला-न्तरे साम्न ऋचश्च वाकोवाक्यस्योपपत्तिः ।

तत्रोच्यते—"ऋक् च वा इदमग्रे साम चास्तां सैव नाम ऋगासीदमो नाम साम. सा वा ऋक् सामोपावदन्मिथुन संभवाव प्रजात्या"[1] इति नेत्यब्रवीत्साम ज्यायान्वा अतो मम महिमेति, ते द्वे भूत्वोपावदतां तेन प्रति च न समवदत तास्तिस्रो भूत्वोपावदंस्तत्तिसृभिस्समभवद्यत्तिसृभिः समभवत्तस्मात्तिसृभिः स्तुवन्ति तिसृभिरुद्गायन्ति तिसृभिर्हि साम संमितमिति ।

एवं सति पूर्वोक्तरीत्या आवृत्तित्रयेण मण्डलोदयेन तिसृभिर्मितं मण्डलं भवति । मण्डलस्यैव सामरूपत्वं सामवेदीये तलवकारब्राह्मणे उच्यते तदन्यत्र प्रपञ्चितम् । एव चावृत्तित्रयेण मण्डलोदय इति भवति । मण्डलस्य चैकांश-व्यासता ।

अत एव वृत्ताकारभ्रमे मण्डलस्य दण्डनिपातन्यायेनैकस्मिन् वृत्ते षष्ट्युत्तरत्रिशतवारं सम्बन्धेनैकस्य वृत्तस्य तावन्तो भागा इति मन्यते, सम्मन्यते चायमर्थो यद् वृत्ते षष्ट्यधिकत्रिशतं भागा भवन्तीति । किमित्येतावन्त एव भागाः

१ ऐ. ब्रा. ३:२:१२.

प्रतिवृत्त कल्पनीया न न्यूना नाप्याधिका इत्यस्य प्रकारान्तरेण समाधानाभाव-वृत्तभागस्य चाक्षरशब्देन व्यवहार इति गृहीत्वा ऋड्मन्त्रे उच्यन्ते—

गायत्रेण प्रतिमिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् ।
नाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणी.[1] ।। इति ।

तत्र "गायत्रेण छन्दसा अर्कमृच मिमीते," 'अर्केण ऋचा साम मण्डल' मिमीत' इत्युच्यते । स गायत्र च छन्द एकाक्षरात्मक दैवम् । तदुक्त छन्दोग्रन्थे 'दैव्येकमिति' । ऋचि दैव गायत्र छन्द एकाक्षरात्मक अर्केण सामपानमिति । तत्तु उपर्युक्तब्राह्मणेनोक्तमेव सति सुमेर्वादावावृत्तित्रयेण स्थूलतया बिम्बोद्गम इति ऋक्त्रय सामसमितमिति यज्ञे गानावसरे ऋक्त्रयेणैक साम गीयते इति वचनम् ।

तत्र तावता पूर्णबिम्बसग्रहो न भवतीति बिम्बद्वयेन सविधवर्तिना दण्डनिपातन्यायेन पूर्णबिम्बसकलाशग्रहसम्भवमभिप्रेत्य बिम्बद्वयप्रत्यक्षात्मकस्य त्रिकद्वयरूपस्य वेदे युगशब्देन व्यवहार. स च सुमेराविव कुमेरावपि भवति ।

स चोक्त. काल एकस्मिन्वत्सरेऽनेकवारमावृत्तो भवति इति तस्यानेकत्वेन व्यवहारः । स च सुमेराविव कुमेरावपि भवतीति युगाना दैव्या मानुषा इति विशेषणम् । एव च दैव्यानि युगा युगानि सुमेर्वभिप्राये, कुमेर्वभिप्राये च मानुषा मनुष्यसम्बन्धीनि युगा युगानीति व्यवहारः ।

एव च युगशब्देनेदमेतावृत्तिषट्कात्मकषडहमान गृहीत्वा प्रवृत्तिः । तादृश मान चोक्तमन्त्रे दशमे युगे इति वर्णनाद्दशवारमावृत्त गृह्यते । तथा सति दश-युगानि नाम षष्टिदिनानि मासद्वय वेति लभ्यते । युक्त चैतदत्र तमसस्तावत्काल-मेवावस्थिते. । ततः पर तदसत्तया दशमयुगे, दीर्घतमसो जीर्णत्ववचन न विरुध्यते । तत. पर च रात्र्या. सम्बन्ध्युत्तरेऽवशिष्टे षष्टिदिनात्मके भागे मास-द्वयरूपे परदिनप्रारम्भोपसान्ध्यतेजस प्रवृत्ति. ।

तच्च तेज उषः शब्देन व्यवह्रियतेऽथवा उषा सवितेति भेदकल्पनया व्यव-ह्रियते । तत्र भेदकल्पे आद्यो भागो मासरूप औषसो द्वितीयो भाग उदयसन्निकटो मासात्मक सावित्र इति । एव चोषनसूक्तेषूषसा त्रिंशत्सख्यया व्यवहारः सदृशी-रित्यादिसूक्तेपूच्यमान. सगच्छते । एव सवितुर्मित्राभिन्नतया मैत्रोऽय भागा वृत्तीयो भवति तस्मिश्च भागे मैत्रीये उक्तषडावृत्यात्मकयुगरूपभागस्य पञ्चवा-रमावृत्त्या युगपञ्चक तत्र भवति, तस्य ग्रहण कृत्वा मंत्रेषु सूक्तेपूच्यते मित्राय पञ्च येमिरे इति ।

---

1. ऋ स. १:१६४:२४.

एवं चोक्ततमोमयकालतः परस्तात्परदिनीयस्योष आदिरूपस्य व्यक्तस्य तेजसः प्रवृत्तिरिति पूर्वदिनीयरात्रिसम्बन्धिभागस्यावशिष्टस्यामण्डलोदयं सत्वेऽपि तदीयतेजसोऽप्यत्र सत्वमोपेक्षणीयं तच्चाव्यक्तम्। अव्यक्तस्य तेजसोऽब्रूपत्वं तस्य तमोमयकाले तमोरूपेण वृत्रेण निरोधवचनं, वृत्रस्य हननेन तस्याव्यक्तस्य तेजसः प्रवृत्तिरिति वचनं, तत्राव्यक्ते तेजसि अप्त्वं तत्प्रदत्वात् वृत्रे मेघत्वमिन्द्रे वृष्टिप्रदातृत्वमिति कल्पनां विना नोपपद्यत इति अव्यक्ते तेजसि अप्त्वं प्रोक्तम्।

ताश्चापस्तमोमये काले पयगतेऽपि दिनान्तरीये व्यक्ते तेजसि प्रवृत्तेऽपि यथापूर्वं गच्छन्त्येव, तसां तद्गमनमवधिपर्यन्तं, स चावधिरादित्यमण्डलं, तस्यैव गमनावधेरर्थशब्देन व्यवहारः। तदुक्तं मन्त्रे अपामव्यक्तानां पूर्वदिनीयानां तेजसामर्थमवधिभूतमादित्यमण्डलं यतोनामसौ मामतेयो दीर्घतमा जीर्णत्वेनासमर्थः सारथिः समानरथयोगी भवति, येन मार्गेण ता आपो गच्छन्ति ताभिस्सह तमवधिं प्राप्नोति। भवति चैवं दिनान्तरीयस्य रात्रिसम्बन्धात्कृष्णरूत्वमुपगतस्य मण्डलं यावद्व्यक्तरूपेणादर्शनमिति।

उदीयमानमण्डलस्य पूर्वदिनीयतेजसोऽवधित्वेन कल्पनं देवानामाजिधावनकल्पनया विस्पष्टम्। आजिधावनेऽवधिरपेक्ष्यते, देवानामाजिधावने आदित्यस्यावधित्वेन वचनं वेदे यथा-"तेऽग्नेर्गृहपतेरादित्यं काष्ठामकुर्वत" इति। देवानां तेजोरूपत्वं तस्य तेजसोऽवधिरादित्य आदित्यबिम्बमिति। न च योऽत्र दशमयुगस्यावसानप्रदेशः स वत्सरे दशममासस्यावसानस्थलीय इति मासदशकेन वत्सरप्रवृत्तिसाधकं तदिति वाच्यम्।

तस्य वत्सरे दशममाससम्बन्धित्वेऽपि वत्सरस्य दशमासपरिमितत्वाभावात्। यद्यत्र वत्सरान्त उच्येत तर्हीतो वत्सरान्तरप्रवृत्तिर्वक्तव्या। एवं पूर्वरात्रिशेषे मासद्वयमुदयपर्यन्तमुदयमारभ्यास्तमयपर्यन्तं मासषट्कं ततो दिनावसानीयरात्रिप्रारम्भीयसवित्रोषसोर्मासद्वय तमोमयकालिकं च मासद्वयमिति वत्सरस्य २×६+२+२=१२ द्वादशैव मासाः साकल्येन प्राप्नुवन्ति न दशेवेति। अन्यथैतस्य मासद्वयस्य पूर्वोत्तरवत्सरान्तःपातो न स्यादिति असंलग्नकतापत्तिः स्यात्।

उक्तरीत्या मण्डलद्वयस्य युगरूपस्य सम्बन्धिदिनषट्कस्यैव युगकल्पनामभिप्रेत्य नाभानेदिष्ठकथोक्ताङ्गिरसां सत्रे षडहान्ते मोहोक्तिः संगता। तत्रोच्यते नाभानेदिष्ठस्य ब्रह्मचर्यं वसतो भ्रातरः पैतृकं धनं विभज्य गृहीतवन्तः। नाभानेदिष्ठो ब्रह्मचर्यतो निवृत्तो भ्रातृणां सविधे पैतृकं स्व भागं प्रार्थितवान। तदा तैः प्रत्याख्याय पितुः सकाशतः स्वो भागः प्रत्येतव्य इत्युक्तम्।

तेन पितृसविधे स्वभागप्रार्थने पित्रोक्तमिमेऽङ्गिरसः स्वर्गार्थं सत्रमनुतिष्ठन्ति, ते प्रतिषडह मुह्यन्ति तानेते सूक्ते शंसय, ततस्ते कर्मानुष्ठाय स्वर्यन्तः

स्वीय यागार्थं सञ्चित धन तुभ्य दास्यन्ति इति। अङ्गिरसा षडहे मोहकारण किमपि नोक्त केवल सूक्तद्वयशसनेन स्वर्गप्राप्तिफलोत्कीर्तनात्तत्सूक्तद्वयशसनेन मोहनिवृत्तिर्ध्वन्यते।

तस्याय भाव:—अत्र स्थूलेन मानेन मण्डलस्योदयार्थं प्रदक्षिणात्रय गृहीत तावता पूर्णमण्डलसंग्रहो न जात इति तदर्थं द्वितीयवार मण्डलसम्बन्धेनापेक्षिताना तिसृणा प्रदक्षिणाना योजनेन तत्सघद्वयग्रहणे पूर्वोक्तप्रदक्षिणात्रयापेक्षया-ऽवशिष्टभागस्य लाभेऽपि तदधिकभागस्य प्रवृत्या त दण्डनिपातन्यायेन द्वितीय-बिम्बीयभागस्यापि पूर्णबिम्बयोगाय पुन: पूर्वोक्तन्यायेन प्रदक्षिणात्रययोगेऽपि न द्वितीयबिम्बस्यैवावशिष्टभागमात्रलाभ: किन्तु दण्डनिपातन्यायेन तृतीयबिम्ब-भागप्राप्तिरधिका भवेत्।

तदर्थं पूर्वोक्तप्रथमषट्प्रदक्षिणारूपदिनषट्कयोगोत्तर द्वितीयबिम्बीयसकल-भागलाभार्थं केवलमेका प्रदक्षिणा चेदधिका गृह्येत तावतापि न भक्षितलशुन-न्यायातिपात:। पुन: कलाष्टकस्याधिकस्यावशेषादिति प्रतिषडहान्तमनुष्ठान-सामञ्जस्यसम्पादननिर्णयाभावेन मोहोऽङ्गिरसाम्। तन्निरासश्च सूक्तद्वययोग-श्चेदधिक. क्रियते तेन पूर्वोक्तवैषम्यनिरासेन व्यामोहनिवृत्या पूर्णानुष्ठानेन कर्मण. फल स्वर्गलाभप्राप्तिरिति।

तस्याय भाव.– प्रतिवेद प्रदक्षिणात्रितयद्वयरूपयुगग्रहणे वत्सरान्तेऽन्तिम-युगेन निरवशेषबिम्बभागलाभेन षडहावर्तने न कोपि दोषो वत्सरोपलब्धौ केवल षडहस्वरूपे निखिलभागलाभकल्पनार्थं केवल सूक्तद्वयस्याधिकस्य योग. कर्तव्यो-ऽनुषङ्ग, तावता तत्र पूर्णलाभकल्पनासम्भव:।

तथा हि आदित्यस्य रश्मियोगस्त्रिधा—पाश्चात्य:, पौरस्त्य: सम्मुखीनश्च, तत्र पाश्चात्यस्य वन्दनादिशब्दैर्व्यवहार:, पौरस्त्यानामीडनादिशब्दैर्व्यवहार: सम्मुखीनस्याह्वानादिशब्दैर्व्यवहार इति पूर्वमुक्त तत्र प्रतिप्रदक्षिणमावृतावेव-रूपस्त्रिविधरश्मियोग:। रश्मियोगस्य स्तुतिशब्देन ग्रहणमिति षडहान्ते प्रदक्षिण-द्वयेन तत्सम्पत्तिमिव इति प्रतिषडहान्त स्तुतिद्वयमधिक प्रयोक्तव्यम्। स्तुतिश्च सूक्तेन पूर्णा भवतीति सूक्तद्वयप्रयोगेण पूर्वोक्तवैषम्यनिरास इति।

तच्च सूक्तद्वय नाभानेदिष्ठसम्बन्धिप्रकृतानुगुणमिदमिति विशिष्टमेव तच्छ्रशनीयमिति। एव च षडहरूपयुगस्य युगशब्देन ग्रहण तस्य च युगस्य सुमेरौ कुमेरौ च वत्सरे बहुवारमावृत्या बहुवचन सुमेर्वादिसम्बन्धबोधाभिप्रायेण दैव्या-मानुषा इति युगविशेषण मन्त्रेषु। किञ्च तस्य युगस्य सामान्येनैकवचनेनापि व्यवहार., पूर्व्यतिप्रभृतिविशेषणयोग.। उक्तविधविशेषणैर्यथा तद्बोध एव देवाना मानुषेत्यादिप्रयोगेणापि तद्बोध. सूक्तेषु, यथोच्यते—

देवानां नु वयं जाना प्रवोचाम विपन्यया ।
उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे[1] ।। इति ।

अत्र उत्तरे इति विशेषणम् । विशेषणे पूर्वोत्तरशब्दयोर्द्वन्दतया प्रयोगात्पूर्वशब्दस्य पूर्वाञ्चनार्थकत्वेनोत्तरशब्दस्य प्रत्यगञ्चनार्थत्वं उत्तरदिक्स्थत्वार्थकदेवतासम्बन्धार्थकत्वं वा ग्रहीतव्यम् । एवं च वय देवानां जाना जातानि जन्मानि नु यद्यपि जानीमहे इति शेषः, तथापि विपन्यया स्तुत्या प्रविरुद्धदिक्सम्बन्धन वोचाम उक्तवन्तः ।

तत्रायमभिप्रायः—यदोत्तरे युगे उत्तरस्यां देवानां यागानुष्ठानं तत्र शस्त्रशंसनं स्यात्तदानीं शस्त्रेषु उक्थ्येषु शस्यमानेषु यः कोऽपि तानि देवानां जन्मानि पश्यात् जानातु इति । अत्रोत्तरशब्दो युगसामान्यार्थविशेषणम् । एव देवानां पूर्व्ये युगे सतः सदजायत । देवानां युगे प्रथमे सतः सदजायत इत्यत्रापि पूर्व्यशब्देन पूर्वाञ्चितस्य दक्षिणदिक्सम्बद्धस्य कुमेरुसम्बद्धस्य ग्रहणेन युगविशेषणम् ।

प्रथमेऽर्थे पूर्व्ये इत्यनेन कुमेरुसम्बन्धस्य वचनादुत्तरेऽर्थे प्रथम इत्यनेन प्रथमसृष्ट्यवसरीयार्थकत्वं प्रथमशब्देन बोध्यते । तथा च देवानां प्राथमिकसृष्टौ सद्रूपमादित्यमादित्यमण्डलमसतोऽव्यक्तरूपात्तेजसः सकाशादजायत । देवानां पूर्व्येऽर्थाद्दक्षिणदिक्के कुमेरुसम्बद्धेऽसतोऽव्यक्तादादित्यमण्डलात्सत्तत्र विद्यमानमादित्यमण्डलं सोमरूप समभूत् । उच्यते च वेदे आदित्यसकाशतश्चन्द्रमस उत्पत्तिरादित्ये विलयश्च । आदित्यमण्डलस्य च सर्वविश्वव्यापिनोऽव्यक्तात्तेजसः समुत्पत्तिः । तदुक्तं नासदीये, एवं तत्र प्रथमो मन्त्रः—

नासदासीन्नोऽसदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् ।
किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्[2] ।। इति ।

अत्र तदानीमित्यनेन सकलभुवनसृष्ट्यादौ सदपि नासीदसदपि नासीत् रज आदिकं व्योम तत्परतादित्यपि किमपि नासीत् । अत्रावारणावार्य भावोऽपि नासीत् न किञ्चिदावारकमावार्यम् । आवरणे देशश्चेत्यादिकं किमपि नासीत् ।

एवं सति असतः पूर्वम् आदित्यस्य सत उत्पत्तिरिति गृहीत्वोक्तं मन्त्रे—देवानां प्रथमे युगे देवाभिप्रायके प्रथममण्डलकल्पनाभिप्रायके युगे उत्पद्यमानरूपमादित्यमण्डलमसत एवोत्पन्नम् । ततः पृथिव्याद्युत्पत्तिक्रमेण पूर्व्ये पूर्वाञ्चनभावादिरूपे कुमेरुस्थे आदित्यमण्डलसंपाद्ये युगे तस्यादित्यमण्डलस्य सद्रूपस्य देवलोके सतः सद्रूपान्मण्डलादेवोत्पत्तिरिति । तदुक्तं मन्त्रे देवानां पूर्व्ये उक्तरूपे

१. ऋ. सं. १०:७२:१
२. ऋ. सं. १०:१२९:१

पूर्वाञ्चने युगेऽसतोऽविद्यमानादेवादित्यमण्डलात्सत्कुमेरौ दृश्यमादित्यमण्डलमजायतेति ।

अथ भाव वस्तुत आदित्यस्यैकत्वेऽपि देशादिभेदेन भेदकल्पनया भिन्नस्य तस्योदय उत्पत्तिरिति वर्णना । सा कुमेरौ सुमेरौ विद्यमानात्सत आदित्यरूपात्कुमेरस्थस्येति सत मदुत्पत्तिवर्णनम । सुमेरौ तु भुवोऽभावकाले कुमेरस्थमण्डलस्याप्यभावेन तत सुमेरस्थमण्डलस्योत्पत्तेवर्णयितुमशक्यत्वेन न तस्य सत सत उत्पत्तिसम्भव इति । एव च तत्र मन्त्रेऽपि युगशब्देन पूर्वोक्त एवार्थो गृह्यते ।

अत एव—

यज्ञ पृच्छाम्यवम स तद्दूतो विवोचति ।
क्व ऋत पूर्व्यंगत कस्तद्बिभर्ति नूतनो वित्त मे अस्य रोदसी ॥

इति मन्त्रेऽवमयज्ञपृच्छा, तत्र पूर्वं विद्यमानस्य ऋतस्य गमनदेशजिज्ञासा को वा नूतनस्तद्बिभर्ति इत्यादि वर्णनमुपपद्यते । तत्र पूर्वनूतनशब्दयोर्विरुद्धार्थत्वादिकमपि अग्नि पूर्वेभिरित्यत्रोक्तमुपपद्यते इति । एतावता युगशब्दो न कृतादिकालबोधक उक्तस्थले किन्तु दैव्या मानुषेत्यादिविशेषणनोक्तविद्यमण्डलसम्बन्ध सपाद्य षडहकालरूपयुगबोधकस्य च सुमेरसम्बन्धमिव कुमेरुसम्बन्धमपि बोधयतीति नैकमात्रस्थानबोधकता तस्येति ।

एव स्वनयदानसूक्ते दशरथेत्यत्र रथशब्देन युगस्य ग्रहणेन तत्र वधूमत्वमुच्यमान सगच्छते । तस्य दशरथस्य शोणा इत्यादिवर्णनस्यापि तदैवोत्पत्तिरिति युगस्य रथशब्देनापि बोध इति शम् ।

१. ऋ स १·१०५·४

# अथ चतुर्थो विवेकः

## १. अदितिकश्यपयोस्सृष्टि विवेचनम्

कश्यपात् सकलं जगदित्याहुः । तमेतं कश्यपं व्याख्यास्यामः—

सूर्य्यकिरणानां परस्परसघर्षणादुत्पन्नाः सूर्य्यकिरणस्थाना आपो मरीचय उच्यन्ते । तत्प्रत्यक्षकर्त्ता विद्वानपि यशोनाम्ना मरीचिरुच्यते । तस्य मरीचेर्विदुषः पुत्रः कश्चिद् विद्वानासीत् स कूर्म्मं नामादित्यमपश्यत् । येन रूपेणायमादित्यः सृष्टिं सृजति तद्रूपावच्छिन्नोऽयमादित्यप्राणसंघातः कूर्म्मः प्राणमयः सप्तपुरुषः पुरुषः प्रजापतिः, अतश्चैष कूर्म्मः प्रजापतिः ।

कश्यपपश्वाकारो हि तद्रूपम । तद्रूपावच्छिन्नस्तु प्राणो लोकत्रयानुविधैत-द्विधघृतमध्वात्मकरसत्रयसध्रीचीनो द्यावापृथिव्यः । एषां च रसानां त्रिलोक-व्यापिनीष्वप्सु प्रविष्टैः सूर्य्यप्राणविशेषैः समन्वयात् परिपाकाच्च तत्र तत्र लोके प्रत्युत्पत्तिरिति मधुविद्यादिभिरवगम्यते । स एष कूर्म्मो नाम रसत्रयरूपाकारित एवादित्यप्राणः सर्वविधपिण्डजातानामुत्पत्तिहेतुरुपपद्यते ।

तथा च वाजिश्रुतौ श्रूयते—

'सोऽयं पुरुषः प्रजापतिर्ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याम् । सैवास्मै प्रतिष्ठाऽभवत् तस्यां प्रतिष्ठायां प्रतिष्ठितोऽतप्यत । सोऽपोऽसृजत । सोऽनया त्रय्या विद्यया सहापः प्राविशत् । तत आण्डं समवर्तत । ततो ब्रह्मैव प्रथममसृज्यत त्रय्येव विद्या । मुखं ह्येतदग्नेर्यद् ब्रह्म । अथ यो गर्भोऽन्तरासीत् सोऽग्निः । अथ यत्कपालमासीत् सा पृथिव्यभवत् । तां संक्लिश्याप्सु प्राविध्यत् । तस्यै यः पराङ्रसोऽत्यक्षरत् स कूर्म्मोऽभवत्[1]" ।

अपि च श्रूयते तत्रैव—

"रसो वै कूर्म्मः । यो वै स एषां लोकानाम् अप्सु प्रविद्धानां पराङ् रसोऽत्य-क्षरत् स एष कूर्म्मः । यावानु वै रसस्तावानात्मा । स एष इम एव लोकाः । तस्य यदधरं कपालम् अयं स लोकः । तत्प्रतिष्ठितमिव भवति, प्रतिष्ठित इव

१. श. ब्रा. ६:१.

ह्यय लोकः। अथ यदुत्तर सा द्यौः। तद् व्यवगृहीतान्तमिव भवति। व्यवगृहीतान्तेव हि द्यौः। अथ यदन्तरा, तदन्तरिक्षम्। स एष इम एव लोकाः। तमभ्यनक्ति दध्नामधुनाघृतेन। दधि हैवास्य लोकस्य रूपम्, घृतमन्तरिक्षस्य, मध्वमुष्य। दधि हैवास्य लोकस्य रसो, घृतमन्तरिक्षस्य, मध्वमुष्य। स यत्कूर्म्मो नाम। एतद्वै रूप कृत्वा प्रजापतिः प्रजा असृजत। यदसृजत अकरोत्तत्। यदकरोत् तस्मात्कूर्म्मः। कश्यपो वै कूर्म्मः। तस्मादाहुः—सर्वा प्रजा काश्यप्य इति। स यः स कूर्म्मः। असौ स आदित्यः। प्राणो वै कूर्म्मः। प्राणो हीमा सर्वा प्रजा करोति। द्यावापृथिव्यो हि कूर्म्मः। अवका अधस्ताद्भवन्ति, अवका उपरिष्टात्। आपो वा अवका[1]" इति॥

इह हि कश्यपस्य द्यावापृथिवीभ्यामभिसम्बन्धो लभ्यते। द्यावापृथिवीशब्दस्य च प्रवृत्तिर्यद्यपि दृश्यकपालाण्डकपालायतनसामगुक्रभेदात् पञ्चलक्षणरहस्ये व्याख्याता, तथाप्यत्र समवतो दृश्यकपालानुगते एव ते गृह्यते। तल्लक्षण च श्रूयते हविर्यज्ञब्राह्मणे—

तद्वा एष एव वषट्कारो य एष तपति। स उद्यन्नेवामूमधिद्रवति। अस्तयन्निमाम् द्रवति। तस्या अमुष्या अवस्ताल्लक्ष्मचन्द्रमा नक्षत्राणि सूर्यः। अथोपरिष्टाल्लक्षणा पृथ्वी। तस्या अस्या उपरिष्टाल्लक्ष्म—ओषधयो वनस्पतय आपोऽग्निरिमाः प्रजाः[2]" इति।

अयमत्राभिसन्धिः। क्वचित् प्रान्तरे निरावरणप्रदेशेऽवस्थाय द्रष्टुः सर्वतः समतलमण्डलात्मकाधःकपालरूपया पृथिव्या सलग्नावनतप्रान्तोन्नतमध्योर्ध्वकपाला नीलवर्णा हीयं द्यौर्दृश्यते। तथा च विमिदृशकपालद्वयात्मिका सेयमुभयी द्यावापृथिवी सर्वस्यैतस्य दृश्यप्रपञ्चस्यावपनभूता भवति। तयोरूर्ध्वाधरकपालयोरन्तरालो यदावपनं तदन्तरिक्षम्। तथा चैतत् कपालद्वयावच्छिन्न यदन्तरिक्ष तदवच्छिन्नो यः प्राणघनः स कूर्म्म इत्याह "द्यावापृथिव्यो हि कूर्म्मः" इति।

तद् द्रष्टुः स्थित्युपलक्षितभूमिबिन्दुस्तद् दृश्यान्तरिक्षावच्छिन्नस्य कूर्म्मप्राणस्य साक्षी भवति। तद्बिन्दुसाक्षिकः कूर्म्मस्तद् बिन्दूपलब्धजन्मनः प्राणिनो जन्मदाताऽवसीयते। यावदेव हि द्रष्टा दृश्यतेऽन्तरिक्ष तदवच्छिन्नः प्राणघन एव तत्र जन्मोपधायकबिन्दौ सन्निधत्त।

तद्देशे जायमान स्तावतैवप्राणघनेन कृतात्मा भवतीत्यतस्यस्य प्राणघनस्य कर्तृत्वात् कूर्म्मशब्देन व्यपदेशः। कश्यपाकृतिश्च स नित्य दृश्यते। तस्मादसौ

---

१. श. ब्रा. ६:१.१.
२. श. ब्रा. १:५:३

लक्षणया कश्यपशब्देनापि व्यपदिश्यते । यद्वा यथाकृतिः कश्यपस्तथाकृत्या संनिविष्टः प्राणः कश्यपो वेदितव्य इत्युक्तं भवति । एष च कश्यपशब्दःवषट्कारः स्वरूपसमर्पकः ।

**कश्यपशब्द निर्वचनम्**

कच्छपशब्देन कमठशब्देन वा प्रसिद्धे पशुविशेषे रुढः । कशामर्हति कश्यः स्कन्धाधस्तलदेशः कच्छ इति प्रसिद्धः । तेन पिबतीति वा कश्येन पादौ गोपयन्नात्मानं पातीति वा व्युत्पत्तेः । इत्थं चाकृतिसाधर्म्याद् द्यावापृथिव्ये कूर्म्मे-कश्यपशब्दस्य, कश्यपे च तस्मिन् पशौ कूर्म्मशब्दस्य व्यतिषङ्गेन प्रवृत्तिः । अथवा मुख्ययैव वृत्या कश्यपशब्दः कूर्म्मे वर्तते । श्रूयते हि—"कश्यपः पश्यको भवतीति" वर्णव्यत्यासेन च शब्दसिद्धिं नैरुक्ता मन्यन्ते, द्रष्टृ-दृश्ययोरन्योन्यसाममण्डलभोगादेव दर्शनसंपत्तेर्दृश्योऽपि दृष्टारं पश्यति साम्येनेति नियमाद् दृष्टिसिद्धस्यास्य द्रष्टृत्वोपपत्या पश्यकत्वसिद्धिः ।

यत्तु वैयाकरणा आहुः—पशिरयमादेशो न धातुः । स चापि सार्वधातुकविषयो नार्द्धधातुके प्रयोगमर्हतीति । तत्तुच्छम् । व्याकरणस्य सिद्धशब्दप्रतिपत्तावभ्युपायत्वेऽपि शब्दनिर्मापकत्वाभावात् । शब्दपरतन्त्रं हि व्याकरणम्, न त्विमे व्याकरणपरतन्त्राः शब्दाः इष्यन्ते । भाषाव्यवहारो हि व्याकरणे प्रमाणं भवति । तस्मिंश्च प्रमाणे दृष्टे न दृश्यते, लक्षणं चेत् तद्कार्त्स्न्यं व्याकरणस्य मन्यामहे । दृश्यते तु पश्यतेर्धातोरार्द्धधातुकेऽपि क्वाचित्कः प्रयोगः—असूर्य्यं पश्या राजदारा इति । पशुरिति । पश्यक इति । पश्यकं सन्तं कश्यप इत्याचक्षते परोक्षेण । स हि दृश्यकपालस्थो नित्य सर्वाः प्रजाः पश्यतीत्यत एव श्रूयते—"अच्छिन्नपत्राः प्रजा अनुवीक्षस्वेति" ॥

अथवा दूरस्थस्यापि सतो यदनया प्रजया नित्यं सम्बन्धस्तत्रेष्यते दृष्टिव्यवहारः । यथाहि—"आदेवो याति भुवनानि पश्यन्"—इति मन्त्रे सूर्य्यस्य द्रष्टत्व व्यवह्रियते तद्वत् । तेन दृष्यकपालस्था द्रष्टा प्राणघनो जायमान प्रजासम्बन्धात् कश्यप इति सिद्धम् ॥

नानाजातीयाश्चैते प्राणा भवन्ति । तेष्वयं कश्यपः किं जातीय इत्यत्राह—"यः स कूर्म्मः असौ स आदित्य" इति । यस्य विभक्तयो द्वादशादित्या उच्यन्ते स एषां द्वादशानामेकः प्रजापतिः संवत्सरो नाम प्राण एवादित्यः । स सूर्य्यायतनो विभुः । तत एवं सवत्सराददित्यामादित्या उत्पद्यन्ते दित्यां दैत्याः । ते हैते कश्यपस्य पत्न्यावुपचर्य्येते सहधर्म्मित्वात् ॥

अदितेश्चतुर्विधत्वम्

तत्र तावदियमदितिश्चतुर्धा व्याख्यायते—सूर्य्यमूला, द्रष्टृमूला, नक्षत्रमूला, आकाशमूला, चेति। तद् यथा–समसमुखयोः पृथ्वीसूर्य्ययोरनवरोधनं संस्थानम् अदितिः। अथैतद्विपर्य्यासे सूर्य्यस्य पृथिव्याऽवरोधनं संस्थानं दितिः। दो अव-खण्डने धातुः। तथा चैतत् सूर्य्याभिमुख्येन सूर्य्यज्योतिषि गच्छता पृथ्वीस्थाना-मम्भसामदितिस्थाने देवत्वं प्राप्तानामादित्यत्वं नियम्यते। एवमेव सूर्य्यतो विप-रीतदिशि पृथिव्यास्तमसि दितिस्थाने गच्छतामम्भसामसुरत्वं प्राप्तानां दैत्यत्व-मुपचर्य्यते। अपि च तस्मिन् पृथ्वीसूर्य्ययोः सामुख्ये दिवमारभ्य पृथ्वीतलपर्य्यन्तं ये यथाऽर्था अवस्थितास्तेषामशेषाणां संमिलितरूपस्येदमदितित्वं विज्ञायते। एतद-भिप्रायेणैव मन्त्रश्रुतिः श्रूयते—

"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्[1]" इति

अत्र पिता सूर्य्यमूलिका द्यौः पुत्रोऽग्निः

"द्यौः पितः पृथ्वी मातरध्रुगग्ने भ्रातर्वसवो मृडता नः।
विश्वेदेवा अदितः सजोषा अस्मभ्यं शर्म्म बहुलं वियन्त[2]"।

अथ द्रष्टृस्थित्युपलक्षितभूमण्डलोपलक्षितामके तामदितिमाहुः। तथा मते सर्वत्रैवाण्डकपालस्यार्द्धस्य दृश्यत्वमदितिरर्द्धस्य चान्यस्यादृश्यत्वं दितिः। तन्नै-तस्याः क्रमेण प्राचीमनुसरन्त्या रात्रावपि सत्तोपपद्यते। उक्तरीत्या सूर्य्यनित्याया स्थिरादित्या अभ्युपगमे तु—

'अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि
देवाँ उपप्रैत् सप्तभिः परा मार्तण्डमास्यत्[3]'

सप्तभिः पुत्रैरदितिरुपप्रैत् पूर्व्यं युगम्।
प्रजायै मृत्यवे त्वत पुनर्मार्ताण्डमाभरत्[4]'

इति मन्त्रद्वयोक्तया सूर्य्यत्यागपुनराहरणयोरसम्भवापत्तेः। तथा चैतस्या अदित्या सर्वां पृथिवीं, सर्वां दिवं, सर्वं चान्तरिक्षं संसृपन्त्या सर्वात्मकत्वं संपद्यते। तथा च श्रूयते—

---

१. ऋ वे १ ८९ १०  अथर्व-७ ६ १  मा स-२५ २३
तै. आ १ १३ २  नि ४ २३
२ ऋ व १ १९१ ६
३ ऋ स १० ७२ ८  तै आ १ १३ २  ताण्ड्य ब्रा २४ १ ६
४ ऋ स १० ७२ ९  तै आ १ १३ ३

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता स पिता सः पुत्रः ।
विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्[1]" इति ।

"इयं वै पृथिव्यदितिः" इति च ॥

अथान्ये पुनरेकस्मिन् संवत्सरे सूर्य्येण त्रयोदशकृत्वश्चन्द्रमण्डलसंयोगात्तत्संयोगविन्दुविभक्तासु त्रयोदशसु चन्द्रकक्षाखण्डरूपासु दाक्षायणीषु कश्यपस्त्रीत्वेनाध्यवसितासु नित्यामेव कांचिदचलामदितिमाचक्षते । तदायतनं श्रूयते-"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्वाहुभ्यां पूष्णो हस्ताभ्याम् । आददे नार्य्यसि"-इति स्वातीतारकोदये रेवत्यामस्तगतायामनस्तंगतायां चाश्विनीतारकायां यः खस्वस्तिकविन्दुश्चन्द्रमार्गस्थः सा हीयमदितिर्नाम । तेन पुनर्वसुनक्षत्रस्य तृतीयचरणमदित्याः स्थानं सुप्रतिपन्नं भवति तस्यैव तदानीं खस्वस्तिक भूतत्वात् । तद्वैपरीत्येन च निचृत्ताराक्षत्रविन्दोर्दितित्वमास्थेयम् तस्यैव तदानीमधःस्वस्तिकत्वात् । अन्याश्चैवमेकादशमिता दक्षसंज्ञकचन्द्रमार्गविभक्तयः कश्यपस्य सहयोगिन्यः कल्प्यन्ते ।

अथवा अश्विनीमारभ्य चित्रान्तमाकाशमण्डलं देवसंपत्याऽन्वितम् । अत्र हि मध्यस्थाया अदित्याः सप्त पुत्रा आदित्या नामोपपद्यन्ते । तेषामदितिपर्य्यन्त उद्ग्राभः । ततः पश्चान्निग्राभः । उद्ग्राभे यज्ञाः प्रवर्तन्ते । अदितिमध्यं हीदमाकाशमण्डलमुपलक्षणया अदितिर्विवक्ष्यते । तद्व्यतिरिक्तं तु स्वात्यारब्धरेवत्यन्तमाकाशार्द्धं दित्युपलक्षितमासुरसंपत्यान्वितं दितिर्विवक्ष्यते एताभ्यामेव द्वाभ्यां पत्नीभ्यां दित्यदितिभ्यां संयुज्यमानः स सूर्य्यसंवत्सरो नाम सर्वेषां जनयिता प्राणो यया संस्थया सर्वमिदं यथायथं जनयति तादृशसंस्थावच्छिन्नः कश्यप इत्युच्यते— इति सिद्धम् ।

स एष कश्यपः प्राणो नान्तरेण भूतसंवन्धमनाश्रितः क्वचिदवतिष्ठते इत्यत आह–"अवका अधस्ताद् भवन्त्यवका उपरिष्टादिति" । अप्सु ह्येषःकश्यपः प्रचरति तस्यावस्तादुपरिष्टाच्चापोभवन्ति । एवमयं प्राणो नित्यमद्भिः सम्पद्यमानः प्रचरति । ताश्चैता आपश्चतुर्विधा ऐतरेयके श्रूयन्ते—"अम्भो मरीचयो मर आप" इति । "अदोऽम्भः परेणदिवं, द्यौः प्रतिष्ठा । अन्तरिक्षं मरीचयः । पृथिवीमरः । या अवस्तात् ता आपः" इति ।

तत्रैष कश्यपो मरोचिभिः क्लृप्तशरीरो भवति । अत एवैनं मरीचिसुतं मारोचमाहुः पौराणिकाः । मरीचयश्चैताः सवित्राकृष्टाः सूर्य्यरश्मिस्था आपः ।

"सूर्य्यो मरीचिमादत्ते सर्वस्माद् भुवनादधि" एता वा आपः स्वराजो यन्मरोचयः" । इत्यादि श्रुतेः ।

---

१. य. वे. २५:२३

ताश्चैता मरीचयो लोकेभ्यस्त्रिभ्यः समाकृष्टैर्दधि-घृत-मधुभिः संश्लिष्य रसमय्यः सम्पद्यन्ते । या अधस्तादपां ता घनीभूतत्वाद् दधिमय्य । मध्ये च द्रवा स्निग्धा घृतमय्यः । अथ या उपरिष्टात्ताविरलावयवा. स्वादिष्ठा. मधुमय्य । एतानेव रसाननवरत सिञ्चन्नसौ भगवान् कश्यपात्मा प्राण । सर्वमिद चराचर-मेतैरेव दधि-घृत-मधुभि. रसैः कृतशरीर जनयति । सर्वेषामेव प्राणिना शरीराणि दध्ना घृतेन मधुना चोत्पद्यन्ते, कठिन प्रायैर्द्रवप्रायैं पवनप्रायैश्चाङ्गै. सपन्नत्वात्, मासेन श्लेषणीय वसारसेन शर्कराभि. स्पष्टमुपपन्नत्वाच्च । पुनश्चैनानुपाहरन्ना-त्मसात् कुर्वन् स एतत्रिरसमयमेव सर्वदा रूप धत्त । तदाह—"यावानु वै रसस्ता-वानात्मा"इति । स यावदस्मिन् दधिरसस्तावानय लोक , यावद घृतरसस्तावदन्त-रिक्षम् । यावद्वा तस्मिन् मधुरसस्तावानसौ लोक' । तदाह—"स एष इम एव लोका " इति । अत एव त्रयो रसा अद्भ्य शरीरनिर्म्माणे साधनद्रव्यम् । तैरेव रसै. कृतशरीर. सर्वं शरीरेरा सयुज्योत्पद्यते इत्यत आह—"सर्वा प्रजा काश्यप्य" इति । कश्यपेनोत्पादिते वसिष्ठादिभिर्विशेषा आधीयन्ते । स एष कश्यपो जनक सर्वेषा देवमनुष्याणा तिरश्चा च भूतानाम् । तदित्यमय सर्वजनको रसत्रयात्मा मारीचोऽर्द्धमण्डलाकार सवत्सर प्राणघन कश्यप इति निष्कर्ष । तमेत कूर्म्मं कश्यप पश्यन् ऋषिरभ्यनूवाच—

"अपा गम्भन्त्सीद, मा त्वा सूर्योऽभि ताप्सीन्माग्निर्वैश्वानर" ।
अच्छिन्नपत्रा' प्रजा अनुवीक्षस्व, अनुत्वा दिव्या वृष्टि. सचताम्" ॥

"त्रीन् समुद्रान् समसृपत स्वर्गानपा पतिर्वृषभ इष्टकानाम् ।
पुरीष वसान. सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परे ता." ॥

"एतद्वचपा गम्भिष्ठ यदेष एतत्तपति । इमा वै सर्वा. प्रजास्ताअरिष्टा अनार्ता अनुवीक्षस्व । इमे वै त्रय समुद्रा स्वर्गालोका । तानेष कूर्म्मो भूत्वा-ऽनुससर्प । पशवो वै पुरीषम् । पशून् वसान[1] "—

इति हि तद् ब्राह्मण भवति एष खलु कश्यपप्राण पश्यकोऽस्तीति रसत्रय-दृष्ट्याऽनवरत सर्वा' प्रजा अनुवीक्षते । इत्येकमस्य व्रत भवति

अपि च 'यथा सुदीप्तात् पावकाद् विस्फुलिङ्गा सहस्रश प्रभवन्ति सरूपा । तथाऽक्षराद् विविधा सौम्यभावाः प्रजायन्त तत्र चैवापि यन्ति" ।

इति श्रुतेरपरिमितादक्षरतो योगमायापरिमितोऽक्षरभाव. प्रजायते । स वाङ्मय । मनोमयप्राणगर्भिताया वाचोविश्वयापित्वादनल्पत्वेपि योगमाया-

---

२. श. ब्रा. १०:३.२

वच्छेदात् सत्यरूपेणोत्पत्तौ तद्धृदये ब्रह्मप्रजापतेः प्राणोऽस्य संघर्षाद् वाचोविकारेणापामुत्पत्तिः। तासां पुनरन्तरान्तरतो घनीभावक्रमेण त्रयः समुद्राः समपद्यन्त आपो वायुःसोम इति। एष च सोमो घनीभूतप्राणसंघर्षेण प्रज्वलन्नपां हृदयेऽग्निः प्रादुर्भवति सोऽग्निसाहस्री सूर्य्यो भवति। तस्यैतस्य सूर्य्यस्य पटपर्वा संस्था समपद्यत। सर्वान्तरतो हिरण्मयप्राणघनो विम्वः। तद्वहिः परितो ज्योतिः संस्था। तद्वहिः परितः सोमेन वायुना अद्‌भिश्चोपपन्ना समुद्रत्रयसंस्था। तद्वहिर्वाचःसंस्थेति। तत्रैतांस्त्रीन् समुद्रानेप कश्यपप्राणोऽनुसंससर्प। इतिद्वितीयमस्य व्रतं भवति।

अथ सूर्य्यादिप्राणमयभूतैः पशुभिरयं पर्य्यावृतो भवतीति तृतीयमस्य व्रतं भवति।

स इत्थमयं कूर्म्मप्राणोऽन्तरिक्षद्यवि सूर्य्यद्यवि सोमद्यवि च संनिविष्टो व्याख्यातः।

अपिच—कश्यपस्य स्वर्विदो यावाहुः स युजाविति। ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य" इति मन्त्रवर्णः श्रूयते। तत्र द्यावा पृथिव्योर्वा मित्रावरुणयोर्वा सयुक्त्वं द्रष्टव्यम्। ज्योतिर्विदां समये तूत्तरा स्वर्गमण्डले भवत्येकाकाश्यपतारा द्वाभ्यां ताराभ्यां संयुक्ता। "अग्निः पुच्छस्य प्रथमं काण्डं तत इन्द्रस्ततः प्रजापतिरभयं चतुर्थम्" इति श्रुतावपि कश्यपस्यैव प्रजापतिशब्देनाभिधानमिति दिक्।

तदित्थमेतत्कश्यपप्राणे द्रष्टरि कस्मिंश्चिद्विदुषि कश्यपशब्दो भक्त्या प्रयुज्यते। तदिदमेतस्य विदुषः कश्यपप्राणद्रष्टृत्वनिवन्धनं यशोनामाऽवगन्तव्यम्। स चायं मनुष्यविधः कश्यपो महर्षिः स्वर्गलोकस्थ एवासीत्। "कश्यपस्य स्वर्विदो या वाहुः सयुजावितीति" मन्त्रश्रुत्या तथावगतेः। स्वर्गप्रदेशे च तस्याश्रमो ब्रह्मपरिषत्स्थानं वा कुत्रासीदिति विशिष्य न श्रूयते। पौराणिकास्तु— पामीरनाम्नः प्राग्मेरोः पूर्वेण विकङ्कमणिशैलयोः पर्वतयोरन्तरद्रोण्यां चम्पकवनं प्रागासीत्। तत्रैतस्य कश्यपस्य प्रजापतेराश्रमो ब्रह्मपरिषद्वा बभूवेत्याहुः। तथा च वायुपुराणम्—

"विकङ्कस्याचलेन्द्रस्य[1] मणिशैलस्य चान्तरे।
विपुलं चम्पकवनं सिद्धचारण सेवितम्॥

तत्राश्रमं भगवतः कश्यपस्य प्रजापतेः।

---

१. वा. पु. पु. ३७

सिद्ध साध्यगणाकीर्णं नानाश्रुतिविभूषितम्" इति (पु. अ. ३७)

साहित्यिक योगदानम्

तत्र निवसता भगवता कश्यपेन प्रणीतैवा मन्त्रसंहिता दृश्यते। तस्या च कश्यपसंहितायां कश्यप एक:, कश्यपपुत्रा अष्टौ, योषितौ द्वे इत्येवमेकादशर्षयो भवन्ति। तत्र तावदयं कश्यपो मारीच एकोत्तरर्चेन सूक्तसहस्रेण वा त्रिष्टुभैकया वा जातवेदस नामाग्नि ततोऽपरैर्बहुभि: सूक्तैरिन्द्र च तुष्टाव। द्वचाद्या सहस्रर्चान्त सूक्त नानाविध भवेत्। नव नवति पञ्चलक्षा ऋच स्यु स चतुश्शतम्"। जातवेदस्य सूक्तसहस्रमेके ऐन्द्रात्पूर्व कश्यपार्ष वदन्ति। जातवेदसे सूक्तमाद्यन्तु तेषामेकभूयस्त्व मन्यते शाकपूणि[1]। इति बृहद्देवताया शौनकोक्ते.। दशभिर्विश्वान्देवान् एकपञ्चाशता पवमान तुष्टावेति द्वाषष्टिमन्त्र कश्यपार्ष प्रथम पर्व। अथासितदेवलौ काश्यपावेकादशभिरग्निमग्नि, द्वापञ्चाशेन शते पवमान तुष्टुवतु। त्रिषष्ट्यधिकशतमसितदेवलार्षम्। अवत्सार काश्यप पञ्चदशभिर्विश्वान्देवान्,। द्वात्रिंशता पवमानमिति सप्तचत्वारिंशता वत्सारार्षम् निध्रुविस्त्रिशता पवमान रेभ पञ्चदशभिरिन्द्र, रेभसून् काश्यपौ सप्तदशभि पवमान, विवृहापड्भिर्यक्ष्मघ्न भूताश एकादशभिरश्विनौ, द्वे शिखण्डिन्यौ, काश्यप्यावप्सरसौ षड्भि पवमान तुष्टावेति पञ्चनवत्यधिकशतद्वयेनोत्तर कश्यपार्ष द्वितयपर्व तादित्थ सप्तपञ्चाशानित्रीणि शतानि काश्यपी संहिता पूर्णा।

स एष वेदग्रन्थ. स्वर्ग्य. स्वर्गागतो द्रष्टव्य। तन्निर्म्मातु कश्यपस्य महर्षे स्वर्गनिवासित्वाद्, अत्रवर्णनीयाना मनुष्यदेवाना भौमस्वर्गवासित्वात्, प्राणदेवाना सूर्य्यस्वर्गवासित्वाच्च। यद्यपि कश्यपस्यारिष्टनेमिरिति नामान्तर पौराणिकै स्मर्य्यते किन्तु कश्यपोऽरिष्टनेमिरित्येतौ पर्य्यायवाचिनौ न। स्थेयौ। अरिष्टनेमेर्यदृच्छाशब्दत्वात्। कश्यपशब्दस्तु गोत्रनिबन्धनो जातिशब्द। त्रयोदशकश्यपावभूवु तेषामेक: कश्चित् अरिष्टनेमि स्यात्। प्रकृते तु नायमरिष्टनेमिकश्यप षष्टिमितासु दक्षकन्यासु त्रयोदशाना कश्यपाय, चतसृणा त्वरिष्टनेमिने पार्थक्येन प्रदानाख्यानात्। तस्मादयमज्ञातनामाकश्चित् कश्यपो ध्येय: ।।इति।।

९. "कुम्भे रेत' सिषिचतु. समानमित्यादि मन्त्रांशव्याख्यानम्

वसिष्ठ इति ऊर्जाशक्तिमति प्राणविशेषे रूढ: शब्दस्तत्प्राण द्रष्टरि पुरुषविशेष तद्वंशधरे च भक्त्या प्रयुज्यते। तस्येद यशोनाम विद्यात्। वसिष्ठ-

---

१ बृ दे. १०

प्राग्द्रष्टृत्वयशसैव तत्र वसिष्ठशब्दस्य लोके प्रसिद्धेः। तद्वंशधरे तु व्यक्तिमात्रे योनिसम्बन्धाद् वसिष्ठशब्दो गुणसम्बन्धाद् वसिष्ठशब्दश्च प्रवर्तते। वसिष्ठेति यशोनाम्ना चिरप्रख्यातेरस्यादिवसिष्ठस्य वैधं मातापितृकृतं यादृच्छिकं नाम न क्वापि स्मर्यते इति व्यवहाराभावाच्चिरेण विलुप्तमेवाभूत्। यत्तु-"आपव" इति वा "आप्सव" इति वास्य प्राचीनं नामान्तरं स्मर्यते, तदप्यान्तरिक्षस्य ताराह्रूपस्यव नाम स्यात्। तस्यात्सूत्पत्तेरद्भिर्गुण विशेषसम्बन्धाच्च, न त्वस्य मनुष्यविधस्य तादृशं नाम सम्भाव्यते इति बोध्यम्॥

एप च वेदमन्त्रद्रष्टा महर्षिर्वसिष्ठः पुरा कुत्र देशे निवसितस्मेति चिन्त्यते। तत्रास्य वसिष्ठस्य—

क्व त्यानि नौ सख्या बभूवुः स चावहे यदवृकं पुरा चित्।
बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते[1]॥

इत्यादि श्रुतेः वरुणदेवेन सह सख्यसंस्रव विषयश्रवणात् स्वर्गस्थितोऽयं स्यादिति केचित्। तन्न, मनुष्यलोकस्थस्याप्यस्य स्वर्गे गमनागमनयोगाद् वरुणेन संस्रवसंभवात्। "प्र मे पन्था देवयाना अदृश्रन्" इति वसिष्ठोक्त्या वसिष्ठदृष्टानां देवयानानां दूरदेशान्तरस्वत्वप्रतिपत्त्या वसिष्ठस्य स्वर्गेतरदेशस्थ त्वावगमाच्च।

भारतवर्षे पुष्करतीर्थसंनिधावर्बुदाचले तदाश्रम आसीद् इति परे। तदपि नातीव युक्तम्। वसिष्ठवंश्येष्वपि वसिष्ठशब्दप्रयोगादुत्तरकालिकस्य कस्यचिद्वसिष्ठस्य तत्रार्बुदाचले तपःस्थानत्वसंभवेऽपि वेदमन्त्रद्रष्टुरादिवसिष्ठस्य तत्राश्रमे प्रमाणाभावात्। यद्ययमर्बुदगिरावभविष्यत् तर्हि ध्रुवमयमर्बुदमपि मन्त्रे न्यरूपयिष्यत्।

परे तु पुरूरवः पौत्रस्यायुपुत्रस्य नहुषस्य सिन्धुनदात् पश्चिमप्रान्ते पञ्चगौर प्रदेशीये प्रतिष्ठानपुरे जन्मवतोऽतिसंनिहिते वसिष्ठाश्रमे शैशवकालीन परिचर्यालालनपालनादिस्मरणात् सिन्धुनदपश्चिमे आर्य्ययिणदेशे क्वचिदस्य निवास आसीत्। अत एव वाह्लीकनगराधिष्ठात्रा राज्ञा वरुणेनास्य संस्रवोऽप्यवकल्पत इत्याहुः। यत्तु प्रयागसंनिधौ प्रतिष्ठानपुरमासीदिति बहवः प्रतिपद्यन्ते तद् भ्रान्तमिति।

वस्तुतस्तु सिन्धुनदादतिसंनिहिते पूर्वभागे सरस्वतीनद्याः कूले सूर्य्यमन्दिरप्रतिष्ठापकस्यास्य मन्त्रद्रष्टृवसिष्ठस्य निवास आसीदिति सप्तमण्डलस्य पञ्चनवतितमसूक्तादवगम्यते।[2]

---

१. ऋ. स. ७:८८:५
२. ऋ. स. ७:९५

प्रक्षोदसा धायसा सस्र एषा सरस्वती धरुण मायसी पूः ।
प्र बावधाना रथ्येव याति विश्वा अपो महिना सिन्धुरन्याः[1] ॥

एकाचेतत् सरस्वती नदीना शुचिर्यती गिरिभ्य आसमुद्रात् ।
रायश्चेतन्ती भुवनस्य भूरेर्घृत पयो दुदुहे नाहुषाय[2] ॥

इमा जुह्वाना युष्मदा नमोभि प्रतिस्तोम सरस्वति जुषस्व ।
तव शर्म्मन् प्रियतमे दधाना उपस्थेयाम शरण न वृक्षम्[3] ॥

अनेन सरस्वतीनद्याः उभयपार्श्वयो संनिविष्टा काचिदयःप्राकारोपेता सरस्वतीनाम्नी नगरी लक्ष्यते । तन्नगर्य्या मध्यतो रथवत् सरस्वती प्रवहति स्म । तत्कूलोपाश्रये च वसिष्ठस्य गृहं तत्रासीत् । स च वसिष्ठस्तत्रासन्नप्रतिष्ठान-पुरनिवसतो नाहुषस्य महाराजस्याय पुरोधा यज्ञकर्त्ताऽऽसीत् । अत एव स नहुष बाल्ये प्रतिपालयन् नाहुषराजत्वकालपर्य्यन्त जीवित आसीत् । तेनैवेय मन्त्र-महिमा प्रणीतेत्यतो नहुषकाल एवास्य वसिष्ठस्य जीवनकाल इत्येतदवजात विज्ञात भवति ।

एष चादिवसिष्ठः कस्य पुत्र आसीदिति नावधार्य्यते । यत्त्वयमादिब्रह्मण पुत्र आसीदिति पौराणिका आहु । तन्न । ब्रह्मणो मानसपुत्रत्वेन वसिष्ठ-स्मरणात् । तावता औरसपुत्रत्वाप्रतिपत्तेः । अन्यौरसानामेव हि ब्रह्मणा मानस पुत्रत्वेन प्रतिगृहीताना मनसा पुत्रत्वेन भाविताना मानसपुत्रत्वमिष्यते । तस्मादस्य ब्रह्मगृहीतमानसपुत्रत्वे स्थितेऽपि ब्रह्मौरसपुत्रत्व नाध्यवसातु शक्यम् । ब्रह्मौर-सपुत्रत्वेनाथर्वोङ्कारादिवदस्य वसिष्ठस्य विशिष्याश्रवणप्रमाणत्वात् । परे तु वसिष्ठ-मत्स्यागस्त्याना मित्रावरुणाभ्या देवाभ्या गन्धर्विभ्यामुर्वश्यामुत्पादितत्वात् मैत्रावरुणित्व वेश्यापुत्रत्व चाचक्षते । तथाहि—

"विद्युतो ज्योतिः परि संजिहान मित्रावरुणा यदपश्यता त्वा ।
तत्ते जन्मोतैक वसिष्ठागस्त्यो यत् त्वा विश आजभार[4] ॥"

सत्रे ह जाताविषिता नमोभि कुम्भे रेत सिषिचतु समानम् ।
ततो ह मान उदियाय मध्यात् ततो जातमृषिमाहुर्वसिष्ठम् ॥

इति श्रवणात् ।

---

१. ऋ. स. ७:९५:१
२. ऋ. स. ७:९५:२
३. ऋ. स. ७.९५:५
४. ऋ. स ७:३३:१०
५ ऋ. स. ७.३३:१३

विद्युज्ज्योति: परित्यजन्तं वसिष्ठं यदागस्त्य: स्वसंनिवेशायाजहार तदाऽगस्त्येन सहैवायं प्रजापतिपुत्रो वसिष्ठ: पूर्वशरीरं परित्यज्योर्वश्यां जज्ञे।

[1]उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसोऽधिजात: ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवा: पुष्करे त्वाऽददन्त

तथा च मन्त्र :—

"अप्सरस: परिजज्ञे वसिष्ठ:[2] ।"

इति मन्त्रश्रवणादादिब्रह्मणो जन्मस्थाने पुष्करे दैव्येन ब्रह्मणा संपन्नस्योर्वश्यां स्कन्नस्य मित्रावरुणोभयरेतोद्रप्सस्योत्पन्नं पुरुषं वशिष्ठत्वेन सर्वे देवा अगृह्णन्निति स्वयं वसिष्ठेन वसिष्ठपुत्रेण वेन्द्रेण वोक्तत्वात् तथावगच्छन्ति। स्मरन्ति च शौनकादय:—

"तयोरादित्ययो: सत्रे दृष्ट्वाऽप्सरसमुर्वशीम् ।
रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे ।।

तेनैव तु मुहूर्तेन वीर्य्यवन्तौ तपस्विनौ ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतु: ।।

बहुधा पतितं रेत: कलशे च जले स्थले ।
स्थले वसिष्ठस्तु मुनि: संभूत ऋषिसत्तम: ।।

कुम्भे त्वगस्त्य: संभूतो जले मत्स्यो महाद्युति: ।
उदियाय ततोऽगस्त्य: शम्यामात्रो महातपा: ।।

मानेय संमितो यस्मात्तस्मान्मान्य इहोच्यते ।
यद्वा कुम्भादृषिर्जात: कुम्भेनापि हि मीयते ।।

कुम्भ इत्यभिधानं च परिमाणं च लक्ष्यते ।
ततोऽप्सु गृह्यमाणासु वसिष्ठ: पुष्करे स्थित: ।
सर्वत: पुष्करे तं हि विश्वेदेवा अधारयन्[3] ।। इति ।

तस्मादमोघवीर्य्ययोर्मित्रावरुणयोर्देवयोरादित्यसत्रे समागतयोरुर्वशीं प्रति दृष्टिपातात् सहैव रेत: स्कन्दनात् तस्य च रेतसो यज्ञियकुम्भे वासतीवरे त्रेधा निपतनात् त्रयस्ते पुरुषा अजायन्तेति मैत्रावरुणित्वमेषामुपपद्यते । उर्वश्याश्चा

१ ऋ. सं. ७:३३:११ २. ऋ. सं. ७:३३:१२
३. बृहद्देवता वसिष्ठ

क।मासक्तायास्तत्र रेतसि मनोयोगादेषामुर्वशीपुत्रत्वमित्याहु । तदेतदप्य वैज्ञा-कम । चतुष्टयी तावदस्यपि शब्दस्य प्रवृत्ति असल्लक्षणा रोचना लक्षणा द्रष्टृत्व-लक्षणा वक्तृत्वलक्षणाचेति ।

असल्लक्षण तावत् प्राणानामृषित्वमाहु —
असद्वा इदमग्र आसीत् किं तदसदासीदिति ।

ऋषयो वा व तेऽग्रेऽसदासीत । के ते ऋषय इति प्राणा वा ऋषय[1]' इति श्रुते ।

"साक जाना सप्तथमाहुरेकज षडिद् यमा ऋषयो देवजा इति ।
तेषामिष्टानी विहितानि धामश स्थात्र रेजन्ते विकृतानि रूपश[2] ।।"

प्राणो वै वसिष्ठ ऋषि , यद्वै नु श्रेष्ठस्तेन वसिष्ठ ।
अथो यद्वस्तृतमो वसति तेनो एव वसिष्ठ ।।

मनो वै भरद्वाज ऋषि अन्न वाज । यो वै मनो बिभर्ति सोऽन्न वाज भरती । तस्मान्मनोभरद्वाज ऋषि ।।

चक्षुर्वैजमदग्नि ऋषि । यदनेनजगत्पश्यति अथो मनुते तस्माच्चक्षु र्जमदग्नि ऋषि ।।

श्रोत्र वै विश्वामित्र ऋषि । यदनेन सर्वत शृणोति, अथो यदस्मै सवतो मित्र भवति तस्माच्छोत्र विश्वामित्रऋषि ।।

वाग् वै विश्वकर्मऋषि । वाचा हीद सर्वं कृत तस्माद्वाग् विश्वकर्म ऋषि[3] इत्यादिचयनश्रवणाच्च ।

अपिच रोचना लक्षण ताराणामृषित्वमाहु । तथा च श्रूयते—

'सप्तर्षीनु ह स्म वै पुरर्क्षा इत्याचक्षते ।
अमी ह्युत्तरा हि सप्तषय उद्यन्ति" इति ।
यत्रा सप्त ऋषीन् पर एकमाहु , इत्यादि ।

अत्रोत्तरस्या दिशि व्योम्नि ध्रुवतारासन्निधान दृश्यमानाना स्थूलानां सप्तताराणामेव मरीच्यादिसप्तर्षित्वेन विवक्षा दृश्यत । तत्र चत्वारश्चतुरस्त्रक्षत्र कोणस्था ततोऽन्ये त्रय पूर्वतो निविष्टा । तेषु त्रिषु य सर्वत प्राच्या द यते

---

१ श ब्रा  २. ऋ वे १ १६४ १५
३ श ब्रा –चयनम्

स मरीचि: य: पश्चिमश्चतुरस्रसंनिहित: सोऽङ्गिरा:। तयोर्मध्यगतो वसिष्ठो-ऽरुन्धतीसहित:, चतुरस्रेषु त्वङ्गिरस: संनिधावत्रि:। ततोऽन्ये पुलस्त्य-पुलह-क्रतव: इति पौराणिका आहु:। तदनुसारेण ज्योतिर्विदोऽप्याहु:। यथा वृहत्संहितायाम्—

पूर्वे भागे भगवान् मरीचिरपरे स्थितो वसिष्ठोऽस्मात्।
तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्न: पुलस्त्यश्च॥

पुलह: क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्या:।
तत्र वसिष्ठं मुनिवरमुपाश्रिताऽरुन्धती[1] साध्वी॥

एवमन्येऽप्युत्तरस्यां दिशि मार्कण्डेयकश्यपादयो मध्याकाशे वृहस्पति मत्स्यादयोऽवाच्यामगस्त्यादयस्ताराविशेषा ऋषित्वेनेष्यन्ते।

अपिच द्रष्टृत्वलक्षणं मन्त्रकृतां मन्त्रविदां मन्त्रपतीनामनूचानानां मनुष्या-णामृषित्वमाहु:।

यामृषयो मन्त्रकृतो मनीषिण अन्वैच्छन् देवास्तपसा श्रमेण।
तां देवीं वाचं हविषा यजामहे सा नो दधातु सुकृतस्य लोके। इति।

नमोऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्य:। इति।

मा मामृषयो मन्त्रकृतो मन्त्रविद: प्राहुर्दैवीं वाचम्" इत्यादि श्रवणात्।

"या वै ज्ञातोऽनूचान: स ऋषि:" इति शतपथब्राह्मणश्रवणाच्च। "ऋषयो मन्त्रद्रष्टार: साक्षात्कृतधर्माण ऋषयो बभूवु:। तेऽसाक्षात्कृतधर्मेभ्य उपदेशेन मन्त्रान् संप्रादु:" इति निरुक्तस्मरणाच्च। "अजान् ह वै पृश्नींस्तपस्य-मानान् ब्रह्म स्वयम्भु अभ्यानर्षत्। तदृषीणामृषित्वमिति" यज्ञेन वाच: यदवीय-मायंस्तामन्वविन्दनृषिषु प्रविष्टाम्।" इति। तद्वा ऋषय: प्रतिवुबुधिरे य उ तर्हि ऋषय आसु:–" इति। अग्नि: पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत। स देवां एह वक्षति" इत्यादि श्रुतिनिदर्शनेषु प्रयुक्त ऋषिशब्द: साक्षात्कृतधर्मसु प्राणानां विद्वत्सु मनुष्यविशेषेष्वेव प्रवर्तते।

अपि चान्यन्मान्त्रवर्णिकमृषित्वं वाक्यसापेक्षम्। यस्य वाक्यम् स ऋषि:, या वाक्येनोच्यते सा देवतेति परिभाषितत्वात्। मन्त्रो हि वाक्यं, वाक्यसमुदायो वा। स येनायं मन्त्रोऽर्थं दृष्ट्वोपदिष्ट: सोऽस्य मन्त्रस्य ऋषिरुच्यते। ऋषिभिरे-वैते मन्त्रा: पुरोपदिष्टा:। तस्मात् पारोवर्य्यविदोऽमी ऋषय एवैतेषां मन्त्राणां

१. वृहत्संहितायाम्—अ, १३

वक्तार ऋषय. प्रायेण दृश्यन्ते । वक्तृत्वानृषयोऽपि वक्तृत्वेन विवक्षणादेषामृषयो निर्दिश्यन्ते ।

तत्रेद वक्तृत्वलक्षण गौणमृषित्व द्रष्टव्यम् । तथाहि पञ्चविधो मन्त्राणा वर्गोभवति भाववृत्त, देवस्तव, वक्त्रात्मस्तवा, देवात्मस्तव कयोश्चित्सवादा वेति । [सृष्टिक्रमनिरूपण भाववृत्तम् । प्राणदेवाना स्वरूपधर्मप्रदर्शन देवस्तव । तयोरस्य मन्त्रप्रणेतैव ऋषि, द्रष्टृत्वाच्च वक्तृत्वाच्च । देवता तु तत्र सृष्टिविषया वा प्राणदेवा वा । अथ वक्त्रात्मस्तवेऽपि अय मन्त्रप्रणेता आत्मान स्तौतीति स एव स्यादृषिश्च देवता च । अथ चतुर्थे देवात्मस्तवे तु मन्त्रप्रणेता प्रतिपाद्य देव तद्देवमुखेनैव स्तावयति । तत्र तस्य प्राणदेवस्यैव वक्तृत्वेन विवक्षणात् स एव ऋषि स्याद्देवता च । मन्त्रप्रणेतुस्तु वक्तृत्वेऽपि तत्र ऋषित्वमपह्नूयते । अथ पञ्चमे सवादेऽपि मन्त्रप्रणेतु ऋषित्वमपह्नूयत । ययोस्तु सवादो वर्ण्यते तयोर्मध्येवक्तुऋषित्व सबोध्यस्य देवतात्वमिति पर्य्यायेणोभयोर्ऋषित्व देवतात्व च विवक्ष्यत इति बृहद्देवताया भगवता शौनकेन सुविशद व्याख्यातम् । एषामुदाहरणानि तु विस्तरभयान्नेहोपन्यस्यन्ते । ऋग्वेदादिमन्त्रसहिताचतुष्टये तु य इमे मन्त्राणाम् ऋषय केचन स्मर्यन्ते तत्रैतत्पञ्चम वक्तृत्वलक्षणमेव ऋषित्व द्रष्टव्यम् ।

तदित्थ लक्षणभेदादृषयश्चतुर्धा भिद्यन्ते, तेषा च जन्मकर्मस्वरूपाख्याना-दयो विषया अपि प्रातिस्विकतया भिद्यन्ते नान्यधर्मा अन्यत्रापपद्यन्ते,तथापि नाम-सामान्यादन्यत्राप्यन्यधर्मा साकर्य्येण प्रतिधीयन्ते । यथाऽनेकवर्षसहस्रजीवित्व प्राणलक्षणपूपपन्नमपि नियतपुरुषायुषेषु शतायुषु मनुष्येषु नोपपद्यते । एवमेवेद मैत्रावरुणित्वमुर्वशीजन्यत्व च रोचनालक्षणेषु मत्स्यवसिष्ठागस्त्येष्ववोपपन्नमपि मन्त्रद्रष्टृषु पारोवर्यवित्सु पुरुषेषु नोपपद्यते। अत एवाय वसिष्ठो मनुष्यविधा विद्वान् तारालक्षण तदुपलब्धप्राण लक्षण त्रा वसिष्ठ सबोध्य "उतासि मैत्रावरुणो वसिष्ठोर्वश्या" इति मन्त्रप्रयुङ्क्ते । नतु मनुष्यविधमात्मानमेव तथासबोधयितु युज्यते । "अहर्वै मित्र रात्रिर्वरुण" इति श्रुते ।

पूर्वकपालस्थादित्यस्य सम्वशीलत्वान्मित्रत्व पश्चिमकपालस्थादित्यस्य तु विशरणशीलतया तमसा व्रियमाणत्वाद्वरुणत्वम् । तयोरवावच्छेदकस्य मध्यमस्य याम्योत्तरवृत्तस्य दिव्यत्वादप्सरस्त्वमुभयत एवोर्वन्तरिक्ष समानव्याप्तिमत्वादुर्वशीत्वम् । तस्या मध्यमरेखाया तयो समुद्रम्येऽन्तरिक्ष कुम्भराशौपरिप्लवमानयो रेत सेकान्मित्रवरुणोभयधर्माणस्त्रयस्तारापुरुषा उत्पद्यन्ते उत्तरतो वसिष्ठो दक्षिणतोऽगस्त्य कुम्भमध्ये तु मत्स्य इति । पुरायुगे कुम्भेन धान्यानि मीयन्ते स्मेति कुम्भस्य मानत्व तत्रोत्पन्नत्वादेषा त्रयाणा चाहु न त्वेवमेव कुम्भजन्यत्व मनुष्याणा वसिष्ठागस्त्यमत्स्याना सभाव्यते ।

वसिष्ठेनैव सप्तमस्य त्रयस्त्रिंशसूक्ते पञ्चभिर्ऋग्भिर्मित्रावरुणाभ्यामुर्वश्यां माने कुम्भे रेतः सेकाख्यानात् तदाख्यानस्य स्वविषयकत्वासामञ्जस्यात् तदन्यविषयकत्वोपपत्तेः । तस्मात् ताराख्पाणां वसिष्ठादीनामेवेदं ताराविज्ञानोपयोग्याख्यानं विशेषसिद्धं मैत्रावरुणित्वमुर्वशीजन्यत्वं मान्यत्वं वा न तु ब्रह्मणो मानसपुत्राणां मनुष्यविधानाम् । ताराविषयिणी सर्वापीयमाख्यायिका ताराविज्ञानोपयोगिनी बालकोवनार्थवह्वल्पसारा मिथ्यैव कल्पिता पूर्वैरिति नैतावा मनुष्यविधर्षिषु तदा क्षेपः शक्यः कर्तुम ।

यत्तु ब्रह्मणो मानस पुत्रस्य वसिष्ठस्य गोतमहोतृके यज्ञे निमिशापाद्दग्धशरीरतया पुनरुर्वश्यां द्वितीय जन्मेत्याचक्षते पौराणिकाः । तदपि नामसामान्यादुपसंक्रमितस्य मैत्रावरुणित्वादिधर्मस्योपपादनार्थं कल्पनामात्रं स्यात् । द्वितीयजन्मनि वेश्यापुत्रत्वे कथंचिदृभ्युपगम्यमानेऽपि वेदमन्त्रद्रष्टुः प्रथमजन्मनो ब्रह्ममानसपुत्रस्य जन्मदाता मुख्यःपिता कश्चिदन्य एव स्यात् स नाद्यापि निर्धारितो विज्ञायते ।

स्वर्गे सहस्रद्वारं वरुणगृहं गतोऽयं वसिष्ठो वरुणं स्तुवन्नात्मानं मनुष्यत्वेन प्रतिजानीते—

यत्किञ्चेदं वरुणदैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्तीयत्तव धर्म्मा युगोपि म मानस्तस्मादेनसो देव रीरिषः[1] ।

एते न भारतवर्षनिवासिनस्तस्य वरुणदेवकृपया स्वर्गं गमनागमनसंस्रवो विज्ञायते ।

मन्त्रद्रष्टृत्वस्य पर्षद्ब्रह्मत्वस्य तपस्वित्वस्य राजपुरोधस्त्वस्य चान्यान्य वसिष्ठवृत्तित्वम् ।

वसिष्ठवंशधरा अपि सर्वे वसिष्ठा उच्यन्ते—
"आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यात निर्ग्राह्या गोत्रं च चरणैः सह ।"

इति वैयाकरणैः सिद्धान्तितत्वाद् वसिष्ठादिगोत्रशब्दानां जातिवाचित्वात् । यथा गवां वंशधराः सर्वे गाव एव स्युरेवं वसिष्ठवंशधराः सर्वे वसिष्ठा एव स्युः । तत्र नायं वसिष्ठशब्दस्तत्प्राणद्रष्टव्यक्तिमात्रे तत्पुत्रपरम्परायामेव वा रूढः, किन्तु वासिष्ठाद्यां ब्रह्मपर्षदि यः कश्चित् पुत्रो वा शिष्यो वा पर्षदध्यक्षो ब्रह्मासीत् स सर्वो वसिष्ठ इत्युच्यते । वसिष्ठस्य ब्रह्मत्वेन स्मरणात् पर्षदधिष्ठातुरेव च ब्रह्मत्वात् वसिष्ठानामानन्त्याच्चन्येऽन्ये वसिष्ठा अर्बुदाचलेऽयोध्यायां वाऽन्यत्रा-

---

१. ऋ. सं. ७:८९:५

स्थाने वा समाप्यन्ते न तेनैषामर्वाचां वेदमन्त्रद्रष्टृत्वं कल्प्यम् । अयोध्याराजपुरोहितनाम्नो वसिष्ठापेक्षया बहुपुरातनस्य कस्यचिन्मनुष्यस्य वसिष्ठस्य वेदमन्त्रद्रष्टृत्वेनाभ्युपगम्यमानत्वात् ।

तत्र वसिष्ठोऽग्निं पञ्चत्रिंशता, आप्रमेकादशभिः, पावकं शुचिं चाग्निं दशभिः, शुक्रं यविष्ठमग्निं दशभिः, वैश्वानरमग्निं षोडशभिः नानागुणमग्निं त्रिंशता तुष्टावेति पञ्चचत्वारिंशं शतम् आग्नेयं प्रथमं पर्व । वसिष्ठ एव चित्वारिंशेन शतेनेन्द्रं नवभिर्वसिष्ठवंश्यान् सम्राड्भ्यांतमिन्द्रं, पञ्चभिर्वसिष्ठागस्त्ययोर्वंश्यौ मित्रावरुणाभ्यां जन्माख्यानं, चतुर्भिः सुदासं पञ्जवनस्य दानं तुष्टावेत्येकषष्ठं शतम् ऐन्द्रं द्वितीयं पर्व । पार्थिवं वैश्वदेव्यमन्त्रैः सूक्तेन पञ्चविंशत्यामन्त्रैः दिव्यं वैश्वदेव्यं षड्भिः सूक्तैरनु पञ्चाशता मन्त्रैः अन्तरीक्षं वैश्वदेव्यं पञ्चदशभिः सूक्तैरष्टपञ्चाशा मन्त्रैः चतुर्थलोकीयं वैश्वदेवमूनपञ्चाशत्सूक्तैर्नवाशीत्यधिकं त्रिंशता मन्त्रैस्तुष्टावेति षड्विंशानि पञ्चशतानि वैश्वदेव्यं पर्व । त्रिभिः सूक्तैस्त्रयस्त्रिंशता मन्त्रैः पावमान्यं चतुर्थं पर्व । इति चतुर्भिः पर्वभिर्वसिष्ठार्षेयं वृत्तम् । "यूयं पात स्वस्तिभिः सदा नः" इति वसिष्ठ वाक्याभिज्ञानं ध्रुवकपदम् ।

अथेन्द्रप्रमतिर्वृषगणो, मन्युः, उपमन्युः, व्याघ्रपात्, वर्षीयुद्भुनुषो मृडीकः शक्तिरित्येते वासिष्ठास्त्रिभिस्त्रिभिः शक्तिश्चतुर्भिश्चान्यमन्त्रैः पवमानं तुष्टाव । मृडीकः पञ्चभिश्चित्रमहा, अष्टभिरग्निं, द्युम्नीकः षड्भिरश्विनौ अथ एकेन विश्वान् देवास्तुष्टाव । अथ पराशरः शाक्त्यश्चतुर्दशभिः, गौरिवीतिः शाक्त्यो द्वाभ्यां पवमानं, गौरिवीतिरेकादशभिः षड्भिश्चेन्द्रं तुष्टाव इति चतुरशीतिमन्त्रैरुत्तरवासिष्ठं पञ्चमं पर्व । तदित्थं पञ्चषष्ठान्यष्टशतानि मन्त्राणामयं वसिष्ठः स्वयं, एकपञ्चाशन्मन्त्रान् वसिष्ठपुत्राः, त्रयस्त्रिंशन्मन्त्रान् वसिष्ठपौत्रा ददृशुः — इत्यूनपञ्चाशदधिकैर्नवभिः शतैर्वासिष्ठी संहिता पूर्णा ।

यद्यप्ययं मान्यो वसिष्ठो मनुष्यलोकस्थो न स्वर्ग्यः भारतवर्षे मनुष्यलोके सिन्धुनदप्रान्ते सरस्वतीनदीसङ्गमस्थाने सरस्वतीग्रामे वसिष्ठाभिजनस्य व्याख्यातत्वात् । तथाऽप्युत्तरकालमिन्द्रानुग्रहवशात् तस्य स्वर्गे निवासः समपद्यतेति श्रूयते वाजिश्रुतौ तद्यथा—

"वसिष्ठो ह विराजं विदाञ्चकार । तां हेन्द्रोऽभिदध्यौ । स होवाच ऋषे । विराजं ह वै वेत्थ । तां मे ब्रूहीति । स होवाच किं मम ततः स्यादिति । सर्वस्य च ते यज्ञस्य प्रायश्चित्तिं ब्रूयां, रूपं च त्वा दर्शयेति । स होवाच—यन्नु मे सर्वस्य यज्ञस्य प्रायश्चित्तिं ब्रूयाः किमु स स्याद् यं त्वं रूपं दर्शयथा इति । जीवस्वर्ग एवास्माल्लोकात् प्रेयादिति । ततो हैतामृषिरिन्द्राय विराजमुवाच—"इयं

वै विराडिति" । तस्माद योऽस्यै भूयिष्ठं लभते स एव श्रेष्ठो भवति । अथ हैतामिन्द्र ऋषये प्रायश्चित्तिमुवाच--अग्निहोत्रादग्रे-आ महत उक्थात् । ता ह स्मैताः पुरा व्याहृतीर्वसिष्ठा एव विदुः । तस्माद्ध स्म पुरा वासिष्ठ एव ब्रह्मा भवति । यतस्त्वेना अप्येतर्हि य एव कश्चाधीते-ततोऽप्येतर्हि य एव कश्च ब्रह्मा भवति । स ह वै ब्रह्मा भवितुमर्हति । स वा ब्रह्मन्नित्या मन्त्रित: प्रतिश्रृणु-याद्-य एवमेता व्याहृतीर्वेद"[1] इति ।

तथा चैतस्य वसिष्ठस्योत्तरकालं जीवस्वर्गवासितया तादृशवसिष्ठ-प्रणीतोऽयं वेदसंहिताग्रन्थः स्वर्ग्य एवाभिज्ञायते । तद्वर्णितानां देवानां भौमस्वर्ग वासितया सूर्य्यप्राणतया च स्वर्ग्यार्थविषयकत्वात् ॥

## ३ "मित्रः संसृज्य पृथिवीं" मन्त्रस्य संगतिकरणम्

"मित्रः संसृज्य पृथिवीं भूमिं च ज्योतिषा सह" इति श्रुतेः पृथिव्यां ज्योतिः संसर्जनाः सूर्य्यरश्मयो मित्रः ।

"वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय" इति मन्त्रश्रुतेः पृथिवीपृष्ठात् ज्योतिरपसारयन्तः सूर्यरश्मयो वरुणः । "अहर्वै मित्रं रात्रिर्वरुणः" इति ब्राह्मणश्रुतेरप्यत्रैव तात्पर्य्यम् । ताभ्यां च पूर्वपश्चिम-कपालौ लक्ष्येते । कपालद्वययोगिनी याम्योत्तररेखात्मिकादिगुर्वशी पञ्चचूडब्राह्मणे भगवता माहित्थिना दिशामप्सरस्त्वेनाख्यानात् । भगवान् याज्ञवल्क्यस्तु आहुतिरुर्वशीत्य-भिमनुते ।

कपालद्वययोगादुत्पन्नोऽण्डरूपो मानः कुम्भः, आपोमयं चेदमन्तरिक्षं समुद्रः । समुद्रे विहरद्भ्यां मित्रावरुणाभ्यामुर्वश्यां दिश्याहुत्यां वा सयुज्यमानाभ्यामाग्ने-याप्यरेतोनिषेकादस्मिन् कुम्भे त्रिविधाः मरुतः प्राणा उत्पद्यन्त-शीतवीर्य्या उष्ण-वीर्य्या अनुष्णशीतवीर्य्याश्च । आद्याः सोमधर्माणः सौम्या उत्तरायतनाः उत्तरा हीय सौम्या दिक् तस्यां प्रचरन्तो हीमे वरुणसखाः प्राणावसिष्ठा इत्याख्यायन्ते आपवा आप्सवा वसिष्ठा इत्येकार्थाः । एते हि मरुतः प्राणा वरुणसख्यत्वस्वा-भाव्याद्, अप्सु प्रविष्टा उभयोः समन्वयादद्भ्यः पृथिवी जनयन्ति तत्राप्स्व-भिव्रत्युत्तरमुत्पन्ने पृथिवीत्वे तस्या अष्टौ व्याहृतयो भवन्ति आपः, फेनः, ऊषः, सिकताः, शर्कराः अश्मा, अयो, हिरण्यमिति । प्राथमिकी तावत् पृथिव्या व्याहृति-र्द्रवप्रायरूपत्वादापःशब्देनैवाख्यायते । सा चातिरिच्यते पृथिवीत्वमननाप्तााभि-मर्षयाभिरद्भिः । आपस्तावन्मरुतं वृण्वते, स बुद्बुदो नाम । तत्रापां निम्नगति-स्वाभाव्याद् बुद्बुदशिरसो मन्दस्तरत्वोपपत्तावुत्क्रमणस्वभावो मरुन्मन्दवन्न

---

१. श. ब्रा. १२:३:१

बुदबुदशिरो निर्भिद्य बहिर्भवति । यत्र तु स तोऽल्पत्वादपां च भूयस्त्वाद् बुदबुद्-शिरसो मन्दस्तरत्व नोपपद्यते, तत्रायमवरुद्धो मरुन्नियतत्रा तोत्तरमवसन्नो म्रियते । वरुणेन्द्रमनस्यादैन्द्री शक्तिरुत्क्रमणलक्षणा मरुतो निवर्तते । सोऽप्सु दरात्मा स्व खरत्वमप्सु प्रक्षिप्य तदुभयविलक्षणधर्माणां पृथुत्व गतमर्थं जनयति सा पृथिवी मृत्तिका नाम । इदानीं यावदपां द्रवणधर्मस्यैकान्ततोऽनपलापादिय पृथिव्या. प्रथमा व्याहृतिराप एवोच्यते । तत क्रमेण परिपाकात् फेनोप सिकता जायन्ते, तथाचैतास्वप्सु येषां मरुतां प्राणाना सयोगादप्फेनोप सिकताख्याश्च-तस्रोऽप्सङ्गमनस्वभावा व्याहृतय क्रमेण सृज्यन्ते, ते वासिष्ठा नाम प्राणा स्यु । वेदास्सर्वा सृष्टिर्भूत्वा यज्ञाज्जीवतीति सिद्धान्त । प्राणाग्नीनामन्योन्य परिग्रहो यज्ञ इति वाजिश्रुतौ व्याख्यातम् ।

ऊर्जा ह्यन्न गृहीत प्राणत्वमापद्यते । सोऽयमूर्जा शक्तिमानप्फेनोप सिकता-गतो वशिष्ठप्राणोऽप्एवान्न भूयो भूया गृह्णन्नात्मनि भावयति । तत एवैता-श्चतस्रो व्याहृतयोऽद्भि समिश्रिता एका भवन्ति । सोऽयमपां मूर्छनादद्भ्य पृथिव्युत्पादक. प्राण उत्तरस्या सप्तर्षिगतवसिष्ठाख्यतारात. परितो व्याप्नुवन् लभ्यते इत्यत' सा तारापि वसिष्ठ उच्यते । तत्सम्बन्धादेव च विषुवत उत्तरस्या-माधिक्येन वस्तु योग्या निवासभूमयो लभ्यन्ते । नैव दक्षिणस्या समुद्रप्रायायामग-स्त्याचरिताया दिशि ।

अथ कुम्भजन्मान उष्णवीर्या. इतरे प्राणा यमधर्माणो याम्या दक्षिणा-यतना. । दक्षिणा हीय याम्या दिक् । तानगस्त्या इत्याचक्षते । एते हि मरुतः प्राणा. । तेषां च –

> किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव ।
> तेभि. कल्पस्व साधु या मान. समरणेऽवधी. ॥
>
> किं तो भ्रातरगस्त्यसखा सन्नति मन्यसे ।
> विद्मा हि ते यथा मनोऽस्मभ्यमिन्न दित्ससि ॥ इति ।
>
> (१/१७०)

इन्द्रागस्त्यसंवादश्रुतेरिन्द्रसख्यत्व लभ्यते । इन्द्रसख्यत्वस्वाभाव्याच्च वरुणविरोधादप्स्वप्रविश्य तासामपामवयवान् विश्लेष्य तद्रसान् पीत्वा विला-पयति । अप्फेनोपसिकतामृद्युत्तरतगस्त्यास्यमरुत्सयोगादपां नियमनादप्-संमिश्रणविरोधिन्य शर्करा-अश्मा-अयो-हिरण्यमिति चतस्रो व्याहृतय क्रमेण सृज्यन्ते । तेनाष्टौ व्याहृतयः पृथिव्या. सपद्यन्ते । अपि चैतेऽगस्त्या. प्राणा. अन्त-रिक्षरूपे समुद्रेऽपां रस पीत्वाऽन्तरिक्षमुद्र निर्जल कुर्वन्तीत्यत एवागत्स्यताराभ्यु-दयादूर्ध्व वृष्टिचातुर्मास्य निवर्तते । वर्षर्तुदोषाद् रजस्वलाना सरितामपामग-

स्त्योदयादूर्ध्वं रजसामद्भ्यो विच्छेदादापः शुद्धा भवन्ति। आपश्च पृथिवीबन्धनाद् विमुक्ताः क्रमेणोर्ध्वमाकाशमनूत्क्रमन्ते इत्यतस्तदानीं भूमावन्तर्निपाताद् भूमिपृष्ठे तिर्य्यक् प्रवहणाद्वियत्यूर्ध्वमुत्क्रमणाच्च त्रिपथगाः सम्पद्यन्ते। अगस्त्योदयादूर्ध्वमाकाशसमुद्रस्य निर्जलप्रायतया तत्रानिशं पार्थिव समुद्रादाप उत्क्रममाणा भवन्तीत्ययं समुद्रोऽपि सुतरां निपीतजलः क्रमेणोपपद्यते। तदिदमगस्त्यस्याकाशसमुद्रपीतत्वं भौमसमुद्रपीतत्वं च लोका आहुः।

अपि चेह द्विविधाः पर्वता भवन्ति–हिमाद्रयश्चेति। जलग्राहिप्राणतया जलक्लिन्नान्तर्जालिकाः फल्गुसारप्रस्तरा विशीर्णपर्णजालकत्वाज्जलोच्छूनोदरत्वाच्चात्यन्तमुन्नमन्तः पर्वता हिमाद्रयः तद्विरुद्धा जलोत्क्षेपकप्राणतया शुष्यदन्तःस्तरा दृढसारा निर्जलोदरतयोत्तरोत्तरघनीभवदङ्गा विनमन्तः पर्वता विन्ध्याद्रयः। अप इन्धे उद्दीपयतीन्यविन्धः प्राणविशेषोऽगस्त्यो नाम। तमर्हतीत्यविन्ध्यः सन् विन्ध्य इत्याख्यायते परोक्षम्। यथा चायं हिमाद्रिर्वसिष्ठप्राणाकृष्टजलोदरत्वादुच्छ्वयमानः प्रोन्नमुच्छृङ्गः समपद्यत एवमयं विन्ध्याद्रिर्नोन्नमच्छृङ्ग समपद्यत, आगस्त्यप्राणनिक्षिप्तोदकसारत्वादुत्तरोत्तरघनीभावादधोऽधः संपातोपपत्तेः। तदिदमगस्त्यस्य विन्ध्याद्रिनिग्रहणमाचक्षते पौराणिकाः। अतएव चास्य मरुत्प्राणस्यागस्त्यत्वमाख्यायते। अगं पर्वतमश्मान स्त्यायति संहन्तीति व्युत्पत्तेः। सर्वे चैतेऽगस्त्यप्राणधर्मा नामसामान्यादगस्त्यप्राणद्रष्टरि विदुष्यगस्त्ये भक्त्या निःक्षिप्यन्ते लोकैरित्यवसेयम् अगारितारितित्वगस्त्यस्य परोक्षव्यवहारः।

मत्स्यपुराणेकषष्टितमाध्यायेऽस्यागस्त्यस्याग्निमारुतत्वमाख्यायते। तारकाद्यसुराः सामुद्रजलदुर्गप्रच्छन्नाः सुगुप्ता नाजीयन्तेत्यत इन्द्रेण समुद्रंशोपयितुमादिष्टावग्निमरुतौ सहैकेन शरीरेण रूपमात्रातुमुर्वश्यां मित्रावरुणरेतोभ्यामजायेताम। ततोऽयमग्निमारुतोऽगस्त्यो भूत्वा समुद्रमशोपयदित्याह।

"काशपुष्पप्रतीकाश अग्निमारुतसंभव।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते"॥

इति च प्रार्थनामन्त्रमाह। तदेतदग्निमारुतत्व जलशोपकमारुतस्यास्योष्णवीर्यत्वादवसेयम्। तदित्थमगस्त्या नामोष्णवीर्या मरुतः प्राणा आख्याताः।

तथा चायं निष्कर्षः— उर्वशीनामके मध्याह्नवृत्ते सौम्ये उत्तरकपाले पूर्वापरकपालप्राणाभ्यामाहृत्या यः प्राणो निष्पद्यते स वसिष्ठोमरुत्प्राणः स वरुणसखः। अथ तत्रैवोर्वशीनामके मध्याह्नवृत्ते याम्ये दक्षिणकपाले पूर्वापर कपालप्राणाभ्यामाहृत्या यः प्राणा निष्पद्यते सोऽगस्त्यो मरुत्प्राणः। स इन्द्रसखः। तदुभयसंक्रान्तधर्मा समवीर्यो मरुत्प्राणो मत्स्यो नाम, तत्प्राणोपवर्पकश्च मध्याकाशे याम्यमत्स्यो नाम कश्चित् ताराविशेपो दृश्यते। तदित्थं त्रिविधाः सर्वे

मरुत: प्राणा । मरुतां सप्तसप्तकत्वेऽपि सहृत्य सर्वे त्रिविधा एवेत्थ भवन्तीति निष्कर्षो द्रष्टव्य.।

एषा च त्रिविधाना प्राणाना मध्येऽगस्त्यप्राणद्रष्टुरुपासकस्य विदुषोऽप्य-गस्त्य इत्येव यशोनाम प्रख्यायते स्म । स च वसिष्ठवद् भारतवर्षीय एवासीन्न तु स्वर्गीयो देव । "अगस्त्यो नरा नृषु प्रशस्त. काराधुनीव चितयत् सहस्रै ।" (ऋ १/१८०/८) इत्येवमगस्त्येनैव स्वस्य नरत्वप्रतिज्ञानात् । तस्य च देवेन्द्रकृपया स्वर्गे गमनागमनसम्भवो विज्ञायते ।

वसिष्ठप्राणसवाहिकाया वसिष्ठताराया उत्तरदिग्वर्तितया तदुपासना-नुरोधेन तत्प्राणद्रष्टुर्वसिष्ठस्य विदुषोऽप्युत्तरस्या दिशि यथाऽश्रम प्रदश्यते तथैतस्या अगस्त्यप्राणसवाहिकाया अगस्त्यताराया दक्षिणदिग्वर्तितया तदुपासना-नुरोधेन तत्प्राणद्रष्टुरगस्त्यस्य विदुषोऽपि दक्षिणस्या दिश्येव क्वचिदाश्रम प्रसिध्यति । स च गोदावरीसंनिहितात् पञ्चवटीनाम्नो रामाश्रमाद् योजन-द्वयान्तरे पूर्वमासीदिति रामायण स्मर्यते ।

तत्रागस्त्यस्य वातापील्वलभक्षकस्य रामसमसामयिकस्यैव वेदमन्त्रद्रष्टृत्व-मासीदिति नास्थीयते । "दुवा गोतम पुरुमीढो अत्रि ।" (ऋ. १/१८३/४) इति मन्त्रवर्णात् पुरुमीढसमकालिकस्य तस्य रामसमकालिकत्वासम्भवात् । अगस्त्यगोत्रप्रवर्तकस्य प्राथमिकागस्त्यस्य वसिष्ठवन्मैत्रावरुणित्व स्मरन्तीत्यादि-वसिष्ठसमकालिकस्य तस्य सूर्यवंशप्रवृत्तेरप्यतिपुरातनतया रामसमये तस्या सम्भाव्यमानत्वात् । अगस्त्यवशधरा सर्वेऽगस्त्या उच्यन्ते । अगस्त्यगोत्रस्य जातिवचनत्वात् सर्वेषा तद्गोत्रजातानामगस्त्यशब्देन व्यवहर्तुं शक्यत्वात् । गोत्र द्वेधा जन्मना, विद्यया च तत्र न जन्मना गोत्रऽयमगस्त्यशब्दो रूढ । किन्तु विद्यया गोत्र पुत्रो वा शिष्यो वा य कश्चिदेवागस्त्या ब्रह्मपर्षदि तदध्यक्षो ब्रह्मा-सीत् सोऽयमन्योऽन्य काले कालेऽगस्त्य' प्रतिपद्यते स्म । तस्माद्रामसमये ऽप्यन्य. कश्चनागस्त्य. सम्भाव्यते । 'शतायुर्वै पुरुषो भवतीति" श्रुते । सर्वेऽप्येतेऽगस्त्य-वसिष्ठादय शतायुषो द्रष्टव्या —इति दिक् ।

अस्यागस्त्यस्य मन्त्रसहिताया सोऽगस्त्य एक । अगस्त्यपुत्र एक । अगस्त्य पौत्रश्चैक । अगस्त्यशिष्य । अगस्त्यपत्नी । अगस्त्यभगिनी । चत्वारोऽस्य भागिनेयाश्चेति दशर्षयो द्रष्टार सन्ति ।

तत्रागस्त्योऽष्टर्चैसूक्तेनाग्निमेकादशचसूक्तेनाप्रिय तुष्टावेत्यूनविंशत्यृच-माग्नेय पर्व । चतुर्दशभि सूक्तैर्ऋचामष्टादशशतेनेन्द्र तुष्टावेति द्वितीय पर्व । पञ्चभि सूक्तैरूनचत्वारिंशता ऋग्भि अश्विनौ एकादशर्चसूक्तेन द्यावापृथिव्यौ, एकादशर्चसूक्तेन विश्वेदेवान् एकादशभिरोषधी, रष्टभिर्बृहस्पति, षोडशभिर-

उक्थ, प्रतिष्ठा, सामेति त्रिलक्षणमद्वितीय किञ्चिदेव तत्त्व ब्रह्म। यत उत्तिष्ठते तदुत्थ सदुक्थ नाम। स्वतोऽनुपक्षीण सद्पूर्व भावयतीति बृहण-शीलत्वात् तद्ब्रह्म। उत्पद्यात्पदार्थजात यत्र प्रतितिष्ठति सा प्रतिष्ठा नाम। बिभर्त्ति सर्वमिति भर्मत्वात् तद ब्रह्म। अद्मय उन्थिलेपु अप्सु प्रतिष्ठितेपु फल-हिम-इन्द्रेष्मापदार्थजातेपु यथाऽऽप साम्येन वर्तन्ते सिकता–शकराऽश्मायोहिरण्येपु यथा पृथ्वीभावो दृश्यत, तथैनपु सर्वेपु भिन्नप्वपि यावदभिन्न सत्तासामान्य तत् सर्वत्र समत्वात् साम नाम सर्वथापवृहितत्वाच्च तद्ब्रह्म। तदित्थ लक्षणम्— "ब्रह्म वेयमग्रमासीदेकमेवाद्वितीयम्।" (गो ब्रा पू १/१)

तदव्याकृतपूर्वं बृहणस्वाभाव्याद् व्याक्रियते। अविभक्तस्य विभक्त्युपपत्तिर्व्याकरणम्। उन्मुग्घावस्थस्योद्बुद्धावस्था व्याकरणम्। निर्विशेषाद्विशे-षाभिव्यक्तिरुद्बोध, मन प्राणोवागिति सृष्टिसाक्षित्रैविध्येनारब्ध कर्मपुरुषो वा, मनो विज्ञानमानन्द इति मुक्तिसाक्षित्रैविध्येनारब्धो विद्यापुरुषो वा–ब्रह्मणो व्याकृत रूपम्। विद्यापुरुष सृष्टिबन्धमोक्ता, कर्मपुरुषस्तु सृष्टिबन्धकर्त्ता। तानीमानि पृथग् ब्रह्माणि। तत्र मनस्तावद ज्ञानाना, प्राण क्रियाणा, वागर्था-नामुक्थ च भवति, प्रतिष्ठा च, साम चेति। अन्योन्याविनाभूतमेतत् त्रितय-मेको भाव आत्मा नाम। "स वा एप आत्मावाङ्मय, प्राणमयो, मनोमय." (शत १४/४/३/१०) प्रतिपत्तव्य।

आतश्चायमात्मा धर्माणि धारयमाणो धर्मो भवति। नानुपसृष्ट स कदा-चिदुपपद्यते। प्राण शक्ति। तेनाय कुर्वद्रूपोऽनवरत किञ्चित्करोति। "न हि कश्चित क्षणमपि जातु तिष्ठत्यकर्मकृत्" (भगवद्गीता) अनवरत च किञ्चि-ज्जानाति। आत्मा, प्राणा, पशव इत्येव त्रिवृद्रूप सत्यम्। यावदुक्थ स आत्मा। सोऽर्च इचरतीत्यर्का एतस्य प्राणा। अन्तर्याम–बहिर्यामोपयामादिभिस्तदनु-गृहीता पशुभावा अशितय। आत्मन्यश्नुवते इत्यशितय। उक्थमर्कोऽशितिरि-त्येव त्रिवृत्कृत रूप सत्यम् सत्येन रूपेण पशुप, प्राणावस्थितिरात्मनो ज्ञान नाम विकासो रूपम्। तथा चायमेक आत्मा सर्वज्ञ सर्वशक्तिमान् सर्वधर्मोपपन्नश्च। सर्वा एताश्चेष्टा सर्वा अभिव्यक्तय. सर्वा व्यक्तयश्चायमेका भाव आत्मा। नातोऽन्यत् किञ्चिदस्ति।

तत कार्यब्रह्माभवत्। कार्यब्रह्मणि च कार्याणा वैचित्र्यादिद त्रैविध्य भिन्नाश्रय व्यवतिष्ठते। तथाहि सूर्यो वा चन्द्रो वा पृथिवी वा, क्षुद्र प्रस्तर-खण्डा वा सर्वमिदमेकैक ब्रह्म अथात्मान प्रत्यमृज्य रूप धत्त–उक्थ प्रतिष्ठा साम चेति। यावानेप दृश्यत कश्चन पिण्डस्तदेकमेक पृथगुक्थ भवति। सेय निरुक्ता वाक्। तस्मादुत्थ सर्वैनत् पाराध्यादुक्थ नाम। तदन्तर्नाभौ प्रतिष्ठा-नामेन्द्र प्राण.। तत्प्रचलने पिण्डप्रचलन, तत्प्रच्युतौ पिण्डो न प्रच्यवते।

तस्मात्सा प्रतिष्ठा नाम। अथैष पिण्डोऽतिदूरात्परिपश्यतां दृश्यो भवतीति तल्लोकालोकमण्डलं तदन्तर्मण्डलं च सर्वं साम।

समं हि सर्वतो दिक्षु तद् दर्शयतीति साम नाम। तत्र दृष्टं चोक्थं महोक्थेन समं भवतीत्यतोऽपीदं साम नाम। प्रतिष्ठा ह्युक्थस्यात्मा साम्नश्च। उक्थं साम्न आत्मा प्रतिष्ठायाश्च। सामाप्यात्मा प्रतिष्ठाया उक्थस्य च। नत्त्वेषामेकमन्येन विना भवति। यत्सत्तया यस्य सत्ता स तस्यात्मा। तस्मादुक्थं प्रतिष्ठा साम चात्मा इत्याह भगवान् वाजसनेयः। आत्मा हि ब्रह्म। तदित्थं लक्षणं ब्रह्मैवेदं सर्वम्। तथाचोक्थं प्रतिष्ठा सामेति व्यस्तं कार्यब्रह्मलक्षणं बोध्यम्।

अस्ति हि त्रिविधैतस्य ब्रह्मणो जातिः। स्वयंज्योतिः सूर्यो नाम। परज्योतिश्चन्द्रो नाम। रूपज्योतिःपृथ्वी नाम। तत्र यद्यपि सूर्यचन्द्रयोरेवाभिसमाम्नाये साम्नोऽभ्युपपत्तिः श्रूयते। "सर्वं तेजः सामरूपं ह शश्वत्" इति मन्त्रश्रुतौ ज्योतिष्येव साम्नः प्रतिपादनात्। तथापि तयोरेद्धातमां सामप्रतिपत्तेरुदाहरणविधया तदाख्यानं, न तु पृथिव्यां तदभावे तात्पर्य्यम्। समान-न्यायात् सर्वत्र सामोपपत्तेः। अथवा रूपस्यापि तेजोविशेषतया पृथिव्यामप्यञ्चसैवेयं श्रुतिः कृतार्था भवतीति वेद्यम्।

सृष्टेः प्राक् सृष्टिस्थितिकाले चेत्थं ब्रह्मणस्त्रैविध्यलक्षणमात्मत्वमाख्यातम्। इदानीं सृष्टिक्रमं प्रदर्शयामः। अव्याकृतं तदादौ तावत् त्रेधा व्याकृतमभवत्-मनोमयं, वाङ्मयं, प्राणमयं च। "यावद् ब्रह्म विष्ठितं[1] तावती वाक्" या वाक् स प्राणः, तन्मनः। तन्मनस्त्वादैच्छत्। प्राणत्वादभ्यतपत्। वाक्त्वादभ्यश्राम्यत्। अप्राप्तार्थप्राप्तिविषयिणी मनोवृत्तिरिच्छा। मनसि तद्वासना कामः। स्वतो मनसो निष्क्रियत्वेऽपि प्राणवैशिष्ट्याद् वृत्तिमतो यदशनाय प्राणप्रवर्त्तनावृत्तिः साऽशनाया सेच्छा। सा द्विविधा-वासनाक्रान्तमनः समुत्था, विशुद्धमनःसमुत्था च। निर्वासनेच्छया कृतकर्म्मणो बन्धकत्वं नास्ति। अतएवेश्वरस्य सिसृक्षामुमुक्षयोर्बन्धकत्वाभावः। स वासनेच्छया तु कृतकर्म्मणोऽवश्यं बन्धकत्वमुपपद्यते इति बोध्यम्। उक्थार्काशितिलक्षणायां मनोवृत्तौ मनो द्वेधारूपं धत्ते—पूर्णं चापूर्णं च। यावन्मनस्तावान् प्राणस्तावती वाक् तत्पूर्णं रूपम्। विस्रस्तसंभरितानां मनसिप्राणवाचांसाम्येनात्मनो विशिष्टाङ्गपरिपूर्त्तेः संभवात्।

यत्पूर्णं तदुक्थं स आत्मा। अथात्मनो भूमस्वाभाव्याद् वृद्धिमभ्युत्क्रममाणस्य मनसो यदभ्युत्थानं तत्र प्राणमात्राया असहयोगादशितिलक्षणवाचोऽ-

---

१. विष्ठानं संस्थानं व्याप्ति सीमा-

"सहस्रधापञ्चदशान्युक्था, यावद् द्यावापृथिवी तावदित् तत्।
सहस्रधा महिमानः सहस्रं यावद् ब्रह्म विष्ठितं तावती वाक्॥"

सम्पत्तिरिति वाचा प्राणेन च शून्यमात्मानमपश्यत् तदभ्युत्थित मनोऽपूर्ण रूपम्। तथया विशिष्टा मनदमाकाङ्क्षमाणानामसमर्थाना दरिद्राणां मन। यद्यपि नैषा वाक्प्राणमनसामेकमन्येन विनाकृत भवति। अस्ति हि निष्क्रियस्य मनसाऽभ्युत्क्रमणार्थो मनस्यन्तर्याम प्राण। अस्ति चेच्छाविषयरूपा मन स्था वाक्। अथाप्यशनायायामशिति ग्रहीतु बल नास्ति अशनग्रहणस्यापेक्षितस्य वहिर्याम प्राणस्य विज्ञानाल्पत्वेन कर्मदोषेण चानुपार्जितत्वात्।

तत एव चाशितिर्नास्ति। तस्माद यद्यथेच्छति तत्तथा न शक्नोत्यात्मसात्कर्तुमित्यतस्तन्मन शून्यमात्मान पश्यतीत्यपूर्णत्व मनसा ब्रूम। यावानस्य मनसोऽन्तर्यामप्राण। यावती चास्येच्छा विषयभूता बुद्धिमयीवाक तदुभयसाम्येनाशितिलाभो नास्तीतिवैषम्यात्। तदिदमुदरम तर कुरुते तस्माद वैषम्य सतत दुःखाय कल्पते। अतश्चेय सर्वामनच्छा दुःखमयी भवत्यल्पप्राणस्य। यदपूर्ण रिक्तोदर लघुत्वाद्विचलितप्राय विरिष्यमाण तदर्चदचरत् तस्मादर्कोनाम। अचनमाराधन साधन सपादनमशितिग्रहणाय बलग्रहणमिति यावत्। एतेन प्राणसम्पत्तिराख्याता। ततोऽशिर्ति प्राप्य पूर्ण भवदुक्थमात्मा सपद्यते। तत्रायमुक्थस्यार्क एव चरन्नात्मन इच्छानामोच्यते। तयेच्छया याऽर्थो विषयी क्रियते मनसि, तद्वासना काम। वाचोऽर्थस्य मानस रूप काम। यावान् वा प्राणन मनसि वाचो भोग स काम। वाचोऽयमर्क उत्तिष्ठन् इच्छा भवति। तमर्थं जानान कामयमान एवेच्छति।

इत्युक्त काम। अथैतत् तपो निरुच्यते। इच्छया सहैवोत्तिष्ठन् प्राणस्तमर्थमभ्येति यमिच्छति। अर्थप्राप्तिसाधनविषया प्राणवृत्ति प्रयत्न तत्तप। मनोऽर्काहितकायाग्निसमुत्थापितप्राणप्रक्षोभस्तप। उक्त च मैत्रायणश्रुतौ-"प्रजापति प्रजा असृजत। ता वै तपसैवासृजत। स वै स वाचमेवायच्छत्। तपो वा एष उपैति यो वाच यच्छति। सृष्टि प्रजानामग्निहोत्रम्। उभयत एव प्रजा सृजते-इतश्चामुतश्चेति" (१/८ ४)।

अपिच तत्रैव श्रूयते-"तपसो वै ता प्रजा प्रजायन्त। तास्तत्व वा एतद्गच्छति यच्छन्तत्व गच्छति। तत प्रजायते।" (१/१०/६) इति। श्रुतत्वमग्निसयोग। वाजिश्रुतावपि तप स्वरूप फलरूपान्तन श्रूयत। "एतद्वै फलस्तप्यते यदत्स्वावेष्टमान प्लवने स यदेवोपहन्यते मृदेव भवति" (६ १ १) अन्यत्रापि तैत्तिरीयके कद्रू सुपर्णाख्याने श्रूयते।

"एतत् खलु वाव तप इत्याहुर्य स्व ददातीति" (त. स ६ १ ६ ३) दान समर्पणम्। तदात्मनोऽवदानादेव सम्भवनीयोऽवदानमेवैतद्दानम्। तथाहि-'आत्मदक्षिण वा एतद् सत्रम्। यदा वै पुरुष आत्मनोऽवद्यति य

कामयते तमस्यश्नुते" (ताण्ड्य० ४/९/२०) इति ताण्ड्यश्रुतौश्रुतमात्मावादानस्यैव तपस्त्वमभ्युपपद्यते ।।

यान्येतानि यज्ञतपोदानानि कर्माणि श्रूयन्ते तपांस्येवैतानि सर्वाणि । तत्रैतावान् भेदः । आत्मा वितायमानो यत्राधिदैविकैर्देवैः संयोज्यते । मानुषे आत्मानि दैवमात्मानमुत्पाद्य यत्रैन दैवमात्मान दिव्यैर्देवैः सश्लेषयति तदात्मावदानं यज्ञः । अथ आत्मनो यो विराट् यच्छरीरं तस्य कतिपयांशाः परत्र यद्यर्प्यन्ते तत्तपः । यथा ध्यानं वाऽनाशकं वा सर्वमिदमन्तरङ्गाणामात्मांशानामर्पणं बोध्यम् । यत्र तु बहिरङ्गाणामात्मीयानामन्नाद्यर्थानामवदानेन परत्रार्पणं क्रियते तद्दानमिति भाव्यम् । उत्तरोत्तरं ह्येतद्विप्रकृष्टमिति तारतम्यात् पृथक्शब्दा भवन्ति । सर्वथाऽप्यात्मावदानं तपः । प्रजोत्पत्तौ वा अग्निपरितापेत्र आत्मनः कश्चिदंशोऽवत्तः सन् परत्रोपयुज्यते तस्मात् तत्सर्वं तप इत्याहुः । मनसोपहितस्य प्राणस्य वाचमभि यावृत्तिस्तत् तपः ।

एवं प्राणोपहिताया वाचो या स्वस्मिन् वृत्तिः स श्रमः । एकस्मादेव तत्वाम्नानारसरूपार्थोत्पत्तौ तपाविशेषप्रवर्त्तककामविशेष एव हेतुः । यदेव यतः कञ्चिदुत्पद्यते सेन्द्रियाद्वा निरिन्द्रियाद्वा सर्वत्रैवं कामतपः श्रमपूर्वैव सृष्टिर्भवतीति सृष्टिमात्रसाधारणो नियमः ।।

प्राजापत्यं पुरं यज्ञस्थानमस्तीति कारणात् ।<br>
कुरुक्षेत्रमितिस्थानं क्रियते कर्म तत्र हि ।।

यदिदं किञ्चित् क्वचिद्दृश्यते तदिदं सर्वमेकैकं प्राजापत्यं कुरुक्षेत्रम् । तमेदं तावन् शुक्रजनितं मृत्युमय विद्यात् । वाग्गावोंरित्येतत् त्रितयं मृत्युः शुक्रम् । अथैतत् सर्वं मृत्युमयममृते शुक्रनिहितं विद्यात् वागप्पोऽग्निरित्येतत् त्रितयममृतं शुक्रम् ।। अथ सर्वं हीदं शुक्रिममन्नान्नादे ब्रह्मणि समर्पितानि सन्तीत्यग्नीषोमीय विश्वविज्ञायते ।

अथेदं सर्वमग्नीषोमीयं वाग् ब्रह्मणि सूर्य्यलक्षणे समर्पितानि भाव्यानि । "वाचीमा विश्वा भुवनान्यर्पिता"—इति मन्त्रश्रवणात् । अतश्चेदं वाङ्मयं विश्वमाहुः । अथेद वाङ्मयं विश्वमप्सु समर्पितमस्तीति स्मृत्वा सर्वमापोमय जगदाख्यायते । आपो हीमास्त्रिविधाभगवांसहस्राणि । आदित्यगवीनां सहस्राच्चैतन्यम् । अग्निगवीनां सहस्राच्छरीरे प्राणाः। वायुगवीनां सहस्राच्छरीराङ्गानि जायन्ते । प्रतिसाहस्रं त्रिंशता त्रिंशता गवामहर्गणा भवन्ति । अह्नां च षट्कारो वषट्कारः स आतानयज्ञः प्रजापतिः । अथ आपोमयं चेदं सर्वं प्राणे प्रतिष्ठितं प्राणमयं विद्यात् । सप्तपुरुषश्चायमेकः पुरुषः प्राणमयस्य रूपं भवति । तदित्थं पञ्च पञ्चजना हीमे पञ्चप्रकृतिकमेकं ब्रह्म । अपिचाहुःप्राण आपो वाग् अन्नान्ना-

द्याविति चतुर्मुखो ब्रह्मप्रजापतिः। यत् सत्तु दिव परस्मात् पृथिव्या अवस्माद्, यच्चसदन्तरा द्यावापृथिव्यौ किञ्चित् सर्वं खल्विद ब्रह्मप्रतिष्ठित ब्रह्मविज्ञायते। प्राणः खल्वय वायु। स नान्तरेणाकाश मञ्चरति। मचरन्ति चेमानि सर्वाणि दृश्यन्ते। तस्मादाकाशे तदोत च प्रोतच। वाग काश स्थितिलक्षण.। प्राण-वायुर्गतिलक्षण। तावेतौ वाय्वाकाशौ यजु पुरुष। यच्च जूश्चेति व्युत्पत्ते तदेतदाकाश परम व्योम नाम।

अथैतदाकाशमक्षरपुरुषे परमे ब्रह्मणि तदोत च प्रोत चास्तीति विद्यात्। तदेतदन्तरतम परमस्थानम्॥ स एषोऽक्षर सर्वषामेषामेक आत्मा। श्रयते च-यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित। तमेवमन्ये आत्मान विद्वान्ब्रह्मा मृतोऽमृतम्। तदित्थमेकमक्षर पचब्रह्माणि द्व शुक्रे—इत्येव मष्टावास्थानानि प्रत्यर्थ विजानीयात्।

तत्र तावदिदमाद्यमक्षर मन प्राणवाङ्मय सत् सृष्टये प्रवर्तते। "स वा एष आत्मा वाङ्मय प्राणमयो" इति बृहादारण्यके श्रुते।

मन. प्राणवाक्षु च प्राण एव प्रधानम्। वाङ्मनसयोरक्रिययो प्राणेन-वृत्तिकरत्वात्। प्राणो बलम्। बलाश्रिते हि ते वृत्ति लभेते। न च ते प्राणन कदाचिद्वियुक्तं भवत। तत्र मनो दिग्देशकालानवच्छिन्नमपि प्राणविशिष्टतया प्राणमात्रानुसारेण महच्च भवति क्षुद्र च। क्षुद्रस्य मनसः क्षुद्र कामो महतश्च महानित्यनन्तविध तारतम्य निष्पद्यते। कामबलमात्रानुसारात् तदाश्रितवाचो मण्डलक्षुद्र महद्वा नानाजातीयमुत्पद्यते। ततोऽनन्तान्येतानि मन प्राणवाङ्मयानि प्राजापत्यमज्ञानि कुरुक्षेत्रसज्ञानि च ब्रह्मरूपाणिसभूतानि। प्राणजातय एव स्वन-न्तविधास्तद्भेदे हेतु.। "विरूपास ईदृषयस्तइद् गम्भीरवेपस। ते अङ्गिरस सूनवस्ते अग्ने परिजज्ञिरे" (१०/६२/५) इत्याद्या श्रुतय प्राणजातीनामनन्त-विधत्वे प्रमाणम्।

तत्राप्येकैकप्राणसामान्यखण्डे कामाधीना नानाविशेषा अवान्तरा उत्पद्य-यन्ते। तेषा च विशेषाणा यदविशेष पौनिक प्राणसामान्यखण्डमाख्यात तमसत-प्राणमाचक्षते ऋषिप्राण च। न तद्रूप नियमानकार्यरूपवदस्तीत्यसदुच्यते स यत्पुराऽस्मात्सर्वस्माददिदमिच्छन् श्रमेण तपसारिषत् तस्माद् ऋषिर्नाम। "असद्वा इदमग्र आसीत्। ऋषयो वाव तेऽग्रेऽसदासीत्। प्राणा वा ऋषय" इति हि वाजिश्रुति श्रूयते (६/१/१) प्राणावा ऋषयो दव्यासस्तनूपावानस्तन्वस्तपोजा." (ऐ ब्रा. ६ अ. ३ ख) इत्यैतरेयश्रुतिश्च। तस्मादेवासदभिधानाद् ऋषिप्राणख-ण्डात् तदन्तः सृष्टयो जायन्ते।

तत्र प्राणा ऋषयस्तन्वस्तपोजा.—इति श्रुत्या ऋषि-प्राणाना तासा सृष्टि-जनकत्वमवगम्यते। तथाहि-अव्ययपुरुषालम्बन क्षरपुरुष-साधनो विश्वव्यापी

कश्चिदक्षरपुरुषः प्रकृत्या विशिष्टः सन् प्रकृतिब्रह्मणः पाञ्चविध्यात् पञ्चधात्मानमाधत्ते, स प्राणमयः स्वयंभूः। स आपोमयः परमेष्ठी। स वाङ्मयः सूर्य्यः। सोऽन्नमयश्चन्द्रः। सोऽन्नादमयः पृथ्वीलोकः। तत्र स्वयंभूः सत्यलोको द्यौः। परमेष्ठी जनल्लोकः पृथ्वी। तयोरन्तरतोऽन्तरिक्षं तपोलोकः। अथ परमेष्ठी द्यौः। सूर्यः पृथ्वी। तयोरन्तरतोन्तरिक्ष महर्लोकः। अथः सूर्य्यःस्वर्लोको द्यौः। इयं पृथिवी पृथ्वी। तयोरन्तरतोऽन्तरिक्ष भुवर्लोकः। अथेयं पृथ्वी भूर्लोकः। तेऽमी सप्तलोका उत्तरोत्तरं क्रमेण संनिविशन्ते। तत्रायं सत्यलोकः स्वयंभूर्ब्रह्माग्निलोकः। ऋक्सामयजुषां यजुर्ब्रह्माग्निरुच्यते। यच्चजूश्चेति व्युत्पत्त्या वाय्वाकाशभेदभिन्नोऽयं ब्रह्माग्निः तत्रानन्ता वायवोऽमी ऋषय उच्यन्ते। ते द्विविधाः– उन्मुग्धावयवा उद्बुद्धावयवाश्च। आद्या असत्प्राणाः सत्यलोकेऽवतिष्ठन्ते। अथैते तपोलोकमागत्यतप्यमानाः परिक्षुब्धाः सन्तः क्रमेण तृतीये पारमेष्ठ-जनल्लोके समागता उद्बुद्धावयवा भूत्वा द्वितीयाः पितरो जायन्ते। तपोजाहीमे तपसैव नानारूपा जायन्ते।

तत्रोद्बोधावस्थायामवयवधर्मतो भेदादमी ऋषयोऽनन्तविधा भवन्ति। तेषु द्वादशाभिस्तुतयः स्मर्य्यन्ते—भृग्वङ्गिरसौ, अत्रिमरीची, पुलस्त्यपुलहौ, क्रतुदक्षौ वसिष्ठागस्त्यौ, विश्वामित्रविश्वकर्माणौ इति। त एते पितृसञ्ज्ञाः प्राणा वाच्येव योनौ आत्मानं सिञ्चन्तोऽक्षरपुरुष मनोविशेषगृहीतबलप्रयोगाद् विभिन्नरूपा एताः सर्वाः सृष्टीरुत्पादयन्ति। तथा चैतरेयश्रुतिराह—"प्राणो वा आयुः। प्राणोरेतः। वाग् योनिः। योनिं तदुपसंधाय रेतः सिञ्चति। रेतस्तत् सिक्तं विकरोति। सिक्तिर्वा अग्रेऽथ विकृतिः। रेतस्तद्विकृतं प्रजनयति। विकृतिर्वा अग्रेऽथजातिः" (१०/२८/२९) इति। एष च प्राणो मनमर्पितो वाचि सिच्यते। "सोमो वै रेतोधाः।" इति बहुधा श्रवणात् सोममयं मन एवादौ कामयते, मानस रूप प्रकल्प्य तदर्थं प्राणं नियुङ्क्ते। प्राणेन चाऽऽहता वाग् विक्रियत। त्वष्टा रूपाणि विकरोति। स एष सर्वसृष्टिसर्वसाधारणो नियमः॥

अक्षरगताकाशेप्राणवायुश्चतुर्धा व्यासज्जते – इन्द्रः आत्मा पक्षौ पुच्छम्।

अथैष तावदपिप्राणः स्वभावात् परिमण्डलरूपः प्रायेण सपद्यते। तच्चैतत् परिमण्डलं वर्मस्वभावतस्त्रेधा विभज्यते। अभयं सामन्तं पारावतञ्च। मध्यं वै नाभिः, मध्यमभयम् (श.त. १/१/२/२३)एष खलु मध्यमः प्राणो द्वेधोपपद्यते—स वीर्य्यो वा क्वचिन्निर्व्वीर्य्यो वा। ब्रह्मक्षत्र विडिति वार्य्याणि (पृ. १/८२/६१) तत्र ब्रह्मवीर्य्यत्वे दिव्य भावोपपन्नो ऽयमात्मा प्रशान्तवृत्तिर्धृतिमान् शान्तिप्रधानो ज्ञानशीलः संपद्यते। क्षत्रवीर्य्यत्वे वीरभावतया स्वतन्त्रवृत्तिर्महोत्साहः क्षोभप्रधानः पराक्रमणशीलः संपद्यते। विड्वीर्य्यत्वेपशुभावतयाऽन्यानुरोधो परतन्त्रवृत्तिराश्रयसापेक्षः परार्थव्यवसायशीलः संपद्यते। एतानि

सवीर्य्याणि रूपाणि । निर्व्वीर्य्यस्तु मृतप्रायभावोपपन्न आत्मा पराभिभवनीयो लघुत्वादधीरत्वाच्चाशु द्रवणशीलो भवति । यद्यपि सर्व एवात्मा मन प्राणवाङ्-मयत्वात् त्रिवीर्य्य एवास्ति तथापि वैशेष्यानुरोधिनि व्यपदेशे पृथगिव वीर्य्यं समाख्या क्रियते । तथा चायमात्मा चतुर्विधो व्यवतिष्ठते—ब्राह्मण क्षत्रियो वैश्य शूद्रश्चेति ।

चन्द्रस्यात्मा ब्राह्मण । सूर्य्यस्य क्षत्रिय । पृथिव्या वैश्य । एतेषु सत पशूना त्वात्मा शूद्र —इति विवेक्तव्यम् । विशेषानादरे तु सर्वत्र ब्रह्मक्षत्रवीर्य्यानु-रोधात् प्रजापतिशब्दश्चेन्द्रशब्दश्च प्रयुज्येते । तत्र "प्रजापतिश्चरतिगर्भे" इति श्रुते स प्रजापतिरुच्यते । अपि च—तदध्याश्रितास्तन्नह्ना समन्तात् प्राणा प्रथन्ते इत्येतेषा सामन्तप्राणानामेष मध्यम प्राण इन्द्र । स मध्यत सन्निन्ध सामन्तान् प्राणानितीन्ध सन्निन्द्र उच्यते । इद्धाश्चैते सामन्तप्राणा सप्तधा विभज्यन्ते—नाभेरूर्ध्वमधस्ताच्च द्वौ द्वौ पुरुषाविति चत्वार प्राणा आत्मा सोऽङ्गी । ततो बहिर्धा त्रय पुरुषा पक्षपुच्छानीत्यङ्गानि । तथा च "त्रिवृद्वै चक्षु शुक्ल कृष्ण लोहितम्" (३/५) इति कौषीतकिश्रुते कनीनिकाकृष्ण-शुक्लैरक्षिवदिद वर्तुलवृत्त त्रिवृद्रूप सपद्यते—मध्यबिन्दुरनिरुक्तोऽक्षरपुरुष-सपरिष्वक्त प्राण इन्द्र, स एको भाग । त परितश्चत्वार प्राणा आत्मा, स द्वितीयो भाग । त परितो द्वौ पक्षावेक पुच्छमिति त्रय प्राणा अङ्गानीति तृतीयो भाग ।

अत्राङ्गिप्राणविगमे साङ्गोपाङ्ग विनश्यति । किन्तु यद्विगमे सत्यपि नाङ्गी स्वसत्तातश्च्यवते तदङ्गम् । यथा हस्तपादादिविगमेऽपि प्राणी जीवत्येव, नाभि-हृदयमस्तिष्काद्यात्मप्राणापाये तु सद्य प्राणी म्रियत । तेनैतत्कायारम्भकाणा प्राणाना नाभ्येन्द्रेणोपनहनतारतम्यान्मुख्यामुख्यत्वाभ्या भेदोऽवकल्पते । यत्र यत्र प्राणोनार्थस्तत्र सर्वत्रैवमिन्द्रात्माङ्गभेदात् त्रविध्यमिति साधारणो नियम (शत ६/१/१) तच्चेदमात्मप्राणाङ्गप्राणद्वैविध्यकृत रूपमिन्द्रस्यात्मनोऽधिष्ठान शरीरारम्भकभूतानामायतन विज्ञायत ।

अथतेषा सप्तानामङ्गाङ्गिपुरुषाणा श्रीभिरिन्द्रसमिन्धनविशेषादूर्ध्व मुदूढरसरूपाभि पृथगिवामृत सप्तप्राणरसमेकपुरुषमात्र शिरो भवति । यस्यै-तच्छिरस्तच्छरीर तन्मर्त्यम् । वाक्प्रधान प्रसुप्तमिव निश्चेष्ट शरीरम् । प्राण-प्रधान जाग्रदिव कुर्वद्रूप शिर । शिरसि च शरीरे च पृथगिव सप्त सप्त प्राणा श्रयन्ते । देवप्रधान शिर प्राणमय तत्रैतानि भूतानि देवानाश्रयन्त । आहुतयश्च देवेभ्य क्रियन्ते न भूतेभ्य । तेनेद भौतिक शिर कृश्यतो न कृश्यति मेद्यतो न मेद्यति । अथ भूतप्रधानमिद शरीर, तत्रैते देवा भूतान्याश्रयन्ते । आहुतयश्च भूतेभ्य क्रियन्त न देवेभ्य तेनैते देवा कृश्यतो न कृश्यन्ति मेद्यतो न मेद्यन्ति ।

तत्र शारीरैः सप्तभिः पुरुषैरेकः पुरुषो भवति तमेतं पुरुषमग्निरित्याचक्षते । सोऽयं वागापसहकृतः शुक्रोऽग्निर्द्विविधः-मर्त्यश्चामृतश्च । यो मर्त्यः सोऽग्निश्चित्यो नाम । यथा मनुष्यशरीरे लोमत्वगसृग्वसामांसास्थिमज्जाशुक्राणि चीयमानानि चित्योऽग्निर्भवति एष मर्त्यः प्रजापतेरर्द्धभागः । तत्र सर्वाणि भूतानि श्रितानि । अथैतत्सप्तपुरुषश्रीसंभूतैः शिरस्यैः सप्तभिः प्राणैरेकः प्राणो भवति । सोऽग्निरमृतश्चितेनिधेयो नाम । येन येन रूपेणायं चित्योऽग्निश्चीयते । तत्र सर्वत्रायं तत्तदभ्यन्तरेऽनुस्यूतो भवतीति चितेनिधेय उच्यते ।

सोऽमृतः शुक्रोऽग्निर्वागापःसहकृतः प्रजापतेरर्द्धभागः। तत्र सर्वे देवाःश्रिताः। अत्र हि सर्वेभ्योदेवेभ्यो जुह्वति (शत. ६/१) इति श्रुतेः। अपि च मन्त्रः पठ्यते "अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः। स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुयाऽकर्भागधेयम्" (तै.सं. १:३:७:१४) इति तैत्तिरीयपाठः। अथर्ववेदे यजुर्वेदे चायं किञ्चित्पाठभेदेन पठ्यते। मर्त्येऽग्नावमृतोऽग्निः प्रविष्टो भवति। इत्थं चातिक्षुद्रं कृमिकीटशरीरं वा महाविशालं जगद्ब्रह्माण्डरूपमीश्वरशरीरं वा सूर्य्यश्चन्द्रः पृथ्वी वा यावदिदं किञ्चद् दृश्यते तत्सर्वमेकैकं कृत्वा वहिःशरीराभ्यन्तरप्राणाभ्यां द्विविभवतं मर्त्यामृतमयं विद्यात्। इन्द्र एव च मर्त्यामृताभ्यां द्वेधा विभक्तात्मा तेषां सप्तानां चित्यानां सप्तानां चितेनिधेयानां चैकः संनहनः प्रतिष्ठेत्येवमिन्द्रामृतमर्त्त्यैस्त्रिवृद्भावं सर्वत्र विद्यात् ।

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। "इन्द्रस्य युज्यः सखा" इति श्रुतेर्विष्णुसहायोयमिन्द्रोऽमृतैः शिरोधातुभिर्मर्त्यैश्च शरीरधातुभिः सहोत्थायोत्थाय तदिन्द्रसहचारिणा विष्णुनासमाकृष्टानामागन्तुकानां दिव्य—रसानामाहुत्या यज्ञजन्यं मर्त्यामृतधातुमयं रूपान्तरं धारयमाणास्तदुभयाश्रित एव प्रतितिष्ठति। यथा भूपृष्ठे शिलाजस्तुगैरिकादयो दूर्वावनस्पत्यादयः कृमिकीटमनुष्यादयश्च। त इमे सर्वे पशुशब्देनाख्यायन्ते। तत्र यो यज्ञस्तं शिपिविष्टमाचक्षते। "पशवो वै शिपिविष्टम्" (४/६/८) एषा वै प्रजापतेः पशुष्टातनूर्यम् शिपिविष्टम्। (१/११/६) । इति मैत्रिश्रुतेः। परे त्वाहुः-शिपयो रश्मयः। रश्मिमण्डलस्यान्तर्विष्टं यत्पशुमयं प्रतिष्ठारूपं तच्छिपिविष्टं यथैषा पृथिवी यथा द्यौः प्राणिशरीरं वेति ।

यद्यपि "एषा वाव पश्विष्टका यद्‌ूर्वेष्टका" इतिवाजिश्रुतौ (६/२/१) "औषध्यात्मा वै पशुः" इत्यैतरेयश्रुतौ च (६/०/०) । अन्तःसंज्ञजीवानामेवौषधिवनस्पतीनां पृथिवीपोषाणां पशुत्वमाख्यायते। तथापि पोषत्वाविशेषात् तदसंज्ञानांशसंज्ञानां च जीवानामुपलक्षणमास्थेयम् । पोषत्वं पशुलक्षणमिति यैरुपकरणैरस्याः पृथिव्याः पोषस्तेषु सर्वेष्वेव समानन्यायात् पशुत्वोपपत्त्या त्रिविधानामपि जीवानां पशुत्वाभ्युपगमात्। एतेभ्योऽन्येषामप्युपकरणत्वाविशेषात्पशुत्वमिष्यते ।

द्वन्दासि पोषा अन्नानि सलिलान्यम्नयोऽपि च।
पञ्चैते पशव प्राण धृता आत्मनि शेरते॥
इति वचनात्॥

अन्तरिक्षे दिवि चैव पशव केचनोपपद्यन्ते तानिह पशुसमाम्नाये प्रदर्शयिष्याम.॥

यद्यपि प्राणाधारेणैव त्रिष्वपि लोकेष्वित्थममृतेन। सार्धं मर्त्यं पशु चावोचाम। तथापि त त प्राण वाङ्मय मनोमय चाव्यभिचारेण विद्यात्। वागेव च तत्र यश इति वाचमेव त्त सर्वं ववतु प्रभवाम। अतएव मैत्रायणश्रुतौ "अन्न वै वाजः। वाग्धि वाजस्य प्रसव.। सा वै वाक् सृष्टा चतुर्धा व्यभवत्–एषु लोकेषु त्रीणि तुरीयाणि। पशुप तुरीयम्। या पृथिव्या साग्नौ सा रथन्तरे। याऽन्तरिक्ष सा वाते सा वामदेव्ये। या दिवि सा बृहति सा स्तनयित्नौ। अथ पशुषु[1]" इत्येव लोकत्रयेऽप्यमृतमर्त्ययोरुक्थयो साम्नश्च वाक्त्वमाख्याय प्रतिलोक पशुभावस्य वाक्त्वमाचष्टे। स्तनयित्नुरिन्द्र। यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणीति[2]। मन्त्रश्रुते दिव्योऽयमिन्द्र. पूर्वोक्तात् सर्वान्तरतमादात्मरूपान्नभ्येन्द्रादतिरिच्यते। अग्निवातेन्द्रा अमृता अन्तरतमा. आत्मरूपा गतिमन्तो यजूंषि प्रथमा विभूति। पृथिव्यन्तरिक्षदिवो मर्त्या लोका पिण्डरूपा मूर्तय ऋचो द्वितीया विभूतिः। रथन्तर वामदेव्यबृहन्ति सामानि प्राणमयसहस्राणि वह्निमंडलरूपाणि तृतीया विभूति.। अथ पशव. पराश्रितात्मानश्चतुर्थी विभूति.। तदित्थ मनोमयप्राणगर्भिता वागियमेकधैव सती लोकत्रयपशुभेदाच्चतुर्धाविभूयान्नं वाज प्रसूते। "चत्वारि वाक परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीय वाचो मनुष्या वदन्ति" (ऋ.स १।१६४।४५) इति मन्त्रोप्यत्रानुसधेयः।

अत्रैषा पशूनामात्मनो यद्यपि निर्वीर्य्यत्व प्राणत्यात तथापि तदाश्रयपृथिव्याद्यपेक्षयाऽत्यल्पवीर्य्यतया तज्ज्ञेयम्। वस्तुतस्तु तेषामर्त्यात्मनोऽपेक्षात्वत ब्राह्मणत्व,क्षत्रियत्व वैश्यत्व शूद्रत्व वा यथायथ तारतम्यादुपपन्न दृश्यत। निर्वीर्य्यैकवीर्य्य-द्विवीर्य्य-त्रिवीर्य्याणामुत्तरोत्तर चाधिक माहात्म्य कल्प्यम्।

इदमत्रापर द्रष्टव्यम्। सूर्य्यचन्द्रपृथ्वीनामात्मा पूर्ण इति कृत्वा सर्वत समानभावेन विभवनाद् वर्तुलवृत्तत्वमस्य प्राणात्यातम्। किन्त्वेतस्मात् प्रजापते विस्रस्तरसानामेकदिक्प्रचारितया तदुपपद्यस्यात्मनोऽर्धेन्द्रत्वमेवापपद्यते। तत्र सूर्य्यदिग्विस्रस्तरसादाग्नेयदिग्विस्रस्तरसाद्वा पुंसामात्मा। सूर्यविपरीतदिग्

१. श ब्रा. १.११.५
२. श ब्रा. १४ ५.२१

विस्रस्तरसात्सौम्यदिग्विस्रस्तरसाद्वा स्त्रीणामात्मा उभयं चेतदर्धमर्ध तस्मादपूर्णम् ।

अर्धत्वादेवायं पशूनामात्मा प्राक् सवीर्य्यो भवति प्रत्यक् तु निर्वीर्यः। वृक्षाद्यन्तःसंज्ञानां कृम्यादिससंज्ञाना चात्मा न चतुर्दिक्षु समं वीर्य्यं लभते। वृक्षादीनां मूलरूपाया नाभेरूर्ध्वमत्यन्तमधस्तादत्यल्पं वीर्य्यम्। ऊर्ध्वं शाखोपशाखादिविकाशेऽपि मूलादधस्तिर्य्यग्दिक्षु तद्विकाशादर्शनात्। चेतनशरीरस्य च नाभेरूर्ध्वाधरविकाशेऽपि पार्श्वयोस्तथा विकाशाभावात्। पुंसः स्त्रियो वा शरीरे मेरुदण्डोऽर्धतमादेव विपुवन्मण्डलात् प्रजायते। "यथा वै पुरुषः, एवविपुवान्। तस्य यथा दक्षिणोऽर्द्धः-- एवं पूर्वोऽर्धो विपुवतः। यथोत्तरोऽर्धः—एवमुत्तरोऽर्धो विपुवतः। प्रबाहुक्सतः शिर एव विपुवान्। विदलसंहित इव वै पुरुषः। (१८अ./८ख.) इत्यैतरेयब्राह्मणश्रुतेः।

अपूर्णत्वादर्धत्वादेवायमिन्द्र आत्मानमपर्य्याप्तं मन्यते तस्मादेकाकी न रमते तद्द्वितीयमिच्छति। यत्तु मूढतमस्य विज्ञतमस्य वा स्वात्मारामत्वं क्वचिदेकाकिनो दृश्यते तद् द्वितीयेच्छावैकल्यमात्रम्। तत्रापि मूढतमस्य द्वितीयसंसर्गजनितानन्दसंग्रहोपचाराज्ञानत्वनिबन्धनमकामत्वं, विज्ञतमस्य तु स्थितिप्रज्ञत्वनिबन्धनमकामत्वं हेतुः। अरतिस्तु विश्वोद्वेगलक्षणा स्वात्मारामेष्वपि नापवार्य्यते। तस्माज्जीवात्मनोऽपूर्णत्वं सिद्धम्।

अपि च प्राणिशरीरोपादानभूतानां रेतसामर्द्धमर्द्धं विभज्य स्त्रीपुरुषौ प्रसुवाते न त्वेकैक आत्मा कार्त्स्न्येन रेतः प्रत्याधातुमीष्टे। उभाभ्यां चात्माभ्यां प्रसूतयो रेतसोः संसृष्ट्या चैक आत्मा निष्पद्यते। तथा च कार्त्स्न्येन रेतोविनियोगसामर्थ्यादर्शनादात्मनोऽर्धवीर्य्यत्वं प्रतिपद्यामहे। अर्द्धवीर्य्यत्वाच्चार्धेन्द्रत्वं ब्रूमः। अतएव च।

यत्र पुमान् कृतदारो भवति अथैष पूर्णःसंपद्यते। तथा च श्रूयते वाजिश्रुतौ—"अर्धमुहैतदात्मनो यन्मिथुनम्। यदा वै सह मिथुनेन अथ सर्वोऽथकृत्स्नः" इति (८।७।२।३)। अपि च तत्रैव—"अर्द्धो ह वा एप आत्मनो यज्जाया। तस्माद् यावज्जायां न विन्दते नैव तावत् प्रजायते। असर्वो हि तावद् भवति। अथ यदैव जायां विन्दते अथ प्रजायते तर्हि हि सर्वो भवति" (शत. ५/२/१/१०) अपि च तत्रैव "तस्मात् स पुरुपोऽर्द्धवृगलमिव" इति ह स्माह याज्ञवल्क्यः। "तस्यायमाकाशः स्त्रिया पूर्य्यत एव" (श. १४।४।२।५) इति। तैत्तिरीयका अप्याहुः—"अयज्ञो वा एप योऽपत्नीकः। न प्रजाः प्रजायेरन् अथो अर्धो वा एप आत्मनो यत्पत्नी। यज्ञस्य धृत्या अशिथिलम्भावाय" (तै. ब्रा. ३/३/३) इति।

तत्र योऽयमात्माऽयमिन्द्रः पशुशरीरेऽस्मिन्नुपमनिजहां त मनुमाचक्षते ।

प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभ स्वप्नधीगम्य त विद्यात् पुरुष परम्" ।(मनुस्मृति १२अ)

एतमेके वदन्त्यग्नि मनुमन्ये प्रजापतिम् ।

चिद्ब्रह्मवायुसूर्यचन्द्रपृथिव्याद्यात्मयोनिभेदादेष मनुरप्यधिशरीर ❀ चतुर्धा सप्तधा चतुर्दशधा वा विवक्षावशाद् भिद्यते । यद्यपि सूर्यरसादेवैतन्मनो सृष्टि-र्मैत्रिश्रुतौ श्रूयते—"स वाव विवस्वानादित्यो यस्य मनुश्च वैवस्वतो यमश्च । मनुरेवास्मिन् लोके यमोऽमुष्मिन्निति"। (१/६ १२) सूर्यस्यापि ज्योतिर्गौरा-युरिति त्रिरसस्याय मनुरायुष सपद्यते "मनुः सर्व । आयुर्वै मनु" इति कौषीतकि श्रुतेः (२६/१७) । तथाप्येषा श्रुतिर्वैवस्वत मनुमाचष्टे न स्वयम्भुवादीन् प्रत्याचष्टे । तेषामपि स्वस्वप्रभवादुत्पत्ते समानन्यायादनिवार्य्यत्वात् । सर्वो-ऽप्ययमर्धेन्द्र. । यत्तु मनु. सर्व इति कौषीतकिश्रुतौ सर्वशब्द. श्रूयते स विश्वगता-र्थाना साकल्यापेक्षो न तु प्रभवरमकात्स्न्यार्थ. ।

अथवा यथा पूर्णोऽयं सूर्यस्य चन्द्रस्य पृथिव्याश्चात्मा विराजमनुमसृजति । विराजा नित्यमनुपज्जते । एवमयमर्धेन्द्र आत्मापि विराज जनयति । विराज-श्चाभ्युत्थितादमृतरसादुत्पन्नो वैराज प्राणो मनुरित्युच्यते ।

"द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्या स विराजमसृजत् प्रभु ।
तपस्तप्त्वाऽसृजदय तु स स्वय पुरुषो विराट् ।
त मा वित्तास्य सर्वस्य स्रष्टार द्विजसत्तमा. । (म स्मृ १·३२ ३३)
इत्यादि स्मरणात्

तस्यामित्युपलक्षणं पुमर्धखण्डस्यापि पूर्णात् प्रजापतेरिवापूर्णादस्मात् प्रजापतेरप्यविशेषाद्विराडुत्पद्यते—इति बोध्यम् । वैराजात्तु मनोः पुरुषात्—ऋषय उपतिष्ठन्ते भृग्वङ्गिरोऽत्रिवसिष्ठादयः । मनोरेव च वेदा उपतिष्ठन्ते । "मनोर्ऋचो भवन्ति[1]" इति श्रुतावृक्पदस्य सर्वेतरवेदोपलक्षकत्वात् । त इमे भृग्वाद्या ऋषय ऋगाद्या वेदाश्चेन्द्रादुत्पन्ना अमृता. प्राणा मर्त्यरसोत्थितेषु शिरस्येष्वमृतप्राणषु ससृज्यन्ते ।।

अमृताग्नि', मर्त्याग्निः पाशुकाग्निश्चेत्येतदग्निविशेषत्रितय सहृत्य विराडित्युच्यते स त्रिपदाया विराज. प्रथम. पाद पृथ्वी नाम । एव द्वितीयः

❀ मनुस्मृति. (६१/६३/३६)
१. मैत्रा. स. २:१:५.

पादोऽन्तरिक्षम् । तृतीयः पादो द्यौः । प्रतिपादममृतं च मर्त्यं च तदुभययोगरूपः पशुश्चेति त्रितयं प्रतिसंहितं द्रष्टव्यम् । "पशवो वै विराट्[1]" इति श्रुतिस्तु समुदाये दृष्टाः शब्दा अवयवेऽपि वर्तन्ते इति न्यायादुपपाद्या । चित्यचितेनिधेययोर्मर्त्यामृतयोरन्नप्राणयोरपि विराट्त्वाभ्युपगमात् । तथाहि अन्नं विराट् श्रीर्विराट् अन्नाद्यं श्रियः[2] ।" इत्यादिश्रुतेः इन्द्रस्य भोगोपकरणसाधकोऽन्नकोशस्तावद् विराडुच्यते एषैवान्नमाहृत्याहृत्य स्वान्तश्चरायेन्द्रायोपनयतीत्यन्नं विराडुच्यत । ननु ताण्ड्यश्रुतौ– "एतद् वै विराजो रूपं यद्गौः" इति गोशब्देनोपात्तस्य रश्मेर्विराट्त्वमुच्यते नान्नस्येति चेन्न । "विरश्मिभिः ससृजे सूर्य्यो गाः[3]" इति कौषीतकिश्रुतौ मन्त्रश्रुत्या रश्मिभिन्नस्यार्थस्य गोत्वप्रतिपत्तेः । तथा चेह– "यज्ञो ह्येवेयं नो ह्यृते गोर्यज्ञस्तायते" अन्नं ह्येवेयं, यद्धि किञ्चान्नं गौरेव तदिति[4] इति वाजिश्रुतेरन्नमेव गोशब्देन प्रतिपद्यामहे ।

वाग् गौर्द्यौरित्येवं त्रिधा विभक्तेषु पृथ्वीरसेषु, द्वितीयो रसः पृथिव्या उत्थाय दिवं यावदभिव्याप्तः सर्वान्नामुत्पत्तावुपादानभूतो गौरुच्यते । "यो वा इडां धेनुं वेदेत्यारभ्य तस्या वा इयमेव पादः, अन्तरिक्षं पादः, द्यौः पादः, कृषिः पादः ।" इत्युक्त्वा असावादित्यः शिरोऽग्निरास्य वातः प्राणो गायत्र्यभिधानी त्येवं तत्रैवाख्यानात् । पञ्चमी त्विमे सर्वे भोगास्तत्रैवोक्ताः । तथाच विराजो गोत्वात् ताण्ड्यश्रुतिरुपपद्यते, सर्वभोगानां गोत्वादन्तःश्रुतिश्च । अथचोपादानकारणे गोशब्दः ततो या योनिरुदशिष्यत स गौरभवत् "योनिर्वै नामैषः[5]" । इति श्रुतेः ।

गवामन्नरसोपनायकत्वाच्चान्नत्वम् । ज्योतिर्गौरायुरिति त्रिरसस्य सूर्य्यस्य गोभ्यः सर्वरसाः सर्वाण्यन्यानि पृथिव्यामुत्पद्यन्ते तानिन्द्रो भुंक्ते इति बोध्यम् अन्नोर्क्प्राणमयत्वाच्चैषा विराडेव यज्ञः । सहोन्द्रप्रतिष्ठस्तदर्थश्चेत्यत एवं श्रूयते— "सर्वो वै यज्ञ इन्द्रस्यैव । ऐन्द्रो यज्ञः[6] । इन्द्रो वै यज्ञस्य देवता[7]" इति । यज्ञो वै विष्णुरिति बहुधा श्रूयते ।

तेनायं विराड्विष्णुरुपेन्द्रश्चोच्यते । तस्य नित्यमिन्द्रेण संयोगात् । तथा च श्रूयते "विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा[8]" इति । अन्नं वै व्रतमिति वाजिश्रुतिः । अपिच प्राणमयकोशे प्रत्यासन्नानां बहूनां प्राणानामपि विराट्त्वमास्थीयते । दशदशिनी विराट् (कौषी. १७/३)

---

१. मैत्रा. सं. १:६:६.
२. कौषी. ब्रा. १७:३.
३. तत्रैव २५:३.
४ श. ब्रा. २:२:४:१३.
५. मैत्रा. सं. ३:७.
६. श. ब्रा. ११:१:३:४.
७. श. ब्रा. २:३:२:३८.
८. ऋ. सं. १:२२:१६.

"दशाक्षरा विराट्" इत्यादि श्रुतेरस्या प्राणमयविराजो दशावयवत्व निर्धारयन्ति । तद्यथा-दश वा एतानग्नींश्चिनुते—अष्टौ धिष्ण्यानाहवनीयं च गार्हपत्यं च । तस्मादाहुर्विराडग्निरिति । दशाक्षरा हि विराट् । एतान् सर्वानेकमिवैवाचक्षतेऽग्निरिति । एतस्य ह्येव तानि सर्वाणि रूपाणि[1] इति वाजिश्रुतौ श्रूयते विभिन्ना वा दशधर्मा यत्र सह्यन्ते सा विराट् तद्यथा—

☆ प्राणाश्च देवा ऋषयो ग्रहाश्च स्तोमाश्च पृष्ठान्यृतवो दिशश्च ।
छन्दांसि सामानि दशाक्षरैषा विराट् प्रतिष्ठा लभतेऽभियज्ञम् ॥

वाक्प्राणचक्षु श्रुतयः पुरीष्य शिश्न च नाभिर्दशमीति प्राणाः[1] ।
आदित्यवाय्वग्नि विधाभिरग्निस्त्रिधा द्विधा चन्द्रदिशस्तु सोम ॥

देवा स्त्रयस्त्रिंशदहानि चाग्नीषोमीयस्य द्विविधाहि देवा ।
देवास्त्रयस्त्रिंशदिहाग्निपूर्वा विष्णूत्तमा एष विराट् स यज्ञः ॥

स्तोमैर्वषट्कार इहास्ति षड्भि. प्रजापतिः स्तोमचतुष्टयात्मा ।
इत्थ वषट्कारप्रजापति द्वौ ब्रवीति देवो मुनिरैतरेयः ॥

प्रजापतिः सप्तदशोऽथ नम्यस्त्विन्द्रोऽस्ति कौषीतकिराह तौ द्वौ ।
यद् ब्रह्म यत् क्षत्रमिति प्रभेदात्तस्य द्विधा प्राह च याज्ञवल्क्यः ॥

इन्द्रो वषट्कार इमौ तु देवौ मतं परेषामपि तत्र नभ्यः ।
इन्द्रो वषट्कार इहास्ति षड्भि. स्तोमैरथो सप्तदश. प्रजेश. ॥

यमोऽग्निरादित्य इमेऽङ्गिरस्तो भृगोस्तु सोमोऽपि च वायुरापः ।
भृग्वङ्गिरोभ्यामभिपन्नमेतत् सर्वं तदन्तर्निहिता हि वेदाः ॥

प्रात.सवे मध्यसवे च साय सोमग्रहाः स्युर्दशतश्चतस्र ।
अष्टादशस्तोमविधाः पृथिव्या. पृष्ठानि तु त्रीणि दिवश्च तावत् ॥

प्रवर्धतेऽग्नि. क्रमतोऽथ सोम प्रवर्धतेऽग्ने क्रमतो निरोधात् ।
तथा च सोमस्थितितारतम्यादग्नेरवस्था ऋतवः प्रसिद्धाः ॥

प्राची दिगूर्जा प्रभवोऽस्ति साद्यौदिग् दक्षिणास्त्विनिहिता प्रतिष्ठा[1] ।
पृथ्वी प्रतीची जननी श्रिया सा धर्मास्तथापो दिगुदीच्यनूक्ता ॥

---

१. श. ब्रा. १०:३:२:२१.

१. श. ब्रा. ११:१.६:२१.

छन्दो विदुर्वाग्निर्यति द्विधा तद् वाचो हि मर्त्यामृत जातिभेदात् ।
छन्दांसि मर्त्यानि विशेषतोऽष्टौ संकेतितार्थानि निदानशास्त्रे ।।

आच्छान्दिता वाङ्मनसाविनाकृता विज्ञानमाच्छन्दितमस्ति तन्मनः ।
वागेव वा प्राणमयी मनोमयी मर्त्यामृताच्छन्दनमेति नो मनः ।।

विज्ञानमाच्छन्दितमुच्यते त्रिधा तद् ब्रह्मनाम्ना तदुपाधिरिन्द्रियम् ।
वेदः स शब्दो यदुपाधिरास्थित विद्यातु संस्कारमुपाधिमाश्रिता ।।
गायत्री तु च्छन्दस्तेजो वै ब्रह्मवर्चसं ब्रूते ।
उष्णिक्त्वायुरनुष्टुप्स्वर्गं बृहती श्रियं च यशः ।।

पंक्तिर्यज्ञं त्रिष्टुप् त्विन्द्रियवीर्य्यं पशुं त्वियं जगती ।
श्रियमन्नं च विराडिति पूर्वे छन्दोनिदानमधुः ।।

छन्दोऽमृतं वेद इति प्रसिद्धं वेदोऽयमृक्सामयजुस्त्रिधातुः ।
त्रिधात्वयं विक्रमणं प्रतिष्ठा याज्ञो रसस्तेऽनुविधाः पृथग्वत् ।।

नाभेर्महोक्थं बहिरूर्मिवत् ततः महाव्रतं तु प्रवितोऽन्तरूर्मिवत् ।
वाग्योनिरग्निर्जलवत् स वाङ्मयो मनोमयः प्राणमयश्च विक्रमः ।।

विस्रंसतेऽनुक्षणमप्यपानतः प्रपूर्यते प्राणतोऽप्यनुक्षणम् ।
सोमोऽग्नितामेति च नाभिमागतोनाभेरुपैत्यन्तगतः स सोमताम् ।।

लोकश्चितोऽग्निः प्रथमोऽन्तरिक्ष महाव्रतं द्यौर्महदुक्थमस्ति ।
उक्थं दिवं याति महाव्रतं तु स्यादन्तरिक्षे स्थितिरत्र सोऽग्निः ।।

वितायते मध्य-विराट् परं परं महान्ति पृष्ठानि समांशमास्थिता ।
उक्थं तु मूलं विततैर्वितायितं सामांसयाम्यात् स रसोऽग्निरुच्यते ।।

सहस्रपृष्ठानि भवन्ति साम्यात् तानि त्रिशत्या तिसृभिर्दशद्भिः ।
त्रिभिश्च भक्तानि भवन्ति तत्र प्राक्पृष्ठमृक् साम परं तु पृष्ठम् ।।

अग्नेः प्रतानं न तु सोम एष प्रतानमायाति समस्यदात्मा ।
त्रयी तताऽग्निस्त्रितयेऽथसौम्यश्चतुर्थवेदोऽग्नि हुतो बहिश्च ।।

वितायमानः स रसोऽमृतं दशं प्राप्तस्ततोऽस्तीति विदन्ति दूरतः ।
वितायमानः स रसोऽभितस्तता वेदः प्रतिष्ठात्र विराट्प्रतिष्ठिता ।।

---

१. काण्व श. ब्रा. १३:२:१.

वाचोमितेस्त्रीणि तु सप्त वाचश्छन्दांसि सामानि च सन्ति नाना।
वदन्ति सामेति वितानसीमा सप्तत्रयो वास्य भवन्ति भागा ॥

पूर्वं प्रयाजा. परतोऽनुयाजा यज्ञस्य तनोपयजश्च केचित्।
सर्वेऽग्नि सोमान्वयनानुकूला धर्म्मास्ततोऽर्था विविधा. क्रियन्ते ॥

त्रिविक्रमो विष्णुरतस्त्रिपाद पादास्त्रयस्ते त्रय एव लोका।
चित्योनिधेयः पशवस्तदित्थ प्रत्येकलोकेऽग्निरय त्रिधास्ति[1] ॥

एकस्य यद्विक्रमणाद्दशेति तस्यापर विक्रमणाच्छत स्यात्।
तस्यापर विक्रमणात् सहस्र तथा त्रिधा विक्रमते स विष्णु ॥

तदित्थमय सामन्तप्राणाना प्रपञ्च आख्यात.। अथैतद विराजो यदूर्ध्वं किञ्चित् तत्पारावत नाम । अन्तो व पारावत इति कौपीतकिराह यदस्मिन् प्रजापत्येऽन्त्य दृश्यते तत्पारावतम्। पारावत सोमो विराडग्नि । ताभ्याम-यमिन्द्र समाधीयते। ननु "वैराज साम । अन्नविराट्। अन्न सोम । यश उ वै सोमो राजाऽन्नाद्यम्[2]" इति कौपीतकिश्रुतौ सोमस्यापि विराज्येवान्तर्भाव इतीन्द्रविराडभ्या द्वैतमेव प्राप्नोति, इति चेत् सत्यम् श्रुतेर्वाचा पृथिव्यन्तर्गत सोमाभिप्रायकत्वाददोषात्। अप्स्थानो ह्यय सोमः। द्विविध ह्यापा स्थान पृथिव्या उपरिष्टादादित्यादुपरिष्टाच्च । "अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवा ऊचिषे धिष्ण्याये। यारोचने परस्तात् सूर्य्यस्य याश्चावस्तादुपतिष्ठन्त आप[3]" इति मन्त्रश्रवणात्। तत्रादित्यादूर्ध्वस्य सोमस्य पारावतत्व व्रम। अधस्तात्म-तस्तु सोमस्य विराट्-व न प्रतिरुध्न । तस्यापि च तदन्नत्वनिबन्धनमभ्याहुत-सोमस्य विराट्त्व गौण द्रष्टव्यम्।

अन्न विराट् अन्न साम इति हेतूपन्यासेन विवक्षितत्वावगते । अन्नग्राहि कोशलक्षणयज्ञरूपत्वन्तु विराट्त्वमग्नेरेवोपपद्यते । 'अग्निर्व यज्ञ,, एप वै यज्ञो यदग्नि[4] इति श्रुत्या सोमाहुतिलक्षणप्रदेशस्यैव यज्ञत्वेन विराट्त्व-सिद्धान्तात् । उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैना । इन्द्रश्च विष्णो यदपस्पृधेथा त्रेधा सहस्र वितदैरयेथाम्[5] इति मैत्रि श्रुतौ। ऋ० म० ६/६९/८ पठिते मन्त्रे विष्णुमन्त्रप्रसिद्धस्य विराज साहस्रत्वेनैव सिद्धान्तितत्वात्। तथा हि व्याख्यातोऽयमैतरेयकश्रुतौ मन्त्र ।

---

१. श. ब्रा. १:२ १.
२ कौपी ब्रा. ९ ६.
३ ऋ स ३ २२ ३
४ श ब्रा. २ १:४.
५ मैत्रा. स. २ ४.४.

"इन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते । सोऽब्रवीदिन्द्रः । यावदेवायं विष्णुस्त्रिविक्रमते तावदस्माकमथ युष्माकमितरदिति । स इमान् विचक्रमे लोकान् । अथो वेदान् । अथो वाचम् । तदाहुः किं तत् सहस्रमिति इमे लोकाः । इमे वेदाः । अथो वागिति ब्रूयात्[1]" । इति कौपीतकिनश्च वाचो व्याप्तिमामनन्ति । एतावान् वं वाचो विकारो भूर्भुवःस्वरिति[2]" इति । यज्ञस्याप्येतदविनाभावं मैत्रायणीया अप्याहुः—"भूर्भुवःस्वः, एतद्वै ब्रह्म, एतत्सत्यम् । एतद् ऋतम् । न वा एतस्माद् ऋते यज्ञोऽस्ति[3]" इति ।। त्रय्या विद्ययाप्ययं यज्ञः प्रमीयते—"एतावान् वै सर्वो यज्ञो यावानेष त्रयो वेदाः, तस्यैतद् रूपं क्रियते" । "एतद् वै सहस्रं वाचः प्रजातं यदेष त्रयो वेदः[4]" इति । तथा च "अस्ति वै चतुर्थो देवलोक आपः" । (१८/२) इति कौपीतकि श्रुत्या "अथर्वणां चन्द्रमादैवतम् । आपःस्थानम्" (पू. १/२९) "आपो वै भृग्वंगिरसामायतनं चन्द्रमादेवता वैद्युतश्च" (पू० २/२४) "चन्द्रमा ह्यप्सु चरति (२/६) सोमात्मको ह्ययं वेदः" । (पू० २/७) इति गोपथश्रुतिवचनेभ्यश्चास्य सोमस्य चतुर्थलोकस्थत्वाच्चतुर्थवेदत्वाच्च ततोऽर्वागेव विष्णुविक्रमणसमाप्त्या त्रैलोक्यस्य त्रैविद्यस्यैव विराट्त्वमध्यवसीयते ।

सर्वकनिष्ठादित्यस्य विष्णोरेव यज्ञात्मकमहाविष्णुशरीरान्त्यावयवत्वात् । तथा चैतरेयश्रुतिः—"अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः । एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्चेति"[5] । कौपीतकिरप्याह—"अग्निर्वै देवानामवरार्ध्यो विष्णुः परार्ध्यः । ताभ्यामेवैतत् सर्वा देवताः परिगृह्य सलोकतामाप्नोति" इति । (७/१) "अग्नाविष्णू वै देवानामन्नभाजौ (१६/१८) इति च" । याज्ञवल्क्योप्याह—"अग्निर्वै यज्ञस्यापरार्ध्यो विष्णुः परार्ध्यः । तत् सर्वाश्चैवैतद्देवताः सर्वं च यज्ञं परिगृह्य दीक्षै इति तस्मादाग्नावैष्णवं निर्वपति" (३/१/३/१) इति । तथा चाग्नादयोऽष्टौ वसवः पृथिव्या ऋग्वेदस्य च रूपम् । एकादश रुद्रा मध्येऽन्तरिक्षस्य यजुर्वेदस्य च रूपम् । विष्णूरामा द्वादशादित्याः दिवः साम्नश्च रूपम् इत्येतावान् यज्ञः । "इतिस्तुतासो असथा रिशादसो ये स्थ त्रयश्च त्रिंशच्च मनोर्देवा यज्ञियासः[6]" इति मन्त्रश्रवणाच्च । स विष्णुः स विराट् सोऽग्निः। तत ऊर्ध्वमापो दिशश्चायं चतुर्थो लोको वैद्युतस्याथ

१. ऐ.ब्रा. २८.१.
२. कौपी. ब्रा. ३:५.
३. मैत्रा. सं. १:८:५
४. श. ब्रा. ५:४:७:१०.
५. ऐ. ब्रा. १:१:१.
६. ऋ. सं. ८:३:१२.

सोमस्य। अङ्गिरसो भृगवश्चेति चतुर्थो वेद स सोम. ततो विराडन्नमिन्द्राय सगृह्णाति। अन्नभूत. न सोमोऽन्नादाद्विराजोऽतिरिच्यन।

तथा च सर्वाग्निरतम इन्द्र। तमनुपरितो विराड्विष्णु। तमनुपरितोऽन्न सोम इतीत्थं त्रिवृत्कृतमिद सर्वमेकैक प्राजापत्य विद्यात्। "यद्वै किञ्च प्राणि स प्रजापति। (श ११/६/१७) इति वाजिश्रुते। इन्द्रस्यात्मनोऽग्निरन्तरङ्गम्। सोमस्य दिग्भ्य स्वयमग्निमच्छ्रोपेतत्वात्। स्वभावाच्चाय सामो वैधुतन पुरुषेण ससृज्यते। उभयोराप्यत्वसामान्यात्। एतदेव त्रिवृत्करण श्रुत मैत्रायण्या श्रुतौ द्वितीयकाण्डे। "देवा वैसत्रमासत कुरुक्षेत्रे अग्नि सोमा इन्द्र। तेऽब्रुवन्— यातमन प्रथम यश ऋच्छात् त न सहेति। तेषां वै सोम यश आच्छन्। तमभिमगच्छन्त। स हि यशस्वितम। स गिरिमगच्छत्। तमग्निरन्वगच्छत्। तौ गिरा अग्नीषोमौ समभवताम। स वा इन्द्र शिथिर इवामन्यत। सोऽग्नीषोमा अन्वगच्छत्। तौ अब्रवीत् याजयतमेति। त वा एतया अग्नीषोमा अयाज्यताम् तस्मिस्तजोऽग्मिरदधाद इन्द्रिय सोम। तत इन्द्रोऽभवत्[1]। इति। यज्ञस्थल्या कुरुक्षेत्रशब्दो निरूढ। प्रत्यहं चेन्द्रायात्मनेऽग्नौ सोमो नित्यमाहूयत। अथ सो अग्निर्यस्मिन् सोममिन्द्र सुत दधे जठर वावशान। सहस्रिय वाजमत्य न सप्ति स सवान् सन् स्तूयसे जातवेद[2]। इति मन्त्रश्रवणात्।

अ.हूयमान सोमोऽग्नित्वमापद्यते। अग्निश्चायमिन्द्रमात्मानमाप्याययति। आप्याय्यमानस्त्विन्द्राऽहरह स्वर्गं गच्छति-इत्येष क्रमा विमुक्ति यावन्नोपरमते तस्मात तत् सत्रम्। अग्नौ सोमाहुतिर्यज्ञ. नान्तरेण यज्ञ किञ्चिदपीद वस्तुरूप घटा। तस्मादेकैवमिद सर्व देवयजनभूमित्वात कुरुक्षेत्रम्। बहुष्वेकत्र सन्निविष्टेषु परस्परेणाक्षितेषु यद्रूदलमिद्धा दृश्यते यत्र बुद्ध प्रथम सपतति यदन्यथा प्रतिपत्तौ द्वार भवति तद् यश। सूक्ष्मस्थूलसन्निवेशे स्थूल यश.। बाह्याभ्यन्त-रसन्निवेशे बाह्य यश प्रकाशो यश।

वाजिश्रुतौ द्वादशस्य द्वितीय- प्रपाठके, गोपथश्रुतौ पञ्चमस्य चिशे- 'मयि भर्गो मयि मह। मयि यशो मयि सर्वम्" इति विराजाऽक्षितविद्यायां तृतीयस्तस्य यशस्त्वमाख्यातम्।

इन्द्राग्निसामेषु च क्रमसन्निविष्टेषु सोमस्तृतीयो भूत्वा द्वयोरन्ययोरक्षिता भवतीति यशस्त्व सामस्यापपद्यते। अतएव 'यशो वै साम (४/२/३/६) इति वाजिश्रुतिरपीद्धा श्रूयत। पवन इवाग्नेरद्गीर्णो भागा गिरि प्रत्यक्षा मति-पिण्डो गिरि। एतद्वाध्यात्म वाक् प्राणचक्षुरादीना ब्रह्मगिरित्वमास्यात्मनरे-

1. मैत्रा स १ ४
2. ऋ सं ७ १.१ २२

यारण्यके (ऐ. ३/१३/) । तत्र चान्यदन्यदास्मिन्निगीर्णं भवति-इत्यतोऽपि स गिरिरुच्यते । तृतीयाद्यौरग्नेर्गिरिः । तत्र ह्यग्नीषोमयोरेकीभावस्तदङ्गिरसो रूपम् । अग्निरनुगच्छति सामं सोमश्चात्मानमग्नौ धत्ते । इन्द्रश्चानुगच्छत्यग्नीषोमौ तावपि चात्मानमिन्द्रे धत्त इतित्रयं त्रिष्वक्षितं भवति नक मन्येन विनाकृतं भवतीति विद्यात् । यत्तु वाजिश्रुतौ (६।१।२।३) सोमादर्वाक् सतोऽस्यादित्यस्य यशस्त्वमाख्यातं तदग्निरूपापेक्षम् । अग्निवाय्वादित्यानामग्निरूपाणामुत्तरोत्तरस्तरभावेन विन्यस्तत्वात् क्रमेण तत्र भर्गो महोयशः शब्दा उपपद्यन्ते । ते चास्मिन्नात्मनीन्द्रे सर्वेऽप्यात्मानं दधते सर्वेषु च तेष्वञ्जसाऽयमिन्द्र आत्माधीयते तस्मादन्योन्यस्यान्योन्यमक्षित भवति । अथेन्द्राग्निसोमदृष्टौ त्वयं सोम एव तृतीयस्तरो वहिः प्रकाश इति कृत्वा यश इत्यविरोधः ।

पशुना सलोमकं चैतमिन्द्रामृतमर्त्यमयं पिण्डं बीजमित्याचक्ष्महे । तत्र मर्त्यो बीजकोशः । अमृतं मज्जा । इन्द्रस्ताभ्यां सुगुप्तो मुख्यो बीजभागो दलवृन्तात्मकः । यथेदं मुख्यबीजं त्रैलोक्यरसाकर्षणैस्त्रिभिः प्राणैस्त्रिवृत्कृतं भवति । तथैतमिन्द्रं मनः प्राणवाग्भिस्त्रिधातु विद्यात् । मनसा सकल्पयति । प्राणेन प्रयतते । वाचा विकुरुते । प्राणो हि मानस रूपमनुवाचो रूप सृजति । तत्र मनः प्राणौ वाचमपीत इति वाच उल्वणत्वाद् वाङ्मय आत्मा । वाचश्चेन्द्रेष्वेकत्वादात्मायमिन्द्र इत्युच्यते । तथा च कौषीतकिश्रुतिराह "तत् सर्व आत्मा वाचमप्येति । वाङ्मयो भवति । तदेतद् ऋचाभ्युदितम् । नेन्द्राद् ऋते पवते धाम किञ्चनेति वाग् वा इन्द्रः । न ह्यृते वाचः पवते धाम किञ्चन" इति ।

तमिन्द्रमाकाशं ब्रुवते । आवपनमाकाशम् । अमृते च तत्राकाशे-इन्द्रवाणाख्ये विभतामिन्द्रप्राणानां सर्वे विशेषा देवा उच्यन्ते । आग्नेयानामग्निया अग्निवाय्वादित्याः । सौम्यानां तु सौम्या बृहस्पतिदिग्भेदाद् द्विविधाः । ब्रह्मणस्पतिर्बृहस्पतिः । विद्युद् दिक् । तदित्थं पञ्चैव सर्वे देवाः । अथ मर्त्याकाशे शब्दवाणाख्ये विचरतां मर्त्यप्राणानां रूपाणि भूतान्युच्यन्ते । ध्वनिवाय्वग्नयः संचारिणो विरलावयवाः असंघस्वभावाः जलमृत्तिके प्रतिष्ठमाने निविडावयवे संघशक्तिविशिष्टे-इति पञ्चैव तानि भूतानि । एषां सर्वेषां समवायाद् भूतग्रामरूपोऽयं प्रतिष्ठा प्रजापतिः पशुप्रजापतिश्चेति बोध्यम् ।

वेदसृष्टिस्तावत् । इन्द्रामृतमर्त्यविग्रहोऽयमीश्वरो नामाद्यः प्रजापतिरकामयत । भूयान् स्यां प्रजायेयेति । साऽश्राम्यत् स तपोऽतप्यत । स ब्रह्मैव प्रथममसृजत त्रयीं विद्याम् । तमन्वेवान्येऽपि सर्वे प्रजापतयः कामयमानास्तप्यन्तः श्राम्यन्तस्त्रयीं विद्यां नाम ब्रह्म स्वस्वविग्रहे पृथगिवोद्भावयन्ति । कारणधर्माः कार्यधर्मानारभन्त इति न्यायात् ।

१. कौषी. ब्रा. २:७.

सेयं त्रयी विद्यैव तस्य तस्य सर्वस्यात्मनः प्रथमा सृष्टिः । सा सा त्रयी विद्या तस्य तस्यात्मनः प्रतिष्ठा भवति । ईश्वरो वाऽतिक्षुद्रः कृमिकीटो वा सर्वोऽप्येष प्रजापतिः सर्वाणि च भूतानि तस्या त्रय्या विद्याया प्रतिष्ठितानि दृश्यन्ते । ऋग्यजुः सामानि त्रयी विद्या ।

एषा चोपलक्षणं चतुर्थ्या अप्यथर्वविद्यायाः । अग्नीषोमाभ्यां विभक्तायां सर्वस्यामपि सृष्टावग्निभक्तिरूपायास्त्रय्या विद्याया अव्यवहितसलग्नोऽन्तर्देशे सोमभक्तिरूपाया अथर्वविद्याया अव्यभिचारेण सन्निवेशात् । न च सामाहुतिं विनाऽयमग्निः क्वापि रूपं धत्ते । सोमस्यैव चाथर्वणा विद्या । "अन्तरा हि भृग्वङ्गिरसो वेदानुदुह्य भृग्वाङ्गिरसो सोमपानं मन्यन्ते । सोमात्मको ह्ययं वेदः" इति गोपथश्रुतेः[1] । ऋचामग्निर्दैवतं, यजुषां वायुर्दैवतं, साम्नामादित्यो दैवतमथर्वणां चन्द्रमा दैवतम्[2] । इति च तत्रैव श्रूयते । सोऽयं त्रय्या विद्यायामथर्वविद्योत्तरायां ब्रह्मणि प्रतिष्ठितः प्रजापतिर्ब्रह्मावच्छिन्नत्वाद् ब्रह्मोच्यते । आत्मना ब्रह्मणा सृष्टोऽयं वेदो ब्रह्म । वेदावच्छिन्नस्यैवात्मनः सर्वत्र स्वरूपाधानान्नायं वेदो ब्रह्मणो व्यतिरिच्यते । विशिष्टं ह्येकं ब्रह्मेति विद्यात् ।

**वेदत्रये सहस्रशब्दः**

प्रजापतेरेव सन्तायमानस्य सन्तानभूता इमे वेदा अभवन् तथा च मनःप्राणाभ्यां कृतोदरा वागेवैते त्रयो वेदाः । सोऽयमस्य वाचः सन्तानं सहस्रमित्युच्यते । "एतद्वै सहस्रं वाचः प्रजातं यदेते त्रयो वेदाः" इति श्रुतेः[3] । त्रय इत्युपलक्षणं चतुर्थस्यापि नान्तरीयकत्वात् । तैत्तिरीयब्राह्मणे साहस्रस्यास्याग्निपोषत्वं श्रूयते—"अग्निर्न्यवर्तयत स साहस्रमपुष्यत् । पृथिवीन्यवर्तयत सौषधिवनस्पतिभिरपुष्यदित्यादि तिस्रो वाच ईरयति प्रवह्निरिति मन्त्रस्येहापि तात्पर्यं सम्भवति ।। तस्यैतस्य बीजपिण्डस्य शिपिविष्टाख्यस्य विष्कम्भः सहस्रप्रगुणितो यावदवकाशे प्रथमानो ध्रियते तावदवकाशा इमे वेदा इत्यतः सहस्रं नाम । "सहस्रधा पञ्चदशान्युक्था यावद् द्यावापृथिवी तावदित् तत् । सहस्रधा महिमानः सहस्रं यावद् ब्रह्म विष्ठितं तावती वाक्[4] । इति मन्त्रश्रवणात् । तथा चास्य प्रजापतेर्द्वे पृष्ठे सम्पद्येते—इन्द्रामृतमर्त्यपशवन्तः शिपिविष्टाख्यमन्तःपृष्ठम् । सहस्रान्तं तु बहिः पृष्ठम् ।

प्रजापतिश्चेत्थं दशविधः सम्पद्यते—इन्द्रस्तावदनिरुक्तोऽनभ्यो वा प्रजापतिः । आत्माङ्गलक्षणोऽमृतभागो देवः शिरोऽग्निर्निधेयाग्निर्वा प्रजापतिः । आत्माङ्ग-

---

१. गो. ब्रा. ५:२.७.
२. गो. ब्रा. १ २९.
३. तै. ब्रा. २.११.१.
४. ऋ. सं. १०:११४ ८.

लक्षणो मर्त्यभागो भूतं शरीरं चित्याग्निर्वा प्रजापतिः। ओषधिवनस्पतिचेतनादि प्राणिजातानि पशुः प्रजापतिः। त्रयी विद्या तु ब्रह्म वा यज्ञो वा सहस्रं वा प्रजापतिः। अथर्ववेदस्तु ब्रह्म वाऽथर्वा वा प्रजापतिः। चातुर्विद्यमात्मनश्छाया छन्दो वा प्रजापतिः। मर्त्यान्तः स प्रतिष्ठा वा यज्ञो वा विराड् वा प्रजापतिः। पश्वन्तस्तु विराड् वा शिपिविष्टो वा यज्ञो वा प्रजापतिः। सहस्रान्तोऽथर्वान्तो वा सर्वः प्रजापतिरिति॥

तदित्थं दशविधत्वेऽपि प्राधान्यात् त्रैविध्यमेव नेयम्। मध्यइन्द्रो निरुक्तः प्रजापतिः सा प्रतिष्ठा। शिपिविष्टो विराट् प्रजापतिः तदुक्थम्। सर्वे लोकाः सर्वे वेदाः संवत्सरः प्रजापतिः तत्साम। इत्यमेत त्रिवृत्तमात्मानं विद्यात्।

अत्रैव वाजिश्रुतिर्द्रष्टव्या—"आपो हवा इदमग्रे सलिलमेवास अकामयन्त-कथं नु प्रजायेमहीति। ता अश्राम्यत्। तास्तपोऽतप्यन्त। तासु तपस्तप्यमानासु हिरण्मयमाण्डं सबभूव। अजातो ह तर्हि संवत्सर आस। तदिदं हिरण्मयमाण्डं यावत्संवत्सरस्य वेला तावत्पर्यप्लवत। ततः संवत्सरे पुरुषः समभवत्। स प्रजापतिः। स इदं हिरण्मयमाण्डं व्यरुजत्। नहि तर्हि काचन प्रतिष्ठास। तदेत-मिदमेव हिरण्यमयमाण्डं यावत्संवत्सरस्य वेलासीत् तावद् बिभ्रत् पर्य्यप्लवत। स संवत्सरे व्याजिहीर्षत्। स भूरिति व्याहरत्। सेयं पृथिव्यभवत्। भुव इति अन्तरिक्षमभवत्। स्वरिति द्यौरभवत्। स एवेमान् लोकान् जातान् संवत्सरे प्रजापतिरभ्युदतिष्ठत्। स सहस्रायुर्जज्ञे। सोऽर्चञ्छ्राम्यंश्चचार प्रजाकामः। स आत्मन्नेव प्रजापतिमधत्त। स आस्येनैव देवानसृजत। ते देवा दिवमभिपद्या-सृज्यन्त। तस्मै स सृजानाय दिवेवास। तदहर् कुरुत। अथयोऽयमवाङ् प्राणस्तेना-सुरानसृजत। त इमामेव पृथिवीमभिपद्यासृज्यन्त। तस्मै स सृजानाय तम इवास। तां रात्रिमकुरुत ते अहोरात्रे। स ऐक्षत प्रजापतिः। सर्वं वा अत्सारिषं य इमा देवता असृक्षीति। स सर्वत्सरोऽभवत। सर्वत्सरो ह वै नामैतद् यत् संवत्सर इति। स ऐक्षत–इमं वा आत्मनः प्रतिमामसृक्षि यत्संवत्सरमिति तस्मादाहुः प्रजापतिः संवत्सर इति। ता वा एताः प्रजापतेरधिदेवता असृज्यन्त–अग्निरिन्द्रः सोमः परमेष्ठी प्राजापत्यः। ताः सहस्रायुषो जज्ञिरे ता अर्चन्त्यः श्राम्यन्तश्चेरुः। तत एत परमेष्ठी प्राजापत्यो यज्ञमपश्यद्दर्शपौर्णमासौ ताभ्या-मयजत। स आपोत्वाऽभवत्। आपो ह वा इदं सर्वम्! ता यत् परमे स्थाने तिष्ठन्ति तस्मात् परमेष्ठी नाम। स परमेष्ठी प्रजापतिं पितरमब्रवीत्। कामप्रं वा अहं यज्ञमदर्श तेन त्वा याजयामीति। तमयाजयत्। स इष्ट्वा अकामयत अहमेवेदं सर्वं स्यामिति स प्राणोऽभवत् प्राणो वा इदं सर्वम्, अयं वा प्राणो योऽयपवते। स प्रजापतिरिन्द्रं पुत्रमयाजयत्। स इष्ट्वा वागभवत्, वाग वा इदं सर्वम्। तस्मादाहुरिन्द्रो वागिति। स इन्द्रोऽग्नीषोमावयाजयत् तयोरन्नाद एवान्यतरोऽभवदन्नमन्यतरः। अन्नाद एवाग्निरभवत्। अन्नं सोमः। अन्नादश्च

वा इद सर्वमसृजन्च । ता वा एता पञ्च देवता एतेन कामप्रेण यज्ञेनाय- जयन्तेति[1] ।। (शत ११।१।६।१६) , निरासनऽभिचरणे च स्मरिग्रात् 'परमेष्ठिना वा एष यज्ञोऽग्र आसीत् । तेन स परमा काष्ठामगच्छत् । तेनेन्द्र मिरवासयत । तेनेन्द्र परमा काष्ठामगच्छत् । तेनाग्नीषोमौ निरवासयत तेनाग्नीषोमौ परमा काष्ठामगच्छताम्[2] । इति नैतिराधक निवासप्र प्रयोगात् ।

प्रजापत सर्वात्मन प्रतिमारूपेण निर्वसन सवत्सरस्त इम देवा । स्मर छद्मगतो गुप्ता प्रच्छन्ना गति स्मर । यथा मृगयुगच्छति । यथा वा शश शुनै व्यापादयायात्मान गोपायित्वा दूरमपसरति । तथा प्रजापत स्ता प्रच्छन्न वहिर्गता सवत्सर इन्द्रवाच परितोऽग्निरछाद । त परित सामाऽग्रम । सवमभिव्याप्य तदापि प्रचरन्ति । पराय रेण प्राणो वायुरिन्द्राख्य पञ्चत्वम- भिव्याप्नोति । एतच्च पृथ्वी चन्द्रत्रिग्रहात्मकप्राजापत्य सम्बन्धनाख्यातम ।

तत्रैव दिवमभिपद्य दिवा देवाना, पृथ्वामभिपद्यतु रात्रावसुराणा सभा व मानत्वात् । पृथ्व्या स्व रश्मयस्तामसत्वादसुरा । सूर्याहितरश्मयस्तु पृथिव्या- घातेन प्रतिफलिता दीप्यमानत्वाद्देवा । सूर्ये त्विन्द्र प्रकर्षानामी असुरा स्थान लभत । तत्र रात्रेरभावात । तथाच श्रूयते वाजिश्रुतौ' । "ता स्तत एव पाप्मना विध्यत् । त तत एव पराभवन् । तस्मादाहु —नैतदस्ति यद्दैवासुर यदिद मन्वाख्यानेत्वदुद्यते इतिहासमन्वत् तस्मादेतद् ऋचाभ्यनूक्तम्" । "न त्व युयुत्से कतमच्चनाहन तऽमित्रामघवन् कश्चनासीत् । मायत् सा ते यानि युद्धान्याहुर्नाद्य शत्रु न नु पुरा युयुत्से[3]" । इति (श ११/१/६/१०) प्राण पूर्वपक्ष आप्यायन- क्रम । तस्य प्रतिपद्दर्शेष्टि । अपानोऽपरपक्षऽपक्षयक्रम । तस्य प्रतिपत् पूर्णमा सेष्टि । प्राणापानाभ्या हीमे देवासुरा असृज्यन्तेति दर्शपूर्णमासेष्ट्या तदुत्पत्ति माचक्षते । पृथिव्या सम्बन्धश्च मैत्री श्रुतौ श्रूयते । स वै त्रिवृत एव प्राणानाय- तनमचायत् । ते प्रजा असृजत । उर्ध्वं उदतृणत पूर्वपक्ष पञ्चदशस्तेन देवानसृजत ते देवा ऊर्ध्वा आप्यायन्त । अवाङवातृणदपरपक्ष पञ्चदश तेनासुरानसृजत । तेऽसुरा अवाञ्च प्राध्वसन्त । दिवा देवानसृजत नक्तमसुरान् । ते देवा शुक्ल अभवन् कृष्णा असुरा । सत्येन देवानसृजताऽनृतेनासुरान् ते देवा सत्यमभवन- नृतमसुरा । दक्षिणेन हस्तेन देवानसृजत सव्येनासुरान् । ते देवा वीर्यवन्तो- ऽभवन् । मृद्धा असुरा स तदेवनाविन्दत् प्रजापतिर्यत्राहाप्यत् । ना अस्यान्यद्धाहृत्व- मासीत् प्राणात् । स वा इन्द्रमेवान्तरात्मन्नायतनमचायत् । वीर्यं वै प्राण । वीर्य- मिन्द्र । वीर्य एववीर्यमजुहोत" इति ।

---

१ श ब्रा ११ १ ६ १ १६
२ तै ब्रा ४ २
३. श ब्रा ११ १ ६ १०

अत्र त्रिवृत् प्राणः पार्थिवोऽग्निरेकविंशआदित्यः इति तैत्तिरीयके परिभापणात् पृथ्वी विपयकत्वं लभ्यते । पृथ्वी प्राणायतने हीन्द्रप्राणे दिव्यप्राणस्याहूयमानस्याप्यायनापक्षयाभ्यां देवासुर स्वरूपसिद्धिः । अत्रदेवा असुरा इत्युपलक्षण मितरेषामपिनभस्थानामम्भस्थानाम्" ! चत्वारिवै नभांसि-देवाः, पितरो, मनुष्याः, असुराः, (सर्वेपु ह्वा एतेष्वम्भो नभ इवेति मैतिश्रुतेः । (खिलकां, गो. २ प्र.) "तानि वा एतानि चत्वार्यम्भांसि देवाः, मनुष्याः पितरोऽसुराः । तेषु सर्वेष्वम्भोनभ इवेति तैत्तिरीय श्रुतेश्च[1] ।" तेषां चतुर्णां सयोनित्वात् तेषां चैपां गौर्योनिः । एपां चतुर्णामुत्पत्यनन्तरम्" । ततो या योनिरुदशिष्यत सा गौरभवत् । योनिर्वैनामेप" इति मैत्रिश्रुतेः । तत्र पृथिव्या वा चन्द्राद्वा प्रतिफलिता गावो यावत्यो दिवमभिपद्य प्रवर्तमानाः सोमसमृष्टाः सूर्यगावः पितरः । "सर्वासु दिक्षु पितरः,, इति (मैत्रि १/७/१९) इतिश्रुतेः । "तिर्यञ्चः पितरः" इति श्रुत्यन्तराच्च । सूर्यपतिदिग्दृष्टाः । पृथिव्याश्चन्द्रस्य वा स्वीयागावोऽसुराः अज्योत्स्नत्वादिमे कृष्णाः । त्रयोऽप्यमी निर्मनस्काः । यास्तु पशूनां प्राणिनां मनोयुक्ता गावस्ते मनुष्याः । चक्षुर्विभक्तिश्रुत्या ह्येतेनूच्यन्ते । तथा हि मैत्रिश्रुतिः "यद्दिवा पश्यामस्तद्देवानां चक्षुषा पश्यामः । असौ वा आदित्यो देवानां चक्षुः । यज्ज्योत्स्नायां पश्यामस्तत्पितृणां चक्षुषा पश्यामः । चन्द्रमा वै पितृणां चक्षुः । यत्तमिस्रायां पश्यामस्तन्मनुष्याणां चक्षुषा पश्यामः । एतावद्वाव नः स्वं चक्षुः यदग्नेरन्ते पश्यामस्तदसुराणां चक्षुषा पश्यामः । उच्च वा एष दीप्यते निचरिष्यति,,—इति । तथा चेह पृथिव्यां चन्द्रे वा यावन्तोऽग्निवाय्वादित्या अमृताः प्राणास्ते देवाः । सौम्या प्राणाः पितरः । भौतरसात्मका मर्त्याः प्राणा असुराः । हिरण्मया देवाः । राजताः पितरः आयसा असुराः । एत एव च त्रयः प्रज्ञा युक्ताः प्राणा मनुष्या इति सिद्धम् ।

यद्यपीदं प्रजापत्यमिन्द्राग्निसोमैस्त्रिधातुपूर्वं व्याख्यातमिहत्वद्भिस्तच्चतुर्धा व्याख्यायते इत्यापातविरोधः प्रतिभाति तथाप्यपां विद्युत इव सोमेन सालोक्यात् सलोकेपु च सर्वेपु सर्वेपामन्यतमस्य वा ग्रहणे कामचाराददोपात् । अपि चैता आपो द्विविधाः अग्रिया परिणताश्च । ईश्वरविग्रहेऽभिजिद्ब्रह्मविग्रहे सूर्यविग्रहे पृथ्वीविग्रहेऽपि वा पूर्वं पूर्वं विग्रहावच्छेदिका अग्रियाः । ताभ्य एवोत्तरोत्तरविग्रहावच्छेदाय परिणम्यमानाः परिणता तत्राग्रिया एवैता उत्तरोत्तरा दहरस्वरूपाधानायान्यथा प्रवर्तन्त इति ना पूर्वत्वे परिणतानाम् । इन्द्राग्निसोमास्तु परिणताभ्यः प्रजायन्ते इत्यपामत्राधिक्येऽपि प्रस्थानभेदादविरोधः । प्रतिविग्रहमद्भ्यः प्रजातानां देवानां त्रित्वेनैवावच्छेदस्येष्टत्वात् ।

---

१. तै ब्रा. २:३:८

तत्रापि द्वौ विभागौ द्रष्टव्यौ। इन्द्रोऽन्य । अग्नीषोमौ चान्य । मन प्राण-वाङ्मयब्रह्मात्मकत्वेऽपि वाचो यशस्त्वा यमिन्द्रो वागिति श्रूयते। स हि यज्ञा-धिष्ठातृत्वाद् यज्ञफलभोक्तृत्वाच्चैको विभाग । अग्नीषोमौ तु यज्ञस्वरूपारम्भ-करत्वादन्यो विभाग । तत्राग्नेस्त्रैविध्यादग्निवाय्वादित्यसामश्चतुष्टयात्मक-मपीम विभागमिच्छन्ति । तथाहि—भगवान् याज्ञवल्क्य प्राह-त्रयो विद्या ब्रह्म। सा प्रतिष्ठा। तस्या प्रतिष्ठिना ब्रह्मप्रजापतिस्तप्यन् वाचोलोकात् अपो-ऽसृजत । आम्योऽद्भ्योऽधिप्रजायेयेति कामयमान प्रजापतिरनया त्रय्या विद्यया सहाप प्राविशत्। यावती सा विद्या तदेकमाण्डमस्याग्य भर्गस्यास्य वा सम-वर्तत । वर्तुलवृत्तरूपो गर्भकोश आण्डम् सामाण्डा च सा पृथिवी। याऽपा गर्भ आसीत् सोऽग्निरभवत्। स यज्ञ प्रजापति । स यज्ञो वेदैस्तायते। एतावान् व सर्वो यज्ञो यावानेष त्रयो वेदस्तस्यैतद्रूप क्रियते। एष योनिराशय एतस्मिन्नाशय त्रिधातुरिवैषा विद्या शेते । एतद्वै सहस्र वाच प्रजात यदेष त्रया वद[1]।।

सैषा त्रयी विद्या ब्रह्मैव प्रथममसृज्यत मुखं ह्येतदग्नेयद् ब्रह्म। यदेतद् ब्रह्मकपालमासीत् सैषा पृथिव्यभवत् । साऽकामयत-आभ्योऽद्भ्योऽधीमा प्रजनयेयमिति ता सक्लिश्याप्सु प्राविध्यत् । तस्याप पराङ्रसोऽत्यक्षरत् स कूर्मोऽभवत। अथ यदूर्ध्वमुदौक्षत तेनैता अद्भ्यो वक्ष्यमाणा नवसृष्टयोऽभूवन् तत्र तावदिय पृथ्वी सर्वाप एवानुव्यैत्। तदिदमेकमेवरूप समदृश्यत आप एव। तद्रूप स श्रान्तस्तप्त फेनमसृजत। फेनरूप श्रान्तस्तप्त क्रमेण मृद शुष्कामूप-सिकत शर्करामश्मानमयोहिरण्यमोषधिवनस्पत्यसृजत। तेनेमा पृथ्वी प्राच्छादयत। यथा त्वगसृङ्मांसास्थिमज्जादयो लोमानि च शरीरधातव शरीरमग्नि प्रच्छा-दयन्ति।

तथैत अप्फेनोपसिकता शर्कराश्मायोहिरण्यानि ओषधिवनस्पत्यादीनि पशुरूपाणि च पृथ्वी धातव पार्थिवमग्नि प्रच्छादयन्ति । ता एता नव सृष्ट-यश्चीयमानाश्चित्याग्निरूपम्। सा पृथ्वी नाम। अथ याऽस्या पृथिव्यामग्नि स चिते निधय । स पृथ्वी लोकपाल । तदेतदमृत मर्त्यञ्चेत्युभयमिन्द्रेण नद्ध ममिद्ध विद्यात्। यस्तु तदुपरिष्टात् सनिविष्ट कूर्म सोऽमृत साहस्रे मर्त्यो रस पञ्चयकाकार परिच्छिन्नसनिवेशतया कश्यपो नाम। स च दधि-घृत-मधुमयो-ऽयमाख्यात । तत्र दध्येव पृथिव्या रूप विद्यात्।

तत सोऽग्निना पृथिवी मिथुन सभूय द्वितीयमाण्डमपोपाख्य महस्याख्य वा समवर्तयत्। तदन्तरिक्षम्। यो गर्भोऽन्तरासीत् स वायु । अथ वायुना साऽन्तरिक्ष मिथुन सभूय तृतीयमाण्ड यशस्याख्य समवर्तयत्। सा द्यौ यो गर्भ स आदित्य ।

१ श ब्रा. ५: ७

अथादित्येन स दिवं मिथुनं संभूय चतुर्थमान्दं रेतस्याख्यं समवर्तयत् । ता दिशः । तत्रेदं रेतश्चन्द्रमा असृज्यत । त एते चत्वारो लोका अभवन् । त्रयोऽग्निलोकाः । दिगन्त्यः सोमलोकः । अथैषु लोकेषु स मनसा वाचं मिथुनं संभूय क्रमेण प्रजा असृजत । वसून् रुद्रान् आदित्यानग्निलाकेषु । विश्वान देवांस्तु दिक्षूपादधात् ।

तदित्थमयमाप्यः सौम्यो दिश्यो वैश्वदेव्यो वा चतुर्थो विभागो भगवता याज्ञवल्क्येन (श. ६/१/२) वेद चातुर्विध्यानुरोधात् स्थूलमानादेकधैव समस्याख्यातः तदनुरोधेनैव च कौषीतकादयः प्राहुः "चतुष्टयं वा इदं सर्वम्" (२/१/७) इति । वस्तुतस्तु पूर्वेभ्यस्त्रिभ्योऽनन्तरमिह द्वौ विभागौ द्रष्टव्यौ । ब्रह्मणस्पत्यो बार्हस्पत्यो वा दिश्यो वैश्वदेव्य एकः । तच्चतुर्थं रेतस्यमान्दम् । मनसा वाचं मिथुनं संभूय तु तत्र सोऽङ्गिरसोऽजनयत् । त इहाप्स्वभवन् । अथ वैद्युत आप्यो वश्वदेव्यो द्वितीयः । तदुत्तमं पञ्चमान्दम । मनसा वाचं मिथुनं संभूय तु तत्र भृगूनजनयत् । त इह ऽिप्स्वभवन् । यथा चाग्नि वाय्वादित्यानामान्दत्रयधिष्ठातृणामग्नित्वं तथैतयोर्ब्रह्मणस्पतिविद्युतोश्चतुर्थपञ्चमान्दाधिष्ठात्रोः सोमत्वम् ।

परे त्वनयोरग्नित्वमभिप्रेत्यैतदान्दयोर्द्विदैवत्यमिच्छन्ति । 'ब्रह्म वै बृहस्पतिः क्षत्रं सोमः । एतौ ह वा अस्य सर्वस्य प्रसवस्येशाते यदिदं किञ्च । (१० अ०) ।" इत्यैतरेयश्रुतौ बृहस्पतिसोमयोर्भेदेन व्यपदेशात् । आपो वै भृग्वङ्गिरसामायतनं चन्द्रमादेवता वैद्युतश्चेति" (पू० २:२४) । "चन्द्रमा वैद्युतश्च भृग्वङ्गिरसामिति च" (पू. ५·१५) । गोपथश्रुतौ विद्युत्सोमयोर्भेदेन व्यपदेशात् । उभयधर्मानुयायित्वादग्निविशेषत्वं सोमविशेषत्वं च बृहस्पतिविद्युतोर्द्रष्टव्यमित्यपरे ।

परे त्वाहुः तयोर्भिन्नत्वादेव तत्तदुपलक्षितलोकस्य भिन्नत्वमित्यान्द द्वैविध्यमुपपद्यते । अपां दिशां चोभयत्रा विशेषेण सत्वात्तूभयोरैक्यं पश्यन्ति । अत एव च लोकवेदयोश्चतुष्ट्वं श्रूयते । तद्यथा कौषीतकि श्रुतौ 'अस्ति वै चतुर्थो देवलोक आपः" (१८/२) इति यथा चाथर्वणश्रुतौ–"चत्वारो वा इमे लोकाः पृथिव्यन्तरिक्ष द्यौ रापः । (२/१३) इति । चत्वारो वा इमे वेदाः ऋग्वेदो यजुर्वेदः सामवेदो ब्रह्मवेद इति । चत्वारो वा इमे देवा. अग्निर्वायुरादित्यश्चन्द्रमाः (२/१६) इति । "यद्यप्यपां विकारत्वाच्चत्वारोऽपि लोका आप एव सन्ति तथापि त्रिष्वाद्येषु विकाराधिक्यात् यथा वैरूप्यं भूयस्त्वं न तथा चतुर्थ इत्यतो दिशामप्त्वेनैव व्यवहारः ।

सोऽयमप्सु प्रत्यन्तत्व निबन्धनो दिक् शब्दः । तेन पञ्चलोकाभ्युपगमपक्षे आपो दिशश्च भिद्यन्ते । पञ्चमस्य दिक्त्वेऽपि चतुर्थस्य दिक्त्वाभावात् । चतुर्लोकाभ्युपगमपक्षे त्वापो दिशश्चैकोऽर्थः । अत एवाथर्वसंहितायां चतुर्थस्योन-

चत्वारिंश-सूक्ते "पृथिव्यामग्नये अन्तरिक्षे वायवे दिव्यादित्याय दिक्षु चन्द्राय समनमत्„ (८/३९/१/८) इति पृथिव्यादिलोकप्रसङ्गे चन्द्रसम्बन्धेनाप्सु दिवति वक्तव्ये दिक्ष्विति श्रूयते।

अथयच्चतुर्थे सौम्यान्दे वैश्वदेव्य वाजिश्रुतौ श्रूयते। तदपीह द्विविध विद्यात्। अग्नियम आदित्य इत्येतेऽङ्गिरस.। एषां त्रयाणां संहतानां यदेक रूप तदाङ्गिरस वैश्वदेव्यम्। सोमो वायुराप इति भृगव। तेषां यदेक रूप तद् भार्गव वैश्वदेव्यम्। "एते वै सर्वे देवा यद्विश्वेदेवा„। (४/१४) इति कौषीतकिश्रुतिरापेक्षिकानेकदैवत्यमभिप्रैति न त्वेकहेलया सर्वेषां देवानां समुच्चये तत्तात्पर्यं नेयम्। तथा सति दिव्यन्दस्यान्तरिक्षेऽन्यस्य वैश्वदेवस्य सम्भवापत्ते.। विभिन्नानेकदेवतान्वयभेदात्तु वैश्वदेव्यानि भिद्यन्ते। तदेतयोश्चतुर्थपञ्चमान्दयो. सौम्य वैश्वदेव्यद्वय विद्यात्।

इत्थ चाग्निना वसुभिर्वायुना रुद्रैरादित्येनादित्यैर्बृहस्पतिनाऽङ्गिरोभिर्विधुता भृगुभिश्च वृतान्येतानि पञ्चान्दानि प्रत्यर्थमुपपद्यन्ते। त इमे पञ्च लोका। तेषामुत्तरोत्तर परिवर्द्धमानायतनत्व श्रूयते मैत्रायणीये। "उत्तरोत्तरो हि लोको ज्यायान्, इति।

तेष्वेतेषु पञ्चस्वान्देषु लोकेषु या प्रजास्ता देवता उच्यन्ते। देवता द्वेधा विभज्यन्ते। देवाश्च पितरश्चेति अग्नियशस्विन प्राणा देवा.। सोम यशस्विनः प्राणाः पितरः। अग्निमनु सर्वे देवा ऋच्छन्ति सोममनु सर्वे पितरः तत्र अष्टौ वसवः प्रथमान्दे, एकादश रुद्रा द्वितीयान्दे, द्वादशादित्यास्तृतीयान्दे इन्द्रवषट्कारो वा प्रजापतिवषट्कारो वा इन्द्रप्रजापतोर्वैचेते त्रयस्त्रिंशदग्निमनूचीना देवा.। त्रयोऽङ्गिरसश्चतुर्थान्दे त्रयो भृगवः पञ्चमान्दे अग्निसोमोरसकेद्वे ऋतुत्रिके चेत्यष्टौ पितरः सोममनूची . । तत्र—

सर्वमापोमय भून सर्व भृग्वङ्गिरोमयम्।
अन्तरैते त्रयो वेदा भृगूनङ्गिरस. श्रिता.। इति गोपथ श्रुतेः।

प्रतिप्रजापत्यमापः प्रथम आत्मा। इतरान् प्रत्यभूयामुक्यत्वात् प्रतिष्ठात्वात् सामत्वाच्च। भृगवो द्वितीय आत्मा। अङ्गिरसस्तृतीय आत्मा तत्र द्यावा पृथिव्यौ तदन्तरिक्ष चोपपद्यन्ते। तस्मात् सवत. पूर्वमिहाप्सु भृग्वङ्गिरसारुत्पत्तिमाख्यास्याम:।

गोपथश्रुतौ श्रूयते (पू. १/३) "तास्वप्सु स्वा छायामपश्यत् प्रजापतिः। इह तावदपां सृष्ट्या ब्रह्मणस्त्रेविध्य सम्पद्यत। सृष्ट प्रविष्ट निविष्टतच। स्विधं यावदापोरूप तत् सृष्टम्। तत् सृष्ट्वा तदेवानुप्राविशदित्यप्सु प्रविष्टाआमा-

भिमानी तासामात्मा प्रविष्टं ब्रह्म। स सत्यं नामाग्निः। अथाभ्यामतिरिक्तं विशुद्धं स्रष्टृरूप निर्विकृतम्।

त्रिष्वेतेषु यदप्सु प्रविष्टं सा निर्विकृतस्य ब्रह्मणश्छाया। त्रय्यामेव तां विद्यामथर्वोतरां विद्यात्। मनः प्राणमयी हीयमन्या वाक् पूर्वं विग्रहेऽपां मण्डलस्य भिन्नत्वात्तदवच्छिन्नं ब्रह्म बृहत्सामत्वाद्भिद्यते। तत्सृष्टस्य तु दहरस्यापां मण्डलस्यात्यल्प सामतया भिन्नत्वेऽपि सर्वाभिक्रमे पूर्वविग्रहसाम्यं भवतीत्यतस्तत्रच्छायाशब्दः।

अन्तर्मण्डलं क्षुद्रमण्डलरूपां स्वां छायामीक्षमाणस्य ब्रह्मणो रेतः स्वयमस्कन्दत्। तदप्सु प्रत्यतिष्ठत्। रेतसा सहैता आपः प्राच्यो दक्षिणाच्यः प्रतीच्यः, उदीच्यः समवाद्रवन्तेति समुद्रोऽभवत्। यावत् सहस्रं तावानय समुद्रः ता रेतः समुद्रं वृत्वाऽतिष्टन् उदभ्रवणाद् भीतास्ता रेत एवैतच्छरणमवृणतेति स वरूणोऽभवत्। यदीदं ब्रह्मरेतः संवरणं ना करिष्यत् तर्हीयमेन्द्रीवान् विभवनस्वाभाव्याद् उद्द्रुता पवमानाऽभविष्यत्। अपांयजुर्नाम ब्रह्मरेतसा तेनाऽविनाभावोपपादक एकीभावो वरणम्। वरणं सन्तं वरुण इत्याचक्षते।

यावत्य आपस्तावानयं वरणः। असुरो यं वरुणः प्राणप्रदो वायुः। स द्वेधाऽभवत्। अप्सु लीनोऽद्भयो मुक्तश्च। तत्राभ्यो मुक्तादङ्गिरसः सृष्टिं वक्ष्यामः। अप्सु लीनात्तु वरुणाद् भृगुरयं सृज्यते। वरुणेन ब्रह्मरेतसा सहैता आपो द्वैधमभवन्। अतिलवणा अपेया अस्वाद्यस्ता अशान्ता अन्याः। पेयाः स्वाद्यः शान्तास्त्वन्याः। तत्रैव रेतसि ता आपोऽभ्यश्राम्यदभ्यतपत् प्रजापतिः। श्रान्ताभ्यस्तप्ताभ्यस्ताभ्यो यद्रेत आसीत् तदभृज्यत। तस्मात् भृगुर्वारुणिः समभवत्। स भृगुं सृष्ट्वाऽन्तरवीयत। भृगुस्त्वेव सृष्टः पञ्चधा रूपोऽसृज्यत। वायु[1]:, मातरिश्वा, पवमानः, वातः, अथर्वेति।

सर्व एवैतेऽनायतना वहन्तोऽन्तरिक्षचराः भावाः। तत्रायं सविता वायुः पर्जन्यादिविधः सूर्योपनत कतिपय जातीय प्राणसंग्रहः। मातरिश्वा तु पृथ्वीं परितो वेष्टयमानस्तां स्तम्भमानो भूपृष्ठादूर्ध्वं द्वादशयोजनावकाशपरिव्याप्तः स्थिरप्रायो वायुविशेषो यमेमूप इति वैदिकाः प्राहुः। पवमानः सोममयो यो दह्यमानोऽग्निस्त्वमाप्यते। वातस्त्वनियतदिग्वाही कदाचित्संचारी ताराग्रहरसानामुपसंग्रहः। अथार्वागप्सु निविष्टोऽतिसूक्ष्मः कश्चन वायुरथर्वा।

यत् किञ्चिदात्मनो यज्ञे विश्लिष्टे विरिष्टं वा तदनेनाथर्वणा भिपज्यमानं सधीयते। तथा च श्रूयते। "एतद्वै भूयिष्ठं ब्रह्म यद्भृग्वङ्गिरसः। येऽङ्गिरसः

१. श्रुत्यन्तरे वायुस्थाने सविता पठ्यते। सवितेव स वायुरत्रेप्यते।

स रसः। येऽथर्वाणस्तद् भेषजम्। यद् भेषजं तदमृतम्। यदमृतं तद्ब्रह्मेति" (गो.पू.३।४) मन्त्रशास्त्रीयास्तान्त्रिकप्रयोगाः सर्व एवतस्मिन्नाथर्वणे प्राणे सम्पाद्यन्ते। उक्तं च गोपथ-श्रुतौ "ब्रह्म वेदस्याथर्वणं शुक्रं, अत एव मन्त्राः प्रादुर्बभूवुः। स तु खलु मन्त्राणां तपसाऽश्रुश्रूषानध्यायाध्ययनेन यदूनं च विरिष्टं च यातयामं च करोति तदथर्वणां तेजसा प्रत्याप्याययेत् मन्त्राश्च मामभिमुखी भवेयुर्गर्भा इव मातरम्,, इति।

एषोऽथर्वा भृगु प्राणान्नातिरिच्यते। सर्वेष्वेवाथर्वसु भृगुत्वस्याभिव्याप्तत्वात्। भृगुस्त्वथर्वणोऽतिरिच्यते। सर्वेषु भृगुष्वथर्वत्वस्यानभिव्याप्ते। अतो भृगुविशेषत्वादयमथर्वा प्राणो भृगुप्राणाद् भिन्नश्चाभिन्नश्च व्यवह्रियते। भेदेन यथा "अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः" इति भृगूनथर्वणश्च पृथक् पठन्ति। अभेदेन यथा—

"ऋग्वेदस्य पृथ्वीस्थानमन्तरिक्षस्थानो अध्वरः।
द्यौ स्थानं सामवेदस्य आपो भृग्वङ्गिरसां स्मृतम्॥

अग्निर्दैवतं ऋग्वेदस्य यजुर्वेदो वायुदैवतः।
आदित्यः सामवेदस्य चन्द्रमा वैद्युतश्च भृग्वङ्गिरसाम्॥

ऋचो विद्वान् पृथ्वीं वेद सम्प्रति, यजूंषि विद्वान् बृहदन्तरिक्षम्।
दिवं वेद सामगो यो विपश्चित् सर्वान् लोकान् यद् भृग्वङ्गिरो वित्॥
(गो.पू. ५।१३।१६)

इत्येवमादिषु त्रय्या विद्याया उपरिष्टात् भृगूनङ्गिरसश्चाख्याय वचनान्तरे त्रय्या विद्याया ऊर्ध्वमथर्वणोऽङ्गिरसश्चाचष्टे।

"त्रिविष्टपं त्रिदिवं नाकमुत्तमं तमेतया त्रय्या विद्ययेति।
अत उत्तरे ब्रह्मलोका महान्तोऽथर्वणामङ्गिरसां च सा गतिः॥"
(गो० पू० ५।१०)

प्रायश्चित्तैर्भेषजैः सस्तवन्तोऽथर्वाणोऽङ्गिरसश्च शान्ताः।
अथर्वभिरङ्गिरोभिश्च गुप्तोऽप्सु चन्द्रं पादं ब्रह्मणा धारयन्ति (५।२४)

ऋग्विदमेव होतारं वृणीष्व। यजुर्विदमध्वर्युम्। सामविदमुद्गातारम्। अथर्वाङ्गिरोविदं ब्रह्माणम्। (२।४) इति।

अत्र भृगुस्थानेऽथर्वाणमाचक्षाणस्तयोरभेदमभिप्रैति। स्मृतिरपि तयोरभेदमाह—यथोक्तं वायुपुराणे पूर्वभागे ऊनत्रिंशाध्याये नवमश्लोके —"अथर्वा तु भृगुर्ज्ञेयोऽप्यङ्गिराथर्वणः सुतः। तस्मात् सलौकिकाग्निस्तु दध्यङ्ङाथर्वणः

सुतः।" इति। तदित्थं पञ्चविधो वायुर्व्याख्यातः। यदप्सु ब्रह्मणो रेत आसीत् तदयमद्भिः सम्पन्नः पञ्चविधो वायुरभवत्। आसां वायुविधानां लोक इमा आपः। आपस्ततोऽतिरिच्यन्ते। अपश्चतुर्थं लोकं मन्यन्ते "अस्ति वै चतुर्थो देवलोक आपः। (१८।२)" इति कौषीतकि श्रुतेः। चन्द्रमसं च तल्लोकपालम्। "चन्द्रमाह्यप्सु चरति" (गो० पू० २।६) इति श्रुतेः।

'तस्याग्निर्होताऽऽसीत्। वायुरध्वर्युः। सूर्य्य उद्गाता। चन्द्रमा ब्रह्मा।' (गो० १।१३) इति चन्द्रमसो ब्रह्मत्वश्रवणाच्च। ऋचामग्निर्दैवतं पृथ्वीस्थानम्। यजुषां वायुर्दैवतमन्तरिक्षस्थानम्। साम्नामादित्यो दैवतं द्यौः स्थानम्। अथर्वणां चन्द्रमा दैवतमापः स्थानम्। (गो. १ २९) इति। पृथ्वी वा ऋचामायतनमग्निर्देवता। अन्तरिक्षं वै यजुषामायतनं वायुर्देवता। द्यौर्वै साम्नामायतनमादित्यो देवता। आपो वै भृग्वङ्गिरसामायतनं चन्द्रमा देवता वद्युतश्च। (गो. २।२४) इत्यादिषु च श्रुतिषु भृग्वङ्गिरसां वेदानामापो लोकश्चन्द्रमा लोकपतिरिति श्रूयते।

तथा च वायुरापश्चन्द्रमा इत्येते त्रयोऽप्यन्योन्या व्यभिचारेण सहचारिणः संभवन्ति। अत एवैषां त्रयाणां योगादेकं वैश्वदेव्यं संपद्यते तत्राप्येष भृगुशब्दः प्रवर्तते। वायु रापश्चन्द्रमा इत्येते भृगवः। एत इद सर्व समाप्याययन्ति। एकमेव संस्थं भवति (गो. २।८) इति श्रुतेः। चन्द्रमा द्विविधः। भास्वरश्चन्द्रो दिक्चन्द्रश्चेति। पृथ्वीं परिक्रममाणो द्विपक्षः पिण्ड आद्यः तदारम्भणोऽनायतनः सर्वजगद्व्यापी सोमो द्वितीयः।

तत्रेह प्रकरणे चन्द्रमश्शब्देन सर्वदिग्व्यापी सोमो नेयो न भास्वरः पिण्ड; । "वृषा सोमो ओवा आपो हविर्धानेऽध्येति। तस्मान्मिथुनाच्चन्द्रमाजातः,, (श. ब्रा. ४:५:६:१२) इति श्रुत्या तस्यादभिर्युक्तात्सोमादुत्पन्नेत्वेनोत्तरकालिकत्वात्। अत्र हविर्धाने सूर्य पृथिव्यौ ब्रूमः! "द्यावा पृथिवी वै देवानां हविर्धाने आस्ताम्। ते उ एवाद्यापि हविर्धाने। ते होदमन्तरेण सर्वं हविर्यदिदं किञ्च"। इत्यैतरेय श्रुतेः (५।अ.) अत एवैतल्लोकतृतीयलोकयोर्मध्येऽयं चन्द्रमा जन्म धत्ते। "द्यावा पृथिव्यो र्वा एष गर्भो यत् सोमो राजा" (४।अ) इत्यैतरेय श्रुतेः। अपि वा हविर्धानमिति वाङ्मनसयोः संहतयोः संज्ञा। "वाक् च वै मनश्च हविर्धाने। वाचि च वै मनसि चेदं सर्व हितम्"। (६।३) इति कौषीतकि श्रुतेः।

प्राणस्यापीदमुपलक्षणम्। तदव्यतिरेकेण सृष्टेरसंभवात्। तेन ब्रह्मैव सोमेनापांमिथुनं सभूय चन्द्रमसमुदपादयत्। अत्रिश्च तत्रायं प्राणश्चन्द्रजनकः। तथा च तस्यात्रेयत्वेन भृगुत्वाभावाच्च नेह ग्रहणं युक्तम्। यस्तु दिक्सोमः स भृगुविशेषो द्रष्टव्यः।

अथ यत् ता आपोब्रह्मणो रेतः स्व राजानमवृणात। सोऽद्भिर्वरणाद् वरुणोऽभवत्। स समुद्रादमुच्यत्। तदनवच्छेदान् स्वातन्त्र्यापत्तिर्मुक्ति। तेनैव मुच्युरेव सन् परोक्षयात् मृत्युरुच्यत। स वरुण मृत्युमभ्यश्राम्यदभ्यतपत्। तस्य सर्वेभ्योऽङ्गेभ्यो रसोऽक्षरत्। सोऽङ्गरसोऽभवत् अङ्गरस सन्तमङ्गिरा इत्याचक्षते। (गो० १।७) स ऊर्ध्वो प्रतिष्ठत् स इमान् लोकान् व्यष्टभ्नात्। अङ्गाना ह्येष रस" इति श्रुत्यन्तराच्चायमङ्गिरा। सर्वेषामेव घनपिण्डाना प्रत्यङ्गादुत्थायोर्ध्वां दिवमनुसचरन् रस प्रतीयते। अत एवैतस्या पृथिव्या अपि नाभेरुत्थाय समन्ताद् बहिर्भवन्नादित्येन सवृत्तोऽनुक्षण दिवमनुसर्पतीति श्रूयते।

"इत एत उदारुहन् दिव पृष्ठान्यारुहन्।
प्रभूर्जयो यथा पथो द्यामङ्गिरसा ययु॥" इति॥

भुवो दिवमभ्युत्क्रममाणानामङ्गिरसामादित्यैरूर्ध्वादिभुवमागत्य पुन वर्तमानै सहाकाशे सघर्षो भवतीति बहुधा श्रूयते यथा कौषीतकीये। "आदित्याश्च ह वा अङ्गिरसश्चास्पर्द्धन्त। वय पूर्वे स्वर्गलोक स्वर्गलोकमेष्याम इत्यादित्याः। वयमित्यङ्गिरस.। तेऽङ्गिरस. आदित्येभ्य. प्रजिष्यु (३०।६)॥ इत्यादि ऐतरेयकेऽपि–आदित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त। वय पूर्व एष्यामो वयमिति। ते ह्यादित्या पूर्वे स्वर्ग लोक जग्मु.। पश्चेवाङ्गिरस. (१८।४) इति

गोपथेऽपि—आदित्याश्च ह वा अङ्गिरसश्च स्वर्गेलोकेऽस्पर्द्धन्त। वय पूर्वे स्वरेष्यामो वय पूर्व इति। त आदित्या लघुभिः सामभिश्चतुर्भि. स्तोमैर्द्वाभ्या पृष्ठाभ्या स्वर्ग लोकमभ्यप्लवन्त। अन्वञ्च एवाङ्गिरसो गुरुभि. सामभिः सर्वै. स्तोमै. सर्वै. पृष्ठ्यः स्वर्ग लोकमभ्यसृप्यन्त (पू. ४/२३) इति। इतस्तृतीयान्दे एकविंशस्तोमोऽयमादित्य इति तस्याङ्गिरोपेक्षया गन्तव्यमार्गः स्वल्प.। अङ्गिरसस्त्वितश्चतुर्थपञ्चमान्दयोस्त्रिणवत्रयस्त्रिशौ स्तोमौ क्लृप्ताविस्यादित्या पेक्षया विप्रकृष्टो गन्तव्यमार्ग इत्यभिप्रायः।

सर्वे जपयज्ञास्तमेतमङ्गिरसमेवापियन्ति तथा च श्रूयते—

याश्च ग्रामे याश्चारण्ये जपन्ति मन्त्रान् नानार्थान् बहुधा जनासः।
सर्वे ते यज्ञा अङ्गिरसोऽपि यन्ति नूतना सा हि गतिर्ब्रह्मणो याध्वराध्या॥

(गो. पू. ५/२४) इति। कठिनधातुरूपोऽयमङ्गिरा लोकत्रयरसयोगाद् त्रेधा दृश्यते लोके आग्नेयो याम्य आदित्यश्चेति। कृष्णाकृति राग्नेय.। सीमाकृतिर्याम्यः शुक्लाकृतिरादित्य इति।

तथा च श्रूयते "अग्निरादित्यो यमः "इत्येतेऽङ्गिरसः एते इदं सर्वं समाप्नुवन्ति" (गो. पू. २/८) इति ॥

तत्र भौमस्तावदङ्गिरा एवायं प्र वलतोऽग्नेः स्वरूपं निर्वाहयति । "त्वमग्ने अङ्गिराः प्रथमो ऋषिः इति श्रुते । अग्नेस्त्रिवृत्त्वं श्रूयते कौषीतकीये । त्रिवृद्वा अग्निः—अङ्गारा अर्चिर्धूम (इति कौषीतकि (२८/५) तत्र "अङ्गारेष्वङ्गिराः संबभूव अर्चिषि भृगुः संबभूव । इति श्रुतिरङ्गिरसोऽङ्गारस्वरूपारम्भकत्वमाचष्टे । कृष्णवर्णोऽयमङ्गिरा दह्यमानः शुक्ले तेजसि रोहितो भवतीति रोहितवर्णो दृश्यते ।

"भृगूणामङ्गिरसां तपसा तप्यध्वम्" इति मंत्र व्याख्यायाम् , एतद्वै तेजिष्ठ तेजो यद् भृग्वङ्गिरसाम् (१/१/५/१३) इति ब्राह्मणश्रुति दाहप्रवर्तकत्वमाचष्टे । तच्च दाहकत्वं योगविशेषादुपपद्यते । योगविशेषात्वेषामुभयेषां तरलत्व चोपपद्यते ।

आपो भृग्वङ्गिरोरूपमापो भृग्वङ्गिरोमयम् (१/३९) इति गोपथश्रुतेः । स्वरूपेण त्वान्तरीक्ष्या अनायतना एते सर्वत्र व्याप्ता पवन्ते इति बोध्यम् ।

नक्षत्रविद्यायां रोहिणी लुब्धकाख्यानात् दिव्यप्यनयोर्भृग्वङ्गिरसोरारम्भण श्रूयते । "प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत् । दिवमित्यन्ये आहुरुपसिमित्यन्ये । तामृष्यो भूत्वा रोहितं भूतामभ्यैत् । त देवा अपश्यन्-अकृतं वै प्रजापतिः करोतीति । ते तमैच्छन् । य एनमारिष्यति । एतमन्योन्यस्मिन्नाविन्दन् । तेषां या एव घोरतमास्तन्व आसन् ता एकधा समभरत् । ताः संभृता एष देवोऽभवत् । तदस्यैतद् भूतवन्नाम । त देवा अब्रुवन् इमं विध्येति । स एतमेव वरमवृणीत-पशूनामाधिपत्यम् । तदस्यैतद् पशुमन्नाम । स तमायत्याविध्यत् । स विद्ध ऊर्ध्वं उदपतत् । तमेतं मृग इत्याचक्षते । य उ एव मृगव्याधः स उ एव सः । या रोहित् सा रोहिणी । यो एवेषुस्त्रिकाण्डा सो एवेषुस्त्रिकाण्डा । तद्वा इदं प्रजापतेः रेतः सिक्तमधावत् । तत्सरोऽभवत् । ते देवा अब्रुवन्निदं प्रजापतेरेतोदुषदिति । तन्मादुषमभवत् । तन्मादुषं सन्मानुषमित्याचक्षते । तदग्निना पर्यादधुः । तन्मरुतोऽधुन्वन् । तदग्निर्न प्राच्यावयवत् । तदग्निना वैश्वानरेण पर्यादधुः । तन्मरुतोऽधुन्वन् । तदग्निर्वैश्वानरः प्राच्यावयवत् । तस्य यद् रेतसः प्रथममुद्दीप्यत । तदसावादित्योऽभवत् । यद् द्वितीयमासीत् तद् भृगुरभवत् । तं वरुणो न्यगृह्णीत । तस्मात् स भृगुर्वारुणिः । अथ यत् तृतीय मदीदेदिवत् त आदित्या अभवत् । येऽङ्गरा आसंस्तेऽङ्गिरसोऽभवन् । यदङ्गारा पुनरवशान्ता उददीप्यन्त तद्बृहस्पतिरभवत् यानि परिक्षाणान्यासन् ते कृष्णाः पशवोऽभवन् या लोहिनी मृत्तिका ते रोहिताः अथ यद्भस्मासीत् तत्परुष्यं व्यसर्पत् गौरो गवय ऋष्य उष्टो गर्दभ इति । ये चैतेऽरुणाः पशवस्ते च तान् वा एष देवोऽभ्यवदत्

मम वा इद सर्वम् । मम वै वास्तुहम्" इति एतच्चाख्यानमाकाशे कृत्तिका तारातोऽनुप्राची, लुब्धकादनुप्रतीची, शशलक्ष्मण, स्थिरचन्द्राच्छवम्या चानूदीची, प्रजापतितारायाः पुनर्वसुभ्या चान्वाची यावन् द्युप्रदेशस्तत्रत्याभि रोचनाभि क्लृप्ताना देवसत्वाना सम्बधनाख्यायते । तद् यथा-अस्ति हि कृत्ति कात प्राच्या ज्योतिष्मती तारा लोहितवर्चस्त्वात् सा रोहिणीत्युच्यत ।

तस्या समसमुखे दक्षिणाकाशे षड्भान्तरे तादृशो मेवान्या ज्योतिष्मती ज्येष्ठा नाम तारा पश्याम । ज्येष्ठार्द्धाद रोहिणी पर्यन्त चन्द्रमा उदरोहति । पूर्वोक्त तारास्तु ज्येष्ठार्द्धपर्यन्त स दक्षिणस्यामवरोहति । आरोहणावरोहणा-सीमत्वाच्चैते उभे रोहिण्यौ अर्येत । तत्र ज्येष्ठा दरिद्रामाचक्षत धूमावती च कृत्तिकात पूर्वां तु लक्ष्मी भृगुजामाहु । अपि चैतत्तारोपलक्षिताया दिवि रोहित मृगरूप स्त्रीजातीय कल्प्यत । ततोऽपीय रोहिणा नाम । तत उदीच्या ब्रह्महृदया-ख्यतारोपलक्षितशरीर प्रजापतिर्भासित । *प्रजापतिरित्यजमेषादिपशुचारण-*वृत्त शूद्रजात सज्ञा लोके कृत्तिका हि तस्य शिर । 'प्रजापतर्वा एतच्छिरो यत कृत्तिका । अग्निरास्यम् । सप्त कृत्तिका सप्तशीर्षन् प्राणा' (१/८/६) इति मैत्रायण श्रुत. ।

साऽस्या रोहिण्या पिता कल्प्यत रोहिणी मनुसर्पन्त त दृष्ट्वा रोचना-क्लृप्तमूद्धय सर्वे देवसत्वान क्षुब्धा भूत्वा सर्वतारातजोमयमूर्तिमत्युग्रवीर्यं महाघोर रुद्र समाराध्य तद्वाराऽस्य मृगरूप न तस्य प्रजापते शिरश्छदयामासु । तदिद मृगशिरा नक्षत्र दक्षिणभागे वाण सलग्न दृश्यते । प्रजापतिस्तु छिन्नशीर्षा तदुत्तरत पतिता दृश्यते । अथ रोहिणी वाण चान्तरा तस्य प्रजापते रेतोभिर्विच्युतै सर समभवत् मानुष नाम । तच्चार्द्धं विषुवतो दक्षिणतोऽर्द्ध तूत्तरत सन्नवति । तस्योत्तरसलग्ना तारास्त्यग्निर्नाम । पुनर्वसू द्व तारे । तत्रैका पश्चिमादित्या नाम । पूर्वा तु भृगुर्नाम । असुरस्य रसेनोपपन्नत्वात् स वारुणि ।

अथैताभ्यामग्न लुब्धकबन्धु यावद् वक्रदण्डवदाभासमानास्तिस्र तारा आदित्या । तदन्यास्त्वतिसूक्ष्मा दृश्यादृश्यास्तत्र सर्वास्तारा अङ्गिरस । ता स्वयमव प्रदीप्तो लुब्धकबन्धुर्बृहस्पतिर्नाम । अथ मृगव्याध रोहिणी चान्तरेण प्रजापतिं चान्तरेणानकजातीया अनेकवर्णा पशवो दृश्यन्त । तेषा पति पूर्व प्रजापतिरासीत । अकृतकरणादस्य प्रजापतरपभ्रंशे भूतपतिरय मृगव्याध पशुपतिरभवत् । तदित्थमेतेनाख्यानेनाख्याननायकानामृषिदेवतपशूनारूपर-म्परया सर्वास्तारा नामत स्वभावतश्च सगृहीता विज्ञायन्त । तारासु वाला सुशिक्षिता भवन्ति ।

ताराविज्ञानविद्याया मिथ्याप्रकल्पितैराख्यानैरर्थोऽयमुपपद्यते—पुराणा काशस्य रोचनाना सन्निवेशे प्ररोचनया शिक्षासौकर्यम् । शिक्षापर्यागिलोकचरि-

अङ्गिरसा विकारभूता उचथ्यबृहस्पतिसंवर्तगोतमायास्य भरद्वाजघोराथर्व-कण्वप्रस्कण्वादयो बहुविधा ऋर्था. श्रूयन्ते।

असन्नान्त. सन्नससन्नाना शरीरेभ्य. प्रत्यङ्गादुत्थायोत्थायानवरतमयमङ्गिरा ऊर्ध्वं दिव गच्छन्नादित्येन सहसृज्यते। तत्र शरीरेभ्योऽङ्गिरस· प्रत्यङ्गादुच्छेद रुद्र. प्रयोजक। एष हि रुद्रो द्रावणोऽग्निविशिष्टो भूतपतित्वात् भौतिकेष्वर्थेषु प्रतिभूतमनुपज्जने पशुपतित्वाच्च पशुष्वपि नित्य सनिधत्ते। भूतेभ्य उत्पन्ना भूतावकारास्त्वसृग मासमेदोऽस्थिमज्जादया दूर्वाकाष्ठपर्णादयश्चाभिन्नाग्निमुपधारयन्त सर्वे पशवः उच्यन्ते। भूतेभ्यश्च पशुभ्यश्चैवोऽङ्गिराप्रजापतिर्नित्यमुच्छिन्ना-बहिर्भवतीत्याहु.।

उपसि चान्यद् विज्ञान पश्यन्ति। ये यमोपसोऽोपा.। सेय प्रजापतेर्दुहिता। एप प्रजापतिर्द्वादशधा परिच्छिद्यते। अग्निरादित्य सोम. पशवो वायुर्मृत्यु पृथ्वी द्यौरग्निरादित्यो मन सवत्सर" इति। एता वाव द्वादश प्रजापतेस्तन्व। एप कृत्स्न. प्रजापति"। इति श्रुते.। तत्र सवत्सरस्य प्रजापतेरियमुपसा दुहिता भवति। स उपसि वैश्वानर नामाग्नि रेताभूतमसिञ्चत्। स सवत्सरे कुमारा-ऽजातय। तस्यता अष्टौ मूर्तय.। अग्नि आप., आपधय., वायु, विद्युत्, पजन्य, चन्द्रमा, आदित्य इति। परे त्वोपध्या विद्युत पजन्यस्य च स्थाने पृथ्वीमाकाश-मात्मान चाहु.। तान्येतान्यष्टौ अग्निरूपाणि स चित्रो नामाग्नि। कुमारस्तेपा नवम.। न वाप्येते पशुपु प्रविष्टा उपलभ्यन्ते। पशवो ह्यग्नि। पृष्वापृष्ठे द्यावापृथिवी रसेभ्य. समुत्पन्ना अचेतनोद्भिसचेतनशरीरा धातूपधात्वोपधि-वनस्पतिकृमिकीटादय.पशव। तेऽत्रयमग्निर्द्वधा सनिविशते-मर्त्यरूपेणामृतरूपेण च सोऽयमग्निचितियज्ञोऽध्वरयज्ञश्च। अन्नोक्तं प्राणानामन्योन्यपरिग्रहस्य तेपु मर्त्यभागेऽमृतभागे चानुक्षणमुपपन्नत्वात्। तस्य यज्ञस्य शिरोऽङ्गरस. प्रतिपद-रुद्रच्छिन्न पराग भवति। यथा सूर्यस्य यज्ञस्य शिरोऽत्र घर्मप्रवार्ग्यश्छिद्यते एव सर्वत्राप्ययमर्थः साधारणो ज्ञय इति दिक्।

४ 'जज्ञेऽत्रिर्भगवानृषि." इति मंत्रस्य व्याख्यानम्

आदिब्रह्मणा बहुपु पुत्रेपु तृतीयोऽत्रिर्ब्रह्मा चन्द्रवशप्रवर्तको मूलपुरुप आसीत्।

सोऽयमत्रिर्ब्राह्मस्य सप्तमे, पाद्मे सृष्टिद्वादशे, विष्णुचतुर्थांशस्य पष्ठ भागवतस्य चतुर्थप्रथमे नवमचतुर्दशे च मार्कण्डेयस्य पोडशे अग्नेस्त्रयोदशे वाराहस्य पञ्चत्रिंशे, मात्स्यस्य त्रयस्त्रिंशे, ब्रह्माण्डोपोद्घातस्याष्टमे पञ्चपष्ठच हरिवंशप्रथमपर्वणि. पञ्चत्रिंशे, महाभारतस्य शान्तिमोक्षधर्मेऽष्टात्रद्विंशततमे आनुशासनिकदानधर्मस्य पट्पञ्चाशशते च व्याख्यातः।

तृतीयप्रजापतित्वादयमत्रिरत्रिशब्देनाख्यायते—इत्युक्तं ब्राह्माण्डे "अहं तृतीय इत्यर्थस्तस्मादत्रिः स कीर्त्यते" । इति । (उ० ४/४५) द्विविधोऽयमत्रिराख्यायते । प्राणविधो नरविधश्च । तत्र भृग्वङ्गिरोऽत्रीणां प्राणविधानां क्रमिकोत्पत्त्या तृतीयत्वमत्रः प्राणस्य बृहद्देवतादावुच्यते । एवं नरविधस्याप्यत्रेस्तृतीयत्वं मानसेषु ब्रह्मपुत्रेषु तृतीयत्वादुपपद्यते । यथोक्तं भारतादिपर्वणः पट्षष्ठाध्याये —

"ब्रह्मणो मानसाः पुत्रा, विदिताः षण्महर्षयः ।
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ।।

अत्रस्तु बहवः पुत्राः श्रूयन्ते मनुजाधिपः ।
सर्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः ।।"

स हि विपुलौजा अपि नितान्तशान्तप्रकृतिः सर्वलोकहितप्रवणश्चासीत् । तदुक्तं ब्रह्माण्डे—

"पिता सोमस्य वै विप्रा जज्ञेऽत्रिर्भगवानृषिः ।
तत्रात्रिः सर्वलोकानां तस्थौ स्वेनौजसाऽवृतः ।
कर्मणा मनसा वाचा शुभान्येव समाचरन् ।।" इति ।।

अस्यात्रेर्मूलनिवासस्थानं ब्रह्मपर्षदधिष्ठानं च विशिष्य न ज्ञायते । महाभारतभीष्मपर्वणि नवमाध्याये—"आत्रेयाः सभरद्वाजाः" । इति । मार्कण्डेये चतुःपञ्चाशत्तमाध्यायेऽपि—"आत्रेयाश्च भरद्वाजाः पुष्कलाश्च कशेरुकाः" । एते देशा ह्युदीच्यास्तु"—इत्येवं देशविशेषस्यात्रेयत्वेनाख्यानात् पुरा युगेऽत्रिनिवासोपलक्षितप्रदेशस्य लोके सुप्रसिद्धत्वेऽपीदानीं कालदोषेण तदपह्नवादप्रतिपत्तेः । श्वेतगिरिस्थो जनपदविशेषः पुरायुगे तदत्रिस्थानमासीदित्यस्ति बहूनां विश्वासः । यत्तु मात्स्ये पुरूरवसस्तपश्चर्याप्रसङ्गे—

"सगच्छन्नेव ददृशे हिमवन्तं महागिरिम् ।
खमुल्लिखद्भिर्बहुभिर्वृतं शृङ्गैस्तु पाण्डुरैः ।।

तस्यैव पर्वतेन्द्रस्य प्रदेशं सुमनोरमम् ।
अगम्यं मानुषैरन्यैर्दैवयोगादुपागतः ।।

मेघश्यामस्त्वसौ देशो द्रुमखण्डैरनेकशः ।
ऐरावती परिच्छिष्ठा यस्माद्देशाद्विनिर्गता ।।

तच्चाश्रमपदं पुण्यं बभूवात्रेः पुरा नृप ।
तत्प्रसादात् प्रभायुक्तं स्थावरैर्जङ्गमैस्तथा ।।

हिमपातो न तत्रास्ति समन्तात् पञ्चयोजनम् ।
उपत्यका सुशैलस्य शिखरस्य न विद्यते ॥

तत्रास्ति राजन् शिखरं पर्वतेन्द्रस्य पाण्डुरम् ।
हिमपातं घना यत्र कुर्वन्ति सहिताः सदा ॥

तत्रास्ति चापरं शृङ्गं यत्र तोयघना घनाः ।
नित्यमेवाभिवर्षन्ति शिलाभिः शिखरं वरम्[1] ॥

तदाश्रमं मनोहारि यत्र कामवरा वराः ।
सुरमुख्योपयोगित्वाच्छाखिना सफलाः फलाः ॥

तदाश्रमं समन्ताच्च हिमसंरुद्धकन्दरैः ।
शैलवाटैः परिवृतमगम्यं मनुजैः सदा ॥

तत्र यौ तौ महाशृङ्गौ महावर्णौ महाहिमौ ।
तृतीयं तु तयोर्मध्ये शृङ्गमत्यन्तमुच्छ्रितम् ॥

तस्याधस्ताद् वृक्षगणो दिशा भागे च पश्चिमे ।
जातीलतापरिक्षिप्तं विवरं चारुदर्शनम् ॥

तमसा चातिनिबिडं नल्वमात्रं सुसङ्कटम् ।
नल्वमात्रमतिक्रम्य स्वप्रभाभरणोज्ज्वलम् ॥

न तत्र सूर्यस्तपति न विराजति चन्द्रमाः ।
तथापि दिवसाकारं प्रकाशं तदहर्निशम् ॥

इत्येवं षोडशाधिकशततमादिभिः कतिपयाध्यायैः कश्चिदत्रेराश्रमो महता परिकरेण व्याख्यातः । सोऽप्यस्य तपश्चर्याप्रदेशोऽनुमीयते निर्जनारण्यप्रदेशत्वात् । वक्ष्यमाणेन तु पर्ष्णीकथानकेनाप्यस्य प्रदेशस्य सपरिवारात्रिनिवासस्थानत्वं चिरकालिकतपश्चरणार्थमेव स्थानत्वं तस्य मुख्यो देशः ।

तस्य प्रदेशस्य मनुष्यलोकान्तरिक्षलोकयोः सीमारूपतया वायुपुराणादौ व्याख्याततत्वादन्तरिक्षलोकादप्युत्तरवर्तिदेवलोकनिवासिनस्तस्यात्रेर्मनुष्यलोकोपक्रमदेशनिवासित्वायोगात् । यदपि च मेरुसन्निधाने देवनिकायगिरौ वा तदनितीर्थमुक्तं तदप्यस्य तपश्चर्यास्थानं नतु निवासस्थानम् । ब्राह्मे गौतमीमाहात्म्यस्य

1. मत्स्यपु-पुरुरवसश्चरितम्

सप्ततितमाध्याये यदात्रेयतीर्थमुक्तं, चित्रकूटे दण्डकारण्ये प्रयागे वा यदात्रेय-तीर्थमुच्यते तदत्रिवंशधराणामुत्तरेषां केषाञ्चिदत्रीणां स्थान प्रतिपद्यते नत्वाद्य-स्यात्रेः। उत्तरेषां त्वनेकस्थानानि स्मर्यन्ते। भारतशान्तिमोक्षधर्मे स्वस्तिकाध्याये प्राच्यां स्वस्त्यात्रेयस्य, पश्चिमायामत्रेःपुत्रस्य, उदीच्यामात्रेयस्य च निवासस्थाना-दिति दिक्।

एष हि त्रीणि वर्षसहस्राणि शक्तिविशेषलाभार्थमृक्षपर्वतेऽनुत्तमन्तपस्तेपे इत्याहुः। तत्र सहस्रशब्दः पूर्णार्थः। "सर्वं वै सहस्रम्" इति श्रुतेः। पूर्णत्वं च वर्षाणां मासवासरादिभिरन्यूनानतिरिक्तत्वम्. अनुत्तममिति मात्स्यादिपाठस्थाने-ऽनन्तरमिति पद्मादिपाठः। अन्तरमनवच्छिन्नम् सुदुश्चरमिति च ब्रह्मांडादिषु पठ्यते। ऋक्षपर्वतोऽयं भारतवर्षे प्रसिद्धः।

> तापी पयोष्णी निर्विन्ध्या कावेरी प्रमुखानदीः।
> प्रवर्तयतियः सोऽयमृक्षो नाम कुलाचलः।।ब्रह्म पु. १६)

इत्यभियुक्तोक्तेः। वस्तुतस्त्वत्रितपःस्थानमयमृक्षः स्वर्गभूमिस्थः कश्चिद-न्योगिरिः तस्यात्रत्वयं भारतवर्षीयः। आद्यस्यात्रेः स्वर्गवासितया स्वर्गभूमिं परित्यज्य मनुष्यलोकेऽस्मिन् भरतखण्डे तपश्चर्य्यार्थमनुधावनस्य विचारायो-ग्यत्वात्।

एष खल्वत्रिर्वसिष्ठादिवदस्य ब्रह्मणो मानसः पुत्रः आसीत् द्विविधं हि पुरा युगे ब्रह्मणः पुत्रमाचक्षतेस्म औरसं मानसञ्चेति। स्वधर्मपत्न्यां स्वरेत-सोत्पादितः पुत्र औरसः। यस्त्वन्यौरसोऽपि ब्रह्मणा स्वपुत्रत्वेन भावितोऽभूत् स मनसा पुत्रत्वेन क्लृप्तत्वान्मानस इत्युच्यतेस्म।

> मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः।
> ब्रह्मणो मानसाः पुत्रा वसिष्ठश्चेति सप्तते।।

इत्येते सप्ताऽप्यन्यौरसा एव पुत्रत्वेन ब्रह्मणा परिगृहीतास्तत्तल्लोकमण्डले धर्मोपदेशार्थं धर्मे शासनार्थं च ब्रह्मपरिषदधिष्ठानेऽधिष्ठातृतया प्रतिष्ठापिता अभवन्। वस्तुतस्तु प्रथमोऽयमत्रिरौरस एव ब्रह्मणः पुत्र आसीत्। अत्रेर्मानस-पुत्रत्वं तु सांख्यान्त्यपेक्षया द्रष्टव्यमित्याहुः।

पौराणिका आहुः। अत्रिरयं ब्रह्मणा वेदप्रचारार्थं नियुक्त आसीत्। तेन वैज्ञानिकयज्ञप्रचारकरणेन हेत्वन्तरेण वा परिक्रुद्धा असुरास्तमत्रिमपि सपुत्रकलत्रपरिवारगणमुर्वीसनाम्नि पीडायन्त्रगृहे प्रवेश्य तुषाग्निना अवाविपत। ततस्तेनर्षिणा स्तुतावश्विनौ नासत्यदस्रौ देवौ तमग्निमुदकेनोपशमय्य तस्मात्

पीडागृहादविकलेन्द्रियवर्गं सन्त निरगमयताम् । असुरकृतपीडया कार्श्यं प्राप्तायात्रये बलप्रद क्षीरादिकमन्नञ्च पुष्ट्यर्थं प्रायच्छतमिति ऋक्संहितायां प्रथममण्डले षोडशशततमसूक्ते महर्षि कक्षीवानाह—

"हिमेनाग्नि घ्र समवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनाऽवनीतमुन्निन्यथु सर्वगण स्वस्ति[1] ।।"

ऋषिं नरा वंहसः पाञ्चजन्यमृबीसादत्रिमुञ्चथो गणेन ।
मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता[2] ।।

हे अश्विनौ ! युवा हिमेन शीतोदकेनात्रिदाहार्थमसुरैः प्रक्षिप्तमतिप्रज्वलित तुषाग्नि निवारितवन्तौ पितुमतीमूर्जमन्नवती बलप्रकृतिमनये प्रायच्छतम् । ऋबीसेऽपगतप्रकाशे पीडायन्त्रगृहेऽवनीतमवाङ्मुखतयाऽसुरैः प्रापित सर्वगणोपेतमत्रि स्वस्ति यथा भवति तथा उन्निन्यथु । "तस्माद् ऋबीसनामकात् कारागृहादुद्गमय्य स्वगृह प्रापितवन्तौ"-इति प्रथमस्यार्थ सायणभाष्यम् द्वितीयस्य हे नरौ ! प्रजापतिवरुण-वागु-वाय्वाग्निसहयोगेन जनितत्वात् पाञ्चजन्यम्, ऋषिपितृदेवतिर्यग्मनुष्यभेदेन पञ्चधाविभक्तानां देवयुगसम्बन्धिनराणामभ्यर्हणीयत्वाद्वा पाञ्चजन्यम् ।

अथवा अणु द्रुह्यु-तुर्वसु यदु-पुरुणा पञ्चशाखाविभक्तानां राजवंशानामेव पुरायुगे मनुष्यत्वेन पञ्चजनत्वेन च देवैर्व्यवस्थापितत्वात् तेषां पञ्चजनानामयत्रिर्मूलपुरुषत्वाद्धाराध्योऽवभूतेति कृत्वा सोऽत्रि. पाञ्चजन्य· प्रसिद्ध आसीत् । अत पाञ्चजन्य तमृषिमत्रि पुत्रकलत्रादिपरिवारगणेन सह तस्माद् ऋबीसनामकात्कारागृहाद् युवा मुञ्चथ. । अशिवस्यानिष्टकरस्य दस्योरसुरस्य मायाः, निगडबन्धनादिविषयकच्छलव्यापारसम्बन्धिनीर्मिनन्तौ नाशयन्तौ अनुपूर्वं पूर्ववत् स्थिति प्रचोदयन्तौ प्रवर्तयन्तौ च युवा तमत्रिमृबीसादमोचयतमित्यर्थः." ।

अथात्रेय्या ब्रह्मपर्षदि प्रतिष्ठितेऽस्मिन्नत्रिवंशे गृहनक्षत्रादिज्योतिर्विद्यापरीक्षण विशिष्य प्रचरितमासीत् । प्रथमात्रिकाले हि कदाचित् सर्वग्रामे सूर्यग्रहणे जाते तत्कारणनिर्धारणाय तदानीन्तना बहव एव विद्वासः प्रयतन्ते स्म । किन्तु सर्वप्रथम तेऽत्रात्रेयपर्षदधिष्ठातारोऽत्रय एव याथातथ्येन तत्कारणमवधारयामासु. । तत्र यदवधारित तद् गणितोपपादनपरो विद्याग्रन्थस्तु तस्यामात्रेयपर्षद्येवाधिष्ठितोभूत् । तदितिवृत्त तु केवल पञ्चभिर्मन्त्रैऋक्संहितायामुपनिबध्यते । तद्यथा—

---

1. ऋ स. १.११६.
2. ऋ. स. १:११७.

"यत्त्वा सूर्य स्वर्भानुस्तमसा विध्यदासुर:।
अक्षेत्रविद् यथा मुग्धो भुवनान्यदीधयु:॥

स्वर्भानोरध यदिन्द्रमाया अवो दिवो वर्तमाना अवाहन्।
गूळ्हं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविन्ददत्रि:॥

मा मामिमं तव सन्तमत्र इरस्या द्रुग्धो भियसा नि गारीत्।
त्वं मित्रो असि सत्यराधास्तौ मेहावतं वरुणश्च राजा॥

ग्राव्णो ब्रह्मा युयुजान: सपर्यन् कीरिणा देवान्नमसोपशिक्षन्।
अत्रि: सूर्यस्य दिवि चक्षुराधात् स्वर्भानोरपमाया अघुक्षत्॥

यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुर:।
अत्रयस्तमन्वविन्दन्नह्यन्ये अशक्नुवन्[1]॥

अयमत्रानिसन्धि:। अभिजितं नाम ब्रह्माणं परित: सूर्योऽयं परिक्रामति तस्य ब्रह्मणो रश्मिगता: सर्वे प्राणा ऋषय उच्यन्ते। चन्द्रमसि स्वत: कृष्णवर्ण प्रतिमूर्छितै: सूर्यकिरणैरुत्पन्नायां ज्योत्स्नायां स्थिता नानाधर्मविभक्ता: प्राणा मध्यमा: पितर उच्यन्ते। पृथिव्यामप्येवं प्रतिमूर्च्छिते सूर्यकिरणेऽवरा: पितरो भवन्ति। सूर्यरश्मिगतास्तु प्रकाशमया: सर्वे प्राणा नानाधर्मविभक्ता: सर्वे देवा उच्यन्ते। चन्द्रे पृथिव्यां वा सूर्यप्रतिदिग्भागे सूर्यकिरणप्रतिबन्धात् तमोमये वियति सञ्चरन्त: प्राणा असुरा: कथ्यन्त इति हि वैदिकी परिभाषा श्रुतिप्रसिद्धा।

तत्र तस्य चन्द्रस्य पृथिव्याश्चैवं स्वभागव्याप्ता छायामयी भूमापि सर्वासुरप्राणसम्भृतत्वादसुर एवोच्यते। तस्य छायामयस्यासुरस्य तमो राहु: स्वर्भानुरित्येता: संज्ञा: स्यु:। अन्धकारमयत्वात्तम:। सूर्यांशुराहित्येन क्लृप्तमूर्तित्वाद्राहु:। सूर्यमण्डलं स्व:, "एषा गतिरेषा प्रतिष्ठा य एष तपति। तस्य ये रश्मयस्ते सुकृतोऽथ यत् परं भा: प्रजापतिर्वा स स्वर्गो वा लोक" इतीष्टियजमानश्रुते:। सूर्यमण्डलोपलक्षिते प्रतिदिग्भागे भानुर्भूमोपलक्षितप्रवेशव्याप्तियोग्य: प्रकाशा नियमेन यस्यास्ति स स्वर्भानु:। एष चोभयपार्श्वगतसूर्यकिरणयो: कत्रीरूपयो: सम्पातेन च्छिन्नशिरा दृश्यते। त्रिविधोऽयं राहु: एक: पार्थिवो द्विविधश्चान्द्रश्च। तत्र पार्थिव: सैंहिकेयोऽप्युच्यते। पृथिव्या: सिंहिकारूपेण श्रुतौ निरूपितत्वात्। तदुक्तं लैङ्गे सप्तपञ्चाशाध्याये।

---

१. ऋ. सं. ५:४०:५-९.

"द्विविधः सूर्यविस्ताराद् विस्तारः शशिनः स्मृतः ।
तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाऽधस्ताद्विसर्पते ॥

उद्धृत्य पृथिवीच्छाया निर्मिता मण्डलाकृतिम् ।
स्वर्भानोस्तु बृहत् स्थानं तृतीयं यत्तमोमयम् ॥" इति ।
(लिङ्गपुराण अ० ५७)

सूर्यमण्डलविष्कम्भाच्चन्द्रविष्कम्भं कदाचिदल्पो भवति कदाचित् महान् भवति, कदाचिदुच्चेन कदाचिन्नीचेन च पथा चन्द्रपरिभ्रमणात् । कटकग्रासखग्रासाभ्यां सूर्यग्रहणस्य द्वैविध्येन तथा प्रतिपत्तेः । अनयोर्द्वयोः पार्थिवेन राहुणा चन्द्रग्रहणं भवति । चान्द्रेण तु राहुणा सूर्यग्रहणं सिध्यति । तदेतदनया श्रुत्या निरूप्यते—

हेसूर्य ! आसुरोऽसुरनिकायस्वरूपोऽयं स्वर्भानुर्यदा त्वा तमसा चन्द्राधस्तनकृष्णच्छायया अविध्यदावृणोत्, तदा भुवनानि सर्वे लोका अदीधयुर्दवयामासुरज्ञानेन व्यामोहिता बभूवु । यथा गन्तव्यं क्षेत्रमजानानः कुत्र गच्छामीत्येव व्यामुग्धो भवति तथा कुत्र सूर्योऽगात् किमिदमभूत् कथमकाण्डऽन्धकारोऽभवदित्यादिरूपेण व्यामोहमापुः ।

द्विविधः सूर्यः—चित्यश्चितेनिधेयश्च । दृश्योऽयं ज्योतिष्मान् पिण्डश्चित्यः । तदन्तर्गर्भः प्राणात्मा तु चितेनिधेयः स इन्द्रः । "यथाग्निगर्भा पृथिवी तथा द्यौरिन्द्रेण गर्भिणी" इति श्रुतेः । तथा च प्रथमं शरीरपिण्डाभिप्रायेणोक्त्वा सम्प्रति तत्प्राणाभिप्रायेणापरमुच्यते—स्वर्भानोरिति । अधेत्ययमर्थो निपातः । अपरं च हे इन्द्र ! दिवोऽत्र सूर्यमण्डलादधोदेशे वर्तमानः स्वर्भानोर्माया ।

अन्यथा सत्यन्यथा प्रतीयमाना वा साधारणैरज्ञेयतत्त्वा वा निगूहितयाथार्थ्यभावा वा प्रयुज्यमाना प्रक्रिया माया । तया च ता लोकविस्मयकारिण्यो राहोर्माया यदा सूर्यमवाहन् अवरुध्यालापयन् तथा अपवर्तनीयेन तमसा प्रच्छन्नं सूर्यमयमत्रिर्महर्षिस्तुरीयेण ब्रह्मणा प्राणो ब्रह्मणि चतुर्थमन्त्रोपलेन विज्ञानप्रकारेणान्विन्दत्, *सूर्यं विलुप्तं पुनरलभत । तदेव दिवि अधारयत् स्थितमकरोदि*त्यर्थः ।

उक्तं पूर्वम्, यत्र यत्र वस्तुन्यारम्भकविषयाऽयमत्रिप्राण उपादीयते तद्वस्तु कठिनमभवत् पारदर्शकत्वाद्विहीयते । तत प्रत्याहृतः सूर्यरश्मिः परावर्तिता भवतीति । तदनुसारेणेह तृतीयो मन्त्रः सूर्यमुखेनार्थमाह—मामामिममिति । हे अत्रे ! चन्द्रमण्डलारम्भकात्रिप्राण ! इमं मां सूर्यं तत्र सन्तं चन्द्रमण्डलं प्रत्युपस्थितरश्मित्वाच्चन्द्रगतात्रिप्राणानुगतत्वाच्चात्रिप्राणानुगृहीतं द्रुग्धो द्राग्धाऽसुरः

स्वर्भानुरिरस्याऽन्नेच्छया ग्रसनाभिप्रायेण भियसा भयङ्करतमसा मा निगारीत् मा निगिलतु सर्वथा विलुप्तं मा करोतु। प्रतिवस्तु नियता शक्तिः सत्यमिति। चन्द्रगतवस्तुशक्तिसाधितस्त्वमत्रिप्राणो मित्रोऽसि वरुणो राजा चासि। उभय-सांमुख्येन परस्पराभिगमनं मित्रत्वम्, विरुद्धदिग्वृत्त्या प्रत्यावरणं वरुणत्वम्। सूर्यमण्डलाधस्तनस्य चन्द्रमण्डलस्योपरिभागे मित्रोऽस्तीति सूर्यरश्मयः प्रतिरुद्धा-श्चन्द्रेण वियुज्यन्त। "अहर्वै मित्रो रात्रिर्वरुणः" इति श्रुतेः।

तत्रायं मित्रो वरुणो वा चन्द्रगतस्त्वमत्रिप्राण एवासि। यदि चन्द्रेऽत्रि-प्राणो नाभविष्यत् तदा तस्य पारदर्शकत्वप्राप्त्या सूर्यरश्मिप्रतिबन्धायोगान्मित्रो वरुणो वा नाभविष्यताम्। अतोऽत्रिभूतौ तौ मित्रावरुणौ युवां मां सूर्यमिह स्वर्भानुग्रासकाले अवतम्=अवगमयतम्। अवतिरवगमार्थः। चन्द्रस्याधस्ताच्च-न्द्रेणावरोधादयं सूर्यो न दृश्यते। चन्द्रस्योपरिष्टात्त्वयं सूर्योऽनवरुद्धः पूर्ववद् दृश्यत एवेत्यतो नायं सूर्यो विलुप्तोऽस्तीत्यर्थो मित्रवरुणाभिज्ञानादवगम्यते।

अत्रिर्महर्षिः पूर्वं ग्रहणकाले सूर्यं द्रष्टुं कञ्चिदपूर्वं यन्त्रविशेषं निर्म्मापि-यामास। ग्रावकीरिनभांसि तस्यैव यन्त्रस्याङ्गानि सम्भाव्यन्ते। उपरागकाले सूर्यदर्शने सति सोऽत्रिर्ब्रह्मा ग्राव्णो युञ्जन्ऽकीरिणा देवानाराधयन् नभसा प्रसाधयन्, सूर्यस्य दिवि सूर्योपलक्षिताकाशभागे स्व चक्षुराधात्। तेनायं स्वर्भानो-र्मायाः परान्मोहयन्तीः प्रक्रिया अपावृक्षत् न्यवारयत्। अत्रिकृतमन्त्रस्येदानीमनुप-लब्धेस्ततः सूर्यदर्शनप्रकारस्तदवयवभूतानि ग्रावकीरिनभास्यपि यथावन्न ज्ञायन्ते इति भावम्।

पुरा युगे सूर्योपरागतत्त्वविविदिषया कृतप्रयत्नेषु तदानीन्तनकृतविद्येषु यं यं सूर्यमासुरः स्वर्भानुस्तमसाऽविध्यत्, यदा यदा सूर्योपरागोऽभवत् तदा तदा तमत्रय एवान्वविन्दन् नान्ये विद्वांसो यथावज्ज्ञातुं तमशक्नुवन् इति।

एतच्छ्रुतिमूलकमेवार्थं पौराणिकाः आख्यानकल्पेणोपन्यबध्नन्। तथाहि भारतेऽनुशासनपर्वणि दानधर्मे भीष्ममुखेनाहुः—

"घोरे तमस्ययुध्यन्त, सहिता देवदानवाः।
अविध्यत शरैस्तत्र स्वर्भानुः सोमभास्करौ॥

अथ ते तमसा ग्रस्ता निहन्यन्तेस्म दानवैः।
अपश्यन्त तपस्यन्तमत्रिं विप्रं तपोधनम्॥

अथैमब्रुवन् देवाः, शान्तक्रोधं जितेन्द्रियम्।
नाधिगच्छाम शान्तिञ्च, भयात् त्रायस्व नः प्रभो!॥"

अग्निरुवाच

"कथ वक्ष्यामि भवतस्तेऽत्र वँश्चन्द्रमा भव ।
तिमिरघ्नश्च सविता, दस्युहन्ता च नो भव ॥

एवमुक्तस्तदात्रिर्वै नमोनुदभवच्छशी ।
अभवत सौम्यभावाच्च सोमवत्प्रियदर्शन ॥

दृष्ट्वा नातिप्रभ सोम, तथा सूर्यञ्च पार्थिव ।
प्रकाशमकरोदत्रिस्तपसा स्वेन सयुगे ॥

जगद्वितिमिर चापि प्रकाशमकरोत्तदा ।
व्यजयच्छत्रुसघांश्च देवाना स्वेन तेजसा ॥

अत्रिणा दह्यमानास्तान्, दृष्ट्वा देव महासुरान् ।
पराक्रमैस्तेऽपि तदा व्यत्यघ्नन्नत्रिरक्षिता ॥

उद्भासितश्च सविता देवास्त्राता हतासुरा. ।
अत्रिणा त्वथ सामर्थ्यं, कृतमुत्तमतेजसा" ॥ इति ॥

अत्र स्मार्ते कथानके सर्वोऽर्थ श्रुत्यर्थानुसारेणैव नेय । तद्विरुद्धोऽर्थस्तु काल्पनिकत्वादुपक्षेप्य इति तत्त्वम् ।

सूर्येऽकस्मात् स्वर्भासेन ग्रस्ते सवतोऽन्धकाराच्छन्ने भयभीतेपु देवेपु सत्सु चन्द्रकृतमिद सूर्यस्यावरण न त्वन्यद्भयकारणमस्तीत्यत्रिणा स्वविद्यया देवाना भयनिरास कृत, तत परितुष्टैर्देवैस्तस्मै अत्रये वरदान दत्तमित्याथर्वणश्रुतौ श्रूयते—

"आदित्य हि तमा जग्राह । तदत्रिरपनुनोद ।
तदत्रिरन्वपश्यत् । तदप्येतद् ऋचाक्तम् ।

स्तुताद्यमत्रिर्दिवमुन्निनाय । दिविन्वऽत्रिरधारयत्
सूर्या मासाय कर्तवे ॥ इति ॥

त हावाच-वर वृणीष्वेति । स हावाच-दक्षिणाया मे प्रजा स्यादिति ।
तस्मादात्रेयाय प्रथमदक्षिणा यज्ञ दीयन्ते[1]" ।

एतेन पुरा देवयुगेऽपि पारितोपिकप्रदानप्रचारो गम्यते । शाश्वतिकयश - प्रतिष्ठालाभार्थं स्मारकविधया धर्मविशेषव्यवस्थापनमेव च पारितोपिक-

१. गो० ब्रा० पू० भी २:१७.

विशिष्यासीदिति च गम्यते । अत्रिगोत्रेभ्यो यज्ञे प्रथमं दक्षिणा दीयते इति हि तत एवारभ्य यज्ञे देवैः कृता व्यवस्था प्रथमात्रिकीर्तिस्मारिकाद्यापि प्रवर्तत इति च गम्यते—इति बोध्यम् ।

अथैतदस्मिन् समये भद्राश्वो नाम कश्चिद्राजासीत् । तस्याप्सरसि घृताच्यां प्रभाकरो नामैकः पुत्रो दश चान्याः कन्या जज्ञिरे--भद्रा, शूद्रा, मद्रा, शलभा, मलदा, वला, हला, गोचपला, तामरसा, रत्नकूटा चेति । ताः सर्वा अप्ययं भद्राश्वस्तस्मै अत्रये भार्यात्वेन प्रददौ । तासां भद्रायामत्रेः पुत्रः सोमो जज्ञे । स ब्रह्मयोनिरपि ब्रह्मणः प्रसादेन ब्राह्मणगन्धर्वादीनां राज्येऽभिषिक्ततया पश्चात् क्षत्रियः समपद्यत । अथान्यास्वप्यत्रिभार्यासु कतिपये पुत्रः बभूवुः—दत्तः दुर्वासाः, अकल्मषः, सत्यनेत्रः, दीप्तिमान्, आपोमूर्तिः, तरुणः, निष्प्रकम्पः, युक्तः—इत्यादयः ।

सर्वे चैतेऽत्रिवंशधरा ब्राह्मणाः स्वस्त्यात्रेया उच्यन्ते । तेषु दत्तो दुर्वासाश्चेति द्वौ ब्राह्मणौ विख्यातौ बभूवतुः । तत्र दत्तगोत्रान्वये श्यावाश्वा मुद्गला वाग्भूतका गविष्ठिरा इति चतुर्विधा अत्रयः पुरा युगे देवलोके मनुष्यलोके च सुप्रसिद्धा आसन् । तदिदमुक्तं—ब्रह्माण्डोपोद्घातेऽष्टमाध्याये—

"अत्रेर्वंशं प्रवक्ष्यामि तृतीयस्य प्रजापतेः ।
तस्य पत्न्यस्तु सुन्दर्य्यो दशैवासन् पतिव्रताः ।।

भद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ।
भद्रा शूद्रा च मद्रा च शलभा मलदा तथा ।।

वला हला च सप्तैता या च गोपचला स्मृता ।
तथा तामरसा चैव रत्नकूटा च तादृशी ।।

तत्र यो वंशकृच्चासौ तस्य नाम प्रभाकरः ।
मद्रायां जनयामास सोमं पुत्रं यशस्विनम् ।।

स तासु जनयामास पुत्रानात्मसमानकान् ।
स्वस्त्यात्रेया इति ख्याता ऋषयो वेदपारगाः ।।

तेषां द्वौ ख्यातयशसौ ब्रह्मिष्ठौ सुमहोजसौ ।
दत्तो ह्यनुमतो ज्येष्ठो दुर्वासास्तस्य चानुजः ।।

यवीयसी सुता तेषामवला ब्रह्मवादिनी ।
दत्तात्रेयं तनुं विष्णोः पुराणज्ञाः प्रचक्षते ।।

तस्य गोत्रान्वया जाताश्चत्वारः प्रथिता भुवि।
श्यावाश्वा मुद्गलाश्चैव वाग्भूतकयविष्ठिरा ॥ इति ॥

अत्रावन्नाशब्दो लेखप्रमादादप पाठ । ऋक्संहितायामष्टममण्डले एक नवतिसूक्तस्य द्रष्ट्र्या ऋषिकाया अपालानाम्ना प्रसिद्धे । अपालाभिप्रायेणै-वायमवलाशब्द. पठ्यते ब्रह्मवादिनीत्वाभिमानात् । अपालाविश्ववाराभ्यामात्र-यीभ्यामन्यस्या आत्रेय्या ब्रह्मवादित्वास्मरणात् ।

(११) ब्राह्मे (अ० ७४ तु गौतमीमाहात्म्ये परुष्णीकथानकमुक्तम्—
"अत्रिराराधयामास, ब्रह्मविष्णुमहेश्वरान् ।

तेषु तुष्टेषु स प्राह, पुत्रा यूय भविष्यथ ॥
तथा चैका रूपवती कन्या मम भवेत् सुरा ।

तत पुत्रत्वमापुस्ते, ब्रह्मविष्णुमहेश्वरा. ॥
कन्या च जनयामास, शुभात्रेयीति नामत. ।

दत्त. सोमोऽथ दुर्वासा. पुत्रास्तस्य महात्मन. ॥
अग्नेरङ्गिरसो जातो, ह्यङ्गारैरङ्गिरा ऋषि ।

तस्माद् अङ्गिरसे प्रादादात्रेयीमतिरोचिषम् ॥
अग्ने. प्रभावात् परुषमात्रेयी सर्वदाऽभवत् ।

आत्रेय्यपि च शुश्रूषा कुर्वती सर्वदाऽभवत् ॥
सा कदाचिद् भर्तृवाक्यादुद्विग्ना परुषाक्षरात् ।

कृताञ्जलिपुटा दीना प्राब्रवीच्छ्वशुर गुरुम् ॥
पतिर्मा परुष वक्ति वृथैवोद्वीक्षते रुषा ।

प्रसाधीमं सुरज्येष्ठ भर्तार मम दैवतम् ॥
अग्निरुवाच–

"अङ्गारेभ्यः समुद्भूतो भर्ता ते ह्यङ्गिरा ऋषिः ।
यथा शान्तो भवेद् भद्रे तथा नीर्निविधीयताम् ॥

श्वशुरस्य तु तद्वाक्य श्रुत्वाऽऽत्रेयी तदैव तत् ।
आग्नेय रूपमापन्नमम्भसाऽऽप्लावयत् पतिम् ॥

उभौ तौ दम्पती ब्रह्मन् सङ्गतौ गाङ्गवारिणा ।
शान्तरूपधरौ चोभौ दम्पती सम्बभूवतुः ।।

भर्तारं प्लावयन्ती सा दधाराम्बुमयं वपुः ।
परुष्णी चेति विख्याता गङ्गया सङ्गता नदी ।।

तत्र चाङ्गिरसश्चक्रुर्यज्ञांश्च बहुदक्षिणान् ।
विशेषतस्तु गङ्गायाः परुष्ण्या सह सङ्गमे ।।इति।।

परुष्णीतीयमिरावत्याः पञ्चनदान्तर्गताया वैदिकी संज्ञा । "इरावती परुष्णीत्याहुः" (९।२६) इति यास्कनिरुक्तात् । इरावतीनिर्गमप्रदेशोऽत्रिस्थानमासीदिति वायुपुराणे उक्तम् । तत्रात्रिप्राणस्य भूयसोपसंनिधानात् स्थानुकूल्यं दृष्ट्वा नरविधोऽप्यत्रिस्तत्र चिरं तपस्तेपे । अत्रिप्राणसाधनमेवास्य तपश्चरणम् । अत्रिप्रधानस्थानात् प्रवर्तमानत्वादस्या परुष्ण्या अत्रिकन्यात्वमारोप्यते । साऽत्रिस्थानादागत्याङ्गिरः स्थानमागतेति विवाहकल्पना क्रियते ।

अङ्गिरःस्थानञ्च यज्ञप्रधानस्थानत्वादग्निप्रायस्थानमेव तच्च दृषद्वत्यापयासरस्वतीशतद्रूविपाशैरावतीभिर्नदीभिरुपलक्षितप्रदेशरूपम—"नि त्वा दधे वर आ पृथिव्या इडायास्पदे सुदिनत्वे अह्नाम् दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि" (ऋ.३।२३।४.) इति मन्त्रे इडायास्पदे इत्यनेन यज्ञाग्निदीपनप्रदेशस्यैरावतीपर्यन्तत्वावगमात् । अथवा ब्रह्मावर्तीयब्रह्मपर्षदधिष्ठाताऽयमङ्गिरा ब्रह्मा पश्चिमस्थाया इरावत्या अर्वागेव यज्ञोपयुक्तभूमिं व्यवस्थापयन् यता नेरावतीप्रदेशं यज्ञार्थ रोचयते तत एवाहुरात्रेयीं परुषं भासते—इति ।

अङ्गिराश्चात्र यज्ञान्निवर्तत इत्यत आहुरात्रेयी हीयमग्निं गतमङ्गिरस शमयामासेति । गङ्गेति काचिदिरावत्यां सङ्गता शाखानदी स्यात् । तदिदमाधिदैविकं वृत्तमाधिभौतिकोपाख्यानविषयोपनिबद्धम् । वस्तुतस्तु नेयमात्रेयी परुष्णी नामिका काचिन्मनुष्यविधात्रिकन्याऽऽसीत् । आध्यात्मिकाधिदैविकयोरप्यर्थयोराधिभौतिकत्वेनोपरज्योपाख्यानकरणस्य पौराणिकत्वभावसिद्धत्वात् ।

"यत्तु अत्रेः पुत्रोऽभवद्वह्निः सोदर्य्यस्तस्य नैध्रुवः ।
कृशाश्वस्य तु विप्रर्षघृताच्यामिति नः श्रुतम् ।।

स तस्यां जनयामास स्वस्त्यात्रेयान्महौजसः ।
वेदवेदाङ्गनिरतान्तपसा हतकिल्विषान् ।।

इति कौर्म्मे ऊनविंशाध्याये उक्तम् । तत्रायं लेखकदोषादस्ति कश्चित् त्रुटितः पाठ इति संशोधनीयत्वादुपेक्ष्यते ।

सुदुश्चरं नाम तपो येन तप्तं महत् पुरा ।
त्रीणि वर्षसहस्राणि दिव्यानीति हि नः श्रुतम् ॥

तस्योर्ध्वरेतसस्तत्र स्थितस्यानिमिषस्य ह ।
सोमत्वं तनुरापेदे महाबुद्धिः स वै द्विजः ॥

ऊर्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः ।
नेत्राभ्यामस्रवसोमो दशधा द्योतयन् दिशः ॥

तं गर्भं विधिना हृष्टा दश देव्यो दधुस्तदा ।
समेत्य धारयामासुर्न च ताः समशक्नुवन् ॥

स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रसाधितः ।
पपात भासयँल्लोकान् शीतांशुः सर्वभावनः ॥

यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः ।
ततः सहाभिः शीतांशुर्निपपात वसुन्धराम् ॥

पतन्तं सोममलोक्य ब्रह्मा लोकपितामहः ।
रथमारोपयामास लोकाना हितकाम्यया ॥

स हि वेदमयो विप्रा धर्मात्मा सत्यसङ्गरः ।
युक्तं वाजिसहस्रेण रथेऽध्यास्तेति नः श्रुतम् ॥

स तेन रथमुख्येन सागरान्तां वसुन्धराम् ।
त्रिःसप्त कृत्वोऽतियशाश्चकाराभिप्रदक्षिणाम्[1] ॥

तस्य यद्विवर्द्धितं तेजः पृथिवीमन्वपद्यत ।
ओषध्यस्ताः समुद्भूतास्तेजसा ज्वलयंत्युत ॥

ताभिः पुष्णात्ययं लोकान् प्रजाश्चापि चतुर्विधाः ।
पोष्टा हि भगवान् सोमो जगतो हि द्विजोत्तमाः ॥

ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः ।
वीजोपधीनां विप्राणामपां च द्विजसत्तमाः ॥ इति ।

एवमेव मात्स्ये पाद्मे चोक्तम् । तथा चात्रेः स्वधर्मपत्न्यां समुद्रायां वाऽनसूयायां वा सोमोऽयमौरसः पुत्रोभूदिति विप्रतिपन्नमिति चेदत्र ब्रूमः—

नरविशेषस्यात्रेर्नेत्रप्रस्रवणोदकान्नरविधस्य सोमस्योत्पत्तिरभदित्येवं तावन्न प्रतिपत्तव्यम् श्रुतिस्मृतितात्पर्यविरुद्धतया तस्यार्थस्य नितान्तभ्रान्तत्वात् ।

१. हरि० पु० ३ : ६५

अपि तु नरविधस्याग्नेः स्वधर्मपत्न्यामेव नरविध सोमो जज्ञे । अनरविधस्य त्वग्नेर-प्जलादनरविध सोमो जज्ञे इत्यर्थपृथक्त्वात् सोमोत्पत्तिद्वैविध्य द्रष्टव्यम् । तथाहि—

वैदिकीनामितिहासश्रुतीना त्रिपथगात्व ब्रह्मप्रसङ्गे पूर्वमाख्यातम् । ततः भाषान्तरीकृता. पुराणनामान सृष्टीतिहासा प्रायेणाधिदैविका एव सन्तोऽध्यारोपेणाध्यात्ममधिभूत चोपनीयन्त । तत्रैते चरित्रनायका ऋषिपितृदेवा-सुरगन्धर्वादयोऽर्था अध्यात्म शरीरारम्भका इष्यन्ते । अधिदैवत ते ब्रह्माण्डव्यापिना निरूढा यौगिका वा प्राणाः स्यु । अधिभूत तु ते सर्वेऽपि प्राणिनो नरा अपेक्ष्यन्ते ।

तत्रैतेषामाध्यात्मिकाधिदैविकाधिभौतिकाना लक्षणा यत्र मन्त्रैवार्थेषु प्रक्रियासाम्य लक्ष्यते त एवार्था प्रायेणेतिहासमर्यादयापनिबध्यन्ते । यत्र तु पूर्वापरसाम्यभूयस्त्वेऽपि क्वचित् क्वचिदशे वैषम्यमापतति तत्र सर्वार्थसामञ्जस्ये-नोपपादनाशक्यत्वादितिहासलेखकस्येच्छानुरोधेनैतदधिकरणत्रयत. कञ्चिदेकमेव पक्ष गृहीत्वा सन्दर्भयोजना क्रियते इति पौराणिक 'समयोऽभ्युपगम्यते ।

तदनुसारेण प्रकृतेऽप्यत्रे सोमोत्पत्तावेकत्र ब्रह्माण्डोपोद्घातेऽधिभूतपक्षमेव प्रधानीकृत्य भद्राया पत्न्यामग्नेः पुत्र । सोमो व्याख्यात । सिन्धुनदात् पश्चिमे देशे निवसता गन्धर्वाणा राज्ञ सोमस्य तथैवाग्नेरुत्पन्नत्वात् अन्यत्र पुनराधिदैवत-पक्षमेव प्रधानीकृत्य तप्यमानस्याग्नेर्नेत्रप्रस्रवणरसात् सोमोत्पत्तिराख्यायते । आधिदैविकस्येमा पृथ्वी परितश्चरतश्चन्द्रस्य तथैवाग्नेरुत्पन्नत्वात् ।

इत्थचाधिभौतिकान्नरजातयादग्ने स्वधर्मपत्न्या भद्राख्यायामनसूयाया-मुत्पन्नो गन्धर्वजातीयो नरविधश्चन्द्रो भिन्न । आधिदैविकात्तु प्राणजातीयादग्ने-र्नेत्रप्रस्र तस्मादुत्पन्नो दिवि प्रकाशमान पृथिवी परित. क्रममाणोऽयं चन्द्रो भिन्न. । तयोरुत्पत्तिप्रकारभेदेऽप्यत्रिजातत्व साधर्म्यम् ।

या रुक् पारिजातस्य, शशिन. सज्जनस्य च ।
न सा वै रात्रिजातस्य तमसो दुर्जनस्यच ।।"

इत्यादौ दिविष्ठचन्द्राभिप्रायेण यथात्रिजातत्वमुच्यते तथाऽनाधिदैविकयो-र्दत्तदुर्वाससोरात्रेययो. सजातभ्रातृभावेनोक्तस्य नरविशेषस्य चन्द्रस्याप्यत्रिजा-तत्वोपपत्ते. । तत्र नरविशेषस्य चन्द्रस्यात्रेरनसूयायामुद्भवाख्यान निर्विवादम् । दिविष्ठस्य तु चन्द्रमण्डलस्योत्पत्ति कथमभूदिति जिज्ञासाया प्रस्तुतेनानेन चन्द्रो-त्पत्तिप्रकरणेनाकाशचारिसोमोत्पत्तिस्थितिरहस्य सुविज्ञान भवति ।

—तथा हि तत्रैतत्सोमोत्पत्तिविवक्षया ब्रह्मणोऽत्रेरुत्पत्तिस्तावदाख्यायते अस्ति खलु सर्वजगद्व्यापी सूक्ष्मोऽव्यक्तः कश्चिदव्याकृतोऽयं तत्राशनायावशात्

क्षोभः समभवत् । अनात्मन्विनी तावदादावशनायाऽसीत् । तन्मनोऽकुरुत । आत्मा मे स्यादिति । ततः स्वयमत्रार्कः कश्चिदशनायावानभवत् । अप्सु सर्वजगद्बीजं हिरण्यगर्भोब्रह्मा वायुमयः प्रादुरभूत् ।

यावदशनायाऽऽसीत् तावदग्निस्तावदापः । तदिदमेकं हिरण्मयमण्डमुच्यते । हिरण्यमित्यग्निरेतसां संज्ञा । तद्गर्भे यो नभ्यआत्मा वायुः स हिरण्यगर्भो ब्रह्मा स एवैतस्मिन् ब्रह्माण्डे सृष्टिकर्ता । सोऽग्निमयश्चापोमयश्च द्विधाभूतस्ताभ्यां स्त्रीपुंस्यामिव भागाभ्यां विराजमुदपादयत् । चित्यःकश्चित्परिच्छिन्नो यज्ञमयोऽन्नमयोऽग्निर्विराट् । सेय पृथ्वी नाम । स तप्यमानोऽन्तरगर्भे चितेनिधेय नामाग्निमजनयत् । तमग्निं मनुरित्याचक्षते पौराणिकाः मनोर्मरीच्यादयो दश प्राणा अभवन् । यथाहि

"नवेह किञ्चनाग्र आसीत्-मृत्युनैवेदमावृतमासीत्-अशनायया । अशनाया हि मृत्युः । तन्मनोऽकुरुत आत्मन्वं स्यामिति । सोऽर्चन्नचरत् । तस्यार्चत आपोऽजायन्त । आपोवाअर्कः । तद्यदपां शर आसोत् तत्समहन्यत । सा पृथिव्यभवत् । तस्यामश्राम्यत् । तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्तताग्निरिति" ।

एतदनुसारेण मनुरप्याह—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः ॥

ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥

सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥

यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥

द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः ॥

तपस्तप्त्वाऽसृजद्यं तु स स्वयं पुरुषो विराट् ।
तं मां वित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः ॥

प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥

एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥

अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
पतीन् प्रजानामसृजं महर्षीनादितो दश ॥

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठञ्च भृगुं नारदमेव च ॥

एते मनूँस्तु सप्तान्यानसृजद् भूरितेजसः ।
देवान् देवनिकायांश्च महर्षींश्चामितौजसः ॥

मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः ।
तेषामृषीणामाद्यानां पुत्राः पितृगणाः स्मृताः ॥

ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः ।
देवेभ्यश्च जगत्सर्वं चरं स्थाण्वनुपूर्वशः ॥ इति ॥

एवञ्च नायं मनुर्विराजोऽतिरिच्यते । चित्यचितेर्निधेयया समानायतनत्वेनैकपुरुषत्वाभिमानात् । विराट् चायं हिरण्यगर्भांशातिरिच्यते हिरण्यगर्भप्राणस्यैव त्रिधया तदुत्पत्तेः, अत एवैषां मरीच्यादीनां मनुजन्यत्वमिव विराड्जन्यत्वं ब्रह्मजन्यत्वञ्च पुराणोक्तं न विरुध्यते । एषु च मरिच्यादिषु भृग्वङ्गिरोऽत्रीणामुत्पत्तिं शौनक आह बृहद्देवतायाम्—

"त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ।
आहरत् सहितं साध्यैर्विश्वैर्देवैः सहेतिच ।

तत्र वाग् दीक्षणीयायामाजगामाशरीरिणी ।
तां दृष्ट्वा युगपत्तत्र कस्याथ वरुणस्य च ॥

शुक्रं च स्कन्दं तद्वायुरग्नौ प्रास्यद् यदृच्छया ।
ततोऽर्चिभ्यो भृगुर्जज्ञे अङ्गारेभ्योऽङ्गिरा ऋषिः ॥

प्रजापतिसुतौ दृष्ट्वा हृष्टा वागभ्यभाषत ।
आभ्यामृषिस्तृतीयोऽपि भवत्वत्रैव मे सुतः ॥

प्रजापतिस्तथेत्याह भाषमाणां तु भारतीम् ।
ऋषिरत्रिस्ततो जज्ञे सूर्यानलसमद्युतिः ॥ इति ॥

प्रजापतिरत्र संवत्सरः सौरः। तस्य त्रैवार्षिके पृथिव्या योगे पार्थिवप्राजापतेः प्राणस्य महिमा वायुपसृत्य वाय्वादिवदशरीरिणी सती पृथिव्या वहिर्वाऽभवत्। तत्र दक्षवरुणयोरसौ वायुभूतौ संश्लिष्टावभूताम्। दक्षस्तावदयं दशदिग्भ्यः स्वयं प्रस्रवतां प्रचेतोनाम्नां रसानां सयागजन्मा दिक्सोममयः प्राणः। सोऽनवरतमिह पृथिव्यामुपसर्पति।

रत्र सूर्यमण्डलप्रकाशतो वहिश्चतुर्दिक्षु परिव्याप्तादम्भःसमुद्रादापोमयः प्राणः पृथिव्यामुपसर्पति स वरुणः। तयोश्च पृथिव्या रसे वाङ्मये प्राणे संस्रवो भवति। पञ्चभूतानामादिभूतमाकाशनामकं तत्वं सर्वजगद्व्यापीह पार्थिवप्राणसंल्लग्नं तत एवोद्भूत विवक्ष्यते। तेषां संघर्षादग्निर्वसुरुदभवत्। तस्मिन्नग्निस्वरूपे भृग्वङ्गिरोऽत्रयः प्राणाः सम्भवन्ति तत्र अर्चिषि भृगुः सबभूवेति। भृगुर्वारुणिरिति। अङ्गारेष्वङ्गिराः सम्वभूवेति। "त्वमग्ने अङ्गिराः प्रथम ऋषिः" इति श्रुतिभ्यो वरुणांशतो भृगुरग्न्यंशतस्त्वङ्गिरा अभ्युपगम्यते। अग्निस्त्वत्र पृथिव्या आत्मा पृथ्वीतो वहिर्भवन् सांवत्सरः।

अथ यावानिह वाचिको भाग उदरतत् सोऽत्रिर्नाम प्राणो भवति। यथार्ऽचिषि भर्जनप्रधानः पवमानः पच्यमानोवा वारुणो भागो भृगुर्नाम जायते। यथा वा पार्थिवे काष्ठादिघनद्रव्ये गर्भगतो रक्तोऽर्थो दहनकाले दृश्यते स वस्तुतो धनकृष्णवर्णः काष्ठाद्याङ्गिरसत्वादङ्गिरःशब्देनोच्यते। तथाऽयं दह्यमानः काष्ठादिर्वहिः स्थितं वायुरसाद्यथमात्मानं येनाकृष्य स्वदिति स भोक्ता प्राणोऽदनप्रधान्यादत्रिर्नामोच्यते।

अत्रेदं कश्चित् प्रत्यवतिष्ठते। असमञ्जसमिदं शौनकोक्तमत्रिजन्माख्यानम्। तथाहि कस्मात् वरुणस्य चेति ब्रुवन् शौनकः पूर्वतः कस्य वरुण न योगादत्र्युत्पत्तिमभिप्रैति। स च कस्तावद्दक्षो नाम प्रजापतिरुच्यते। तस्य चात्रिवंशप्रसूतादर्वाक्कालिकात् प्राचीनवर्हिषः सवर्णायां सामुद्रयामुत्पन्नेभ्यो दशभ्यः प्रचेतोभ्यो मारिषायां वाक्ष्यां सामकन्यायामर्द्धेन सोमांशेनार्द्धेन प्रचेतोंऽशेन च पश्चादुत्पत्तिराख्यायते विष्णुपुराणे प्रथमांशे पञ्चदशाध्याये ब्राह्मप्रथमाध्याये च। महाभारतशान्तिपर्वणि मोक्षधर्मे स्वस्तिकाध्याये —

"अत्रिवंशे समुत्पन्नो ब्रह्मयोनिः सनातनः।
प्राचीनवर्हिर्भगवाँस्तस्मात् प्रचेतसो दश॥

दशानां तनयस्त्वेको दक्षो नाम प्रजापतिः।
तस्य द्वे नामनी लोके दक्षः क इति चोच्यते॥ इति॥

वहिर्वानाद्धिपणायां प्राचीनवर्हिरभूत्। अन्तर्द्धानात् शिखण्डिन्यां वहिर्वानोऽभूत्। पृथोरन्तर्धानः वेनात् पृथुः। अङ्गाद्वेनः, अङ्गस्त्वयमत्रिवंशेऽभव-

दित्येवमय प्राचीनबर्हिरग्निवंशज । तथा चाग्निवंशे बहूत्तरकालप्रजातेन केनातिप्राचीनस्याग्नेरुत्पत्तिकथन नावकल्पते इति । अत्रब्रूम. । द्वौ दक्षौ । स्वायम्भुवमन्वन्तरीयो ब्रह्मपुत्र आद्यः । स चाग्निममजन्मना मरीचेरपि पूर्वज ।

अथान्यान् मानसान् पुत्रान् सदृशानात्मनाऽसृजत् ।
भृगु पुलस्त्य पुलह क्रतुमङ्गिरस तथा ।।

मरीचि दक्षमत्रिं च वसिष्ठ चैव मानसान् ।
नव ब्रह्माण इत्येते पुराणे निश्चय गता. ।।

इति विष्णुपुराणोक्ते ,,

अगुष्ठात ससृजे ब्रह्मा मरीचेरपि पूर्वजम् ।
सोऽभवन् भरतश्रेष्ठ दक्षो नाम प्रजापति ।।

इति भारते शान्तिपर्वणि मोक्षधर्मे सर्वभूतोत्पत्यध्यायोक्तेश्च । अन्यस्तु चाक्षुपमन्वन्तरीय सोमांशहूतार्देभ्यो दश प्रचेतोभ्यो वार्क्ष्यां मारिषायामुत्पन्न ।

"तेजोभिरुदिता सर्वे महर्षिसमतेजस ।

दश प्रचेतस पुत्रा. सन्त. पुण्यजना स्मृता ।।

तेभ्य प्राचेतसो जज्ञे दक्षो दक्षादिना. प्रजा ।।

इति भारतादिपर्वणि संभवपर्वोक्ते: । क इत्युभया समान नामान्तरम् । तत्र पूर्वस्माद्दक्षाद्वरुण युत्तादग्नेर्जन्म स्यात् । अग्नेश्च वंशे पश्चात् पुनरन्यो दक्ष. प्राचेतसः प्रजातः स्यादिति ना समञ्जस भवति ।

इह हि मतत्रय भवति । एके तावदाचक्षते—

क: प्रजापतिरुद्दिष्ट इत्यभियुक्तोक्ते: प्रजापतिवचनोऽयं कशब्द प्रजापतिमात्रसाधारणो नैकान्ततो दक्षमेवाचष्टे बहवस्तु प्रजापतयो भवन्ति दक्षादयश्च तेषा पतिर्ब्रह्मा चेति । अत्र ब्रह्मैवेह प्रजापति स्यात् भारतानुशासनपर्वणः पञ्चाशीतेऽध्याये सुवर्णदानधर्मे साधारणेन ब्रह्मशब्देनैव तदुल्लेखात् तथा हि तदुक्ति. संक्षिप्य. दर्श्यते-वशिष्ठ उवाच—

"अपि चेद पुराधीन श्रुत मे ब्रह्मदर्शनम् ।
पितामहस्य यद्वृत्त ब्रह्मण. परमात्मनः ।।

महादेवस्य रुद्रस्य वारुणी बिभ्रतस्तनुम् ।
यज्ञः प्रववृते तत्राजग्मुरग्न्यादि देवताः ।।

तत्राग्नेर्विविशुस्तस्य शरीरं सर्वदेवताः।
एतस्मात् कारणादाहुरग्निं सर्वास्तु देवताः॥

संजुहावात्मनात्मानं स्वयमेव तदा प्रभुः।
यज्ञं च शोभयामास बहुरूपं शिवस्तदा॥

देवीदीक्षापि तत्रासीद् यज्ञे रुद्रस्य वारुणे।
स्वयंभुवस्तु तां दृष्ट्वा रेतः समपतद् भुवि॥

तस्य शुक्रस्य विस्पन्दात् पांशून् संगृह्य भूमितः।
प्रास्यत् पूषा कराभ्यां वं तस्मिन्नेव हुताशने॥

ततस्तस्मिन् संप्रवृत्ते सत्रे ज्वलितपावके।
ब्रह्मणा जुह्वतस्तत्र प्रादुर्भावो बभूव ह॥

शुक्रे हुतेऽग्नौ तस्मितु प्रादुरासंस्त्रयस्तदा।
पुरुषा वपुषा युक्ताः स्वैः स्वैः प्रसवजैर्गुणैः॥

भृगित्येव भृगुः पूर्वमङ्गारेभ्योऽङ्गिराभवत्।
अत्रवात्रेति च तमो जातमत्रि वदन्त्यपि॥

सहज्वालाभिरुत्पन्नो भृगुस्तस्माद् भृगुः स्मृतः।
अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत्॥

अङ्गारेभ्योऽङ्गिराजातो वालरि ल्या कुशोच्चयात्।
मरिचिभ्यो मरीचिस्तु मारीचः कश्यपोऽभवत्॥

ततोऽब्रवीन्महादेवो वरुणः पवनात्मकः।
मम सत्रमिदं तस्मात् त्रीण्यपत्यानि सन्तिमे॥

अग्निरूचे ममांगेभ्यस्तान्यभूवन्ममाश्रयात्।
तमैव तान्यपत्यानि वरुणो ह्यवशात्मकः॥

अथाब्रवील्लोकगुरुर्ब्रह्मा लोकपितामहः।
ममैव तान्यपत्यानि मम शुक्रं हुतं हि तत्॥

अहं कर्त्ताहि सत्रस्य होता शुक्रस्य चाप्यहम्।
यस्य बीजं फलं तस्य मच्छुक्रजमिदं मम॥

ततोऽब्रुवन् देवगणाः पितामहमुपेत्य ते।
तत्रैव प्रसवाः सर्वे वरुणोऽग्निः परे च ये॥

भृगु पूर्वमपत्यन्तु जग्राह वरुणः शिव. ।
ततः स वरुणाख्याता भृगुः प्रसवकर्मकृत् ।।

ईश्वरोऽङ्गिरस स्त्वग्नेरपत्यार्थमकल्पयत् ।
आग्नेयश्चाङ्गिरास्तस्मात् कविर्ब्राह्मो महायशा ।।

एते हि प्रसवा सर्वे प्रजाना पतयस्त्रय ।
सर्वं सन्तानमेतेषामिदमित्युपधारय[1]" ।।

एतच्च वासिष्ठ विज्ञानवशौनकसमानार्थं नेयम् । तदस्मादत्रिजन्मनि नास्ति दक्षस्य सम्बन्ध । वायुमयस्य हिरण्यगर्भस्य वा, विराजोऽग्नेर्वा, वैराजस्य मनोर्वा सम्बन्धस्य तत्रेष्यमाणत्वात् । तस्माददोष ।

अथवा येषा मते दक्ष एवाय को नाम । तेषामपि नास्त्यय दोष ।

ननु प्राचेतस्य दक्षस्याप्यत्रिवदेवात्रिसमकाल हिरण्यगर्भपौत्राद्वैराजात् स्वयम्भूमनोरुत्पत्तिर्मनुस्मृतावुच्यते ।

"मरिचिमत्र्यङ्गिरसौ पुलस्त्य पुलहं क्रतुम् ।
प्राचेतस वसिष्ठ च भृगु नारदमेव च" ।। इति ।।

तस्मान्नत्रिवशे पश्चादुत्पन्न प्राचेतसो दक्ष इति चेन्न । प्रचेतोजनितस्यापि दक्षस्य मनुजन्यत्वाविशेषाभिप्रायेण तथोक्ते । ब्रह्मपुत्रदक्षस्य प्राचेतसदक्षस्य च स्वरूपादिसाधर्म्यानुबोधनाय वा तथोक्ते ।

अथवा पौराणिकैरेवात्र समाहितम् । यथा ब्राह्मे प्रथमाध्याये—

"मारिषानाम कन्यैषा वृक्षाणामिति निर्मिता ।
भार्य्या वोऽस्तु महाभागा. सोमवशविवर्धिनी ।।

युष्माक तेजसोऽर्धेन मम चार्धेन तेजसा ।
अस्यामुत्पत्स्यते विद्वान् दक्षो नाम प्रजापतिः ।।

इत्थ सोमस्य वचनाज्जगृहुस्ते प्रचेतसः ।
सहृत्य कोप वृक्षेभ्य. पत्नीं धर्मेण मारिषाम् ।।

दशभ्यस्तुप्रचेतोभ्यो मारिषायां प्रजापति. ।
दक्षो जज्ञे महातेजाः सोमस्याशेन भो द्विजा. ।।

इत्थ दक्षस्य प्राचेतसत्वे निरूपिते मुनय पृच्छन्ति—

सभवस्तु श्रुतोऽस्माभिर्दक्षस्य च महात्मनः ।
अङ्गुष्ठाद् ब्राह्मणो जज्ञे दक्षः किल शुभव्रत. ।।

---

[1] महा० भा० अनु० पर्व ८५.

> कथं प्राचेतसत्वं स पुनर्लेभे महातपाः ।
> दौहित्रश्चैष सोमस्य कथं श्वशुरतां गतः ॥

इत्थं प्रश्ने समाधत्ते—

> उत्पत्तिश्च निरोधश्च नित्यं भूतेषु भो द्विजाः ।
> ऋषयोऽत्र न मुह्यन्ति विद्यावन्तश्च ये जनाः ॥
>
> युगे युगे भवन्त्येते पुनर्दक्षादयो नृपाः ।
> पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति ॥
>
> ज्येष्ठ्यं कानिष्ठ्यमप्येषां पूर्वं नासीद्द्विजोत्तमाः ।
> तप एव गरीयोऽभूत् प्रभावश्चैव कारणम् ॥इति ।

तथा चैतेषां दक्षादीनां युगभेदेन नानात्वविवक्षणादस्य दक्षस्य सोमदौहित्रत्वं श्वशुरत्वं वा सर्वमेवोपपद्यते–इत्यविरोधः ॥

वयं तु ब्रूमः । पुराणाख्यानेष्वाख्यातानां चरित्रनायकानां त्रिविधः सृष्टिकल्पो विवक्ष्यते तात्विकसृष्टिकल्पः, आध्यात्मिकसृष्टिकल्पः, मानुषसृष्टिकल्पश्च । तत्र तात्विकाध्यात्मिककल्पयोःपदार्थविद्यायां नैतदेवं व्यामोहन कार्य्यम् । पदार्थानां क्वचित्पुत्रपौत्रादिभ्योऽपि पितृपितामहादीनामुत्पत्तेर्दृश्यमानत्वात् "तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी" इत्येवं तैत्तिरीयश्रुतावग्नेरपां जन्मोच्यते । "कंस्विद्गर्भं प्रथमं दध्रआपः" इति प्रश्नश्रुतौ त्वग्निमपां गर्भजमाहुः । अग्नेरापोऽद्भ्यः पृथिवीत्यग्नेः पौत्रीं पृथिवीमाहुः ।

> "यदपां शर आसीत् तत्समहन्यत सा पृथिव्यभवत् ।
> तस्यामश्राम्यत् । तस्य श्रान्तस्य तप्तस्य तेजो रसो निवर्ततारिनः" ॥

इति वाजिश्रुतौ त्वद्भ्यः पृथिवी ततोऽग्निरित्यग्नेः पृथ्वीपुत्रत्वमाहुः ।

"अग्ने नक्षत्रमजरमासूर्यं रोहयो दिवि । दधज्ज्योतिर्जनेभ्यः"

इतिमन्त्रश्रुतौ सूर्य्यस्याग्नि जन्मत्वमुच्यते ।

> "अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
> त जानन्नग्न आरोहाथा नो वर्द्धया रयिम्" ॥

इति मन्त्रश्रुतौ त्वग्नेः सूर्यजन्यत्वमाख्यायते एवमन्यत्रान्यत्रेदमुभयं संभवति । यथा तन्तुभ्यः पट उद्भाव्यते तथा पटादपि तन्तव उद्भाव्यन्ते । यथाऽग्नेरयं दग्धोऽङ्गारो जायते तथा दग्धाङ्गारादप्यग्निर्जायते, एवं यथा संभव लोके द्रष्टव्यम् । श्रूयते चायमर्थो वाजिश्रुतौ—

"स एष पिता पुत्रः। यदेषोऽग्निमसृजत, तेनैषोऽग्नेः पिता। यदेतमग्नि समदधात् तेनैतस्याग्निः पिता। यदेष देवानसृजत, तेनैष देवानां पिता। यदेतं देवाः समदधु, तेनैतस्य देवा पितरः। उभयं हैतद्, भवति पिता च पुत्रश्च। प्रजापतिश्चाग्निश्च-अग्निश्च प्रजापतिश्च। प्रजापतिश्च देवाश्च, देवाश्च प्रजापतिश्च" इति। (शत० ६।१।२)

एवमेवात्र वाग्दक्षवरुणवाय्वग्नियोगात् पाञ्चजन्योऽयमग्निरुत्पद्यते। अग्निवंशजप्राचीनबर्हिषः प्रसूतेभ्यो दशप्रचेतोभ्यो योगादपरो दक्षश्चोत्पद्यत।

अथ प्राणमनो यो वायुशरीरो हिरण्यगर्भो ब्रह्म। तदुत्पन्नाद्वागादिभूनमयशरीराद् विराजो य स्वयम्भूमनुरुत्पद्यते ततोऽप्येतावन्निदक्षो सम्भवत इति ब्रह्मजन्यत्वमपि नैनयोरपलपितव्यम्। तत्र हिरण्यगर्भप्रजापतेर्वा दक्षप्रजापतेर्वाऽयमग्निरुत्पद्यताम्। उभयविधस्यापि तस्य पारदर्शकत्वप्रतिबन्धकत्वं सूर्य्यादितैजसकिरणप्रत्यावर्त्तकत्वं च समानो धर्म्मः। एवं ब्रह्माङ्गुष्ठजन्मा वा प्राचेतसो वाऽयं दक्षः स्यात्। उभयविधस्यापि तस्यादित्या षष्टिविधप्राणविशेषजनकत्वं क्रतुसहचारित्वं च समानो धर्म्मः। क्रतुदक्षयोस्तु स्वरूपं वाजिश्रुतौ श्रूयते–

क्रतू दक्षौ ह वा अस्य मित्रावरुणौ। एतन्न्वध्यात्मं। स यदेव मनसा कामयते-इदं मे स्यादिदं कुर्वीयेति-स एव क्रतुः। अथ यदस्मै तत् समृध्यते स दक्षः। मित्र एव क्रतुः वरुणो दक्षः[1]" इत्यादि

अध्यात्ममेवेदरूपम्। यत्तु दक्षस्य ब्रह्माङ्गुष्ठप्रदेशादुत्पन्नो नत्वयं प्राणविधो दक्ष इति कश्चित् प्रतीयात् स प्रति वक्तव्यः। ऐतरेयोपनिषदद्भ्यः सम्भृतः कश्चिदाद्यो महापुरुष आम्नायते। सोयं सर्वजगद्व्यापीश्वरः प्रतिपद्यते।

यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि।
दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः॥

बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्चतत्सूक्ष्मतरं विभाति।
दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैवनिहितं गुहायाम्[2]॥

यस्मिन् द्यौः पृथिवीचान्तरिक्षमोतं मनः सहप्राणैश्च सर्वैः।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैषसेतुः॥

अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौदिशः श्रोत्रे वाग्विवृताश्च वेदाः।
वायुःप्राणो हृदयं विश्वमस्य पद्भ्यां पृथवीह्येष सर्वभूतान्तरात्मा[3]॥

१ श.ब्रा ४. १. ४.
२. मुण्ड. उ. ३: १. ७
३. तत्रैव २:४.

तस्मादग्निः समिधोयस्यसूर्य्यः सोमात् पर्जन्यः ओषधयः पृथिव्याम् ।
पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषान् संप्रसूताः ।।

तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।
संवत्सरं च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्य्यः ।।

तस्माच्च देवा बहुधा संप्रसूताः साध्या मनुष्याः पशवो वयांसि ।
प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्य्यं विधिश्च ।।

सप्त प्राणाः प्रभवन्ति तस्मात् सप्तर्चिषः समिधः सप्तहोमाः ।
सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ।।

अतः समुद्रा गिरयश्च सर्वेऽस्मात् स्पन्दन्ते सिन्धवः सर्वरूपाः ।
अतश्च सर्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ।।

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।
एतद् यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ।।

"तस्मात् परं नापरमस्ति किञ्चित् तस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्[1] ।। इति ।

एष हि सर्वेषां जन्मदाता प्रानघनः । स एवाग्निमयत्वाद् विराडुच्यते विष्णुश्च स एव वायुमयत्वाद्हिरण्यगर्भ उच्चते । ब्रह्मा च स एवेन्द्रमयत्वात् सर्वज्ञ उच्यते । शिवश्च त्रयो देवा एका मूर्तिः । स वायुना सर्वं जगत् सृजति, अग्निना सर्व जगत् परिरक्षति ।

ज्ञानोत्पत्तौ हृदयग्रन्थिमोक्षणात् सर्वं जगदुपसंहरतीति पौराणिकी मर्य्यादा । उत्तरादिगेतस्य शिरः प्रान्तोदक्षिणादिक् पादप्रान्तः । पूर्वादिग् दक्षिणः करप्रान्तः । पश्चिमादिगुत्तरः करप्रान्तः, इत्येके । पूर्वा शिरः पश्चिमा पादः । दक्षिणा दक्षिणकरः । उत्तरा वामकर इत्येके । प्रधानाङ्गुली वाचिनाङ्गुष्ठशब्देन करप्रान्तरूपो दिग्विशेषोऽभिप्रेयते । तत्र दक्षिणाद् दक्षस्योत्तरात्तु दक्षपत्न्या जन्मेत्येवान्यत्रापि ब्रह्मशरीरभागादुत्पन्नेष्वर्थेषु पौराणिकी परिभाषा द्रष्टव्या ।

अत्र्युत्पत्तिप्रसङ्गेनेय दक्षोत्पत्तिरिहाख्याता संप्रति प्रकृतिमनुसरामः । अयमेवादिपुरुषस्त्रिविधोऽवधीयते मनोमयः प्राणमयो वाङ्मयश्च । इत एव पुरुषात् सर्वमिदमुत्पद्यते । तत्रोत्पत्तौ मनोमयो निमित्तकारणम् । प्राणमयोऽसमवायिकारणम् वाङ्मयस्तु समवायिकारणं भवति । वाक् चेयं द्विविधा भवति । अमृता मर्त्या च । अमृतातः सर्वे देवाः, मर्त्यातस्तु सर्वाणि भूतान्युत्पद्यन्ते ।

१. श्वेताश्वतरोपनिषद्

तत्र पञ्चभूतानामादिभूताकाशपदप्रसिद्धाया वाच्येव दक्षवरुणाद्यमृतयोगादयमग्निरुत्पद्यते इति बोध्यम् ।

अथोत्पन्नोऽयमग्निर्यत्र यत्र वस्तुन्यारम्भकविधयोपादीयते तद्वस्तु पारदर्शकत्वाद्विधीयते तथाय सूर्य्यरश्मिः प्रत्याहतो भूत्वा तद्वस्तुनो रूप जनयति तदेवरूपि द्रव्यम् चक्षुषा दृश्यते । तथा तैजसमाप्य पार्थिव च । काचादिपार्थिवेऽयमग्निप्राणोऽत्यल्पमात्र उपादीयते इत्यतस्तत्र सूर्यादितेजोरश्मि किञ्चदेव प्रत्याहन्यतेऽधिकमात्रया तु स पार गच्छति । वालाद्यरूपिद्रव्येष्वयमग्निर्नारम्भकद्रव्यमत एव तेभ्य. सूर्य्यरश्मेरप्रत्याघाताद् रूप नोत्पद्यते सूर्य्य चन्द्र पृथिव्यादीनि तु यावन्ति घनद्रव्याणि तेष्वयमग्नि प्राणोऽधिकमात्रयासनिविशते ।

तत एवाग्नेः सोमोत्पत्तिर्भवति तथा हि प्रतिसवत्सरकालमिय पृथ्वी सहस्रांशु सूर्य्यं परित. परिक्रामति । तत्र सूर्यांशुपरितप्तात् पृथ्विपिण्डात् प्रतिपलमुद्भवन्नयमग्निप्राण. पृथ्वीमनु परिप्लवत । तेनायमग्निप्राणः सवत्सरे सहस्रांशुभ्य. सयोगात् प्रत्यावृत्ति परितप्यते । परिक्रमणावृत्तित्रयेण तु त्रि सवत्सरसहस्रांशुपरितापादस्याग्निप्राणस्य शरीर सोमत्वमापद्यते । स सोमभाग परितप्यमानस्याग्नेर्नेत्रत परिस्रवते । नेत्रशब्दो रश्मिपर । यावानयमग्नेस्तनुभाग सोमरूपेण परिणमते तावानूर्ध्वरेता इतोऽग्ने. पृथग्भूय सर्वतो दिक्षु व्याप्नुवन् पृथ्वीमन्वेव पुन. सपतति ।

पृथ्वीमनुसपतन्तमेवैतं सोमराशि हिरण्यगर्भो ब्रह्मा वायुरूपेण चन्द्रकक्षाधरातले निगृह्यैकविशतिकृत्व परिक्रमेणोत्तर क्रमेणैत सोमराशि सर्वतः सचिन्वन्नेक मूयधत् सहस्रांशुमयं सोमपिण्ड सपादयतिस्म । स एवाय चन्द्र. पृथ्वी परित. परिक्रममाणो दिवि दृश्यते । यथाऽह्नि तोयराशि सूर्य्यांशुपरितप्त ऊर्ध्वरेता. सन् पृथिव्या उत्क्रम्य दिक्षु व्याप्नुवन् रात्रौ पुन. पृथिव्यामेव सपतितुमारेभे । किन्तु स पृथ्वीमिमा परितश्चन्द्रकक्षोपलक्षितव्योम्नि हिरण्यगर्भणोद्भाविते वायुचक्रमये धरातले प्रत्यवरुद्धो नाधस्तात् पृथ्वीतलेऽवतरतिस्म । तत्रैव सचीयमान स एकविंशतपरिक्रमणावच्छिन्नेन कालेन पिण्डात्मना परिणतो भूत्वा पृथ्वी परित एवाद्यापि तेन वायुना प्रणोदित परिक्रमते ।

यथाऽऽकाशविकीर्णांशुः केतुरय क्रमेण पिण्डो भूत्वा सूर्य्यो भवति । एवमेव विकीर्णा सोमाशव क्रमेण सहृत्य चन्द्रपिण्डतामगच्छन् । इति चन्द्रमण्डलोत्पत्तिरहस्य ब्रह्माण्डादिपुराणेषु पौराणिका आहु. । महाभारतानुशासनपर्वणि दानधर्मेऽग्निमहात्म्यप्रसङ्गे अग्निरेव चन्द्रोभूयान्धकारनिवारणमुच्यते[1] ।

---

१ म भा. अ. २६१.

यत्तु चन्द्रोऽयं कदाचित् सूर्य्य आसीत् । स परिदग्धशान्तोऽन्तर्गर्भाग्निः पृथिव्यभवत् । सर्वथाग्निपरिक्षयणेऽसा पश्चाच्चन्द्रोऽभवदित्यर्वाचा । अस्य चन्द्रस्य यावान् सोमभागः पृथिव्यामोपधिवनस्पति प्राणिजातेषु संक्रममाणो ह्रसति तावानेव पुनरितोऽत्रेरुद्धृतः सोमश्चन्द्रमण्डले प्रविशन् परिपूरयतीत्यद्यापि स क्रमोऽनुवर्तते । अस्य चन्द्रस्य रथश्चन्द्रकक्षाख्यो वायुमयो मार्गविशेषः सहस्रांशु-प्रचय' ।

आख्यातं च रथस्वरूपं पुराणेषु । यथा लैङ्गे षट्पञ्चाशदध्याये —

विथ्याश्रयाणि[1] चरति नक्षत्राणि निशाकरः ।
त्रिचक्रोभयतोऽश्वश्च विज्ञेयस्तस्य वै रथः ॥

शतारैश्च त्रिभिश्चक्रैर्युक्तः शुक्लैर्हयोत्तमैः ।
दशभिस्त्वकृशैर्दिव्यैरसङ्गैस्तैर्मनोजवैः ॥

रथेनानेन देवैश्च पितृभिश्चैव गच्छति ।
सोमो ह्यम्बुमयैर्गोभिः शुक्लैः शुक्लगभस्तिमान् ॥

क्रमतेः शुक्लपक्षादौ भास्करात् परमास्थितः ।
देवैः पीतं क्षये सोममाप्याययति नित्यशः ॥

पीतं पञ्चदशाहं तु रश्मिनैकेन भास्करः ।
आपूरयन् सुषुम्णेन भाग भागमनुक्रमात् ॥

इत्येषा सूर्यवीर्य्येण चन्द्रस्याप्यायिता तनुः ।
स पौर्णमास्यां दृश्येत शुक्लः संपूर्णमण्डलः ॥

आदिनाडी मध्यनाडी अन्त्यनाडीत्येवं नक्षत्राणां नाडीत्वेनाभिप्रेतानां चन्द्रकक्षावलम्बभूतानां त्रित्वाच्चान्द्ररथस्य त्रिचक्रतेहाभिप्रेयते इत्येके । आकाशेऽत्युच्चैर्मार्गेण मध्यमार्गेणातिनीचैर्मार्गेण चायं परिभ्रमतीति त्रिचक्रश्चन्द्रकक्षाख्यो रथ इहाभिप्रेत इति परे । सोमरसं पातुं सूर्य्यस्यास्त्रयस्त्रिशत् सोमपायिनो देवाश्चन्द्रकक्षायां संक्रमन्ते इति चन्द्रचक्रैर्विध्यान्नवनवतिरश्मयः संपद्यन्ते इत्यतः शतारं चक्रमुच्यते । अहोरात्रवृत्तान्यश्वा उच्यन्ते । पञ्चदक्षिणतः पञ्चोत्तरतश्च नाडीवृत्ताच्चन्द्राहोरात्रवृत्तानीत्यतो दशाश्वो रथः कल्प्यते ।

तत्रैकविंशातिकृत्वः पृथ्वीपरिक्रमणोत्तरमस्माच्चन्द्रात् कियांश्चित् सोमभागश्चन्द्रात् पृथग्भूय पृथिव्यामोपध्यादिषु संभूय तत्तदर्थोपादानां भवतीत्यप्याहुः ।

---

1. लि. पु. ५६.

तदित्थमाकाशचारिचन्द्रोत्पत्तिमूलभूतो योऽत्रिप्राणस्तस्य य. प्रथमो द्रष्टाऽऽसीत् तमेव विद्वासमत्रिनाम्ना व्यपदिशन्ति । अत्रिप्राणपरिद्रष्टृत्वादत्रि-महर्षिनामेन प्रसिद्धस्यास्य विदुषस्तथाविधयशोनामव्यवहारबाहुल्यादव्यवहृत-विस्मृत यदृच्छानाम न क्वापि स्मर्य्यते ।

एतस्यात्रे पुत्रपरम्पराप्येतेनात्रिशब्देन व्यपदिश्यते । अत्रिप्राणमय ब्रह्मधनधरत्वादत्रिप्राणमयत्वात् । एवमस्यात्रे शिष्यपरम्परा चात्रेयब्रह्मपरिषद-धिष्ठात्री तेनैवात्रिशब्देन व्यपदिश्यते । अत्रिप्राणोपासकत्वादत्रिप्राणाराधन-परीक्षादिप्रयागप्रधानवृत्तित्वात् । तनायमत्रिशब्द. कुलपरम्परास्वद्वत्वाज्जाति शब्द सपद्यते । अत एव जातेरस्त्रीविषयादिति सूत्रे गोत्र च चरणं सहेती वैयाकरणा स्मरन्ति । ततोऽनन्ता अत्रय काले काले भिन्ना भिन्ना पुराणेतिहासादिपु प्रसिध्यन्ति ।

तत्र पुरा देवयुगे तावदात्रेयब्रह्मपरिषदि द्वावत्री पर्य्यायेण लोकशास्तृ-ब्रह्मासनमध्यतिष्ठताम् । भौमोऽत्रि सास्यात्रिश्च । आदौ तावद् भूमिष्ठमेवात्रि-प्राण ददर्शेति कृत्वा स भौमोऽत्रि प्रथम स ऋग्वेदस्य पञ्चममण्डलद्रष्टा महर्षिस्तत्र सप्तत्रिंशादीन् कतिपयसूक्तमन्त्रानपश्यत् । एप एव हि भौमोऽत्रिश्च-न्द्रस्य पिताऽऽसीत् ।

अथ य पश्चादाकाशे उत्तरध्रुवमनिहिते सप्तर्षिमण्डले तुरीयतारकामयमत्रिमपश्यत् स द्वितीयः सास्योऽत्रिः । सा तारका बृहत्संहितायामप्युच्यते–

"पूर्वे भागे भगवान्मरीचिरपरे स्थितो वसिष्ठोऽस्मात् ।

तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च ।

पुलह क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्या ।। इति

*अत्रिप्राणमयहीदमृक्षमित्यतोऽत्रिरित्युच्यते । स एप आधिदैविकोऽत्रिः ।*

एवमध्यात्ममप्यत्रिप्राणो विनियुज्यते । तथा हि–ऐतरेयब्राह्मणस्य द्वाविंशाध्यायत्रिंशाध्यायोक्तप्रकरणानुसारेणाध्यात्म चत्वारः सहचराः प्राणाः प्राधान्येनोत्पद्यन्ते नाभानेदिष्ठो वालखिल्या वृषाकपिरेवयामरुच्चेति । स्त्रीयोनौ तावत् पौरुषरेतो येन सिच्यते स रेतोमयो नाभानेदिष्ठ. । तद्रेतो वालखिल्याभिः प्राणैर्विक्रियते । शिरोग्रीवाहस्तवक्षोजठरकटिपादाद्यङ्गप्रत्यङ्गनिर्म्माणाय विभक्त क्रियते ।

अथ वृषाकपिरात्मान कल्पयति । लोमानि त्वङ्मासमस्थिमज्जा चेति पञ्चधा विभक्तं करोति। ततोऽस्मिन्नेवयामरुत् काठिन्यं सपाद्य प्रतिष्ठामादधाति ।

यावत् प्रतिष्ठां न लभते तावत् पराश्रयेणैव तिष्ठतीति गर्भाशयं न त्यजति । अथ प्रतिष्ठां लभमानोऽयमात्मनाऽऽत्मानं धारयितुं समर्थो भूत्वा गर्भाशयाद्बहिर्भवितुं प्रयतते । "एवयामरुतैतवै करोति, तेनेद सर्वमेतवैकृतमेति यदिदं किञ्च" इत्यैतरेयश्रुतेः । तथा च रेतः प्राणा आत्मा प्रतिष्ठेति चत्वारोऽर्थाः शरीरारम्भाय भवन्तीति सिद्धम् । तत्र नाभानेदिष्ठ रेतः सोमः वालखिल्याः प्राणा वायुः ।

वृषाकपिरात्मा विष्णुः । एवमेव या मरुत्प्रतिष्ठा सोऽत्रिः । पञ्चममण्डलस्य सप्ताशीतितमसूक्तस्यैवयामरुत्प्राण निरूपकस्य द्रष्टुरेवयामरुतो महर्षेरात्रेयत्वेन स्मर्य्यमाणतया [तत्साम्येन प्राणस्याप्येवयामरुत आत्रयत्वेनंवाभ्युपगन्तव्यत्वात् । प्राणव्यवस्थानुसारेणैव दैवे युगे प्राणिनां विदुषां व्यवस्थाया ब्रह्मणा कृतत्वात् ।

इत्थमध्यात्ममधिदैवतं च तत्र तत्र सर्वमत्रिं प्राणमप्रगन्यः सांख्योऽत्रिरपश्यत् अत एव च तत्र तत्र भूयसोऽत्रेः सांख्यानादयमपरोऽत्रिः सांख्य इत्युच्यत । सायणस्तु संख्यपुत्रत्वादेनं सांख्यमाह ब्रह्मणो मानसः पुत्रोऽयमत्रिः सख्यनाम्नः कस्यचिदौरसः पुत्र आसीत् । त पश्चादयं ब्रह्मा पूर्वात्रिपरिपद्ब्रह्मासने प्रतिष्ठाप्य द्वितीयमत्रिमकरोदिति विज्ञायते । सोऽयं सांख्योऽत्रिदशममण्डले त्रिचत्वारिंशशततम सूक्तमपश्यत् ।

तत्र चायं पूर्वस्य भौमस्यात्रेर्निगडागारबन्धनाद्यसुरकृतपीडानिवारकत्वेनाश्विनौ देवौ स्तौति । तेनाप्ययमन्योऽत्रिरिति प्रीयते । एतयोर्भौमसांख्ययोर्द्वयोरेवात्र्योर्देवयुगकालिकत्व सभावयन्ति । इतरेषामत्रीणां वेदमन्त्रनिर्मातृत्वेन कुत्राप्यस्मरणात् । वस्तुतस्तु वेदमन्त्रनिर्मातृत्वं द्वयोरेवात्र्योरस्तीत्येतन्मात्र वक्तव्य न तु देवयुगेऽन्येषामत्रीणां सत्तैव नास्तीत्यास्थेयम् ।

महाभारतयुद्धपर्य्यन्त देवयुगप्रतिपत्तेस्ततः पूर्वमपि वेदप्रसिद्धपुरुप्रभृतिराजपितामहस्य नहुषस्य काले कस्यचिदत्रेः स्मर्य्यमाणत्वात् । तथा हि-अत्रिवंशेऽस्मिन्नत्रेः पष्ठोदेवनहुषो मे गिरिसंनिधाने तपश्चरन्तमत्रिमाजगाम । किन्तु तमत्रिं तत्रापश्यन्नयं देवनहुषस्तस्यात्रेः स्थाने देवनहुषपुरीं निर्म्मापयामास । एतं देवनहुषमेव यवनाः "दिओन्यसिउस" (Dionysius) इत्याचक्षते । तां देवनहुषपुरींच-"दिओन्यसिवोपोलिस" (Dionysiopolis) इतिवदन्तीति केचित् संभावयन्ति ।

नहुष एव पश्चाद्देवानां राजा भूत्वा देवनहुष इत्युच्यते स्म । अत्रेः पुत्रस्य शांखायनस्य म्लेच्छप्रायतायाः पौराणिकैरुक्तत्वात् । तद्वंशधरा एवैते यवनाः स्युः अत एवैषां यवनानामप्ययमत्रिः पूज्यदेवेषु परिगणित आसीदिति केचिदाहुः ।। एवमयमत्रिः पाञ्चजन्यशब्देनापि विशेषितः श्रूयते—

"ऋषिं नरावंहस पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन ।
मिनन्ता दस्यारशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता[1]"—॥

अत्र मन्त्रे पञ्चजनानामभ्यर्हणीयत्वादेवायमत्रिः पाञ्चजन्य इत्युच्यते । ते च पञ्चजना ऋषिपित्रादिपञ्चविधप्राण्यपेक्षया तदत्रिवंशधरा एव पञ्चविधमनुष्यविभागा अधिकं सभाव्यन्ते । पञ्चानामपि तेषामात्रेयाणां श्रुत्यन्तरे स्पष्टं श्रूयमाणत्वात् ॥

"यदिन्द्राग्नी यदुषु तुर्वशेषु यद् द्रुह्युष्वनुषु पूरुषुस्थ ।
अत परि वृषणा वा हि यातमथा सोमस्य पिबतं सुतस्य[2] ॥

पञ्चाप्येते ययातिपुत्रा अत्रेरेव वंशधरा पञ्चानां चन्द्रवंशशाखानां मूलपुरुषाः सन्तीति पञ्चस्वपि तष्वात्रेयशाखावंशेष्वयमत्रिरभ्यर्हणीयतम सभवति । तेनायं पाञ्चजन्य इत्युच्यते । तथा चावश्यमेषां पञ्चानामपि समये कस्यचिदत्रेः सत्ता गम्यते । न च मूलपुरुषस्यैवात्रेर्भौमस्य ययातिपुत्रकालपर्यन्तस्थितौ काचिद्विनिगमनास्ति । तस्मादत्रिब्रह्मपरिषदि काले कालेऽन्योऽन्योऽत्रिरधिष्ठाता ब्रह्मासीदिति संभावयाम ॥

अपि च भौमसांख्याभ्यामत्रिभ्यामन्ये खल्वात्रेया बहवो मन्त्रद्रष्टारः श्रूयन्ते ते यथा—

| | | |
|---|---|---|
| १-सदापृण | २-प्रतिक्षत्र | ३-सस |
| ४-वव्रि | ५-प्रतिरथ | ६-प्रतिभानु |
| ७ बभ्रु | ८ विश्वसामा | ९-श्रुतिवित् |
| १०-प्रतिप्रभ | ११ गय | १२-इष |
| १३-वसुश्रुत | १४-कुमार | १५-गविष्ठिर |
| १६-धरुण | १७-सुतम्भर | १८-अवस्यु |
| १९-गातु | २० रातहव्य | २१-यजत |
| २२-उरुचक्रि | २३-बाहुवृक्ति | २४ सत्यश्रवा |
| २५-एवयामरुत् | २६ स्वस्ती | २७ गोपन |
| २८-सप्तवध्रि | २९-पौर | ३० अर्चनाना |
| ३१-श्यावाश्व आर्चनानस | ३२-अन्धीगु श्यावाश्वि | ३३-बुध सौम्य आत्रेय |

---

१ ऋ स १ ११७ ३

२ ऋ स १ १०८ ८.

३४-विश्ववारा आत्रेयी ३५-अपाला आत्रेयी ३६-मृक्तवाहा द्वित:
३७-द्युम्न: विश्वचर्षणि ३८-वसूयव: आत्रेया: ३९-प्रयस्वन्त: आत्रेया:
४०-गौपायना लौपायना वाऽऽत्रेयाश्चत्वार:=बन्धु, सुबन्धु, श्रुतबन्धुविप्र-बन्धव:—इति ।।

इत्थमेते चत्वारिंशत् । न चैते सर्वेऽप्यैकस्यैवात्रे: पुत्रा; समकाला वा संभाव्यन्ते । नच तैपामत्रिवंश्यत्वं विनाऽऽत्रेयत्वं संभवति । तस्माद्दैवयुगेऽप्यन्ये बहवोऽत्रय: काले काले बभूवुरिति सिद्धम् ।।

अथ यथैतात्रिशिष्यवंशपरम्परायामुत्तरोत्तरा: सर्वा एवात्रिपदंदविष्ठातृव्यक्तयोऽत्रिशब्देनैवाख्यायन्ते तथैव सर्वेषां तेषामत्रीणामेका वा दश वा यावत्यो वा भार्य्या: स्युस्ता: सर्वा अप्येकेनैवानसूयाशब्देनाख्यायन्ते । तत्र प्राणरूपस्यात्रेरनसूयाशक्तिमत्त्वं हेतु: । यत्रात्मन्ययमत्रिप्राण: प्रकृतौ विशिष्यते स पुरुषोऽनसूयावान् भवति ।

"गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ।
न हसेच्चान्यदोषांश्च सानसूया प्रकीर्तिता" ।।

इत्यनसूयालक्षणंस्मरन्ति । तया चानसूयाशक्तिमेवात्रिप्राणं सर्वेऽत्रय: पुरुषा: समाराध्नुवन्निति कृत्वा तेषामपि पत्न्योऽनसूया एवोच्यन्ते । अनसूयाशब्दोऽत्रिभार्य्यावचनोऽत्रिवदेव साधारणो न त्वयं व्यक्तिविशेषरूढो यदृच्छा शब्द: । तेन पञ्चमण्डलद्रष्टुर्भौमस्यात्रेर्दशसु भार्य्यासु भद्राख्यायामनसूयायां सोमोत्पत्तिरासीत् । ते उभे अप्यनसूये अन्ये भवत: ।

ततोऽन्ये अप्यनसूये काले काले स्मर्य्येते । तथा हि कदाचिदयमत्रिर्निस्पृहवृत्तिर्धनदारिद्र्यात् परिक्लिष्टयोगक्षेम: पुत्रकलत्रादिपरिवाराणां भोजनादिक्लेशं दृष्ट्वा धनयाचनार्थं पृथोर्वैन्यस्याश्वमेधयज्ञे गन्तुमैच्छत् । किन्तु याचनाकर्मणि दुखं मन्यमानस्तपसे वनमेव गन्तुं प्रववृत्ते । ततोऽनसूयया संप्रार्थ्यमान: सोऽनिच्छन्नपि तस्या अनुरोधेन पृथोर्यज्ञवाटमाजगाम । धन्यस्त्वमसीश्वरस्त्वमसीत्यादिभिश्चाटुवाक्यै: पृथुराजं भूयसा प्रशशंस च ।

तच्छ्रुत्वा परिक्रुद्धो महर्षिर्गौतमस्तदानीमत्रये तस्मै पर्य्युवाद: । नैवं त्वं वक्तुमर्हसि । मनुष्य: खल्वय राजा नेश्वरत्वेनाभिष्टोतुं युज्यते । न ब्राह्मणेन सत्ता चाटुवाद: प्रोक्तव्यो न मिथ्या वक्तव्यम् । इत्येवं भूयोऽपि प्रत्युपालम्भं चक्रे । ततस्तत्र सनत्कुमारो मध्यस्थो भूत्वा विवादं शमयामास ।

"बालोऽपि नावमन्तव्यो मनुष्य इति भूमिप ।
महती देवता ह्येषा नररूपेण तिष्ठति ।।

यमूर्ध्वमिद्धा तिष्ठन्त सर्वेऽधस्तादुपासते ।
तत्रेश्वराशो विज्ञयो नेश्वरादन्य ईड्यते ।।

हस्तपादादिसाम्येऽपि येनाशेन स शास्तिनॄन् ।
तेनाशेनेश्वरो राजाऽभ्यर्हणीयतमा नृणाम् ।।"

इत्थ सनत्कुमारेणात्रिमतस्य न्यायसगतत्वेन स्थापनात् सतुष्टो राजा पृथुस्त-स्मात अत्रये सालङ्कार दासीसहस्र स्वर्णदशभारान् अर्बुदमिता स्वर्णमुद्राश्च प्रददौ । तच्च सर्वमयमत्रि पुत्रकलत्रादिभ्या विसृज्य नि स्पृहो भगवानत्रिर्गार्हस्थाय विरक्त स्वय तपसे वनमेवाजगामेति महाभारत वनपर्वान्तर्गतमार्कण्डेयसमस्यापर्वणि स्मर्य्यते । तत्रैतस्यात्रेराङ्गिरसेन गौतमेन समकालिकत्वादङ्गिरसा समकालिकात् प्रथमादत्रेर्भेद साधु विज्ञायते । तस्मादन्ये इमे पृथुकाल अत्र्यनसूय भवत ।

अपि चाय वेदमन्त्रद्रष्टा भौमो नाम प्रथमोऽत्रि पञ्चममण्डले सप्तविंशादिभि बहुभिरपि सूक्तैरिन्द्र देव परिष्टौति । किन्त्वयमन्य पृथुकालिकोऽत्रिरस्मिन् पृथुयज्ञ यज्ञविघ्नकारित्वेन देवाधमत्वेन च भूयसा देवेन्द्र परिनिन्दनसूयति । भागवते चतुर्थस्कन्धोनविंशाध्याये तथोक्ते । तस्माद्द्वे द्र प्रत्यक्रस्य विरुद्धभावद्वयासभावादन्ये इमे पृथुकाले अत्र्यनसूद इत्यवगच्छाम । पृथुरप्ययमत्रिवशधर एवासीदित्युक्त पाद्मभूमौ अष्टा विंशाध्याये—

"अत्रिवशसमुत्पन्न पूर्वमत्रिसम प्रभु ।
स्रष्टा सर्वस्य धर्मस्य अङ्गो नाम प्रजापति ।।

मृत्यो कन्या स वा अङ्ग सुनीथामुपयेमिवान ।
तस्यामुत्पादयामास वेन धर्मप्रणाशनम् ।।

मातामहस्य दोषेण वेन कालात्मजात्मज ।
निजधर्म परित्यज्य सोऽधर्मनिरतोऽभवत् ।।

ततो महर्षय क्रुद्धा वेन प्रति महाबला ।
तस्य निग्रहण कृत्वा ममन्थुस्तस्य विग्रहम् ।।

सव्योरुमन्थनात्तस्य प्रागभूत् पापपूरुष ।
तस्य वशधरा एते दृश्यन्त पापपूरुषा ।।

निषादाश्च किराताश्च भिल्ला नाहलकास्तथा ।
भ्रमराश्च पुलिन्दाश्च ये चान्ये म्लेच्छजातय ।।

गतकल्मषमेवं तं जातं वेनं ततो नृपम् ।
ममन्थुर्दक्षिणे पाणौ स्वेद एव ततोऽन्वगात् ।।

पुनर्ममन्थुस्ते विप्रा दक्षिणं पाणिमेव च ।
ततोऽस्मात्पुरुषो जज्ञे शुभलक्षणलक्षितः ।।

स पृथुर्नाम तं राज्य तेऽभ्यषिञ्चन्महर्षयः ।
तस्याभिषेके विप्रेन्द्राः सर्व एव प्रतस्थिरे ।।

ननु वामनपुराणस्य सप्तचत्वारिंशेऽध्याये पृथुरयं मरीचिवंशज उच्यते नात्रिवंशजः । तथा हि—

"एकार्णवे जगत्यस्मिन्नष्टे स्थावरजङ्गमे ।
विष्णोर्नाभिसमुद्भूतः सर्वलोकपितामहः ।।

तस्मान्मरीचिरभवन्मरीचेः कश्यपः सुतः ।
कश्यपादभवद् भास्वांस्तस्मान्मनुरजायत ।।

मनोस्तु क्षुवतः पुत्र उत्पन्नो मुखसम्भवः ।
पृथिव्याश्चतुरन्ताया राजा धर्मस्य रक्षिता ।।

तस्य पत्नी बभूवाथ भयानाम भयावहा ।
मृत्योः सकाशादुत्पन्ना कालस्य दुहिता तदा ।।

तस्यां समभवद् वेनो दुरात्मा वेदनिन्दकः ।
स मातामहदोषेण वेनः कालात्मजात्मजः ।।

तथा चेक्ष्वाकुपुत्रोऽयं पृथोः पिता वेनो नत्वङ्गपुत्र इति चेन्न । वामनपुराण-लेखकस्य पौराणिकस्यैतस्मिन् वेनजन्मनि भ्रान्ततयोपेक्षणीयत्वात् ।

"पितृकन्या सुनीथा तु वेनमङ्गादजीजनद्"

इतिमात्स्यवदितरसर्वपुराणमहाभारतादिष्वङ्गपुत्रतयैवास्यवेनस्य सुप्रसिद्धतया बहुसंवादादाङ्गित्वेनैवपरिग्रहीतुमौचित्यात् । तत्राङ्गस्यात्रिवंशोत्पन्नत्वं ब्रुवता साक्षादत्रिपुत्रत्वं निराक्रियते इति बहूत्तरकालिकत्वमस्य पृथोर्निष्कृष्यते । अतस्तत्कालिकयोरत्र्यनसूययोः प्रथमाभ्यामत्र्यनसूयाभ्यां भिन्नत्वमध्यवसीयते । एवमितोऽप्यर्वाक् काले कतिपयेऽत्रयेऽनसूयाश्च स्मर्य्यन्ते ।

यथा रामचन्द्रवनवासकालेऽत्र्याश्रमोपस्थितायाः सीतायाः केशसंवरणमनसूयया कृतमिति रामायणादौ स्मर्य्यते । रामश्चात्रिप्रभृतिभिः सहितो

गोदावरीतटमाजगामेति अग्निपुराणे (७।२) उक्तम् । तेन तत्कालऽप्य-त्र्यनुसूययो सत्तागम्यते । न चैतयोरैक्योरेव दम्पत्योर्देवलोके दण्डकारण्ये च सत्ता समाप्यते । देशकालयोरतिविप्रकृष्टत्वात् । तस्मादन्ये अन्ये अत्र्यनुसूये काले काले यत्र तत्र बभूवतुरिति प्रतिपत्तव्यम । अपि च तिस्राऽनसूया स्मरन्ति पौराणिका-दक्षकन्या कर्दमकन्या कर्दमश्वश्रू चेति । तथाहि—"ख्यात्याद्या दक्षकन्यास्तु भृग्वाद्या उपयेमिरे' इति प्रतिज्ञायाग्नेये । "सोम दुर्वासम दत्तमनसूयाऽप्यजीजनद्" इति दक्षकन्यामाह । "या कर्दमसुता प्रोक्ता' इति प्रतिज्ञाय भागवते—"अत्रे पत्न्यनसूया त्रीन्जज्ञे सुयशस सुतान्" इति कर्दम कन्यामाह । अथ ब्रह्माण्डपूर्वभागैकादशाध्याये तु ततोऽन्यामव पञ्चपत्यवती कर्दमश्वश्रूमनसूयामन्वाचष्ट—

"अनसूया विजज्ञे वै पञ्चात्रेयानकल्मपान् ।

कन्यां चैव श्रुति नाम माता शखपदस्य सा ।

कर्दमस्य तु पत्नी सा पौलहस्य प्रजापते" इति ॥

पुलहपुत्रस्य कर्दमस्य पुत्रोय शखपदो वेनपुत्रस्यातिप्रसिद्धस्य पृथुमहाराजस्य दक्षिणादिक्पालात्यासीदिति वक्ष्यते । अस्यामनसूयायामुत्पन्ना पञ्चात्रेयास्तु-सत्यनेत्रो हव्य आपोमूर्ति शनैश्चर सोमश्चेत्याम्नायन्ते । तत्र सत्यनेत्रादि-साहचर्यादिय पञ्चम सोमोऽपि दुर्वासोदत्तात्रेयभ्रातृकात् सोमाद्विभिद्यते इति सुनिभृत प्रत्येतव्यम् ।

अन्यस्यामन्यस्या चानसूयायामन्योऽन्य पुत्रोऽत्रेरदभवत् । तत्राव्यनुसूया-शब्दसामान्यादत्रिपुत्रविशेषाणामुत्पत्तिविषये बहव. खल्वैतिहासिका भ्रान्ता बभव् यथा विष्णु (१।१०८) पुराणाद्यनुसारेण सोमदत्तदुर्वाससामनसूया-गर्भजत्वे सभवत्यपि केचित्तावत् कर्दममुनिकन्यायामनसूयायामेषा त्रयाणा-मुत्पत्तिमाहु । अन्ये पुनर्भद्राश्वराजकन्याया भद्रास्यायामनसूयाया सोमोत्पत्ति-म यस्या च भद्राश्वकन्याया दत्ताद्युत्पत्तिमाह । तदेतदसमञ्जस भ्रान्त च । भद्राश्वदुहितरस्तावदिमा कस्यात्रे पत्न्य आसन् कस्य वाऽत्रे कर्दममुनिकन्या भार्यासीदिति विशिष्य न ज्ञायते ।

तथापि दत्तदुर्वासस प्रभृतयोऽत्रिपुत्रा उत्तरोत्तरकालानामत्रीणा पृथक् पृथक् पुत्रा' स्युरिति समावयाम. । महाभारतयुद्धसमकालाना दुर्वास प्रभृतीनाम-तिपुरातनचन्द्रसहोदरत्वाभिमानस्यानवक्लृप्तत्वात् । अथवास्तु सोमभ्रातृभ्या दत्तदुर्वासोभ्या भारतायुत्तरकालिकयोर्दत्तदुर्वाससोरन्यत्वमिति सुधीभिरूह्यम् । सोमस्त्वयमाद्यस्यैवात्र. पुत्र इति युक्तमुत्पश्याम । सोमाय लोकपालत्वाधिकार-प्रदानस्य प्रधानब्रह्माधीनतया प्रधानब्रह्मपुत्रादत्रेरेव तदुत्पत्तेरौचित्यात ।

अथ यथा भौमस्यात्रेरयं सोमः पुत्र आसीत् तथैव सांख्यस्यात्रेः शांखायनो नाम पुत्रो बभूव । शांखायन इति यदृच्छाशब्दो नत्वपत्यप्रत्ययान्तः । अत्रेः प्रथम-पुत्रत्वेन पुराणे स्मरणात् । सोऽयमतिसुन्दरो बलिष्टाऽप्युग्रस्वभावोऽत्यन्तम-धार्मिकश्चासीत् । स गिरिगह्वरेषु निवसन्नभक्ष्यमपि मांस भक्षयति स्म । तद् भ्रातापि तथैवासभ्योभूत्वा वने वने विचरतिस्म । तयोस्तथाचरणात् परि-क्रुद्धाऽयमत्रिः परिभर्त्सयंस्ताभ्यामाचारविचाराद्यर्थं बहूनदिदेश । यत्र तत्र वने विचरतास्तयोर्निवासार्थमनेकस्थानान्यत्रिनाम्नैव कल्पयित्वा स्वयं सोऽत्रिः सिन्धु-देशे देवनिकायगिरौ गत्वा तत्रैव न्युवास । शांखायनतद्भ्रात्रोर्वंशधरा यवना बभूवुरिति केचिदाहुः ।

अन्यस्यात्रे; पुत्राणां म्लेच्छप्रायत्वेऽप्याद्यस्यात्रेः पुत्रस्य सोमस्यायं प्रकाशमयः पवित्रो वंश आदेवयुगादिदानीं यावदविच्छिन्नः प्रवर्तमानो ब्रह्मणा प्रवर्तितं वैदिकमेव धर्म्मं परिपालयन्नद्यापि दृश्यते । सोऽयं पवित्रो वंश आख्यायते ।

२. मित्र दक्षिणं तद्वैश्वामित्रम् इत्यस्य विश्लेषणम्--

"यथाग्निगर्भा पृथिवी तथा द्यौरिन्द्रेण गर्भिणी" इति मन्त्रश्रवणात् । "इन्द्र इति ह्येतमाचक्षते-य एप तपति"[1] इति ब्राह्मणश्रवणाच्च सूर्य्यगतं प्राणमिन्द्र इत्याचक्षते । सूर्य्याद् विनिःसृता चैन्द्री वाक्परितः साहस्रं नाम मण्डलं तनुत । "एतद्वै सहस्रं वाचः प्रजातं यदेष त्रयो वेदः[2]" इति श्रुतेः । साहस्रस्य विभक्तयोऽहानीत्याख्यायन्ते । तत्रैतत्साहस्रं तावत् त्रधाविभज्यते-महोक्थं, महाव्रत पुरुपश्चेति ।

तान्यस्मिन् सूर्य्ये ऋक् साम यजूंषि प्रतिपद्यन्ते । उत्तरोत्तरं ह्रस्वी-भवन्तीनां परतः प्रथितानामनन्तमूर्तीनां समुद्रो महोक्थम् तदप्येकैकमर्कराशि-तीरादत्ते । अथ परितो दिग्भ्योऽभिनाभि समायान्तं सोममयमन्नमश्नन्नाप्यायितः प्रतप्यमानोऽग्निसमुद्रो महाव्रतम् । यस्त्वग्निसमुद्रो देवानां भूतानां च सृष्ट्यै सर्वजगदर्थोपादानरूपेणोपयुज्यते स पुरुषो नाम । इत्थमिमानि त्रीण्यहानि त्रयः समुद्रा अन्योन्यसमदेशा अन्योन्यतोऽससक्तास्त्रीणि साहस्राणि जनयन्ति । तेषु यदिदं महाव्रतमहस्तेन रूपेण विश्वतोऽभिव्याप्तो विश्वतश्चान्नं सोममयमश्नन् प्रतपत्ययं त्रयीमयः सूर्य्यप्राणः ।

तमेतमिन्द्रप्राणं महाव्रतेनाह्नोपलक्षितं विश्वामित्र इत्याहुः । तथा चैतरे-यारण्यके श्रूयते । "विश्वामित्रं ह्येतदहः शसिष्यन्तमिन्द्र उपनिषसाद । सहान्न-

१. श. ब्रा. ४:५:९:११.
२. श. ब्रा. ५:४:७:१२.

मित्यमिव्याहृत्या त्रिर्बृहतीसहस्रं शशंस । तमिन्द्र उवाच-ऋषे ! प्रियं वै मे धामोपागा. । वरं ते ददानीति । स हावाच-त्वामेव जानीयामिति । तमिन्द्र उवाच-प्राणो वा अहमस्मि ऋषे, प्राणस्त्वं, प्राणः सर्वाणि भूतानि । प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि तस्य मेऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रम् । एष तपन्नेवास्मीति हावाच[1]" इति । छन्दानुवृत्तिसवर्द्धनं च दक्षिणम् । तदस्य प्राणस्य विश्वाविष्टस्य मित्रं सलग्नं भवतीति वैश्वामित्रं नाम । तद्विशिष्टोऽयं महाव्रताहरात्मकः सौरः प्राणो विश्वामित्रः ।

प्राणस्येत्थं विश्वामित्रत्वाख्याने । "वाग् वै विश्वामित्रः" इत्येवं वाचो विश्वामित्रत्वं श्रावयन्त्या कौषीतकि श्रुतेस्तु (१५/१) विरोधो नाशङ्क्यः । "तद्वा एतत् सहस्रं वाचः प्रजापतः द्वे इन्द्रस्तृतीये, तृतीयं विष्णुः ऋचश्च समानि चेन्द्रो यजूंषि विष्णु[2]" इति श्रुत्या वागात्मकसाहस्रविभक्तेरह्नो वागूरूपत्वात् । "उभा जिग्यथुर्न पराजयेथे न पारजिग्ये कतरश्च नैनो । इन्द्रश्च विष्णो यद-पस्पृधेथां त्रेधा सहस्रं वितदैरयेथाम्[3]" इति मन्त्रव्याख्यायामैतरेयब्राह्मणे अष्टाविंशेऽध्याये । "किं तत् सहस्रमिति । इमे लोका इमे वेदा, अथो वागिति ब्रूयाद्" इति श्रुत्या च वाच एव सहस्रतयातद्विभक्तिरूपस्याह्नोऽपि तदनतिरिक्त-त्वात् ।

"तद् यऽहं सोऽसौ योऽसौ सोऽहम्" तदुक्तमृषिणा "सूर्य आत्मा जगत-स्तस्थुषश्चेति इत्यैतरेयारण्यकश्रुते सूर्यस्मादुद्भूयमान एवायमध्यात्म विज्ञानमय क्षेत्रज्ञ आत्मा । सोऽपि बहिर्वत् त्रयाणां समुद्राणामन्त श्येन इत्यस्मादिन्द्राद् विश्वतः प्रथितोऽयमन्तःस्थो महाव्रताहरात्मकोऽन्नमश्नन् प्राणो विश्वामित्रः ।

स एष प्राणो बृहत्यात्मको द्रष्टव्यः । "वाग् वा अनुष्टुप् प्राणो बृहतीति श्रुते. । "सर्वं ह्यद प्राणेनावृतम् । सोऽयमाकाशः प्राणेन बृहत्या विष्टब्ध नीत्येव विद्यात्[4]" (श्रा. २/१/६) इत्यैतरेयश्रुतेश्च । षट्त्रिंशदक्षरत्वाच्चैतस्य बृहती व-मद्वोपपद्यते एकैकं वेदमक्षरं दशिनो विराट् ।

तेन षष्टित्रिनवमक्षराणां लभ्यते । एतावन्ति च सवत्सरस्याहानि तत सवत्सरादुपेतत्वात् तावद्विभागोऽयं प्राणो न आत्मा सवत्सरात्मकस्याप्यस्य बृहतीत्वमक्षराणां विराट्त्वापेक्षाय द्रष्टव्यम् । अपि चायं प्राणः शरीरे दशधा भवति । "अयं वै प्राणो योऽयं पवते । यो वै प्राण. स आयु । सोऽयमेक इवैव

---

१ ऐ आ २ २:२

२. श. ब्रा ४ ५ ६ ३.

३ ऋ स ६ ६ ६ ८

४. ऐ आ २ १ ६.

पद्यते । सोऽयं पुरुषेऽन्तःप्रविष्टो दशधा विहितः[1] इति वाजिश्रुतेः । बृहतीत्वात् षट्त्रिंशदक्षरोऽयमिन्द्रः प्राणो विरोजोपसपद्यमानो दशधा विहितःसन् षष्टि-शतत्रयात्मको लक्ष्यते । स पुनर्दशधाकृतो यदि भूयो दशधा क्रियते तर्हि स षट्त्रिंशत् सहस्रात्मकः संपद्यते । न हि तत्सहस्रं दशत्वादतिरिच्यते । "तदेतत् सहस्रं तत् सर्वम् । तानि दश । दशेति वै सर्वम् । एतावती हि संख्या दश-दशतस्तच्छतम् । दशशतानि तत् सहस्रम्, तत् सर्वम्[2]" । इति श्रुतेः ।

स एष बृहतीसहस्रात्मकः प्राण आत्मा । तस्यारम्भकाणामेषां सर्वेषाम-क्षराणां शरीरादुत्थाय परज्योतिरुपसंपत्तौ स्वेन रूपेणाभिनिष्पत्तौ स्वेन रूपेणाभिनिष्पत्तावयमात्मा त्यक्तशरीरः सूर्य्यं गतो भवतीत्यत एवास्य प्राणस्य पुरुषायुषत्वमाहुः । तथा च श्रूयते । "अ इति ब्रह्म । तत्रागतमहमिति तद्वा इद बृहतीसहस्रं सपन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतम-क्षराणां सहस्राणि भवन्ति । तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति । जीवा-क्षरेणैव जीवाहराप्नोति । जीवाह्ना जीवाक्षरम्[3]" इति "प्राणो वा आयुः । प्राण उह्यमृतम् यावद्धयस्मिन् शरीरे प्राणो वसति तावदायुः[4]" इति च ।

अयमर्थः षट्त्रिंशत्सहस्राक्षराज्जीवात्मनोऽस्माद् विस्रस्तमेकैकमक्षरमहरहः स्वर्ग गच्छद्दिव्याधीयते । विरक्तंच तत्स्थाने सूर्य्योदयास्तपरिच्छिन्नमेकैकम-हरात्मन्याधीयते । आहितानां तु नात्मत्वमुपपद्यते । प्रज्ञात्मनो भूतात्मनस्तत्रा-गन्तुकेषु संपरिष्वङ्गायोगात् प्रज्ञात्मना श्लिष्टेन शरीरेणैषामसंधानात्तदनभिमा-नात् । तस्मात्तच्छतसंवत्सरान्ते सर्वेषामात्माक्षराणां विस्रंसनाच्छरीरमात्मना हीन विपद्यते । विस्रस्तानि च सर्वा एवात्माक्षराणि शरीरादुत्थाय सूर्य्यं गतानि भवन्ति ।

सूर्य्यरसरूपं विशुद्धं ब्रह्मविज्ञानमकारेण लक्ष्यते तत्रा हममस्तीति व्युत्पत्त्या-ऽयमध्यात्मं विज्ञानमयोऽक्षरव्यूह आत्मा "अह" मिति समाख्यायते । तदाह— "अ इति ब्रह्म । तत्रागतमहमतीति । अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति यो वै प्राणः सा प्रज्ञा । या वा प्रज्ञा स प्राणः । स ह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः" इति कौषीतकि श्रुतेरिन्द्रप्राणव्युत्थानेन सहैवायं प्रज्ञात्मपि शरीराद् व्युत्थाय कर्मगतिं गतो भवति । पृथिवीगृहीताच्छ-रीरात् संबन्धमुच्छिद्य लोकान्तरं गते प्रज्ञात्मनि विधर्मभावादिदं शरीरं पृथिव्या-कृष्टं निपतति, पञ्चत्वं याति ।

---

१. श. ब्रा ९:२:३:१.
२. ऐ. ब्रा. २:३:४.
३. ऐ. ब्रा. २:३:८
४. कौ. ब्रा. उ. ३:२.

प्राणस्त्वयमात्माप्यक्षराणां संघातेऽमुस्मिन्निन्द्रप्राणे बृहतीसहस्राक्षरसंघातरूपे संपरिष्वज्यते । तत्र मनःप्राणवाचामैकात्म्येऽक्षरशब्दः । तं चाक्षरप्राणमाचक्षते । प्राणे चायमक्षरप्राणः सप्तविधः सहत्यैकमात्मानमारभते मनो, वाक्, प्राणः चक्षुः श्रोत्रं कर्माग्निरिति । प्रत्येकस्यैषामुक्थस्य षट्त्रिंशत्सहस्राण्यर्वा श्रूयन्ते वाजिश्रुतौ-"नेदिदं मनः सृष्टमाविरबुभूषत निरुक्ततरं मूर्त्ततरम् तदात्मानमन्वैच्छत् । तत्तपोऽतप्यत तत् प्रामूर्छत् तत् षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् मनोमयान्मनश्चितः । तद् यत् किञ्चमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः । एतावती वै मनसो विभूतिः । एतावती विसृष्टिः । एतावन्मनः षट्त्रिंशत्सहस्राण्यग्नयार्का[1]" इति ॥

एवैवानुविधा वाक् प्राणादिष्वपि तत्र श्रूयते । तथा च मनो वाक् प्राणश्चक्षुः श्रोत्रमिति पञ्चधा विभक्तः प्राणः प्रज्ञात्मा । तैजसः प्राणः कर्म्मात्मा वैश्वानरः प्राणोऽन्यात्मा इतीत्थं त्रेधा विभक्तः सप्तधा विभक्तो वा भूतात्मा । तत्राग्निरयं द्वेधा-चित्यश्चितेनिधेयश्च लोमत्वगसृग्मांसमेदोऽस्थिमज्जशुक्रैश्चतने, वल्कल निर्यास दारु सार-रसैर्वृक्ष रिशारु तुषफलीकरणकिंकस कसारैर्यवधान्ये त्वग्रसगूदं वालबीजमज्जाभिः फले, तथान्यत्रान्यैश्चयनोयैरवयवैश्चीयमानश्चित्य तच्छरीरम् ।

तत्र दृष्टोऽयमूष्मा वैश्वानरो चितेनिधेयः तदन्तर्गतो वयोऽवस्थानिर्वर्तकः प्राणः कर्म्मात्मा । तदन्तरगतः प्रज्ञात्मा । तत्र चित्येन चितेनिधेयेन चात्मनाऽऽत्मन्विनोऽसंज्ञा जीवाः रत्नधातूपधातुरसोपरसादयः । ताभ्यां च तैजसेन चात्मन्विनोऽन्तःसंज्ञाजीवास्तृणगुल्मौषधिवनस्पत्यादयः । तैश्च प्रज्ञात्मना चात्मन्विनः ससंज्ञा जीवाः कृमि कीट-पक्षि पशु मनुष्यादयः ।

सोऽयं भूतात्मा यमन्यमात्मानमध्याश्रित्य पुरुषायुषमनुजीवन् शरीरेण संवर्तते स बृहतीसहस्रात्मायमिन्द्रः प्राणः । "तद्वा इदं बृहतीसहस्रं संपन्नं तद्यशः स इन्द्रः स भूतानामधिपतिः[2]" इतिश्रुतेः । 'स आयुः मामेव विजानीहि । एतदेव ह मनुष्याय हिततमं मन्ये यन्मां विजानीयात् । प्राणोऽस्मि प्रज्ञात्मा । तं मामायुरमृतमित्युपास्व"-इति कौषीतकि श्रुतौ प्रतर्दनं प्रतीन्द्रोक्तेः । तमन्वेवाध्याश्रिता इमे प्रज्ञादयो भूतात्मारम्भका भागाः सन्ति । "तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य एवं वेद[3]" इति श्रुतेः ।

---

१ श ब्रा १० ४ १
२. ऐ० आ० २ ' ३ ७
३ ऐ० आ० २ २ ४

तत्रैतस्मिन् प्रज्ञात्मनि विज्ञानात्मनो यावदधिकं संस्रवात् प्रतिष्ठा स्यात् तावदयं प्रज्ञात्मा तेनैव ब्रह्मणा विद्यया सर्वकषायदाहाद्विशुद्धिमागतः पाप्मभिर्विरहितो विज्ञानात्मरूपेणाभिनिष्पद्यते । स कर्मभिः कामैश्च विमुच्यते न स कर्मभोगाय लोकान् परिभ्रमति ।

"यदक्षरं पञ्चविधं समेति, युजो युक्ता अभि यत् संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकीभवन्ति ।।

यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत् संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ।।

यस्मिन्नामा समतृप्यन् श्रुतेऽधि तत्र देवाः सर्वयुजो भवन्ति ।
तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गलोकमप्येति विद्वान्[1] ।" इति ।

अयमर्थः । शरीररूपेण परिणतं पञ्चविधं भूतजातं वा इन्द्रियरूपेण परिणतं पञ्चविधं देवजातं वा यदक्षरं मुख्यप्राणमनुसमन्वेति । युञ्जानाः सन्तो युज्यमाना इमे रश्मिरूपाः सर्वे प्राणा अपि अन्योन्यसंश्लिष्टा यदक्षरं मुख्यप्राणमभिसंवाहयन्ति । "अथ नामधेयं सत्यस्य सत्यमिति । प्राणा वै सत्यं तेषामेष सत्यम्"—इति वाजिश्रुतेः शरीराधारभूतप्राणानामाधारभूतं मुख्यप्राणमनुलक्ष्य यत्र भागे सर्वैर्देवैर्युज्यते तत्रैतस्मिन् मुख्यप्राणभागे सर्वे देवा अविस्पष्टभेदत्वादेकत्वं यान्ति ।।

अपि च एतत्पञ्चविधं भूतजातं देवजातं वा एतस्मान्मुख्यप्राणादक्षरात् क्रमेणोपसृत्य यदन्यदक्षरं प्रज्ञात्मानं युक्तमभ्येति । रश्मयश्च प्राणा अन्योन्ययुक्ता यत् प्रज्ञानमभि संवहन्ति । सत्यस्य सत्यं मुख्यप्राणोऽपि यस्मिन् प्रज्ञानेऽनुयुज्यते तस्मिन् प्रज्ञाने सर्वे देवा संहत्यैकत्वमायान्ति । यद्यप्येवं विज्ञानात्मनि प्रज्ञानात्मनि चोभयत्रैव सर्वे देवा एकं भवन्ति तथापि यस्मिन्नात्मनि श्रुते नामानि सर्वाणि स्त्रीत्वपुंस्त्वक्लीवत्वभेदितानि संतृप्यन्ते समर्थ्यन्ते न व्यवर्तन्ते, तत्र स्त्रीपुंक्लीवेष्वविशेषरूपे विज्ञानात्मन्येव देवाः सर्वथा युक्ता द्रष्टव्याः । सर्वे देवा इन्द्रियरूपाः प्रज्ञात्मनि दृष्टा अपि मुख्यतया विज्ञानात्मन्येव प्रतिष्ठा सन्ति ।

प्रज्ञात्मारम्भकं तदन्तर्हितं विज्ञानात्मानमेवाश्रित्य प्रज्ञेऽपि सर्वे देवाः संहन्यन्ते इत्यर्थः । विज्ञानस्यैव सूर्य्यरसस्य कश्चिदंशो भूगर्भमभिसृप्तः पृथिव्यात्मभृतः पार्थिवमिदं प्राणिशरीरमभिसंपद्यमानः पाप्मभिः शरीरधर्मैः कामशुक्रादिभिः संसृज्यते । ततः स प्रज्ञानात्मा नामोपपद्यते । तस्मिंश्च पृथ्वीरसात्मनि प्रज्ञाने सूर्य्यरसात्मनो विज्ञानस्यै तस्यातितरां समन्वयात् तेन

1. ए० आ० २: २: ८.

ब्रह्मणा विज्ञानेन सर्वेषा पाप्मना कामशुकाद्यविद्याकषायाणामुच्छेदाद्विशुद्ध-विज्ञानात्मनाभिनिष्पत्तौ प्रज्ञात्मा स्वर्ग याति सूर्य्य नाम । स प्रज्ञानत्वाद्वि-मुच्यते । सूर्य्यरसरूप विशुद्ध चिन्मय मनोमय दिशाभिमकारेण लक्ष्यते इत्युक्तम् । तत्राहमस्मीति व्युत्पत्याऽस्य प्रज्ञात्माऽप्यहमित्याख्यायते इतिबोध्यम् ।

एष च विज्ञानात्मा बृहतीसहस्राक्षर सौर प्राणोऽध्यात्ममप्यधिदैवतवद् विश्वत प्राणान् धत्ते । "तस्य प्राची दिक् प्राञ्च प्राणा दक्षिणा दिक् दक्षिणा प्राणा । प्रतीची दिक् प्रत्यञ्च प्राणा उदीची दिगुदञ्च प्राणा । ऊर्ध्वादि-गूर्ध्वा प्राणा । अवाचीदिगवाञ्च प्राणा । सर्वादिश सर्वे प्राणा[1]" इति वाजिश्रुते ।

विश्वतो हीमे प्राणा अस्मिन्नामेदन्ते, मेद्यन्ति चामुष्मिन् विश्व-तोऽन्नानि तस्मादय महाव्रताह प्राणो विश्वामित्रो नामाख्यायते । तत्सवितुर्वरेण्य भर्गोऽधिशरीरमाविश्य विज्ञानमय आत्मा सपद्यते । धियो योन प्रचोदयति । तमेत प्राणमनुवर्णयति कौषीतकि । "एष ह्येवैत साधुकर्म कारयति त यमुन्निनीषति एष एवैनमसाधुकर्म्म कारयति त यमेभ्यो लोकेभ्यो नुनुत्सते यमधो तितीर्षति स म आत्मेति विद्यात्" (कौ० उ० ३) इति । हित प्रिय च कर्म्म कर्तु प्रवर्तयतीत्येष प्राणो विश्वेषा मित्र तस्मात् विश्वामित्र । 'यावद्धयस्मिन् शरीरे प्राणो वसति तावदायु " इति कौषीतकिश्रुतेरायु स्वरूप तमेव प्राणमाराधयितुमुभयो सन्ध्ययो सूर्य्यमुपतिष्ठन्ते ब्राह्मणा सावित्री च गायत्री वैश्वामित्री ध्यायमाना प्रजपन्ति ।

सा हि गायन्त त्रायते गयाश्चप्राणास्त्रायते । आराधयन्तस्तत्सपत्त्या दीर्घा-युषो भवन्ति । तथा च स्मर्य्यते—"ऋषयोदीर्घसन्ध्यात्वाद्दीर्घमायुरवाप्नुयु " इति । येत्वेनामयथा कुर्वते न ते फलेन सपद्यन्ते । तस्मात् सावहितोऽहरह सध्यामुपासीतेति महतामादेश ।

अथ य खलु विद्वानेत विश्वामित्रप्राणमपश्यत्, प्राणस्य च तस्य यो विश्वामित्र इति नामधेयमकरोत् स तत्प्राणद्रष्टा विद्वानपि यशोनाम्ना विश्वामित्र एव आख्यायते । स च मनुष्यविधो विश्वामित्रो महोदयनाम्निनगरे राजासीत् । यदिध कान्यकुब्जनाम नगर मिदानीमुपलभ्यत, तत्र पुरा द्रुपदस्य राज्ञो द्रोणस्य वा ब्राह्मणस्य राजधान्यासीदहिच्छत्रा नाम ।

तत्रैवातिपुरातनकाले वैजयाख्यक्षत्रियवश्याना राज्ञामधिष्ठान नगर-मासीत् महोदय नाम । तत्र विश्वरथा नाम राजासीच्चन्द्रवशीय । केचित्तु कौशाम्बीनाम नगरीमस्य राजधानीमाहु । सहि विश्वरथ पुरुरवसमारभ्य विजयापरसज्ञामायुशाखागोत्रे त्रयोदशो वा दशमो वा भवति ।

---

१. श, ब्रा. १४ ६ ११

तात्कालिकस्य च वसिष्ठस्य ब्रह्मवीर्य्यानुगं माहात्म्यं दृष्ट्वा ब्रह्मवीर्यात् क्षत्रवीर्य्यमल्पं मन्यमानः स तपस्तप्त्वा ब्राह्मणोऽभवत्। स विश्वरथो राजा विश्वामित्राख्य प्राणदर्शनप्रभावात् ब्रह्मत्वे विश्वामित्रोनाम्ना प्रथितोऽभूत्। "विश्वस्य ह वै मित्रं विश्वामित्र आस" (ब्रा० अ० २६) इत्येवमेतं प्रशंसत्यैतरेयः।

स च पुरूरवसमारभ्यायुशाखागोत्रे चतुर्थस्य ययातेः समकाल आसीत्। गुरुदक्षिणां दित्सोः स्वशिष्यस्य गालवस्य विश्वामित्रेण ययातिं नाहुषं प्रति प्रेष्यमाणत्वात्। तच्च कालसाम्यं ययातिपूर्वपुरुषाणां दीर्घायुष्ट्वाद् विश्वामित्र-पूर्वपुरुषाणामल्पाल्पायुष्ट्वाच्चोपपद्यते। इक्ष्वाकुवंशे हर्य्यश्ववसुमनस्त्रिधन्वस्व-त्रय्यारुणसत्यव्रतहरिश्चन्द्ररोहिताश्वानां सप्तानां पुरुषाणामिक्ष्वाकुतः पञ्च-विंशादीनां समकालोऽयमेको विश्वामित्रः। कश्चिदन्यो भवेदन्यश्च कश्चिद् भवेद्रामसमसामयिकः। एकस्यातिदीर्घकालजीवित्वासंभवात्। मनुष्याणां शतायुष्ट्वसिद्धान्तात्। वसुमनाहार्य्यश्विरयोध्यायां, प्रतर्द्दनो, दैवोदासिः काश्यां, शिविरौशीनरिर्भोजपुरे, अष्टको वैश्वामित्रिः कान्यकुब्जे, इत्येते चत्वारः सहोदराः ययातिकन्यायां माधव्यामुत्पन्ना विश्वामित्रेण समकाला आसन्निति पौराणिका आहुः।

एष च विश्वामित्र शब्दो न तत्प्राणद्रष्टृव्यक्तिमात्रे, नाऽपि तत्पुत्रपर-म्परायामेव रूढः किन्तु वैश्वामित्र्यां ब्रह्मपर्षदि तत्पुत्रो वा तच्छिष्यो वा य एव कश्चित् काले पर्षदधिष्ठाता ब्रह्मासीत् सोऽन्योऽन्यो विश्वामित्रः पर्षदधि-ष्ठातरि ब्रह्मणि विश्वामित्रशब्दप्रवृत्तेः। गोत्रे रूढः सोऽयं विश्वामित्रशब्दो जातिशब्दत्वात् वसिष्ठादिशब्दवदेकवचनान्तो बहुवचनान्तो वा प्रयुज्यते। तृतीयमण्डले त्रिपञ्चाशसूक्तस्य सप्तमीनवम्योर्ऋचोरेकवचनदर्शनात् प्रथमसक्त-स्यैकविंश्यामृचि बहुवचनदर्शनाच्च। तत्र बहुवचने सर्वासां व्यक्तीनां स्वशब्दे-नैवविश्वामित्रत्वं द्रष्टव्यम्।

अप्रत्यक्षप्राणविशेषद्रष्टृत्वरूपस्य ऋषित्वस्य तच्छब्दप्रवृत्तिनिमित्तस्या सर्वत्राविशेषात्। विश्वामित्र इत्यादौ अपत्यप्रत्ययलोपं वदन्तो वैयाकरणास्तु नाक्षेप्याः। व्याकरणप्रक्रियायाः शब्दरूपाभिज्ञानाभ्युपायमात्रत्वात्। नासूया कर्तव्या यत्रानुगमः क्रियते इति नैरुक्तत्वात त इमे विश्वामित्राः कुशिका अप्युच्यन्ते। त्रिपञ्चाशसूक्तस्य नवमीदशम्योर्ऋचो विश्वामित्रगोत्रजाभिप्रायेणैव कुशिकशब्दप्रयोगात्। ऐतिहासिकमनुष्यगोत्राभिप्रायेण प्रयुक्तयोरेव कुशिक-विश्वामित्रशब्दयोः पर्य्यायवाचित्वम्। न तु प्राणविशेषाभिप्रायेण प्रयुक्तयोः विश्वामित्रप्राणापेक्षया कुशिकप्राणस्यातिरिक्तत्वात्। इन्द्रत्वसामान्याभिप्रायेण तूभयोरेकभाव्यं मन्यते इति दिक्।

सर्वं एवैते भिन्नभिन्नकाला विश्वामित्रा मन्त्रद्रष्टार । तत्र हरिश्चन्द्र-सामयिकस्यैवैते मधुच्छन्द. प्रभृतय. पुत्रा' आसन् । देवरातस्य शुन शेपपूर्वा-श्रयस्य मधुच्छन्द प्रभृतिनोऽपि ज्येष्टत्वेन पौराणिकैराख्यानात् । सर्वविश्वामित्र-साधारणी चेय वैश्वामित्री सहिता द्रष्टव्या। विश्वामित्रगोत्रस्य च वसिष्ठ गोत्रेण प्रतिपन्थितया वृत्तिरपि सर्वव्यक्तिसाधारण्यात् स्मर्य्यते । तत्र विश्वा-मित्रस्य पितापितामहः प्रपितामहश्चेत्येकतस्त्रय. । विश्वामित्र. स्वयमेक । विश्वामित्रस्याष्टौ पुत्राश्चत्वार पौत्राः इत्येव पञ्चदशव्यक्तय स्मर्य्यन्ते । तेषु प्रपितामह इषीरथस्तावदृषिर्नास्ति मन्त्रद्रष्टृत्वास्मरणात् । पितामहः कुशिकः पिता गाथी मन्त्रद्रष्टृत्वाभावेऽपि नैपातिकावृषी सभाव्येते विश्वामित्रवशस्य कौशिकगोत्रत्वेन लोके प्रतिपत्तेः । ऋष्यारब्धवशस्यैव गोत्रत्वेनाख्यानात् । अथवा अनृषी एव स्याताम् ।

विश्वामित्रस्य महर्षे कौशिकशब्देन ग्रहणात् तत एवास्य गोत्रस्य कौशिक-त्वसभवात् । यत्तु दाशतय्या कुशिकगाथिनोरार्षेय स्मर्य्यते तद्विश्वामित्रस्यैवार्षेय द्रष्टव्यमिति केचिदाहु. । वस्तुतस्तु कुशिकगाथिनावप्येतावृषी एव स्याताम् । ऋष्यन्तरवदेतयोरप्यार्षेयस्मरणात् । कौशिक गोत्र तु कुशिकाद्वा विश्वामित्राद्वा प्रवर्ततामिति नातिविशेष. । एष च विश्वामित्रो मैथिल आसीत् । मिथिला प्रदेशे पूर्वस्या कौशिकी नाम नदी वहति ।

तदुपलक्षिते एव प्रदेशे कुशिकाश्रमस्य निर्धारितत्वात् । तथाहि बृहद्विष्णु-पुराणे मिथिलामहात्म्ये । "विश्वामित्रस्तु पूर्वस्या दिशि वासमकल्पयत्" इत्यु-क्तम् । यामलसारोद्धारे मिथिलाखण्डेचैवमाह । विश्वामित्राश्रमे प्राच्यामृग्वेद-ध्वनिनादिते" इत्यादि । महाभारतस्यारण्यके च स्मर्यते । "कुशिकस्याश्रम गच्छेत् सर्वपापप्रमोचनम्" इति । अत एव च विश्वामित्रवशजन्मा याज्ञवल्क्योऽप्यस्या मिथिलायामेव गौतमाश्रमप्रत्यासन्नवर्तिनो जयन्तपुरस्यारयन्तसन्निधाने धनुर्यज्ञ-महारण्ये निवसतिस्म ।

अद्यापि तस्याश्रमस्य मिथिलाया सुप्रसिद्धत्वात् इतिभाष्यम् । विश्वामित्रो ह्येष शतर्चो महामहर्षिः । पुत्रेषु तु मधुच्छन्दो देवरातादय. केचन शतर्चिनः । परे महासूक्तक्षुद्रसूक्ताः । यद्यप्यस्य शत पुत्राः स्मर्य्यन्ते पौराणिकं । तेषु च पञ्चाशज्जघन्यजा वनेचरा दस्युप्राया म्लेच्छा एवाभवन् परे तु ज्येष्ठा पञ्चाशदासन् ब्राह्मणाः विद्वासः । किन्तु तेष्वप्यष्टावेव पुत्रा. ऋषयः स्मर्य्यन्ते देवरात, मधुच्छन्दाः, कत ऋषभ, रेणुः, अष्टक, पूरण, प्रजापतिः इति । अथ जेता अघमर्षणश्चेत्येतौ माधुच्छन्दसौ, उत्कील कात्य इति त्रयः पौत्राः ।

अत्राय देवरातः पूर्वमजीगर्तस्यानृषिब्राह्मणस्य त्रिषु पुत्रेष्वन्यतम. पुत्र आसीच्छुन शेपो नामाङ्गिरस. । केचित्तु पौराणिका अजीगर्तशुन.शेपयोर्भार्ग-

वत्वमाचक्षते तच्छ्रुतिविरोधादनुपादेयम् । "यथैवाङ्गिरसः सन्नुपेयां तव पुत्रताम्" "आङ्गिरसो जन्मनास्याजीगर्तिः शुनः कविः" इति च बह्वृचश्रुतेः । स हरिश्चन्द्रस्य राज्ञो वारुणे यज्ञे क्रीतः पुत्रोऽभूत् । तत्रायं विश्वामित्रेण पशुत्वात् प्रमोचितः सन्नमुष्य विश्वामित्रस्य पश्चात् कृत्रिमः पुत्रो भूत्वा विश्वामित्रकृपया पुत्रेषु ज्यैष्ठ्यं वेदं चालभत । तेनायमृषिः समुदभूद् देवराता नाम । मधुच्छन्दास्तु विश्वामित्रस्यौरसो ज्येष्ठः पुत्रः ।

कुशिको द्वेधा—ऐषीरथिसौभरिश्च । तेनायं विचिकित्सितः । एवं प्रजापतिस्त्रेधा—वैश्वामित्रो वाच्यः परमेष्ठी च । प्रजापते पुत्रपौत्रप्रपौत्रवृद्धप्रपौत्राः स्मर्य्यन्ते । यथा—हिरण्यगर्भः । विष्णुः, यज्ञः, दक्षिणा, प्रजावान्, विमदः, यक्ष्मनाशनः, पतंगः सवरणः, इति नवैते प्राजापत्याः । मनुः सांवरणः । अथ नाभानेदिष्ठः शार्य्यातो नाहुषश्चेति त्रयो मानवाः ययातिर्नाहुषः इति । एष नावधार्य्यते कस्यैते हिरण्यगर्भादयः पुत्राः वैश्वामित्रस्य वा वाच्यस्य वा परमेष्ठेति । मनुरप्ययं नानाविधः स्मर्य्यते । तत्र न ज्ञायते कस्यैते नाभानेदिष्ठादयः पुत्र पौत्रा इति, तन्मृग्यम् ।

यद्यप्ययं विश्वामित्रो मनुष्यलोकस्थो न स्वर्ग्यः । तथाप्यय विश्वामित्रकृतो वेदसंहिताग्रन्थः स्वर्ग्य एवाभिज्ञायते । तद्वर्णितानां मनुष्यदेवानां भौमस्वर्गवासितया प्राणदेवानां सूर्य्यस्वर्गवासितया च स्वर्ग्यार्थविषयकत्वात् ।

तत्रैतस्यां कौशिकसंहितायां कुशिक ऐषीरथिरिन्द्रं द्वाविंशतिमन्त्रैः स्तुष्टाव । कुशिकपुत्रो गाथी दशभिरग्निं, पञ्चभिः पुरोष्यानग्नीन् पञ्चभिरग्निसंबन्धिनो विश्वान् देवांस्तुष्टाव इति विंशति मन्त्रं गाथिन आर्षेयम् । तदिदं द्विचत्वारिंशता पौर्विकं पर्व प्रथमम् ।

अथ गाथिपुत्रो विश्वामित्रस्त्रिंशेन शतेनाग्निसामान्यमेकादश भिराप्रियमूनत्रिंशता वैश्वानराग्निं, षड्भिर्मरुदादीन, नवभिरिन्द्राग्नी, एकादशभिरग्निबन्धिनो विश्वान्देवांस्तुष्टावेति षण्नवत्यधिकशतेन आग्नेयं पर्व द्वितीयम् । ऊनत्रिंशेन शतेन ऐन्द्रं पर्व तृतीयम् । अथ षड्भिर्विश्वान्देवान्, नवभिरश्विनौ, नवभिर्मित्रं, सप्तभिर्ऋभून्, सप्तभिरुषसमथ त्रिभिस्त्रिभिरिन्द्रावरुणौ बृहस्पतिं पूषणं सवितारं सोमं मित्रावरुणौ, ततश्चतुर्भिरिन्द्रसोमवरुणबृहस्पतिधातृविधातृसंघं, त्रिभिः पवमानं सोमं तुष्टावेति त्रिषष्ट्या वैश्वदेव्यं पर्व चतुर्थम् । इत्थं त्रिभिः पर्वभिरष्टसप्त तानि त्रीणि शतानि वैश्वामित्रार्षेयं भवति ।

अथ विश्वामित्रपुत्रो देवरातो विश्वामित्रपुत्रत्वात् प्रागजीगर्तपुत्रत्वे शुनःशेपनामा द्वाभ्यामग्निं त्रिभिर्भगसवितारौ दशभिर्वरुणं तुष्टावेति पञ्चदशभिः शौनःशेपार्षेयं वृतम् । देवरातो भूत्वा एकविंशत्या वरुणं,

त्रयोविंशत्याग्निं, नवभिरिन्द्रयज्ञसोमाना निवह, त्रयोविंशत्येन्द्र, त्रिभिरश्विनौ, त्रिभिरुपस तुष्टावेति द्व्यशीत्या देवरातार्षेय वृत्तम् । तदित्थ सप्तनवत्या देवरात पर्व पञ्चमम् ।

अथ मधुच्छन्दा वैश्वामित्रो नवभिरग्निं, द्वासप्तत्या मरुत्वन्त-मिन्द्र, ततस्त्रिभिस्त्रिभिर्वायुमिन्द्रवायू मित्रावरुणौ अश्विनौ इन्द्र विश्वान् देवान् सरस्वती चेत्येकविंशत्या वैश्वदेव्य, दशभि. पवमान सोम तुष्टावेति-द्वादश शत माधुच्छन्दसमार्षेय पर्व षष्ठम् ।

अथ ऋषभो वैश्वामित्रश्चतुर्दशभिरग्नि, नवभि· पवमान सोम तुष्टाव रेणुर्वैश्वामित्रोऽष्टादशभिरिन्द्रमिन्द्रासामौ च दशभि पवमान सोम तुष्टाव । कता. वैश्वामित्र. पञ्चभिरग्निमष्टको वैश्वामित्र एकादशभिरिन्द्र, पूरणो वैश्वामित्र पञ्चभिरिन्द्र, प्रजापतिर्वैश्वामित्रो दशभिरिन्द्र द्वापञ्चाशता विश्वान् देवास्तुष्टावेति त्रिचत्वारिंशेनशतत्रयेण पुत्रार्षेयम् ।

अथ जेता माधुच्छन्दसोऽष्टादशभिरिन्द्रमघमर्षणो माधुच्छन्दसस्त्रिभिर्भा-विवृत्तमुत्कील. कात्योऽष्टदशभिरग्नि सवरण प्राजापत्य ऊनविंशत्या इन्द्र तुष्टावेत्यष्टचत्वारिंशता पौत्रार्षेयम् ।

अथ देवश्रवा देवताश्चभारतौ राजानाविन्द्र पञ्चभिस्तुष्टुवतुरिति नैराति-कार्षेयम् । इति सप्ताशीतिशतेनानेन उत्तम पर्व सप्तममितिदिक् ।

६. अग्निस्वरूपविवेचनम्

वेदाना महत्त्वमस्माक भारतीयपरम्परासु सुप्रसिद्धम् । वेदे भारतीय-मलौकिक विज्ञान सन्निहित वर्तते । वेदेषु एतादृशी विलक्षणा शैली पश्यामो यद् देवतास्तुतिपरेष्वेव मन्त्रेषु केनचिद् विशेषणेन तत्सम्बन्धिगभीर विज्ञान विद्योत्यते । स्तुवद्भिरेव चैतिहासिक विवरणमपि तथैव कुक्षीक्रियते । अत्र कतिपयानि चोदाहरणानि सक्षेपेण दर्श्यन्ते—

'अग्निमीळे पुरोहित यज्ञस्य देवमृत्विजम् ।
होतार रत्नधातमम् ॥" (ऋ० १:१·१:)

ऋग्वेदीयेऽस्मिन् मन्त्रे "पुरोहितम्" "यज्ञस्य देवम्" ऋत्विजम् "होतारम्" "रत्नधातमम्" इति पञ्चविशेषणान्यग्ने. श्रूयन्ते । पञ्चविशेषणेष्वेषु परमोत्कृष्ट विज्ञान सन्निहित वरीवर्ति । यत्र सक्षिप्त विवेचन प्रस्तूयते ।

पुरोहितम्—

तत्र "पुरोहितम्" इति–अस्माकं पुर. स्थितः एवाग्निः प्रस्तुतो न वैद्युतसौरावान्तरिक्ष्यदिव्यावग्नी इति स्तोतव्यस्य व्यावृत्ति प्रदर्श्य, पुरो दश्य-

मानेषु सर्वेष्वपि वस्तुषु अग्नेर्व्यापकत्वमाह—"यत् किञ्चिद् दार्ष्टिविषयकम् अग्निकर्मैव तद्" इति नियमयति भगवान् यास्कः (निरुक्ते ७ अ.) मौलिकस्य तत्त्वस्याग्नेरेव चयनेन सर्वे पदार्था निष्पद्यन्ते स एव चित्योऽग्निः। सर्वत्र पुनः प्राणरूपेणानुप्रविष्टश्च चिते निधेयः—इति वैदिकं दर्शनम्।

यत्तु वैज्ञानिका आधुनिका अग्नेर्यौगिकत्वं साधयन्तो मौलिकतां वारयन्ति, सेषा स्थूलाग्निप्रवणा दृष्टिस्तेषाम्। ताप-दाह-जनक एव पदार्थस्तैरग्नित्वेन स्थूलदृष्ट्याऽभिमतः। वैदिके तु सिद्धान्ते प्राणरूपेण सर्वत्रावस्थितः दार्थोऽग्निरित्याख्यातः तापदाहौ तस्यैव स्थूलावस्था। अन्यत्रापि मन्त्रेषु सुस्पष्टं व्यापकताग्नेर्निरुक्ता—

"गर्भो अस्यौषधीनां गर्भोवनस्पतीनाम्।
गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि॥"
(यजु. १२ : २६)

"गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम्।
अद्रौ चिदस्मा अन्तर्दुरोणे विशां न विश्वो अमृतः स्वाधीः॥"
(ऋ. वे. १ : ७० : १)

इत्यादिना। तत्र पुरोहितं अग्निं वदन् मन्त्रोऽयमादिमः पुरो दृश्यमानान् पार्थिवान् अग्निरूपमाह। सर्वभावस्थितः किमयमग्निः करोति-इति विशेषणान्तरेणोच्यते।

**यज्ञस्य देवम्—**

सर्वमपि पदार्थजातं दृश्यमानं न कदाप्येकरूपम् परिवर्तमानमेव त्विदं सर्वमुपलभ्यते। परिवर्तमानोऽपि च नैकान्ततः सत्तां जहाति। तदिदं सर्वं यज्ञकृतम् स्वीयानां भावानामन्यत्रार्पणम्, अन्यतश्च भावानामादानमितीयमादानप्रदानप्रक्रिया यज्ञः। यथा प्रदीपः प्रकाशं सर्वत्रार्पयति तैलावयवांश्चाजस्रमादत्ते, वृक्षलताः पुष्पफलानि ददति पृथिव्या अपां च रसमजस्रमादत्ते। प्राणिन आहारमादत्ते, मलं बलं च तत्र तत्र प्रयोजयन्तीति सुस्फुटं सर्वत्रानुभूयेत सूक्ष्मया दृशा।

सोऽयमादानप्रदानापरपर्यायोऽन्नान्नादभाव एव प्राकृतो यज्ञ उच्यते, स चायमग्निसाध्य इत्यग्निरेव यज्ञस्य देवः। अग्नौ सोमाहुतिरेव यज्ञसम्पादिका। अनेनैव यज्ञेन सर्वेषामुत्पत्तिः स्थितिश्च सर्वोऽग्नियज्ञसाध्यः। तदेतत् वृक्षादिविषयेऽन्यत्रापि स्फुटीकृतम्—

"प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः।
ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः॥
(ऋक् १०: ७९: ३)

एतद् व्याख्यात माधवाचार्य –"अयमग्नि, मातु पृथिव्या सम्बन्धिनो, उर्वी –वह्वो, वीरुध –लता, इच्छत्–कामयमान, प्रसर्पति–प्रसरति। किमिव, कुमार इव, स यथा स्तन्य पातु जानुभ्या सर्पति तद्वत्। सस न पक्वम्-पक्वम न्नमिव, शुच॰ दीप्यमान नोरस वृक्षम्, ग्नि –पृथिव्या उपस्थे, अन्त –उत्सङ्ग अन्तरविदत्–विन्दति। पुन कोदृशम्, रिरिह्वासम-आकाशमास्वादयन्तम्, यद्वा मूलमन्तिर पृथिवी रिरिह्वासम"। इति। अत्र तृतीय-चतुर्थयो पादयोरेकवाक्य-ताऽऽचार्येण सम्पादिता। एतदपेक्षया तयो पृथक वाक्यत्व यदि स्यात्-पक्वम-न्नमिव शुचन्त–नीरस वृक्षमविदत्, ग्नि उपस्थे अन्त –पृथिव्या उत्सङ्गा, रिरिह्वासम्–रसमास्वादयन्त चाविन्ददिति, ततोऽधिक स्पष्टता स्यात। वृक्षल-तादिपु सिद्ध जलमादित्य–रश्मय ऊर्ध्वमाकृषन्ति, सहैव तज्जलसमक्त पार्थिवो-ऽग्निरत्यूर्ध्वमाक्रमते, तदेतदग्नेरुत्सर्पणमृच पूर्वमस्मिनर्द्धस्फुटमुक्तम। तस्यैतस्य चीयमानस्याग्नेरुपरितना भागो वायुसपर्काच्छुष्कतामापद्यते अन्तस्तु प्रवहत्येव रसोऽजस्रम्। जले हि मामस्य प्राधान्यमिति स्फुटमुक्त श्रुतौ—

"त्वमिमा ओषधी सोम विश्वास्त्वमपो अजनयस्त्व गा।
त्वमात तन्योर्वन्तरिक्ष त्व ज्योतिषा वि तमो ववर्थ॥
(ऋ० अष्ट० १ अ ६ वर्ग-२३)

ततश्च पार्थिवेऽग्नौ सोमाहुतिरेव वृक्षाद्युत्पत्तिहेतुरिति यज्ञस्य हेतुता सिद्धा। अनेन यज्ञनैव वृक्षादीनामूर्ध्व तिर्यक् च क्रमेण विस्तार, निर्यप्रसप्रसार एव शाखापर्णादिजनक तस्यैव च रसस्य पर्ण पुष्प फलादिरूपेण क्रमेण परिणाम॰। पर कस्य वृक्षलतादे कियती प्रसृतिरूर्ध्व तिर्यग्वेति सर्वमिद मूले स्थितस्य प्राणास्यायत्तम्।

सेय मूलशक्तिरेवास्यामृचि "प्रतरम्" गुह्यम" इति सकेतिता। प्रसरत पार्थिस्य कृष्ण वर्णताया, आदित्यस्य च पिशङ्ग द्रापि प्रतिमुच्यते कवि (ऋक् ४/५३/२) इति पीतवर्णताया श्रुतत्वेनोभयो सयोगाद्धरित रूप वृक्षवर्णा-दिपूपलभ्यते। यदा तु यमेन प्रतिबद्धो रसो नोपसर्पति, तदा केवलस्यादित्यवतस्य पतिमेव उप पर्णेषु प्रतिमासते। तदा मूलात् अवर्यप्राप्तोऽयमग्नि पृथगवस्थया पर्णादिपु स्थिरो भवति। एवमेव शुष्केष्वन्नेष्वपि भिन्नयैवावस्थयाऽग्नेरव-स्थितिरिति ते उभे अप्यवस्थेपृथगृचि प्रतिपादिते। यथा—

"अग्निर्वै शर्माण्यन्नादीनि प्रयच्छति" (ऐ ब्रा. २/५/९)
इत्यादिना ब्राह्मणेषु च विस्पष्टीकृत विज्ञानमिदमिति कृत विस्तरेण।

ऋत्विजम्—

अथ प्रथमायामृचि तृतीय विशेषणमृत्विजमिति। ऋतुभिर्यजति सगच्छन इति वा, ऋतुन् यजति ददातीति वा तस्यार्थ। प्रथमे विग्रहे ऋतस्य सौराग्ने-

रवयवा एव ऋतुशब्दार्थः। द्वितीये तु तत्तत्फलपुष्पादिजनकत्वेन प्रसिद्धः स स काल एव ऋतु शब्दार्थः।

उभयथापि सौराग्निना सङ्गतोऽयं पार्थिवोऽग्निस्तत्तदृतुव्यपदेश-प्रयोजक इति सिद्ध्यति। सौरस्य संवत्सररूपतामाप्तस्याग्नेरपेक्षयैव ऋतूनां नामान्यपि क्लृप्तानि। अग्नयोऽत्र वसन्तः-क्रमेण व्याप्नुवानः सन्ति, स कालो वसन्त इत्याख्यायते। यदा तु सर्वानर्थान् गृह्णानः-आत्मसात्कुर्वाणोऽस्ति, स कालो ग्रीष्मः, ग्रह् धातोः परोक्षवृत्त्या निष्पन्नत्वादस्य शब्दस्य।

यदा तेऽग्नयः प्रवृद्धा भवन्ति तदा वर्षाः, वृधधातुनिष्पन्नोऽयं शब्दः। अथ परां वृद्धिं प्राप्य यदा क्षयं गन्तुमारभन्तेऽग्नयः, तदा (शरन्तोऽग्नयो यत्र) शरत्कालः, हीनतायां हेमन्तः, सर्वथा विशीर्णेषु चाग्निषु शिशिर इति। "जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, विनश्यति[1], इति यास्कपरिपठिताः, षड्भावविकारा एव ऋताग्निसंवन्धेनेह ऋतुवाचकैः शब्दैः प्रदर्शिताः।

ऋत्ववयवभूतानां चैत्रादिमासानां वैदिकानि नामान्यपि-मधुः, माधवः, शुक्रः, शुचिः, नभाः, नभस्यः, इषः, ऊर्जः, सहाः, सहस्यः, तपाः, तपस्यः-इत्येतानि तेषु-तेषु मासेषु ऋताग्निसम्वन्धाद्यत्पृथिव्यां पार्थिवेषु प्राणिषु वोत्पद्यते तन्मूलकान्येव। यदा हि मधु समुत्पद्यते-स मासो मधुः। मधुप्रकर्षसम्वन्धी च माधवः इत्यादीत्यहो वैज्ञानिकं विजृम्भितं सुरभारत्याः। यत्र हि अन्यासु वैज्ञानिकतामानिनीषु भाषासु जूनो नामकः पुरुषविशेषो यत्रोत्पन्नः स जून इति जूलि च यस्मिन् मासे जातः स जुलाई इति मनुष्यसम्वन्धेन मासनामानि भवन्ति, तत्र संस्कृतभाषाया मासनाम श्रवणादेव तन्माससम्वन्धिविज्ञानं प्रतीयते इति दृश्यतां सुरभारत्या गौरवं विस्फार्य चक्षुषी भाषान्तरपक्षपातिभि:

अथ प्रकृतमनुसृत्य ऋतुविज्ञानमेवेदानीं संक्षेपेण वक्तव्यम्। ऋतः सौरोग्निरेव ऋतूनां प्रधानं कारणम्,, परं नैकरूपः स विभिन्न प्रकारानृतून् जनयितुमलमिति सोमसम्वन्धस्तत्र विभिन्नदशासंपादनायापेक्षणीयः। सोममण्डलं च चन्द्र इति चन्द्रस्याप्यृतुजनकत्वमाम्नातम्—

"पूर्वापरं चरतो माययैतो
शिशू क्रीडन्तौ परियातो अध्वरम्।
विश्वान्यन्यो भुवनाभिचष्टे
ऋतूंरन्यो विदधज्जायते पुनः॥

(ऋक् १०/८५/१०)

सूर्याचन्द्रमसावस्मिन् मन्त्रे प्रस्तुतौ तावेव शिशू इति रूपितौ। तमेकः सूर्यो भुवनानि प्रकाशयति, अन्यस्तु चन्द्र ऋतून् विदधत्पुनः पुनर्जायत इति

चन्द्रस्यापेक्षाकृत प्राधान्यमुक्तम् । तदित्थं सूर्याचन्द्रमसावृतूत्पादकौ, किन्तु तत्तदृतुषु या फलपुष्पान्नादिसमृद्धिस्तत्र हेतुः पार्थिवोऽग्निरेव । न हि पार्थिवाग्नि-सम्बन्धमन्तरेण पृथिव्या किमप्युत्पद्यते नाम । सूर्यचन्द्रयोः प्रभाव पार्थिवेऽग्नौ, पार्थिवश्चाग्निस्ताभ्या सगत्य तत्तदन्नादिजनक इति सर्वमिदम् "ऋत्विजम्" इति त्रिभिरक्षरैरुक्तम् ।

होतारम्—

होतारमिति चतुर्थं विशेषण ह्वेञ्धातोर्होतृशब्द निष्पाद्य ब्राह्मणषु व्याख्यातम् । तेनाग्निर्देवानाह्वयति, अग्निद्वारैवास्माक सौरमण्डलस्थैर्देवैः सम्बन्ध इति गभीरतत्त्व विज्ञायते । यदद्यापि सर्वथा परोक्ष वैज्ञानिकानाम् ।

रत्नधातमम्—

अथ पञ्चमम् "रत्नधातमम्" इति विशेषणम्-अग्निरेव सुवर्णमणि-प्रभृतीना रत्नमुत्पादयितेति भूगर्भविज्ञान स्फुटयति । हिरण्योत्पत्तिविज्ञान ब्राह्मण स्फुटमप्युपलभ्यते—

> "आपो वै वरुणस्य पत्न्य आसन्, ता अग्निमभ्यध्यायन्त ।
> ताः समभवन्, तस्य रेत परापतत्, तद्धिरण्यमभवत्॥
> (तै, ब्रा १/१/६)

रसेऽग्निवीर्यसम्बन्धात् हिरण्योत्पत्तिरित्यत्र स्फुट भवति । अत एव चाग्निर्हिरण्यरेता इति सस्कृतभाषायामाख्यायते । तदित्थ परिमिताक्षरैः पञ्च-भिर्विशेषणैः वियद्विज्ञान वय शिक्षिता इति विचार्यता गनाङ्महाभागैरिति शम् ।

—□—

# अथ पञ्चमो विवेकः

## १. वेदधर्मयोस्तात्पर्यविवेचनम्

मनुष्यैरेतैर्बुद्धिक्रियेन्द्रियसमन्वयादनिच्छद्भिरप्यनुक्षणं किञ्चिद्बुध्यते किञ्चित् क्रियत इति प्रकृतिसिद्धमेतत्। यतश्च किञ्चिद् बुध्यते किञ्चित् क्रियते तत एवास्य सर्वस्य वेदेन धर्मेण च नित्यः सम्बन्धः। न च वेदधर्माभ्यामसम्बद्धं किञ्चिदिह पश्यामः। एवमपीह कार्य्यकारणभावनिर्वाहः क्वचिद्वेदप्राधान्येन क्वचित्तु धर्मप्रधान्येन क्वचिच्चोभयप्राधान्येन। यथा युद्धादौ सन्ति मे पृष्ठपोषका महावीरा इति ज्ञानमात्रेणैव शौर्य्याऽध्यवसायप्राखर्य्योदयात् पृष्ठपोषकप्रत्यासत्तिर्ज्ञायमानेव कार्य्यकारिणी धर्मस्य तत्र सत्वमसत्वं वा नापेक्ष्यते। प्रदीपजन्यगृहप्रकाशोदये तु प्रदीपप्रत्यासत्तिर्वस्तुसत्येव कारणमिति वेदस्य तत्र सत्वमसत्वं वा नापेक्ष्यते। भोजनजन्यसाहित्योदये तु भोज्यान्नप्रत्यासत्तिर्वस्तुसती ज्ञायमाना च हेतुरित्येवं तत्र तत्र वेदधर्मयोस्तारतम्येनोपयोगो द्रष्टव्यः।

अथ यदिदं बुध्यते तत्त्रेधा–ज्ञानमन्यथाज्ञानमज्ञानं च। तस्मिंस्तद्बुद्धिर्ज्ञानम् तच्च यथार्थज्ञानं प्रमा सत्यं तथ्यमित्याद्युच्यते। अतस्तस्मिंस्तद्बुद्धिरन्यथाज्ञानम् तच्चायथार्थं भ्रमो विपर्य्ययो मिथ्येत्याद्युच्यते। अथ विषयानवलम्बेन जायमानं ज्ञानमज्ञानम्, तच्च संशयकुण्ठितबुद्धित्वबुद्धिस्तम्भादिभेदादनेकधा भिद्यते। एवमेव यदिदं क्रियते तदपि त्रेधा–कर्म विकर्माकर्म्म च। यतोऽभ्युदयनिःश्रेयससिद्धिस्तत् कर्म्म, तच्च पुण्यं सुकृतं श्रेयो धर्म्म इत्याद्युच्यते। यतोऽनिष्टं परिणमते तद्विकर्म्म, तच्च पापं दुष्कृतं पातकमधर्म्म इत्याद्युच्यते।

अथ यानि यातयामानि वृथाकर्म्माणि स्युस्तान्यकर्म्माणि। तानि उपचारशुद्धिमज्ञात्वैव यदृच्छया क्रियमाणानि जलताडनादीनि चैत्यवन्दनादीनि अलसचरित्रादीनीत्येवमनेकधा भिद्यन्ते। इत्येवमुभयोस्त्रैविध्येऽन्यथाज्ञानाज्ञानाभ्यां विकर्माकर्म्मभ्यामेव च समन्विताभ्यामसमन्विताभ्यां वा लोके दुःखमुत्पद्यते। यत्र नैतेषां सम्बन्धस्तत्र नास्त्येव दुःखोत्पत्तिरिति व्याप्तिः। न चैतच्चतुष्टयव्यतिरेकेण किञ्चिदरष्टं दुःखोत्पत्तौ कारणमस्तीति सुनिभृतं सर्वत्र परीक्षाविशेषेण द्रष्टव्यम्। स्वनिष्ठाभ्यां सुलक्षणकुलक्षणाभ्यामेव सुखदुःखोत्पत्तेः सिद्धान्तात्।

यत्रापि वज्रपतनादिजन्यं किञ्चिद्दैवायत्तं दुःखमुत्पद्यते तत्रापि दैवप्रयोगा-प्रयोगनिमित्तं किञ्चिदवश्यं लक्षणं स्वस्मिन्नस्ति। तद्विरोधिलक्षणप्रयोगश्च नास्ति, तत्पतनादिदेशकालज्ञानं तत्सयोगप्रतीकारोपायज्ञानं च नास्तीति स्पष्टं स्वानुगत एव दोषो विज्ञायते। अत एव दुःखं जिहासता सर्वेणापि सर्वत्र स्वानुगतं दोष-चतुष्टयं यथाशक्यमपहाय सम्यग्ज्ञानं सच्चारित्र्यं चानुवर्तनीयमिति महतामादेशः।

यद्यपीह सर्वदुःखात्यन्तनिवृत्तिरूपमोक्षसिद्धेः प्राङ् नैकहेलया सर्वे दोषाः परिहर्तुं शक्यन्ते, तथापि तावता नानुष्ठानलक्षणप्रामाण्यमादेशानामाशङ्क्यम्। यावच्छक्यतावत्यैवादेशचारितार्थ्यात्।

तत्रापि न त्वेन चारित्र्यमनपेक्ष्य केवलं ज्ञानमात्रेण नापि वा सम्यग्ज्ञान-मनपेक्ष्य केवलं क्रियामात्रेण सर्वत्रापेक्षितार्थसिद्धिर्दृष्टा। अपि तु ज्ञानसमुच्चित-क्रियया प्रवृत्तिपक्षे क्रियासमुच्चितज्ञानेन च निवृत्तिपक्षे फलसिद्धिरिति सिद्धान्तः। यद्यपि क्रिया न निष्फला भवतीति ज्ञानमनपेक्ष्यापि निर्वृत्ता किञ्चित्फलं प्रसूत एव तथापि तस्या यत्र कारणत्वं तादृशं शुभमशुभं वा फलमुत्पादयेन्न नियमता-ऽभिमतमेवार्थमिति न विज्ञानासमुच्चितं किञ्चित्कर्तुमारभेत। उक्तञ्च—

किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः।
इति संचिन्त्य मेधावी कर्म कुर्वीत वा न वा॥

तथा हि

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्"–इति क्रियामात्रकर्तव्य-तानाप्राप्तावकर्मविकर्मनिवृत्तिपुरस्कारेण कर्मणः कर्तव्यतासिद्धयर्थं। कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। इति श्रुतौ प्रवतायामप्यकर्महेयताया कर्मोपादेय-तायाश्च ज्ञानसहकारमन्तरेणासम्भवादवश्यं ज्ञानसमन्वितमेव कर्म कुर्वीतेत्यादेश-निष्कर्षः। अत एवाहुरभियुक्ताः।

ज्ञात्वा कर्माणि कुर्वीत नाज्ञात्वा किञ्चिदाचरेत्।
अज्ञानेन प्रवृत्तानां स्खलनं स्यात् पदे पदे॥

तस्मात्सुखेप्सुर्यदेव किञ्चित्कुर्वीत, विज्ञायैव कुर्वीत, न तु यथा तथा सहसा प्रवर्त्तेतेत्यवधारणीयम्। अथ किं विज्ञाय कुर्वीतेति चेदुपचारशुद्धिमेवेति गृहाण। सा च द्वादशभिरुपायैर्निवर्त्तते। तं यथा–देश, काल, द्रव्यम्, पात्रम् श्रद्धा कार्यकारणविज्ञानम्, समुचितेतिकर्तव्यता, स्वनिष्ठकुलक्षणदोषासंसर्ग, स्वनिष्ठसुलक्षणगुणसयोग, अनुकूलदैवसंयोग वातावरणप्रतिकूलदैवसयोगाभाव, अध्यवसायश्चेति। एतैः समुच्चितं क्रियमाणं कर्मावश्यमेव संसिद्धिमायाति यथेच्छम्। तत्र—

निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ।
षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ॥

इत्येवमादयो नीतिशास्त्रोक्ता बहवो दोषाः । तथा च—

उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ।
षडेते यत्र तिष्ठन्ति तत्र देवोऽपि शङ्कते ॥

इत्यादयो गुणाः । न चैतदुपचारशुद्धिविज्ञानमकस्मादुत्पद्यते, तस्मादध्ययनं कार्यम् । तत्र स्वयमेवाध्यायमधीयीत, स्वयमेव च धर्ममनुतिष्ठेदित्युपदिश्यते- "स्वाध्यायोऽध्येतव्यः" "स्वधर्मोऽनुष्ठातव्यः" इति । तत्र स्वस्याध्यायोऽध्ययनीयार्थः स्वाध्याय इत्युच्यते, अध्ययनं च मनःशरीरेणाध्युपदेशं गमनम् (१) उपदेशग्रहणमिति यावत् । उपदेशश्च बुबोधविषया आप्तकृतः प्रमाणप्रयोगः । तथा च परीक्षार्थं क्रियमाण इन्द्रियादिप्रयोगोऽपि नूनं भवेदेवोपदेशस्तथापि तत्रापि शब्दप्रयोगस्य नाप्राप्तत्वाद्वेद एवाधिगन्तव्यः ।

ननु (२) वेद इति विज्ञानमाह न देशनाम्, देशनाया आप्तोपदेशात्मकशब्दप्रमाणरूपतया विज्ञानभिन्नत्वादितिचेत् सत्यम् । यथैवेदं विज्ञानं वेदशब्देनाहुस्तथैव खलु विज्ञानाधिकरणभूतेष्वप्यर्थेषु वेदशब्दस्थाने प्रयुञ्जते, विज्ञातानामेवार्थानां विज्ञानौपयिकतया तेषामप्यन्ततो विज्ञानमयत्वात् । त्रयश्च विज्ञानौपयिका अर्था अभिगम्यन्ते, तथाहि (३)–यदिदं विज्ञानं नाम पदार्थः प्रसिद्ध्यति स त्रीण्येवाधिष्ठानान्यधिष्ठायोपतिष्ठते प्रमाणजातं (४) च, संस्कारजातं च विषयाजातं चेति । अर्थवति शब्दे प्रयुक्ते तदनुबन्धेन किञ्चिद् विज्ञानं विद्योतते–स एकः स्कन्धः, यत्किञ्चिद्विषयानुभवाहिते चान्तःकरणनिष्ठे संस्कारेऽतिशयाख्ये तदनुबन्धेन विज्ञानं विद्योतते स एकः स्कन्धः घटपटादिविषयजाते च चक्षुरादिसंनिकृष्टे सति तदनुबन्धेनापीदं विज्ञानं विद्योतते स एकः स्कन्धः त्रय एवैते विज्ञानस्कन्धा विज्ञानोपाधिभूता भवन्ति न चैतद् व्यभिचारेण विज्ञानं कुत्राप्युपलभ्यते ।

अथ यत्रैतत् त्रिविधमपि विज्ञानमेकत्रोपलभ्यते तत्रापि तानि विज्ञानानि भिद्यन्ते । यथा रामभद्र आमोदित्ययुक्ते रेफादिविषयकज्ञानमादौ जायते १ ततो

---

१. यद्यप्यध्ययनशब्द इङ् धातोस्तथापि तस्यापि गमनार्थ एव पर्यवसानमित्यभिप्रायः ।

२. शाब्दज्ञानशब्दप्रमाणयोर्भिन्नत्वाज्ज्ञाने वेदशब्दो युक्तो न तु शब्दे विद्धातोर्ज्ञानार्थकत्वात् प्रञ्जयुने तु लोका शब्दे वेदशब्दं तदिदं कुत इति प्रश्नः ।

३. प्रथमभागप्रदर्शितमेतदिह विवृत्यच्योते ।

४ प्रमाणेन देनात्र शब्द एव विवक्षितः ।

विशिष्टपदप्रतिपत्ति:, ततो दाशरथ्यादिविषयिणी स्मृति: ३ तत: शाब्दबोध:, ४ ततो रामभद्र आसीदिति पूर्वसंस्कारवत: शब्दगृहीतार्थविषयिणी पुन: स्मृति:, ५ ततस्तयोरनुभूनस्मृत्योरैक्यावगाहिपाष्टिक ज्ञानमशाब्दमपि परम्परया शब्दनिमित्तकमेव प्रवर्तते, ६ । इत्थं षट्सु विज्ञानकाण्डेषु प्रथमद्वितीये वैषयिके, तृतीयपञ्चमे सांस्कारिके, चतुर्थषष्ठे शाब्दे । तदित्थं भिन्नोपाधिकतया त्रयाणा-मप्येषां भेद: स्पष्ट एव ।

तस्मादेकैकोपाधिप्राधान्यापेक्षयामुष्मिन् विज्ञाने त्रय शब्दा प्रवर्तन्ते-वेदश्च, विद्या च, ब्रह्मचेति । प्रमाणोपाधिक विज्ञान वेद विज्ञानोपाधिभूत प्रमाणजात च वेद. । संस्कारोपाधिकं विज्ञान विद्या, विज्ञानोपाधिभूत संस्कार-जात च विद्या । विषयोपाधिक विज्ञान ब्रह्म, विज्ञानोपाधिभूत विषयजात च च ब्रह्म । तथा चोपाध्यन्तर्भावापेक्षया व्याधिकरणा अप्येते त्रय: शब्दा विज्ञान-मात्रापेक्षत्वे समानाधिकरणा प्रतिपद्यन्ते-स वेद, सा विद्या, तद् ब्रह्म ।

एतस्मिश्च शब्दसामान्योपचारे किं बीजमिति विशेषप्रतिपित्साया केवल-मुपदेशे चाध्ययने चार्थसाङ्कर्यमेव तत्वतो निमित्त पश्यन्ति दीर्घदर्शिन । तथाहि यत्रोपदेश्यमुपदिशत्यनूचान, स्वाध्यायं चाधीते विधेय:, तत्र नूनमेष शब्द-मुपदिशन्-शब्दतश्च स्वानुभूतार्थविषयक चिराहित स्वकीय संस्कारमुपदिशन्-संस्कारतश्च स्वानुभूतिविषयीभूतकञ्चिदर्थमुपदिशन्नुपदिशतीति व्यपदिश्यते । एकेनैव चोपदेशनव्यापारेणैते त्रयोऽप्यर्था विषयीक्रियन्ते । अत एवैकस्यामेवानु-वचनक्रियायामविशेषादेवमुपचारा भवन्ति-वेदमुपदिशति, विद्यामुपदिशति, ब्रह्मोपदिशति, इति ।

एव तादृशमेव स्वाध्यायमधीयानस्याप्येकस्यामेव तस्यामध्ययनक्रिया-यामविशेषात् त्रैविध्येनोपचारा दृश्यते वेदमधीते, विद्यामधीते, ब्रह्माधीते, इति । एवमेते त्रयोऽप्यर्था: 'सहैव गृहीता भवन्तीति शब्दसामान्याधिकरण्योपचार:, प्रावर्तत-स वेद' सा विद्या, तद्ब्रह्म । अथ परे सूक्ष्मदर्शिन: पश्यन्ति, यथाकथमपि प्रवर्तमान विज्ञान नत्वेव विषयानाकलित कुत्राप्युपलभ्यते । अतएव शब्दप्रति-ष्ठोऽपि नूनमयं विज्ञानभाव. कञ्चिद्विषय गृहीत्वैव कृतशरीर: स्यात्, तथा च शब्दप्रतिष्ठोऽय विषयप्रतिष्ठोऽपि । अथ यावता रूपे नाम्न: समयो न गृहीत: स्यात्-नत्वेव तावता शब्दार्थसम्प्रत्ययो भवति, सिद्धश्च तस्माद्रूपविषयक. संस्कार: सुतरा प्रतिपद्यते । अतश्च शब्दप्रतिष्ठोऽयं संस्कारप्रतिष्ठोऽपि । तदित्थमेक एवाय शब्दादुपजन्यमानो विज्ञानभाव: शक्यते त्रेधा व्यपदेष्टुम्-वेदश्च विद्या च ब्रह्म चेति ।

एव संस्कारप्रतिष्ठेऽपि नामरूपयोर्विषयप्रतिष्ठेऽपि नामसंस्कारयो. संक्रमो भवतीत्यनुसन्धेयम् । एक एव तु त्रयाणा तत्रादौ प्रवर्तते, इतरौ पुनरत्रानुवर्तेते

इत्यत एव वेदविद्याब्रह्मणां भेदव्यवहारः। सर्वत्र च सर्वे संक्रमन्ते–इत्यतस्तेषामभेदव्यवहारः–सवेदः, सा विद्या, तद् ब्रह्म।

केचित्त्वमुमेवार्थमित्थं पश्यन्ति। यथा कथमपि प्रवर्तमानं विज्ञानं न त्वेव विषयानाकलितं कुत्राप्युपलभ्यते। विषयरूपेणैव च तद्विज्ञानस्वरूपाधानात्। तस्माद्विषयरूपमेवतद्विज्ञानरूपमिति प्रमेयप्रमयोरभेदाध्यवसायः। एवं यथाकथमपि प्रवर्तमान विज्ञानं न त्वेवशब्दानाकलितं स्वरूपं धत्ते। शब्देनैवान्तःसूक्ष्मोच्चरितन तद्विज्ञानशरीरसम्पत्तेः। उक्तं च

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति।

तस्माच्छब्दरूपमेवैतद्विज्ञानरूपमिति प्रमाणप्रमयोरभेदाध्यवसाय। एवं यथाकथमपि प्रवर्तमानं विज्ञानं कञ्चित्संस्कारमुत्पादयदेवोत्पद्यते, न त्वेव संस्कारमनुत्पाद्यैतत्क्षणायापि आत्मानं धत्ते यद्यप्यपेक्षाबुद्धिसहकृतविज्ञानेनोत्पाद्यमानः संस्कारो यथा दृढतां याति न तथोपेक्षाबुद्धिसहकृतविज्ञानेनोत्पाद्यमानः संस्कारो दृढो भवतीति सत्यम्, तथापि सर्वथा संस्कारो नोत्पद्यते इति-वक्तुमशक्यम् यावदेवैतद्विज्ञानं प्रवर्तते तावदेवैतत्संस्कारस्य नाप्राप्तत्वात् तथैवानुभवात्। तस्मात् संस्काररूपमेवैतद्विज्ञानरूपमिति संस्कारप्रमयोरभेदाध्यवसायः।

इत्थं च निष्प्रतिपक्षं सिद्ध्यत्यमुष्यविज्ञानस्य शरीरकोटिप्रविष्टाः शब्द-संस्कार–विषया अन्योन्यतादात्म्यशालिनः सन्तीति। विज्ञानशरीरे प्रविष्टाना तेषां भेदपुरस्कारेण विज्ञानस्वरूपासिद्धेः। अतएव शब्दोपलक्षितविज्ञाने विवक्षितस्य वेदशब्दस्य, संस्कारोपलक्षितविज्ञानेविवक्षितस्य विद्याशब्दस्य, विषयोपलक्षितविज्ञाने विवक्षितस्य ब्रह्मशब्दस्य च परस्पराधिकरणासांकर्य्येण प्रयोगा उपपद्यन्ते। त्रितयोपलक्षितविज्ञानस्यैकत्वात्। तस्मात् स वेदः, सा विद्या, तद् ब्रह्म।

अथान्ये पुनरन्यथापि चक्षते। यथार्थज्ञानप्रतिपादके शब्दे किञ्चिदर्थविषयकविद्याप्रतिपादके शब्दे देवताप्रतिपादके च शब्दे मन्त्रशब्दश्चिराय रूढः, प्रतिपाद्यप्रतिपादकयोस्तादात्म्यदृष्टिश्च देवदत्तोगतः, देवदत्तोऽयमित्यादिलोकव्यवहारप्राप्ता महर्षिव्यवहारसिद्धा च। तथा चोक्तं शतपथश्रुतौ–"मधुवाता ऋतायत इति। यां वै देवतामृगभ्यनूक्ता यां यजुः, सैव देवता सर्क्, सो देवता तद्यजुः। तद्वैतन्मध्वेव एष तृचः, रसो वै मधु, रसमेवास्मिन्नेतद्दधाति" इति। अत एव यथार्थज्ञाने यत्किञ्चिद्विद्यायां देवताविशेषे च मन्त्रशब्दः सुवचः।

तस्मात् "नकिदेवा इनीमसि नकि आयोपयामसि। मन्त्रश्रुत्यं चरामसि" इति मन्त्रे मन्त्रशब्दो वेदार्थः प्रयुज्यते। "ऋषयो मन्त्रद्रष्टारः" इत्यत्र मन्त्रशब्दो

विद्यार्थं, विद्यामेव हि महर्षय श्रमेण तपसा परीक्ष्य पश्यन्ति। मन्त्रमाराधयेदित्यादिवाक्ये तु ब्रह्मार्थं, तस्यैवाराध्यत्वात्। एव मन्त्रोऽपि नैगमिका (१) वेदशब्दमागमिका (२) विद्याशब्द तथा "ओ३ मित्येकाक्षर ब्रह्म व्याहरन् मामनुस्मरन्" इत्यादिना व्यवहर्त्तारश्च ब्रह्मशब्द प्रयुञ्जते। तदित्थ व्यवहारसाकर्याद् वेदविद्याब्रह्मशब्दानामप्यैकार्थ्यं युज्यते-सवेद, सा विद्या तद् ब्रह्म।

त्रयो वेदा, त्रयी विद्या, त्रय ब्रह्म। य एतद्विजानाति स ब्राह्मणो भवति, तस्माद् ब्राह्मणस्याय निष्कारणा धर्मं, ब्रह्माधिगन्तव्यम्, विद्याधिगन्तव्या, वेदोऽधिगन्तव्य इति। तथा च श्रूयते 'ब्राह्मणेन निष्कारणा षडङ्गसरहस्यवेदोऽध्येतव्य" इति। अत्र निष्कारण इति वदता षडङ्गसरहस्यवेदाध्ययन ब्राह्मणस्याधिकारिको धर्म इत्यर्थ समुच्यते। यश्च ब्राह्मणो भूत्वा ब्रह्म नाधिगच्छेत् स ब्राह्मण्यात् पतित स्यात। तस्मान्नित्य ब्राह्मणस्य ब्रह्माधिगमन न तु काम्यमिति सिद्धम। तत्र तावद्यदुच्यते ब्रह्माधिगन्तव्यमिति, तत्रमे जागता सर्वं भावा एव ब्रह्म 'सर्वं खल्विद ब्रह्म" 'ब्रह्मवेद सर्वम्" इत्यादिश्रवणात्। अथ यदुच्यते विद्याधिगन्तव्येति, तत्रैतानि सस्कारजातान्येव विद्या।

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि। असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्॥ य आतृणत्यवितथेन कर्णावदु ख कुर्वन्नमृत सम्प्रयच्छन। त मन्येत पितर मातर च तस्मै न द्रुह्य त्कतमच्चनाह। अध्यापिता ये गुरु नाद्रियन्त विप्रा वाचा मनसा कर्मणा वा। यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुत तत्॥ यमेव विद्या शुचिमप्रमत्त मेधाविन ब्रह्मचर्योपपन्नम्। यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूयान्निधिपाय ब्रह्मन्।

इत्यादिश्रवणात्। "सेय विद्या श्रुतिमतिबुद्धि, तस्यास्तपसा पारमीप्सितव्यम्" इति निरुक्तादिस्मरणाच्च। अथाप्युच्यत वेदोऽधिगन्तव्य इति, प्रमाणजातान्येव तत्र वेद। "वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापति" इति श्रवणात्।

प्रत्यक्षणानुमित्या वा यस्तूपायो न बुध्यते।
एत विदन्ति वेदेन तस्माद्वेदस्य वेदता॥

इत्यादिस्मरणाच्च।

'आप्तोपदेशसामर्थ्याच्छब्दार्थसप्रत्यय" इत्यारभ्य "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" इत्येतदन्तैरष्टादशसूत्रै परमर्षिणा शब्दात्मक-

---

१ वैदिका। अग्निमीले इत्यादि वाक्यात्मके मन्त्रवेदशब्दस्य तै प्रयुक्तत्वात्।
२ तान्त्रिका ह्लीं श्रीं स्त्रीं—इत्यादि पदात्मकेमन्त्र विद्याशब्दस्य तै प्रयुक्तत्वात्।

प्रमाणाभिप्रायेणैव वेदपदार्थनिर्वचनाच्च । अथवा यदुच्यते ब्रह्माधिगन्तव्यमिति, ऋग्यजुःसामान्येव विषयात्मकानि तत्र ब्रह्मऋग्यजुःसामातिरेकेण जगद्विषयाभावात्।

यत्किञ्चिदिदं दृश्यते तत्सर्वमृग्यजुःसामसमवायः । अनन्ताश्च ऋग्यजुः सामसमवायाः । "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास तं ह जीर्णं स्थविरं शयानम् इन्द्र उपव्रज्योवाच भारद्वाज ! यत्ते चार्थमायुर्दद्यां किमनेन कुर्या इति । ब्रह्मचर्यमेवैतेन चरेयमिति होवाच । तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार । तेषां हैकैकस्मान्मुष्टिमाददे । स होवाच, भरद्वाजेत्यामन्त्र्य । वेदा वा एते । अनन्ता वै वेदाः । एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः अथैत इतरदननूक्तमेव । (तै० ब्रा० ३।१०।१०।३।४।) इति तैत्तरीयश्रवणात् ।

> अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
> दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥
>
> इति मनुस्मरणाच्च ।

तिस्र एवैता देवता इति नैरुक्ता आहुः-अग्निर्भूस्थानो वायुरन्तरिक्षस्थानः सूर्यो द्युस्थान इति । तदतो यत्किञ्चिदेवैतस्मिन् जगत्याग्नेयं तत्सर्वमृग्भवति तत्प्रतिपादकं च शास्त्रमृग्वेदः स्यात् । तथा यत्किञ्चिदेवैतस्मिन्जगति वायव्यं तत्सर्वं यजुर्भवति । तत्प्रतिपादकं च शास्त्रं यजुर्वेदः स्यात् । अथ यत्किञ्चिदेवैतस्मिञ्जगत्यादित्यं तत्सर्वं साम भवति । तत्प्रतिपादकं च शास्त्रं सामवेदः स्यात् । अतश्चैतेभ्य एवैते मन्त्राः संजाता इत्याहुः ।

अथ यदुच्यते विद्याधिगन्तव्येति । ऋग्यजुः सामान्येव संस्कारात्मकानि तत्र विद्या-"देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन्निति" (३।४।२।) "प्रजापतिर्लोकानभ्यतपत्—

अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात्। स एतां त्रयीं, विद्यामभ्यतपत्-" इति च छन्दोग्यश्रवणात् (१।१७।१-१०)।

"यदृचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवति । अथ केन ब्रह्मत्वं क्रियते इति त्रय्या विद्यया इति ब्रूयात्" इति ऐतरेयश्रवणात् (५।५।८) अथाप्युच्यते-वेदोधिगन्तव्य इति । ऋग्यजुःसामान्येव प्रमाणात्मकानि तत्र वेदः । "यस्मिन् वेदा निहिता विश्वरूपास्तेनौदनेनातितराणि मृत्युम्" (४।७।५।६) इत्याथर्वणश्रवणात् ।

'वेदेन रूपे व्यपिवत् सुतासुतौ प्रजापतिरिति" शुक्लयजुःश्रवणात् ।

"त्रयो वेदा अजायन्त । ऋग्वेद एवाग्नेरजायत । यजुर्वेदो वायोः सामवेद आदित्यात्" इत्यैतरेयश्रवणात् ।

"ये अर्वाङ् उत वा पुराणे वेद विद्वासममिति वदन्ति । आदित्यमेव ते परिवदन्ति सर्वे अग्नि द्वितीय तृतीय च हसम्" इति तैत्तिरीयारण्यक श्रणवात् ।

'धर्मं जिज्ञासमानाना प्रमाण परम श्रुति' ।
"वेदोऽखिलो धर्ममूलम्" वेदाद्धर्मोहि निर्बभौ" इत्यादिस्मरणाच्च ।

तथान्येतानि ब्रह्मविद्यावेदपदाभिधेयानि ऋग्यजु सामानि तानि विषय-सस्कारशब्दभेदात्त्रिविधानीति निष्कर्ष । तत्र विज्ञानोपाधिभूतानि विषयरूपाणि ऋग्यजु सामानि ब्रह्मपदार्थ । विज्ञानोपाधिभूतानि सस्काररूपाणि ऋग्यजु-सामानि विद्यापदार्थ ।

ऋग्यजु सामानि शब्दरूपाणि वेद इति हीदानी वेद पदार्थो निर्णीत । तत्र य शब्दसमुदायात्मक शब्दो योऽपि वा तदेकदेशभूत एकैकवाक्यात्मक शब्द उभयत्रापि पद्यगद्यगानत्रैविध्यात् परिच्छेदत्रयवत्त्वय वेदशब्दो निरूढ । शब्दपक्ष पद्यस्य ऋक्त्वात् । गद्यस्य यजुष्ट्वात् । गानस्य सामत्वात् । तत्रैकैकापिन्ऋग्वेदो भवति, अथ बह्व्य ऋच समुदिता अपि वेद । तत्र एकदेशभूते ऐकैकवाक्यात्मके शब्दे वेदशब्दवन्मन्त्रशब्दोऽपि सामानाधिकरण्येन प्रवर्तते । एकैका ऋग्, एकैक वा यजु एकैक च साम, भवत्येकैको मन्त्र । तस्मादेकैकविषयावबोधकमेकैक वाक्यमेकैका मन्त्र इति सिद्ध वेदापरपर्यायस्यापि मन्त्रस्य वदैकदेशत्वम् । अत एव सर्वानुक्रमणीवृत्तिभूमिकाया षड्गुरुशिष्य —

> मन्त्रब्राह्मणयोराहुर्वेदशब्द महषय ।
> विनियोक्तव्यरूपो य स मन्त्र इति चक्षते ॥
> विनयोक्तव्यरूपश्च त्रिविध सम्प्रदश्यते ।
> ऋग्यजु सामरूपेण मन्त्रो वेदचतुष्टये ॥

इत्येव मन्त्रस्य वेदशब्दप्रतिपाद्यत्वे प्रतिपाद्य तस्य तदतिरिक्तवेदैकदेशत्वम-भ्युपैति । "कर्मसम्पत्तिर्मन्त्रा वेदे' इति वदन् निरुक्तकारोऽप्यमुमर्थं द्रढयति । यथा च नैगमिका अमुष्मिन् मन्त्रजात वेदशब्द प्रयुञ्जते एवमागमिकास्तत्र विद्या शब्द व्यवहरन्तीति द्रष्टव्यम् । तदित्थ मन्त्रमात्रपरत्वाभिप्रायेणैव "इमे सर्वे वेदा निर्मिता सकल्पा सरहस्या सब्राह्मणा सोपनिषत्का सतिहासा सान्वाख्याना सपुराणा सस्वरा ससस्कारा सनिरुक्ता सानुशासना सानुमार्जना सवाको-वाक्या" इत्यवमथर्ववेदमन्त्र वेदशब्द प्रयुङ्क्ते । यतश्च प्रत्येकमन्त्राणा वेदत्व सिद्धयति तत एव वा मन्त्रसहिताया अपि वेदत्वमपरिहार्यम् यवराशेर्यवत्ववत वाक्यराशेश्च वाक्यत्वोपचारवत् । तत्र च वेदशब्दस्त्रयीशब्दसमानाधिकरण इत्यपि द्रष्टव्यम् ।

अथ मन्त्रब्राह्मणमित्याहुः "मन्त्रब्राह्मणयोर्वेदनामधेयमिति" बौधायनापस्तम्बादिसूत्रेषु "आम्नायः पुर्नर्मन्त्रश्च ब्राह्मणानि च" इत्यथर्ववेदीयकौशिकसूत्रादिषु—

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः।

इत्यादिमन्वादिवचनेषु च मन्त्रब्राह्मणयोरुभयोरेवायमाम्नायशब्दसमानाधिकरणो वेदशब्दः प्रवर्तते। यतश्च ब्राह्मणेऽप्ययं वेदशब्दः प्रसिद्धोऽत एव मन्त्रब्राह्मणयोर्मध्यकालसम्भूतानां गाथानामपि सिद्धमेव वेदत्वमित्यवधेयम्। अथ पुनः "मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्, मन्त्रार्थचिन्ताम्यूहमभ्यूढम्। तस्माद्यदेव किंचानूचानोऽभ्यूहति-आर्षं तद्भवति—

हृदा तुष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः।
अत्रा ह त्वं विजहुर्वेद्याभिरोह ब्रह्माणो विचरन्त्यु त्वे॥

ओहब्रह्माण ऊहब्रह्माणः—ऊह एषां ब्रह्मेति वा। सेय विद्या श्रुतिमति बुद्धिः, तस्यास्तपसा पारमीप्सितव्यम्" इति निरुक्तपरिशिष्टप्रकरणात् "विधिर्विधेयस्तर्कश्च वेदः" इति कल्पसूत्राच्च मन्त्रब्राह्मणातिरिक्तस्य मन्त्रार्थमीमांसारूपस्य तर्कस्यापि वेदत्वमास्थीयते। अत एव मानवे धर्मशास्त्र हि।

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः।
त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा।
दशावरा वा परिषद् यं धर्मं परिकल्पयेत्।
त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत्।
आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः।

इत्यादिना सत्तर्कस्य वेदार्थरक्षकत्वाद्वेदवदभ्यर्हणीयत्वं स्मर्यते। तर्कश्च 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति पारमर्षसूत्रे स्वरूपतो दर्शितः। तदित्थं मंत्राश्च ब्राह्मणानि च तर्कश्च वेद इत्ययमर्थोऽध्यवसीयते।

अत्रायमभिसन्धिः–शब्दोपहितं विज्ञानं वेदः, इति हि तावत्पूर्वं व्याख्यातम्, अथ च शब्दोपहितविज्ञानवद्विज्ञानोपाधिभूतः शब्दोऽपीष्यत एव वेदः, शब्द विज्ञानस्य तदविनाभावात्। शब्दश्चायं स्वतः प्रमाणमिष्यते, इतरानपेक्षत्वात्। अप्रामाण्यं तु तस्य दोषसमुच्चयादेवानुसन्धीयते, तेनायं शब्दस्त्रेधा–स्वतः प्रमाणम् परतः प्रमाणम्, अप्रमाणम्, चेति। अथवैतत् त्रयमन्यथा विभाषितव्यम्-

आप्त वाक्यम्, आप्तस्य वाक्यम्, अनाप्तवाक्य चेति। आप्तस्तु यथाभूतमर्थं प्राप्तः सत्यनिष्ठ, सत्य हि प्रमाणाना प्रमाणतममविचालि ब्रह्मतत्त्वम्। तथाविधसत्यार्थप्रतिपादकत्वात् सत्यनिष्ठमिद दिव्यभाषारूप प्रथम शब्दजात सर्वमपि सत्यमाप्तमस्तीत्यत एवाप्त वाक्यमित्युच्यते। यत्तावत्सत्यार्थप्रतिपादक वाक्य तत्कथ नामाप्रमाण भवितुमर्हतीत्यत एवैतदसन्दिग्धार्थप्रामाण्यक सर्वमिद वैदिक वाक्य नित्यप्रमाणमिष्यते, दोषागन्धानाघ्राणात्।

अथ परीक्षकभाषारूप द्वितीय शब्दजात दृष्टानेकसमयव्यभिचार भवतीत्यत. प्रमाणान्तरसवाद विना सत्यमिदमाप्तमनाप्त वेत्येव सदिग्धप्रामाण्यकत्वात् स्वप्रामाण्ये वक्तुराप्तत्व नितरामपेक्षते, आप्तस्य वाक्य चेत्प्रमाणमन्यथात्वप्रमाणमिति। प्रमाणान्तरसवादाद्वा तदाप्तत्वेन गृह्यते, वाक्यगृहीतोऽर्थो यदि नाम प्रमाणान्तरेण प्रत्यक्षादिनापि गृह्यते तदा तद्वाक्यस्याप्तत्व सुगृहीत भवति प्रमाणान्तरविसवादे त्वनाप्तत्वम्। अथ वाक्यगृहीतेऽर्थे तत्सवाद्येक विसवादि चैकमित्येव विरुद्धप्रमाणद्वयसम्पाते तु बलवत्प्रमाणानुरोधेन व्यवस्था।

एतमेवार्थं सर्वं सूचयितुमिवैतरेयकश्रुतौ "कोऽर्हति मनुष्य सर्वं सत्य वदितुम, सत्यसहिता वै देवा, अनृतसहिता मनुष्या" इति पूर्वपक्षीकृत्य "एतद्धै मनुष्येषु सत्य निहित यच्चक्षु." इत्यादि समाधाय च देवभाषाया नित्य प्रामाण्यम, मनुष्यभाषासु तु बलवत्प्रमाणान्तरसवादात्परत प्रामाण्यमिति व्यवस्थापितम्। तदित्थ क्वचिद्वक्तुराप्तत्वग्रहणाच्छब्दस्य प्रामाण्यम्, क्वचित्तु प्रमाणान्तरसवादाद्वाक्यस्याप्तत्व सुगृहीत भवतीत्यस्तत्प्रामाण्यादेव तादृशवाक्यप्रयोक्तुराप्तत्व प्रतिपद्यते। ईदृशमीदृश च वाक्य शब्दत्वात् स्वत प्रमाणमपि दोषसबन्धानुबन्धशङ्कया परत' प्रमाण भवति, अत एव प्रथमकक्षाकशब्दप्रामाण्यापेक्षयेदमवरकक्षाकप्रामाण्यवद् भवति।

अथ लोकभाषारूप तृतीय शब्दजातमपरीक्षकोक्तत्वाद् वञ्चकोक्तत्वाद्वा नि.सन्दिग्धाप्रामाण्यक भवति, तद्धि सत्याप्रतिष्ठितत्वादर्थं तथाभूतमनाप्त भवतीत्यप्रमाणमत्र, दोषगन्धाकुलितत्वात्। तथा चैतेषु त्रिविधेषु शब्दजातेषु यत् प्रथम दिव्यभाषारूप सत्यप्रतिष्ठितत्वादसन्दिग्धप्रामाण्यकमाम्नायते तत्रैवाय वेदशब्दो निरूढो न द्वितीये न त्वेव तृतीये–इति।

अत्रेद प्रत्यवतिष्ठन्ते-यत्तावदुच्यते, न द्वितीये न तृतीये इति-तदेतत्प्रतिज्ञामात्र भवति। शब्दवेदयोरुभयोरपि शब्दयो पर्यायाभिधायितया स्मर्यमाणत्वाच्छब्दसामान्ये शब्दशब्दसामानाधिकरण्येन वेदशब्दप्रयोगौचित्यात्। तथा हि भगवान् बादरायणस्तावद् "ईक्षतेर्नाशब्दम्, शब्दादेव प्रमित:, न विलक्षणत्वादस्य तथात्व च शब्दात्, युक्तेः शब्दान्तराच्च श्रुतेस्तु शब्दमूलत्वात्, शब्दाच्च, प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य, पृथिव्यधिकाररूपशब्दान्तरेभ्य, प्राणवता शब्दात्,

मांसादि भौमं यथाशब्दमितरयोश्च, अशुद्धमिति चेन्न शब्दात्, स एव तु कर्मानुस्मृतिशब्दविधिभ्यः, अन्यथात्वं शब्दादिति चेन्नाविशेषात्, पुरुषार्थोऽतः शब्दात, शब्दश्चातोऽकामकारे ।" इत्येतेषु ब्रह्मसूत्रे प्रमाणभूतं वेदं निर्दिदिक्षुः शब्दशब्दमभ्यासेन प्रयुङ्क्ते । शब्दसामान्ये प्रामाण्याभिमानाच्छब्दवेदयोरनर्थान्तरत्वाभिमानाच्च ।

वेदप्रमाणकोऽर्थो धर्म इत्यभिमन्यमानो भगवान् जैमिनिरपि "चोदनालक्षणोऽर्थो धर्मः, इत्येवं शब्दसामान्ये सम्भवन्ती चोदनामविशेषाल्लक्षणत्वेनोपदिश्य शब्दसामान्यस्य वेदत्वमभिप्रैतीति गम्यते । स्पष्टं चाग्रे वेदस्यैव धर्मे प्रामाण्यमस्ति न प्रत्यक्षादीनामित्युपदेष्टुम् "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं वादरायणस्यानपेक्षत्वात्" इति सूत्रेण शब्दसामान्यस्य धर्मे प्रामाण्यमाचष्टे । यदि शब्दविशेषोऽभविष्यत, नूनं तर्हि लौकिकशब्दस्य धर्मे निमित्तत्वं वारयितुमिह केनचिद्विशेषणेन शब्दं व्यशेषयिष्यत् । तस्माच्छब्दसामान्य धर्मे प्रमाणम् युक्तं चैतत्, अन्यथा "धर्मो राजकृतश्च यः" इत्युक्त दिशा राजकृतधर्माणां म्लेच्छादिधर्माणां वा धर्मशब्देन व्यवहारो व्याकुप्येत । कः पुनरपक्षपाती विद्वानेवमर्थं श्रद्दधीत यदिह ब्राह्मणग्रन्थोक्त एवार्थो धर्मोऽन्यस्तु धर्म एव नास्तीति ।

मास्माकं धर्मोऽभूदन्येषां तु सोऽवश्यं धर्मः तस्माद्धर्मसामान्यलक्षणे शब्दसामान्यं प्रमाणम, प्रमाणभूतस्तु शब्दा वेद इत्युच्यते–वेद इति वैदिकभाषाशब्दः प्रमाणार्थः, प्रमाणमिति संस्कृतभाषाशब्दो वेदार्थः । स्वे धर्मे यस्य यत्प्रमाणवाक्य स तस्य वेदः, तस्माच्छब्दसामान्य वेद इत्यवश्यमभ्युपगन्तव्यम् । परमर्षयश्च भगवन्तो गौतमादयः प्रमाणपरीक्षायां प्रमाणसंग्रहाय निर्दशितेषु प्रत्यक्षानुमानोपमानशब्देष्वविशेषाच्छब्दसामान्यस्य प्रामाण्यमुपदिशन्ति । यद्यपि चानन्तरं 'आप्तोपदेशः शब्दः" इत्येवं विशेषयन्तोऽनाप्तवाक्यानामुपसंग्रहं निराकुर्वते, तथापि दोषसमुच्चयात् तेषां फलोपधायकं प्रामाण्यं नास्तीत्यत्रैवार्थे तात्पर्यमवसेयम्, अन्यथानाप्तवाक्यानां शब्दत्वमेवापलप्येत, तच्चाशास्त्रार्थः स्यात् । प्रामाण्यं तु भवति द्विविधम्–अर्थागत च फलागतं च चेति ।

यदिह वास्तविकं तर्कादुपनीयते । तदर्थागतम्, फलागतं तु लोकव्यवहारे दृष्टप्रत्ययमृतच्चा वास्तविकमपि लोकव्यवहारोपयोगितया तदनुरोधादभ्युपगम्यते । तत्रदमर्थागतप्रामाण्यं शब्दसामान्यस्योपदिश्यते, फलागतं तु नितरामाप्तवाक्यस्यैव, नानाप्तवाक्यस्यापि । बलवत्प्रमाणान्तरविसंवादेन विरुद्धज्ञानसहकारात् पूर्वज्ञानोपजन्यव्यवहारप्रवृत्तिप्रतिबन्धात् । तथा चार्थागतं प्रामाण्यं शब्दसामान्यस्यास्तीति जैमिनिशास्त्रार्थः । तत्रेदमर्थागतं प्रामाण्य वेदशब्दप्रवृत्तिनिमित्तमिति भवेदयं द्वितीयस्तृतीयश्च शब्दो वेदः ।

अपर आह-गौतमीये प्रमाणसंग्रहसूत्रे न प्रत्यक्षमिन्द्रियात्मकम्, नानुमानं व्याप्यम् न वा शब्दः शब्दः । किन्तु ज्ञानविशेषा एवैते प्रत्यक्षानुमानशब्दशब्दै-रिष्यन्ते । प्रमा तावद् द्वेधा मुख्या, गौणा च । अत एव प्रमाणमपि द्वयम्-मुख्यं गौणं च । तत्र मुख्यप्रमाजनकानि ज्ञानान्येव चत्वारि गौणप्रमाणरूपाणीह प्रत्यक्षा-दिशब्दैर्निर्दिश्यन्ते । प्रत्यक्षप्रमाणलक्षणसूत्रे "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यप-देश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्" इत्यत्र स्पष्टं ज्ञानशब्दोल्लेखात् । ये तु केचित्साहसिकाः सूत्रमिदं प्रत्यक्षप्रमालक्षणतया व्याचक्षते ते प्रणम्या एवेत्यलम् । अथ "आप्तोपदेशः शब्दः" इत्यत्र सूत्रे यद्यपि ज्ञानजनकशब्दप्रयोगा-र्थोऽयमुपदेशशब्दः प्रयुज्यते तथापि प्रयुज्यमानशब्दजन्यज्ञानमेवात्र तदर्थो नेयः, तथैवौचित्यात् ।

अयमभिसन्धिः-सिद्धे शाब्दविज्ञाने ऐन्द्रियकज्ञाने वा नूनं तद्विरोधि-जिज्ञासा पश्चादुपतिष्ठते, सा क्षणमन्विष्यमाणा यदि नोपलभते प्रतिबन्दिनं कञ्चन दोषं तदा पूर्वज्ञानादेवास्य पाष्टिकं ज्ञानमवगमो नाम जायते, सा प्रमा व्यवहारोपयोगिनी, सा मुख्या सा चैका । तस्या एवोत्पादकानि त्रीणि चत्वारि षड्ष्टौ वा ज्ञानान्येव प्रमाणानि ।

अथ चेदसौ पश्यति कञ्चन दोषं बलवन्तं विरोधिज्ञानहेतुं तर्हि न ह्येवास्य तज्ज्ञानमवगमो नाम जायते, तत्रास्य शाब्दज्ञानस्यैन्द्रियकज्ञानस्य वा पाष्टि-कज्ञानजनकत्वरूपं मुख्यं प्रामाण्यमपोद्यते "आप्तोपदेशः शब्दः" "अव्यभिचारि प्रत्यक्षम्" इति विशिंषद्भिराचार्यैः । अथ गौणं तु प्रामाण्यमिन्द्रियस्येव शब्द-सामान्यस्यापि न शक्यते प्रत्याख्यातुम्, गृहीतसमयस्याव्यवहितोत्तरमेव शब्द-श्रवणादुपजायमानस्य विज्ञानस्य वारयितुमशक्यत्वात् । तत्रास्य गौणप्रामाण्यवत. शब्दसामान्यस्य शब्दज्ञानस्य वा वेदत्वमस्तीति जैमिनेर्धर्मप्रमाणपरीक्षातोऽवगम्यते, तस्मात्स्यादयं द्वितीयस्तृतीयश्च शब्दो वेदः ।

अपर आह-यथा कामलादिदोषसंयोगात्पीतशङ्खप्रत्यायकस्यापि चक्षुषः पीतत्वांशमात्रे प्रामाण्यमपोद्यते न तु सर्वथैतदप्रमाणमेव चक्षुरिति विश्वासः साधीयान् एकेनैव व्यापारेण जनितस्यैकस्य विशिष्टप्रत्ययस्य सर्वथैवाप्रामाण्ये-ऽभ्युपगम्यमाने शङ्खांशेऽपि प्रमाया अप्रमात्वापत्तेः न चेष्टापत्तिः, प्रतीति-विरोधात्, एवममुष्य शब्दस्यानाप्तोच्चरितत्वरूपदोषसंयोगादतथाभूतार्थप्रत्याय-कत्वेऽपि कस्मिंश्चिद्विशेषणांशमात्रे प्रामाण्यमपोद्यते, न तु सर्वथैतदप्रमाणमनाना-प्तवाक्यमिति विश्वासः साधीयान् ।

एकस्माद्वाक्यादेकदा प्रयुक्तादेकेनैव व्यापारेण जनितस्यैकस्य विशिष्ट-प्रत्ययस्य सर्वथैवाप्रामाण्येऽभ्युपगम्यमाने समवदर्थांशतोऽपि प्रमाया अप्रमात्वापत्तेः न चेष्टापत्तिः, प्रतीतिविरोधात् । तस्मादेवमंशाप्रामाण्येऽपि विशिष्टप्रत्ययस्य

प्रमात्वं न व्याहन्यते-इति सर्वविधः शब्दः प्रमाणमेवोपपद्यते। प्रमाणभूतश्च शब्दो वेद इति सिद्धं द्वितीयस्तृतीयश्च शब्दो वेद इति ।।

अपर आह–पीतशङ्खप्रत्ययेनेदं पीतत्वं नितान्तमविषयम्, प्रत्यायके चक्षुषि तेजसि पित्तसयोगात्तद्गोचरे पीतगुणोपलम्भस्य वास्तविकत्वात्। नापि वा तत्र पीतगुणस्य शङ्खेन सवन्धः प्रत्यायितोऽसदर्थः, पीतगुणकेन तेन तेजसा संवद्धे तस्मिन् शङ्खेऽवश्यमस्य पीतगुणस्योपसङ्क्रमणात्, तस्मात् सर्वथा पीतशङ्खप्रत्यायकमपीद चक्षुः प्रमाणमेव न त्वंशतोऽपीदमप्रमाणं भवितुमर्हति। प्रत्युत यदि पित्तसयुक्तं चक्षुरपीतं शङ्खं प्रत्याययेत् तदानीमेवेदमप्रमाणं स्यात् सतस्तत्र दोपकार्यस्य पीतत्वादेरनववोधात्। पीतं तु शङ्खं प्रत्याययदिदं भवत्येव पित्तविकारप्रत्ययहेतुत्वादविकलं प्रमाणम्।

यदि तु तस्य प्रामाण्यमेवापोह्येत तर्हि दोपज्ञानं संशयविपर्ययादिविशेषज्ञानं वा सर्वथैवापलपितं स्यात्, प्रमाणाभावादिति लोकव्यवहारोच्छेदप्रसङ्गः। तस्मात्सर्वं प्रत्यक्षं प्रमाणमेव, किन्तु नैवंविधेन प्रत्ययेन लोकव्यवहार. प्रवर्तनीयो दोपसमुच्चितत्वादित्येवमर्थं प्रतिपादयितुमिवेदमव्यभिचारिप्रत्यक्षं प्रमाणं भवतीति विशेषणेन भगवाननुजग्राह। एवमेवायं प्रथमे इत्यपुत्रे पुत्रत्व विदद्वञ्चकवाक्यं न नितान्तमविषयं भवति 'यन्मनसा मनुते तद्वाचा वदति" इति श्रुतेः प्रत्यायके शब्देऽपुत्रारोपितपुत्रत्ववुद्धिसंयोगात् तद्गोचरे पुत्रत्ववुद्धेर्वास्तविकत्वात्। तद्यसौ तत्र पुत्रत्वमभावयमानो ब्रूयात् नैवं तर्हि स तथा वाक्यं वक्तुमपि शक्नुयात्।

अथैवं भावितस्यापि पुत्रत्वस्य तेनापुत्रेण संवन्धः प्रत्यायितोऽसदर्थः स्यादित्यपि न भ्रमितव्यम्, पुत्रत्वारोपवुद्ध्या गृहीते व्यक्तिविशेषे प्रत्याय्यमानस्यैतस्य सम्वन्धस्यावश्योपगन्तव्यत्वात्-तस्मात् पुत्रत्वगुणकप्रत्यायकमिदं वाक्यं प्रमाणमेव न त्वंशतोऽप्यप्रमाणं भवतुमर्हति, प्रत्युत यद्यारोपवुद्धिसंयुक्तं वाक्यमनारोपितपुत्रत्वं व्यक्तिविशेषं प्रत्याययेत् तदानीमेवेदमप्रमाणं स्यात्, सतस्तत्रारोपकार्यस्य पुत्रत्वादेरनववोधनात्।

आरोपितपुत्रत्ववन्तं तु प्रत्याययदिदं भवत्येवारोपप्रत्ययहेतुत्वादविकलं प्रमाणम् यदि तु तस्य प्रामाण्यमेवापोह्येत तर्हि वञ्चकत्वज्ञानमविज्ञत्वज्ञान वा सर्वथैवापलपितं स्यात्, प्रमाणाभावादिति लोकव्यवहारोच्छेदप्रसङ्गः। तस्मात्सर्वः शब्दः प्रमाणमेव, किन्तु नैवंविधेन प्रत्ययेन लोकव्यवहारः प्रवर्तनीयो दोपसमुच्चितत्वादित्येवमर्थं प्रतिपादयितुमिवेदमाप्तवाक्यं शब्दः प्रमाणं प्रभवतीति विशेषणेन भगवाननुजग्राह। इत्थं च सति शब्दानामप्रामाण्यकारणं नोपलभामहे, ततः सर्वविधः शब्दः प्रमाणमेवेति प्रतिपद्यामहे, प्रमाणशब्दस्तु वेद इति भवेदय द्वितीयस्तृतीयश्च शब्दो वेदः।

अथवेदमन्यथान्यथा निरूपयितु पारयाम । अय मे पुत्र इत्येकमेवेद वाक्य पुत्रे पुत्रज्ञान विदधत् क्वचिदपुत्रेऽपि पुत्रज्ञान विधत्त तत्रैतस्यैकस्यान्यत्र प्रामाण्य-मेकत्राप्रामाण्यमिति द्वैविध्य नोपपद्यते–प्रमाणस्याप्रमाणत्वासभवात्। अथवा यत्र क्वचिदस्य प्रामाण्यमुपगम्यते तावतैव तु पर्याप्त प्रामाण्यमेतस्य शब्दस्य प्रतिपत्तु पारयाम:। न वय ब्रूमो यत् प्रमाण सर्वत्र प्रमाण तदेव प्रमाण स्यादिति, अपि तु यदेकत्रापि क्वचित् प्रमाण तदपि प्रमाण शक्य व्यपदेष्टुमिति पश्याम ।

अथवा सर्वत्र शब्द स्वविषये स्वत प्रमाणम्, अप्रामण्यन्तु तस्य परत प्रतिपद्यते। अय मे पुत्र इति हि वाक्य सर्वत्रैव पुत्र पुत्रज्ञान जनयत् प्रमाण भवितुमर्हति तदेतदनाप्तो यद्यपुत्रे प्रयुञ्जीत सोऽय प्रयोक्तु प्रयोगदोषो भवति न शब्ददोष । अस्तित यदि पुत्र प्रयुक्त, अस्ति वा यद्यपुत्रे प्रयुक्त सर्वथाय शब्द पुनरेकरूपेणार्थमभिधत्ते, तस्मादय सर्वविध एव स्वत प्रमाणमिति मन्यामहे। प्रमाणवाक्य च वेद इति भवेदवाय द्वितीयस्तृतीयश्च शब्दो वेद ।

अथ ब्रूयात्–अस्तु तावदय सर्वविध एव शब्द प्रमाणम् अथापि न सर्वविध एव शब्द शक्यो वेद इति व्यपदेष्टुम्। न खलु वेदशब्दा यौगिको येनाय प्रमाण-पदसामानाधिकरण्येन प्रदेशमवगाहेत, अपि तु सज्ञाशब्दोऽय प्रमाणविशेष रूढ । स यत्र यत्र प्राचामभियुक्ताना व्यवहारे भूयसा प्रयुक्तो दृश्यते तत्र तत्रैन रूढ मन्यामहे, न तेषा प्रदेशानामेकस्मादप्येन वेदशब्दमपवारयामो न वातिरिक्ते प्रदेशे प्रौढिवादेन सचारयाम स यथेद मन्त्रसहितामात्र वदो न ब्राह्मण न तर्क इति साहसिकानां प्रवाद प्रलापमात्रोऽवज्ञायते तथैव तु निर्विशेष दिव्यभाषावत् परोक्षकभाषा लोकभाषा च वेद इत्यप्यनभिज्ञाना प्रवाद. प्रलापो नास्तीति न जातु मन्यामहे तस्मात् सुष्ठूक्तमय वेदशब्द प्रथमे रूढ' न द्वितीये न तृतीये चेति। अत्रदमावदमहे –

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।<br>
एत विदन्ति वेदेन तस्माद्वेदस्य वेदता॥

(सा वे भा भू)

इत्येवमादिस्मरणात प्रमाणविशेषेपृ तृतीये प्रमाणसामान्ये वेदशब्दा रूढ इति विज्ञायते, अत एव च वेदा प्रमाणमित्यपि स्मृति. सगच्छते, अन्यथा वदस्य शब्दातिरिक्तप्रमाणत्वेऽभ्युपगम्यमाने चतुर्थप्रमाणसिद्धौ तदतिरिक्तानामेव-प्रत्यक्षादीना प्रामाण्य समर्पयत् सर्व प्रामाणपरीक्षाशास्त्रमपर्याप्त स्यात्। दिव्य भाषामात्रस्य वा वेदत्वेऽभ्युपगम्यमाने तस्यैव प्रामाण्यसमर्पकशास्त्रे सन्निवेशाभ्युप-पत्त्या लोकभाषावत् परोक्षकभाषाया अप्यप्रामाण्यापत्तिरिति सर्वलोकव्यवहारो-च्छेदनप्रसङ्गो लोकविरोधश्च स्यात्, आपामर लोके व्यवह्रियमाणाना शब्दाना

प्रामाण्यस्याबालवृद्धं सुप्रतिपन्नत्वात्। तस्मादनपेक्षत्वात् स्वतः प्रमाणभूताः सर्वविधा एव शब्दाः प्रमाणत्वेनैव वेदत्वेनाप्यभ्युपगन्तव्याः, प्रमाणशब्दत्वस्यैव वेदशब्दप्रवृत्तिनिमित्तत्वादिति सिद्धम्। तथा च सति यदुच्यते न द्वितीये न तृतीये इति साहसमात्रं तु तद्ब्रवतीति।

अत्रेदं प्रतिवक्तव्यम्। नित्यप्रमाणशब्दत्वं वेदशब्दप्रवृत्तिनिमित्तं न प्रमाणशब्दत्वमात्रम्, रागद्वेषादिदोषसंसर्गशङ्कयोपजायमानासत्यनिष्ठत्वसंदेहनिरासाय प्रत्यक्षादिप्रमाणान्तरसंवादसापेक्षत्वात् परतः प्रमाणे स्मृत्यादिशब्दे प्रमाणतयैवोपगृहीतेऽपि तत्र वेदशब्दव्यवहारादर्शनात्। अथवा स्पष्टशब्दैर्नैवेदानीं व्याख्यास्यामः—ऋग्यजुःसामपदप्रसिद्धा मन्त्राः, कल्पारण्यकोपनिषत्पदप्रसिद्धा ब्राह्मणानि, प्रतिष्ठितसत्तर्कश्चेत्येतदर्थत्रयरूपायां नित्यप्रमाणभूतायां दिव्यभाषायामेवायं वेदशब्दो निरूढः, प्राचां तथा व्यवहारदर्शनात्। न तु परीक्षकभाषा लोकभाषा वा वेदो भवितुमर्हतिप्राचां तत्र वेदशब्दप्रयोगादर्शनात्।

यत्किञ्चिद्गुणानुरोधप्रकल्पितसमयमात्रसाराणां संज्ञाशब्दानां योगरूढशब्दानां वा प्रदेशेषु नियतेषु सत्सु योगानुरोधान्न्यूनातिरिक्तप्रदेशकल्पनमन्याय्यम्, तस्मात् तृतीये प्रमाणसामान्ये वेदशब्दो रूढ इति यदुक्तं तन्नावकल्पते। प्रत्यक्षेणानुमित्या वेत्यादिस्मृतिस्तु प्रत्यक्षानुमित्ययोग्येविप्रकृष्टतमेऽतीन्द्रियाद्यर्थे लौकिकपरीक्षकशब्दानामप्ययोग्यता कथं कर्त्तव्यमित्येवं विजिज्ञासूनामनुग्रहाय प्रवर्तमाना सत्यज्ञानानन्दमयार्थप्रतिपादकत्वान्नित्यप्रमाणभूतेन दिव्यभाषाशब्देनानपेक्षप्रमाणेनानपेक्षं ज्ञानं कर्तव्यमित्युपदिशति केवलं न तु तृतीये प्रमाणसामान्ये वेदशब्दस्य वृत्तिं प्रतिपादयितुमेषा प्रवर्तते तस्मादन्यार्थेनान्यार्थप्रकल्पनामशास्त्रार्थः। जैमिनीयशास्त्रास्यापि धर्मसामान्यं प्रति शब्दसामान्यं प्रमाणमत एव धर्मविशेषं प्रति शब्दविशेषः प्रमाणं स्यात्, तथा चैतस्य चातुर्वर्ण्यचातुराश्रम्यव्यवस्थानरूपस्यार्यधर्मस्य प्रमाणभूतो यः शब्दविशेषो वेदाख्यः स शब्दतोऽर्थतः सम्बन्धतश्च सम्यग् विचार्य्यते येन धर्मलक्षणं व्यापन्नं न भवेदित्येवं परतया प्रवृत्तिर्न तु शब्दसामान्ये वेदशब्दप्रवृत्तिमाख्यातुं तत् प्रवर्तते, तादृशतात्पर्यग्राहकवचनस्य तत्रदृष्टत्वात्।

अथ लोकव्यवहारोपयोगिफलागतं प्रामाण्यमाप्तवाक्यस्यैवास्ति नानाप्तवाक्यस्येत्युपदिशद् गौतमशास्त्रं लोकभाषामात्रपरित्यागेनान्येषां दिव्यभाषापरीक्षकभाषयोरविशेषं शब्दानां प्रामाण्यमनुविधत्ते, न तु तावता परीक्षकभाषाशब्दानां वेदत्वमप्यनुसंधत्त इत्यत्र किञ्चित्प्रमाणमस्ति। न त्वेवार्थागतं प्रामाण्यं न तु वा फलागतं वेदशब्दप्रवृत्तौ निमित्तं तच्छास्त्रादवसीयते, अर्थागतस्य लोकभाषाशब्दे फलागतस्य च परीक्षकभाषाशब्देऽतिव्याप्तत्वादुभयत्रापि तु तत्र वेदशब्दस्यानिष्टत्वात्। अथ खलु इहैव शास्त्रे शब्दप्रामाण्यपरीक्षाप्रकरणे वेदा-

प्रामाण्यमाशङ्क्य यदुत्तरतो महत्यारम्भटया निराकृतं तत् खलु प्रामाणभूतशब्दमात्रस्य वेदत्वमवसीयत इति तु न भ्रमितव्यम् ।

आप्तवाक्यत्वाविशेषाद्दिव्यभाषापरीक्षकभाषयोरविशेषेण प्रामाण्ये विहितेऽपि येभ्यो लोकभाषाया अप्रामाण्यं निर्द्धारितं तेभ्य एवानृतव्याघातपुनरुक्तदोषेभ्यः परीक्षकभाषास्वपि कुत्रचित् प्रामाण्यापवाददर्शनात् तत्सामान्यादेवतस्या दिव्यभाषाया अपि कस्मादप्रामाण्यं नावधीयते इति शङ्कायां सत्यां तन्निराकरणेन दिव्यभाषाशब्दे निरपवादं नित्यप्रामाण्यं संस्थाप्य तत्सामान्यादेव प्रामाण्यापवादकानृतादिदोषसंयोगाभावात् परीक्षकभाषाशब्देऽपि प्रामाण्यमन्यथा त्वप्रामाण्यमिति संसूच्य दिव्यभाषापरीक्षकभाषयोर्भेदसंसाधनायैव तत्प्रकरणप्रवृत्तेः, तस्माल्लोकभाषापरीक्षकभाषाभ्यामतिरिक्तैव दिव्यभाषा वेदपदार्थो न शब्दसामान्यम् ।

यत्तु भगवता बादरायणेन भिक्षुसूत्रे वेदपरतया तृतीयप्रमाणार्थः शब्दशब्दो भूयसा प्रयुज्यते न तेनापि शब्दसामान्यस्य वेदत्वमभ्युपगन्तु युक्तम् । औपनिषदार्थमीमांसायामुपनिषद्वचनानामेव प्रकृतत्वात् तत्रत्यशब्दशब्देन नित्यप्रमाणशब्दस्यैव ग्रहणौचित्यात् । अत एव तु परीक्षकभाषाग्रहणार्थमनेकधा तत्र प्रयुज्यते स्मृतिशब्दः । अन्यथा स्मृतिवचनानामपि शब्दत्वाविशेषात्पृथगिवैतद् व्यवहारो व्याकुप्येत । तस्माच्छब्दसामान्ये कथंचित् प्रामाण्याभ्युपगमेऽपि वेदशब्दप्रवृत्तिनिमित्तलाभादयं वेदशब्दः प्रथमे दिव्यभाषाशब्द एव रूढो न द्वितीये परीक्षकभाषाशब्दे नापि वा तृतीये लोकभाषाशब्द इति सिद्धम् ।

अथैतस्मिन् दिव्यभाषाशब्देऽप्यस्ति किञ्चित्तारतम्यम् । तथाहि—

"साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च"

इति हि भगवान् यास्को निरुक्तकारः प्राह । तथा च ब्राह्मणादिग्रन्थप्रणेतॄणामवरेषां काले साक्षात्कृतधर्मणां मन्त्रद्रष्टॄणामेवाप्तत्वमर्थप्राप्तमासीदित्यतस्तदानीमृग्यजुःसामभेदभिन्नानां मन्त्राणामेव वेदत्वं व्यवहृतं दृश्यते ब्राह्मणग्रन्थेषु । अथ मन्त्रब्राह्मणोभयाधारेण वेदाङ्गसूत्रनिर्मातॄणां ततोऽप्यवरेषां काले मन्त्रब्राह्मणयोरुभयोरेवाप्तवाक्यत्वेन विवक्षणमर्थसिद्धं भवतीत्यतस्तदुभयोरेव वेदशब्दव्यवहारः प्रावर्तत ।

अथ पुनरनृषीणामतपसामल्पज्ञमनुष्याणां समये तत्तदतीन्द्रियार्थविचारणापराणां ब्राह्मणभागानपि स्पष्टमर्थस्याप्रत्यक्षतया मन्त्रभागवद् दुरधिगमा-

थत्वमभवदिति दृश्यते। तथा च मुण्डे मुण्डे मतिर्भिन्नेति हेतोः क्रमशः प्रवर्तमानानेकार्थविडम्बनातिरोभूतवस्तुयाथात्म्यकाले धर्मं साक्षात्कृत्य यथाभूतार्थनिर्णयस्य कर्तुमशक्यतया चतुर्दिक्षु धर्मविप्लवप्रकरणे प्रवर्तमाने प्रतिष्ठितसत्तर्कमन्तरा गतिर्नास्तीति गम्यते। तदुक्तं निरुक्ते भगवता यास्केन "अयं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढः। अपि श्रुतितः तर्कतश्च। न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः, प्रकरणश एव तु निर्वक्तव्याः। न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति" इति श्रुतित इति ब्राह्मणवचनात्।

तर्कत इति निर्वचनतो मीमांसातो युक्तितश्च। अवश्यं हीयं युक्तिरतीवादरणीया। तथा चाहुरभियुक्ताः, दृष्टसाधर्म्येण चादृष्टमर्थं समर्पयन्ती युक्तिरनुभवस्य सन्निकृष्यते विप्रकृष्यते, तु श्रुतिः, ऐतिह्यमात्रेण स्वार्थाभिधानात्। अनुभवावसानं च ब्रह्मज्ञानविद्याया निवर्तकं मोक्षसाधनं च दृष्टफलतयेष्यते। श्रुतिरपि श्रोतव्यो मन्तव्यः इति श्रवणव्यतिरेकेण मननं विदधती तर्कमप्यत्रादर्तव्यं दर्शयति" इति (शां० भा० २।१।४) अन्यत्रापि तु 'पण्डितो मेधावी गन्धारानेवोपसंपद्येत, एवमेवेहाचार्यवान् पुरुषो वेद" इत्येव प्रतिपादयन्ती श्रुतिरेव पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति। सत्य चेतत्, अन्यथा सत्तर्कसम्बन्धमनपेक्षमाणानामतीन्द्रियादिविप्रकृष्टार्थेष्वपिगृहीतसम्बन्धानां मनुष्याणां स्वतः समुद्भूतकुतर्कमहाग्राहग्रस्तस्वार्था इमे मन्त्रब्राह्मणभागा वेदो अप्यवेदा एव स्युरिति सम्भाव्यते। वेदपुरुषोऽपि –

> उत त्वःपश्यन्न ददर्श वाचमुतत्वःशृण्वन्न शृणोत्येनाम्।
> उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः॥
> अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः।
> आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे॥

इत्येवं शाब्दविज्ञाने प्राज्ञातारतम्यात्तारतम्यं मन्त्रयन्नमुमेवार्थं द्रढयतीव। तस्मादीदृशे काले सर्ववेदानां वेदत्वसमर्थकः सत्तर्कोऽप्यवश्यं तृतीयो वेद इति महर्षयः पश्यन्ति।

तदित्थं शब्दोपहिते विज्ञाने वेदशब्दस्य मुख्या वृत्तिः, विज्ञानोपाधिभूते च नित्यानपेक्षमाणे शब्दे द्वितीया। तत्रापि पुनर्मन्त्रे प्रथमा वृत्तिः ब्राह्मणे द्वितीया, तर्के तृतीया इति हीदानीं यावदर्थतत्त्वं संसिद्धम्।

अथ पुनरन्यदुच्यते। संसिद्धसकलजगत्तत्त्वविज्ञाने तावदयं वेदशब्दः संसिद्धः।

यज्ञाना तपसा चैव शुभाना चैव कर्मणाम् ।
वेद एव द्विजातीना निःश्रेयस्कर पर ।

इत्यादिषु तादर्थ्येनैव वेदशब्दव्यवहारात् । एतदभिप्रायेणैव 'वेदाश्चैके सनिकर्ष पुरुषाख्या. । अनित्यदर्शनाच्च उक्त तु –

शब्दपूर्वत्वम् । आख्याप्रवचनात् । पर श्रुतिसामान्यमात्रम्" । इति सूत्रेभ्यो भगवान् जैमिनिरपौरुषेयत्व नित्यत्वञ्च वेदस्य दर्शयामास । न हि तावद्विज्ञान पुरुषप्रयत्नसाध्य, नापि शब्दाना गात्वादिसामान्यविज्ञानं सह वृत्तिनियामक. कश्चन सम्बन्ध पुरुषप्रयत्नसाध्य । नापि शब्द स्वरूपत पुरुषप्रय नसाध्य । तस्मादपौरुषेयो वेद इति युक्तमेतत् ।

अथ तामेता विद्या व्यवसायसहकारेण बुद्धौ स्वयमेवाविर्भूता तत्रभवानाप्तो महर्ष्यादि परबुद्धिप्रवेशानुग्रहार्थं कयाचित्परिपाट्या मनसैव मनिबध्नाति, तादृशपरिपाटीपरिकल्पिते शब्दाभिनयनिरपेक्षे सोपक्रमोपसहारे प्रकाशप्रधाने विषयजाते । छन्दश्श्रुतिनिबन्धादिशब्दसमानाधिकरणो वेदशब्दः प्रवर्तते ।

"भरद्वाजो ह त्रिभिरायुभिर्ब्रह्मचर्यमुवास । त ह जीर्णि स्थविर शयानमिन्द्र उपव्रज्योवाच । भरद्वाज ! यत्ते चतुर्थमायुर्दद्याम् किमनेन कुर्या इति । ब्रह्मचर्यमेवानेन चरेयमिति होवाच । त ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार, तेषा हैकैकस्मान्मुष्टिमाददे । स होवाच भरद्वाजेत्यामन्त्र्य वेदा वा एते, अनन्ता वै वेदा एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः, त इतरदननूक्तमेव ।"
(तै० ब्रा० ३।१०।११।३।४)

इति तैत्तिरीयश्रुत्य। तथावगमात् । एतदभिप्रायेणैव—"न नित्यत्व वेदाना कार्यत्वश्रुते. । न पौरुषेयत्व तत्कर्तु पुरुषस्याभावात् । मुक्तामुक्तयोरयोग्यत्वात् । नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् । तेषामपि तद्योगे दृष्टबाधादिप्रसक्ति. । यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम्" इतिसूत्रेभ्यो भगवान्कपिलोऽनीश्वरवादी प्राकृतिकत्वादपौरुषेयत्व कार्यत्व च वेदस्य दर्शयामास । भगवान्बादरायणस्तु "शास्त्रयोनित्वात्" इतिवदप्यपौरुषेयत्वमीश्वरजन्यत्वञ्च वेदस्य दर्शयामास । बुद्ध्युत्पत्तौ. प्राग्बुद्धिविषये वा बुद्धिक्रमबन्धे वा बुद्धिस्वरूपे एव वा न समर्थते पुरुष किन्तु प्रकृतिनियमसिद्ध एवाय बुद्धिक्रमोदय इति सुव्यक्तमेतत् ।

अथ नत्वेवाय प्रज्ञप्तिव्यापारः खलु वाग्व्यापारमनन्तर्भाव्य प्रवर्तमानो दृष्ट इत्यवश्यमसौ निबन्धः शब्देनाभिनीयमानो भवति । तत्र च तादृशे निबन्धच्छायास्पैर्यप्रधाने शब्दजाते ग्रन्थसन्दर्भादिशब्दसमानाधिकरणो वेदशब्द· प्रवर्तते ।

"स्थाणुरयं भारहारः किलाभू—
दधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते ।।
नाकमेति ज्ञानविधूतपाप्मा" ।।

इत्यादिश्रुतिषु तादर्थ्येनैव तत्प्रयोगात् । एतदभिप्रायेणैव—"बुद्धिपूर्वा वाक्यकृतिर्वेदे । ब्राह्मणे संज्ञाकर्मसिद्धिलिङ्गम्" इतिसूत्राभ्यां भगवान् कणादः कृतकत्वं वेदस्य दर्शयामास । मन्त्रसूक्तादिपरिच्छेदविन्यासानामप्राकृतत्वादपि सम्बन्धश्रवणाच्च पौरुषेयत्वं युक्तम् ।

अथ पुनरसौ ग्रन्थोऽपि चिराय स्थायित्वसम्पत्तये लिपिसात् क्रियते । तत्रैतस्मिन् सोपक्रमोपसंहारे शब्दलिपिप्रधाने पत्रजाते पुस्तकादिशब्दसमानाधिकरणो वेदशब्दो व्यवह्रियते । अय च व्यवहारः सामान्यतो लौकिकेष्वेव दृश्यते न विशिष्टेषु । श्रुतिस्मृत्यादिषु भूयसा तादर्थ्येन वेदशब्दानुल्लेखात् । तदित्थमन्तःकरणवृत्तिदूरीकृतान्तरायतया यतकिञ्चिद्विषयावच्छेदेनानुभूयमानप्रकाशात्मके ब्रह्मणि मुख्या वृत्तिः, तस्यैव पुनः क्रमनिबन्धवैशिष्ट्ये निबन्धग्रन्थवैशिष्ट्य निबन्धपुस्तकवैशिष्ट्ये चौपचारिकीत्येवं चतुष्टयी वेदशब्दप्रवृत्तिः, तथाचैकेषामपि वेदानां मन्त्रनिबन्धग्रन्थादिनानाभावव्यपदिष्टानां स्वस्वरूपेणाकर्तृकत्व ईश्वरविभूतिरूपसूर्यादिकर्तृकत्वेऽपि वा सभवत्यपि औपाधिकं मनुष्यकर्तृकत्वमस्तीति विषयभेदाभिप्रायेण सर्वं समञ्जसम् । अत एव "नित्या वागुत्सृष्टा स्वयंभुवा" "यो वै ब्रह्माणं विदधाति पूर्वं यश्चास्मै प्रहिणोति वेदम्' अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्मस्वयंभु अभ्यानर्ष, तदृषयोऽभवन्" "यज्ञेन वाचः पदवीयमायस्तामन्वविन्दनृषिषु प्रविष्टाम्" इत्यादिश्रुतिभिस्तथा—

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतःसर्वाः प्रवृत्तयः ।।
युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ।।

इत्यादिभिः स्मृतिभिश्च योऽयं वेदानामकृतकत्वप्रवादो दृश्यते, यश्च—"भृगुर्वै वारुणिर्वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति"—इत्युपक्रम्य "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद् ब्रह्म" इति श्रुत्या, "विज्ञानमानन्दं ब्रह्म"—आनन्दादेव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति" इत्येवमादिश्रुत्या च ब्रह्मप्रतिपादकत्वात्प्रतिपाद्यविषयप्राधान्याद्वेद एवेश्वर इतिप्रवादः, यश्च "अस्य महतो भूतस्य निःश्वसितमेतत् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इति"

"यः सर्वज्ञ सर्ववित् यस्य ज्ञानमयं तपः,
तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते"।
"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत"॥

इत्यादिभिः श्रुतिभिर्वेदानामीश्वरजन्यत्वप्रवादः, यश्च 'तिस्रो वाच ईरयति प्रवह्निर्ऋतस्यधीतिंब्रह्मणोमनीषाम्"। "वह्निरादित्यो भवति। स तिस्रो वाचः प्रेरयति ऋचो यजूंषि सामानि, ऋतस्यादित्यस्य कर्माणि ब्रह्मणो मतानि। एष एवैतत्सर्वमक्षरम्" इति यास्कीयमन्त्रनिर्वचनपरिशिष्टात् तथा "य अर्वाङ्‌तथा पुराणे वेद विद्वासमभिता वदन्ति। आदित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हंसम्"।

इत्यादितैत्तिरीयकमन्त्रात्—'सैषा त्रयी विद्या तपति य एष तपति" इत्यादिब्राह्मणवचनाच्च वेदानामीश्वरविभूतिजन्यत्वप्रवादः, यश्च "यामृषयो मन्त्रकृतो मनीषिण अन्वैच्छन् देवास्तपसा श्रमेण ता दवो वाच हविषा यजामहे स नो दधातु सुकृतस्य लोके" "नमः ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रविद्भ्यः। मामृषयो मन्त्रकृतो मन्त्रविदः प्रादुर्देवी वाचमुद्यासम्" इत्यादिमन्त्राम्नानात् तथा ऋषयो मन्त्रद्रष्टारः, एष वै ब्राह्मण ऋषिरार्षेयो य शुश्रुवान्,तदेनदृषिः पश्यन्नभ्यनूवाच' इत्यादिब्राह्मणवचनाच्च वेदानां महर्षिप्रोक्तत्वप्रवादः तेषामेषां पञ्चानामपि प्रवादानां परस्परविरोधाः परास्ताः। इत्थं तावच्छब्दपक्षे व्याख्यातम्।

अथ खलु विषयपक्षे तदेतद् ब्रह्म त्रेधा विभज्य व्याख्यायते, आधिदैविकमाधिभौतिकमाध्यात्मिकं चेति। यत्किञ्चिदेवेदं जगत्प्रपञ्चमानं दृश्यते तत्सर्वं देवोपादानकमेव। अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः। एते वै यज्ञस्यान्त्ये तन्वौ, यदग्निश्च विष्णुश्च तस्माद्यज्ञविद्यया सर्वं जगद्विज्ञायेत। यज्ञश्च हौत्राध्वर्य्यवौद्गात्रसाध्यः, तत्र हौत्रसाधनमृक्। आध्वर्य्यवसाधनं यजुः, औद्गात्रसाधनं साम। इत्थं च ऋङ्मण्डलयजुर्मण्डलसाममण्डलसमवायो यज्ञः। तदेतन्मण्डलत्रयप्राधान्याधिकारेणाधिदैविकवेदत्रेधा—ऋग्वेदः यजुर्वेदः सामवेदश्चेति, तदेतदादिमे महायजुर्वेदग्रन्थे प्रपञ्चितमस्ति। आधिभौतिकविद्याऽपि त्रेधा। भूर्विद्या, भुवर्विद्या, स्वर्विद्या चेति।

तत्र चराणामचराणां च ज्योतिषामन्योन्यसंबन्धस्थितिगत्यादिभिः कालविज्ञानेन दैवयोगविज्ञानं स्वर्वेदः। अग्निवायुपर्जन्यादिदेवानामन्तरिक्षस्थानामन्योन्यसम्बन्धेन वृष्ट्यादिविज्ञानं भुवर्वेदः। भूमिष्ठानां धातुजीवमूलानां प्रादेशानां सामाजिकानां चानुबन्धेनायुर्वेदादि सर्वार्थविज्ञानं भूर्वेदः। तदेतदादिमे श्रीमद्ब्रह्मपुराणे सृष्टिप्रतिसृष्टिवंशवंश्यानुचरितादिनिरूपणप्रसंगे प्रसक्तानुप्रसक्त्या सर्वं

प्रपञ्चितमस्ति। केचित्तु आधिदैविकविद्यामधियज्ञत्वेन आधिभौतिकविद्यां त्वाधिदैविकत्वेनाभिप्रयन्तीति बोध्यम्। अथाध्यात्मिकमपि त्रेधा शारीरिकं मानसिकमात्मिकं चेति। शारीरप्रयत्नाभिनिर्वर्त्यं शरीरानुबन्धिफलकं च कर्मजातं यज्ञधर्माख्यं कर्मकाण्डेन ब्राह्मणपदप्रसिद्धेन मानसप्रयत्नाभिनिर्वर्त्यं मनोनुबन्धिफलकं च कर्मजातं योगधर्माख्यमुपासनाकाण्डेन आरण्यकपदप्रसिद्धेन आत्मनिर्वर्त्यमात्मानुबन्धिफलकं कर्मजातं विज्ञानधर्माख्यं ब्राह्मणग्रन्थेषु प्रपञ्चितम्। तत्र परनिष्ठानां धर्माणां परस्मिन् सम्पादनम् यद्वा परनिष्ठानां धर्माणामात्मनि सम्पादनम्, यद्वा आत्मनिष्ठानां धर्माणां परस्मिन्सम्पादनम्, इत्येतत्त्रयं कर्मकाण्डपदार्थः। एषां त्रयाणां यज्ञतपोदानशब्दैर्व्यवहारः।

अथ परस्योत्कृष्टस्य धर्मग्रहणार्थं तस्मिन्नुत्कृष्टे स्वात्मसमर्पणमाश्रयग्रहण प्रतिपत्तिर्नाम-यद्वा एकत्रावस्थाप्यमानस्य चित्तस्य स्वाध्यात्तदन्तःस्थितानेकशक्तिस्फुरणं संयमयोगो नाम, यद्वा निर्बलस्त्रस्य चित्तस्य दौर्बल्येनामनस्कतासाधनात्सुखसाधनं परमयोगो नाम इत्येतत्त्रयमुपासनाकाण्डपदार्थः। एषां त्रयाणां भक्तियोगकर्मयोगशब्दैर्व्यवहारः।

अथ कटककुण्डलग्रैवेयकादीनामेकसुवर्णकार्यत्ववदेषां तेजोवन्नानामेकपुरुषकार्यत्वादेषु सर्वेषु प्रपञ्चेष्वेकत्वप्रतिपत्तिः परिणामुपादानवादः यद्वास्वाप्नवृत्तिवज्जाग्रद्वृत्तेरपि निरालम्बनावस्थानान्नित्यानित्याविज्ञानातिरिक्तानामसत्वप्रतिपत्तिर्विवर्तोपादानवादः, यद्वा नित्यानामेव सतां केषांचिदणूनां संघातभेदाभ्यां जगत्प्रतिपत्तिरिति प्रकृतिवादः, इत्येतत्त्रयं विज्ञानकाण्डपदार्थः। तदित्थमियं ब्रह्मविद्या सर्वविद्या भवति सर्वासामेवैकदेशिविद्यानामथर्ववेदपरिशिष्टाख्यानामेतदङ्गोपाङ्गभूतत्वात्। सेयमेकैका विद्या विद्योपधायकः शब्दो वा मन्त्रः, मन्त्रैश्च देवताऽऽराधिता भवति। देवाराधनं च यस्य देवस्य यत्कर्म यादृशं वर्तते तस्य यथावद्विज्ञानेन यथावदुपचारेण च यथेच्छार्थससाधनम्।

देवमयं हीदं जगत् सर्वे च देवाः प्रत्येकविलक्षणशक्तिमन्तः परस्परानुकूल्यप्रातिकूल्याभ्यां च तत्तच्छक्तिविजृम्भितमेवदं जगद्विद्योतते। तदतस्तच्छक्तिविद्यया सर्वे देवा यथेच्छ विनियोक्तुं शक्यन्ते, सा शक्तिरेव देवानामेषां कर्म, अथ यदस्माकं कर्म तदप्यस्मदन्तर्गतानां तेषां तेषां देवानामेव कर्म,। यदीद कर्म, प्रतिकूलकर्मणा बाधितं मूर्छितं न भवति तदा व्यह्रियते तत्र चैतन्यम्, तस्मादिदं चैतन्यं तन्निष्ठशक्त्यनुसारेण प्रवर्तमानं कर्मैव।

न चैतत्कर्म; विज्ञानादतिरिच्यते ? विज्ञानमपि वा कर्मणः। देवपदप्रसिद्धतत्तद्वस्तुप्रसादस्य साध्यावस्था कर्मेत्युच्यते, सिद्धावस्था तु विज्ञानम्। न च सिद्धावस्थामनपेक्ष्य साध्यावस्था भवति नापि वा कारणसिद्धावस्थामन्तरेण कार्यस्य वस्तुनः साध्यावस्था प्रवर्तते। तस्मात्कर्म च विज्ञानं च प्रसक्तानुप्रसक्तं

भवति तस्मादेकमनपेक्षमाणस्येतरदनर्थकं भवति। तस्माद् य कश्चिदेव ब्राह्मणो विज्ञानप्रधान स्यात् ज्ञानेन्द्रियप्रधानः स्यात्सोऽप्यवश्य श्रमेण कर्मणाऽऽत्मानम-नुबन्धीयात्।

य. कश्चिदेव क्षत्रिय. कर्मप्रधान. स्यात्कर्मेन्द्रियप्रधान. स्यात्सोऽप्यवश्य वेदेनात्मानमनुबध्नीयात्। त्रीण्येव तु कर्माणि भवन्ति। यज्ञो दान तपश्चेति। आत्मनिस्थताना विषयाणामितरात्मसम्पत्तये समर्पण दानम्। अन्यत. स्थिताना विषयाणा स्वात्मसम्पत्तये स्वात्मन्यतिशयरूपेण सन्निधिकरण तप.। एतच्च दानादानद्वय स्वसम्बन्धेनोक्तम्। एतदेव द्वय यदि परसम्बन्धेन स्यात्तदा यज्ञशब्द। अत्र स्वपरशब्दयोर्विवक्षाविशेषाद्यज्ञदानतपसा सङ्कीर्णार्थत्वम्। अथापि द्वौ विशेषौ मुख्यतः कर्मणो लभ्येते। केषाञ्चिद्विषयाणा किञ्चिदशस्य स्वस्मिन्पर-स्मिन् वातिशयरूपेणाधानसंस्कार एक.।

आहितस्य वा किञ्चिदशस्य स्वस्मात्परस्माद्वा परित्यागरूपेण शुद्धि संस्कार एक। तत्र प्रकाशफलकोऽतिशयो विज्ञानम्। प्रवृत्तिफलकोऽतिशयो धर्मः। धर्म एव तु विज्ञानेन गृह्यते विज्ञानमेव च धर्मणाराध्यते। तदत. खलु धर्म एव द्रव्यगुणादिरूपो विज्ञानस्य विषयः। विज्ञानमेव समुदायावयवविरूप धर्मस्याश्रयः। अत एव धर्मेष्वेव विज्ञानानि प्रवर्तन्ते तत्रैव चावतिष्ठन्ते। एव विज्ञानेष्वेव धर्मा विनियुज्यन्ते तत्रैव चैते प्रतिष्ठन्ति। यत्किञ्चिदेवेद विषय-जात दृश्यते घटपटादि स, सर्वोपि कस्यचिदन्यो धर्मः। यद्वा किंचिदिद विज्ञान-जात धर्मणावच्छिद्यते घटपटादि। तदपि सर्व विज्ञानगृहीत विज्ञानमेव। अण्डतापत्नरसगृहीताण्डस्थरसवत्। अथ विज्ञानमपि धर्म। आश्रय धर्मिणमन्तरा-ऽनुपलब्ध। अथ धर्मोपि विज्ञानमेव। विज्ञानव्यभिचारे तस्याऽसिद्धे.। तदित्थं सर्वस्यैव प्रकाशप्रधानत्वात्प्रवृत्तिप्रधानत्वाच्च सर्व एवाय वेद, सर्व एवाय धर्म। तदित्थं वेदधर्मपदयोः समानाधिकारण्यम्। यस्तु पुनरत्र भेदः स ज्ञानक्रियाभेद-निबन्धन.। यथा नीलोघट इत्यत्र नीलगुणमुखेन नीलपद घटत्वमुखेन घटपद चैकमेवाश्रयमभिदधात तद्वदिद धर्मपद क्रियामुखेन वेदपद तु ज्ञानमुखेनैकमेवाश्र-यमभिदधाते। व्यावर्त्यालाभात्तु लोके विशेष्यविशेषणव्यवहाराऽप्रसक्ति। विज्ञानविशेषसम्बन्धविवक्षाया तु समत्रत्येव सर्वथा विशेष्यविशेषणभावोऽपि। तथा च 'वेदाद्धर्मा प्रसीदन्ति, धर्माद्वेदा प्रसीदन्ति। यथा च विषयाणा विज्ञाना-पाधित्वे ब्रह्मशब्दवाच्यता। एवमेवैतेषा कर्मोपाधित्वे धर्मशब्दवाच्यता। विज्ञानात्तु कर्माणि प्रसिद्ध्यन्ति।

अत एव च वेदाद्धर्मो हि निर्वभौ। तस्माद्धर्माधिगमन प्रकारान्तरेण ब्रह्मा-धिगमन च गुरुसम्प्रदायेन ग्रहणाद् विद्याधिगमन भवति। गुरुणाब्रह्मविषयकस्व-संस्कारस्यैव शिष्येष्वाधनात्। तच्च पुनर्वेदाधिगमन भवति। द्वारभूतशब्दपुर-

स्कारेणैव संस्कारस्याध्याधानात् । न च शब्दमप्रयुज्योपदेशः सम्भवति, तस्मान्नत्वेव वेदाधिगमनमन्तरेण विद्याधिगमनं वाऽनायासतः शक्यमतः खलु वेदाधिगमनमन्तरेण विद्याधिगमनं ब्रह्माधिगमनं वाऽनायासतः शक्यमतः खलु वेदाध्ययनं मुख्यम् । उक्तं हि 'प्रमाणोपाधिकं विज्ञान वेदः, विज्ञानोपाधिभूतप्रमाणजातं च वदः' इति । तत्र नाविदुषः प्रमाणजातं प्रमाणोपाधिक विज्ञानं सम्यगाराधितं भवतीत्युपजीव्यत्वाद्विज्ञानोपाधिभूतप्रमाणाधिगमनमेव वेदाधिगमनमादौ कर्त्तव्यतामायाति । स चाय प्रमाणरूपो वेदः शास्त्रमित्युच्यते, तदपि त्रेधा विभज्य द्रष्टव्यं पुराणशास्त्रमनुष्ठानशास्त्रमङ्गशास्त्रं चेति । सृष्टेः प्राक्कालमारम्य प्रलयकालपर्यन्तं यद्यथा प्रकृतिचेष्टितं नियमबद्धं दृश्यते, तत्तथा प्राकृतार्थनियमप्रदर्शनं पुराणशास्त्रं ब्रह्मादिभेदैरष्टादशधा भिन्नम् ।

तथा तमेव नियमक्रममवलम्ब्य स्वप्रतिकूलार्थनिरासः स्वानुकूलार्थसंपर्कश्च यदनुष्ठीयते तदिदं संस्कृतार्थनियमप्रदर्शनमनुष्ठानशास्त्रमृगादिभेदचतुष्टयभिन्नम् । अथ तदुभयभेदविज्ञानोपायभूतानां केषाञ्चिदर्थानां यद्विज्ञानं नियमेन प्रागुपयुज्यते तदङ्गशास्त्रं शिक्षादिभेदैः षोढा भिन्नम् । तत्रदमनुष्ठानशास्त्रं पुराणशास्त्रं चोपरिष्टाद्वैशद्येन दर्शयिष्येते—अङ्गशास्त्रं तु तावदिहोपक्रम्यते । तत्र यदेव किंचित्प्रमाणजातं लक्ष्यते तत्र सर्वत्रैव तावच्छब्दः प्रधान भवति, इतरसर्वप्रत्ययेष्वप्यनुगमात्, अतीतानागतसन्निकृष्टविप्रकृष्टयोग्यायोग्ययावद्विषयस्वतन्त्रत्वाच्च । तदुक्तमभियुक्तैः—

> न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
> अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।।
> प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
> एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ।।

तस्माद्वेदाधिगमनाय प्रयतमानेनादौ वाग्विषया अधिगन्तव्यास्तदर्थं शब्दसमीक्षातन्त्रमुपयुज्यते । तत्र च वर्णशिक्षा, अक्षरच्छन्दः, शब्दनिरुक्तिः, विभक्तिसंस्कारः, अलङ्कारसाहित्यम्, प्रामाण्यव्युत्पत्तिः, कथातर्कन्यायः, मन्त्रसिद्धिश्चेत्येते क्रमेणाष्टौ विषया यथावदधिक्रियन्ते । एवं विज्ञाय वाक्तन्त्रस्वतन्त्रो भवति स नानृतं वदति—तदेतदुक्तं स्थालीपुलाकन्यायेन प्रातिशाख्ये—

> वेदस्याध्ययनाद्धर्मः संप्रदानात्तथा श्रुतेः ।
> वर्णशोऽक्षरशो ज्ञानाद्विभक्तिपदशोऽपि च ।।

एते च विषयाः प्रतिव्याकरणं भिद्यन्ते, व्याकरणं तु यत्किञ्चिद्भाषाभिज्ञानम्, तदेतदेक वेदाङ्गम् । एवमन्यान्यपि पञ्चवेदाङ्गानि भवन्ति—तान्यप्यतः परमेकैकशोऽनेकधा निरूप्यन्ते । तथा हि स्मरन्ति तावत्—

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां चितिः ।
छन्दोविचितिरित्येष षडङ्गो वेद उच्यते ॥

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥

शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥

ते के शिक्षादयः पदार्था इति जिज्ञासोपतिष्ठते-तत्रानेकदर्शनानि भवन्ति । एके तावदित्थं पश्यन्ति-"छन्दः पुरुष इति यमवोचाम वर्णसमाम्नाय एषः" इतिश्रुतेर्वर्णसमारब्धशरीरस्य सर्वस्यापि वाग्विषयात्मकस्य वेदपुरुषस्य षड्भिरङ्गैर्भवितव्यम् । "शरीरमिति संज्ञां लभते, तच्च षडङ्गम्-शाखाश्चतस्रः, मध्यं पञ्चमम्, षष्ठं शिरः" इति सुश्रुतोक्तरीत्या प्रसिद्धपुरुषशरीरस्यापि षडङ्गत्वेनैव व्यवस्थापनात् । पश्यामि च सर्वस्यापि वेदस्य षडेवाङ्गानि, यस्य कस्याप्यर्थस्य विज्ञाने साधयितव्ये तदीयाः षड्विषयाः प्रदर्शिता भवन्ति ततः खलु तद्वेदसिद्धिं मन्यन्ते तथा हि—

छन्दः

यस्य विज्ञानं साधयितव्यं तत्र कियन्तः पदार्थाः कथंभावेन वान्तर्भूताः इत्येवं तदन्तरङ्गपदार्थानां रीतिबन्धेन यथायथमुल्लेखः क्रियते तस्यैतस्य छन्दःसंज्ञा । मितिश्छन्दः प्रमितिश्छन्दः प्रतिमितिश्छन्दः इति यजुर्मन्त्रात् "शिल्पंछन्दः" इत्यैतरेयश्रुतेश्चैतदुभयानुगतस्य रीतिबन्धस्यैव छन्दस्त्वेनाभ्युपगन्तव्यत्वात् । छन्दसश्चास्य वेदपादत्वमभ्युपगच्छन्ति । यदाधारेणास्य शरीरमेवतिष्ठते यदाधारेण वासौ देशविशेषं गच्छति स पादः । रीतिबन्धेनैव हि तस्यतस्यार्थस्य शरीरमवतिष्ठते-तदाधारेण वासौ बुद्धिदेशं गच्छति-तस्माद्रीतिबन्धस्य तत्तद्वेदपादत्वाभिमानः । अत्रस्य च भृत्यशक्तिभिः कृतावयवा स्वामिशक्तिर्भवतीति कृत्वा परस्य स्वामिनः स्वरूपावयवोपचाराद् भृत्यानां परच्छन्दस्त्वम् स्वामिनस्तु स्वच्छन्दस्त्वम्, तच्छक्तेरन्यशक्तिस्वरूपारम्भकत्वाविवक्षणात्, भृत्यस्यापि स्वशक्तिस्वरूपमात्रापेक्षया स्वच्छन्दता तिष्ठत्येव । यत्रापि वचसा छन्दयामानेत्याह तत्रापि विषयव्यक्तिप्रवृत्तेः स्वप्रवृत्तिस्वरूपारम्भकत्वं वचनेन चकारेत्यर्थः । तस्मात्सर्वत्र रीतिबन्धश्छन्दः, अवयवसन्निवेशश्छन्दः । स्वरूपारम्भकावयवानां यद्रूपेण तत्रावस्थानं तदुल्लेखश्छन्दःशास्त्रम् ।

निरुक्तम्

अर्थतत्त्वस्योत्पत्तिस्थितिसंहृतिवचनं नाम, सा द्वितीया वेदभक्तिः । अवश्यं हि सर्वेषामेवामर्थजातानां सप्तत्रप्रतिपत्तिविपत्तयो भवन्ति, तत्रापि येयं प्रतिपत्तिः

स्थितिनाम्नी सा त्रिधा उपचयापचयसाम्यभेदात् । स्वस्वरूपेण सतो यथाकथंचिद्धर्मोपचयेऽप्युत्कर्षव्यवहारमात्रं न तु स्वरूपहानिः सा वृद्धिप्रतिपत्तिः लक्ष्मीसौभाग्यादिशब्दयोग्या । यत्र तु स्वरूपहानिः सा हानिप्रतिपत्तिः निर्ऋतिदारिद्रताक्षीणतादिव्यपदेश्या । यत्र तु तयोः साम्ये योगक्षेमव्यवहारमात्रं न तु स्वरूपहानिः, तत्रोपचयेनापचयस्य अपचयेनोपचयस्य वा विशेषानाधायकत्वाद् विपत्तिकारणयोगेऽपि–उपचयेन तदुपक्षयसंभवाद् योगक्षेमशब्दप्रवृत्तिः । तदित्थमुत्पत्तिवृद्धिस्थितिक्षतिसंहृतिभिर्विपरिणामः सर्वेषामिति तदुल्लेखो निरुक्तशास्त्रम् ।

## व्याकरणम्

अथैतस्य निर्वचनेन सिद्धस्य कतिपयधर्मसंयोगे धर्मसापेक्षा सामान्यविशेषबुद्धिर्भवति । तथा हि तत्रैकत्वेन गृहीतेऽनेकत्वं प्रतिपद्यते, तदिदमेकस्य सतो विविधाकारत्वसमर्पणं व्याकरण नाम, सैषा तृतीया वेदभक्तिः । अवश्य हि यथा घटो नानाविधः, पटो नानाविधः, प्राणी नानाविधः, इत्येव सर्वस्यैवार्थस्य कस्यचिदेकत्वेन गृहीतस्य नानाविध्यं प्रतिपाद्यते, नानाविध्येऽपि तस्य तत्त्वं न विहन्यते—विविधाकारत्वेऽपि तत्त्वानुवृत्तेः, तद् व्याकरणम् । सर्वत्रैव ह्यार्थे द्विविधा धर्माः, आत्मधर्मानात्मधर्मभेदात् । तत्रात्मधर्माश्छन्दसि व्याख्याताः । तद् व्याघाते तु तत्स्वरूपहानिः अथानात्मधर्मैः सम्बन्धव्यापन्नैस्तस्य स्वरूपेण सतो नानविध्यं भवति, तज्ज्ञानप्रधानं व्याकरणशास्त्रम् । यथा निरुक्त्या प्रतिपन्ने घटधातौ–घटनम्, घटः, घटते घटितमित्येवमनेकधात्वव्याख्यानम्, यथा वा निरुक्त्या प्रतिपन्ने घटशब्दे घटः, घटौ, घटाः, इत्येवमनेकधात्वव्याख्यानं व्याकरणं भवति तदिदं शब्दव्याकरणम् । एवमेवान्येषामर्थानामपि व्याकरणम् द्रष्टव्यम् । तथा च समस्तस्य व्यासो व्याकरणम्, संक्षिप्तस्य विवरणं व्याकरणम्, एकस्य सतो विविधाकारत्वसमर्थनं व्याकरणम् । तदुल्लेखश्च व्याकरणशास्त्रम् ।

## गणितम्

अथैतस्य व्याकरणादनेकधात्वेन गृहीतस्यार्थस्य विज्ञानसौकर्यार्थसंकलने गणितं नाम तदिदं चतुर्थी वेदभक्तिः । सर्वथा व्याकरणप्रतिफलमेतत् वर्षकलनं व्याकरणम् संकलनं गणनम् । विकासो व्याकरणेन, संकोचो गणनेन । विवृत्तिर्व्याकरणेन, संवृतिर्गणनेन । एकाकारस्य विविधाकारत्वसमर्थनं व्याकरणेन, विविधाकारस्यैकाकारतापादनं गणनेन । विस्तारो व्याकरणेन, प्रस्तारो गणनेन । समस्तस्य व्यासो व्याकरणेन, व्यस्तस्य समासो गणनेन । यत्तु गणनशास्त्रे गुणनकर्मदर्शनात्तेनाप्येकस्य प्रपञ्चो न संक्षेप इति कञ्चिद् ब्रूयात्तत्तुच्छम् । सर्ववेदानां पङ्क्तया गणितवेदेऽपि गुणनकर्मात्मकव्याकरणसंनिवेशो दृश्यते, नैतावता विशिष्टस्य गणितस्य, वैपुल्यसमर्थकत्वं द्रष्टव्यम् । बहवो हि तत्प्रकाराः सन्ति–तेषां प्रतिपादनं गणितशास्त्रम् ।

शिक्षा

तदित्थं स्वरूपमुखेन सत्तामुखेन विशेषमुखेन सामान्यमुखेन च गृहीतस्यार्थस्य प्रवृत्तौ ये येऽन्ये पदार्था अपेक्षिता भवन्ति तेषां बहिरङ्गपदार्थानामुपकरणपदवाच्यानां प्रदर्शनं शिक्षा नाम। इयं हि पञ्चमो वेदभक्तिः। अवश्यं सर्वेऽप्यर्था येन केनचिदन्येनानेकेन वार्थजातेन समृज्य प्रवर्तन्ते, अतस्तत्साध्यक्रियायां तानि बहिरङ्गाणि भवन्ति, तेषामुपकरणजातानामुपन्यासः शिक्षा। यथा ह्यन्यस्यार्थस्यान्यार्थं प्रत्युपकरणत्वम्, एवमन्यवेदस्याप्यन्यवेदोपकरणत्वम्, अतस्तस्याप्यन्यवेदस्यान्यवेदं प्रति शिक्षात्त्वम्। अतोऽन्यवेदे तदुपयुक्तान्यवेदीयार्थोपन्यासोऽपि शिक्षा। तस्य पार्थक्येनोल्लेखः प्रायेणासम्भवः। इतरोपयुक्ततया तत्साहचर्येणैव तदुल्लेखौचित्यात्। यत्र वा आधिक्यात् क्वचित्पार्थक्येनोल्लिख्यते तत्रैव शिक्षाशास्त्रं भवति।

यथा पाणिनीयशिक्षादिका पाणिनीयव्याकरणोपयुक्तोपकरणार्थप्रतिपादकतयेष्यते शिक्षाशास्त्रम्। याज्ञवल्क्यशिक्षानारदशिक्षादिका तु यजुर्वेदीयसामवेदीयश्रौतकर्मोपयुक्तशब्दोच्चारणरूपोपकरणार्थप्रतिपादकतयेष्यते शिक्षाशास्त्रम्।

कल्प

इत्थं च स्वरूपधर्मपुरस्कारेण कारणधर्मपुरस्कारेण विशेषधर्मपुरस्कारेण सामान्यधर्मपुरस्कारेण च प्रतिपन्नस्यार्थस्य कुत्रोपयोगिता—तेन किं किं साधयितुं शक्यमिति तत्कर्तव्यतासमर्थनं कल्पो नाम। सैषा षष्ठी वेदभक्तिः। एतदर्थमेव हि तस्य पूर्वाङ्गैर्वेदः साध्यते। तैर्विना तस्याप्रतिपत्त्या तदुपयोगिताज्ञानं दुर्बलं स्यात्।

सर्वस्यैवार्थस्य तत्र तत्रोपयोगितापूर्वकं तदितिकर्तव्यतासमर्थनं श्रेयस्करं भवति। किमेतेन कर्तुं शक्यते, कथं वैतेन सोऽर्थः साधयितुं शक्यते, किं चैतेन कृतेन फलं स्यादित्येतदर्थविज्ञाने स विज्ञाता स्वतन्त्रो भवति, यथेच्छं सुखसिद्धिश्च पुरुषार्थः। तस्मात्सर्वेषामेवार्थजातानां व्यष्ट्या समष्ट्या वा तदुपयोगितेतिकर्तव्यताज्ञानं साधयितव्यम्। तदेतदर्थोपन्यासः कल्पशास्त्रम्।

वेद

षड्भिश्चैतैरर्थजातैरुपन्यस्तैरेकशास्त्रं साङ्गं सम्पूर्णं भवति। एतदर्थं षट्कोपन्यासस्तस्य वेदो भवति, यत्सम्बन्धेनैते षडुल्लिखिताः स्युः। शास्त्रं, तन्त्रं वेद इत्यनर्थान्तरम्। शास्त्रं वचनप्राधान्यात्। तन्त्रं क्रियाप्राधान्यात्। अत एव शास्त्रं वचनमित्यनयोः, तन्त्रं परिपाटी इत्यनयोः वेदो विद्या इत्यनयोश्च पर्यायाभिधानप्राप्तिः। वेदविद्ययोरभेदाध्यवसायात्तु वेदे ब्रह्मशब्द इत्यैव यथायथं बोध्यमिति दिक्।

यथान्ये पश्यन्ति । इतरथावद्वेदाधिगमनेऽधिकारसमर्पकाः षड्वेदा भवन्ति । ते सर्वप्रथमं तावदष्टमवर्षादूर्ध्वमाषोडशवर्षं सर्वैरेवाधिगन्तव्याः । तेषां च शिक्षितकम्, छन्दितकम्, गणितकम्, भाषितकम्, भावितकम्, व्यवहृतकमित्येतानि नामानि । तानि पुनः शिक्षाछन्दोगणितव्याकरणनिरुक्तकल्पपदैः प्रसिद्धानि । तत्र शिक्षायां लोकस्थितिप्रदर्शनद्वारा-आचारः संशोध्यते, छन्दसि रीतिबन्धप्रदर्शनद्वारा मर्यादासमयः संशोध्यते, गणिते-अङ्कप्रदर्शनद्वारा अर्थपरिच्छेदः संशोध्यते, व्याकरणे भाषासाहित्यप्रदर्शनद्वारा वचनं संशोध्यते, निरुक्ते तर्कप्रदर्शनद्वारा व्युत्पत्तिः संशोध्यते, अथ कल्पे कर्तव्यक्रिया प्रदर्शनद्वारा तत्तदाम्नायः संशोध्यते ।

तदित्थं षडप्येतान् वेदान् विजानतामेवान्यत्रान्यत्र वेदविशेषेऽधिकारः स्यादनधिकारश्चैतदविदुषाम् । तस्मादधिकारसमर्पकतयैतेषां वेदानां वेदाङ्गशब्देन व्यवहारः । एतत्षट्काधिगमनं हि ब्राह्मणानां सामान्यो धर्मः । अथातो विशेषविद्याधिगमनं च तेषामपेक्षानुसारेण यथेच्छं भिद्यते । तथा चाहुः ।

> अङ्को रीतिः स्थितिर्भाषा तर्कः कर्तव्यतेति च ।
> सर्वे प्रागधिगन्तव्यास्ततः ऊर्ध्वं यथारुचिः ॥

अमुमेवार्थं कश्चिदेवं पश्यति अधिगन्तव्यो वेदः षोढा । समयवेदो नीतिशास्त्रं नाम, तेनाधिगतेन सामाजिकशक्तिसिद्धिः संपाद्यते । वाग्वेदः साहित्यशास्त्रं नाम, तेनाधिगतेनवाक्शक्तिसिद्धिः सम्पाद्यते । अध्यवसायवेदस्तर्कशास्त्र नाम, तेनाधिगतेन मनःशक्तिसिद्धिः संपाद्यते । परिच्छेदवेदो गणनाशास्त्रं नाम, तेनाधिगतेन सर्वार्थव्यवस्थासिद्धिः संपाद्यते । पदार्थवेदो विज्ञानशास्त्रं नाम, तेनाधिगतेन सर्वार्थशक्तिसिद्धिः संपाद्यते । प्रवृत्तिवेदः समारम्भशास्त्रं नाम, तेनाधिगतेन यथेच्छार्थसिद्धिः संपाद्यते । सोऽसौ षड्वेदी ब्राह्मणो यद्यदिच्छति तत्तथाकर्तुं शक्नोतीति भावनीयम् ।

अथान्ये पश्यन्ति । अत्र वेदाङ्गशब्देऽङ्गशब्दो ह्युपकारकार्थपरः । तथाहि-उक्तं तावन्मन्त्रस्य ब्राह्मणो वेदत्वम्, तदुपयुक्तार्थसंग्रहश्च ब्राह्मणं भवति । तत्रोच्यन्ते मन्त्रोपयुक्ताः षड्विषयाः-शिक्षा, निरुक्तम्, व्याकरणम्, छन्दः, ज्योतिषम्, कल्पः, इति । तत्र मन्त्रान्तर्गतवर्णोच्चारणप्रकारप्रदर्शनं शिक्षा मन्त्रान्तर्गतस्य तस्य तस्य पदस्य कोऽर्थः, कस्माच्चायमर्थः, इत्येतदर्थनिर्वचनप्रकारप्रदर्शनं निरुक्तम् । मन्त्रस्य पदानां स्वरसंस्कारप्रकारप्रदर्शनं व्याकरणम् । ऋग्यजुःसामरूपाणां मन्त्राणां छन्दःप्रकारप्रदर्शनं छन्दः । अथ मन्त्रमारितकर्मणां कालभेदेन कर्तव्यानामुपयुक्तकालप्रकारप्रदर्शनं ज्यौतिषम् ।

तथैतेषां मन्त्राणां तत्तत्कर्मसु विनियोगसमर्थनं कल्पः । एषां च मन्त्रोपकारकत्वाद्वेदाङ्गत्वं द्रष्टव्यम् । अथवा-उक्तं खलु ब्राह्मणानामपि वेदत्वम्-एते

च शिक्षादय न समुदित षडर्था ब्राह्मण भवति, ब्राह्मणग्रन्थ एतेषामेव षण्णाम-र्थानामुल्लेखात् । तस्माद वेदाङ्गसमुच्चयात्मक ब्राह्मण भवति ब्राह्मण वदा न तु वदाङ्गम । तदवयवभूताश्चैते प०र्था वेदाङ्गानि । ये चेदानी शिक्षाव्याकरण कल्पादिग्रन्था ऋत्विजामन्तिके पृथक् पृथगुपलभ्यन्त तत्र्वाचाना स्मृतय । तद्बीजभूतानि तत्तु ब्राह्मणदृष्टानि शिक्षादिवाक्यानि श्रुतय इति विशप । तथा च वेदभेदाद ब्राह्मणभेद , तद्भेदाच्च वेदाङ्गभेद इति विज्ञायत । तस्मात् सन्तु शिक्षादिपदवाच्यानि षडङ्गानि वदस्य, अथापि तानि प्रतिवद प्रायण विलक्षणस्वरूपाणीति भाव्यम ।

अथान्ये पश्यन्ति यान्येतानि वेदषडङ्गानि श्रूयन्ते-उच्चावचा खल्वपि त पदार्था भवन्ति, सन्ति हि षड् विज्ञानानि सर्वैरेव सामान्येनाधिगन्तव्यानि । लोकशिक्षा, भाषासाहित्यम् ज्योतिषम सम्प्रदाय व्यवस्था, शिल्प चेति । तत्रैदमकैकमनेकाङ्गम । तथा च लोकशिक्षाया तावल्लोकस्थितय प्रदश्यन्त । सृष्टिविद्या, इतिहास , धातुमूलजीवानुवन्धिनी भूगोलविद्या, तत्तद्देशाचारव्यव-हारा तत्तद्देशभाषाचारणविद्या, धर्मनीतिराजनीतिसमाजनीतयश्चेति—एवा-दया लोकशिक्षापदार्था ।

अथ भाषासाहित्ये यत्किञ्चिद्देशभाषा वर्णत पदतो वाक्यतश्चनिरूप्यत । वर्ण , वाक्छन्द , पदकोश , पदसस्कार , पदार्थव्यवस्था, अलङ्कारा , व्युत्पत्ति , तर्कन्याय —इत्येवमादयो भाषासाहित्यपदार्था । अथ ज्योतिष ज्योति सम्बन्धेना-पेक्षित विज्ञान त्रया विभज्य मुनिभिर्व्याख्यातम् गणित सहिता जातक चेति, तत्र गणित द्वेधा भौम दिव्यच, तत्र

> अङ्क श्रेढीखातचितिभाण्डनकचराशिषु ।
> कुटके मिश्रके छायाक्षनवीजेषु भौमिकम् ॥
> दिव्य करणसिद्धान्तभदाज्ज्योतिषि च स्मृतम् ।
> भौमानामपि केषाचिद्दिव्यत्वमुपलभ्यते ॥

सहिताया तु भौमान्तरिक्षदिव्या सर्वेऽपि प्रकीर्णविषया गणितफलभूत-परिणामसवन्धेन सधाय प्रदर्शिता , जातके च प्राणिमवन्धन भूतभविष्यद्वर्तमान-स्थितिविज्ञानानि । अथ सम्प्रदाय , आम्नाय , पद्धति , कल्प इत्यनर्थान्तरम् । स च यद्यपि कर्मभेदादनेकधा भवति, अथापि त्रधा विभज्य मुनिभिर्व्याख्यात —श्रौत:, गृह्य , सामयाचारिकश्चेति ।

श्रौते यज्ञविषय , गृह्ये स्मार्तापरपर्याये सस्कारविषय , सामयाचारिके तु प्रकीर्णधर्मविषय उल्लिख्यन्ते । अथ व्यवस्था सा च निर्वचनशक्ति । इयञ्च निरुक्तिश्चतुर्धा-पदार्थनिरुक्ति , वाक्यार्थनिरुक्ति प्रामाणनिरुक्ति , तत्त्वनिरु-क्तिश्चेति । तत्र पदार्थनिरुक्तिर्निरुक्तशब्देनैवाख्यायते सा च नैघण्टुकनैगमदैवत

भेदात् त्रेधा विभज्य व्याख्याता । अथ वाक्यार्थनिरुक्तिर्मीमांसाशब्देनाख्यायते, यद्यप्यत्र विषये प्रातिस्विकतया मुनिग्रन्थो नोपलभ्यते—अथाऽप्यर्वाचीनैर्विद्वद्भिरियमपि त्रेधा विभज्य व्याख्याताशाब्दिकी मैमांसिकी तार्किकीचेति ।

तत्र शाब्दिकी व्याडिसंग्रहवाक्यपदीयानुयायिषु मञ्जूषादिग्रन्थेषु, मैमांसिकी जैमिनिसूत्रभाट्टरहस्यानुयायिषु, आपोदेवीयादिग्रन्थेषु, तार्किकी तु गौतमसूत्रचिन्तामण्यनुयायिषु पदवाक्यरत्नाकरादिग्रन्थेषु समुज्जृम्भिता दृश्यते । अथैवं तत्त्वनिरुक्तिर्दर्शनशब्देनाख्यातेऽप्यणुवादप्रधानवाचिद्वादभेदात् त्रेधा विभज्य व्याख्याता । अथ शिल्पम्-तच्च कौशलम् । तदपि त्रेधा विभज्य व्याख्यातम् आकृतिनियतिबन्धेन, प्रकृतिबन्धेन, वाग्बन्धेन च । आद्ये क्षेत्रव्यवहारविद्यालेख्यविद्यादयः द्वितीये विश्वकर्मविद्यादयः, पैङ्गलादयः

तदित्थमेतेषामनेकविषयाख्यशरीराणामेकैकविषयस्य द्वयोर्द्वयोरप्यनुवृत्तिर्दृश्यते, यथा ब्रह्ममीमांसाया वाक्यार्थनिरुक्तौ तत्त्वनिरुक्तौ च धर्ममीमांसाया वाक्यार्थनिरुक्तौ भाषासाहित्ये च, एवमन्यत्रापि । तदित्थमोतप्रोतविषयतयान्योन्यसंकीर्णात्मकान्येतानि षडपि वेदाङ्गानि न विशिष्य परिच्छेत्तुं शक्यन्ते, अतएव यत्किञ्चदेकैकविषयमनुरुध्यैषां संज्ञाकरणम्-शिक्षा, व्याकरणम् ज्यौतिषम्, कल्पः, निरुक्तम् छन्दः- इति ।

अथाप्येषामेकैकशाखातःप्रायेणान्यान्याः शाखाः समुद्भूय प्रतिपद्यन्ते, यथा भाषासाहित्ये वर्णप्रसङ्गाल्लिपिविज्ञानम्, छन्दःप्रसङ्गाद्गीतिविज्ञानम तत्प्रसङ्गाच्च वाद्यनृत्यविज्ञानम् पदार्थव्यवस्थाप्रसङ्गेन परिशिष्टार्थविज्ञानम्, वाक्यार्थव्यवस्थाप्रसङ्गेनोपासनोपनिषदर्थविज्ञानम्, अलङ्कारप्रसङ्गेनरसरीतिविज्ञानम्–इत्येवमन्यत्रान्यत्रापि शाखाप्रतिशाखापरिस्फोटेनेतरेतरविषयसंप्रसक्तिरुज्जृम्भते । तस्मादुच्चावचाः खल्वप्येते पदार्था भवन्तीत्युक्तमनुसंधेयम् ।

अथान्ये पश्यन्ति । इह खलु ब्राह्मणसमाजस्त्रेधा विभक्तो द्रष्टव्यः। दैवज्ञः, अथर्वा, पण्डितश्च । तत्रासौ दैवज्ञो ज्यातिर्गणप्रवणो दैवसूचनाप्रधानः सर्वानिवैतान् प्राकृतिकान् भावान् यथायथ विजानानोऽनुकूल वा दवसयोगं लोके विज्ञापयन्। इह हि योग्येन क्रियमाण योग्यं कर्म सत्यनुकूलदेवसंयोगे सर्वं सुकरं भवति तस्मात्कर्मसु प्रवतमानेनावश्यं सहकारी दैवसयोगोऽनुरोद्धव्यः । प्रतिकूले च दैवसंयोगे विज्ञाते तत्प्रतिबन्धायाथर्वा प्रवतते । असावथर्वा पुरोधाः अथर्वाग्निप्रवणः क्रमप्रधानः सर्वानिवैतान् प्राकृतिकान् भावान् यथेच्छमितस्ततो विनियोक्तुं समर्थते, इष्टेन दवेन सयोजयति यजमानमनिष्टेन च वियोजयति । तदित्थं दैवपुरुषकारायत्तेऽस्मिन्संसारे दैवज्ञपुरुषकारज्ञाभ्यां ब्राह्मणाभ्यां प्रवर्तमानो राजा वान्यो वा न कदाचिदवसीदति, नित्य चाभ्युदयमासादयति । अथ च पुरुषकारो द्विविधः वैदिको लौकिकश्च ।

तत्र वैदिक पुरुषाकारोऽनेनाथर्वणानुरुध्यते, यस्तु लौकिकस्तत्रासौ पण्डित प्रवर्तते। असौ पण्डित. सदस्यस्तकप्रत्रणा व्यवहारप्रधान. सर्वानिवेतान् लौकिकान् भावान् धर्मनीतिराजनीतिसमाजनीतिभिर्व्यवच्छिद्य लोकस्वास्थ्यसुखाभ्युदयसिद्धयर्थमनेकधा व्यवस्था व्यवस्थापयति उपदेशकत्वेन प्राड्विवाकत्वेन समीक्षकत्वेन चासौ धर्मप्रचारको भवति, तदित्थमुक्तस्त्रधा ब्राह्मणसमाज ।

रत्नपरीक्षक-दगार्गलि-शिल्पज्ञ कृषिविद्य वृष्टिविद्य-मौहूर्तिकनैमित्तिक-सामुद्रिकादयो दैवज्ञभेदा । तत्र दगार्गल जलवद्भूमिपरीक्षा, शिल्पानि वास्तु-विद्या-चित्रविद्या-सगीतविद्या-कौतुकविद्या-पाकविद्या-भोगाष्टकविद्या-काम-विद्या प्रभृतीनि चतु-षष्टिकलाचातुरीविज्ञानानि । निमित्तानि प्रश्न-स्वर स्फुरण-स्वप्न-शकुनादीनि भवन्ति। अथ तान्त्रिकौपासनिकयाजककर्मठदैशिकभिषगादयोऽथवभेदा । तत्र दैशिको वैज्ञानिको धातुमूलजीवविद्य , भिषक् तु मनुष्यपशुपक्षि-चिकित्सक । सभ्योपदेशकदार्शनिकपौराणिकवैदिकव्यवस्थापकादय पण्डितभेदा तत्र व्यवस्थापको नीतिज्ञो धर्मशास्त्री। स हि राजनीतिसमाजनीतिधर्मनीतिव्य-वहारनीतिगणित भूगोलप्रकृतिभूगोलदेशभूगोलेतिहासदेशाचारकुलाचारदेशभाषा-द्यभिज्ञ एव स्यान्नान्यथा।

तत्र दैवसयोगस्याधिदैविकाधिभौतिकाध्यात्मिकभेदैस्त्रैविध्यात् त्रिविध-दैवज्ञानसाधनतया त्रिस्कन्धविद्या वद्या भवति दिव्यान्तरीक्ष्यविद्या, पार्थिवान्त-रीक्ष्यविद्या, शारीरविद्या च। तत्राद्या ग्रहगणितरूपा करणतन्त्रसिद्धान्तशब्द-प्रसिद्धा खगोलविद्या, द्वितीया सावत्सरिकाणा याबदर्थाना ग्रहचारमहूर्तवृष्टि-सस्यजातकादीनामनेकरूपाणा प्रकृतिनियतिज्ञानसाधनरूपा सहिताशब्दप्रसिद्धा भूगोलविद्या, तृतीया तु लग्नानुराधिजातग्रहफलभागविज्ञानरूपा होराशब्दप्रसिद्धा शारीरविद्या । एतासा तिसृणामपि विद्यानामाधारभूता ग्रहर्क्षादिज्योतिगणित-विद्यैवेति सर्वा एवैता ज्योतिषशब्देनोच्यन्ते, तत्र ज्योतिषे शिक्षाछन्दोनिरुक्तय. पार्थगर्ग्येन द्रष्टव्या ।

अथाथर्वणा पौष्टिकमाभिचारिक शान्ति स्वस्त्ययन चेति चत्वार्येव कर्माणि। तदुपायभूतविद्या त्रिविधा-यज्ञविद्या, मधुविद्या, यागविद्या चेति। तस्मादाथर्वणिकदेवादि विद्या त्रया त्रयी, तन्त्रम्, उपासना चेति। एतासा तिसृणामपि विद्यानामाधारभूतस्तदितिकर्तव्यताक्रमनियामक कल्प एवेति सर्वक्रिया-प्रधानशास्त्र कल्प इत्युच्यते, तत्र कल्पे शिक्षाछन्दोनिरुक्तय पार्थगर्ग्येन द्रष्टव्या ।

अथ पण्डितानामाचारग्राहकत्वादुपदेशकत्वात्तर्कादिभिरर्थनिर्वाचकत्वाच्च जगत्स्थितिबाधसौकर्यार्थंरीतिबन्धात्मकशिल्पप्रवर्तकत्वाच्च शिक्षाव्याकरण-निरुक्तछन्दास्यवेदन्ते, एतानि हि शब्दानुबन्धीनि, वाग्रसनश्च पण्डिता भवति।

वाचाभिनिविष्टया सदसि व्याख्यानमुपकल्पमानः परहृदयस्थानं दुर्व्यवसायानपगमय्य व्यवसायान्तरेऽभिनिवेशयति ।

एवं क्रियाव्यसनोऽथर्वा, स हि सम्यक्प्रयुक्तया सदसत्क्रियापद्धत्या यथेष्टामिष्टानिष्टान्यतरेणात्मानमन्यं वा संयोजयति । अथैव दृष्टिव्यसनो दैवज्ञः अयमप्यहर्निशं प्राकृतिकान् भावान् प्रकृतिविकृतिभावेन विपरिवर्तमानानुपसमीक्षमाणोऽन्वयव्यतिरेकाभ्यामावापोद्वापाभ्यां च भवतो भूतान् भविष्यमाणांश्च दैवपरिपाकाननुसंधत्ते । तदेतेषां स्वस्ववेदोपकारकतया ज्योतिर्गणितस्य कल्पस्य शिक्षाव्याकरणनिरुक्तछन्दसां च वेदाङ्गत्वमवगम्यत इति भाष्यम् ।

अथान्ये पश्यन्ति । यस्य कस्यापि विषयस्य, विज्ञानम् वेदः । अनन्ता वै विषयाः, अत एवानन्ताः सन्ति वेदाः । एकैकस्य वेदस्यान्ये कतिपये वेदा उपकारका भवन्ति, उपकारके चाङ्गशब्दः, "फलवत्सन्निधावफलं तदङ्गम्" इति मीमांसकोक्तरीत्या प्रधानोपयोगिन्युपकरणे तत्प्रयोगात् । तस्माद्वेदस्यैवेतरवेदोपकारकत्वविवक्षायां वेदाङ्गत्वमभिप्रेयते ।

तथा च यत्र वेदे यावन्त एवेतरवेदा अपेक्ष्यन्ते, तत्र तावतामङ्गत्वमुपचर्यते । अस्ति च याज्ञिकानामृत्विजामधिगन्तव्येषु होतृवेदाध्वर्युवेदादिपदप्रसिद्धेषु यज्ञवेदेषु प्रत्येकस्याधिगमने षण्णामितरेषां वेदानामधिगमापेक्षा । अत एव होतृवेदादिवेदभेदात् षडङ्गान्यपि विशेषविषयो भिद्यन्ते, अन्ये होतृवेदे शिक्षाव्याकरणकल्पादयः अन्ये च तेऽध्वर्युवेदे भवन्ति । अपेक्षासामान्ये त्वेकस्यैवान्यत्रान्यत्रोपयोगसंभवादेकस्यैवानेकवेदाङ्गत्वम् । अत एव यथैतस्य यज्ञवेदस्य षडङ्गत्वम्' तथायुर्वेदस्याष्टाङ्गत्वम् ज्योतिर्वेदस्य तु त्र्यङ्गत्वं चतुःषष्टयङ्गत्वं वा यथोपयोगं विवक्ष्यते । तदुक्तं गर्गसंहितायाम्—

> यथैव वेदस्याङ्गानि षडुक्तानि मनीषिभिः ।
> चतुःषष्टिस्तथाङ्गानि ज्योतिषस्य विदुर्बुधा ॥

तस्मादुपयोगानुरोधेन वेदभेदाद् वेदाङ्गानि न्यूनातिरिक्तानि विलक्षणस्वरूपाणि चेति संसिद्धम् । अत एव "इमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः ससंस्काराः सनिरुक्ताः सानुशासनाः सानुमार्जनाः सवाकोवाक्या" इत्यथर्ववेदीयमन्त्रे वेदस्य त्रयोदशाङ्गानि दर्शितानि, वेदाङ्गत्वसमर्पकसहशब्देनैव कल्पादीनामुल्लेखात् । एवमेवान्यत्रापि "द्वे विद्ये वेदितव्ये परा चैवापरा च, तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । सा परा यया तदक्षरमधिगम्यते" इत्यस्यां श्रुतौ दशानामपरविद्यानां परविद्याङ्गत्वमा—

भातीति भाव्यम् । तस्माद्वेदानामेवेतरवेदापेक्षितत्वे वेदाङ्गत्वमित्यनन्ता वेदा अनन्तान्येव च वेदाङ्गानीति सुसिद्धम् ।

तदित्थ बहुभिरेतैर्दर्शनैर्निरूपितानि वेदाङ्गानि । वेदाश्च वेदाङ्गानि चेत्येते एवोभये वाग्विषया अध्येतव्यविषया भवन्ति न च वेदवदाङ्गाभ्यामतिरिच्यते किंचिदध्ययनाय । ननु चतुर्दशविद्यास्थानानीत्याह भगवान् याज्ञवल्क्य.-

पुराणन्यायमीमासाधर्मशास्त्राङ्गमिश्रिता. ।
वेदाः स्थानानि विद्याना धर्मस्य च चतुर्दश ॥

तत्र वेदवेदाङ्गाभ्यामतिरिच्यन्ते चत्वारोमानि पुराणन्यायमीमासाधर्मशास्त्राणि । उच्यते उक्तानि खलु वेदाङ्गविषयतयानेकदर्शनानि, तत्र तृतीयदर्शनपक्षपातिनामतिरिच्यन्ते षडङ्गेभ्य. पुराणादीनि, तत्रापि लौकिक एव पुराणन्यायमीमासाधर्मशास्त्राणामर्था मन्त्रार्थानुपयुक्तत्वाद्वेदाङ्गत्व न भजन्ते, वैदिकानान्तु वृत्रेन्द्रकोपाख्यानादीना पौराणिकार्थाना मन्त्रार्थचिन्ताभ्यूहादीना तार्किकार्थाना च निरुक्ते, व्रतसस्कारादीना धर्मशास्त्रार्थाना कल्पे चान्तर्भावस्य सुप्रसिद्धत्वात् ।

अत एव "विधिर्विधेयस्तर्कश्च वेद." इति पारमर्षसूत्र सङ्गच्छते । तस्माल्लौकिकानामप्यर्थाना यथाकथचिद्दर्शनेऽपि विद्यास्थानत्व यथा न परिह्रीयेतेति पुराणादीनि पृथगुल्लिख्यन्ते, वस्तुतस्तु वेदाश्च वेदाङ्गानि चेत्युभयान्येव विद्यास्थानानि भवन्तीति निपुणमध्यवसेयम् । ये तूपवेदा ये चानुवदा. ये चापि वा निगमागमभेदाः प्रवृत्तिसमीक्षाया विशिष्योपदर्शितास्तेषामपि वेद वेदाङ्गाभ्यामनतिरिक्तत्वाच्च । कियन्तस्तु-अवान्तरभेदा वेदस्य, कियन्तो वा वेदाङ्गानामित्येतत्सर्व प्रवृत्तिसमीक्षाया द्रष्टव्यम् ।

२. धर्मस्य चतुर्विधत्वम्

धर्मो हि नाम सर्वश्चतुर्धा सम्प्रतिपन्नः-केवलसत्तासिद्धः १. केवलभातिसिद्ध २. युगपदुभयसिद्ध ३ पर्यायाभयसिद्धश्च ४ इति । तत्र ज्ञान च क्रिया चेति द्वे तत्त्व नित्य सत्तासिद्धे भवतः । *नत्वेवैते भातिसिद्धे अस्ति ज्ञान च क्रिया* चेति भातिरदेति । यदीद द्वय न स्यात्तर्हि भातिरेव नादियात् । भातीत्यस्य ज्ञानविषयो भवतीत्यर्थ. । यश्च ज्ञानविषयो भवति तस्य ज्ञानसत्तया सत्ता सिद्धा भवति । ज्ञानस्य तु सत्ता स्वत. सिद्धा वक्तव्या. न तु ज्ञानान्तरसत्ताधीना, तथा सत्यनवस्थाप्रसङ्गात् ।

अनुभवसिद्धश्चायमर्थः-यथाभाति जगदयं इति कृत्वा सोऽस्तीत्युच्यते, नैव भाति भातिरिति कृत्वा भातिरस्तीति युज्यते वक्तुम् । तस्मात् सत्तासिद्धमेवेद

ज्ञानमिति सिद्धम् । अथ क्रियापीयं ज्ञाननिष्ठा सत्तासिद्धा द्रष्टव्या । किन्तु ज्ञाने सत्ता स्वतः सिद्धा, क्रियायां परतः प्राप्तेति विवेकः, ज्ञानसत्ताया एवं क्रियायां व्यवहारात् ।

अथ केवलभातिसिद्धो धर्मो व्याख्यातव्यः । स द्वेधा-सामान्यं च विशेषश्च । अनेकत्वेन गृहीतानामेकत्वकरं सामान्यम् एकत्वेन गृहीतस्यानेकत्वकरो विशेषः । न चेमौ वस्तुनिष्ठौ कौचिदतिशयो मन्तव्यौ आपेक्षिकत्वात् । य कश्चिदेवाहं विषयमपूर्वं पश्यामि, तदाकारा ह्यन्तःकरणवृत्तिस्तत्क्षणादेव जायते । सा च पुनरन्तः करणस्यातिशया नाम संस्कारो भूत्वा चिरायावतिष्ठते ।

यदा खलु पुनः स विषयो दृश्यते, पुनस्तादृशो तदा च वृत्तिरुदेति, उद्बोधिकायास्तस्या इदानीन्तन्यावृत्तेः सम्बन्धाच्चोद्बुद्धा सती सा प्राक्तनी संस्कारभूता तादृशी वृत्तिरप्यविलम्बेनोदेति, तत्पश्चाच्च तदुभयवृत्त्योरेकत्वावगाहिनी काचित् प्रत्याभिज्ञा बुद्धिः प्रवर्तते, तादृशप्रत्यभिज्ञाबुद्ध्यवच्छेदेन गृहीतैकत्वा सा विषयाकारा बुद्धिवृत्तिस्तद्विषयस्य सामान्यम् ।

यद्यपि च तयैकया बुद्धिवृत्त्या गृह्यमाणा व्यक्तयः सर्वा भिद्यन्त इति भेदोऽपि तासामत्र विषयीभवति, अथापि तु भेदविशिष्टतत्तद्व्यक्तिपरिग्राहिका सा बुद्धिवृत्तिर्भिन्नकालापि सर्वत्रैकाकारा न भिद्यते, प्राक्सिद्धसंस्कारात्मकवृत्त्या तादात्म्येन प्रत्यभिज्ञायमानत्वात् । अथैतद्वैपरीत्येन विशेषपदार्थः समुन्नेयः । यत्रैकत्वेन गृहीतस्यार्थस्यैकदेशमात्रावगाहिनी भिन्ना भिन्ना बुद्धिरनेका क्रियते तत्र सा सा बुद्धिवृत्तिर्विशेषो भवति । विशेषासापेक्षं सामान्यम्, सामान्य सापेक्षस्तु विशेषः । बहुविशेषेष्वेकं सामान्यमनुवर्त्तते । एकस्मिंश्च सामान्ये बहवो विशेषा अन्तर्भवन्ति । उभयं चेदं बुद्धिसापेक्षम् । अत एवेदं द्वयं भावशब्देनाख्यायते भावो भावना प्रतिपत्तिप्रकारः घटो हि भावद्वयेनैव गृह्येत स्याद्वा सामान्यरूपेण, स्याद्वा विशेषरूपेण, न तृतीयः प्रकारो वर्तते ।

अस्ति किञ्चित्सामान्यमेव न विशेषो–यथा सत्ता, सा हि नित्या चैका च सर्वानुवृत्ता च । अस्ति कश्चिद्विशेष एव न सामान्यं यथा परमाणुव्यक्तिः स न परमाण्वन्तरेऽनुवर्तते । अन्ये तु सर्वे भावाः सामान्यानि च विशेषाश्चेत्युभयथा शक्यन्तेऽभिनेतुम् । अत्र बहुवक्तव्यमस्ति तेद्वैशद्येन वैशेषिकधर्मसमाख्यायां प्रदर्शयिष्यते ।

यद्यपि सर्वत्र सर्वेऽर्था बुद्ध्यैव गम्यन्ते, न च प्रतीतिमनपेक्ष्य वस्तुनः सत्ता सम्भवति । यावता न जानीयात्सतमर्थं वक्तुमपि न शक्नुयात् । तस्मात् सर्व एवार्था भातिसिद्धा एवेति शक्यते वक्तुम् । तथापि सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म भवतीत्याहुराचार्याः । यदि ज्ञानात्पूर्वं वस्तुनः सत्ता नापेक्ष्यते, ज्ञानादेव

वा वस्तुन प्रकल्प्येत—तर्हि नैकत्रैव नियमत काशी गङ्गा वा प्रतीयेत। अवश्य तु यत्र यत्रैव भावयत् तत्र तत्रैव काशी गङ्गा वोपलभेत। नैव दृश्यत, तस्माद्, यथा ज्ञान नित्योऽर्थो ब्रह्मसत्, एव सत्तापि नित्याऽर्थो ब्रह्मसत्। भातिना सम्प्रयुज्यमानोऽस्तिरर्थं जनयति। अस्तिना सम्प्रयुज्यमानो भातिरर्थं प्रत्याययति। उभाभ्या परस्परसम्प्रयुक्ताभ्यामर्थसिद्धि।

यथा वयमस्ति भातिसिद्धा च व्याहराम, एवमेव तु भातिमप्यस्तिसिद्धा प्रतिपादयाम। यद्यप्यस्तिरिमा भाति नानुगृह्णीयात् सा तर्हि क्वनाम स्यात। यदि न स्यात्कथमवास्तौ वान्यत्र वा प्रमवदिति विमृश्यताम्। तस्मादस्तिरिति भातिरिति च स्वतन्त्रावनावथा परस्पराविनाभूतौ द्रष्टव्यौ। अथवा तत्र यदि सत्ता धर्माणा वैलक्षण्यात् तत्सम्प्रयुक्तान्त करण वैलक्षण्य जायते, इति दृश्यत तदा तान् धर्मान् सत्तासिद्धानाचक्षते।

अथ यदि सम्प्रयुज्यमानान्त करणवैलक्षण्यादेव गृहीते विषये किञ्चिद्वैलक्षण्य प्रादुर्भवतीति दृश्यते तदा भातिसिद्ध स धर्म इत्याख्यायते। यावन्तो धर्मा एकैकविषयज्ञाने प्रतीयन्ते तेषु न सर्वे निजयनिष्ठा एव भवन्ति। ज्ञाता ज्ञान ज्ञेय ज्ञप्तिरिति चतुष्टयी समुच्चिता ह्येकैक ज्ञानस्वरूप भवति, तत्र चत्वारोऽप्येते परस्परोपकार्योपकारकभावापन्ना एव समुच्चीयन्ते। ततोऽवश्य तेषा सर्वेषा केचित्केचिद्धर्मास्तत्र विशिष्टज्ञानेऽन्तर्भुक्ता भवेयु।

तत्र ज्ञेयगता धर्मा यथा ज्ञेयनिष्ठतया गृह्यन्ते, तथा क्वचिद् ज्ञप्तिगता अपि धर्मा ज्ञेयनिष्ठतयैव गृह्यन्ते, यथा अयमेक—अयमेक—इति द्वौ'—इत्येव द्वित्व-सख्या स्पष्ट बुद्धिधर्मो न वस्तुधर्म।

तथाऽप्येषा सख्या वस्तुनिष्ठतया गृह्यते न ज्ञप्तिनिष्ठतया। कस्मादेव सक्रमो भवतीति निर्वक्तुमशक्नुवद्भिरपि सुसूक्ष्म भावयद्भि स्पष्टमित्थ सत्तासिद्धभातिसिद्धयोर्धर्मयोर्भेद सलक्ष्यते। यद्यपि चेदानीन्तनैर्नैयायिकैर्वैशेषिकैर्वा नैव सत्तासिद्धभातिसिद्धयोर्भेद पुरस्क्रियते, अथापि न प्रतीतिशरणं प्रतीतिवलम्भ्योऽयं शक्यतेऽपलपितु कस्यचिदुपेक्षामात्रेणेति दिक्।

अथ कश्चिद् ब्रूयात्—यदि सत्ता हि नाम सामान्य च भाव इष्यते—सामान्य च भातिसिद्धमाम्नायते—तर्हि सुतरा सर्व एव सत्तासिद्धा धर्मा भातिसिद्धा एवेत्यर्थादापन्नम्, स तर्हि कीदृशो भेद सत्तासिद्धभातिसिद्धयोर्वक्तव्य। अत्रोच्यते—न वयमित्थ सुसूक्ष्म भावनाया पारमार्थिकदृष्ट्यापि तयोर्भेद प्रतिजानीमहे, अस्तिरेव भातिर्भातिरेवास्तिरिति समीक्षकाणा सिद्धान्तसिद्धोऽयं। तथा च श्रूयतेऽपि—

"अस्तीति ब्रुवतोऽन्यत्र कथ तदुपलभ्यते।
अस्तीत्यवोपलब्धस्य तत्त्वभाव प्रसीदति॥"

तस्मात्सच्चिदानन्दा इत्यपेक्षाकृतं व्यावाहारिकं ब्रह्मणो रूपम् । पारमार्थिकं तु ज्ञानमेवैकं ब्रह्मणो रूपमिति सिद्धान्तः । अत एव यावन्तः सत्तासिद्धा अर्थाः सर्व एव ते भातिसिद्धाः शक्यन्ते वक्तुम् । ज्ञानक्रिययोरपि स्वतो रूपेण सिद्धत्वात् । ज्ञानक्रिययोर्ज्ञानान्तरसिद्धत्वं नास्तीत्यभिप्रायेण तु सत्तासिद्धत्वव्यवस्था क्रियत इत्यास्ताम् । व्यावहारिकं तु सत्तासिद्धत्वभातिसिद्धत्वयोर्भेदं नापलप्यं मन्यन्ते विद्वांसः । तस्माद् भेदेन तावदर्थाः द्रष्टव्याः ।

अथ युगपदुभयसिद्धा धर्मा दर्शयितव्याः । व्यक्तिराकृतिर्जातिरित्येतेऽस्तिस्रः सहिता एकः पदार्थो भवतीत्याहुराचार्याः तत्रेतरपदार्थपृथक्त्वेन सिद्धा घटाभिव्यक्तिरेव घटव्यक्तिः । आकृतिरवयवसन्निवेशः । जातिः प्रसवतुल्यता । तासु यथेमा घटस्य व्यक्त्याकृतिजातयो भवन्ति तास्तथा भातिसिद्धाः । यथा वा घटोऽयं व्यक्त्याकृतिजातयो भवन्ति तास्तथा सत्तासिद्धाः । "जातिर्जातं तु सामान्ये व्यक्तिस्तु पृथगात्मता" इति कोशकारो व्यक्तिं भातिसिद्धामभिप्रैति । "व्यक्तिर्गुणविशेषाश्रयो मूर्तिः । आकृतिर्जातिलिङ्गाख्या । समानप्रसवात्मिका जातिः" इति भगवान् गौतमो व्यक्तिं सत्तासिद्धामभिप्रैति । त एते पदार्थाः पुनः पुनरनुसन्धानेन विभिद्य द्रष्टव्याः ।

अथ पर्यायोभयसिद्धा धर्मा वक्तव्याः । येषां केचन पर्यायाः सत्तासिद्धा एव न भातिसिद्धाःकेचन वा पर्याया भातिसिद्धा एव न सत्तासिद्धाः । ते पर्यायोभयसिद्धाः ते त्रिविधाः द्रव्यं गुणः कर्म चेति । तत्र यानि द्रव्यगुणकर्माणि सत्तासिद्धानि तानि पिण्डातिशयारम्भप्रकरण द्वासप्ततिविधान्याख्यास्यन्ते । अथातः परं भातिसिद्धानि दर्श्यन्ते । तत्र द्रव्येषु दिक्कालौ भाति सिद्धौ । पूर्वः, दक्षिणः, पश्चिमः, उत्तरः, ऊर्ध्वम्, अध इत्याद्या दिशो ज्ञानधर्मा एव । न वस्तुधर्मः अपेक्षाभेदेन भिन्नत्वात् । एवमतीतानागतप्रत्युत्पन्नादयः काला अपि ज्ञानधर्मा एव आपेक्षिकत्वात् ।

एवं संख्यापरिमाण पृथक्संयोगविभागपरत्वापरत्वानि भातिसिद्धा गुणाः, न त्वेव हि द्वित्वा त्रत्वादिकं ह्रस्वत्वदीर्घत्वादिकं पृथक्त्वादिक वा किञ्चिदपि दृश्यते वस्तुनि सम्पन्नम् ' तद्ग्राहकबुद्धिप्रकल्पिता एवैते धर्माः स्युः । एवं करके दूरदेशपर्यन्तं नीयमाने सति पात्रस्थाकाशस्य यद्दूरदेशपयन्तगमनं, करके वा प्रतिक्षणं प्रवेशनिस्सारौ गम्येते, सा भातिसिद्धा क्रिया । न तु वा वस्तुतः क्रियाऽमुष्मिन्नाकाशे सभवति । व्यापकस्य देशत्यागासंभवात् ।

एवं कालः समागतः, कालो गतः इत्यादयाऽपि कालव्यापारा आपेक्षिका एव । अथवा मरुमरीचिकाजलमलातचक्रं कामलादिदोपवता प्रतिपन्नाः पीतत्वादिगुणाः, पित्तप्रकोपादिदोपवता प्रतिपन्नानि विश्वभ्रमणादिकर्माणि चेत्येवं

दोपानुगृहीतानि द्रव्यगुणकर्माणि सर्वाणि भातिसिद्धान्येव । अथवा स्वप्नान्तिकानि द्रव्यगुणकर्माणि सर्वाणि भातिसिद्धानि, तथा चैव त्रिविधा द्रव्यगुणकर्मपर्याया भातिसिद्धाः प्रदर्शिता । तदित्थ ज्ञानक्रिये सत्तासिद्धे । सामान्यविशेषौ भातिसिद्धौ । व्यक्त्याकृतिजातयो युगपदुभयसिद्धा । द्रव्यगुणकर्माणि पर्यायोभयसिद्धानि ।

### 3. धर्मस्य त्रैविध्यम्

अस्य धर्मस्य त्रीणि लक्षणानि काण्डरूपाणि भवन्ति । पिण्ड, अतिशयः, आरम्भश्चेति । मनुष्यपशुमृगपक्षिकृमिसरीसृपादिजीवकलापः । वृक्षौषधिगुल्मलतातृणस्तम्बादिमूलकलापः । लोहपाषाणरसमृत्तिकासिकताशर्करादिधातुकलापः । इत्येव विभक्ताः पिण्डप्रदेशाः ।

अथ रागाद्रक्ते वाससि रागोऽतिशय । जलसंयोगात्पिण्डीभूतेषु चूर्णेषु स्नेहोऽतिशय । यददृष्टचर किञ्चिदत्याश्चर्येण पश्यति, तदेवपुनर्भूयसाऽवलोकमानस्य न पुनराश्चर्यमुत्पादयति—तत्रास्य भूयसा दर्शनेनाभिज्ञासंस्कारो जात इत्यनुमीयत–सोऽतिशय । यदेव कर्म कर्तुं प्रागनिशयेन हृणीयते तत्रैव यत्किञ्चिन्निमित्तवशात्प्रवर्त्यमानः क्रमेणाऽसौ प्रसीदति । तदेतद्घृणाप्रसादप्रयोजकोऽन्तःकरणनिष्ठः कश्चिदतिशयः प्रतिपद्यते । इत्थ विभक्ता अतिशयप्रदेशाः ।

एव सूर्यस्याशुविकिरणम् । वायोः पवनम् । घटस्य जलाहरणम् । बीजस्य सन्तानोपक्रमणम् । वृक्षाणामुत्सर्पणम् । वृक्षस्थरसाना सूर्यांशुभिराकर्षणम् । प्रदीपस्य तैलग्रहणम् । तैलस्य प्रदीपायात्मसमर्पणम् । इत्यादय आरम्भप्रदेशाः ।

इत्थ सर्वेऽपि धर्मास्त्रैविध्येनात्मान दधाना दृश्यन्ते । न चैतत्त्रैविध्यादतिरिच्य किञ्चिदिह पश्यामः ।

तत्र पिण्डलक्षणो धर्मो द्रव्यशब्देन, सत्त्वशब्देन, धर्मशब्देन शरीरादिशब्देन च तत्र तत्राख्यायते । अतिशयलक्षणस्तु क्वचिद्गुणशब्देन, क्वचिद्धर्मशब्देन, क्वचित्संस्कारशब्देन, क्वचिज्जन्मान्तरीयकर्मशब्देनाप्याख्यायते । एवमारम्भलक्षणः कर्मशब्देन क्वचित्प्राणशब्देन क्वचिद्धर्मशब्देन क्वचिद्योग्यताशब्देन क्वचिच्छक्तिशब्देन, क्वचिद्बलशब्देन क्वचित्परिणामशब्देन, क्वचित्क्रियाशब्देन, प्रवृत्तिशब्देन चाख्यायते ।

अथ पिण्ड पिण्डातिशयारम्भाणामाश्रयभूतः । पिण्डाना प्रायेण पिण्डान्तरघटितत्वदर्शनाद्व्याप्यव्यापकभावसम्बन्धेन पिण्डे पिण्डान्तरसमुच्चयात् । तथा च पिण्डो द्वेधा समुदायात्मा अवयवात्मा चेति । अथातिशयक्रिये पिण्डाश्रयभावमनपेक्ष्य न स्वरूपं दधाते, नाप्यतिशये क्रियाया वाऽतिशयक्रिये अव-

तिष्ठेते। क्रिया हि प्रवृत्तिनिवृत्तिस्वरूपादेव पिण्डातिशयाभ्यां स्तम्भरूपाभ्यां भिद्यते। पिण्डस्यातिशयक्रियाश्रयत्वादतिशयस्य त्वतिशयक्रियानाश्रयत्वाद् भेदः।

इदं तु बोध्यम्। अयमतिशयो द्वेधोपचर्यते। मुख्यो गौणश्च। तत्र मुख्योयमतिशयोऽतिशयानाश्रयत्वेनाख्यातः। अथ पिण्डमपि सूक्ष्मशरीरतया पिण्डान्तरे उपसन्नमतिशयत्वेन लौकिकाः प्रतिपद्यन्ते। स पुनर्गौणोऽतिशयो नातिशयानाश्रयः। तथा च तत्साधारण्यादयमतिशयस्त्रेधा–पिण्डरूपः, विकाररूपश्च। रक्ते वाससि रागः पिण्डरूपः। पिण्डभूते चूर्णे स्नेहः प्राणरूपः। अभिज्ञासंस्कारादिविकाररूपः। एवं क्रिया पञ्चधा नित्यक्रिया, फलितक्रिया, विभागक्रिया, परिणाम क्रया, आगन्तुकक्रिया, च। तत्र नित्यक्रिया प्राणशब्देनाख्यायते। प्राणो द्विविधः पिण्डस्वरूपसिद्धिविनियुक्तोन्तः प्राण एकः, स जीवशब्देनाख्यायते। जीवविशिष्ट एव हि पिण्डो भवति। अथ दृष्टिविषयतासिद्धिविनियुक्तो बहिः प्राणो द्वितीयः। स रूपशब्देनाख्यायते। रूपमेवास्य परदृष्टया गृह्यते।

फलितक्रिया यथा काचस्यप्रत्येकप्रदेशस्थद्रव्याणां तेजोऽनवरोधकत्वं वायुजलावरोधकत्वं च स्वभावः। प्रत्येकप्रदेशस्थद्रव्याणि स्वाभिमुख्येन गच्छतो जलबिन्दूनवरुन्धन्ति तेन काचपात्रे जलस्तम्भन भवति। तदेतत्काचपात्रस्य जलवारणात्मिका क्रिया फलिता भवति। एवमन्यत्रापि विरुद्धाविरुद्धकतिपयक्रियासमष्टिरूपा फलितक्रिया दृश्यते। सेयं योग्यताशब्देनख्यायते।

अथ, विभागक्रिया सा भवति यत्र पिण्डद्वयसंयोगजे पिण्डे समवेतयोस्तयोः पिण्डयोर्विभागेन सामुदायिकापिण्डोपमार्थादर्थान्तरमुत्पद्यते-यथा तिलसर्षपादिभ्यस्तैलोत्पत्तिः। अथ परिणामक्रिया विकारशब्देनाख्यायते। यथा दुग्धं दधिरूपेण विकुरुते। आगन्तुकक्रिया यथा–हयो गच्छन् रथे क्रियां जनयति। रथो वा गच्छन् रथस्थे क्रियां जनयति–इत्यादि।

तदित्थमेतेषु त्रिषु धर्मेषु पिण्डरूपो धर्मो वैशेषिकशास्त्रे चरकादिशास्त्रेषु च सुप्रसिद्ध एव। अतिशयलक्षणस्तु तर्कशास्त्रे मन्त्रादिधर्मशास्त्रेषु च सुप्रसिद्धः। अथ क्रियालक्षणो धर्मो जैमिनीयमीमांसाशास्त्रे"अथातो धर्मजिज्ञासा"–इत्यादिना सविस्तरं व्याख्यातः, कल्पशास्त्रे च। तत्र तत्र शास्त्रे च निरूपणीयांश एव धर्मशब्देन व्यवहर्तव्यो न त्वन्योंऽश इति हि तत्रत्या परिभाषा। वैशेषिकशास्त्रे तु पिण्डश्चातिशयश्चारम्भश्च द्रव्यगुणकर्मशब्दैरभिहितास्त्रयोपि धर्मत्वेन विवक्ष्यन्ते इति विशेषः। अथातो धर्मं व्याख्यास्याम इति प्रतिज्ञाय तेषां त्रयाणामविकृत्य सपरिकरं व्याख्यानात्। ये तु धर्मविशेषप्रसूतादित्युक्रमाक्षराणि दृष्ट्वा द्रव्यगुणकर्मणां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञाने प्रयोजकः कश्चिदलौकिको धर्मः स्यात्र द्रव्यादीर्नाति केचिदिच्छन्ति ते नितान्तमशास्त्रज्ञा उपरिबुद्धयो बालका एवेत्यन्यत्र

विस्तर । तथा चैव पिण्डलक्षणश्चातिशयलक्षणश्चारम्भलक्षणश्चेत्येव धर्माणा तिस्रोजातय सिद्धा ।

४ धर्मस्यावान्तरविभेदा

एते पिण्डातिशयारम्भा सर्वेऽपि द्विविधा –क्रत्वर्थाश्च, पुरुषार्थाश्च । क्रियार्थानि द्रव्याणि क्रियार्थद्रव्यगुणसंस्कार नियार्थक्रिया चैते क्रत्वर्था । यथा तन्दुलपाकार्थानि चुल्लीसमिद्भाण्डाना दाहयोग्यानामपाकाद् तन्दुलस्य च पाकात् तन्दुलनिष्ठ कश्चिदतिशय पाकार्थ कल्प्यते। भाण्डतन्दुलादीना जलशुद्धिसंस्कार पाकार्थ । फत्कारादय कर्तृव्यापारा ज्वलनादयश्च करणव्यापारा क्रियार्थक्रिया-इत्येव क्रत्वर्था । एवमन्नजलादि द्रव्य वह्निसयोगजश्च तत्र पाकसंस्कार, भोजनक्रिया चैते पुरुषार्था । पुरुषे तृप्तिफलसम्बन्धात् । एवमन्यत्रान्यत्र द्रष्टव्यम् ।

अथोच्यते । यदि पिण्डो यदि वातिशयो यदि वारम्भ, सर्वोपि द्वेधा–प्राकृत संस्कृतश्च । अभिप्रेत्य कश्चिदर्थो यदि अन्त करणवृत्तिसहकारेण क्रियते स संस्कृत । स च चेतनव्यापारमन्तरेणासम्भूत । स द्विविध, बौद्धश्च प्रतिकृतिश्च । गृहकपाटघटपटादिपिण्डा शोधितसूतवटिकौषधाद्यतिशया घटोक्ला-यन्त्रशकटोकलायन्त्रादय आरम्भा बौद्धा । हस्त्यश्वमनुष्यादिस्वरूपानुकरण सामान्यलाहे चुम्बकातिशयानुकरण मतिभीषितचेष्टिताद्यनुकरण च प्रतिकृति । चेतनचेष्टासाध्ययावदर्थातिरिक्ताः सर्वेऽप्यर्था. प्राकृता । द्विविधम्याऽप्येतेभ्य संस्कृतप्राकृतेभ्य. सर्वमिद परिव्याप्तम् ।

यद्यपीद संस्कृत न प्राकृतादतिरिच्यते बुद्ध्यादेरपि प्रकृत्यनतिरिक्तत्वात् । तथापि प्राणीच्छासम्प्रयुक्तत्वासंप्रयुक्तत्वाभ्या भेदेन व्यवहार । सर्वोऽपि प्राणी संस्कृते स्वतन्त्र, प्राकृते परतन्त्र । अथवा प्राकृतेऽपि स्वतन्त्र,'स्वप्रकृतिबलतारतम्यानुसारेण यथेच्छ परप्रकृतिसिद्धमर्थं संयोजयितु वियोजयितु समाहर्तुं, निराकर्तुं, शक्तत्वात् । शक्य खलु स्वबलानुसारेणेष्टार्थसयोगोऽनिष्टार्थवियोगश्च संयोगवियोगप्रयोगप्रकार विदुषा ।

यत्र तु स्वबलमल्पीय बाध्यबलन्तु भूयिष्ठमपेक्षते तत्रासौ बाधक परतन्त्रोऽपि यावद्बल प्रयुङ्क्ते तावत्तावस्य परबल प्रत्याचष्ट एव । स्वबलतुल्यमात्रा-कस्य परबलस्य प्रत्याख्याने विनियुक्त स्वबल यद्यपि फलतो नानुभूयते । स्वबलमात्रातो यावती मात्रा परबलेऽधिका तावत्या परबलजन्यस्यैव फलस्यो-दयात्, तथापि स्वबलमात्रानुल्दमात्राया. परबलसम्बन्धिन्या फलान्मुखत्वबाध स्वतन्त्र एव स्यात् । तस्मादवश्य विधिज्ञो यथेच्छ कर्तुमकर्तुमन्यथा कर्तु समर्थो भवत्येव । अत एव "यस्त्वेव ब्राह्मणो विद्यात्तस्य देवा आसन् वशे"–इति, ।

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः"-इति, "अजितं जेतुमनुचिन्तयेन्न क्वचिदप्यलं बुद्धिमादध्यात्" इति-एवमादीनि श्रुतिवाक्यानि सङ्गच्छन्ते। अन्यथा अननुष्ठानलक्षणाप्रामाण्यात्सर्वेषामेवोपदेशवाक्यानामुत्सन्नतापत्तिः स्यात्।

संस्कृताश्च प्राकृताश्च–द्विविधा अप्येते धर्माः पुनर्द्विविधाः। भवद्रूपाश्च कुर्वद्रूपाश्च। सत्ताग्रहणायोद्यतं भवद्रूपम्। गृहीतसत्ताकं कुर्वद्रूपम्। कटककुण्डलस्वस्तिकरुचकादीनां सुवर्णं कारणमुच्यते, कटकादयः परतस्तु पर्याया उच्यन्ते। सर्वे च पर्यायाः कारणसत्तां गृहीत्वा तयैव सत्तया सत्तावन्तो भवन्ति। न च कारणसत्तातोऽतिरिक्ता सत्ता कार्यपर्याये भवति। अतिरिक्तसत्ताभ्युपगमे यदि कारणं सुवर्णं न स्यात्तदापीदं कटकादिकं स्यात्। न च तथा दृश्यते। तस्मात्सुवर्णे नित्यमव्यभिचारेण स्थितां सत्तामनुकृष्य कटकमस्ति कुण्डलमस्तीत्येवमादयः कार्यपर्यायसत्ताव्यवहाराः प्रवर्तन्ते।

तत्र यदा सुवर्णात् कटकरूपमपवर्त्य कुण्डलरूपमाधीयते तत्र कटकाहितां सुवर्णसत्ता कटकात् पृथक्कृत्य कुण्डले समाधीयते, तेनेदं कटकमसद् भवति, निवृत्तसत्ताकत्वाच्च तन्नोपलभ्यते, सत्तावित्तयोरव्यभिचरितत्वात्। कुण्डलं तूत्पद्यते गृहीतसत्ताकत्वात्। तदिदानीं सुवर्णे स्थितमुपलभ्यते। यत्र सत्ता तत्रोपलब्धिरिति नाप्राप्तत्वात्। तदित्थं कार्यपर्यायान्तरोत्पत्तावश्यं पर्यायान्तरं नश्यत्येवेति व्याप्तिः। अतएव पूर्वं नाम निवर्तते अपरं च नामोद्भवति। पूर्वं कटकमासीन्न कुण्डलम् अधुना कुण्डलमस्ति न कटकम्। निवृत्तः कटकशब्दोऽनुवृत्तश्च कुण्डलशब्दः सुवर्णशब्दस्तु न पूर्वं निवृत्तो नवेदानीं निवर्तते। पर्यायनिष्ठत्वाभावात्। तत्र तावद्भवति काचिदीदृशी सुवर्णावस्था यत्रेमे कटकरूपनामनी निवृत्ते अभूताम्, कुण्डलरूपनामनी तु संप्रवृत्ते भविष्यतः।

न चेदानीं कटकमस्ति नवा कुण्डलमेवास्ति, अथापि कटकव्यपगमं च कुण्डलाभ्युपगमं चान्तरा सा सुवर्णावस्था भवद्रूपं कुण्डलमित्युच्यते। एवं संस्कारादयोतिशयाः साध्याश्च क्रियाः सर्वा एव सन्ति भवद्रूपाः एवं प्राकृता अपि पिण्डातिशयारम्भा भवद्रूपा उदाहर्तव्या अथ गृहीतसत्ताकाः सर्व एव कुर्वद्रूपा उच्यन्ते। अवश्यं हि तेऽनवरतं किञ्चित्कुर्वाणा एव स्वरूपं दधते, न च किञ्चदप्यर्थजातं क्षणायापि निष्क्रियमवतिष्ठते। यान् वै पर्वतगृहादीन् निष्क्रियत्वेन प्रतिपद्यन्ते लोकाः, तेऽपि नत्वेव नितान्तमक्रिया प्रतिपत्तव्याः। तत्प्रकृतिसिद्धव्यापाराणां प्राणादीनां च नित्यमनुवर्तमानत्वात्। प्रत्यवयवं प्रतिक्षणं परिवर्तमानस्वरूपत्वाच्च। यदा खलु सत्ता ततो निवृत्ता भवति तदा क्रियापि ततो निवृत्ता भवति। यावदनुवर्तते सत्ता तावदनुवर्तते क्रिया। तस्मात् सर्वमेव सदर्थजातं नित्यं कुर्वद्रूपमिति सुनिभृतं द्रष्टव्यम्।

परेत्वाहु—एक एवायमर्थो दृश्यताम् पिण्डश्चातिशयश्चारम्भश्च । स यदा भवद्रूपावस्थया गृह्यते तदानीमुत्पन्नविनष्टप्रायदृष्टक्रमवद्रूपोऽयमारम्भ इत्युच्यते। अथ यदा कुर्वद्रूपावस्था गृह्यते तदानी चिरावस्थानयोग्योऽयमतिशय कथ्यते पिण्डो वा । सूक्ष्मोऽयमर्थं मुभृश पर्यालोच्य ।

अत्र कुर्वद्रूपा धर्मा द्विविधा । बीजसमाश्च प्रदीपसमाश्च । यथा हि सहकारि भूतानिमित्तान्तरसयोगसाध्यक्रिय वृक्षादिबीज न नित्याङ्कुरजननक्रिय दृश्यते । सहकारियोगादुत्पन्नाया क्रियाया तु बीज तत्स्वरूपतश्च्यवते, अङ्कुरादि-द्रव्यान्तररूपेण परिणमते । एवमेव यज्ञादिकर्मविशेषजाताः केचिदतिशयानेदानीमेव सुखमुत्पादयन्ति, अपि तु सहकारियोगादुत्पन्नाया तत्र क्रियाया सोऽतिशय स्वरूपतश्च्यवत, सुखाद्यतिशयान्तररूपेण परिणमते । उर्ध्वं प्रक्षिप्ते लोष्टे हस्तादाहिता नोदना ऊर्ध्वगतिरूपेण परिणमत च स्वरूपतश्च्यवत च । ऊर्ध्वगतिरूपेण फलेन कारणभूतसर्वनोदनापहारे कृत शुद्ध लोष्ट स्वगौरवात् पृथिव्यामापतति ।

एवभूता अतिशया योग्यताशब्देन प्रभावशब्देन शक्तिशब्देन गुणशब्देन बलशब्देन नोदनाशब्देन च विभिन्न निर्दिश्यन्ते । बलादिक हि निमित्तान्तरयोगन प्रयुज्यमान सदेव कार्यकारी भवति नत्वनवरतम् । अथ प्रदीपसमास्तु नित्यमनवरत स्वकर्म कुर्वाणा एव स्वरूप दधते यथा प्रदीपा न प्रकाशमादधाना स्वरूप दधते तथा । अतिदूरादतिसामीप्यादिन्द्रियघातादनवधानात् सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराद् व्याघाताद्वा सतामप्यर्थाना क्वचिदनुपलब्धिर्भवतीत्यन्यदेतत् । प्रदीपसमा अनवरत क्रिया कुर्वाणा अपि न तावता स्वरूपतश्च्यवन्ते प्रत्युत यदि न क्रिया कुर्वीरन् तदैव ते स्वरूपतश्च्यवेरन् । स एष भूयान् विशेष परामृश्यते ।

भवद्रूपाश्च कुर्वद्रूपाश्च-द्विविधा अप्येते धर्मा पुनर्द्विविधा समष्टि रूपाश्च व्यष्टिरूपाश्च । दृश्यत हि-ससारधर्म , प्राणिधर्म , मनुष्यधर्म , ब्राह्मणधर्म , औदीच्यधर्म , सारस्वतधर्म , समाजधर्म , कुलधर्म , सम्बन्धधर्म , व्यक्तिधर्म , शरीरधर्म , बालधर्मतरुणधर्मवृद्धधर्मा , देशधर्म , कालधर्म , नियोगधर्म , इत्येवमादयोऽनेकशाखा जटिलक्रमबन्धाश्चानेकविधा धर्मा युगपदेकैकव्यक्तावुपसचरन्तीति, एषा विप्रतिषेधे बलाबलचिन्ता परीक्षकैरेव शक्यते कर्तुम् । पर्वत समष्टि , प्रस्तरो व्यष्टि । गृहसमष्टि , स्थूणाभित्तिच्छदिकपाटादयो व्यष्टय । मनुष्य समष्टि हस्तो व्यष्टि । हस्त समष्टि अगुलिर्व्यष्टि । अगुलि समष्टि । तत्त्वव्यष्टि । एवमुत्तरोत्तरमतिशयपर्यन्तमनुवर्तत समष्टिव्यष्टिभाव सर्वत्र पिण्डषु । गुणकूटो द्रव्यमितिसिद्धान्तात् । विश्व समष्टिरेव । अतिशयो व्यष्टिरेव । अन्तरा तु सर्वमेव द्रव्य समष्टिश्च व्यष्टिश्च ।

अथ चिरकालमनुवर्त्तमान एकाकार एकजातीयश्च क्रियासन्तानः स्थिरतयाऽभ्युपगम्यते, सेयमेकाकारसन्ततक्रियासमष्टिरेवातिशयशब्देनोच्यते । तत्र समष्टौ व्यष्टयस्तु सर्वाः क्रिया एव स्युः । यथोर्ध्वं क्षिप्ते लोष्टे हस्तादाहिता नोदना वस्तुतः क्रियैव सतो क्षणाधिककालस्थायित्वेन गृह्यमाणत्वात् क्षणिकक्रियातोऽतिरिच्यातिशयशब्देन व्यपदिश्यते ।

एवमेव शब्दबुद्धिभावनागुरुत्वादयः सर्वे एवातिशया अन्ततः क्रियारूपा एव । तथा चातिशयः समष्टिः । क्रिया व्यष्टिः । क्रियास्वपि च समष्टिव्यष्टिभावोऽनुवर्तते । दशदिनभाविनी ग्रामगमनात्मिका एका क्रिया समष्टिः । प्रतिपदं च पूर्वदेशत्यागोत्तरदेशसंयोगो व्यष्टिः । पाकक्रिया चैका समष्टिः । तदनन्तरं च बहवो विप्रकीर्णाः फूत्कारादयो व्यष्टयः ! फूत्कारः समष्टिः । फूत्कारावयवभूताः क्षणिकाः कतिपयक्रिया व्यष्टयः । तदित्थमन्ततः क्षणिकक्रिया व्यष्टिः स्यात् ।

विश्वं तु सर्वान्ते समष्टिः स्यात् । तदन्तर्गताः सर्व एव समष्टिव्यष्टिभूता अर्थाः सुसूक्ष्म भावनायां क्रियारूपा एव पर्यवस्यन्ति । यत्किञ्चिदिदं दृश्यते तत्सर्वं क्रियातो नातिरिच्यते । क्रियैव समष्टिव्यष्टिभेदान्नानाभावेन प्रतिपद्यते । अन्ये समष्टिधर्मा अन्ये व्यष्टिधर्मा भवन्ति । इत्थं समष्टिव्यष्टिभेदो धर्माणां व्याख्यातः । एष च समष्टिव्यष्टिभावः समुदायावयवरूपो वक्ष्यमाणाभ्यां सामान्यविशेषाभ्यामतिरिच्यते–इति वाच्यम् ।

क्रत्वर्थः पुरुषार्थः–इति द्वौ । संस्कृतः प्राकृत इति द्वौ । भवद्रूपः कुर्वद्रूप इति द्वौ । समष्टिर्व्यष्टिरिति द्वौ । त एते षोडश । कुर्वद्रूपद्वैविध्याच्चतुर्विंशतिः । पिण्डातिशयारम्भभेदाद् द्वासप्ततिः । त एते धर्माणां साधारणभेदाः समाख्याताः ।

अथातः पिण्डाधिकारेण किञ्चिदुच्यते । धर्मसमवायो हि धर्मो वस्तुद्रव्यार्थादिशब्दैर्धर्मिशब्देन चाख्यायते । तत्र हि धर्मिणि बहवो धर्मा वसन्तीति वस्तुत्वम् । तत्र धर्मा द्रवन्ति धर्मव्यत्यासे चासौ धर्मी स्वरूपान्तरे द्रवतीति वा तस्य द्रव्यत्वम् । धर्मसमुदाय एवायं पुरुषैरर्थ्यते न तु धर्मिणमगृहीत्वा धर्मं ग्रहीतुं शक्नोतीत्यस्यार्थत्वम् । धर्मत्वेऽपि धर्माश्रयत्वाद्धर्मित्वम् । तस्मिन् धर्मिणि ये धर्माः समवयन्ति ते पुनर्गुणधर्मभावादिशब्दैर्व्यपदिश्यन्ते । तेषां समवायश्चैकात्म्येनावस्थानम् ।

लोकव्यवहारे च समवायस्य प्राधान्यत्तदनुरोधेन तदन्तः प्रतिष्ठानामर्थानां गुणत्वम् । समवाये चैते ध्रियन्ते तैश्च समवायो ध्रियते इत्येषां धर्मत्वम् । तैरेव सद्भिस्तद्वस्तु तदितरवस्तु वैलक्षण्येन भवतीत्येषां भावत्वम् । सर्वेषां वस्तुधर्माणां

समवायेन सत्ताग्रहण सत्तैव वा भाव । तात्स्थ्यात्तदनतिरेकाच्चासौ समवायोऽपि भावशब्देन सत्त्वशब्देन चोपचर्यत इत्यन्यदेतत् । एते वस्तुधर्मा पञ्चधा व्यवच्छिद्य-गृह्यन्ते–आश्रयभावा:, प्रयोजकभावा', स्थायिभावा , व्यञ्जकभावा , सचारिभावाश्चेति । तत्रैतेषु सर्वष्वेव धर्मेषु कश्चिदेको धर्मस्तदितरेषा सर्वेषामाश्रयीभूयाऽवतिष्ठते । तदुपकारकत्वेन चान्ये धर्मास्तत्रोपनिष्ठन्ते सोयमेकस्तत्राश्रयभावः । तत्राज–साम्मते वस्तुन्यग्नेरप्सम्मिते वस्तुनि सोमस्य वायुसम्मिते वस्तुनोन्द्रस्य तेज. सम्मिते वस्तुन्यादित्यस्यालम्बनत्वात्तस्य तस्य तत्र तत्राश्रयभावत्वम् ।

अग्निरस्मि जन्मना जातवेदा घृत मे चक्षुरमृत मे आसन् ।

इति मन्त्रवर्णकमनुरुध्यता तु सर्वत्रैवाग्नेरेवाश्रयभावत्वमिति मतमेतत् । अथवा विप्रकीर्णत्वात्तत्र तत्र भिद्यतेऽयमाश्रयभाव इति भाव्यम् । अथ–

सवित्रा प्रसवित्रा, सरस्वत्या वाचा, त्वष्ट्रा रूपैः पूष्णा पशुभि, रिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाऽग्निना तेजसा, सोमेन राज्ञा, विष्णुनादशम्या, देवतया प्रसूत' प्रसर्पामि । (शु० य० वे० १०.३)

इत्येवमादिमन्त्रबोधिताना शरीरगतभिन्नभिन्नकर्माधिकारविनियुक्ताना तेषा तेषा देवाना प्रयोजकभावत्वम् । प्रयोजकत्व च "सोमो राजा वरुणो देवा धर्मसुवश्च ये । ते ते वाच सुवन्ता तेते प्राण सुवन्ता तेते चक्षु सुवन्ता तेते श्रोत्र सुवन्ताम्"–इत्यादिमन्त्रैरुपलक्षणविधया तत्तद्धर्मविशेषान् प्रत्येवानुसन्धेयम् । अतएव–सोमस्य त्वा द्युम्नेनाभिषिञ्चमि, अग्नेस्तेजसा, सूर्यस्य वर्चसा, इन्द्रस्येन्द्रियेण, मित्रावरुणयोर्वीर्येण, मरुतामोजसेति । एवमादिमन्त्रैः सोमाद्याधिदेवतानामध्यात्म द्युम्नादिधर्मरूपेण परिणतावस्थत्वमेव तत्तद्धर्मप्रयोजकत्व बोध्यते । एत एव च देवप्रयुक्ता धर्मास्तदात्मनः स्वभाव इत्युच्यते । तस्य द्वैविध्यमाहोज्ज्वलदत्त –

वहिर्हेत्वनपेक्षी तु स्वाभावोऽय प्रकीर्तितः ।
निसर्गश्च स्वाभावश्च इत्येष भवति द्विधा ।।

निसर्ग. सुदृढाभ्यासजन्य. सस्कार उच्यते ।
अजन्यस्तु स्वतः सिद्ध- स्वरूपो भाव उच्यते ।।

एतत्सस्कारात्मकनिसर्गसिद्धधर्ममेवाध्ययनतपश्चर्यायोगाभ्यासादिकर्माण्युपयुज्यन्ते इत्यप्यवधेयम् । अथ उपादानद्रव्याणि स्थायिभावाः यथा घटादीना मृदादय , शरीरादीनामन्नादयः । एते त्रयोऽप्यात्मभावाः । तत्राप्याश्रयभावो जीवात्मा, प्रयोजकभावोऽन्तरात्मा । स्थायिभावो भूतात्मा । यत्सत्ताधीना यस्य

सत्ता स तस्यात्मा। स च प्रत्यर्थं त्रेधेति तत्र तत्रोपेक्ष्यम्। अथ येऽनात्मभूता अप्यपृथग्भूता विशेषतो व्यभिचारिणोऽपि सामान्यतो नित्यानुगतबाह्यार्थास्तेऽवच्छेदका व्यञ्जकभावा दिग्देशकालसंवित्संख्यापरिमाणसाधर्म्याणि । एतैरवच्छिन्नमेव किञ्चिद्वस्तु व्यज्यते।

तत्र परिमाणं नामावयव सन्निवेशानुरोधेन जायमानमणुत्वमहत्त्वह्रस्वत्वदीर्घत्वादिरूपम् । साधर्म्यं तु समानद्रव्यगुणकर्मकत्वम् । नैतान्यनपेक्ष्य वस्तु स्वरूपं धत्ते इत्यवच्छेदकानामेषां तत्तद्वस्तुच्छन्दस्त्वमिष्यते। अथान्ये व्यभिचारिणः सर्वे धर्माः संचारिभावाः। यथा आर्द्रत्वोष्णत्वजलवेपभूषादयः सांयोगिकार्थाः। एतेऽप्यनात्मभूता एव। तेषां सत्त्वासत्त्वयोस्तद्वस्तुस्वरूपस्य तटस्थत्वात्। तदित्थं प्रत्यर्थं धर्माणां पञ्च प्रकरणानि।

परे तु चतुर्थप्रकरणस्थां संविदं पृथक्कृत्य फलितागन्तुकक्रियां चापेक्ष्य सप्तप्रकरणान्याचक्षते। तथाहि—घटपटादिः शब्दः संविदा प्रतिपन्नः स न दिग्देशकालसंख्यावदर्थैः सह सम्बद्धः। शब्दार्थयोरसम्बन्धेऽप्यर्थप्रत्ययस्य सामयिकत्वात्। यश्चासम्बद्ध एव सम्बद्धवद्धर्मोभवति सोऽतिरिच्यते सर्वधमंम्यः। एवं क्रियापि कदाचिदनुभूयमाना तत एवोत्पद्य तत्रैव विलीयते, सापि सर्वविलक्षणो धर्मः। तस्मात् सप्त प्रकरणानि पिण्डधर्माणामिति सिद्धम्।

यद्यपि च सर्वे एवैते प्रकरणस्था धर्मास्त्रिविधा एव, अस्तीमे पिण्डरूपाः स्युः अस्तीमे अतिशयरूपाः स्यु अस्तीमे क्रियारूपाः स्युः। न चतुर्थी विधा भवति। अथापि स्वस्वरूपापेक्षया त्रिविधा एव ते पिण्डसम्बन्धापेक्षया पञ्चधा परिच्छिद्यैकस्मिन्पिण्डे सन्निविष्टा भवन्तीति विवेक्तव्यम। अत्र पञ्चमप्रकरणस्थो धर्मोऽनवरतं परीक्षणीयः। स एवाभ्यासेनाराध्यमनाश्चिरमुपसन्नस्तृतीयप्रकरणे द्वितीयप्रकरणे वा प्रविश्यात्मानं विगुणयति रूपान्तरेण परिणमयति प्रकृतिविपर्ययात् सुखाय च परिणमते दुःखाय च । स तदानीमनपाक्रियमाणः क्लेशसाध्यो भवति। तस्मात्पञ्चमे प्रकरणेस्थित एव स निराकर्तव्यो वा समादर्तव्यो वेति परीक्ष्यम्। एष पञ्चमतृतीयद्वितीयप्रकरणस्था धर्मा मात्राशब्देन मात्रास्पर्शशब्देन चोपचर्यन्ते-इत्यपि बोध्यम्। तान्येतानि पञ्च धर्मविकारप्रकरणानि।

अथ ये चेमे पञ्चसु पिण्डधर्मप्रकरणेषु चतुर्थप्रकरणपदार्था अवच्छेदाख्यास्ते त्रेधा विभज्य शब्दार्थसमवायकरणे वाच्यतावच्छेदका भवन्ति। तथा हि—दिग्देशकालसंवित्संख्याप्राधान्येन गृहीतास्तेऽवच्छेदा इतरे गुणा वा तद्वस्तुनो व्यक्तिः। एतेषां भेदकानां भेदादेव पृथगात्मत्वोपचारात् । अथ परिणामप्राधान्येन गृहीतास्ते तद्वस्तुन आकृतिः।

एभिरेव भेदकैर्गृहीतैरस्तीदमिदमिति बुद्धौ तदाकारणात्। एवं साधर्म्य-प्राधान्येन ग्रहणे स तद्वस्तुनो जातिः। इतरकालिकेतरघटाकाराकारितान्तः-करणवृत्त्या प्रत्युत्पन्नैस्तद्घटाकाराकारितान्तःकरणवृत्तेः सामान्येनादयात्तत्प्रया-जकस्य तद्वस्तुगतसाधर्म्यस्य साधर्म्योपलक्षितपरिमाणादेश्चकत्वाभिमानात् तत्र साधर्म्यं समानप्रसवप्रकारनिबन्धनमेवेह विवक्षितमित्यतस्तत्र जातिशब्दो रूढः। अत एव मृद्गवके गोसाजात्यनिरासः। जातिरखण्डोपाधिरिति तु केषांचिदपदार्थ-कल्पनामात्रम्। एतासां व्यक्त्याकृतिजातीनां समवायस्तु पदार्थः। भिन्ननामैं-कात्म्येनावस्थानं समवाय इत्युक्तम्। तन्निरूपितैव च पदे शक्तिरभ्युपयते। तथा च पारमर्षसूत्राणि—

"व्यक्त्याकृतिजातयस्तु पदार्थः। व्यक्तिर्गुणविशेषाश्रयो मूर्तिः। आकृति-र्जातिलिङ्गाख्या, समानप्रसवात्मिका जातिः। शब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्य-पचयवर्णसमानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः। आकृतिस्तदपेक्षत्वात् सत्त्वव्य-वस्थानसिद्धेः। व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात्प्रोक्षणादीनां मृद्गवके जातिः।"

तदित्थं व्यक्त्याकृतिजात्याश्रये पदार्थे बहूनां धर्माणां सद्भावेऽपि यं कञ्चिदेकमेवार्थमुपादाय तत्सम्बन्धानुबन्धेन गुणिनमर्थं ग्राहयितुं पदानि संकेत्यन्ते। यथा मदीयः श्वेतः कृष्णकर्णो महारवस्तुरगः सुलक्षणः—इत्यत्र मत्सम्बन्धः श्वेतरूपं कर्णकृष्णत्वं शब्दमहत्त्वं त्वरागतिः शुभलक्षणसम्बन्धश्च विप्रकीर्णं तं तमर्थं निमित्तीकृत्य प्राकृतानां तेषां तेषां शब्दानामाकाङ्क्षावशात् सामानाधिकरण्यं भासतेएवमेकमेवार्थमुपादाय प्रवृत्तयोरपि छन्दश्छादकशब्दयो-राकाङ्क्षाविशेषात् स्वरूपसंरक्षकत्वस्य स्वस्पतिरोभावकत्वस्य चान्यत्रान्यत्र विषयीकरणाद् वैयधिकरण्यं भासते। तदेवमुच्चावचा पदार्थमर्यादा भवता-त्यप्यनुसन्धेयम्।

अथायं पिण्डः प्रकारान्तरेण पुनः पञ्चधा विभज्यते मध्यबिम्ब—प्राणपृष्ठानि परिमण्डलं च। यत्रैव कुत्रापि कश्चित्पिण्डोऽनुभूयते तत्र सर्वत्रैव पञ्च विभागा एते द्रष्टव्याः। एभिरेव विभागैर्देवानां साहचर्यमुपभोगश्चोप-कल्पते। मध्यं चतुर्धा हृदयं, नाभिः, योनिः, गर्भश्च। हृदयस्वान्तयोर्नाभिमूल-योर्योनिबुध्नयोर्गर्भोदरयोश्चकार्थ्यम्। अत्र नाभिरेवैकं मुख्यं तत्रैव तत्पिण्डस्य नद्धत्वात्। नहेर्बन्धनकर्मण एवेणन्तत्वे सिद्धस्य नाहिशब्दस्य परोक्षवृत्त्या नाभि-शब्दसिद्धिः। मूलश्च बन्धनं कर्मणः क्तान्तत्वेलान्तत्वे लावृत्तसमासे वा मूल-शब्दसिद्धिः।

इदं च विष्णोः स्थानमुच्यते। नाभिरेव कस्यांचिदवस्थायां योनिर्हृदयं च। तत्र योनिः प्रजापतेः स्थानम्। हृदयं तु ब्राह्मणः। समवर्तुलवृत्तपिण्डे नाभि-

हृदययोनयो नातिरिच्यन्ते दीर्घवृत्तपिण्डे भिद्यन्ते । तत्र मण्डलत्रयसमष्ट्या नाभित्रयसत्त्वान्मध्यस्य नाभिशब्दत्वमर्थ मूर्द्धोपकल्पितभागस्थस्य हृदयत्वं पादोपकल्पितभागस्थस्य योनित्वम् । अथ तदेतन्मध्यमनाभियोनिव्यासार्द्धकल्पित-वृत्ताग्तेः प्रदेशः सर्वो गर्भः । यत्रापि शून्योदरपिण्डो घटादिस्तत्रापि गर्भोनुवर्तते । स च सर्वतो दिग्भिर्गृह्यमाणत्वाद् गर्भइत्युच्यते । अत एव स्थूलबिन्दुः सूक्ष्मातिसूक्ष्मबिन्दुश्च गर्भः स्यात् । नाभिस्तु सूक्ष्मातिसूक्ष्मऽव्यक्तो निरवयवत्वादनिरुक्तः कश्चिद्बिन्दुः । एतच्चतुष्टय प्रत्यर्थ भिन्नक्रमं चातिगहनार्थ चेत्यन्यत्र विशदीकरिष्यामः ।

अथ यदेतत् स्थानावरोधकतया कश्चित्पिण्डो दृश्यते तदेव तत्र बिम्बम् । चक्षुर्गोलके स्वरूपाधानेन परिस्फुटितत्वात् । यदि तु सूर्यादिबिम्ब जलकाचादो स्वरूपमाधाय ततश्चक्षुर्गोलके स्वरूपमाधत्ते तत्र द्वे बिम्बे दृश्येते । अतो व्यवहारार्थः शब्दभेदः प्रवर्तते । जलस्थं बिम्ब प्रतिबिम्बशब्देन खस्थं बिम्बं जलबिम्बहेतुत्वाद् बिम्बिशब्देनाख्यायते । बिम्बशब्दत्व तूभयोरपि दृश्यत्वान्न व्याहन्यते । अर्थतस्माद् बिम्बाद् बिम्बनाभेर्वा सर्वतो दिक्षुप्राणाः प्रसर्पन्ति स यावदत्र प्राणस्तावत्प्राणाः प्रसर्पन्ति । क्षुद्रबिम्बस्य नातिदूरं महापिण्डस्य चातिदूरमित्यूह्यम् । तं च प्राणाज्योतिर्मया वा हिरण्मया वा वातमया वा रसमया वा सर्वाधारभूतलक्षणशक्तिमया वेति न निर्द्धार्यते । यदस्तु तदस्तु । एत एव प्राणास्तद्वस्तुनो रूपमिति तु निःसन्दिग्धम् ।

यावन्तमेव प्रदेशमभिव्याप्य प्राणाः प्रवर्तन्ते तावत्येव प्रदेशे स्थितवता चक्षुष्मता तद्बिम्ब दृश्यते । यद्बिम्बात् क्रमेण दूरं स्थूलसूक्ष्मक्रमेण तद्बिम्ब पश्यन्नेवापगच्छति, गत्वा च यत्प्रदेशस्थः पुनस्तद्बिम्ब दूरत्वदोषादेव न पश्यति तदेतस्य पिण्डस्य पृष्ठम् । बिम्बपृष्ठयोरन्तरालप्रदेशः प्राणपूर्णो गणितेनोपपाद्य संसाध्यः । पृष्ठपर्यन्तं तु तद्वस्तुनः स्वरूपसत्ताऽनुवर्तते । बिम्बमपि प्राण एव । ते प्राणा अपि बिम्बान्येवेत्यन्यत्र विस्तरेण निरूपयिष्यामः । सूर्यस्य प्राणाः किरणशब्देन नाडीशब्देन चोच्यन्ते । नैकविधाः सर्वेषां प्राणा इति तत्र तत्रोपेक्ष्यम् । सर्वस्यापि वस्तुजातस्य बिम्ब शीर्षम् । प्राणा अक्षीणि । पृष्ठं पादाः । आशीर्षपादं त्वेकं वस्तु भवति । तदेव पारिमण्डलं सर्वघटितम् । तद्व्याप्तिः पृष्ठस्थानस्य चरमावयवप्रदेशमभिव्याप्य भवतीति वैदिकाः पश्यन्ति । तस्य पृष्ठं स्वस्थानेमहतोमहीयः ।

अथ बिम्बाभिमुखं क्रमेण ह्रसित्वा नाभिस्थानेऽणोरप्यणीयो भूत्वा न किञ्चद्भवति, विलीयते । एवं बिम्बं स्वस्थाने महतो महीयः, अथ पृष्ठाभिमुखं क्रमेण ह्रसित्वा परिमण्डलस्थानेऽणोरप्यणीयो भूत्वा न किञ्चद्भवति, विलीयते । तदित्थमवारं च पारं च य एवार्थः कश्चिदणोरप्यणीयान्महतश्च

महीयान् स एवास्य जन्तोरात्मा प्रजापतिर्नाम। अत एव तस्य द्वे रूपे निरुक्त मानिरुक्तं च। स निरुक्तो यो महान् व्यक्तः, स एव यज्ञशब्देन विष्णुशब्देन चाख्यायते। अथ सोऽनिरुक्तो योऽणीयानव्यक्तः। स प्रजापतिशब्देनैव भूयसाऽभि धीयते, अग्निशब्देन च। एतदग्निविष्ण्वोरन्तरे सर्वे देवाः। बिम्बस्थानाधिकारी तत्रत्य कश्चिदग्निः। तस्याष्टावग्निशेखरा वसवोऽधिदेवाः। प्राणस्थानाधिकारी त्विन्द्रः। तस्यैकादशसोमशेखरा रुद्रा अधिदेवाः। रुद्रपुत्राश्च मरुतः सप्त सप्तका अप्यधिदेवाः। अथ पृष्ठस्थानाधिकारी वरुणः सूर्यो वा तस्य द्वादशादित्या वरुणादयोऽधिदेवाः। अथाग्नेः साधिदैवतस्य स्थानं बिम्बाख्यो भूर्लोकः। इन्द्रस्य साधिदैवतस्य स्थानं प्राणाख्यो भुवर्लोकः। सूर्यस्य साधिदैवतस्य स्थानं पृष्ठाख्यः स्वर्लोकः।

यावतासौ अन्नमयः, तद्बिम्बं पृथिवी, यावता चापोमयः स प्राणोऽन्तरिक्षम्। यावता पुनस्तेजोमयस्तत्पृष्ठं द्यौः। तदिदं बिम्बमृक्। प्राणो यजूंषि। पृष्ठं साम। बह्वर्थं चैतत्त्रैविध्यमन्यत्रोपपादयिष्यते। तदित्थं पञ्च प्रकरणानि पाङ्क्तो यज्ञः। यज्ञो विष्णुः। विष्णुस्त्रेधा विक्रमते बिम्बमित्येकं प्राणो द्वितीयं पृष्ठं चेति तृतीयं विक्रमणस्थानम्। तदित्थं स्थूलात्स्थूलं च सूक्ष्मात् सूक्ष्मं च सर्वं होदं यज्ञः। अत एवोच्यते। विष्णुर्वषट्क्रमणः। केचित्तु पुनरिहापि सप्तैव प्रकरणानि भवन्ति चितिसज्ञान्याचक्षते। तदेतच्छतपथश्रुतौ चितिकाण्डे सविस्तरमाम्नातम्।

अथ पिण्डद्वयस्य योगो वक्तव्यः तथाहि पृष्ठपरिधिस्पर्शः। किञ्चित्पृष्ठस्पर्शः। यजुःपरिधिस्पर्शः। किञ्चिद्यजुःस्पर्शः। बिम्बपरिधिस्पर्शः। किञ्चिद्बिम्बस्पर्शः। उभयनाभिस्पर्शः। एकनाभिस्पर्शः। एकबिम्बस्पर्शः। एकयजुःस्पर्शः। एकपृष्ठस्पर्शः। बिम्बयजुःस्पर्शः। बिम्बपृष्ठस्पर्शः। यजुःपृष्ठस्पर्शः। एतत्पुनर्द्वेधा एकप्राणयोगः प्राणभेदयोगश्चेति। एतत्सर्वं यथाय थमूह्यम्। अन्यदपीह पिण्डे बहु वक्तव्यम्।

एष च पिण्डः द्वेधा-चेतनो जडश्चेति। तदुक्तं चरके 'सेन्द्रियं चेतनद्रव्यं निरिन्द्रियमचेतनमिति।'' इन्द्रियाणि चान्तःकरणलक्षणानि बहिःकरणलक्षणानि च द्विविधान्यपि ज्ञानप्राधान्यात् क्रियाप्राधान्याच्च पुनर्द्विविधानि। अथवा पिण्डः पञ्चधा-अण्डज, ऊष्मज, उद्भिज्ज, खनिजश्चेति। पुनः पिण्डो द्वेधा-अणवः स्कन्धाश्च। अणव एव संघातेन स्कन्धा भवन्ति। स्कन्ध एव च भेदेनाणवो भवन्ति। संघातभेदाभ्यां जगत् प्रवर्तते। पुनः पिण्डो द्वेधा मूर्तं चामूर्तं च पृथ्वीजलतेजोवाय्वाकाशानि भूतानि। कालदिगात्ममनांस्यभूतानि। अत्राकाशः शब्दघनपिण्डः। अथवा पिण्डो द्वेधा मूर्तश्चामूर्तश्च। पृथ्वीजलतेजोवायुमनांसि मूर्तानि आकाशकालदिगात्मानोऽमूर्ताः।

प्रकारान्तरेण पिण्डस्त्रेधाथर्ववेदे व्याख्यातः—आपो वाता औषधयश्चेति। आपो रसप्रधानाः। वाता वायुप्रधानाः। औषधयो घनीभावप्रधानाः। अथवा पिण्डस्यैते त्रया भेदास्ताण्ड्यश्रुतौ तेजोऽबन्नशब्दैरुपचर्यन्ते। तेजांसि विरलावयवद्रव्याणि वाय्वादीनि। आपस्तरलावयवा जलादयः। अन्नानि निविडावयवानि मृदोषध्यादीनि। अन्यथा वा पिण्डस्त्रेधा—उपरितनः, मध्यमः, अधस्तनश्चेति। दैवासुरयेन्द्रार्षेयप्राजापत्यगान्धर्वराक्षसपैशाचा अष्टौ दैवसर्गसम्बन्धादुपरितनाः। मनुष्यो मध्यमः। पशुपक्षिमृगसरीसृपस्थावराः पञ्च तिर्यग्योनयोऽधस्तनाः।

प्रकारान्तरेण पिण्डो द्वेधा—चरश्चाचरश्चेति। चराचरौ जङ्गमस्थावरौ जगत्तस्थिवांसौ त्रसस्थाश्चेत्यनर्थान्तराणि।

अथवा पिण्डस्त्रेधा—जीवो मूलं धातुश्चेति। संज्ञाप्रधानो मनुष्यादिर्जीवः। अन्तः संज्ञो वृक्षादिर्मूलम्। निस्संज्ञः प्रस्तरादिर्धातुः। इति पिण्डसमादेशः।

५. अथातिशयविवेचनम्

अथातिशयाधिकारेण किञ्चिदुच्यते। स्वस्य प्रदेशस्य वाभ्युच्चयोऽतिशयः। स च सूक्ष्माणुप्रसररूपः। स चतुर्द्धा—अन्तः प्राणरूपो, बहिः प्राणरूपः, व्यञ्जनरूपो, मलरूपश्च। अन्तः प्राणरूपो यथा—पिण्डीकृतचूर्णादिषु स्नेहादिः, बलोत्क्षिप्तलोष्टादावुत्क्षेपणबलादिः। इदं द्वयमग्निदेवतारूपम्। बहिःप्राणरूपो यथा—रूपरसगन्धस्पर्शादिः स हि प्राणेन्द्रियपर्यन्तमनुक्रममाणो रूपरसादिबुद्धिप्रयोजको द्रव्यविशेषः। व्यञ्जनरूपो हि सितोदकसीध्वादिषु सिताभृङ्गादिः, मलरूपस्तु बहिरेवोपसीदति यथा शरीरवस्त्रादौ मालिन्योपसंक्रमः। यथा वा रक्तवस्त्रादौ रागोपसंक्रमः।

अथ प्रकारान्तरेणायमतिशयस्त्रेधा—नित्यः, अनित्यः, बौद्धश्च। प्रकृतिजन्यो नित्यः। संस्कृतिजन्यस्त्वनित्यः। स पञ्चधा—आक्रमितः सांक्रमिकः आवेशजः परकारितः स्वसंभूतश्चेति। यत्र बलवत्प्राणस्य स्वव्याप्यप्रदेशान्तःपातिनि द्रव्ये बलसंचारः स आक्रमितः। यथा लौहखण्डे चुम्बकबलाक्रमणम्। यथा वा जवाकुसुमसन्निहिते स्फटिके रागोपसंक्रमः। रक्तहरितकाचान्तरिते सौरप्रकाशे च रक्तहरितत्वादिरित्येवमादिः। यत्र तु परसंसर्गात्तद्गतं द्रव्यं किञ्चिदागत्यान्यस्मिन् संचरति तत्सांक्रमिकम्। यथोष्णजलसंसर्गाद्धातुपात्रमुष्णं भवति। तदिदमुष्णजलत्यागेपि कस्मैचित्यकालायोष्णमवतिष्ठते।

अथायमावेशजो यत्र सर्वात्मना किञ्चिद्द्रव्यं किञ्चिद्द्रव्येऽभिनिविशते। यथा सितोदके सितादिः, ज्वरावेशो भूतग्रहाद्यावेशश्चोदाहरणम्। परकारितो यथावह्निसंयोगेनाङ्गारादौ श्यामता भवति। पिण्डीकृतचूर्णादिषु जलसंयोगेन

स्नेह क्रियते। एव शिल्पिना कृता काष्ठादिषु नानाकाराश्चोदाहरणम्। स्वसभूतो यथा-वेगो गतिक्रमेण स्वयमुत्पद्यते। वस्त्रपत्रादीना मार्दनेऽभ्यासात् स्वय तद्रूपत्वा-वस्थानसिद्धिश्चेत्येवमादि।

अथ बौद्धो बुद्धिजन्य स त्रेधा-बुद्धौ केनाऽप्यन्येन निमित्तेन जायमान एक। बुद्धया निमित्तभूतया अन्यत्र क्वचिद्द्रव्ये जायमानो द्वितीय। विषयीभूतद्रव्य-सयोगाद् बुद्ध परिणामविशेषस्तृतीय। आद्यो यथा-शृङ्गारवीरकरुणाद्भुत-हास्यभयबीभत्सरौद्रशान्तिप्रमादिरूपो बुद्धयतिशयोऽचिरविश्रमी। ससर्गवशाद्-बुद्धिमालिन्यतीव्रतादिधर्मादिरूपश्चिरविश्रमी च। अथ द्वितीयो यथा-भ्रमरीकीट-ध्यानविशिष्टशब्दसम्बन्धेन मर्कटीकीटादभ्र मरीत्पत्वम। सयमचित्तबलसयोगाच्च परस्य रुग्णत्वमारोग्य च। अथ तृतीयो यथा-अनेकद्रव्यविषयतया द्वित्वादिसख्या-बुद्धि। रूपरसादिबुध्युदयप्रयोजकवस्तुगुणविशेषसयोगाद्रूपरसादिबुद्धयुदयश्च। अय च तृतीयोऽतिशयो बुद्धिमात्रनिष्ठोऽपि बुद्धिविषयद्रव्यनिष्ठतया व्यवह्रियते। एवमन्यत्रापि सर्वत्र यथायथमूह्यम्।

यदपि उपेक्षाबुद्धयनालम्बिनया बुद्धया य त्कञ्चिद्विषयानुभवे तत्र बुद्धौ तद्विषयाकार सस्कार आधीयते सोऽप्याथमकल्पिका बौद्ध। तत्र चत्वारि निमि-त्तानि भवन्ति। नाम स्थापना द्रव्य भावश्चेति। गोपाल इति नाम्नि श्रुते तत्सम्बन्धमाहात्म्याद् बुद्धौ तदाकारो भवति, तदेतन्नामद्रव्यम्। सुप्तोत्थानदर्श-नान्नास्ति पिण्डसम्बन्धप्रतिपत्ति एव गोपालचित्रदर्शनाद बुद्धौ गोपालाकारोदय, प्रतिमादर्शनाद्वा, तदेतत्स्थापनाद्रव्यम्। गोपालसम्बन्धितया चिरगृहीतस्या-वयवादे, साप्योगिकस्य वाद्यस्य दर्शनात्तदाकारोदय-तदेतद् द्रव्यद्रव्यम्। अथ गोपालस्यैव दर्शनात्तदाकार इति भावद्रव्यम्। एतेषा चतुर्णामाकारोदयप्रयो-जकतया कथचिदभेदमभ्युपगच्छन्ति। अथैतद् गोपाल शरीरभावद्रव्य वा द्रव्यद्रव्य वा स्थापनाद्रव्य वा गोपालस्येति विवक्षाधीनम्।

अथान्यथाप्ययमतिशयस्त्रेधा-रागो द्वेषो मोहश्चेति। प्रवृत्तिक्रियाप्रयोजको-रागः। निवृत्तिक्रियाप्रयोजको द्वेष। स्तम्भक्रियाप्रयोजको मोहश्च। एतेषा मोक्षप्रतिद्वन्द्वितया प्रातिकूल्यविवक्षणाद्दोषशब्दनोपचार। अथवा अतिशयो द्वेधा-आत्मभूतोऽनात्मभूतश्च। तदाश्रयभूतेनापि वा गृहीतश्चेत् स आत्मभूत। अगृहीत केवल तत्रोपसन्नश्चेत स दीर्घकालमवस्थाय क्रमेणात्मसाद् भूत्वा तत्रा-त्मभूतो भवति। आत्मभूतो हि प्रसवधर्मा भवति। दीर्घेण कालेनापह्न्यमानोऽपि स्वसन्तानमवस्थाप्यैव नश्यति। अनात्मभूतस्तु रोगवत् केनचित्कालेन स्वयमवा-त्मीदति, निराकरणाच्चेति भाव्यम्। अनात्मभूतो द्वेधा क्षणान्नश्वर क्रियात्मा। चिरान्नश्वर कषायात्मा च। आत्मभूतोऽपि द्वेधा-स्वभावो निसर्गश्चेति।

अथारम्भाधिकारेण किञ्चिदुच्यते-आरम्भ क्षोभ, चेष्टा, क्रियेत्यनर्था न्तरम्। इय हि क्रिया तावच्चतुर्धा-स्वीया परकीया सामान्य अपूर्वा च। यत्र

नोदनादि दैवसयोगान्नातिरिच्यते । एषु कतिपयानामेव जडक्रियासु निमित्तत्व न सर्वेषाम् । एतच्चोपरिष्टाद्दृक्ष्यते । क्रियारूप तु सर्वत्र प्राणवगाहिनदेशत्याग एव । अथ क्रियाफल द्वेधा–सुखदु खमोहात्मकवेदनीयातिशय, क्रियाफलजननानुकूल-क्रियातिशयश्च । तत्र मोहेतरवेदनीयातिशया न पुन किञ्चित्क्रियाफल जन-यतीत्यपवर्गो भवति ।

तत्र ह्यतिशय सुखक्रियाबीजरूप सुखानुभवात्मिका क्रिया जनयति केवल न तु तत्र क्रियाफल पुनरुत्तरक्रियाबीज किञ्चिदुत्पादयतीतिनि,श्रेयस भवति । अन्यत्र त्वन्योतिशयो मुख्यो वा गुण, ता क्रिया जनयति या क्रिया किञ्चित्ता-क्रियाफलमुत्तरक्रियाराधाराय जनयति स एव बन्ध, तत्राभ्युदयो भवति । यतो-ऽभ्युदयनि श्रेयससिद्धि· स धर्म । स च क्रियाया बीजमूलनिमित्तात्मकश्च क्रिया-त्मकश्च । बीजाद्यनपेक्ष्य क्रियारूपासिद्ध । क्रिया विना च बीजादिनोऽपि क्रिया-फलासिद्धे· ।

अत एव बन्धस्यातिशयरूपस्य क्रियाफलरूपत्वात्तत्र क्रियाया. कारणत्वे-ऽभ्युपगम्यमानेऽपि नापवर्गं प्रति क्रियाया कारणत्वमौपनिषदा. पश्यन्ति । अप-वर्गस्य क्रियाफलत्वेऽपि आरम्भ्येव विलयनात् तस्य क्रियाफलरूपातिशयरूपत्वा-सभवात् । अथवा न क्रियाया अपवर्गरूपत्व किन्तु विज्ञाने चिद्घने क्रियाविलयन-फलितत्वमतएव क्रियाफलमेवेत्यपरे पश्यन्ति । उभयथापीद शक्यते वक्तुम् ।

अथान्य. प्रकार.–सर्वाप्येषा क्रिया त्रेधा–यज्ञो दान तपश्चेति । यथाग्निना परिताप्य सुवर्णं परिशोध्यते विशुद्ध च तत्सावर्ण्यं याथातथ्येन गृहीत्वा सुशोभते-एवमेव यमनियमाभ्या परिताप्याध्यात्म परिशोध्यते विशुद्ध च तत्स्वधर्मं याथा-तथ्येन गृहीत्वा सुशोभते, तदय यमनियमससर्गस्तप: । यथा हि चुल्ह्यामग्नेरुपरि स्थापिते पाकपात्रे जलान्नप्रक्षेपश्चेत्तस्यैव पाको भवति पाकपात्रस्य तदात्यल्प दाहः ।

अथ यदिनान्नजलप्रक्षेप तदा सर्वेणाऽग्निबलेन पाकपात्रस्यैव दाहः प्रसज्यते पाकपात्रविलिप्तस्य वार्थस्य, एवमेव यदि नित्य प्रत्यवसीयते तदाऽभ्यवहृतार्थस्यैव जाठराग्निना पाको भवति । शरीरस्य तदात्यल्प शोषः । अथ यदि नाभ्यवह्रि-यते–सर्वेणजाठराग्निबलेन शरीरान्त: करणस्यैव शोषः प्रसज्यते शरीरान्तः करणानुगतस्य वार्थस्य । तदित्थ यदि दुरितातिशयलेपः कथचित्सजातस्तदा तदुपशोभार्थमनशन भवति । तथा च तस्य दुरितस्य तावच्छोषो भवति । अथ शरीरान्त: करणशोषस्तु प्रवृत्तिलक्षणधर्मवता नानुष्ठेयः । अधर्मत्वात् । निवृ-त्तिलक्षणधर्मवता त्ववश्यमनुष्ठेयः धर्मत्वात् । तदित्थ बालवृद्धातुरैर्विना नियम-बन्धप्रयुक्त चान्द्रायणाद्यनशनव्रतमेव तप·, अय च क्षेत्रस्यतृणकण्टकाद्यपमा रणवत् शरीरान्त.करणस्य क्षेत्रीकरणसस्कार. । अथवा यथोष्णजलसयो-

जितानि तन्दुलाद्यन्नजातानि महार्चिः संयोजितानि लोहादिकठिनद्रव्याणि वा मार्दवाद्यपूर्वगुणमर्जयन्ति एवमेव नियमाग्निसंयोजितानि संयमाग्निसंयोजितानि वा शरीरान्तःकरणादिद्रव्याणि यत्किञ्चिदपूर्वगुणं शान्तिप्रधानमर्जयन्तीति तादृशपरिपाकसाधनं तपः। तथा च स्वस्मिन्नसतोऽपेक्षितस्यार्थस्यान्यतो ग्रहणं तपः।

एवमन्यतो ग्रहणार्थं क्षेत्रीयकरणमपि तपः, इत्यूह्यम्। अथ स्वस्मिन् सतोऽर्थस्यान्यस्मैतदपेक्षावते समुपयुक्तपात्राय समर्पणं दानम्। अवश्यं हि सर्वेणापि किञ्चिदुपसृज्यते। किञ्चिच्चानुपलं विसृज्यते इति प्रकृतिः। तत्र यद्यपेक्षितोऽर्थमुपसृज्यते अपेक्षमाणाय च विसृज्येत तर्हि जगतो महानुपकारः साधितो भवति। परस्परोपकार्योपकारकभावेन च वर्द्धमानादेकतावलात्सर्वो बलवान् भवति। न पुनः क्वचिदजीर्णतादोषः क्वचिद्वा दीनतादोषः प्रभूयानर्थाय सम्पद्यते।

सर्वश्च लोकः प्रसीदति यथा शिरो बुद्धिज्ञानप्रदानेन वक्षः प्राणोत्साहप्रदानेन मध्यमन्नरसप्रदानेन चरणादिकं तूपरितनत्रितयपरिचर्यासुखप्रदानेन परस्परमुपकुर्वाणाः परस्परद्वारा स्वमनुगृह्णन्ति परस्परप्रातिकूल्येन तु सर्वे नश्यन्ति, एवमेव ब्राह्मणो बुद्धिविज्ञानप्रदानेन क्षत्रियः प्राणोत्साहप्रदानेन वैश्योऽन्नरसप्रदानेन शूद्रस्तूपरितनत्रितयपरिचर्यासुखप्रदानेन परस्परद्वारा स्वमनुगृह्णन्ति परस्परप्रातिकूल्ये तु सर्वे नश्यन्ति तस्माद्दानं तपश्चसर्वसाधारणो धर्मः। उपलक्षणमेतदभयदानभूमिदानधनदानादीनामित्यूह्यम्।

अथ यदेव किञ्चिदृग्यजुःसामसाध्यमग्निप्रयुक्तं कर्मजातं स यज्ञः। एवेदं सर्वं यच्च किञ्चिद्दृश्यते। अग्निषोमात्मकं जगत्। अग्नौ सोमो हूयते। अग्निः सोममुपभुङ्क्ते उपभुञ्जान एव चानेकान्देवानुपभोजयति तदुपभोगकाल एवायं तत्तदर्थप्रतिभासः। उपभोगान्तरं त्वग्निना परित्यक्तं तद्विशीर्णं मृतं भवति सोऽयं सूर्यादागतोऽग्निरेव सर्वस्य जीवात्मा चन्द्रादागतः सोम एव सर्वस्य भूतात्मा। अथ दिव्यरोचनाप्रदेशादागतो देवकलाप एव सर्वस्यान्तरात्मा। येऽप्यनात्मभूना धर्मास्तेऽप्येत एवार्था अग्निभेदादुपचयन्ते इति सूक्ष्मेक्षिकया समीक्ष्यम्। अथ यत एवायं सर्वोऽपि प्राकृतो यज्ञः तत एव संस्कृतोऽपि यज्ञोऽनुष्ठीयते। यज्ञाद्धि यज्ञा प्रभवन्ति प्राकृतयज्ञ विदुषा तद्विधिमनुसृत्यैव क्रियमाणेन यज्ञेन सर्वे कामा यथेच्छ साध्यन्ते। यज्ञो हि दान यज्ञो हि तपः। सर्वं कर्मवात्र परिसमाप्यते तस्माद्यज्ञ एव श्रेष्ठतमं कर्म।

## ६. पुण्यपापविवेचनम्

उपदिशन्त्याचार्याः—'स्वधर्मोऽनुष्ठातव्यः इति। तत्र न ज्ञायते कोऽयमनुष्ठानपदार्थ इति। स्वसाध्यं साधयेत् स्वकर्तव्यं कुर्यादित्येवस्ह्यार्थमभिप्रयन्ति,

स कथं नाम साधीयान् स्यात् । यावता क्रियानिवृत्तौ तिष्ठति प्रतिपन्न' । क्रिया च नामेहाभिप्रेयते तिष्ठतिशब्देन । अत्रोच्यते—

अनुरत्र लक्षणे, साध्य लक्ष्यीकृत्याऽन्त करणस्यावस्थानमनुष्ठानम । यदनयाऽन्त करणस्थित्या लक्ष्यीक्रियते तन्नूनमनया स्थित्या विषयीक्रियते, अत एवेदमनया विशिष्टक्रिययेप्सितं भवतीति विशिष्टक्रिया प्रति कर्मता भजते । अत एव चाकर्मकोऽपि तिष्ठतिर्विशिष्टक्रियापेक्ष सकर्मको भवति । तन स्वधर्ममनु त्वया स्थातव्यमिति वक्तव्ये स्वधर्मस्त्वयाऽनुष्ठातव्य इत्युपदिशन्त्याचार्या । तत्र हि य. कश्चित्किञ्चिदर्थं साधयितुमध्यवस्यति तस्योपक्रमप्रभृत्यपवर्गपर्यन्तममुष्मिन् साध्ये चित्तवृत्तिराशवस्य विश्राम्यति, तदिद साध्यमनुसृत्य चित्तावस्थानमेव साध्यानुष्ठान भवति ।

अथेदमपि बोध्यम् । साध्यानुभवानन्तर साध्यानुष्ठान भवति । यमर्थमनुतिष्ठति । नियमतोऽनुष्ठानात्प्राक् तमर्थमनुभवति । तदर्थाभिमुख्येन प्रवृत्तिश्च तस्यानुभव । न चानुभवनमन्तराऽनुष्ठान सम्भवति । अनुभवन ज्ञानम् अनुष्ठान क्रिया । ज्ञानपूर्विका च सर्वा क्रिया साधीयसी भवति । ज्ञान हि वेदः, क्रिया धर्म. । वेदपूर्वक सर्वो धर्म्म. साधीयान् भवति । किन्तु य यमर्थमनुभवति त तमर्थमनुतिष्ठत्येवेति न व्याप्तिः । उत्पन्न हि सुखमनुभवति केवल नत्वनुतिष्ठति । सुखमनुभविष्यन् सुखहेतुमनुतिष्ठतीति दृश्यते यद्यपि कञ्चिदर्थमनुचित्त भवति च तिष्ठति च, तथापि करणवृत्तीना कर्तृवृत्तित्वप्रख्यापनस्य लोकप्रसिद्धत्वाच्चित्तवानपि ततो भवति च तिष्ठति च ।

यथा चक्षु पश्यति, पादश्चलति, कर्ण शृणोति, मन' सङ्कल्पते, इत्येतावतैव स पुरुषोऽपि पश्यति चलति शृणोति सङ्कल्पते, चेति व्यवह्रियते अन्यमनस्कं प्रत्याह—'नायमिहेदानी तिष्ठति' । एवमेवास्य चित्त तिष्ठतीत्यत एवाय पुरुषोऽपि साध्ये सनद्ध. साध्यमनुतिष्ठतीति युज्यते वक्तुम् । तथा चेद करिष्यामीति व्यवस्य यत्र साध्येऽसौ तिष्ठति सोय साध्योऽर्थोऽनुसरणस्थान भवतीत्यनुष्ठेय इत्युच्यते । तत्र चास्य समाधानमेवानुष्ठानमुक्तम् ।

इदमनुष्ठेयमनुष्ठान चोभयमप्युच्यते वृत्त चरित च । यत्र वर्तते तद्वृत्तम् । यत्र चरति तच्चरितम्, चरण वा चरितम् । अधिकरणे भावे च प्रत्ययो द्रष्टव्यः । यदेव किञ्चत्कर्तव्यमनुबुद्धया च कृत्या च तिष्ठति तत् खलु कर्तव्य तस्य वृत्त भवति चरित च । या च वा तादृश कर्मनुदेवदत्तस्य स्थितिर्नाम, साऽपि तत्तस्य वृत्त चरित च भवति । अथवा यतश्चायमध्यवसायो नाम बुद्धिस्तत्र साध्यधर्माचरणे सञ्चरति वर्तते च, तस्मात्तदाचरणमाचरित वृत्त च

भवति । वृत्ते वा चरिते वा कश्चिदर्थोऽवश्यमधिक्रियते । यमर्थमधिकृत्यायं वर्तते चरति वा तदेतदस्य चरित: पदं भवति । पदं स्थानमित्यनन्यार्थम् ।

तस्माच्चरित्रापरपर्यायमाचरितमेवास्य पुरुषस्य पदं प्रतिपद्यते । आचरिते हि कश्चित्पुरुषो वितिष्ठते प्रतितिष्ठति तत्रैव च स्थितोऽसौ सर्वथा प्रतिपद्यते । तस्मात् स्वयमाचरितमेवास्य जीवस्याजीवनं प्रधानं स्थानम् । तत्रानेन समान-पदत्वमाहात्म्येन चारित्र्यस्थानस्य भौमास्थानसाधर्म्यसिद्धयपदेशसमुपगृहीतो भवति । य एवानुबन्धा भौमस्थाने भवन्ति तेऽविशेषादिहाऽपि चारित्र्यस्थानेऽनु-कृष्य द्रष्टव्या इत्यर्थो लभ्यते ।

भौमस्थानसम्बन्धे चेदं द्वयं पश्यामि–सर्वोऽप्यधिष्ठाता स्वाधिष्ठानभूतस्य साद्गुण्यवैगुण्याभ्यां फलविशेषं गृह्णातीत्यधिष्ठातुरधिष्ठानविशेषमापेक्षा सिद्धिरित्येकम् साद्गुण्यवैगुण्ये चैतस्याधिष्ठानभूतस्य भौमस्थानस्य स्वाधि-ष्ठातृव्यक्तिविशेषसापेक्षमन्यथाऽन्यथा गृह्येते । नत्वेकान्तत: किञ्चिदपि स्थानं स्वरूपत: सदेव भवत्यसदेव वा । नेदं साधुत्वमसाधुत्व वा सत्तासिद्धोऽर्थ: । किन्तु भातिसिद्ध एवायमर्थ इति सुनिभृतं प्रत्येतव्यम् । परीक्षकदृष्टया साधुत्वा-साधुत्वयो: सनिरूपकपदार्थतया गृह्यमाणत्वात् । तस्मादधिष्ठानास्याधिष्ठातृ-विशेषसापेक्षा सिद्धिरिति द्वितीयम् एतदुभयं चारित्र्यस्थानेऽपि यथायथं परिशील-नीयम् । तथाहि तावत्–अधिष्ठानसापेक्षा सिद्धि:—

यदि कस्यचित् किञ्चिदपि स्थानं सुदृढमुदारं स्यात्,—परिष्कृतं स्यात्, स्वकीयं स्यात्, अनुपद्रवं स्यात्, तत्राऽसौ निर्भयं स्थित्वा कृतकृत्यो भवति । यदि त्वस्य स्थानं पङ्किलं स्यात्, अत्युच्चमपि भित्तिवदनुदारं स्यात्, उदारमपि कण्टकाद्याक्रान्तमपरिष्कृतं स्यात् दशकोटादियोग्यत्वाद्वा भयावहमपरिष्कृतं स्यात्, अपरिष्कृतदुष्टवाय्वादिसंकुलं वा स्यात्, परिष्कृतमपि वा दस्युपाटच्चरचौर-व्याघ्रानि:शङ्कावहुलं सप्राणबाधं स्यात् परोपभोग्यं वा स्यात्—न तत्र स्थित्वा कश्चित्पुरुष: कुशलो भवति । स्थित्वैव सङ्गेते, भयभीतो, रोगाक्रान्तो भवति म्रियते वा । दण्डितो वा भवति । अनुताप वा चिराय गृह्णाति । न चाकारणं ज्ञानपूर्वकं पुनस्तादृशं स्थानं मीहते गन्तुम् । ततोऽवश्यं शुभं स्थानमाश्रयणीयं नाशुभं स्थानमिति सार्वजनीनो निर्विवाद: सिद्धान्त: ।

एवमेवेदच्चारित्र्यस्थानेऽपि सर्वमायोजनीयम् । तथा चोपदेष्टार: शिक्षन्ते । 'सुदृढमुदारं परिष्कृतमनुपद्रुतं स्वकीयं स्थानमास्थेयमिति' । एतदेव नूनमार्यावर्तवर्तिनां प्राचां महर्षीणामादेशरहस्यम् । न त्वेवं तादृशमाचरितमास्थेयं यदिह नि:सारत्वात्फल्गु स्यात् । समाजविरुद्धत्वाद् बहुभिरनुपादेयं स्यात् । अज्ञान-कल्पितानेकासदर्थसंकुलत्वादरफीनं स्यात् । लोकापवादराजदण्डादिप्रयोजकत्वात् सप्राणबाधं स्यात् । परकीयदेशकालशरीरावस्थाद्यनुकूलतया परोपभोग्यत्वेऽपि

स्वीयदेशकालशरीरावस्थादिप्रतिकूलत्वादनुपयुक्त स्यात् । ईदृशमेवानुचित चरितमातिष्ठमाना "कपूतचरण"शब्देन गर्ह्यन्ते, सभ्यसमाजाच्च निकृष्यन्त । ये पुनरेतद्विपरीतास्त एव रमणीयचरणशब्देनाभिनन्द्यन्ते । सभ्यसमाजे चाकृ-ष्यन्ते इति लोकस्थिति ।

इद तु पुनरत्रावधेयम् यदेव स्थानमेकस्योपादेय भवति तदेवान्यस्य हेयम् । हेय चान्यस्यापादेय भवति । यदेव स्थान शिष्टा अनुमोदन्ते तदेव दुष्टा ऋतीयन्ते । चौरा यदाश्रयन्ति साधवस्तत पलायन्ते । मत्स्यादयो जलात्बहिश्चिरकाल न तिष्ठन्ति, बलात्स्थापिता केनचित्कालेन म्रियन्ते, जलान्तस्तु प्रसीदन्ति । मनुष्या पुनर्जलान्तर्मग्नाश्चिरकाल न तिष्ठन्ति, बलात् स्थापिता केनचित्कालेन म्रियन्ते, जलाद्बहिस्तु प्रसीदन्ति । आत्मप्रच्छादनव्यासक्ताना भीरुमृगादीना दशकीटादीना वाऽपरिष्कृतमेव स्थान मृग्यम् । दस्युचौरादीना चैकान्तविविक्त विपम प्रच्छन्न च स्थानमत्यादरमुपादेयम् ।

यदेवाऽस्माक परोपभोग्यत्वादग्राह्य तदेवान्यस्य स्वोपभोग्यत्वात्सग्राह्यम् । दिङ्मात्रमेतत । सर्वत्रैव तु सर्वमेवेद स्थान च भोग्यजातमन्नादिक च व्यक्ति-भेदनानुकूल च भवतीति तत्र तत्रोपेक्ष्यम । तथा च भौमस्थान वा चारित्र्यस्थान वा भोग्यजात वा नत्वेवैकान्तत किञ्चिच्छुभमशुभ वा वक्तु युज्यते । अपेक्षा-कृत तु सर्व शुभमशुभ वा द्रष्टव्यम् । यदेव हि यस्यानुकूल तत्तस्य शुभ भवति, तन्निष्पादनकर्मैव च पुण्यमित्युच्यते । यत्प्रतिकूलम् तत्तस्याशुभम भवति, तन्नि-ष्पादनकर्म्मैव च पापमित्युच्यते । शुभशब्दन सुखजनकमुच्यते, अशुभशब्दन तु दु खजनकम । अनुकूलवेदनीय सुखम । प्रतिकूलवेदनीय दु खम् । सुखजनक शुभधर्म । दु खजनकोऽशुभधर्म । शुभधर्मो धर्मशब्देन अशुभधर्मस्तु अधर्मशब्दे-नाख्यायते । सोऽय धर्मो वा स्यादधर्मो वा-धर्मत्वेन तौ भवत । शुभत्वाशुभत्वे पुण्यत्वपापत्वे चानुकूल्यतारतम्याद्व्यक्तिसापेक्ष न तु वस्तुनियते । अत एव वेदा ध्ययन ब्राह्मणेन क्रियमाण पुण्य शूद्रेण क्रियमाण तु पापम् । क्षत्रियेण क्रियमाण शस्त्रधारण पुण्य ब्राह्मणेन तु पापमित्यादिक विविच्य द्रष्टव्यम् ।

अथाहु यद्येवमानुकूल्यप्रातिकूल्ययो प्रतिव्यक्तिभेदाच्छुभाशुभे कर्मणी व्यक्तिसापेक्ष अभ्युपगम्येत तर्हि शिष्टोऽय दुष्टोऽयमित्येवमादयो व्यवहारा अव्य-नवस्थितपदार्था उत्सन्नाभवेयुरिति । तत्रोच्यते । इद ह्यानुकूल्यप्रातिकूल्यमुपकार्य-भेदात्पञ्चधा विज्ञायत । विश्वानुरोधन, समाजानुरोधेन, उत्कृष्टानुरोधन आत्मीयानुरोधन, स्वानुरोधेन चेति । तत्र विश्वमिति निरपेक्षलोकसाधारणाभि-प्रायम् । समाज इत्युपलक्षणम् । य कश्चिदव समानधर्मणा सघ स इहानुरो द्धव्य । उत्कृष्ट इति स्वस्मादुत्कृष्टो महोपकारकत्वेन दृष्ट कश्चिदकोऽपि व्यक्तिविशेष । स हि गुरुर्वा ब्राह्मणो वा राजा वान्यो वाऽभ्यर्हणीयोऽधिकगुण ।

आत्मीयन्तु कुलकुटुम्बमित्रादिः। स्वं तु कर्त्रात्मा सोऽपि त्रेधा–भूतात्मा वा क्षेत्रज्ञात्मा वा। प्रज्ञात्मा वा त्रिधा हि प्रतिशरीरमात्मा भिद्यते। यः करोति स स्थूलशरीराभिमानी भूतात्मा। यः कारयति स सूक्ष्मशरीराभिमानी क्षेत्रज्ञात्मा। यस्तु कर्तुश्च कारयितुश्च साक्षी स कारणशरीराभिमानी प्राज्ञात्मा। तदित्थं सप्तोपकार्या भवन्ति। तेष्वेतेषु परेषामप्रातिकूल्ये स्वानुकूल्यमनुरुन्धानाः शिष्टाः।

परेषां प्रातिकूल्ये तु स्वानुकूल्यमनुरुन्धाना महादुष्टाः। पूर्वस्य परेषां चाप्रातिकूल्ये आत्मीयानुकूल्यमनुरुन्धाना शिष्टतोऽप्याधिक्येन शिष्टा विशिष्टाः स्युः। पूर्वस्य प्रातिकूल्ये तु तथाभूता विशिष्टतमाः। परेषां प्रातिकूल्ये तु तथानुरुन्धाना दुष्टाः। पूर्वेषां चाप्रातिकूल्ये स्वोत्कृष्टविशिष्टव्यक्त्यानुकूल्यमनुरुन्धाना विशिष्टतोऽप्याधिक्येन शिष्टा योग्याः स्युः। पूर्वेषां प्रातिकूल्ये तु तथाभूता योग्यतमाः। परेषां प्रातिकूल्ये तु तथानुरुन्धानाः सामान्यदुष्टाः। पूर्वेषां परेषां प्रातिकूल्ये समाजानुकूल्यमनुरुन्धाना योग्यताऽप्याधिक्येन शिष्टा आप्ताः स्युः। पूर्वेषां प्रातिकूल्ये तु तथाभूता आप्ततमाः। परेषां प्रातिकूल्ये तु तथानुरुन्धानाः किञ्चिद्दुष्टाः। पूर्वेषामप्रातिकूल्ये विश्वानुकूल्यमनुरुन्धाना आप्ततोऽप्याधिक्येन अभ्यर्हाः स्युः। पूर्वेषां प्रातिकूल्ये तु तथाभूता अभ्यर्हतमाः। विश्वानुरोधी हि जनः कदापि दुष्ट इति न प्रतिपद्यते। ततः पूर्वपूर्वानुरोधिनस्तु स्वपक्षपातदोषदूषिता भवन्तीति बोध्यम्।

अथवा पुनरित्थमेतद्द्रष्टव्यम्। अनुकूलवृत्तयः शिष्टाः, प्रतिकूलवृत्तयो दुष्टा इत्यस्ति पक्षद्वयम्। तत्र पुनरेकैकस्मिन् पक्षे तारतम्यं भवति। यथा

**शिष्टपक्षे**

| | | | | |
|---|---|---|---|---|
| (१) पूर्वाप्रातिकूल्ये | पराप्रातिकूल्ये | अनुकूलवृत्तयश्चेत् | शिष्टा | विभक्तिः। |
| (२) पूर्वप्रातिकूल्ये | पराप्रातिकूल्ये | ,, | शिष्टतमा | विभक्तिः। |
| (३) पूर्वाप्रातिकूल्ये | परप्रातिकूल्ये | ,, | दुष्टप्राया | विभक्तिः। |
| (४) पूर्वप्रातिकूल्ये | परप्रातिकूल्ये | ,, | मध्यमा | विभक्तिः। |

**दुष्टपक्षे**

| | | | | |
|---|---|---|---|---|
| (१) पूर्वानानुकूल्ये | परानानुकूल्य | ,, | दुष्टतमा | विभक्तिः। |
| (२) पूर्वानुकूल्ये | परानानुकूल्ये | ,, | दुष्टा | विभक्तिः। |
| (३) पूर्वानानुकूल्ये | परानुकूल्ये | ,, | शिष्टप्राया | विभक्तिः। |
| (४) पूर्वानुकूल्ये | परानुकूल्ये | प्रतिकूलवृत्तयश्चेत् | शिष्टा | विभक्तिः। |

अत्रोक्तानां पञ्चानामनुरोध्यानां मध्यमेषु त्रिषु समाजोत्कृष्टात्मीयेष्वेवैतत्सर्वं यथावद् घटते। किन्तु स्वानुरोधे पूर्वप्रातिकूल्यं पूर्वानुकूल्यं वा नास्ति।

विश्वानुरोधे च परानुकूल्य परप्रातिकूल्य च नास्तीतिति विशेषोऽनुसन्धेय.। अत्रैतेष्वष्टसु पक्षेषु शिष्टत्वदुष्टत्वपरामर्श समाजभेदेन भिद्यते । यत्कर्म ह्येकस्मिन् समाजे शिष्टत्वेन प्रतिपन्न. स एवान्यस्मिन् समाजे दुष्टत्वेन विगीयते। तत्र विश्वसमाजयोरपेक्षाकृतव्यक्तिबाहुल्यात्तदनुरोधो मुख्य' पक्ष । ततस्तदुत्कृष्ट-व्यक्तिविशेषस्य । स्वात्मीययो सम्बन्धानुगृहीतत्वेऽपि लोकसमाजे तदुपलब्धोप-कारापेक्षया विशिष्टोत्कृष्टगुणवता व्यक्तिविशेषणाधिकोपकारलाभात् । तत· स्वीयानुरोध, व्यक्तिबाहुल्यात् आश्रितरक्षाया समाजानुगृहीतत्वाच्च । तत स्वानुरोधः । अत एव सर्वदा स्वस्य प्रतिकूलोऽप्यर्थो यदि समाजाद्यनुकूल स्यादवश्य स उपादेयः स्यात् । तथा च बहूना प्रातिकूल्ये एकव्यक्तिगतानुकूल्य नानुरोद्धव्यमिति सामाजिक सिद्धान्त पुराणे स्मर्यते—

एकस्मिन् यत्र निधन प्रापिते दुष्टकारिणि ।
बहूना भवति क्षेम तस्य पुण्यप्रदो वध· ।।

एतदभिप्रायेणैव च वधदण्डमनुजानन्ति महानुभावाः । अथान्या प्रति-पद्यते । स्वानुरोधो मुख्य पक्षः । तत स्वीयोत्कृष्टसमाजविश्वानुरोधा' क्रमेणो-पयुज्यन्ते । प्रकृत्यनुगृहीतत्वात् । स्वपरयोर्युगपदापन्नत्वे हि स्वपरयोर्युगपदापन्न-त्वे हि स्वापरप्रतीकारस्यैव प्राथम्येन प्रयुज्यमानस्य लोके प्रकृत्या दर्शनात् । यथा समाजानुगतोऽपि सर्वो दुर्भिक्षादिभिः दस्युपाटच्चरचौराद्युपप्लवादिभिर्वा विपद्य-मान कुटुम्बसहित स्व रक्षितु समाज परित्यज्य देशान्तरमनुधावति । आत्मनि कुटुम्बे च समवेते पत्नीपुत्रादिकमसौ परित्यज्य एवहेलया आत्मान परिरक्षतीति दृश्यते । यद्यपि शिक्षित· कदाचिदेतमर्थ व्यभिचरेत् तथापि सोऽयमस्य सस्कृतोऽर्थ. स्यात् । प्रकृत्या तु सर्वोऽप्यविशेषादात्मपक्षपातीति सुप्रसिद्धमेतत् । तस्मादात्मपक्षो ज्यायान् । तत कुटुम्ब· । तत समाज इति ।

अय च समाजानुरोधस्त्रेधा—सामाजिकैकव्यक्तिपक्षपाती, सामाजिकैक-कुलपक्षपाती, सामाजिकानेककुलपक्षपाती च । तत्राऽवश्यमुत्तरोत्तरप्राबल्यमिष्यते-उपकारबाहुल्यानुरोधात् । एतदभिप्रायेणैव "एकस्मिन् यत्र निधन" मित्यादयः भमादेशाः प्रवर्तन्ते । न तु तेषा स्वानुरोधापकर्षकत्वमास्थेयम्, तदंशे प्रमाणा-भावात् । अत एव सामाजस्य सर्वदा प्रतिकूलोऽप्यर्थ उपादेयो यदि स्वस्य सर्वदाऽ-नुकूलः स्यात् । तथा च स्वप्रातिकूल्ये समाजोपकारकत्वादुत्कृष्टोऽपि ब्राह्मणा-दिव्यक्तिविशेषो नानुरोद्धव्य इत्याहुर्महानुभावा.—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुल त्यजेत् ।
देशस्यार्थे त्यजेद् ग्राममात्मार्थे पृथिवी त्यजेत् ।।
गुरु वा ब्राह्मण वापि अपि वेदान्तपारगम् ।
आततायिनमायान्त हन्यादेवाविचारयन् ।।

विरुद्धौ चेमौ पक्षौ तत्रैते धर्मसूत्रकाराः समाजपक्षमनुमोदन्ते। अर्थसूत्रकारास्तु स्वपक्षम्। तत्र अर्थशास्त्रात्तुत्रलवद्धर्मशास्त्रमिति स्थितिरिति स्त्रानुरोधापेक्षया समाजाद्यनुरोधेन साधीयानिति मन्यन्ते विद्वांसः।

यदि सैकव्यक्तिरेव बहुसमाजोपकारिका स्यात् तदा तद् व्यक्त्यनुरोधः। अगुणवद्व्यक्तेस्तु समाजानुरोधेन परित्याग इति मध्यस्थाः। समाजत्यागेनाप्यात्मरक्षा प्राकृतधर्मः। आत्मत्यागेनापि समाजरक्षा संस्कृतधर्मः। प्राकृतधर्मापेक्षया च संस्कृतधर्मोऽत्यादरेणोपादयः। विज्ञानानुमोदितत्वादिति। इत्येतत्तत्र तत्रोपेक्ष्यम्।

अथैषां पञ्चानां सप्तानां त्रेदमानुकूल्यप्रातिकूल्यमपेक्षाविशेषादुत्पद्यते। अत एवापेक्षितार्थत्रैविध्यादिदं त्रेधा–प्राणसापेक्षमुद्देश्यार्थसापेक्षं चित्तसापेक्षं च। येन जीवनाव्याघातो जीवनपुष्टी रोगानुत्पत्त्यात्मकं स्वास्थ्य, रोगादिप्राणबाधानिवृत्तिश्चेत्येवमादिकं सुखं स्यात्तदनुकूलं नाम। येन तु जीवनव्याघातो जीवनहानिरोगोत्पत्तिप्राणबाधा चेत्येवमादिकं दुःखस्यात्तत्प्रतिकूलं नाम। इदं तु मुख्यमानुकूल्यप्रातिकूल्यं सर्वतः प्रबलं प्रकृत्या सिद्धं च। एतच्च श्रेयःशब्देनोच्यते।

अथ येनोद्देश्यार्थानां धनगृहक्षेत्रादीनां सिद्धिरूपं सुखं संभाव्यते तदनुकूलं नाम। येन तु स्वीयार्थ नाशदुःखं तत्प्रतिकूलं नाम। इदं मध्यमम्, प्राणबाधासंभवे स्वीयार्थनाशाद्यनपेक्षणात्। एतच्चांशतः श्रेयोऽप्यशतोऽश्रेयः। एवमंशतः प्रेयोऽप्यशतोऽप्रेयः। तस्मादुभयथाऽप्युच्यते। एवं येन चित्तस्य प्रसादप्रीत्यनुरागरुचिलक्षण सुखमुत्पद्यते तदनुकूलं नाम। येन तु विषादवैमनस्यविरक्तिघृणालक्षणं दुःखमुत्पद्यते तत् प्रतिकूलं नाम इदं चरमम्। उद्देश्यार्थसंसिद्ध्यर्थमप्रीतिकरकार्येष्वप्यतितरां प्रवृत्तिदर्शनात्। एतच्च प्रेयःशब्देनोच्यते। तथा च कठश्रुतिः—

"अन्यच्छ्रेयोऽन्यदुतैवे प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः। तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद् य उ प्रेयो वृणीते। श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते। सत्वं प्रियान् प्रियरूपांश्च कामानभिध्यायन्नचिकेतोऽत्यसाक्षीः। नैतां शङ्कां वित्तमयीमवानो यस्यां मज्जन्ति बहवो मनुष्याः। इत्यादिः।"

अथ कालसम्बन्धादिदं चतुर्द्धा-तत्कालमनुकूलं परकालं चानुकूलमिति प्रथमम् तदुत्कृष्टतमम्। तत्कालं प्रतिकूलं परकालमनुकूलमिति द्वितीयं तदुत्कृष्टम्। तत्कालमनुकूलं परकालं प्रतिकूलमिति तृतीयं तन्निकृष्टम्। तत्कालं प्रतिकूलं परकालं च प्रतिकूलमिति चतुर्थं तन्निकृष्टतमम्।

तदित्थमानुकूल्यं त्रेधा–सार्वकालिकं पारकालिकं तात्कालिकं चेति। एतानि क्रमेणोत्तमम्। चोत्तमसमं चाधमसमं च स्युः। प्रातिकूल्यमपि त्रेधा–सार्वकालिकं पारकालिकं तात्कालिकं चेति। एतानि क्रमेणाधमं चाधमसमं चोत्तमसमं च स्युः। अत्र कालसन्निकर्षविप्रकर्षयोर्विवक्षाधीनतया तात्कालिकत्व-पारकालिकत्वयोः सङ्कीर्णव्यवहारः। विप्रकृष्टपरकालोऽपि त्रेधा-ऐदम्भवीय, माध्यभवीयः, पारभवीयश्च। तत्रैदम्भवीयो मरणात् प्रागेवोपलभ्यः। माध्य-भवीयस्तु गान्धर्विकः। तत्त्वं च–पूर्वशरीरत्यागादूर्ध्वं शरीरान्तरप्रतिपत्तेश्च प्रागवान्तरस्थित्या परलोके वर्तमानत्वम्।

अन्तराभवसत्त्वस्य गन्धर्वपदार्थत्वात्। स च जन्ममरणयोर्मध्यभवो-यातनाशरीरवानित्यभियुक्ता आचक्षते। पारभवीयस्तु पुनर्गृहीतजन्मा। यदा पुनः पञ्चम्यामाहुतावाप पुरुषवचसो भवन्ति तदाऽस्य प्राग्भवीयसंस्कारात्कृति-फलभुक्तिं मन्यन्ते। अतस्तादृशशुभसंस्कारसिद्धिरप्युद्देश्यार्थः। गान्धर्विकत्वं पारभवीयत्वं चान्यत्र निरूपयिष्यामः।

अथेदमानुकूल्यप्रातिकूल्यं पुनरवस्थाभेदाच्चतुर्द्धा भिद्यते।

तथाहि—

प्रागनुकूलं भूत्वा पश्चादप्यनुकूलं स्यादित्येको भावः।
प्राक् प्रतिकूलं भूत्वापश्चादनुकूलं स्यादिति द्वितीयः॥
प्रागनुकूलं भूत्वा पश्चात्प्रतिकूलं स्यादिति तृतीयः॥
प्राक् प्रतिकूलं भूत्वा पश्चादपि प्रतिकूलं स्यादिति चतुर्थः॥

तत्रेदं सर्वदानुकूल्यमुत्तमः पक्षः। प्रातिकूल्यानुकूल्यं मध्यमः पक्षः। आनुकूल्यप्रातिकूल्यं सामान्यः पक्षः। सर्वदा प्रातिकूल्यं तु निकृष्टः पक्षः। एतत्सर्वं सर्वत्रैव तर्केणानुसन्धाय कर्म कर्तव्यम्।

उक्तं पूर्वम्। यत्रानुकूल्यसिद्धिस्तत्कर्म पुण्यम्। यत्र प्रातिकूल्यप्रतीतिः तत्कर्म पापमिति। आनुकूल्यं प्रातिकूल्यं च तेषां पञ्चानां सप्तानां वोपकार्या-णामापेक्षिकम्, अत एवैकं कर्म यत्किञ्चित्सापेक्षं पुण्यं भवत्यन्यसापेक्षं तु पापम्। तदितिकृत्वा नितान्तं सूक्ष्मविचारसाध्या सेयं पुण्यपाप-प्रतिपत्तिः प्रतिभाति। ये नूनं सर्वैकमत्येन विश्वजनीनसिद्धान्तसिद्धाः साधारणा दशधर्मा आख्याताः दयादानसत्यभाषणादयः तेऽपि नूनं प्रकरणविशेषे पापत्वेन परिणीयन्ते।

यदि दण्ड्यानतायिने दयां कुर्यात्, यदि ब्रह्मचारिणे ताम्बूलदानं चौराया-भयदानं शूद्राय विद्यादानं कुर्यात्, यदि गोब्राह्मणवधे सत्यं ब्रूयाद्-अवश्यं स पतितः स्यात्। तस्मान्न लौकिकेन स्वयमेकहेतया पुण्यं पापं वा विनिश्चयानुसारे-

णैव प्रकल्प्य प्रवर्त्यम् । परीक्षकदृष्ट्या तु तद्ग्रहीतव्यम् । तथा चोपदिशति भगवान् वेदपुरुषः—"अथ यदि ते कर्मविचिकित्सा वृत्तिविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः । एष आदेशः एष उपदेशः" । ··· (तै० उ० शिक्षावली) भगवान् मनुरप्याह—"ये शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादसंशयः" तथा च शुभकर्म कुर्वाणोऽवश्य सुखी स्यादिति ।

सोऽयं पुण्यपापसमादेशो लौकिक एव व्याख्यातः । अस्ति चान्योपि शास्त्रीयः पुण्यपापसमादेशः पारमार्थिकनिर्भरः । येन कर्मणा क्रियमाणेन दिव्या लाकाः सम्पाद्यन्ते तत्पुण्यम् । येन तु नारका लोकाः, तत्पापम् । के इमे दिव्या लोका. के वा नारका इत्यन्यत्र विशदीकरिष्यामः । पुण्येन कर्मणा पुण्या अतिशया अपूर्वा उत्पाद्यन्ते, तैश्च पुनः काले पुण्या लोकाः प्रादुर्भवन्तीति क्रमः । एवं पापेन कर्मणा कलुषा अतिशया अपूर्वा भवन्ति, ततः काले नारका लोकाः लोकाश्चैत शुभाश्चाशुभाश्च भवन्तीत्येतस्मादनुरोधात् तत्प्रयोजका अतिशया अतिशय-प्रयोजिकाः क्रियाश्च शुभा वा अशुभा वा व्यपदिश्यन्ते ।

एवं क्रियासु यथा कर्मशब्दस्तथा कर्मफलभूतेष्वतिशयेष्वपि कर्मशब्दः । तत्फलभूतेषु लोकेषु च पापेन कर्मणाऽधिकमात्रेण प्रबलेन वा दुर्बलं पुण्यमपनुद्यते, पुण्येन च प्रबलेन दुर्बलं पापम् । प्रारब्धं तु पुण्यं पापं वा कर्म नापरेण कर्मणा शक्यमपनेतुम् । प्रारब्धकर्मणां भोगादेव क्षयस्य लोके दृष्टत्वात् । दृष्टेनैव तु दृष्टान्तेनादृष्टेषु दृष्टिः प्रवर्तते इति लोकसिद्धमेतत्—तस्मात्— .

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥

इत्यादयः प्राचामादेशाः प्रारब्धकर्मविषया नेयाः । फलं दातुमप्रारब्धेषु तु कर्मसु "पुण्येन पापं नुदति, पापेन पुण्यं नुदती" त्यादीनि श्रुतिवाक्यानि "ज्ञानाग्निः सर्व कर्माणि भस्मसात्कुरुते तथा"—इत्यादीनि स्मृतिवाक्यानि चावश्यं परस्परोपमर्दनीयत्वं प्रतिपादयन्तीति सुव्यक्तमेतत् ।

तदित्थ धर्मसामान्यलक्षणं चात्र व्याख्यातम् । तत्रायं धर्मः शुभश्चेद् धर्मशब्देनाख्यायते, अशुभस्त्वधर्मशब्देनेत्युक्तम्प्राक् । स चाधर्मदारहारेणसिद्धो धर्मविशेषरूपो धर्म इदानीं व्याख्यातव्यः । तत्र सुखसाधनं धर्म इति धर्मसामान्य-लक्षणम्, सुखं तु द्विविधं सिद्धम्—अभ्युदयलक्षणं निःश्रेयसलक्षणं चेति । ऐहिकलौकिकस्रक्चन्दनवनितादिसुखभोगजातमभ्युदयः । पारलौकिकमदुःखसभि-न्नाव्यवच्छिन्नसुखभोगजातं निःश्रेयसम् । प्रवृत्तिलक्षणधर्मसाध्योऽयमभ्युदयः । निवृत्तिलक्षणधर्मसाध्यं निःश्रेयसम् । प्रवृत्तिलक्षणेन कर्मणा नूनमात्मनि केऽपि

शुभातिशया आधीयन्ते तेन सुखोदयः । निवृत्तिलक्षणेन तु कर्मणा नूनमात्मनः शुभाशुभाः सर्वेऽतिशया निवर्त्यन्ते, ततोऽस्यात्मनः सच्चिदानन्दस्य स्वरूपलक्षणानन्दावाप्तिः । कर्मबन्धरूपयावदतिशयपरिमुक्तौ लभ्यत्वात् तदविनाभूतत्वाच्च तस्यानन्दस्य मुक्तिमोक्षापवर्गादिशब्दैरभिनयं कुर्वन्ति । सर्वातिशयपरिमुक्तौ शुद्धोऽयमात्मा सच्चिदानन्दरूपत्वादानन्दलक्षणो ज्ञानलक्षणः सत्तालक्षणश्च पर्यवसीयते । सत्ता हि भावलक्षणा नूनमभावप्रतिबन्धिनी भवन्तीत्यनया नित्यभावसिद्धा भवति ।

तस्मादुच्यते–नित्यादात्मनो विज्ञानान्नित्यानन्दो लभ्यत इति । परस्पराव्यभिचरितमेतत् त्रितयम्, ज्ञानं नित्यत्वमानन्दश्च । तेन सति ज्ञाने नित्यत्वं लभ्यत इति पुनरावृत्तिजननमरणादिक्रियानिवृत्तिः । नानन्दो लभ्यत इति सर्वदुःखनिवृत्तिः । तत्र च ज्ञाने क्रियासमुच्चयो नापेक्ष्यते सर्वक्रियाविनिवृत्तौ हि तादृशज्ञानोपलब्धेः सम्भवात् । तस्मान्नित्यविशुद्धज्ञानान्नित्यविशुद्धानन्दो नित्य इति सिद्धान्तः । अभ्युदयलक्षणं तु सुखदुरतिशयपरिहारेण शुभातिशयसमाहारेण च साध्यम् । शुभातिशयापादानकत्वाच्च यावदतिशयस्वरूपं गृह्णाति । सुखरूपेण परिणम्यमानस्यातिशयस्य सर्वापहारे सुखस्यापि सर्वापहारः । अर्थरूपेण परिणम्यमानस्य तृणसघस्य सर्वापहारेऽपि सर्वापहारवत् । तस्मादनित्यमेवेदं सुखमनित्यातिशयजन्यत्वादिति सिद्धान्तः । इदं तु बोध्यम् । एतदेव शुभातिशयसमाहारलभ्यमभ्युदयसुखं वा, एतदेव शुभाशुभातिशयपरिहारलभ्यं निःश्रेयसुखं वा,–उभयत्रापि क्रियापेक्षा नैकान्ततः प्रत्याख्यायते ।

यथा हि नानपेक्ष्य क्रियां कश्चिदतिशयः शक्य उत्पादयितुम् । एवमेव खलु नानपेक्ष्य क्रियां कश्चिदुत्पन्नोऽतिशयः शुभोऽशुभो वा शक्योऽपनोदयितुम् यथा हि प्रवृत्तिक्रिययातिशयः सम्पाद्यते, तथैव निवृत्तिक्रियया सोऽतिशयोऽपनोद्यते– इति समानमेतत् । सकामं कर्म प्रवृत्तिलक्षणमुच्यते निष्कामं तु निवृत्तिलक्षणम् । तस्मादभ्युदयमिच्छता वा निःश्रेयसमिच्छता वा न युक्तं कर्म परित्यक्तुम् । फलाभिकाङ्क्षा तु निःश्रेयसमिच्छता परित्यज्यते । प्रवृत्तिमार्गे तावत् ज्ञानसमुच्चितक्रियया शुभातिशयरूपफलप्राप्तिः । निवृत्तिमार्गे तु क्रियासमुच्चितसत्त्वेन विशुद्धज्ञानरूपफलप्राप्तिः । तस्मात् कुर्वत एव सम्पत्तिः ये तु ज्ञानादेव मुक्तिर्भवति नार्थः कर्मणा इत्यभिमानेन कर्मसु न सज्जन्ते ते नितान्तमशास्त्रमर्मज्ञा भ्रान्ता पदे पदे स्खलन्ति पापीयांसो भवन्ति दुःखैश्च प्रतिपदं युज्यन्ते तस्मात्तथा न व्यवस्थेत् ।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।।

इति भगवदादेशात् । –आचार्या अप्याहुः–'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः'–इति । यः समुचितप्रकारेणार्थं पश्यति स यथावदर्थं जानाति । स यथा जानाति तथैव यदि तमर्थं साधयेत् तदाऽवश्यं फलेन युज्यते । अथ यद्यर्थ-मन्यथा सन्तमन्यथा पश्येत्-अवश्यं स तमर्थमन्यथैव जानीयात् । अन्यथा सतोर्थ-स्यान्यथा ज्ञानं भ्रमः । भ्रमेण प्रवर्तमानो यदि चिरायाऽपि व्यवस्येत् नासौ फलेन युज्यते । तस्मात् सम्यग् दर्शनेन जायमाने सम्यग्ज्ञाने यदि सम्यगाचरणेन युज्यते स तर्हि नूनं फलेनापि युज्यत इति सिद्धान्तः ।

तदित्थं सम्यक् फलयोगार्थं सम्यगाचरणं कार्यम्, तदर्थं च सम्यग्ज्ञानं साधयितव्यम्, तदर्थं सम्यग् दर्शनं सम्पाद्यम् । तदर्थं च गुरुरुपासनीयः । न चान्तरेण चारित्र्यं सम्यग् ज्ञानमात्रेणापि सिद्धिरस्ति । तस्माद् ज्ञात्वा ज्ञात्वा-ऽहरहः किञ्चित् कर्तव्यमेव इत्यादिशति भगवान् वेदपुरुषः "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे" । 'अजितं जेतुमनुचिन्तयेन्न क्वचिदप्यलं बुद्धिमादध्यात्" ।

७. मनुष्याणां त्रैविध्यम्

अथैतेषु सर्वेष्वेव देशेषु सर्व एव मनुष्यास्त्रिविधा दृश्यन्ते, भारवाहिनः, सारग्राहिणो, जिज्ञासमानाश्च । तत्र द्वितीया अत्यल्पा बहवस्त्वितरे । सार-ग्राहिणो हि शास्त्रतो लोकतो वा तात्त्विकमर्थं तत्तच्छास्त्रतात्पर्यविषयभूतं गृहीत्वा कुशलिनः कृतकृत्याः स्युः, अन्येषां च दीनानामुद्धाराय करुणार्द्रहृदया मितभाषित्वात् कदाचित्सूत्ररूपेण केचित् किञ्चिदुपदिशन्ति स्म । ते द्विविधाः–महर्षयो मनुयश्च ।

अथ भारवाहिनोऽपि द्विविधाः पण्डितमन्याः, मूर्खमानिनश्च । तत्रैते पण्डितंमन्या निरतिशयपक्षपातिनः स्वस्वबुद्ध्यनुसारेण तत्तन्महर्षिमुन्युक्तमर्थं प्रत्याकर्षयन्तः सारासारार्थसंकीर्णाननेकमतवादानाडम्बरयन्तः परस्परविरोध-बीजमावपन्तः कण्टकितृणान्युत्पाद्य जगत्पथमाकुलयन्ति । अथैते जिज्ञासमाना अपि द्विविधा एव एके ज्ञानलवदुर्विदग्धा धृष्टचरिता वितण्डावादिनः प्रायेणो-पहासप्रधाना भवन्ति, परेतु विनीताः शिक्षितार्थे संयुक्तिके विश्वासमुपयान्ति । तदर्थमेवेदं सर्वं शास्त्रमुपयुज्यते ।

तच्चेदं शास्त्रं द्वेधा–लौकिकं वैदिकं च । तद्धि लौकिकं यदनायासेन शिक्षणीयं सामान्यफलं च, यथा भाषाविद्या, शुल्वशास्त्रम, शिल्पशास्त्रम्, सङ्गीत-शास्त्रम् इत्यादि । वैदिकन्तु विशिष्टधीवेद्यं महार्थं च, यथा द्रव्यगुणविज्ञानम्, दैवविज्ञानम्, कार्यकारणविज्ञानेन भविष्यदर्थावधारणमित्यादि । तत्र सर्वमेवेद-

मार्याणा वैदिक शास्त्र द्वेधा प्रवृत्त दृश्यते–वैज्ञानिकसमयेन, ऐतिहासिक-समयेन च।

तत्राद्ये त्रेधा प्रतिपत्ति अधिदैवतम्, अधिभूतम, अध्यात्म चेति। तत् खलु तत्राधिदैविक यत्रैतदनन्ताकाशप्रदेशान्तर्निविष्टाना पृथ्वीसूर्यचन्द्रादित-त्तद्गोलकाना लोकसंज्ञकाना प्रत्यात्मविलक्षणानेकशक्तिमता गतिक्रियादिभि, एवमग्निसोमेन्द्रादित्यादीना तेजोऽवन्नादीना च सघातभेदादिभिरतिचमत्कार-कारि जगत्तत्व निरूप्यते।

अथ तदाधिभौतिक यत्र पृथिवीगोलकोपरि जाताना पुराकालिकाना शिष्ट-दुष्ट-मूढ-विपश्चिद् राज-प्रजा-शत्रु-मित्रादासीनानामादर्शपुरुषाणामाचरि-तस्य तदाचरितपरिणामस्य च साक्षात्कारेणाधिगत कर्तव्याशस्य तत्तदभीष्ट फलस्य च कार्यकारणभाव दृष्ट्वा सर्वलोकस्वास्थ्यसपत्तये देशकालानुराधन समाजबन्धनेन च सामयाचारिकधर्मा राजाप्रजादिषु निरूप्यन्ते। आध्यात्मिक पुनरिद भवति-यत्र पुद्गलद्रव्याणा धातुमूलजीवात्मकानामुत्पत्तिस्थितिसम्बन्धिन स्वरूपधर्मा निरूप्यन्ते। सैषा वैज्ञानिकाना त्रयीविद्या सर्वविद्या भवति, न चान्या काचिदीदृशी विद्या या नास्यामन्तर्भवति साधिगन्तव्या निपुणमित्यनु-दर्शिता पूर्वम्।

तदधिगमनाधिकारिणश्च पुरुषास्त्रिविधा दृश्यन्ते-उत्तमाधिकारिण सर्व-सिद्धा, मध्यमाधिकारिणो युक्तिप्रधाना, सामान्याधिकारिणश्च कोमलश्रद्धा इति। तत्रोत्तमाधिकारिणो विशिष्टबुद्धयो वैज्ञानिकसमयेनैव प्रवर्तन्ते, तस्मिश्च प्रभवन्ति तथा च फलवन्त. कृतकृत्या भवन्ति। मध्यमाधिकारिणस्तु ये तत्र प्रवर्तन्ते ते कृच्छ्रात् प्रभवन्ति, भृश ग्लायन्ति च, अत एवैतेषा मृदुबुद्धीना मध्य-माधिकारिणा सुखेन तत्तदतिगभीरार्थप्रतिपत्त्यर्थ विशेषतश्च सामान्याधिकारिणा नितान्तस्थूलबुद्धीना स्त्रीशूद्रद्विजबन्धूना विज्ञाननिर्दिष्टपद्धतिपरिशीलनार्थं निपुण-मुपायमध्याहरद्भि. समाजनेतृत्वरश्मिग्राहकैः पुराकालिकैरितिहासबन्ध. प्राकल्प्यत।

तत्र चैतिहासिकसमये त एव वैज्ञानिकसमयनिर्दिष्टा अर्था पदार्थविद्या-रूपा. साधारणधीभिर्यथावदवगन्तुमशक्या अवगन्तव्याश्च साङ्गोपाङ्गकल्पितेन चेतनप्रपञ्चेनेतिहासविषया निर्दिष्टा। अत एवतऽपीतिहासास्त्रेधाद्रष्टव्या आध्या-त्मिकाश्चाधिदैविकाश्चाधिभौतिकाश्च। प्राणवाङ्मनसाहमहंप्रोदितास्यानादीनामा-ध्यात्मिकत्वम्,सोमाग्रपेयादाना मृगशीर्षमादुपोपाख्यानादीना चाधिदैविकत्वम्,हम-डिम्भकोपाख्यानादीना चाधिभौतिकत्वम्। एषा सर्वेषामप्यर्थवादरूपतया तात्पर्य-विषयीभूतयत्किञ्चिद्गुणभूतार्थरहस्यप्रकाशमात्रेण कृतार्थाना सतामन्यत्र स्वार्थ-मात्रे तात्पर्यविषयता नाभ्युपगम्यते इति प्रपञ्चित मीमासायाम्। इतिहासाना-

इत्यादिस्मृतिवचनैराख्यानेतिहासादीनामैकार्थ्यानैकार्थ्याभ्यां सर्वेषां व्यवहारात् ।

ननु च भो किमित्थमेतेषां सर्वेषामेवेतिहासानामविशेषेणान्यार्थतात्पर्यकतयाऽर्थवादत्वमभिप्रेयते, उत केषाचित् स्वार्थतात्पर्यकतया तात्त्विकत्वमप्यवशेष्यते, उच्यते, आधिभौतिकेषु यत्र न दृष्टार्थबाधस्तत्राकारण गुणवादत्वस्वीकारे प्रमाणाभावात्तेषां तात्त्विकत्वमेवावसीयते, यथाऽऽपानप्त्रीयसूक्तद्रष्टुरैलूषस्य कवषस्योपाख्यानम्, भावयव्यसौदासादिराजोपाख्यानम्, देवरातोपाख्यानं चेत्येवमादीनाम् । यथा वै सूर्यचन्द्राग्निवंश्यनरपतिसम्बन्धिनां जीवनचरितानां पुराणसविधेयार्थतयार्थवादत्वानाम्नानानाम् । तथा चैवंविधाधिभौतिकातिरिक्तानां सर्वेषामेवेतिहासानां काल्पनिकत्वं सिद्धमिति द्रष्टव्यम् ।

अत्राहु—किमेतस्याः प्रकल्पनायाः प्रयोजनमिष्यते, उच्यते सन्ति हि भूयांसि प्रयोजनानि पश्यन्ति ह्याचार्यास्तादृशदुरवगाहायामपि पदार्थविद्यायामितिहासस्य नितान्ततुच्छधीभिरपि सुग्रहस्य द्वारा प्रवेशयितुमतिसौकर्यमिति तदर्थमितिहासकल्पनां रोचयन्ते, अवश्यं चैवं सुगृहीतेषु तत्तदर्थेषु परमानुग्राहकविशिष्टबुद्धिसद्गुरूपदेशद्वाराऽनायासेनेतिहासकक्षोत्तीर्णानां मध्यमाधिकारिणां तेषां विधानामचिराद्विज्ञानकक्षाधिरोहो भविष्यतीति सुघटस्तेषामुद्धारः स्थापनीयो येषान्तु सामान्याधिकारिणां पश्चादपि नास्ति विज्ञानकक्षायाम्यता तेषामपि "न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" इत्येव प्रतिषिद्धविज्ञानकक्षाप्रवेशार्थोपदेशानामितिहासविषयाध्यवसायमात्रेणापि कस्मिंश्चिद्योग्ये विषये प्रवृत्तिः, कस्माच्चिच्चायोग्याद्विषयात्प्रतिनिवृत्तिः कर्तुं पार्यत इति फलांशे सत्यत्वाद् असत्येऽप्यैतिहासिकल्पितचेतनप्रपञ्चे विश्वासोत्पादनं न दोषाय ।

उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥

इति न्यायात् । स्पष्टं चायमर्थः समर्थितो, 'गुणवादस्तु" इतिसूत्रव्याख्यानाऽवसरे धर्ममीमांसाया भाष्यकृद्भिः—"कथं पुनरनुत्खिदाया वपाया प्रजापतेरात्मनो वपामुदखिददित्याह, उच्यत—असद्वृत्तान्तान्वाख्यानस्तुत्यर्थेन प्रशंसया गम्यमानत्वम् । इहाऽन्वाख्यानं वर्तमाने द्वयं निष्पद्यते-यच्च कस्मिंश्चित् प्ररोचना द्वेषो वा, तत्र वृत्तान्तज्ञानं न प्रवर्तकं न निवर्तकं चेति प्रयोजनाभावादनर्थकमित्यविवक्षितम्, प्ररोचनया तु प्रवर्तते, द्वेषान्निवर्तत इति तयोर्विवक्षा । वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्ता दोषो वेदस्य प्रसज्येत ।

कथं पुनरिदं निरालम्बनमन्त्राख्यायत इति, उच्यते नित्यः कश्चिदर्थः प्रजापतिः स्यात्—वायुः, आकाशः, आदित्यो वा । स आत्मनो वपामुदखिददिति

वृष्टिम्, वायुम्, रश्मि वा तामग्नौ प्रागृहणात् वैद्युते, आर्चिषे लौकिके वा। ततोऽज इति-अन्नम्, बीजम्, वीरुवा तमालभ्य (तमुपयुज्य) प्रजाः पशून् प्राप्नोतीति गौणाः शब्दा इति।' तदित्थमेतमर्थं स्थाने पश्यन्ति तत्र भवन्तः, साम्प्रतमेतत्। अत एवोपदेष्टृभेदेनोपदेशवैचित्र्यादेकस्यैव तस्य पदार्थविद्यानिदर्शनार्थस्य नानाभावेन वक्तुं गुणकनया समानार्थ एव नानाविधकल्पनान्यूनातिरिक्तांशाः परस्परविरुद्धांशा वा दृश्यन्ते तत्र तत्र वेदे पुराणे चेति विशेषपरामर्शप्रवणानामप्रच्छन्नम्[1] विशेषतः सामान्याधिकारिसमुद्धारोद्देश्येन निर्दिष्टेऽस्मिन्नैतिहासिकसमये प्रवृत्तानां मध्यमाधिकारिणां विशेषसमीक्षापेक्षिणामिदं खलु समुचितं भवति–यदेतेषु तत्र तत्र परस्परविरुद्धेष्वपि काल्पनिकेष्वितिहासेषु धान्येष्विव सारं तन्दुलमिवोद्धृत्य तुषमिव काल्पनिकांश परित्यज्य महर्षिमञ्जोपितपरमोत्कृष्टतत्तद्विद्याधिगमाय प्रयतेरन्, तथा च ते कृतकृत्या भविष्यन्तीति।

अपरमपीद द्रष्टव्यम्—यथा हि कस्यचिदविदिताश्वगजोष्ट्ररूपस्य संज्ञासमानस्य तत्तत्स्वरूपविज्ञापनाय प्रवृत्तो विशिष्टबुद्धिर्मृत्तिकया निर्माय दर्शयन्नुपदिशति–अयमश्वः, अयं गजः अयमुष्ट्र इति। ततो विधेयोऽतिसामान्यधीस्तां तामेव मार्तिकीं प्रतिकृतिमश्वादितया प्रतिपद्येत, व्युत्पन्नबुद्धिस्तु बुद्धिसोपाने तत्र केवलं पदमुपनिधाय पदार्थविशेषे बुद्धिं निवत्ते, इयमेव निदर्शना कल्पनासु तत्र माऽसूया कर्तव्या यत्रानुग्राहकैस्तत्रभवद्भिर्भगवद्भिर्जगद्गुरुभिरक्लेशेन शिक्षार्थमनुगमः क्रियते।

भवन्ति हि बहवो नितान्तमृदुमतयो राजपुत्रादयोऽपि विधेयाः–ते च पुनरेतस्मिन् सांसारिके निसर्गसिद्धे विशिष्टबुद्धिप्रादुर्भाविते वा तत्र तत्रभावे विस्मयमादधानाः संदिहानाश्च कौतूहलातिशयाज्जिज्ञासमानाश्च भवन्ति, किमिदम्-किमिदम्, किमर्थं कथमिदं चेति। तदेतेषां विषयाणां यथावदुत्तरग्रहणे पुनरसमर्थेभ्यो वैज्ञानिकसमयायोग्येभ्यस्तेभ्योऽनुग्रहाय तद्बुद्धियोग्यतानुसारेण तत्तद्वैज्ञानिकदुःखगाहविषयान् ग्राहयितुमुद्युक्तैर्महर्षिभिरितिहासमार्गेण प्रवृत्तं, एवं हि कृते सुघटस्तेषां तत्र तत्र बुद्धिसंचारः स्यात्।

यथा हि किञ्चिद्विषयाधिगमाय प्रवर्तिता अपि गद्यद्वारा ग्रहीतुमसमर्था बालास्तद्विषयार्थानां पदानां पद्यवन्धनं कृत्वा तावदभ्यासाय प्रवर्त्यन्ते, तदनुसारेण कालान्तरे पुनस्तेऽर्थग्रहणेऽपि क्षमन्ते एवमेव वैज्ञानिकविषयाधिगताय प्रवर्तिता

---

१. एवंविधाना वृत्तान्तानां काल्पनिकतयेव तेषु क्वचिदुपलभ्यमानो बहूनां पुराणादीनां परस्परविरोधोऽपि न दोषाय, प्रतिपाद्यार्थे विसंवादाभावादित्युच्यते। अत एव परस्परविरोधरूपं कुतर्कसमुद्भाव्य तानुपहसन्तोऽज्ञाः समाहिताः।

अपि वैज्ञानिकसमयद्वारा ग्रहीतुमसमर्था राजपुत्रास्तद्विषयाणामितिहासबन्धं कृत्वा तावद् बुद्धिसन्धानाय प्रवर्त्यन्ते, तदनुसारेण कालान्तरे पुनस्तेविज्ञानग्रहणेऽपि क्षमेरन्, यद्यनुप्रज्ञावन्तो विशिष्टग्रहणाभिलाषया प्रवर्तेरन् ।

अपि च यथा कयाचिच्छन्दोमर्यादया परिबद्धानि पदजातानि सुगृहीतानि भवन्ति न च हीयन्ते, न चातिरिच्यन्ते, एवमेवैतानि विषयजातानि कथञ्चि-दितिहासमर्यादयोपनिबद्धानि सुगृहीतानि स्यु —न च हीयरन्, न चातिरिच्येत ।

अपि च अय नामेह वेदसमुदाय सर्वासां विद्यानामाङ्कुरोदारोहभूमि-रगाधबुद्धिभिरीश्वरकल्पैमहर्षिभि प्रादुर्भावित इत्यवश्यमत्र सर्वाविद्या यथा कथञ्चिद्दर्शयितव्या । भवति चेयमितिहासप्रज्ञप्तिरप्येका राजविद्या, तस्या अप्यङ्कुरपात कर्तव्य । न च महानुभावा शुष्के मनुष्यचरितोल्लेखे श्रद्दधते तथा भूतेन च तेन कस्यचिन्मनुष्यस्य चरितोल्लेखेनाय महाविद्या समारम्भो विच्छिन्नष्टा-वयव स्यात् ।

अथ पश्यन्ति शुष्कमनुष्यचरितोल्लेखरूपेतिहासप्रस्तावोऽपि कर्त्तव्य, महती वैज्ञानिकविद्याऽपि दर्शयितव्या, तत्र च दुरधिगमायामप्यधिगन्तव्याया सामान्या-धिकारिणोऽपि प्रवर्तनीया । पार्थक्येन चैतेषां त्रयाणामुपन्यासेवं था वेदाडम्बरोऽपि नावकल्पते, तस्मादवश्यमिङ्गितेन चेष्टितेन लिमिपितेन चापराभिप्रायाधिगमनेऽपि यथा विधेया प्रभवयुस्तथा प्रवर्तितव्यम्, सर्वं च खल्वपि सिद्धं भवति इतिहास-प्रबन्धेन महती विज्ञानविद्यापि समुद्भाविता, तत्राधिगमाय सामान्याधिकारि-णोप्याकर्षिता, इतिहासविषया यत्किञ्चिदर्थं निरूपणविद्यापि ससूचिता, प्रसङ्गात् शुष्कमनुष्यचरितस्यापि नाराशंसेति कृताभिधानस्य सूत्रपात कृता भवति, मध्ये वैज्ञानिकसमयाभिसन्धिरपि सभवात् ।

तस्माद् वैज्ञानिकपदार्थांश्चैतन्येन कल्पयित्वेतिहासनामकतया समुद्भाव्य प्रस्ताव प्रवर्तनीय —येन स्वल्पेनाधिक कृत स्यात् । सम्भवन्ति हि चेतनेष्विव जडपदार्थेष्वपि यज्ञकरणयुद्धकरणमैथुनकरणादयो भावा चेतनशरीरान्त-र्निविष्टाना स्वस्वशक्त्यनुसारेणाव्यभिचरितकर्म कृता रसासृङ्मांसमेदोऽस्थिमज्ज शुक्रौजोमन प्रभृतीना पदार्थानामपि जडत्वाविशेषात्, इन्द्रसोमाग्न्यादीनामेव च चेतनशरीरमिवाखिलब्रह्माण्ड ] परस्परानुकूलनानाविधकर्मकारित्वदर्शनेनोभयत्र-पदार्थव्यष्टयविशेषाच्चेतनशरीरतो व्यवह्रियमाणा मैथुनयुद्धमैत्रीयज्ञकरणाद्यैति-हासिकपदार्था नामिन्द्रसोमाग्न्यादिपदार्थसमूह ब्राह्मण्डेनाऽपि व्यपदेशे दोषा-भावात् ।

तस्मात्सानृत ब्रूम, स्वल्पेन चाधिक कुर्म, ततोऽवश्यमितिहासविषया विद्या सवेदयाम इत्येवमितिहासद्वारा पदार्थाविष्करणे नानागुणकलापमनुपश्यन्त

परावरज्ञा मितभाषिणः पूर्वे महर्षयः स्थाने प्रवर्तन्ते स्म पदार्थविद्येतिहासकल्पनायामिति विदाङ्कुर्वन्तु ।

सचायमितिहासकल्पनाविनोदो[1] न केषांचिदर्वाचां प्राचां वा कृष्णद्वैपायनादिमुनीनामवधेयः-किं तर्हि ततोऽतिप्राचीनसमये ब्राह्मणग्रन्थनिर्माणकाले ततोऽपि वा बहुपूर्वमनुवर्ततेस्म[2] । केषांचित्पुनरितिहासानां मन्त्रनिर्माणकाले ततोऽपि वा बहुपूर्वं प्रवृत्ता कल्पना,

हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना ॥

एते ब्राह्मणशब्दाः स्युरुपमाख्यायिका तथा ।
इत्याहोपनिबद्धं स्यादितिकारपुरस्कृतम् ॥

इत्येतेषां ब्राह्मणपदार्थानां मन्त्रभागेऽपि तत्र तत्र दृश्यमानतया पुराकल्पेतिहासयोरपि मन्त्ररचनातः प्रागेव प्रवर्तमानतया प्रतिपत्तौ प्रतिबन्धकाभावात् । इतिहासपुराणग्रन्थानां नातिप्राचीनत्वेऽपि कथोपकथनाधिष्ठतानां तेषां[3] मन्त्रभागतोऽपि प्राचीनत्वावसायात् । सर्ववैदिकमन्त्रादियावद्वाग्विषयसंकलनातोऽपि बहुकालं प्रागेव प्रवृत्ता तावदार्य्येषु विज्ञानविद्या-या वेदशब्देनाभिधीयते, तदेतत्प्रथमप्रवृत्तविज्ञानविद्यासिद्धान्तभूतानामार्याणां सन्धानाय, तथा तदानीं यावदसिद्धप्रतिपत्तिकानामपरेषां सिद्धान्तानामुद्भावनाय च पश्चात् क्रमेण काले काले ऋषिमण्डलीषु मन्त्ररचनाव्यासङ्गः प्रावर्तत, यथाहि तदुत्तरकालभाविनोऽपि तद्विज्ञानसिद्धे यज्ञाद्यर्थे प्रवर्तेरन्निति । सोऽयमर्थस्तेषामेव मन्त्रकृतामुक्तिभङ्ग्या इङ्गितेन प्रतिपद्यते—तथा च तैराम्नातम् ।

नमः सखिभ्यः पूर्वसद्भ्यो नमः साकंनिषेभ्यः ।
युञ्जे वाचं शतपदीं युञ्जे वाचं शतपदीम् ।
गायं सहस्रवर्तनि गायत्रं त्रैष्टुभं जगत् ।
गायत्रं त्रैष्टुभं जगद् विश्वारूपाणि सम्भृताः ।
देवा ओकांसि चक्रिरे (साम० उ०)

---

१. इदानीं कुतः प्रभृति प्रवृत्तेयमितिहासकल्पनेति विचिन्त्यते ।
२. 'पुराणसर्वशास्त्राणां प्रथमं ब्राह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः' ॥ इति वायुपुराणीयं वचनमप्यत्रालोच्यम् ।
३. पुराणेतिहासपदार्थानाम् ।

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवाँ एह वक्षति ।
(ऋक्० १ । १ । २ ।)

द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ।

(शु० य० १९।४७)

अत्राहमशृणवमिति पदस्वारस्येन मन्त्ररचनात् प्रागेव तदर्थप्रसिद्धिर्लभ्य इति सुव्यक्तम् । ननु मन्त्ररचनात् प्राक्तनकालस्तु दूरे आस्ताम्, मन्त्ररचनैव तावदनभिप्रेता बहूनामार्याणाम्, अशृणवमिति तु छान्दसप्रयोगे सर्वशाब्दिकविधीनां बाहुलकतया व्यत्ययकृतं स्यात्, पूर्वेभिर्नूतनैरिति पदे अपि न वक्तृसापेक्षं पूर्वापरकालं प्रतिपादयत —किं तर्हि पूर्वापरकालमनुसंदधतो भगवतः परमेश्वरस्य तावदग्न्युपयोगिविज्ञानसमर्थनमात्रमेतदिति चेन्न तत्सम्यगनुपश्यन्ति भवन्तः । यद्यपि खलु सुप्रसिध्यन्ति तावदिदानीन्तनानामायातोपगृहीततत्तदर्थानामतलस्पर्शित्वादगृहीतयाथातथ्यानामत एव मतभेदेन प्रवर्तमानानां त्रिविधाः प्रतिपत्तयः-वेदानामकर्तृकत्वम्, ईश्वरकृतत्वम्, विभिन्नकालिकानेकर्षिगणकृतत्वं चेति ।

तत्र तावन्न केनचिदपि पुरुषेण प्रणीतो वेद इति मीमांसकानां घण्टाघोषः, तथैव चान्यथा च प्रतिपद्यमाना इदानीन्तनाः केचिदनतिप्राचीनाश्च विचक्षणा इत्थमाचक्षते-यदस्मिन्ननिर्णीतोपक्रमोपसंहारे धारावाहिकं प्रवृत्तिमत्यनाद्यनन्ते संसारे यथा वायुतेजोजलादयो नित्या एव पदार्था ईश्वरेच्छावशात् कदाचित् संश्लिष्य कदाचिद्विश्लिष्य सृष्टिप्रलयाभ्यां नियतव्यवस्थानुसारेण जगच्चक्रमेतन्निर्वाहयन्ति, तथैव तथैव जगदन्तर्गतः शब्दो नित्य एवेश्वरीयशक्त्यावेशात्तदिच्छानुसारेण च सृष्टिकाले ऋग्यजुरादिप्रकारैः संश्लिष्यावतिष्ठते न तु केनचित्पुरुषेण गुम्फ्यते । अलौकिकानां प्रत्यक्षाद्यगोचराणां तत्तद्देवताविशेषाणां तत्तच्छक्तीनां च वेदे प्रतिपादितानां परं सहस्रैरपि मनुष्यैः स्वतो विज्ञातुमशक्यत्वात् 'यज्ञेन वाचः पदवीयमायंस्तामन्वविन्दन् ऋषिषु प्रविष्टाम' इति, आजातान् ह वै पृश्नीन् तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत् तदृषयोऽभवन्" इति, "नित्या वागुत्सृष्टा स्वयम्भुवा"

इति चैवमाद्याः श्रुतयः —

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ।

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ।

इति चैवमाद्याः स्मृतयश्चामुमेवार्थमवगमयन्ति । ईश्वरीयज्ञानानुसारेण स्वयमेव गुम्फिताः सर्वे शब्दा ऋगादिभावैः परिणम्य महर्षीणां वेदरचनार्थमप्रयतमानानामप्याद्यानां बुद्धि स्वयमेवा रूढाः प्रादुरभूवन्निति महर्षयो लेभिर इत्यस्यार्थः । तथा च संघातभेदाभ्यां प्राकृतिकोपादानस्वभावसिद्धाभ्यामनेकभावग्राहिणामर्थानां यथा विभिन्नशक्त्यावेशाद्विभिन्नकार्यकारित्वमनुभूयते, तथैव तु निर्विशेषमेषामपि वाय्वादिसमशीलानां शब्दानां काले काले सन्निवेशविशेषं गतानां परिवर्तितरूपाणामर्थैरौत्पत्तिकसम्बन्धानुबद्धानां विभिन्नशक्त्यावेशाद्विभिन्नार्थप्रत्यायकत्वमिति नैतावता शब्दसमष्ट्यात्मकानामेषां वेदानां कृतकत्वभावादयितुं युक्तमिति, सोऽयं वेदानाकृतकत्ववादः ।

अपरे पुनरित्थं प्रत्यवतिष्ठन्ते–प्राचीनैरेवातिबुद्धिमद्भिर्गौतमकपिलकणादादिभिर्मुनिभिर्न्यायसांख्यवैशेषिकादिदर्शनेषु वेदानां कृतकत्वप्रतिपादनात्तन्निर्माणस्य च मनुष्यैरशक्यत्वादवश्यमेवैते वेदा ईश्वरकृताः प्रतिपद्यन्ते, स्पष्टश्चायमर्थः समर्थितः 'शास्त्रयोनित्वात्' इति वदता भगवता बादरायणेन ब्रह्ममीमांसायाम् । अत एव 'तद्वचनादाम्नायस्य प्रामाण्यम्' इति काणादं सूत्रमीश्वरप्रोक्तत्वाद्वेदस्य प्रामाण्यमित्येवं व्याख्यातमुपस्कारे शङ्करमिश्रेण । माधवोऽपि वेदभाष्ये—

"तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत"

इति मन्त्रस्य 'सहस्रशीर्षा पुरुष' इत्युपक्रान्ततया यज्ञाद्यजनीयात्पूजनीयात्परमेश्वरादजायन्तेत्यर्थमाचष्टे । एवं च सकलदार्शनिकबुद्धिमज्जनसंमतत्वाद्युक्तिसिद्धत्वाद्वेदप्रामाण्याच्च निःसन्दिग्धं वेदानामीश्वरकृतत्वमित्याकलयन्ति कुशलाः ।

अन्ये पुनर्विशेषसमीक्षाप्रवीणाश्चातुरीचणा ईश्वरकृतत्वमप्यक्षमाणा इत्थमाचक्षते-यद्यपि मृत्सुवर्णादिवश्यं शब्दोऽपीश्वरकृत एवेति युक्तं प्रतीम, तथापि यथा घटकङ्कणादयस्तत्सन्निवेशविशिष्टाः पदार्था मनुष्यैरेव यथोपयोगं संपाद्यन्ते-व्यापाद्यन्ते च, न च तदर्थमपीश्वरो विनियुज्यते । एवमयं सङ्केतसम्बन्धेनार्थवतां शब्दानां सन्निवेशविशेषेण यथोपयोगं संपादितो वेदग्रन्थोऽपि मनुष्यकृत एव संभाव्यते, तथा च "यज्ञेन वाचः पदवीय" मित्यादयो मन्त्रवर्णा अप्यमुमेवार्थं भङ्ग्या सूचयन्ति ।

अतएव मन्त्रं प्रयुयुक्षन्नैतरेयः "तदेतदृषिः पश्यन्नभ्यनूवाच" इत्यसकृत् प्रतिपादयति । अत एव च ब्राह्मणान्तरेऽपि 'तदुक्तमृषिणा' इत्यसकृदुक्तं दृश्यते ।

न चात्र 'ऋषिर्वेदमन्त्र इति केषाञ्चिदुक्तिः श्रद्धया, "ऋषिष्टुतो विप्रानुमोदित कविशस्त" इत्येतेषां मन्त्रपदानां निर्वचनपरेण ऋषयो ह्येतमग्रऽस्तुवन् तस्मादाह ऋषिष्टुत-इति एते वै विप्रायदृषय, एत ह्येतमन्वमदन्-तस्मादाह विप्रानुमोदित इति एते वै कवयो यदृषय एते ह्येतमशंसस्तस्मादाह कविशस्त इति" इति हविर्यज्ञकाण्डस्थेन तदुपाद्गलकृतयैव च "ये ब्राह्मणा शुश्रुवासोऽनूचानास्ते विप्रा" इत्यध्वरकाण्डस्थेन शतपथब्राह्मणेन, तथा मैत्रायण्या यजु संहितायां खिलकाण्डे पुरोडाशब्राह्मणेन, "तया वहन्त कवय पुरस्तादिति ब्राह्मणा कवय ऋषय कवय" इत्येवमनूक्तत्वेन तथा तैत्तिरीयसंहितायां षष्ठकाण्डे षष्ठ प्रपाठके "एष वै ब्राह्मण ऋषिरार्षेयो य शुश्रुवान्' इत्युक्तत्वेन, ऋषयो मन्त्रद्रष्टार" इत्यादिना यास्कनिरुक्तवचनेन च मनुष्यविशेषाणां ब्राह्मणानामेव मन्त्रकृतामृषित्वेन प्रतिपन्नत्वात् ।

अयमेव च सर्वेषाममीषां गौतमकपिलकणादादीनां सिद्धान्त न पुनरीश्वरकृति तेऽभिप्रयन्ति, महाकण्ठैरपितैरुन्मुक्तकण्ठमीश्वरनाम्नाऽनुपादानात्, "आप्तसिद्धदर्शन च धर्मेभ्य' इतिवैशेषिकसूत्रे आप्तत्वेन स्पष्टमुल्लेखाच्च तस्मादस्माकं[1] पूर्वपुरुषैर्महर्षिभिरेव बहुभिर्बहुभिरेवोच्चावचैरभिप्रायै काले काले चिरभावनापरिदृष्टार्थविषयकैर्बहून् कालान् व्याप्य प्रणीता बहवो मन्त्रा इति सकलवेदभागानव्यग्र सानुसन्धानपर्यालोचयतां निष्पक्षपातानामप्रच्छन्न प्रतीयते ।

ते च ऋषयो द्वेधा प्रतिपाद्यन्ते केचिदतिप्राचीना परे त्वनतिप्राचीना साक्षात्कृतधर्माण परे त्वनतिप्राचीना असाक्षात्कृतधर्माण । तत्र तै साक्षात्कृतधर्मभिरनेकानेकैर्महर्षिभि कृता वेदमन्त्रा असाक्षात्कृत धर्मेभ्यो विधेयेभ्य काले काले उपदिष्टा परम्परया पारायणादिप्रचारेणाव स्थिता आसन्, ततो बहुकालानन्तर क्रमश पूर्वापेक्षया शिथिलबुद्धिषु जनेषु गुरुमुखाच्छ्रु निमात्रेण बहुविध सकलतत्तन्मन्त्राधारणायासमर्थेषु जातेषु तदनुग्रहार्थमन्य ऋषयस्तेषां मन्त्राणां यथावद्ग्रहणार्थं तान् विकीर्णान् मन्त्रान् सकलय्य संहिताग्रन्थ संपादयाञ्चक्रु । सोऽयमर्थ स्पष्टमुक्तो निरुक्ते मुनिना यास्केन —

"साक्षात्कृतधर्माण ऋषयो बभूवु तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान संप्रादु उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेम ग्रन्थ समाम्नासिषुर्वेद वेदाङ्गानि चेति' ।

तदित्थमुपदर्शितास्त्रयो मतवादा । वस्तु तस्तु नेतरामेवैते प्राचामाचार्याणां मतभेदा भवन्ति, किं तर्हि दूरत एव श्रुतवेदगौरवाणामपरिचितमन्त्रपदार्थानाम-

---

१ 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्याद्' इति गौतमसूत्र तदीय वात्स्यायनभाष्य 'तत प्रोक्तम्' इति सूत्रस्य महाभाष्य चाप्य आलोच्यम् ।

परिशीलितवेदयाथातथ्यानां संस्कृतविद्यामार्गावगाहनयोग्यतासंपादकतया विद्याङ्ग भूतस्य व्याकरणस्यापि खण्डविशेषमेवाधीयानानां महाभाष्यप्रकर्षादिव कदाचित् क्वचिद्वैशेषिकशारीरिकदर्शनान्मतप्रकरणग्रन्थविशेषस्यार्वाचीनकृतस्याप्येकदेशं यं कंचिदेवैरत्यल्पमधीत्यैव सर्वशास्त्रपारंगामित्वताभिमानिनां पण्डितंमन्यानां येन केनचिदेव कृतस्य प्रश्नस्योत्तरादाने स्वकीयसर्वपाण्डित्यव्याघातमनुपश्यतामत एव यथास्वज्ञानं यथा स्फूर्तिः यथा रुचिः ।

यत्किञ्चिदेवोत्तरं प्रकल्प्य प्रकल्प्यानभिज्ञानव्यामोहयतामविदुषामेव ते प्रवादः प्रवर्तन्ते—इति युक्तमुत्पश्यामः अत एव यथाकथञ्चित् स्वस्वमुखनिर्गलित-तत्तद्विरुद्धवर्णनायाथात्म्यस्थापने दृढाग्रहेण प्रवर्तमानानां तथा च बुद्धिप्रागल्भ्यं मान्यमानानां तेषां तेषामेवाविज्ञातवस्तुतत्त्वानामिदमेव तत्त्वमिदमेव तत्त्वमित्येवं विप्रतिपत्तिवागाडम्बरमवलम्ब्य नानामतभेदाः प्रवर्तन्तेस्म ।

वस्तुतस्तु यथैते भगवन्तस्तत्रभवन्तो मुनिवर्या जैमिनिकपिलयास्काद-यस्तन्तमर्थं समर्थयन्ते न तत्र विप्रतिपत्तिलेशं पश्यामः । अस्त्येव हि तत्तदुक्त-रीत्या वेदानामकृतकत्वं चेश्वरत्वं चेश्वरनिश्वसितत्वं चेश्वरकृतत्वं चेश्वर-विभूतिरूपाग्निवायुसूर्यसमुद्भूतत्वं च ब्रह्मप्रजापतिमुखचतुष्टयोद्भूतत्वं च भृग्व-ङ्गिरोऽत्रिवसिष्ठविश्वामित्रप्रमुखानेकमहर्षिकृतत्वं चेति । सर्वं एवैते प्रवादा वेदपदार्थं याथार्थ्येन समर्थयतां दीर्घदर्शिनां दृष्टाव्याहतप्रसरा अनाकुलाः स्थाने व्यवतिष्ठन्ते । तथा चैषां प्रवादानां विरोधाभासनिरासार्थं समन्वयविजिज्ञासु-विरोधादौ तावद् वेदपदार्थः समीक्षणीयो भवति, समन्वयज्ञानस्य तज्ज्ञाना-धीनत्वात् ।

"प्रत्यक्षानुमितिशाब्दोपाख्य-सर्वविधविज्ञानान्तरभाविनी संशयविपर्ययादि-रूपैर्दोषैरंशतोऽप्यस्पृष्टा प्रत्यगात्मस्वरूपविकाशानतिरिक्तस्वरूपतया च नित्यमात्मसतुष्टिकारिणी निरूपाख्या काचिद् वृत्तिः प्रमा । प्रमाकरणम् त्रिस्थानमेव तु विज्ञानं प्रमाणम् । अस्ति वा विषयोपहितं विज्ञानम् । अस्ति वा संस्कारोपहितं विज्ञानम् । अस्ति वा शब्दोपहितं विज्ञानम् इति । विज्ञानन्तु प्रमितिर्नाम । तच्चान्तःकरणवृत्तिप्रतिफलितश्चिद्विकाश इह विवक्षितः । तत्र विषयोपहितं ब्रह्मशब्देन, संस्कारोपहितं विद्याशब्देन, शब्दोपहितन्तु विज्ञानं वेद-शब्देनाख्यायते । यद्युपाधिभागानन्तर्भावादेषां ब्रह्मविद्या वेदशब्दानां विशुद्धैत-द्विज्ञानतात्पर्य्येण प्रयोगः क्रियते तदैकार्थ्यं भवतीत्यत एवाम्नायते—"ऋग्यजुः सामभेदात् त्रयं ब्रह्म, त्रयी विद्या, त्रयो वेदाः" इति । एक एवायमर्थस्त्रिधाकृतैः पर्य्यायाभिधायिभिः शब्दैरन्वाख्यातो भवतीति पश्यन्ति ।

तत्रेद विज्ञान चेतनाविकाशरूपत्वान्न शक्यते केनचित् पुरुषेण कर्तुमित्य पौरुषेय च भवत्यकृतक च । अचितस्तद्विकाशयोश्च चेतनानद्विकाशयोस्ता-दात्म्यस्य सर्वलोकप्रत्ययसिद्ध वादुभयथाऽप्यनुकल्पत व्यवहारा भेदेन चाभेदेन च । यद्यभेदबुद्ध्या प्रवृत्तिस्तदाऽमुष्य विज्ञानस्य सविदपराम्यस्य प्रत्यगात्मत्वा-विशेषात्प्रत्यगात्मनश्च परमात्मानतिरिक्तताया वेदसमीक्षादौ भूयसा प्रघट्टेन सुदृढ निर्मितत्वादमुष्य विज्ञानस्यापि निर्विवादमेवेश्वरत्व सिद्धम् ।

अथ यदि भेदबुद्ध्या प्रवृत्तिस्तदाऽमुष्य विज्ञानस्य प्रत्यगात्मप्रयुक्ततया प्रत्यगात्मनश्च परमात्मानतिरिक्ततया सिद्धममुष्य विज्ञानस्येश्वरनिश्वसितत्वम् । उक्त तु विज्ञानमेवैतद्ब्रह्म च विद्या च वेदश्चेति । तस्मादेव द्विविधो व्यवहार सम्प्रवृत्तो लोके वेदोऽयमीश्वर साक्षादिति वा, वेदोऽयमीश्वरनिश्वसित रूपो स्तीति वा । उभयथाऽपि त्वीश्वरनित्यताया अविसवादित्वादेव वेदोऽप्यकृत-कश्चपौरुषेयश्च ससिद्ध । इत्येका प्रतिपत्ति ।

अथवैतदन्यथा व्याख्यास्याम । अस्तु वा विषयसस्कारशब्दाना विशेषण-विधयात्र प्रवेशस्तथापि न क्षति । तथा हि विषयाकाराकारितान्त करणवृत्ति-प्रतिफलित चैतन्य ब्रह्मशब्देन सस्काराकारितान्त करणवृत्तिप्रतिफलित चैतन्य विद्याशब्देन, शब्दाकाराकारितान्त करणवृत्तिप्रतिफलितन्तु चैतन्य वेदशब्दे-नाख्यायत इति द्रष्टव्यम् । तत्र नान्तरेण सस्काराकारापत्तिशब्दाकारापत्ति वा विषयाकारापत्तिरन्त करणस्य क्वचिददृष्टा, नापि वान्तरेणैव सस्कारापत्ति विषयाकारापत्ति वा शब्दाकारापत्तिरेव दृश्यते क्वापि । यत्रैव कश्चित किञ्चि-द्विजानाति तत्रास्य विज्ञान विषयसस्कारशब्दरूपेण तु परिणम्यमान सर्वत्रा-प्यतिष्ठते । घट विजानतो बुद्धौ यथा पृथुबुध्नोदराकारादिरूप सनिधत्ते, तथैव तु पूर्वानेकवारदृष्टघटाकारावभासोऽपि न सनिधत्ते, तथैव च पुनरतिसूक्ष्मघकारा-कारटकाराद्विचिरास्यस्तशब्दरूपमेकान्ततस्तत्र सनिधत्त एव ।

उक्तञ्च—

न सोऽस्ति प्रत्ययो लोके य शब्दानुगमादृते ।
अनुविद्धमिव ज्ञान सर्वं शब्देन भासते ॥

तथा ह्युत्तरदेशसयोगपूर्वदेशविभागयोर्विभिन्नार्थयोरपि परस्परनान्तरीय-कत्वादेकात्म्यमिव सम्प्रतीयते एवमेवैतेषा विषयसस्कारशब्दाना विभिन्नार्थानामपि परस्परनान्तरीयकत्वादैकात्म्यमिव मन्तव्यम् । एतदभिप्रायेणापि स भगवान जैमिनि —'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इत्युपदिशन् विषयशब्दया-र्नान्तरीयकत्वमन्वाचष्टे ।

यद्यप्यदृष्टपूर्वप्रत्यये संस्कारोद्बोधः, आजन्ममूकबधिरप्रत्यये सद्योजात-शिशुप्रत्यये च घटादिशब्दाद्बोधो नेतरां सम्भाव्यते, तथापि तस्मिन् धारावाहिक-बुद्धिसंताने पूर्वपूर्वक्षणजातसंस्कारोद्बोधसमुच्चयस्योत्तरोत्तरक्षणेऽनिवार्य्यत्वान्न शक्यं संस्कारव्यभिचारमापादायितुम् । एवं भवेदेव तु मूकबधिरप्रत्यये तात्कालिकशिशुप्रत्ययेऽपि कश्चिदलौकिकशब्दसञ्चार इत्यनुमीयते । शब्दसम्ब-न्धमकृत्वा ज्ञानस्वरूपसिद्धेः कुत्राप्यदृश्यमानत्वात् ।

अथवा-अन्तःकरणे सद्यः सञ्जायमानोऽयं विषयाकारोऽतिशयरूपेणैव सञ्जायते अतिशय एव तु संस्कारशब्देनाख्यायते । एवं न खलु शब्देनानभिनो-यमानस्य विषयस्य विज्ञानं स्वरूपेण प्रवर्तते । तस्मान्नान्तरीयकमिदं त्रयं भवति-विषय-रूपं च संस्काररूपं च शब्दरूपं चेति । किञ्च मतमेतद्भवतिनेतानि विषयादीन्यन्तःकरणोपादानकानीह विवक्षितानि, अपि तु विषयाद्याकाराका-रितेऽन्तः करणे प्रतिफलितानि विज्ञानोपादानकानिचैतानि त्रीणि भवन्ति । विज्ञानादेवोत्तिष्ठन्ते विज्ञाने प्रतितिष्ठन्ति विज्ञान एव च सन्तिष्ठन्ते । तथा चाभिन्नदेशत्वादभिन्नकालत्वान्नित्यसम्बन्धत्वादव्यभिचरितत्वाच्चाभिन्ना एवैते विज्ञानस्थाः पदार्थाः विषयाश्च संस्कारश्च शब्दाश्चेति ।

एतद्वैज्ञानिकविषयशब्दातिरिक्ता अपि लौकिकाः केचन विषय शब्दाः सन्ति न वा ते, च परस्परं भिद्यन्ते न वा, एकोपादानका वा ते विभिन्नोपादानका, वा इत्येवमादयोऽर्थास्तु सम्प्रति विचारस्थाने तावन्निधीयन्तेऽप्रकान्तत्वान्नेह प्रस्तूयन्ते । ये तु विज्ञाने तावदिह युगपद्दृष्टा विषयसंस्कारशब्दास्ते सर्वे परस्पर-मापाततो वैरूप्येण प्रतीयमाना अपि विज्ञानरूपेणैकात्म्येनानुभूयमानत्वाद् विज्ञानोपादानकत्वात् कार्यकारणयोश्चभिन्नत्वात् तदभिन्नाभिन्नस्य तदभेद इति न्यायेनैकार्थ्यमव्याहतं प्राप्ताः सिद्धाः । तथा च योऽर्थो ब्रह्मशब्देन विवक्ष्यते, स एवाविकलं शक्यते व्यपदेष्टुम् विद्याशब्देन च वेदशब्देन च । विषयसंस्कार-शब्दानामेकत्वे निर्द्धारिते विशेषणभेदनिबन्धनविज्ञानभेदस्य कर्तुमशक्यत्वादेषा-मेकत्वमनुपश्यन्तो महर्षयो निर्विशेषमेकरूप्येणामनन्ति—

"ऋग्यजुः सामभेदात् त्रयंब्रह्म, त्रयी विद्या, त्रयो वेदाः" । इति ।।

तत्रेदं त्रयीरूप्येण त्रयीशब्देन चोपपद्यमानं विज्ञानमनित्यान्तःकरणवृत्ति-प्रतिफलितत्वेऽपि न शक्यमनित्यत्वेन पौरुषेयत्वेन वाऽभिनेतुम् । कादाचित्क-जलदृष्टप्रतिबिम्बस्य कादाचित्कत्वेऽपि ततो बिम्बिनस्तस्य सूर्यादेरनित्यत्वा-प्रतिपत्तेः । नापि वा ब्रह्मविद्यावेदात्मकं तद्विज्ञानं पुरुषप्रयत्नसाध्यं शक्यं वक्तुम् "ज्ञानजन्या भवेदिच्छा, इच्छाजन्याकृतिर्भवेत् । कृतिजन्यं भवेत् कर्म" इत्याद्य-भियुक्तोक्तन्यायेन क्रियां प्रति कारणत्वेन गृहीते प्रयत्ने इच्छायाः कारणत्वादि-

च्छाया च विज्ञानस्य कारणत्वात् तद्विषयकविज्ञानात् प्राक् तद्विषयिण्या इच्छाया कृतेर्वा सर्वथैव कर्तुमशक्यतया तद्विज्ञानस्य प्रयत्नसाध्यत्वासम्भवात् ।

अथैवं तर्हि कथमिदं विज्ञानं प्रवर्तत इति चेत्-प्रत्यगात्मनि युक्ते विज्ञान-स्वरूपावभासयोग्येऽन्तःकरणे व्यापकत्वात् स्वयमेवेदं विज्ञानं प्रतिफलितमव-भासते–इति ब्रूमः । तेनैव च प्रतिफलितचैतन्यात्मकेन विज्ञानेन सता तदन्तः-करणमन्तःकरणाधिष्ठितानीन्द्रियाणि च विज्ञप्तिप्रक्रियाकरणानि सम्भवन्ति, यदीदं विज्ञानं तत्र फलितं न स्यात् न त्वेव तत्तर्हीदमन्तःकरणं नाम जडद्रव्यं विषयाप्तावभासाय मुक्षमं स्यात् । तदेतत् सर्वं श्रूयते तलवकारश्रुतौ—

केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ।।

श्रोत्रस्य श्रोत्रं मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः ।
चक्षुषश्चक्षुरतिमुच्यधीराः प्रेत्यास्माल्लोकादमृता भवन्ति ।।

इत्यादिना—

तस्मात् सिद्धमपौरुषेयं विज्ञानम् । विज्ञानमेव तु वेदशब्देनाख्यायते । तस्मादपौरुषेयो वेदोऽकृतकश्चेति ससिद्धम् । इति द्वितीया प्रतिपत्तिः । अथवैत-दन्यथा व्याख्यास्यामः । ऋग्यजुःसामभेदात् त्रयं ब्रह्म, त्रयी विद्या, त्रयो वेदा इत्याम्नायते । तत्र मतमिदं भवति–नैतानि सन्त्यभिन्नानि । किन्तु प्रत्येकं भिद्यन्ते ऋग्यजुःसामानि । अन्यानि विषयोपाख्यानि, अन्यानि पुनः शब्दोपाख्यानि । तानि च साकल्येन पूर्वं, प्रदर्शितानि सुविशदं निरूपितानि चेति तत्रैव तानि द्रष्टव्यानि । तथा च विषयोपाख्यर्ग्युजःसामभेदात् त्रयोवेदाः । भिद्यन्ते चैव ब्रह्मविद्यावेदपदार्थाः । यदि भिद्यन्ते भिद्यन्ताम् ।

अथापि तान्येकस्मादेव सरसः प्रवृत्तानि व्यवयवानि त्रीणीमानि स्रोतांसि । ब्रह्म च विद्या च वेदश्च । यतः खलु सतो ह्येतानि जायन्ते तस्मात् सदेव भवति तच्च तच्च । यथा हि भिद्यन्ते कटककुण्डलग्रैवेयकपदार्थाः । यदि भिद्यन्ते भिद्यन्ताम् । अथापि तान्येकजातीयादेवोपादानात् प्रवृत्तानि भिन्नाव-यवानि त्रीण्याभरणानि । यतः खलु हिरण्याद्ध्येवैतानि जायन्ते तस्माद्धिरण्यमेव भवति तच्च तच्च । एवमेवैतद् ब्रह्मादित्रयं विज्ञानात्मकैकोपादानकत्वाद्विज्ञानमेव भवति तच्च तच्च ।

यस्तु कश्चिद् ब्रूयात्-उपादानं नाम परीक्षमाणा वैज्ञानिकानां मतभेदात् द्वैविध्यमापन्नं दृश्यते । केचित्तावदाहुः सर्वमिदमुपादानमारम्भकं नाम । अन्येभ्यः

कारणावयवेभ्योऽन्येषां कार्यावयवानामुत्पत्तिरारम्भः। मृदवयवेभ्यो घटावयवा आरभ्यन्ते ततो मृत्सु समवेतोऽयमुत्पद्यते घटः। अर्थान्तरं चेद भवति। अन्या मृत्तिका, अन्यो घटः। मृत्तिकाया अनाशादिती।

केचित्पुनराहुः सर्वमिदमुपादानं परिणामि नाम। अवस्थान्तरसिद्धस्यार्थस्य विकारविशेषानुवृत्ताववस्थान्तरसिद्धिः परिणामः। मृतकयाचिदाकृत्या युक्तः पिण्डो भवति। पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते। घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते। पुनरावृत्तो मृत्पिण्डः पुनरपरया आकृत्या मुक्तो घटो भवति। आकृतिरन्या चान्या च भवति, द्रव्यं पुनस्तदेव। आकृतिविशेषो विनश्यति न द्रव्यं विनश्यति। अन्याकृति विशिष्टस्य कारणस्यान्याकृतिवैशिष्टये कार्य्यत्वमुपपद्यते। तदेवमाकृतिविशेषस्य गुणविशेषाणां वा केषाञ्चिदपचयेनान्यस्याकृतिविशेषस्यान्येषां वा केषाञ्चिद् गुणविशेषाणामुदयेन च प्रकृतौ विकारबुद्धिः प्रवर्तते सैव तत्रावस्थान्तरसिद्धिः। तथा चावस्थान्तरसिद्धा मृदेवेयमवस्थान्तरसिद्धो घट इत्याख्यायते। मृत्तिकैव घटो न मृत्तिकायां घटः।

अथ केचिदाहुः सर्वमिदमुपादानं विवर्तिनाम। न सतोऽर्थस्य नाशो भवति, नाप्यसतोऽर्थस्य समुत्पत्तिः न चोत्पत्तिनाशाय स्वीकृत्य विकारो नाम कश्चिदर्थः शक्योऽभ्युपगन्तुम्। तस्मान्नावयवविकारः कुत्रापि कारणस्य। न हि घटे जातेऽपि मृत्तिकायाः किञ्चिद्विक्रियते। तत्रैवं निर्विकारेऽपि मृत्तिकादिकारणद्रव्ये यदत्यन्तासद्भूतमिदं घटद्रव्यमवर्तमानमपि वर्तमानवत प्रतीयते सोऽयं मृत्तिकाद्रव्यस्य विवृत इत्युच्यते।

अथ यत्रापि दध्यादावुत्पन्ने दुग्धादेर्विकारमाचक्षते तत्रापि नायं दुग्धाद्यवयवानामपूर्वार्थरूपतापत्तिर्नाम कश्चिद्विकारो द्रष्टव्यः। गुणकूटो हि द्रव्यमित्युच्यते। तत्रैकस्मात् गुणकूटात् केषांञ्चिदगुणानामपचयेऽन्येषां वा गुणानां समुच्चये तथा बुद्धेरुदयात्। यःशब्दो यावद्गुणकूटे नियतः, स तावद् गुणाभावे निवर्तते। तेनायं दुग्धशब्दो दधिनि सति निवर्तते। तदेवं वैलक्षण्येन प्रकृतिविकारभावप्रतिपत्तिप्रदेशास्त्रयोदशधा वेदार्थसमीक्षणे प्रदर्शिताः। यथा च तेषु प्रदेशेषु वस्तुगत्या विकारो नास्ति तदपि तत्रैव भूयसा प्रपञ्चकेनोपदर्शितम्। यथा चेदं सर्वमुपादानजातं नित्यनिर्विकारमप्यन्यथा सदन्यथा प्रतीयते तदेतदेव कार्य प्रतिपद्यते।

इत्थं च मतभेदादुपादानत्रैविध्ये सिद्धे यदिदमुच्यते—विज्ञानमेवैतद्भवति ब्रह्म च विद्या च वेदश्चेति, तन्नावकल्पते। परिणामवादे विवर्तवादे वा कार्यकारणयोः कथञ्चिदभेदेऽपि आरम्भवादे तदभावात्। अत्रोच्यते। वैशेषिकाः

खल्वप्यारम्भवादिनो दृश्यन्ते। तेषां मते तावदिष्यता कार्य्यकारणयोर्भेदाद्विज्ञानतो ब्रह्मविद्यावेदानां भिन्नत्वम्। अस्तु वा तदा विज्ञानजन्यत्वात् प्रत्यगात्मजन्यत्वं परमात्मजन्यत्वं वा, प्रज्ञाविप्रतिपत्तावप्यर्थं विप्रतिपत्त्यभावात्। इह तु विवर्तवाद एवास्थीयत इति न भिद्यन्ते कारणात् कार्य्यम् इति पारमार्थिकी दृष्टिः।

तत्रैतानि कारणादव्यतिरिक्तानि कार्य्याणि यदि कारणदृष्ट्यैव द्रष्टुमिष्यन्ते तर्हि कार्य्यधर्माणामदर्शनात्। कारणधर्मा एव तत्रोपतिष्ठन्ते। यत्र पार्थिवद्रव्याणि सृष्टिः, आप्यानित्रिंशत् तैजसानि दशेत्येव शतं कार्याणि स्युः, तत्रापि कार्यत्वापलापेन परिपश्यतां त्रय एव तत्र भावा आभासन्ते पृथ्वी च जलञ्च तेजश्चेति। पृथ्वीयं तत्र सृष्टेरात्मा। जलं त्रिंशतः, तेजो दशानाम्। आत्मन्येव तु निभृतो भेदाभेदव्यवहारः। तस्मात् त्रय पदार्था एषामपि त्रयाणां कार्यत्वात् कार्यत्वापलापेन दिदृक्षाया सर्वत्रैकमेव तावन्निनरा भासते-सदक्षरं परब्रह्मेति। स एष सर्वेषामात्मा। एतदात्म्यमिदं सर्वं यद्भूतं यच्च भाव्यम्।

तथा चैतेषां त्रयाणां ब्रह्मविद्यावेदानां परस्परभिन्नानामपि सद्विज्ञानकार्यत्वात् कार्यत्वापलापेन दृश्यमानानामेतदात्म्यं सुव्यक्तं भवति। यत्रैतदात्म्यं सुव्यक्तं भवति तत्र पारमार्थिकदृष्ट्या सिद्धेऽपि नित्याभेदे व्यावहारिकदृष्ट्यायमुभयथा व्यवहारो दृश्यते लोके घटोऽयमस्ति मृत्तिकेतिवा, घटोऽयं मृत्तिकाकृत इति वा। एवमिहाप्यैतदात्म्यं भवतीत्यतो व्यावहारिकदृष्ट्या शक्यमुभयथा व्यपदेष्टुम् ब्रह्मेदमीश्वरः विद्येयमीश्वरः वेदोयमीश्वर इति वा, ब्रह्मेदमीश्वरकृतं विद्येयमीश्वरकृता, वेदोयमीश्वरकृत इति वा। कार्यकारणयोर्भेदाभेदव्यवहारस्य सर्वलोकप्रत्ययसिद्धत्वात्। तस्मादविरुद्धोयमर्थो यदुच्यते-वेदोयं भगवान् परमेश्वरः साक्षादिति। अथवा यदुच्यते-वेदोऽयं भगवतः परमेश्वरस्य साक्षात् कृतिरिति।

इत्थं च सति येषामयमीश्वरो वेदस्तेषामयमनाद्यनन्तो वेदो नित्यश्चापौरुषेयश्च। सर्वज्ञानघनस्य सर्वशक्तिमतः कालत्रयाबाध्यस्य चैवार्थस्येश्वरत्वेन प्रतिपन्नत्वात्। तस्य चेश्वरस्य पुरुषसामान्यप्रयत्नासाध्यत्वाच्च। येषां त्वयमीश्वरकृता वेदस्तेषामप्ययमनाद्यनन्तो वेदो नित्यश्चापौरुषेयश्च। महापुरुषातिरिक्तलौकिकपुरुषप्रयत्नासाध्यत्वात्। महापुरुषप्रयत्नसाध्यत्वेऽपि महापुरुषस्य नित्यत्वात्तदिच्छाकृत्यादीनां वैशेषिकगुणानामनित्यत्वासम्भवेनान्ततो नित्ययत्नसिद्धस्य वेदस्यापौरुषेयत्वे पर्य्यवसानात्।

अथ यदीश्वरकृतत्वनिबन्धनं पौरुषेयत्वं बलादापाद्यते चेदिष्टापत्तिः 'शास्त्रयोनित्वा' दित्यादिना वेदानामीश्वरकृतत्वस्याभियुक्तै रभ्युपेतत्वात् । यद्यपि चैवमीश्वरत्वमीश्वरकृतत्वं पौरुषेयत्वमपौरुषेयत्वं चेत्यर्थविरोधः प्राप्नोति तथाप्यस्ति प्रज्ञावैलक्षण्ये पक्षपातो न तु वस्तुवैलक्षण्ये पक्षपातोऽयम् । सर्वेषामेकमत्येन शब्दोपहितविज्ञानस्य वेदत्वाभिमानात् । तस्मादविरोधः—इति तृतीया प्रतिपत्तिः ।

अथवैतदन्यथा व्याख्यास्यामः । उक्तं तावत्—विषयोपहितं विज्ञानं ब्रह्म, संस्कारोपहित विज्ञानं विद्या, शब्दोपहितं विज्ञानं वेद इति । यद्यपि चैवं विज्ञानमेवैतद् ब्रह्म च विद्या च वेदश्चेति विज्ञायते, तत्र तत्राविशेषेण महर्षीणामुपचारदर्शनात् । तथापि ब्रह्मादित्रयीशब्दस्यान्यथानुपपत्त्या विषयादीनामत्रविशेषणविधयापीष्यत एव प्रवेशः । तथा च सिद्धं विषयविशिष्टं विज्ञानं ब्रह्म, संस्कारविशिष्टं विज्ञानं विद्या, शब्दविशिष्टं विज्ञानं वेद इति । सामर्थ्याच्चेतदिह गम्यतेविज्ञानविशेषणभूताः सर्व एवैते विषया ब्रह्म । विज्ञानविशेषणभूताः सर्वे संस्कारा विद्या विज्ञानविशेषणभूताः सर्वशब्दा वेद इति ।

विषयास्तावत् त्रिधा गृह्यन्ते-पारमार्थिकाः, व्यावहारिकाः, प्रातिभासिकाश्च । ते क्रमेण सत्याः, सत्यानृताः, अनृताश्च भान्ति । तत्र प्रातिभासिका रज्जुसर्पादयो न ब्रह्म । एवं संस्कारा अपि त्रिविधा दृश्यन्ते । ज्ञानाहिताः अन्यथा ज्ञानाहिता अज्ञानाहिताश्च । तत्र ज्ञानाहितसंस्कारा एव विद्या । येत्वन्यथाज्ञानाहिता वा स्युस्तेषां विद्यात्वं नास्ति । अथ शब्दा अपि त्रिविधा उपपद्यन्तेदिव्यभाषा, परोक्षकभाषा, लोकभाषा च । तत्र दिव्य भाषैव वेदः स्यात् । लोकभाषायास्तु वेदत्वं नास्ति । विज्ञान विशेषणत्वाभावात् । अथवा यावदागम्यते, तावत् सर्वं ब्रह्म, सर्वा विद्या, सर्वोवेद,—इत्यन्यत्र प्रपञ्चितम् ।

तत्रविज्ञानमेवैतत् परब्रह्म च प्रत्यग्ब्रह्म च । उभयमप्येतत् कार्यदशायां स्वरूपत्रैविध्यं धत्ते-अग्निर्वायुः सूर्यश्च । अग्निर्भूस्थानो विराट्संज्ञः सर्वाण्डपरिव्यापि । वायुरन्तरिक्षस्थानो हिरण्यगर्भसंज्ञः सर्वाण्डपरिव्यापी । सूर्यो द्युस्थानः सर्वज्ञसंज्ञः सर्वाण्डपरिव्यापी । एतावदिदं सर्वं ब्रह्माण्डम् । अथवा अग्निरुदरस्थानो वैश्वानरसंज्ञः सर्वशरीरव्यापी । वायुर्वक्षः स्थानः प्राणसंज्ञः सर्वशरीर परिव्यापी । सूर्यः शिरः स्थानः प्राणसंज्ञः सर्वशरीरव्यापी । एतावदिदं सर्वं शरीरम् ।

एवं विज्ञानमेवैतत् परा विद्या चापरा विद्या च। उभयी चाप्येषा कार्यदशायां स्वरूपत्रैविध्यं धत्ते—अग्निविद्या, वायुविद्या सूर्यविद्या च। यत्किञ्चिदिह वैराजं वैश्वानरं वा विज्ञानं, यद्वा किञ्चिदिह पृथ्वीसम्बन्धेन विज्ञायते, सा सर्वा आग्नेयी विद्या। यत्किञ्चिदिह हैरण्यगर्भं प्राणविषयं वा विज्ञानं यद्वा किञ्चिदिहान्तरिक्षस्थानीयं विज्ञायते सा सर्वा वायव्या विद्या। यच्च किञ्चिदिह सार्वज्ञं प्राज्ञं वा विज्ञानं, यद्वाकिञ्चिदिह द्युसम्बन्धेन विज्ञायते, सा सर्वा सौरी विद्या। एतावतीयं सर्वा विद्या। किं किं तु वैराजं वैश्वानरं वा, हैरण्यगर्भं प्राणविषयं वेत्येतत् सर्वं वेदार्थनिरूपणे द्रष्टव्यम्।

अथ विज्ञानमेवैतत् महासूक्तं च क्षुद्रसूक्तं च। उभयमप्येतत् कार्यदशायां स्वरूपत्रैविध्यं धत्ते-आग्नेयसूक्तम् वायव्यसूक्तं, आदित्यसूक्तं च। अग्निसाहचर्य्यभक्तीनां सम्बन्धेन यत्किञ्चिदुच्यते तदाग्नेयम्। वायुसाहचर्य्यभक्तीनां सम्बन्धेन यदुच्यते तद्वायव्यम्। सूर्यसाहचर्यभक्तीनां सम्बन्धेन यदुच्यते तदादित्यम्। नैतान्यतिरिच्य किञ्चिदाम्नायते शब्देन।

तदित्थ-ब्रह्मणि वा विद्यायां वा वेदे वा, यदेव किञ्चिदाग्नेयं तत्सर्वमृक्शब्देन परिभाष्यते। यद्वायव्यं तद् यजुःशब्देन, यदादित्यं तत्सामशब्देन। भक्त्या स्ववर्ते ऋगादिशब्दा आग्नेयादिषु नियुक्ता भवन्ति। वास्तविकं तु ऋगादिशब्दबोध्यमर्थतत्त्वं पूर्वं निरूपितम्। तथा च ब्रह्म वा विद्या वा वेदो वा-प्रत्येकं त्रिविधं भवति-ऋक् च, यजुश्च, साम चेति।

ऋग्यजुःसामलक्षणं ब्रह्मैवेदं सर्वं परिदृश्यते यदिदं किञ्चिदिह विषयजातम्। ऋग्यजुःसामलक्षणो विद्यैवेयं सर्वा विद्या भवति यदिदं किञ्चिदिह संस्कारजातम्। ऋग्यजुःसामलक्षणो वेद एवायं सर्वं आम्नायते यदिदं किञ्चिदिह शब्दजातम्। नातोऽतिरिच्यते किञ्चित्। यत्किञ्चित् पृथ्वीस्थाने गृहीतमाग्नेयं वा वायव्यं वा आदित्यं वा तत्सर्वमाग्नेयम्। अग्नेः पृथ्वीस्थानत्वात् तत्रगतानां सर्वेषामग्निभक्तिमुक्तत्वात्। एवं यत्किञ्चिदन्तरिक्षस्थाने गृहीतमाग्नेयं वा वायव्यं वा आदित्यं वा तत्सर्वं वायव्यम्। वायोरन्तरिक्षस्थानत्वात् तत्र गतानां सर्वेषां वायुभक्तिमुक्तत्वात्। तथा यत्किञ्चिद्द्युस्थाने गृहीतमाग्नेयं वा वायव्यं वा आदित्यं वा तत्सर्वमादित्यम्। सूर्यस्य द्युस्थानत्वात् तत्र गतानां सर्वेषां सूर्यभक्तिमुक्तत्वात्।

शब्दश्च सर्वस्त्रैविध्येन स्वरूपं धारयमाणो दृष्टो लोके पद्यभावेन गद्यभावेन गीतिभावेन च। तत्र पद्यं गीतिश्च समर्यादे भवतो निर्मर्यादस्तु गद्यभावः। अथ त्रैलोक्येऽपि पृथ्वीयं द्यौश्च सायतने समर्यादे दृश्येते अनायतनं तु निर्मर्यादमिदमन्तरिक्षस्थानम्। तस्मात्ताद्धर्म्यात् सर्वमिदमाग्नेयं पृथिवीस्थानं पद्यबन्धेन, सर्वमादित्यं द्युस्थानं गीतिबन्धेन सर्वं च वायव्यमन्तरिक्षस्थानं निगदपाठेन सबद्ध-

माम्नातं महर्षिभिः। तथा च सिद्धं सामर्थ्यात्-पद्यशब्दजातस्य ऋक्त्वं गद्यशब्द-जातस्य यजुष्ट्वम्, गीतिशब्दजातस्य सामत्वमिति। भाक्ता एते शब्दा इत्य-माख्यायन्ते।

तदित्थं पद्यशब्देन सर्वेषामेषां पृथिवीस्थानामर्थजातानामग्निभक्तित्वेन प्रतिपन्नानामेकत्र संहितानामुपवर्णनमृग्वेदसंहिता नाम ग्रन्थः। अथ गद्यशब्देन सर्वेषामेषामन्तरिक्षस्थानामर्थजातानां वायुभक्तित्वेन प्रतिपन्नानामेकत्र संहितना-मुपवर्णनं यजुर्वेदसंहिता नाम ग्रन्थः। अथ गीतिशब्देन सर्वेषामेषां द्युस्थानामर्थ-जातानां सूर्यभक्तित्वेन प्रतिपन्नानामेकत्र संहितानामुपवर्णनं सामवेदसंहिता नाम ग्रन्थः। अत एव त्रिवम पार्थिवमेवाग्निं प्रस्तुत्य प्रवृत्तोऽयमृग्वेदग्रन्थः।

"अग्निमीळे पुरोहितं यज्ञस्य
देवमृत्विजम्। होतारं रत्नधातमम्॥ इति।

आन्तरीक्ष्यं तु वायुं प्रस्तुत्य प्रवर्तते यजुर्वेदग्रन्थः—

"इषेत्वोर्जेत्वा, वायवस्थ, देवोवः
सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे" इति।

दिव्यं त्वग्निं सूर्याख्यं प्रस्तुत्य प्रवृत्तोऽयं सामवेदग्रन्थः।

"अग्न आयाहि वीतये गृणानो
हव्यदातये। निहोता सत्सि बर्हिषि॥"

शाखाभेदेऽपि नायं मुख्योऽर्थो व्यभिचरितःस्यात्। तस्मादयमुपचारः प्रवृत्तो लोके—अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात् प्रवृत्तानीति। यान्यपि च वस्तुभूतानि ऋग्यजुः—सामानि वेदमुपदर्शितानि तान्यप्यवश्यमग्निवायुसूर्य्यसं-प्रवृत्तान्येव भवन्तीत्यत एवैतेषामृग्यजुः साम्नामग्निवायुसूर्य्यसमुद्भूतत्वं सिद्धम्। ऋग्यजुः सामान्येव तु वेदो विद्या ब्रह्म वा। तस्मादग्निवायुसूर्य्येभ्योवेदो वा विद्या वा ब्रह्म वा समुत्पन्नानीति व्यवहारः स्थाने संप्रवृत्तः।

अग्निर्भूस्थानः, वायुरन्तरिक्षस्थानः, सूर्य्यो द्युस्थानः इत्युक्तम्। त्रयोऽप्येते द्विविधा भवन्ति प्रत्यगात्मानश्च, परमात्मानश्च। एकैकशरीराभिमानित्वे प्रत्यगात्मत्वम्, ब्रह्माण्डाभिः मानित्वे तु परमात्मत्वम्। परमात्मनश्चेश्वरापर-पर्य्यायस्वैतेंऽशाः प्रत्यगात्मानः प्रतिशरीरं भिन्ना जीवात्मान उच्यन्ते। प्रत्यगा-त्मत्वे—अग्निर्विश्वो वैश्वानरो वा। वायुस्तैजसः प्राणो वा। सूर्यः प्राज्ञः प्राज्ञो वा। परमात्मत्वे तु—अग्निर्विराड् वैश्वानरो वा, वायुर्हिरण्यगर्भः सूत्रात्मा वा, सूर्यः सर्वज्ञ ईश्वरो वा।

पौराणिकभाषायामयमेव भूस्थाने विराड् विष्णुशब्देन, अन्तरिक्षस्थान हिरण्यगर्भो ब्रह्मप्रजापति शब्देन द्युस्थान सर्वज्ञस्तु सदाशिवशब्देनाख्यायन्ते। प्रत्यगात्मत्वे तु नाभिस्थाने विष्णुर्वैश्वानर। हृत्पद्मे ब्रह्मा प्राण। ललाटे सदाशिव. प्राज्ञ। एतेषा च ब्रह्माविष्णुसदाशिवानामर्यतत्त्व पौराणिके देवतानिरूपणप्रसङ्गे भूयसा प्रघट्टकेन विशदीकृतम्। एतेषु च त्रिषु पुरुषेषु विराड् हिरण्यगर्भसर्वज्ञेषु मध्यमो हिरण्यगर्भो मध्येऽन्तस्थायैकत पृथिवीमन्यतो दिवमवष्टभ्य सन्धत्ते। अतोऽवष्टब्ध त्वेते द्यावापृथिव्यौ दृश्येते मध्यस्थेन केनचिन्महा प्राणेन। स महाप्राणो भगवान् हिरण्यगर्भ। तस्याय महिमोपगीयते—

"हिरण्यगर्भ समवर्तताग्रे
भूतस्य जात. पतिरेक आसीत्।
स दाधार पृथिवी द्यामुतेमां
कस्मै देवाय हविषा विधम"॥

यद्यपि च केषाचिन्मते पृथिव्यभिमानी भगवान् विराट् पुरुष सचरन् भवति, नैकत्रावतिष्ठते तथापि नियतमार्गावस्थायित्वादवष्टब्ध इवेहाख्यात। अथ द्युलोकाभिमानी भगवान् सर्वज्ञपुरुषस्तु स्थाणुरिव नित्यमेकस्थानावस्थायी, न त्वेव स्थानाच्च्यवते। आम्नायते च—

"वृक्ष इव स्तब्धो दिवि
तिष्ठत्येकस्तेनेद पूर्णं पुरुषेण सर्वम्"

इति। यतश्चाय हिरण्यगर्भोऽन्तरिक्षमनुगृह्णन् द्यावापृथिव्यावनुगृह्णाति पृथिवी शेष च स्वयम्। यतो वा सवर्गविद्याया परिमरविद्याया वाऽमुष्मिन्नेवान्तरिक्षस्थान हिरण्यगर्भाख्ये महाप्राणे सर्वे षा पृथिवीस्थाना द्युस्थाना वार्थजातानां विलयन तत एव च समुत्थानमाम्नायते। तस्मादमुष्मात्स्वयम्भुवो ब्रह्मप्रजापत सभूता एते सर्वे वेदा ऋचश्च यजूषि च सामानि चाथर्वाङ्गिरामन्त्राश्चेत्याख्यायते। किञ्च, हिरण्यगर्भ एवाय स्वयम्भू सर्वाग्रे जातो भूतपति। न ततोऽन्यत्किञ्चित्। अन्यत्तु किञ्चिदिह त्रिविधमेवैतद् भवति-प्रमेय च प्रमितिश्च प्रमाणञ्चेति।

एतदेव त्रयमिदमित्थमिहाख्यायते-ब्रह्म च विद्या च वेदश्चेति। सर्वमेव प्रमेयजात ब्रह्मशब्देन, प्रमितिजात विद्याशब्देन, प्रमाणजात तु वेदशब्देनाख्यात भवति। नातोऽतिरिच्यते किञ्चित्। तस्माद्धिरण्यगर्भादेवैत मरीच्यादय सप्त वा दश वा ब्रह्माण सभूता। सर्वा विद्या सभूता। सर्वे च वेदा सभूता इत्युपगीयते पुराणेषु।

अथ योऽयमृग्वेदग्रन्थः पद्यबन्धेनाम्नातो, यश्च यजुर्वेदग्रन्थो गद्यप्रबन्धेनाम्नातो, यो वा सामवेदग्रन्थो गीतिप्रबन्धेनाम्नातो यानि च तत्र तत्र नियतवर्णान्येतानि मन्त्रवाक्यानि दृश्यन्ते तेषां सर्वेषां कृतकत्वमकृतकत्वं नेति भिन्नो विचारः प्रवर्त्यते । तत्रापि तावदेवं त्रेधा विप्रतिपत्तिः प्रतिपद्यते—

केचित् तावदाहुः—"न केनचित्पुरुषेण प्रणीतोवेदः" इति । यद्यपि चावश्य न केनचित्पुरुषेण प्रणीतो वेद इति सार्वजनीनः सत्यसिद्धान्तः । वेदस्य पुरुषप्रयत्नसाध्यत्वासम्भवस्योक्तत्वात् । तथाप्येतेषां वर्णमयशब्दप्रबन्धानामेव तु वेदत्वमभ्युपपद्यमाना बहव एवेदानीन्तना अनतिप्राचीनाश्च विचक्षणा इत्थमाचक्षते—

"स्थाणुरयं भारहारः किलाभू—
दधीत्यवेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत् सकल भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा ।।"

इति मन्त्रे वेदमधीत्य योऽर्थं न विजानातीत्यक्षरस्वारस्यच्छब्दमय एव कश्चित् प्रबन्धो वेद इति विज्ञायते । दृश्यते च प्रसिद्धिरपिलोके शब्दमयेष्वेव चतुर्पु मन्त्रसंहिताग्रन्थेपु तद्ब्राह्मणग्रन्थेपु च वेदशब्दस्य भूयसोपचर्यमाणस्य । भगवता च वेदव्यासेन शारीरकसूत्रेष्वीक्षतेर्नाशब्दमित्यादिपु वेदतात्पर्येण वेद शब्द एव सर्वत्रोदाह्रियते न विज्ञानादिशब्दः । तस्माच्छ्रुतिस्मृतिभ्यामाचाराच्च वाङ्मय एवायं प्रबन्धो वेदशब्देन व्यवहर्तव्यो न तु विज्ञानमयोऽन्यः कश्चिदर्थइति निश्चीयते । एतेन विज्ञानमयस्य प्रबन्धस्य वेदत्वं मन्यमानाः परास्ताः ।

तस्य च वेदस्य वाङ्मयत्वाविशेषेऽपि न भारतादिवत् पौरुषेयत्वमनित्यत्वं वा संभाव्यम् । दृश्यते हि लोके सर्वेषामर्थजातानां प्राकृतत्वकृत्रिमत्वाभ्यां विभक्तिः स्वारसिकी । स यथा मृण्मये जलमये तेजोमये वायुमये वा प्रपञ्चे द्वैविध्येनोपचारः प्रवर्तते, एवमविशेषादिहापिशब्दप्रपञ्चे द्वैविध्यं स्थाने प्राप्तं भवति । स यथा वनपर्वतनद्यादयः प्राकृता अर्थाः, उपवनस्तूपकुल्यादयस्तु कृत्रिमा इति विभागः साधीयान् प्रतीयते, एवमिमे वेदाः सर्वेप्राकृता अर्थाः, अथ कृत्रिमा भारतादय इति विभागोपक्लृप्तिनितरां न सम्भाव्यते ।

यथा खलु वायुतेजो जलादयो नित्या एव पदार्था ईश्वरेच्छावशात् कदाचित् संश्लिष्य कदाचिद्विश्लिष्य विशिष्टसंनिवेशयुक्ताः सन्तः सृष्टिप्रलयाभ्यां नियतव्यवस्थानुसारेण जगच्चक्रमेतन्निर्वाहयन्ति, तथैवायं जगदन्तर्गतः शब्दोऽपि नित्य एवेश्वरीयव्यक्तध्यानेशात् तदिच्छानुसारेण च सृष्टिकाले ऋग्यजुरादिप्रकारः संश्लिष्य प्रलयकाले च विश्लिष्यावतिष्ठते न तु केनचिदुत्तरकाले योनिजविग्रह-

यथा पुरुषेषु सपरिकरं तदनुरूपेण सन्निवेशविशेषेण सृज्यते । नित्यानां शब्दानां सन्निवेशविशेषसृष्टिर्द्रष्टव्य इत्यस्मिन्नेवार्थे समनूच्यते "नित्या वागुत्सृष्टा स्वयम्भुवा" इत्येवमादिषु श्रुतिवचनेषु । अत्र नित्या वागिति श्रुतिः प्रलयकाले विलिन-प्यावस्थानां विनष्टसन्निवेशानामपि तत्त्वतस्त्वविनाशं दर्शयति । सन्निवेश विशेषश्च तेषां शब्दानां सृष्ट्यादौ यथा पूर्वं भवत्येव । एतदभिप्रायेणैव "त्रयी विद्या प्रथमं जायते" (शत० ब्रा० २ । ३ । २०)

इति सर्वभूतप्रजातेः प्रागपूर्व्यं वेदस्योत्पत्तिराम्नायते । यदेव तु तत्त्वतो विनाशस्याऽयोगादनुत्पत्तेः वेदे नित्यापौरुषेयत्वविवक्षा क्रियते, तथैवतेषाम् सन्निवेशविशेषसंयोगादुत्पत्तिविवक्षापि तत्र क्रियते । तथा चैव सन्निवेशस्या-नित्यत्वप्राप्तावपि नत्वेव तावता वेदानामनित्यत्वं शक्यमभ्युपगन्तुम्, सर्वगात्र-वेशसंस्थानावस्थानादिनानाविधसन्निवेशविशेषसंयोगेऽपि देवदत्तव्यक्तेरनित्यत्वा-नुपपत्त्या सन्निवेशपदार्थस्य तदनुरूपानन्तर्भावात् । तस्मान्नित्योऽत्र प्राकृत-येणानुक्तो वेदोऽपौरुषेयश्चेति सुस्थितम् ।

इह तु बोध्यम्-ईश्वरेच्छावशात् स्वयमेव सम्भवन्त्यपि स सन्निवेश शब्दानां न वायवा दिवदिहान्तरिक्षे पर्यटन्तः प्रवर्तन्ते, किन्तु नाम तपोविशेषा-विशुद्धहृदयानां महर्षीणां बुद्धिसत्त्वेव तथा प्रायणिकी प्रवृत्तिः सञ्जायतेति सम्भवतो विज्ञायते । वर्णात्मकशब्दस्य बुद्धिमन्तरेण प्रवृत्तेरभावात् । तथा चायमर्थः स्मर्यते—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥

ईश्वरेच्छानुसारेण स्वयमेव गुम्फिताः सर्वे शब्दा ऋगादिनामेन परिणम्य महर्षीणां वसिष्ठादीनां वेदरचनार्थमप्रयतमानानामपि बुद्धिं स्वयमेवा-रुह्य प्रादुरभूवन्निति "महर्षयो लेभिरे" इत्यस्यार्थः । एतदभिप्रायेणैव-"मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि । तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ।" "यद्वा ऋषयः प्रतिबुबुधिरे य उ तर्हि ऋषय आसु" (शत० ब्रा० २ । २ । १ । १४)

इत्येवमादिषु मन्त्रब्राह्मणवचनेषु महर्षीणां द्रष्टृत्वमाम्नायते सर्वेषु वा मन्त्रेषु तत्तन्महर्षीणामार्षेयं स्मर्यते । तदित्यमनेकेषां महर्षीणां बुद्धिसत्त्वेव सन्निवेशविशेषस्वतामापि च प्रादुर्भवन्नप्ययं वेदो न महर्षिकृतत्वेन प्रतिज्ञायते न तु तातावर्तावानित्यत्वमप्यासज्यते । शब्दादिनित्यार्थत्वसंयोगस्याप्युदन्तानाम् यथा हि गुरुहृत्तावितर्नालिकादिविलक्षणविन्यासविशिष्टेषु तेषु तेषु क्षेत्रविशेषेषु तत्तद्-

क्षेत्रसन्निवेशानुसारेण विशिष्टसन्निवेशोपलब्धावपि तैस्तैरेतैर्गृहगुहानलिकादिभिरचेतनैः स स सन्निवेशो शब्दादीनामक्रियतेति न कश्चित् प्रज्ञावानुत्सहते विश्वसितुम् ।

एवमेव खलु वसिष्ठविश्वामित्रभृग्वङ्गिरोऽत्रिप्रभृतिमहर्षीणां विलक्षणविन्यासविशिष्टेषु हृदयक्षेत्रेषु वैलक्षण्येन सन्निवेशोपलब्धावपि तैस्तैरचेतनैर्वसिष्ठादीनामान्तःकरणैः स स सन्निवेशो वेदानामक्रियतेति को नाम सहृदयः श्रद्धातुमीहेत । तस्माद्वसिष्ठादिकर्तृकत्वप्रकल्पनं नितान्तं भ्रान्तम् । अन्यदपि च वसिष्ठादीनामार्षेयसंबन्धेन बहु वक्तव्यमस्ति तदुत्तरतः सर्वमृषिनिरूपण प्रकरणे चतुर्थे विवेके सुविशदं निरूपितम् । इह तु महर्षीणां बुद्धिक्षेत्रेष्वेवासीदमीषां वेदानां प्रथमविकाश इत्येवं तावन्निरूपितम् ।

अथेदमन्यद् द्रष्टव्यम् । अनेकधा हि बुद्धयः प्रकल्पन्ते-यत् तावदिह किञ्चित् पश्यति तन्ननु बुद्धिं कुरुते, यद्वाकिञ्चिदिह शृणोति, तत् खलु बुद्धिं कुरुते । एवमन्यच्चान्यच्च । तत्र बुद्धिं कुर्वाणः स शब्दं प्रयुञ्जान एव बुद्धिं कुरुते । न शब्दमनन्तर्भाव्यकस्यापि बुद्धिः शक्नोति स्वरूपमाधातुम् श्रूयते चायमर्थः कौषीतकीयश्रुतौ—

"यच्चक्षुषा पश्यति न तच्चक्षुषाऽऽह—"इत्यद्राक्षमिति" । वाचैवतदाह तच्चक्षुर्वाचमप्येति-वाङ्मयं भवति । अथ यच्छ्रोत्रेण शृणोति, न तच्छ्रोत्रेणाह "इत्यश्रौषमिति" । वाचैवतदाह । तच्छ्रोत्रं वाचमप्येति, वाङ्मयं भवति । अथ यन्मनसा संकल्पयते-न तन्मनसाऽऽह 'इति समचीक्लृपमिति" वाचैव तदाह । तन्मनो वाचमप्येति वाङ्मयं भवति ।।" इति ।

तत्र योऽयं दर्शनश्रवणयोर्बुद्धिविशेषयोर्नान्तरीयकः खल्वपि शब्द प्रयोगः प्राप्नोति तस्यैतस्य यावद्विज्ञाननित्यत्वान्नित्यापौरुषेयवेदत्वं केचन मन्यन्ते तदसत् । आनुश्राविकस्यैव शब्दप्रयोगस्य वेदपदार्थत्वाभ्युपगमात् । विज्ञाननित्यस्य तु शब्दप्रयोगस्य विज्ञानस्वरूपाधायकत्वेऽपि श्रवणे विनियोगायोग्यत्वात् । तस्माच्छ्रोत्रनित्य एव कश्चन शब्दविशेषो वेद इत्यवधेयम् ।

शब्दश्च तावत् सर्वोऽपि चतुर्धा विभज्य गृह्यते-दिव्यभाषा च परीक्षकभाषा च तर्कभाषा च लोकभाषा चेति । तत्राप्तं वाक्यं दिव्यभाषा च परीक्षकभाषा । आप्तमिति यथाभूतमर्थं प्राप्तमाह । तेन वक्तारमनाकलय्यैव यत्र वाक्ये सत्यमर्थमिदमाप्तमस्तीति श्रद्धा सम्पद्यते सा दिव्यभाषा च परीक्षकभाषा च, तत्प्रमाणम् आप्तत्वादप्रामाण्याप्रसक्तेः । एतच्चाप्तं वाक्यं द्वेधा-अपौरुषेयं च पौरुषेयं चेति । अकृत्रिमत्वात् पुरुषप्रयत्नासाध्यमपौरुषेयम् । सा दिव्यभाषा भवति ।

यत्पुनरपरं पौरुषेयं सा परीक्षकभाषा भवति । तत्र तावद्दिव्यभाषेय मेकान्ततः स यमेव ब्रूते नासत्यमित्याप्तमुच्यते । सत्यं हि प्रमाणानमप्रविचालि ब्रह्मतत्त्वं यज्ञो वा प्रजापतिर्नाम तस्य च नित्यं सत्यत्वमाहु –सर्वेषामुपादानत्वेन सर्वत्राव्ययरूपेणोपलभ्यमानत्वात् । तथाविधनित्यसत्यार्थप्रतिपादकत्वाद् ऋग्यजुः सामसंहितादिप्रतीतं सर्वमेव वाक्यजातं सत्यमवार्थमाप्तमस्तीति कृत्वा आप्तं वाक्यमित्युच्यते । सत्यार्थप्रतिपादकं च वाक्यजातं न जातु प्रमाणं भवितु-महंतीत्यत एवैतदसन्दिग्धप्रामाण्यकं वाक्यजातं दिव्यभाषाशब्देनाख्यायते, स एष वेदो नामशब्दः ।

अथपौरुषेयमाप्तं वाक्यं व्याख्यास्यामः । द्वयं वा इदं सर्वम्–सत्यं चैवानृतं च उपादानकारणं सत्यम तदुपात्तं कार्यमनृतम् । यथा मृत्सत्या इह कृता घटा-दयस्त्वनृताः । तत्र कार्यपरम्परायां सदैवैकं ब्रह्मनाम तत्त्व मुपव्यवतिष्ठते । तत्र च सर्वेषामुपादानत्वात सर्वतः सत्यं तदिदं ब्रह्मनामैकं तत्त्वम्, तद्विज्ञानप्रधानं वाक्यजातमाप्तत्वात् स्वतः प्रमाणम् वेदशब्देनाख्यायते इति हि प्राग् व्या-ख्यातम् ।

तदितरन्तु यत्किञ्चिदेवेह दृश्यते तत्सर्वं कार्यत्वसापेक्षमनृतं च भवति, कारणत्वापेक्षं सत्यं च । तद्विज्ञानप्रधानं तु वाक्यजातं सत्यानृतपरत्वात् गौणं सत्यमाप्तं च विवक्ष्यते, मुख्यं सत्यमनाप्तं च । तस्मादेवेदं प्रमाणं च भवत्यप्रमाणं च, सत्यार्थज्ञानजनकस्यैव प्रमाणपदार्थत्वात् । अतएव नित्यप्रमाणवेदापेक्षयैतेषा-मुत्तरतन्त्राणां प्रेक्षावद्वाक्यानां चावरकक्षाकं प्रामाण्यं पर्यवसीयते । एवं विध-प्रामाण्यवदिह सर्वं वाक्यजातं परीक्षकभाषा भवति । स एष आप्तोपदेशो नाम शब्दः उपदेशस्यैवाप्तत्वात् ।

अथान्यस्य वाक्यं तर्कभाषा । द्वैविध्यमिदं दृश्यते लोके क्वचित्तावदिह वक्तु-राप्तत्वग्रहणात् तदुक्तौ प्रामाण्यं गृह्यते । अथ क्वचित् प्रमाणान्तरेण संवादाद्वा विसंवादाभावाद्वा वाक्यस्यैवतावदाप्तत्वं सुगृहीतं भवतीत्यतो वचनस्याप्तत्वग्रह-णात् तन्निबन्धनमेव तद्वक्तरि सुतरां प्रामाण्यं गृह्यते । तदित्थं यत्र वक्तुः प्रामा-ण्यमनपेक्ष्यैव नूनं वचनप्रामाण्यं लभ्यते सा दिव्यभाषा च परीक्षकभाषा चेत्युक्तं प्राक् । यत्र पुनर्वक्तुः प्रामाण्यमपेक्ष्यैव तत्र वचने प्रामाण्यं ससाध्यते सेयमन्या तर्कभाषा भवति ।

अथवैतदन्यथा व्याख्यास्यामः । इदं हि परीक्षकभाषारूपं द्वितीयं शब्दजातं पुरुषमतिवैषम्यात् दृष्टानेकधमव्यभिचारं भवतीत्यतः प्रमाणान्तरसंवादमन्त-रेणेदं सत्यमाप्तमनाप्तं वेत्येव प्रामाण्यविषये नितरां सन्दिह्यते । सुतरामिदं स्व-प्रामाण्यसंपत्तये वक्तुराप्तत्वं प्रागपेक्षते । तच्चेत् पुनराप्तस्य वाक्यत्वेन गृह्यते

तदातदाप्तस्य सत्यनिष्टत्वश्रद्धानात् तदुक्तावत्पद्यते श्रद्धा, तथा च गृह्यते तत्प्रामाण्यमन्यथा न गृह्यते तत्प्रामाण्यम्। तदित्थं यत्र तर्काधीनं प्रामाण्यं चाप्रामाण्यं च व्यवतिष्ठते तदिह वाक्यजातं तर्कभाषा भवति। सोऽप्येष आप्तोपदेशो नाम शब्दः, उपदेशकस्य तत्राप्तत्वात्। अथानाप्तस्य वाक्यमनाप्तं वा वाक्यं लोकभाषा। एतच्च न प्रामाण्येनानुगृह्यते, अर्थमनाप्नुवतो वचनस्य नूनमप्रमाणत्वात्।

परेत्वाहुः-इह केवलमनाप्तं वाक्यमेवाप्रमाणं भवितुमर्हति नानाप्तस्य वाक्यमपि। अभ्युपगम्येत हि लोके शाकुनिकैः कालविशेषे कथोपकथादिप्रसङ्गात् प्रयुक्तस्य रजकाद्यन्त्यजभाषितकस्य भवितव्यार्थं प्रत्यायकतया दृढ प्रामाण्यम्। स यद्यपि रजकादिरभूदृशं भवितव्यमर्थमनाप्यैव तावदित्थं भाषत इति दृश्यते तथापि तत्तथा वाक्यमभूदृश भाविनमर्थं न व्यभिचरतीत्येवमाप्तत्वान्न त्वेव तन्न-प्रमाणं भवति तस्मादनाप्तमेव हि वाक्यमप्रमाणं च लोकभाषा चेति संसिद्धम्।

वाक्य प्रयोग सम्बन्धे चेदमिह द्वैविध्यं भवतिविज्ञानानिबन्धनो वाक्प्रयोगो वाकप्रयोगनिबन्धनं च विज्ञानमिति। विज्ञानं तु कश्चिदपूर्वं कञ्चिदर्थं परस्मै च्छापयितुं वाचः प्रयुङ्क्त। अथाकर्ण्य परस्य वाक्प्रयोगं परः कश्चिदपूर्वं कञ्चिदर्थं विज्ञानाति। अपि च पश्यामः-प्रत्यक्षयोग्यां सास्नादिमतीं कञ्चिद् व्यक्तिमुपलभ्य गौरिती शब्द भावयति। अनुपाख्यमपि तत्तद्विषयजातमुपलभ्यासौ नान्तरेण तत्तदुचितं शब्दं भावयति।

तथैतद्वैपरीत्येनापि पश्यामः-गौरिति शब्दं भावयमानः सास्नादिमत्यां व्यक्तौ बुद्धिं कुरुते, मन्त्रवाक्यं वा श्रुत्वा मननीये वाक्यार्थविशेषे बुद्धिकुरुते। तदित्थं वाक् प्रयोगनिबन्धने विज्ञाने जाते पुनरयं विज्ञाननिबन्धनो वाकप्रयोगं प्रसज्जते। स एष द्विविधः शब्दप्रयोगः संसिद्धः। दृष्टवा कञ्चिदर्थं शब्दं प्रयुञ्जानस्यैष दृष्टिनिबन्धन एकः। श्रुत्वा कञ्चिदर्थं शब्दं प्रयुञ्जानस्यैष श्रुति-निबन्धनोऽन्यः। तत्रायमाद्यः श्रुतिशब्देनाभिनीयते द्वितीयस्तु स्मृति शब्देन।

यथा हि श्रवणं श्रुतिः, स्मरणं स्मृतिः इति भावव्युत्पत्तिः, एवमिह यतोऽर्थः श्रूयते सा भाषा श्रुतिः, यतोवाऽर्थः स्मर्यते सा भाषा स्मृतिरिति करणव्युत्पत्तिरपि स्थानेऽभ्युपगम्यते अयमत्राभिसन्धि दृश्यते हि लोके एकः कश्चित् पश्यति च व्याहरति चानुब्रूते च। अपरः कश्चिच्छृणोति च व्याहरति चानुब्रूते च। तत्र तावदयं यत्पश्यति तन्ननं व्याहरति। नानारीयकमिदं द्वयं भवति, व्याहरन्नेवासौ पश्यति न पश्यन् कश्चिदव्याहरन् पश्यति। अथ यथायं पश्यति तथा परस्मा अनुब्रूते अनूचानश्चायमाप्तः प्रमाणी क्रियते अर्थ दृष्टत्वात्। अत एवाऽऽम्नावाप्तेषु प्रथमो विवक्षितः।

एवमयमन्यो यच्छृणोति तन्नून व्याहरति नान्तरीयकमिदं द्वय भवति। व्याहरन्नेवासौ शृणोति, न शृण्वन् कश्चिदव्याहरन् शृणोति। अथ यथाय शृणोति तथा परस्मा अनुब्रूते। अनूचानश्चायमाप्तप्रायोऽभिसन्धीयते, अर्थं श्रोतृत्वात्। अत एवासावाप्तेषु द्वितीयो विवक्षित.। तत्र यदिद द्रष्टृवानुब्रूते सा श्रुति:, दर्शनेऽभिनोतस्यार्थस्य तेनानुवचनेन श्रवणेऽवतार्यमाणत्वात्।

अथ यच्छ्रुत्वानुब्रूते स स्मृति', द्रष्टृशब्देनानुभावितस्यैवार्थस्य पुनरनेन श्रोतृशब्देनानुभाव्यमानत्वात्। यथैव खल्वनुभूतस्य भूयोऽनुभवन स्मृतिरित्युच्यते, एवमिदमनुभावितस्याप्यर्थस्य भूयोऽनुभावनमुच्यते स्मृतिरेव। अनुभवननित्यत्वादनुभावनस्य तथात्वे बाधकाभावात्। तथा च द्रष्टुर्वाक्य श्रुति., श्रोतुर्वाक्य स्मृतिरित्येषा परिभाषा सिद्धा।

तयोश्चैषा श्रुतिरेकान्तत. स्वत प्रमाणभवति, निरपेक्षत्वत्वात्स्वप्रामाण्ये परप्रत्ययानाश्रयणात्। अथैषा स्मृतिरेकान्तत. परत. प्रमाण भवति, श्रुतिमास्थायैव तेनार्थससाधनात्, द्रष्टृवाक्याधारेणैव तदवस्थानात्। अस्ति हि द्रष्टृवाक्य प्रमाजनकमिति कल्पते श्रोतुर्वाक्य प्रमाजननाय। यावता द्रष्टुर्वाक्य न प्रामाण्येनावधीयते न तावता जातुचिच्छ्रोतुर्वाक्ये श्रद्धीयते। तस्माच्छ्रुतिप्रामाण्यनिबन्धनप्रामाण्यक स्मृतिवाक्य नितरा परत. प्रमाण न भवति। आम्नायते च वेदेऽपि द्रष्टृवाक्यविरुद्धस्य श्रोतृवाक्यस्य नूनमप्रामाण्य लोकदृष्टान्तेन। तथा हि—

"एतद्ध वै मनुष्येषु सत्य निहित यच्चक्षु:। तस्मादाचक्षाणमाहु अद्राग्? इति। स यद्यदर्शमित्याह-अथास्य श्रद्दधाति। यद्य वै स्वय पश्यति, न बहूना च नान्येषा श्रद्दधाति"। "सत्य वै चक्षु:। सत्य हि वै चक्षुस्तस्माद्—यदिदानी द्वौ विवदमानावेयताम्-'अहमदर्शम्' 'अहमश्रौषम्' इति। य एव ब्रूयाद् 'अहमदर्शम्' इति, तस्मा एव श्रद्दध्याम" इति। एतेन सर्वस्यापि द्रष्टुर्वाक्यस्य श्रुतित्व स्वत: प्रामाण्य च, तथा सर्वस्यापि श्रोतुर्वाक्यस्य स्मृतित्व परत: प्रामाण्य चेत्यर्थद्वय निष्प्रतिपक्ष ससिद्धम्।

अथ यद्वाक्य नार्थद्रष्टुर्न वार्थश्रोतु समाम्नते-अपि तु प्रमाणान्तरविरोधोन्मत्तभाषितमिवापार्थं वा व्याहतार्थं वा विज्ञायते, तदिह न श्रुतिर्न वा स्मृति: अपि तु तृतीयो विभाग. प्रलपित नाम कल्पते। तदित्थ त्रेधा शब्दविभक्ति: सिद्धा स्वत प्रमाणभूता श्रुति प्रथमा। परत. प्रमाणभूता स्मृतिर्द्वितीया। अप्रमाणभूता प्रलापोक्तिस्तृतीया। यावानेव शब्द प्रयुज्यमानो लोके कुत्रापि लक्ष्यते-देवाना ऋषीणा वा आर्याणा वा म्लेच्छाना वा, सर्वस्यैव तस्येद त्रैविध्यमुपपद्यते।

तत्र योऽयं वेदो नाम शब्दः पूर्वं व्याख्यातस्तस्मिंस्तावदिदं द्वैविध्यमुपलभ्यते-अस्ति किंचिद्वाक्यजातं स्वतः प्रमाणभूतं श्रुतिर्नाम, अस्ति च किंचिद्वाक्यजातं परतः प्रमाणभूतं स्मृतिर्नाम । अप्रमाणभूतं तु तृतीयं वाक्यजातं न तत्रोपलभामहे । तथा हि-सन्तीमे मन्त्रास्तत्र श्रुतयः, सन्तीमानि ब्राह्मणानि तत्र स्मृतयः इत्यासीत्प्रतिपत्तिः पुराकल्पे । संप्रति कल्पे तु मन्त्राश्च ब्राह्मणानि च सन्ति श्रुतयः, अथ गाथाश्च सूत्राणि च सन्ति स्मृतय इत्येव दृश्यते भूयसी प्रतिपत्तिः ।

तथा हि यावन्ति नामेदानीं ब्राह्मणानि पश्यामः, सर्वत्रैव तत्र खलु वैदिकार्थनिरूपणप्रसङ्गेन मन्त्रः प्रमाणीक्रियते "तदेतत्पश्यन्नृषिरभ्यनूवाच" इत्यादिना । तेनावश्यमदं ब्राह्मणग्रन्थः स्वस्मिन् स्मृतित्वमाकुरुते इति लभ्यते । अथ यावन्ति सूत्राणि श्रौतानि पश्यामस्तानि खल्वेषामुभयेषां मन्त्रब्राह्मणानां प्रामाण्येन प्रवर्तमानानि दृश्यन्ते । स्पष्टमयमर्थः सूच्यते च-तथा हि वैतानश्रौतसूत्रम् "अथ विधिं वक्ष्यामः । स पुनराम्नाय प्रत्ययः । आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च" इति । तेनावश्यममीषां सूत्राणां स्मृतित्वमथोभयेषां मन्त्रब्राह्मणानां श्रुतित्वमित्याख्यातम् । तथा च मन्त्रेषु श्रुतित्वमेव, स्वार्थप्रत्यायने इतरानपेक्षत्वात् । सूत्रेषु च स्मृतित्वमेव, स्वार्थप्रत्यायने मन्त्रब्राह्मणादि द्रष्टृवाक्यापेक्षितत्वात् । अथ ब्राह्मणेषु च गाथासु च विद्यते श्रुतित्वं च, स्मृतित्वञ्च । कल्पभेदात् प्रतिपत्तिभेदाच्च तथात्वे बाधकाभावात् ।

अथवा दृश्यते ब्राह्मणेषु मन्त्रगाथयोः, गाथासु च मन्त्रब्राह्मणयोः, प्रामाण्यविषया संप्रवेश इत्यतो द्रष्टृवाक्यं श्रुत्वा प्रवृत्तिदर्शनात्तयोः स्मृतित्वंप्राप्नोति, अथ भूयांसि खलु ब्राह्मणवचनानि गाथावचनानि च मन्त्राद्यनपेक्षं स्वप्रामाण्येनैव प्रवर्तमानानि दृश्यन्ते, तेन द्रष्टृवाक्यत्वोपपत्तश्चातयोः श्रुतित्वं प्राप्नोति, तस्मात् सिद्धं ब्राह्मणगाथयोरंशतः श्रुतित्वं च स्मृतित्वञ्चेति भाव्यम् । अथवा द्विविधाश्चेह ब्राह्मणग्रन्था दृश्यन्ते मन्त्रसंहिता शेषभूताश्च, मन्त्रसंहिताभाष्यभूताश्च । आद्यास्तैत्तिरीयब्राह्मणादयः ते श्रुतिशब्दा एव स्युः ।

परे शतपथब्राह्मणादयः, ते स्मृतिशब्दा अपि स्युः । त इमे श्रुतिस्मृतिवेदाख्यायां दिव्यभाषायां व्याख्याते । तृतीया तु प्रलापोक्तिरसत्यपिसत्यांशे विसंवादात्प्रसज्जते, एकमेव हि वाक्यं वाक्यार्थो वा केनचित्प्रमाणीक्रियते, अपरेण विगीयते । प्रतिपत्तिभेदादित्थं प्रामाण्ये द्वैविध्यमवतिष्ठते । यथाहि-श्रमणाः क्रियाप्रधानाः श्रमस्य क्रियारूपत्वात् । ज्ञानप्रधानाः, ब्राह्मणो ज्ञानरूपत्वात् । क्रियैकाद्वयवादिनः श्रमणाः, ज्ञानैकाद्वयवादिनो ब्राह्मणाः । श्रमणा अनीश्वरवादित्वात्पौरुषेयमात्रप्रवणाः, ब्राह्मणास्त्वीश्वरवादित्वाद्ब्रह्मनियतिश्रद्धानाः ।

"यदहं करिष्यामि तदेव भविष्यति न तु कश्चिन्नियन्तास्तीति" श्रमणा आतिष्ठन्ते, "ईश्वरकृतनियत्यनुसारेणैवेदं सर्वं भवति-न तद्विरोधेन वयं किमपि

र्तुं शक्नुम" इति ब्राह्मणा । स्वतन्त्रा वयमित्युन्मर्यादा श्रमणा, ईश्वर-परतन्त्रा वयमिति मर्यादादीक्षिता ब्राह्मणा । श्रमणा बौद्धा, ब्राह्मणा वैदिका । इत्यमनयो श्रमणब्राह्मणयो प्रतिपत्तिभेदाच्छ्रमणमत सत्यम्, ब्राह्मणमत त्वप्रमाणमिति बौद्धा, अथ ब्राह्मणमत सत्यम, श्रमणमत त्वप्रमाणमिति बौद्धा, अथ ब्राह्मणमत सत्यम, श्रमणमत त्वप्रमाणमिति वैदिका । तदित्थ प्रामाण्य चाप्रामाण्य चानैकान्तिक भवति ।

अथैतस्मिन्नाप्तोपदेशात्मके द्वितीये शब्दजातेऽपि यत्रार्थद्रष्ट्रा स्वप्रामाण्येनैव किञ्चिदुच्यते सानूनमितरानपेक्षा द्रष्टुर्भाषा श्रुति । अथ यत्र स्वयमर्थमदृष्ट्वतापि द्रष्टृवचनप्रामाण्यादिह कश्चिदर्थं प्रकाश्यते तत्रैषा सर्वापि श्रोतुर्भाषा स्मृति । तदित्थमाप्तानां त्रकाराणा व्यावहारिकाणा चोक्तौ द्वैविध्य द्रष्टव्यम् । तृतीया तु प्रलापोक्तिविसवादात् प्रसज्यते । दृश्यते हि लोके यान्येव कानिचित्कैपाञ्चिदाप्ताना वचनानि कस्मिश्चित् समाजे प्रमाणी क्रियन्त-श्रद्धातिशयाद् गृह्यन्ते, तान्येवापरस्मिन् समाजेऽपवर्ज्यन्ते, दोषेण दर्शयित्वा विगीयन्त । तदित्थ प्रामाण्य चाप्रामाण्य च समाजभेदात्प्रतिपत्तिभेदाच्च व्यवतिष्ठते । स्वतो दर्शनन्तु निरुपाधिक तत्र सत्यम, तत् प्रमाणम्-ततो निवर्तते विसवाद ।

अथानाप्तवाक्य न स्वत प्रमाण न वा परत प्रमाणम् अप्रमाणैकान्तत्वात् । अथाप्याहु —नदमेकान्ततोऽनाप्तवाक्यानामप्रामाण्यमेवावकल्पते वक्तुम्, नाटकाभिनयादौ गानरोदनहर्षशोककरुणभयोपहासभर्त्सनादिपराणा वाक्यानामनाप्तानामपि सर्वथा प्रामाण्यदर्शनात् । तस्मादिद प्रामाण्य चाप्रामाण्य च सप्रतिपत्तिनित्य विवक्षाधीनमनैकान्तिकमित्यविरोधात्सर्वासामासा दिव्यभाषा परीक्षकभाषा-तर्कभाषा-लोकभाषाणा शक्य व्याख्यातुमित्थ प्रामाण्य चाप्रामाण्यञ्चेति दिक् ।

अथान्य व्याचक्षते इद तावत्प्रामाण्य प्रमाजनकत्व नाम,तत्र क प्रमापदार्थ इति प्रतिपित्सायां केचित्तावदाहु —'यथार्थानुभव प्रमा' 'तत्र तद्बुद्धि प्रमा इत्यादि, तदसत् । यथार्थयथार्थयोस्तदनुगतत्वातदनुगतत्वयोश्च बुद्धिनिष्ठयोस्तदनुभावात्प्रागननुभवात् । अनन त्वनुमवन ग्नियमत स्वविषयसत्तार्ऽपि विपर्यीक्रियत-इति सर्वस्यैवानुभवजातस्य तत्र तद्बुद्धित्व ल्क्षणानुपायात् ।

उत्तरानुभवेन तु पूर्वानुभवस्य याथार्थ्यायाथार्थ्ये निरूप्यते इति यदाहुस्तदप्यापादरष्टत्वाद् भ्रान्तम् । सर्व एव ह्यनुभव स्वयाथार्थ्यं प्रत्याययन्नेवार्थं प्रत्याययन् दृष्ट । तथा च पूर्वोत्तरकालिकयोविरुद्धार्थयोरप्यनुभवयोरेकेनान्यस्य याथार्थ्यव्याघातो न शक्यमभ्युपगन्तुम् । पूर्वं सत्यत्वेन प्रतीतोऽर्थ पश्चादसत्यत्वेन

प्रतीयत इति चेत्तावतोत्तरज्ञानेन बाधात्पूर्वज्ञानस्य भ्रान्तित्वमिव पूर्वज्ञानेन बाधादुत्तरज्ञानस्यापि भ्रान्तित्वं कस्मान्न स्यात् ।

उभयथापि तु शक्यं भवितुम् स्यादिह पूर्वं ज्ञानमयथार्थमुत्तर यथार्थम्, अथवा स्यादेव तु पूर्वं ज्ञानं यथार्थमुत्तरमयथार्थमिति । तत्रेदमशक्यमेकान्ततो निर्द्धारयितुमिदं यथार्थमिदमयथार्थमिति । किञ्चि, उत्तरानुभवात् प्राक् पूर्वानुभवः प्रमात्वेन प्रतीत आसीत्, अथोत्तरानुभवेन स्वविरुद्धस्य पूर्वानुभवस्य त्रैकालिकं प्रमात्वं निराक्रियते—नासीन्नास्ति न भविष्यति पूर्वानुभवो यथार्थ इत्येवं कृत्वा पश्चादस्य भ्रमत्वं संसाध्यते, तत्रदमेकस्यैव कदाचित् प्रमात्वं कदाचिद् भ्रान्तित्वमित्यसमञ्जसं भवति ।

कल्प्यतां तावत्-विरुद्धो नामानुभवो यद्युत्तरतः कदाचिदभविष्यत् तदा खलु यस्य भ्रमत्वमापादितमभविष्यत्-तादृशस्यानुभवस्य दैवात् सर्वथैवोत्तरज्ञानानुत्पत्तौ प्रमात्वं वक्तव्यमप्रमात्वं वा, न तावत्प्रमात्व शक्यं वक्तुम् । वस्तुसत्तया तत्र तद्बुद्धेरभावात् । नाप्यप्रमात्वम्, तद्ग्राहकोत्तरज्ञानानुत्पत्तेः । अनुत्पन्नेऽपि बाधज्ञाने बुद्ध्यप्रमात्वं स्वीकरिष्यते चेत्तदा सर्वासामेव बुद्धीनामप्रमात्वापत्तिः प्रसज्जते । तस्मात्तत्र तद्बुद्धिः प्रमा, यथार्थानुभवः प्रमा इत्यादिकमनाप्तोक्तमलक्षणम् ।

कस्तर्हि प्रमापदार्थ इति चेच्छृणु प्रत्यक्षागमानुमानैरर्थपरीक्षणं तावान्न्या इत्युच्यते, स च प्रत्यक्षागमाश्रितमनुमानमन्वीक्षा नाम । प्रत्यक्षागमाभ्यामीक्षितस्यैव तर्कवितर्काभ्यां पुनः पुनरीक्षणात् । तदित्थमनयान्वीक्षया प्रत्यक्षानुमिति शाब्दोपाख्यसर्वविधानुभवोत्थापितनानातर्कवितर्कोत्थानप्रत्युत्थानभूमिकासमाप्तौ सशयविपर्ययादिकलाशून्यं किञ्चिदुत्पद्यते चित्तसंतोषकरं पार्ष्टिक ज्ञानम्—सोऽवगमः । सचात्मविकाशात्मनिरस्तप्रत्यक्षादिभेदः 'इदमित्थमेवास्तीति' कृतसत्यताप्राणः सत्यविश्रान्तत्वाच्चित्तविश्रान्तिकरश्च । तद्विज्ञानम्, सा प्रमा । तज्जनकत्वात्तु प्रत्यक्षानुमानागमा ज्ञानरूपास्त्रीणिप्रमाणानि । चक्षुरादीनान्तु परम्परया सिद्धगौडं प्रामाण्यं बालैरभ्युपगम्यते, वास्तविकन्तु प्रामाण्यमनुभवविशेषाणामेवेति ।

तत्रान्तः करणावच्छेदेन दोषदर्शनानुकूलवृत्तिमत्त्वं तर्कयितर्कोत्थाने सहकारिकारणमिति यावदनुवर्तते दोषदर्शनानुकूला वृत्तिस्तावदनुवर्तते तर्कवितर्कसमारम्भ इत्यतो नैकत्र प्रतितिष्ठति चित्तम् । तर्काप्रतिष्ठानाच्च तत्समाप्तिभूमिकोत्तरभावी सोऽवगमोऽपि न प्रवर्तते । प्रमानुत्पादकत्वाच्च न प्रामाण्यं शक्यमवस्थातयितुं कुत्रापि । तथा च तद्विषयकदोषदर्शनानुकूलवृत्तिमतस्तत्राप्रामाण्यमिति निष्कर्षः । कुत्रचित्तु विप्रकीर्णनिकानियतनिमित्तसंयोगादाप्तत्व-

प्रयोजकगुणकलापसत्त्वानिश्चयोऽनुवर्तते, स च दोषदर्शनानुकूलवृत्तिप्रतिबन्धिका वृत्तिः श्रद्धानाम् । तथा च श्रद्धातारतम्यानुसारेण सहकारिविगमाचिरेणैव तर्क-वितर्कभूमिकासमाप्त्या निष्प्रतिपक्षमुत्पद्यते साऽऽगम प्रमा नाम ।

तज्जनकत्वात् तज्जनकन्यायशरीरभूतानां प्रत्यक्षानुमानागमोपमान्या-नुभवानां प्रामाण्यमविसंवादि जायते । तज्जनकत्वाच्च प्रत्यक्षानुमानागमानां-मिन्द्रियलिङ्गशब्दरूपाणामपि परम्परया प्रामाण्यमुपचर्यते । तत्प्रभावाच्च केषा-ञ्चिदाचार्यत्वगुरुत्वादिभिरभिनीतानां व्यक्तिविशेषाणामपि पारम्परिकं प्रामा-ण्यमुपचर्य्यते—इत्येष प्रामाण्यविद्यानिष्कर्षः । तथा च न प्रामाण्ये वस्तुतादात्म्य-मपेक्ष्यते अपितु श्रद्धानिबन्धनं स्वचित्तसंतोषमात्रम् । अतएव तु पुरुषमतिवैषम्यात् सर्वत्र प्रामाण्याप्रामाण्यविसंवादधारा प्रवर्तमाना दृश्यन्ते ।

इदन्तु बोध्यम्—अयं तावन्न्यायः प्रत्यक्षागमानुमानकृतशरीरः प्रवर्तते, स क्वचित्प्रत्यक्षप्रधानः, क्वचित्पुनरागमप्रधानोऽनुमानप्रधानो वा । स यावद-यमागमप्रधानोऽनुमानप्रधानो वा स्यात् न तावदियं प्रामाण्याप्रामाण्यविसंवादधारा शक्या निवर्तयितुम् । यावद्वा निवर्तयितुं प्रयत्यते, तावदेवेयमतितरां क्षुब्धा सती भूय एव समधिकं प्रवर्द्धते । तस्माद् व्यर्थस्तर्केण वचनेन च तन्निवर्तनप्रयास ।

अथायं प्रत्यक्षप्रधानस्तु न्यायो निर्मूलं शक्नोति निवर्तयितुं विसंवाद-चक्रम् । "एतद्वै मनुष्येषु सत्यं निहितं यच्चक्षुः" इति श्रुतेः प्रत्यक्षस्य सत्यप्रति-ष्ठापकत्वात् । सत्यप्रतिष्ठायां च सत्यां विपरीततर्कानुत्थानात्सिन्नैव तत्रैवार्थे श्रद्धातिशयो जायत इति न शक्यमवस्यातुं विसंवादेनेति सूक्ष्मेक्षिकया समीक्ष्यम् ।

अत्र यत्रार्थे न प्रत्यक्षकरणयोग्यता दृश्यते, तत्रापि तदर्थवक्तुः प्रतिपादि-तेष्वन्येषु केषुचित्प्रत्यक्षयोग्येषु विषयेषु फलप्रत्यक्षाय प्रयतनीयम् । तथा च सति भूयसा तदर्थश्रद्धानात्तद्वक्तरि श्रद्धा सुतरां सपत्स्यत इति तदुक्तेष्वन्येष्वपि प्रत्यायोग्येषु विश्वासः साधीयानुपलप्स्यते । नातोऽन्या गतिः संभवति कश्चिदिह प्रामाण्यनिष्ठायै, तस्मादिह वस्तुयाथात्म्यनिबन्धनं प्रामाण्यं फलप्रत्यक्षकरण-सापेक्षमिति निष्कर्षः ।

तदित्थमेतन्न्यायाङ्गतया त्रिविधानि प्रमाणान्युक्तानिप्रत्यक्षमनुमानमाग-मश्चेति, तेषां च मुख्यगौणभेदात्प्रत्येकं द्वैविध्यमप्युपदर्शितम् अनुभवविशेषा मुख्यानि, तदौपधिकार्थविशेषास्तु गौणानीति । तत्रेदमिदानीं विशेषलक्ष्यं किञ्चिदावक्ष्महे—न प्रत्यक्षादयोऽनुभवा इन्द्रियलिङ्गशब्दान् विना कृत्वा प्रामा-ण्याय क्वचिद् दृष्टाः । न चानुभवान् विना कृत्वाऽमीषामिन्द्रियादीनां प्रामाण्यं

क्वचिदुपलभ्यते । तस्माद्विज्ञानविशिष्टमिन्द्रिय वा, इन्द्रियविशिष्टं विज्ञानं वा विप्रमुग्धकार्यकारणभेदमेकं प्रमाणं संपद्यते ।

एव शब्द शब्दानुभवौ सहगृहीतौ शास्त्रम्, न शब्दस्यानुभवस्य वा पार्थक्येन शास्त्रत्वं व्यवहरन्ति लोके । शास्त्र च प्रमाणम्, तस्माद्विप्रमुग्धभेद तदेकं प्रमाणम् । दृष्ट प्रत्यक्षमन्वक्षं समक्षमुपाख्यं साक्षात्करणमित्यनर्थान्तराणि । आगमस्तन्त्रं शास्त्रं शब्दो वेद इत्यनर्थान्तराणि । अत्र शब्दःशब्दशाब्दयोरविशिष्टः शास्त्रापरपर्यायो भिन्न एव, आप्तोपदेशः शब्दशब्दः, शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् इत्येवमादिषु सूत्रजातेषु शास्त्रतात्पर्येणैव भूयसा शब्दशब्द-प्रयोगात् ।

शास्त्रमिति वेद इति चान्यार्थौ, 'शास्त्रसामर्थ्याच्चेत्यादिषु वेदतात्पर्येणैव शास्त्रपदप्रयोगात् । 'आयुर्वेदः शाखा, विद्या, सूत्रम्, ज्ञानम्, शास्त्रम्, लक्षणम्, तन्त्रमित्यनर्थान्तरम्' इति चरके (सूत्र ३० अ०) पतञ्जलिना वेद-शास्त्रयोः पर्यायवाचित्वेनाम्नाताच्च । अत्रायुरिति शाखादीनां विशेषपरत्वाभिधानाय सर्वशेषवचनम् अन्यथा शाखादिशब्दानामायुर्वेदमात्रपरत्वमपदार्थः प्रसज्जेत । तथा च वेदः शास्त्रं शब्द इत्येवमादयः शब्दास्तृतीयप्रमाणाभिप्राया एकार्था-इत्यर्थः सिद्धः । अतएव—

"प्रत्यक्षानुमानशब्दाः प्रमाणानि" ।  
प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।  
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ।  
प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।  
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ।

इत्यादीनि स्मृतिवचनानि समञ्जसानि भवन्ति । 'ऋषिवचनं वेदः' इति सुश्रुतोक्तमपि (सू० ४० अ०) न शब्दमात्रस्य वेदत्वमाख्यापयति । वचनशब्दस्य शब्दार्थयोरविशिष्टत्वात् । तस्माद्विज्ञानशब्दैस्तदुभयसंप्रमुग्धसमष्ट्यात्मकोऽयं वेदो न विज्ञानमात्र न वा शब्दमात्रमिति दिक् ।

परे त्वेवं पश्यन्ति शब्दैकदेशस्य प्रमाणैकदेशस्य विज्ञानैकदेशस्य चेदानीं यावद् वेदत्वमाख्यातम्, तन्नावकल्पते । सर्वविधानामेव शब्दानां सर्वविधानां प्रमाणानां सर्वविधानां वा विज्ञानानां वेदत्वेनाभ्युपगन्तुं युक्तत्वात् । तथा हि शब्दं तावद् व्याख्यास्यामः, नित्यसदर्थमाप्तं वाक्यं वा सदर्थमाप्तं वाक्यं वा नित्यासदर्थमाप्तं वाक्यं वा स्याद्, अथवा द्रष्टुर्वाक्यं वा श्रोतुर्वाक्यं वा प्रमाद्यतो वाक्यं वा स्याद्, यः कश्चन शब्दः स्यात्सर्वथापि तु शब्दो नाम न जातुचिदप्रमाणं भवितुमर्हति । वह्निना सिञ्चती, त्यादौ यत्रापि योग्यताग्रहो नास्ति, शुकभा-

पितादौ यत्रापि तात्पर्यग्रहो नास्ति, तत्राप्यविशेष यावच्छ्रवण तावदर्थप्रत्यायने शब्दानां कृत कृत्यत्वात् ।

यदि नाम तत्र शब्दो नार्थं प्रत्याययेत् तर्हि तदर्थे याग्यताबाधग्रहोऽपि कथ नामावतिष्ठेत, न हि वह्निना सिञ्चतीत्येतद्वाक्यार्थानवगमे योग्यता सत्त्वासत्त्वसमीक्षा प्रभवति तत्र प्रवर्ति तु जातु । न चैतत्पदार्थोपस्थितिमात्रम्, योग्यताबाधस्य वाक्यार्थे गृहीते तु वाक्यार्थे तावनैव कृतकृत्य शब्दा न पुन स्वार्थग्रहणाय विनियुज्यन्ते, 'शब्दबुद्धिकर्मणा विरम्य व्यापाराभावात् । तस्मात्तत्रापि शब्द स्वार्थं प्रत्याययन प्रमाण भवितुमर्हति । यत्तु शब्देन यादृगाऽस्य प्रत्याय्यते, ततो विरुद्ध प्रत्यक्षादिना प्रमाणान्तरेण तत्रार्थो गम्यन ।

अत एतत्प्रत्यक्षादिविसंवादात्तत्रास्य शब्दस्य प्रामाण्यमपोद्यते शब्दप्रमाणापेक्षया प्रत्यक्षप्रमाणप्राबल्यात् । विप्रतिषेध पूर्वप्रमाणापेक्षया परप्रमाणप्राबल्याच्च । दृश्यते हि भ्रमस्थले शुक्तित्वप्रत्यायकोत्तरप्रत्यक्षेण निर्दोषेण सदोषस्य रजतप्रत्यायकस्य पूर्वप्रत्यक्षस्य प्रामाण्यापवाद इति । एतच्च प्रमाणयो प्राबल्यदौर्बल्य सार्वजनीनप्रत्ययसिद्धमित्यनपलप्य भवति । तस्मात्प्रत्यक्षविरुद्ध शब्दोऽप्रमाणमित्याहु । तदेतद्बालबुद्धिमात्रम्, शब्दव्यापारानन्तर हि तत्र प्रत्यक्षादिव्यापार प्रवर्तते, ततश्च बाधग्रहो भवति, तत शब्दे प्रामाण्यापवाद क्रियते प्रामाण्यापवादश्च प्रमा न जनयतीति प्रतिपत्ति । इय च न प्रत्यक्षादिव्यापारात्प्रागासीत्, आसीच्च तदाप्रमा जनयतीति प्रतिपत्ति । तत्रैव भवत प्रतिपत्त्योरेव तु बाध्यबाधकभाव फलत सिद्धो भवति, कालभेदेन प्रतिपत्त्योरेव द्वैविध्यात् ।

न तु तस्या प्रमाजनकताया शब्दनिष्ठाया, शब्दे कालभेदेन व्यापारद्वयाभावात् । यदा पुनरासीच्छब्दे प्रमाजननव्यापारो न तदा प्रत्यक्षादिविसंवादाधीना प्रतिपक्षता स्थानमलभतेति क शब्दस्य प्रमाजनन व्यापारमवरुन्ध्यात् ? अनवरोधाच्च कृते शब्देन स्वीये निसर्गसिद्ध प्रमाजननव्यापारे यदि पश्चात् पर सहस्रैरपि वचनभारै कश्चिदब्रूयाद 'नानेन प्रमा जनिता, नानेन *प्रमाजनितेति' किमनेन कृतस्यात् ? यथा हि 'तत्र घटोऽस्ति' 'जलेन वृक्ष* सिञ्चती'त्यादिदृष्ट प्रदुष्टाप्त वाक्य यथाविधेन व्यापारेण तत्र स्वार्थं प्रत्याययितु प्रवर्तते, निर्विशेषमिद 'वह्निना सिञ्चती' त्यादिकमनाप्त विक्षिप्तवाक्यमपि नून तथैव प्रवर्तत इति किं निबन्धनमस्याप्रामाण्य वक्तु युज्येतेति विमृश्यताम् । यत्तु कश्चिद् ब्रूयात—शब्दो नामाऽय स्वविषयभूतस्यार्थस्य सत्तया योग प्रत्याययति, न च तत्र सत्तया योगमुपलभामहे, ततोऽमुन्नमर्थ प्रत्याययतीति प्रतिपद्यामहे, ततोऽस्मिंस्तद्बुद्धि प्रयोजयन् शब्दोऽप्रमाणमस्तीति विज्ञापयाम

इति । तदप्यविचारितरमणीयमेव । सत्तायोगाभावोपलब्धेः प्रमाणान्तरसाध्यायाः प्रतिबन्दित्वस्यानुपदमेव निरस्तत्वात् ।

किञ्च—प्रत्यक्षमेवेदं प्रमाणं स्वविषयभूतस्यार्थस्य सत्तया योगं प्रत्याययितुं प्रवर्तते, न शब्दोऽपि । शब्दस्तुनाम भूतं भवन्तं भविष्यन्त, सन्तमसन्तं संनिकृष्टं विप्रकृष्टं, चक्षुरादिविषयीकृत व्यवह्नितं च सर्वविधमेवायार्थविशेषादेकरूप्येण प्रत्याययितुं कृतव्यापारो भवतीति कथं नामासन्तमर्थं प्रत्यायन्नप्रमाणं भवितुमर्हति ।

किञ्च 'भारतवर्षे सुमेरुपर्वतोऽस्ति' इत्येव प्रयुज्यमानः शब्दः सत्ताविशिष्टस्य मेरोर्भारतवर्षेण सम्बन्धं विनियुक्तो दृश्यते, स न तस्मात्स्वार्थात्प्रच्यवते, नाप्यधिकं करोति । अत एवास्य मेरोर्यद्यपि न वर्तते भारतवर्षेण सम्बन्धस्तथाऽपि नाऽयं शब्दोऽपराध्यति । भारतवर्षेण मेरोः सम्बन्धकरणे तस्य विनियोगायोगात् । भिद्यते तु सम्बन्धकरणं च सम्बन्धबोधनं च । तत्र बोधने तावद् विनियुक्तः शब्दः कृतमकृतं वा सम्बन्धं कृतत्वेनापि शक्नोत्येव बोधयितुम् । स तथा बोधयन् शब्दः स्वार्थादनपेतो न शक्यमप्रमाणी कर्तुम् । तस्मादसन्तमप्यर्थं बोधयन् शब्दःप्रमाणमेवेति शक्यमप्रतिपक्षं समर्थयितुम् ।

किं च यथा कामलादिदोषसंयोगात्पीतशङ्खप्रत्यायकस्यापि चक्षुषः पीतत्वांशमात्रे प्रामाण्यमपोद्यते, न सर्वथैतदप्रमाणमेव चक्षरिति विश्वासः साधीयान् । एकेनैव व्यापारेण जनितस्यैकस्यविशिष्टप्रत्ययस्य सर्वथैवाप्रामाण्येऽभ्युपगम्यमाने शङ्खाद्यंशेऽपि प्रमाया अप्रमात्वापत्तेः, न चेष्टापत्तिः प्रतीतिविरोधात्, एवममुष्य शब्दस्यानाप्तोच्चरितत्वरूपदोषसंयोगादतथा भूतार्थप्रत्यायकत्वेऽपि कस्मिंश्चिद्विशेषणांशमात्रे प्रामाण्यमपोद्यते, न तु सर्वथैतद्प्रमाणमेवानाप्तवाक्यमिति विश्वासः साधीयान् ।

एकस्माद्वाक्यादेकदा प्रयुक्तादेकेनैव व्यापारेण जनितस्यैकस्य विशिष्टप्रत्ययस्य सर्वथैवाप्रामाण्येऽभ्युपगम्यमाने संभवदर्थांशतोऽपि प्रमाया अप्रमात्वापत्तेः, न चेष्टापत्तिः, प्रतीति विरोधात् । तस्मादेवमंशाप्रामाण्येऽपि विशिष्टप्रत्ययस्य प्रमात्व न व्याहन्यते-इति सर्वविधः शब्दः प्रमाणमेवोपपद्यते ।

किं च पीतशङ्खप्रत्यये नेदं पीतत्वं नितान्तमविषयम्, प्रत्यायके चक्षुषि तेजसि पित्तसंयोगात्तद्गोचरे पीतगुणोपलम्भस्य वास्तविकत्वात् । नापि वा तत्र पीतगुणस्य शङ्खेन सम्बन्धः प्रत्यायितोऽसदथः, पीतगुणकेन तेन तेजसा संबद्ध तस्मिन् शङ्खेऽवश्यमस्य पीतगुणस्योपसक्रमणात् तस्मात् सर्वथा पीतशङ्खप्रत्यायनमपीदं चक्षुः प्रमाणमेव न त्वंशतोऽपीदमप्रमाणं भवितुमर्हति । प्रत्युत यदि पित्तसंयुक्तं चक्षुरपीतं शङ्खं प्रत्याययेत् नेदानीमेवेदमप्रमाणं स्यात् । सतस्तत्र

दोपकार्यस्य पीतत्वादेरनवबोधात् पीत तु शङ्खप्रत्याययदिद भवत्येव पित्तविकारप्रत्ययहेतुत्वादविकल प्रमाणम् ।

यदि तु तस्य प्रामाण्ये मथावपोद्येत तर्त्तहि दोषज्ञान सशयविपर्ययादिविशेषज्ञान वा सर्वथैवापलपित स्यात्, प्रमाणाभावादिति लोकव्यवहारोच्छेदप्रसग । नस्मात्सर्वं प्रत्यक्ष प्रमाणमेव, किन्तु नैवविधेन प्रत्ययेन लोकव्यवहार प्रवर्तनीयो दोपसमुच्चितत्वादित्येवमर्थं प्रतिपादयितुमिवेदमव्यभिचारि प्रत्यक्ष प्रमाण भवतीति विशेषणेन भगवाननुजग्राह । एवमेवाय मे पुत्र इत्यपुत्रे पुत्रत्व विदधद्वञ्चकवाक्य न नितान्तमविषय भवति "यन्मनसा मनुते तद्वाचा वदति" इति श्रुते प्रत्यायके शब्देऽपुत्रारोपितपुत्रत्वबुद्धिसयोगात् तद्गोचरे पुत्रत्वबुद्धेर्वास्तविकत्वात् । यद्यसौ तत्र पुत्रत्वमभावयमानो ब्रूयात् नैव तर्हि स तथा वाक्य वक्तुमपि शक्नुयात् ।

अथैव भावितस्यापि पुत्रत्वस्य तेनापुत्रेण सबन्ध प्रत्यायितोऽसदर्थ स्यादित्यपि न भ्रमितव्यम्, पुत्रत्वारोपबुद्ध्या गृहीते व्यक्तिविशेषे प्रत्याय्यमानस्यैतस्यसम्बन्धस्यावश्योपगन्तव्यत्वात् । तस्मात् पुत्रत्वगुणक प्रत्यायकमिद वाक्य प्रमाणमेव न त्वशतोऽप्यप्रमाण भवितुमर्हति, प्रत्युत यद्यारोपबुद्धिसयुक्त वाक्यमनारोपितपुत्रत्व व्यक्तिविशेष प्रत्याययेत् तदानीमेवेदमप्रमाण स्यात्, सतस्तत्रारोपकार्यस्य पुत्रत्वादेरनवबोधनात् । आरोपितपुत्रत्ववन्त तु प्रत्याययदिद भवत्येवारोपप्रत्ययहेतुत्वादविकल प्रमाणम् ।

यदि तु तस्य प्रामाण्यमेवापाद्येत, तत्तर्हि वञ्चकत्वज्ञानमविज्ञत्वज्ञान वा सर्वथैवापलपित स्यात् प्रमाणाभावादिति लोकव्यवहारोच्छेदप्रसङ्ग । तस्मात्सर्व शब्द. प्रमाणमेव, किन्तु नैवविधन प्रत्ययेन लोकव्यवहार. प्रवर्तनीयो दोषसमुच्चितत्वादित्येवमर्थं प्रतिपादयितुमिवेदमाप्तवाक्य शब्दः प्रमाण भवतीति विशेषणेन भगवाननुजग्राह । इत्थ च सति शब्दानामप्रामाण्यकारण नोपालभामहे, तत सर्वविध' शब्दः प्रमाणमेवेति प्रतिपद्यामहे ।

अथवेदमन्यथाऽन्यथा निरूपयितु पारयाम । अय मे पुत्र इत्येकमेवेद वाक्य पुत्रे पुत्रज्ञान विदधत् क्वचिदपुत्रेऽपि पुत्रज्ञान विधत्ते–तत्रैतस्यैकस्यान्यत्र प्रामाण्यमेकत्राप्रमाण्यमिति द्वैविध्य नोपपद्यते–प्रमाणस्याप्रमाणत्वासभवात् । अथवा यत्र क्वचिदस्य प्रामाण्यनुपगम्यते तावतैव तु पर्याप्त प्रामाण्यमेतस्य शब्दस्य प्रतिपत्तु पारयाम न वय ब्रूमो यत् प्रमाण तदेव प्रमाण स्यादिति, अपि तु यदेकत्रापि क्वचित् प्रमाण तदपि प्रमाण शक्य व्यपदेष्टुमिति पश्याम. ।

अथवा सर्वश्च शब्द. स्वविषये स्वत. प्रमाणम्, आप्रामाण्यन्तु तस्य परत. प्रतिपद्यते । अय मे पुत्र इति हि वाक्य सर्वत्रैव पुत्रे पुत्रज्ञान जनयत् प्रमाण भवि-

तुमर्हति, तदेवेदमनाप्तो यद्यपुत्रे प्रयुञ्जीत सोऽयं प्रयोक्तुः प्रयोगदोषो भवति न शब्ददोषः अस्ति यदि पुत्रे प्रयुक्तः अस्ति वा यद्यपुत्रे प्रयुक्तः सर्वत्राऽयं शब्दः पुनरेकरूपेणार्थमभिधत्ते, तस्मादयं सर्वविध एव शब्दः स्वतः प्रमाणमिति मन्यामहे।

यत्तु कश्चिद् ब्रूयात्—सर्वविधानामेव शब्दानामविशेषेण प्रामाण्यमभ्युपगम्यमाने लोकविरोधः प्रसज्जते। लोके तावदनृतव्याघातपुनरुक्तदोषवत्सु शब्देषु श्रूयमाणेष्वपि न प्रेक्षापूर्णकारिणः प्रवृत्तिर्दृश्यते। तस्मादप्रामाण्यमेवंविधानां शब्दानां तर्कयाम इति। तत्तुच्छम्। शब्दप्रमाणोपजनितशब्दाप्रभानन्तरं ततः प्रागेव वा प्रमाणान्तरगृहीतानामनृतादिदोषाणां लोकप्रवृत्तिं प्रति प्रतिबन्धकत्वे संभवत्यपि शब्दप्रामाण्यप्रतिबन्धकतायास्तत्रासंभवादुक्तिकत्वात्, कार्योत्पत्तेः प्रागेव हि सर्वत्र प्रतिबन्धकसामग्र्या व्यापारो लभ्यते न कार्योत्पत्तेरुत्तरमपि तेनार्थः। इह तु जनितायां शाब्द्यां प्रमायामुत्तरनोऽयं गृहीतो दोषः समुपतिष्ठते प्रतिबन्धनाय। स च शाब्दप्रमोत्तरभाविन्यां प्रवृत्तावेव प्रभवेद् व्यापारं लब्धुं न पूर्वसिद्धायां तस्यां शाब्द्यां प्रमायामपीति निपुणं भाव्यम्।

अथवा द्विविधं तावच्छब्दानां प्रामाण्यं भवति। अर्थगतं पारमार्थिकमेकम्, तच्च शब्दानां स्वतः सिद्धं गृहीतसमयानां तत्र नित्यं च। अथ फलगतं व्यावहारिकमन्यत् तच्च शब्दानां व्यवहारानुरोधात् प्रकल्पितमेवेत्यत एव क्वचित्परतः प्रामाण्यं क्वचिद्वा परतोऽप्रामाण्यमित्युभयथा लोके दृश्यते। तदेतदन्यत्र प्रपञ्चितम्। तथा क्वचिदनृतादिदोषसमवधाने फलागतगौणप्रामाण्याभावे स्वीक्रियमाणेऽपि न त्वेव तावता शब्दानां स्वतःसिद्धं पारमार्थिकं मुख्यं प्रामाण्यं शक्यं निराकर्तुम्। यथा प्रदीपस्य सुप्रज्वलितस्य स्वतः सिद्धोऽयं नित्यप्रकाशनव्यापारोघटाद्यावरणान्न बहिर्लोके फलोपधायको भवति,न तथापि तस्यार्थगतं वास्तविकं प्रकाशकत्वमेवकेनचिच्छक्यमपवदितुम्। सर्वत्रैकरूपेण तस्य प्रवर्तमानत्वात्। अत एवामुष्मिन् शब्देऽपि न्यायो द्रष्टव्यः। फलापधानप्रतिबन्धकसामग्रीसमवधानेऽपि शब्दव्यापारस्यानवरुद्धत्वात्। तस्मात् सर्वविध एव शब्दः प्रमाणमेवेति संसिद्धम्। तदित्थमविकलं निराकृतं योग्यताबाधस्थानीयं शब्दाप्रामाण्यम्।

अथ तात्पर्यग्रहाभावस्थानीयं शब्दाप्रामाण्यमप्येवमेव निराकृतं वेदितव्यम्। तथाहि शुकभाषितादौ वक्तृगतायाबुबोधयिषाया अभावो गृह्यमाणः प्रवृत्तिरेव लोकानां प्रतिबध्नाति न शब्दाना प्रमाजनकत्वमपि। शब्दस्तु खलु तद्याप्तभाषितः स्याच्छुकभाषितो वा सर्वत्रैकरूपेण व्यापारं कुर्वन् दृश्यते। तस्यैकत्र प्रामाण्यमन्यत्राप्रामाण्यमिति वैषम्याभ्युपगमो न्यायादपेतः स्यात्। तस्मात्तत्रापि प्रामाण्यमेव हस्तलब्धं भवतीत्यवधेयम्।

## ८. वेदप्रामाण्यरहस्यम्

वेदाः प्रमाणम्, वेदाद्धर्मो हि निर्बभौ, धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितम् तस्माद्धर्मं परमं वदन्ति,धर्मो रक्षित रक्षति ,न लङ्घनीया कुलदेशधर्म्मा इत्येव बहुभिर्भावैर्वेदं धर्मञ्च भूरिभूरि कीर्त्तयन्त श्रीमदार्यमहाशया इदानीं कालेऽपि वेदे धर्म्मे च महती श्रद्धामुपदर्शयमाना दृश्यन्ते । तदिदं वेदस्येदृशं गौरवं कस्मात्, कस्माच्च धर्म्मे तेषामीदृशः पक्षपात इत्येव जिज्ञासायां तत्स्वरूपविज्ञानाय किञ्चिदुच्यते ।

न खल्वयमार्यधर्म्मोऽन्त्यावसायिम्लेच्छादिधर्मसमकक्षाको धर्मविशेषः, तेषामनार्यधर्माणां राजनीति–समाजनीतिमानानुराधनौचित्यमर्यादया स्वार्थपरायणमनुष्यैः स्वीयलौकिकोन्नतिमात्रसाधनप्रवणं कल्पितत्वाद्धर्मैकदेशरूपत्वम्, आर्यधर्मस्य तु सर्वजगत्सृष्टिसाधनपरायणस्य भगवतः परमेश्वरस्य सर्वजगत्सृष्टिस्थितिलयसाधनभूतपदार्थविशेषात्मकतया निर्धारितत्वात् प्राकृतिकस्थितिसामञ्जस्यप्रसञ्जकत्वेनैव विषयभेदेन व्यवस्थापितत्वादीश्वराज्ञासिद्धत्वं सम्राड्धर्मत्वञ्चेति भेदात् ।

अत एवार्य्यधर्मस्य बहुशाखात्वं बहुरूपत्वमतिगहनत्वञ्चानुभूयते । तद्विपरीत्येनानार्यगृहीतानां प्रायेणापल्लवितत्वं तुच्छरूपत्वं तद्धर्म्मावलम्बनसौकर्येण तत्र सर्वेषां यथेच्छमधिकारसिद्धिश्च दृश्यते । नत्वेवमार्यधर्मं सहसाऽनार्यः प्रवेष्टुं शक्नोति सम्राड्धर्मेण तेन देशकालपात्रानुरोध्यधिकारिविशेषानुद्दिश्य प्रवर्तमानेनावश्यमधिकारिविशेषाणां तेषामनार्याणामप्येतद्देशे कुत्रापि धर्मविशेषमर्यादाबन्धेन व्यवस्थापितत्वात्ततोऽन्यथा कर्तुमनर्हत्वात् । अत एव चास्य धर्मस्य सर्वधर्मोभ्यर्हितत्वमिति कृत्वा तत्रार्य्याणां पक्षपातः । तत्प्रतिपादकत्वादेव च वेदस्येदृशं गौरवमस्तीत्याकलनीयम् ।

अत्रेयं जिज्ञासा समुत्तिष्ठते–कथमस्य धर्मस्येश्वराज्ञासिद्धत्वं कथं वा प्राकृतिकस्थितिनियामकत्वमस्तीति तदेतदर्थप्रतिपत्तये वेदधर्मयोस्तात्त्विकं रहस्यमपेक्षितं भवतीत्युच्यते ।

इह खलु परमेश्वरेणानन्ता शक्तयः समुद्भाविताः । तासु सर्वासु ज्ञानशक्तिः क्रियाशक्तिश्चेति द्वे एव शक्ती मुख्ये भवतः । सर्वासामेव शक्तीनां भूयसा तयोरेवान्तर्भावात् । तत्रैतया ज्ञानशक्त्यैवास्य वेदस्य क्रियाशक्त्या च धर्मस्य सम्बन्धो द्रष्टव्यः । अनयोश्च क्रियाशक्त्यपेक्षया ज्ञानशक्तिः प्रधानतमा भवति । ज्ञानशक्तिविकलानां जडविषयाणां क्रियाशक्तिसत्त्वेऽपि ज्ञानशक्तिमद्भिर्मनुष्यादिप्राणिजातैर्यथेच्छं विनियोक्तुं शक्यत्वादुपभोग्यत्वेन ग्रहणात् । अत एव क्रियाशक्तिसापेक्षानेतानार्यधर्मान् प्रति ज्ञानशक्तिसापेक्षस्य वेदस्य पूर्णोऽधिकार इति ।

"धर्म जिज्ञासमानानां प्रमाणं परमं श्रुति:"
"श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै"
"वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्यय:"

इत्येवमादिभिर्मान्वादिभागवतादिस्मार्तवचनैः समर्थ्यते। अत एव धर्मस्वरूपनिदर्शनात्पूर्वं वेदस्वरूपं दर्शनीयम्। तत्राप्युक्तं पूर्वम्। अयं वेदो ज्ञानशक्तिसापेक्षस्वरूपोऽस्तीति तस्माद्वेदस्वरूपं दिदर्शयिषता तावदादौ वेदप्रतिपत्तिमूलभूतासौ ज्ञानशक्तिर्नाम कः पदार्थ इति चिन्तनीयम्।

पश्यामस्तावदार्यमहाशयाः पूर्वे महर्षयः खल्वेतज्ज्ञानशक्तिसम्बन्धे यथोपनिषदं प्राहुः—सर्वं खल्विदं ज्ञानशक्तिरेवास्ति, अथ च सर्वं खल्विदं क्रियाशक्तिरेवास्ति, किन्तु सर्वमिदं ज्ञानशक्तिरस्तीत्यतः कृत्वा सर्वमिदं क्रियाशक्तिरस्तीत्यतः कृत्वा सर्वमिदं ज्ञानशक्तिरित्येवमास्थेयम्। तथाहि यत्र कुत्रापि दृष्टिः प्रवर्तते तत्र सर्वत्रैवास्तीदमिति प्रतिपद्यते तस्मात्सत्तापदार्थः सिद्धः, अथ यथा पूर्वक्षणे पश्यामस्तदेव खलु नोत्तरक्षणे तथा पश्यामस्तस्मान्नदीस्रोत इव प्रतिक्षणविलक्षणञ्चैतदवगच्छामः। अतश्च सिद्धः कश्चिदयं क्षोभपदार्थोऽपि।

सत्ता हि नाम पदार्थः क्षोभप्रातिकूल्यानुगतो न क्षोभरूपो भवितुमर्हति। तस्मात्सत्ता च क्षोभश्चेत्यर्थान्तरम्। तथा च यतः सत्तानुवर्तते सा ज्ञानशक्तिः। यतस्तु क्षोभोऽनुवर्तते सा क्रियाशक्तिः। अस्तीत्यनेन सत्तानुगता बोध्यते, भवतीत्यनेन तु क्षोभःसमुच्चीयते, उभयोः समुच्चयाच्चैकवस्तुसिद्धिः। तत्र प्रतिक्षणवैलक्षण्यं भजमानेऽपि वस्तुनि चिरायैकत्वप्रतीतिरेकसत्तानुवर्तनात्।

एकस्मिन्नेव वस्तुनि नानावस्थाप्रतीतिः क्षणायाप्यसदनेकक्षोभानुवर्तनात्। यतः सत्ता क्षोभरूपा नास्ति, अत एव नित्यैका सती ज्ञानशक्तिः एवं यतः क्षोभः सत्तारूपो नास्ति तत एवानित्या चानेका चासती क्रियाशक्तिः। तस्मादुच्यते—ज्ञानशक्तिरस्ति क्रियाशक्तिर्नास्तीति। यतश्च क्रियाशक्तिर्नास्ति तस्मादेकमेवाद्वितीयं ब्रह्म, सर्वं खल्विदं ब्रह्म, नेह नानास्ति किञ्चनेति। नाना हि क्षोभः क्रियाशक्तिरुच्यते, सा नास्तीति वस्तु द्वैतं न भवति।

ननु च भोः! यदि क्रियाशक्तिर्नास्त्येव—तर्हि क्षोभ एवायं कस्मादनुवर्तते। अथ नास्ति क्षोभोऽपीत्यभिप्रेयते चेदयं दृश्यमानो जगदर्थो नितरां प्रकुप्येत, मत्तप्रलपितमिव च स्याद् यदि ब्रूयाद् यदिदं दृश्यते तन्नास्तीति। अत्रोच्यते। भ्रान्तोऽसि। न वयं ब्रूमः क्रियाशक्तिर्नास्ति, क्षोभो नास्ति, नाना वा नास्ति, जगद्वा नास्तीति, अपि तु निर्भरं प्रतिजानीमः क्रियाशक्तिरस्ति, क्षोभोऽस्ति, नाना चास्ति जगच्चास्तीति। इदं तु पुनरत्र ज्ञातव्यरहस्यं नान्यथयितव्यम्।

यदुक्तं पूर्वम् ज्ञानशक्तिरस्तीत्यत कृत्वा क्रियाशक्तिरस्तीति। सत्तात्मिका हि ज्ञानशक्तिरेका च नित्या च निरवच्छिन्ना च व्यापिका च स्यात्। नानात्वानित्यत्ववादीना शोभे समन्वयात्। तस्मात् यदेव किञ्चिदिदं क्षुब्धात्मक जगद् वा क्षाम एव वा, तत्र सवत्राऽय व्यापक सत्तात्मको भावाऽनुवर्तते। तस्मात क्रियाशक्तिक्षोभानुवर्तनाद् यथैका ज्ञानशक्तिर्नानेति कृत्वा प्रतिभाति तथैव ज्ञानशक्तिसत्तानुवर्तनादसती क्रियाशक्तिरस्तीति कृत्वा प्रतिभाति।

एकैव सत्तान्यत्र मुख्या, अन्यत्र सङ्क्रान्ता। ज्ञानशक्तौ क्रियाशक्तेः समवायादविनाभावादेकसत्तयैवोभया सत्त्वव्यवहारापपत्त। यथाहि–रज्जुरस्तीति कृत्वा सर्पास्तित्वप्रतिपत्ति। यदि रज्जुन स्यात् सर्पोऽस्तीत्यध्यासाऽपि तर्हि नोदियात्, रज्जा सत्तयैव रज्जुमपोह्य सर्प तत्राध्यारोप्य सर्पोऽस्तीति मिथ्याप्रत्ययजननात सय प्रातिभासिको सत्तापसङ्क्रान्ति। यथा वा तूलसत्तया तन्तुसत्ता, तन्तुसत्तया पटसत्ता, पटसत्तया चाष्णीषसत्ता।

एवमेकैव सत्ता उत्तरोत्तरमनुवर्तते। तदन्तश्च नाना क्षोभा अवस्था शब्दनाख्यातास्तत्र क्रमेणावलिप्यन्त। न च तत्रापि भिन्ना-भिन्ना सत्ता विज्ञायते। अन्यथा यदि तत्र तन्तुर्न स्यादथापि कदाचित् पट स्यात। न तथा प्रतिपद्यते। यतश्च यदि पटो नास्ति, अथापि तन्तुरस्ति। तस्मात्तन्तौ सत्ता मुख्या, पटे तूपसङ्क्रान्ता। तदित्थमिय व्यावहारिकी सत्तोपसङ्क्रान्ति। एव पारमार्थिकी सत्तोपसङ्क्रान्तिरपि चतुर्धा द्रष्टव्या–यथा मक्षिकास्तीति मक्षिकाक्रियाप्यस्ति। सैषा स्वयम्भूता अन्न प्राणक्रिया प्रथमा। अथवा अस्ति रथाश्व इति रथाश्वक्रियाप्यस्ति सैषा प्ररितान्त प्राणक्रिया द्वितीया।

अथवा बाणोऽस्तीति बाणक्रियाप्यस्ति। यदि बाणो न स्याद्बाणक्रियापि तर्हि न स्यात्। बाणक्रियायुक्तेन च बाणेन शत्रुवधो जन्यते, अन्यच्च किञ्चित् एवमेव खलु सर्वत्र द्रष्टव्यम्। सैषा पुनराहितान्त प्राणक्रिया तृतीया। अथवा पताकास्तीति पताकास्फालनक्रियाप्यस्ति, सैषाबहि प्राणक्रिया चतुर्थी। तदित्थ सर्वत्रैव क्रियाया सत्ता न स्वीया, किन्तु परसत्तयैव सा सत्तावती सर्वत्र दृष्टा।

तस्माद्यदियमनाद्यनन्ता, जगदुत्पत्तिस्थितिसंहृतिलक्षणा विश्वव्यापिनी काचिदेका धारा स्रोतोरूपामहामायाशब्देनाख्यातामहाक्रियाऽनुभूयते। साप्यवश्य परसत्तयैव सत्तावतीभवेदित्यवधारयाम। यत्सत्तया तु सा सत्तावती स एवक सजातीयविजातीयस्वगतभेदशून्य कश्चिदर्थ सद्रूपत्वात्सत्य इत्युच्यते। अथ तत्सत्ताकृतसत्ताकासाद्ययवा नानारूपा महाक्रिया–तथा तदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृहीताश्च सर्वे विकाराथा मिथ्या इत्युच्यन्ते। मेथति सङ्गमनार्थ। सङ्गमश्च परप्राणे स्वप्राणसमन्वयादेकात्मतापत्ति। मिथुमियामिथुनादिषु तथा

प्रतिपत्तेः। तथा च मिथ्येति श्रुत्वा नास्तीत्यर्थो नावसेयः किन्तु परसत्ताकृत-सत्ताकोऽर्थः सोऽस्तीति तदर्थः।

सत्तासम्बन्धेन हि त्रैविध्यमेव संभवति यदिहावियुक्तसत्ताकं किञ्चित् स्वसत्तावत्त्वे निमित्ततया परसत्तां लेशतोऽपि नापेक्षते तन्नित्यसत्ताकं स्वतः सत्तामित्युच्यते। तदेकम्। यत्तु कदाचित्सत्ताकं किञ्चित् स्वसत्तावत्त्वे निमित्त-तया परसत्तामपेक्षते। प्रागसदपि सत्तावति समवेत्य कस्मचित् कालाय तत्सत्तया सत्तावद्भूत्वा पुनस्तां सत्तां परित्यज्य दिवावतिष्ठते। तदनित्यसत्ताकं परतः सत्तमित्युच्यते। तद् द्वितीयम्। अथयदस्पृष्टसत्ताक न प्रागासीत्, नास्ति न वा कदाचिद् भविष्यतीत्येवंविधमपदार्थं वन्ध्यापुत्रायमाणं तदर्यते, तदगृहीत-सत्ताकमसत्तमित्युच्यते तत् तृतीयम्। तत्रैतत् तृतीयं खपुष्पायमाणं जगद्रूप न भवतीत्यतस्तदुपेक्ष्यते। न च तदुपलक्षेणाऽत्र किञ्चिद्विचार्यते। तस्यावस्तुतया शास्त्रोऽनधिकृतत्वात्।

अतस्तस्य परित्यागाद् द्वैविध्यमवशिष्यते। तेन यदिदं जगद्रूपणावभासते तत्सर्वं द्वेधा विभक्तमेव प्रतिपद्यते। स्वतः सत्तं परतः सत्तं च। तत्रैतदाद्यमेव सत्यत्वेन परं तु मिथ्यात्वेन व्यपदिशामः। तथा च शतपथे श्रूयते "द्वयं वा इदं न तृतीयमस्ति–सत्यं चैवानृतं च। सत्यसंहिता वै देवाः–अनृतसंहिता मनुष्याः इति" अत्र न तृतीयमस्तीत्यनेन तृतीयस्यैव सर्वथा सत्तासम्बन्धाभावः प्रदर्शितः द्वयोस्तु तदतिरिक्तयोः सत्तासम्बन्धोऽस्त्येवेति च व्याख्यातप्रायं भवति। तत्रै-तयोरुभयोरपि सत्तासम्बन्धेऽपि तस्याः सत्ताया एकत्वाद् यत्रैषा सत्ता मुख्या तत् सत्यम्। यत्र तु सा सत्तोपरसक्रान्ता गौणी सा मिथ्या इति विवेको द्रष्टव्यः।

यदिदं जगद्रूपेणावभासते तत्सर्वं द्वेधा विभक्त मेव प्रतिपद्यते। यत्सत्यं सा ज्ञानशक्तिः, या मिथ्यासा क्रियाशक्तिः। ज्ञान शक्तौ सत्ता मुख्या क्रियाशक्तौ तूप-संक्रान्ता। अवयवशः क्रियाशक्तिधाराविनिवृत्तावपि ज्ञानशक्त्यनुवर्तनात्। तस्मा-ज्ज्ञानशक्तिरस्त्येव न नास्ति, क्रियाशक्तिस्तु स्वतोनास्ति परसत्तया त्वस्त्येवेदं सर्वम्। इतीत्थं द्वैविध्य विरुद्धमप्यविद्धम्। अतएव ज्ञानशक्तिसम्बन्धेन श्रूयते कठवल्लयाम्—

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुपा।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते॥
अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति॥

क्रियाशक्तिसम्बन्धेन च स्मर्यते देवीगीतायाम्—
न सतो सा ना सती सा नोभयात्मा विरोधतः।
एतद्विलक्षणा काचिद्वस्तुभूतास्ति सर्वदा॥

सौरपुराणे च—

नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।
सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी॥

मुख्यसत्तानुवर्तनादेषा न सती किन्त्वसती। यद्येषा सती स्यात्तर्हि देवदत्तस्य पूर्वपुरुषपरम्परा नित्यमेकरूप्येणाप्रलयमनवर्तेत, सर्वदा वेदानामपि रामकृष्णौ पूर्वत्रदाचरितमनुतिष्ठन्तावनभयेयाताम्, गृहवननदीपर्वतनादयोऽप्यक्षया ऐकरूप्येणोपलभ्येरन्। तस्मादनादिधारावयवभूता महाक्रियाक्षुद्रक्षुद्रतरक्षुद्रतमादिक्रिया क्रमेणानुवर्तमानाविपरिवर्तमानाश्च सर्वा एवासत्य इति निःसंदिग्धम्।

अथ परसत्तानुवर्तनादेषा सर्वत्रोपलब्धा दृढप्रत्ययसिद्धा नासती किन्तु सती। यद्येषा सती न स्यात्तर्हि प्रतिक्षणं प्रत्यवयवं क्षयानुवृत्तावप्येकाऽनाद्यनन्ता महास्रोतोलक्षणा जगदुत्पत्तिसंहृतिलक्षणैर्भागैः कृतावयवा प्रतिक्षणविलक्षणमहाक्रिया भवतीति न प्रतीयेत तस्मात्सती सेत्यवगच्छाम। अथ चोभयस्य भावाभावलक्षणत्वेऽपि भावस्य परतोऽनुवर्तनादभावस्य चावस्तुत्वादनुभूता सैषा माया न त्वेव सदसती। तस्मान्मुख्यसत्तासापेक्षमसती, परसत्तासापेक्षं सती, तदुभयथा प्रतिपत्तेः सदसती सा क्रियाशक्तिरिति व्यवहारदृष्टिः। परमार्थदृष्ट्या त्वस्तिनास्तिलक्षणा सा क्रियाशक्तिरसतीपर्यवस्यति। अस्तिलक्षणा तु ज्ञानशक्तिः सतीत्येवावसीयते तदित्थं द्विविधं तत्त्वं सच्चासच्चेतिसंसिद्धम्। सदर्थं च नित्यमनुवर्तमाना सत्तामसदर्थो गृहीत्वा गृहीत्वा स्वरूपं धत्ते। हित्वा हित्वा च स्वरूपाच्च्यवते इति हि लोकस्थितिः।

तत्र चेयं सत्ता यत्र नित्यमनुवर्तते तस्य सदर्थस्य तथा यत्रयं सत्ता कदाचिदुपसंक्रान्ता तस्या सदर्थस्य सत्तातिरेकेण कीदृशं रूपमिति तु सर्वथा निर्वक्तुमशक्यमेव अवाङ्मनसगोचरत्वात्। स्वतः सत्ताकं वा स्यात् परतः सत्ताकं वा सर्वथाऽपि तु सत्तावदेव हि किञ्चित् प्रमीयते लोके। न त्वगृहीतसत्ताकम्। तदतः सत्ताया एव हि यावदर्थज्ञाने सारभूतत्वात् तस्याश्चप्रत्यर्थमेकत्वादेकमवेदं सर्वं द्वैविध्येन विभाव्यते। सच्चासच्चेति सर्वमपीदं प्रत्यर्थं द्विविधं सद्रूपं वा सद्रूपं च यावदत्र ज्ञानशक्तिभागस्तत् सद्रूपं सच्चिदानन्दलक्षणम्। यावच्च क्रियाशक्तिभागस्तावदसद्रूपं नामरूपलक्षणम्। सदिति ब्रह्मेत्युच्यते। असदिति मायेत्याख्यायते। उभयोरपि द्वे द्वे रूपे निर्वचनीयं चानिर्वचनीयं च। यदनिर्वचनीयं परं रूपं तदहि परित्यज्यते। अपरं तु रूपं सत्ताविशिष्टम्। तत्सम्बन्धादेव प्रतिपद्यमानम्।

तत्र यदिदं किञ्चिद् दृश्यते तत्सर्वं स्त्रीपुंसयोरिव तयोरेव सदसतोः संयोगेन तत्तदवाभ्यां मिथुनीभूताभ्यामत्र सञ्जातम्। तस्मात्सर्वमेवेदं जगत् सदसत्समुच्चयरूपं द्रष्टव्यं। सता हि ज्ञानशक्तेः स्वोत्पन्नाया क्रियाया सतीप्रसङ्गेनोप-

करोति, तेनासत्यपि क्रियासती प्रतिपद्यते। यथा चैवं ज्ञानशक्तिः क्रियायां सत्ता-प्रसङ्गेनोपकरोति तथा चिति प्रसङ्गेन प्रेमप्रसङ्गेन चापि द्रष्टव्यम् अत एवेदं सर्वं चेतते अन्यदन्यस्य प्रतिभाति, तथा—अन्यदन्यानुगतं भवति न त्वन्यदन्येनोद्विजते, भिन्नास्वपि क्रियासु धारावाहिकतासन्तानेनैकत्वबुद्धिरनेकास्वनुवर्तते-अत एवैषा ज्ञानशक्तिः सच्चिदानन्दलक्षणेत्याख्यायते—इत्येवमादिकं सूक्ष्मेक्षिकयाऽव-धारणीयम्।

एवमेव पुनरसत्यपि क्रियाशक्तिरवस्थाप्रसङ्गेन ज्ञानशक्तावुपकरोति, तेनैकापि ज्ञानशक्तिरवस्था भेदान्नानेव प्रतिपद्यते। ततश्चैकमेवेदं सर्वं नानेव कृत्वा प्रतिभाति, अत एवैनयोर्ज्ञानशक्तिक्रियाशक्त्योः परस्परमुपकार्योपकारकभाव-मप्यनुपश्यन्ति। किन्तु न क्रियाशक्तिर्ज्ञानशक्तिव्यभिचारेण स्वरूपं शक्नोति ग्रहीतुमतस्तदुभयतादात्म्यादेक एवार्थः प्रतिपद्यते, न तयोर्विवेकः साधारणबुद्ध्या कर्तुं शक्य इत्यवधेयम्।

अत एवात्र भावुकानां महर्षीणां त्रीणि दर्शनानि भवन्ति। क्रियाशक्ति-रेवास्तीत्येकं दर्शनम्, क्रियाशक्तिविशिष्टज्ञानशक्तिरस्तीति द्वितीयम्, ज्ञानशक्ति-रेवास्तीति तृतीयम्। तथा हि एके तावत्पश्यन्ति, क्रियाशक्तिरेवैकं तत्त्वम्, न ततोऽतिरिच्यते ज्ञानशक्तिर्नाम कश्चिदर्थः। सताचैतन्यादिकमेव हि ज्ञानशक्ते-र्लक्षणमिष्यते—तदपि न क्रियात्वाद् व्यावर्तते जायते, अस्ति, वर्द्धते, विपरि-णमते, अपक्षीयते, विनश्यतीत्येवमेतेषु षट्सु भावविकारेष्वस्त्यादेरन्तर्भावात्। द्विविधा वा वस्तुनोऽवस्था स्यादस्ति, स्याद्गच्छतीति। तत्र यथा गच्छत्यवस्था-क्रियात्तथास्त्यवस्थापि क्रिया भवितुमर्हति। तस्माद्यदस्ति यद्वा भवति तच्चेष्टते यत्प्रतिभाति यद्वाचेतते तच्चेष्टते, अथ यन्मोदते यद्वा प्रीणाति तदपि चेष्टते। तत्को नामातिरिक्तो भावो ज्ञानशक्तेरतिरिच्याभ्युपगमे प्रमाणं स्यात् तस्मा-न्नास्ति क्रियाशक्त्यतिरिक्तं किञ्चित्।

यत्तु क्रियानाश्रयमन्तरेण स्वरूपं शक्नोति ग्रहीतुमित्यतिरिक्तः कश्चिदर्थः क्रिया विजातीयः प्रकल्प्यते-इति कश्चिद्वदति, तदपि नावकल्पते-क्रियाया एव क्रियाश्रयत्वसंभवात्। चतुर्द्धा हि क्रियाप्रतिपत्तिर्दृश्यते-अवयवमात्रनिष्ठा-यथा कुलालचक्रादाववयवाश्चलन्ति समुदायस्तु कूटस्थः-इत्येका। समुदायमात्रनिष्ठा-यथा शिरसा नीयमाने चक्रे समुदायश्चलति-अवयवास्तु तटस्था इति द्वितीया। यावदवयवक्रियासमुच्चितसमुदायक्रिया-यथा हस्तेन भूमौ संचाल्य नीयमाने चक्रे-ऽवयवाश्चलन्ति, समुदायोऽपीति तृतीया। अथ यत्किञ्चिदवयवक्रियासमुच्चित-समुदायक्रिया-यथा हयाकृष्टरथे समुदायश्चलति, चक्रावयवावच्छेदेनावयवक्रिया-नुवर्तते-तदितरावयवावच्छेदेन तु नास्तीति चतुर्थी। तत्र तृतीयां चतुर्थीं च

सामुदायिकी क्रियामाश्रित्यावयवक्रियाः स्वरूपं दधत इति शक्यते क्रियाया क्रियाश्रयत्वं समर्थयितुम्।

अथवाऽन्यथैतद् द्रष्टव्यम्। यथाहि पार्थिव. पदार्थो द्विविधो भवति–अवयवात्मा, समुदायात्मा च। अवयवाः परमाण्वादयो वस्तुगुणाः, तेषां गुणानां कूट एव समुदायात्मकं द्रव्यं भवति। तत्र समुदाये ते गुणा ध्रियन्ते, तैरेव च गुणैरमी समुदायो ध्रियते, तद्व्यतिरेके समुदायस्वरूपहानात्। तस्मात्तेऽवयवा धर्मास्तदाश्रयश्च समुदायो धर्मीति प्रतिपद्यते। एवमेव क्षणिकक्रियाकूटतया महाक्रिया भवति समुदायरूपा सन्तानशब्दवाच्या। तथा च फूत्काराद्यनेकक्रियाघटिता काचिदेका पाकक्रिया, पुनः पुनः पादविन्यासैः कृतावयवा चैका ग्रामगमनक्रिया, एवमन्यान्या च। तत्रैता महाक्रियामाश्रित्य क्षणिकक्रिया अवयवभूता धर्मतयानुभूयन्ते समुदायो हि नावयवेभ्योऽतिरिच्यते, तस्मादनेकक्षणिकक्रियासमुदायोऽपि क्रियैवेति सिद्धं क्रियाश्रयत्वं क्रियाया एव। ततो नापेक्ष्यते क्रियाविजातीय कश्चिदर्थः। तदित्थं कृतैषा पूर्वकोटिव्यवस्थापकत्वात् पूर्वमीमांसा।

अथान्ये पश्यन्ति। न केवलं क्रियाशक्तिरेवास्तीति शक्यते स्वीकर्तुम् तस्या जडत्वात्, लोके च जडचेतनद्वैविध्येन परस्परविलक्षणद्वैतानुवृत्तिदर्शनात्। किञ्च–इयं हि क्षोभलक्षणक्रिया सत्त्वरजस्तमःशब्दैस्त्रैविध्येनाख्याता प्रकृतिर्भवति, स च स्वभाव.। यदितान्यः कश्चित् स्यात् कस्याऽयं स्वभावो वक्तव्यः। तस्मादस्ति कश्चित्पुरुषो यस्येयं प्रकृति.। अथ ब्रूयात्—अनेकधर्मा प्रकृतिशब्दः, स नेह स्वभावार्थं किन्तूपादानत्वमभिधत्ते। विश्वथा चैवा कार्यजातानामिदमुपादानम्, तस्मात्प्रकृतिरिति। स प्रतिवक्तव्य.—नेदमित्थमनेकार्थ्यम्, स्वभाव एव हि मूलं कारणं सर्वत्र, सर्वो हि स्वभावमनुरुन्धे, स्वभावेनैव हि किञ्चिदितरवैलक्षण्येन प्रतीयते, यदत्र भोगाय कार्यजातं संनिधत्ते स्वभावमेव तत्रकारणं पश्यामः।

तस्मात्स्वभावः प्रकृतिः, स कस्याऽयं स्वभाव. स्याद्यदि पुरुषो न स्यात्। अविभक्तश्चायं पुरुष. स्वप्रकृत्या। तस्मादग्निर्वा वायुर्वा आपो वा प्रत्येकं प्रकृतिश्च पुरुषश्च, प्रकृत्या किञ्चिज्जायते यज्जायते तदात्मनि संनिधत्ते। अनेनात्मना कृतमिति अयमेव प्रकृतिकृतः फलभोग. पुरुषस्य। यदि ह्ययं ज्ञानशक्तिरूपः पुरुषो न स्यात्तर्हि क्रियाशक्तिरूपायास्तस्याः प्रकृते. क्षणायाप्यवस्थानं नोपलभ्येत, आश्रयाभावान्निरालम्बनमस्याः स्वरूपाध्ययनासंभवात्। क्रियाशक्तिः खलूत्पन्नविनष्टक्रमरूपा स्वीक्रियते, तस्मात्सा नाश्रयमन्तरेण स्वरूपं शक्नोति ग्रहीतुम्।

अत. सृष्ट्यादिसृष्ट्यन्तक्रियाकलापस्य लहरीरूपस्य जलवत् कश्चिदाश्रयः क्रियातिरिक्तत्वाद्ध्रुवात्मकः स्वीकर्तव्यो भवति, तस्यैव ज्ञानशक्तिरिति नाम-

करणं द्रष्टव्यम् । तस्य च क्रियातिरिक्तत्वादेव न तत्र कालसम्बन्धो भवति, क्रिया सम्बन्धेनैव कालस्वरूपाधानात् । तस्मादस्य ज्ञानस्य नित्यत्वम् । जले लहरीवत् तत्रैव कूटस्थे विज्ञानघनेऽनन्ताः क्रियाशक्तयोऽनवरतं यदुत्पद्यन्ते विलीयन्ते च, तदेतत्सर्वं जगदित्युच्यते । तत्र यद्यपि क्रियाशक्तिव्यतिरिक्तं न किञ्चिदिहानुभूयत इति सत्यम्, तथापि क्रियाशक्तेरव्यक्तादित्वादव्यक्तनिधनत्वाच्चासत्त्वेन संप्रतिपन्नाया व्यक्तिकालेऽपि "नासतो विद्यते भावेनाभावो विद्यते सतः" इति न्यायेन सत्वं नाभ्युपगन्तुं विचारप्राप्त भवति ।

दृश्यते तु धारावाहिकोत्पत्तिविनाशप्रभवत्वादनेकास्वपि क्रियास्वेकत्वबुद्धिप्रयोजिका काचित्सत्ता तत्रानुवर्तत इति, यत्रास्तीतिबुद्धिस्तत्रैवचेष्टत इति बुद्धेः प्रतिपन्नत्वात् । तथा चेयं सत्तावश्यमेता असतीः क्रिया, अनपेक्ष्य स्वरूप धत्ते-इति विस्रब्ध प्रतीयते । तदित्थं प्रत्यर्थं द्वैविध्य भावस्य द्रष्टव्यम् यदपेक्ष्य तत्रास्तीतिबुद्धिस्तत्सत् यदपेक्ष्य च विपरिणमत इति बुद्धिस्तदसत् । सतो ज्ञानशक्तेः, असती क्रियाशक्तिः सति हि नित्ये ज्ञानशक्त्याख्ये स्वाऽऽश्रये क्रिया पश्चादुत्पद्यत इति संभवति, नत्वसत्यां क्रियायां पश्चात् सदुत्पद्यत इति किञ्चिदुक्तं संभवति । तथा च श्रुतिः ।

"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुः, असदेवेदमग्र आसीदेकमेवाद्वितीयम्—तस्मादसतः सञ्जायते । कुतस्तु खलु सौम्यैवं स्यादिति हावाच कथमसतः सज्जायेतेति, सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति यत्तूक्तम्–महती क्रियेव क्षुद्रक्रियाणामाश्रयो भविष्यतीति तत्तुच्छम् । त्रिक्षणमात्रावस्थायिन्याः क्रियायाः क्रियान्तरग्रहणाय समयालाभात्, एकस्मिन् क्षणे गृहीतस्वरूपायास्तस्या यस्मिन् क्षण क्रियान्तरग्रहणाय प्रयत्नलाभस्तस्मिन्नेवक्षणे स्वरूपव्यापत्तिरिति न शक्नोति सा क्रियान्तरं विधारयितुं प्रयत्नग्रहणाय । यत्तु क्रियाया महत्त्व क्षुद्रत्व वाख्यातं तदपि भ्रान्तम्, क्रियामात्रस्य त्रिक्षणमात्रावस्थानात् क्षुद्रत्वमहत्त्वं विशेपालाभात् ।

आश्रयक्षुद्रत्वमहत्त्वप्रतिपत्तिमूला तु क्रिया क्षुद्रत्वमहत्वभ्रान्तिरुपपद्यते । स यद्याश्रयः पुरुपो नाभ्युपगम्येत तर्त्तहि क्षणायापि सा क्रिया स्वरूपं नैवाधातुं शक्नुयादिति सूक्ष्मेक्षिकाया समुत्प्रेक्षितव्य समीक्षादक्षैः । तस्मादस्त्येव, ज्ञानशक्त्यपरनामकपुरुपाश्रिता सा क्रियाशक्त्यपरनामिका प्रकृतिः । सेयं पूर्वोत्तरकोटिद्वयसमुच्चायकत्वान्मध्यमीमांसा ।

तदुक्तं—

> ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः ।
> कर्मनिष्ठां वदन्त्यन्ये यतयः सूक्ष्मदर्शिनः ॥

प्रहायोभयमप्येतज् ज्ञान कर्म च केवलम् ।
तृतीयेय समाख्याता निष्ठा पञ्चशिखेन मे ॥
तेनाह साख्यमुख्येन स्वदृष्टार्थेन तत्त्वत. ।
श्रावितस्त्रिविध मोक्ष न च राज्याद्विचालित: ॥

अन्ये तु पश्यन्ति । ज्ञानशक्तिरेकापि बह्वभवत् । सा त्रेधाभूत्—निर्विकल्पक ज्ञान, सविकल्पक ज्ञान, मिथ्याज्ञान च । आद्यममृतम् ब्रह्मतत्त्वम् । द्वितीय विद्यातत्व कार्य्यब्रह्म स पुरुष । तदेवेद जगत् । तृतीयमविद्यातत्वमवस्तु । आद्य तृतीय च युक्त जगतः कारणम् । अयुक्त तु प्रत्येकमकारणम् । आद्या तृतीययुक्तावस्थैव सा विद्या । तदिद जगत् । सा प्रकृतिः प्रकृतिरेवेद सर्वम् । विद्यैवेद सर्वम् तद्विभागे तु अविद्यैवेद सर्वम् । ब्रह्मैवेद सर्वम् । अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते । क्वचित्त्वविद्याया प्रकृतित्व विद्याया पुरुषत्वमाह अविद्यामाहुरव्यक्त सर्गप्रलयधर्मिणम् । सर्गप्रलयनिर्मुक्ता विद्या वै पञ्चविंशकम् । यत. प्रधानपुरुषौ यतश्चैतच्चराचरम् । कारण सकलस्यास्य स नो विष्णु प्रसीदतु । अयमाद्य. ।

ज्ञानमेव पर ब्रह्म ज्ञान बन्धाय चेष्यते ।
ज्ञानात्मकमिद विश्व न ज्ञानाद् विद्यते परम् ॥
विद्याविद्यति मैत्रेय ! ज्ञानमेवावधारय ।

(विष्णु पु० २ अ० ३ अ० ४१-४६ श्लोक)

भौतिकी भावना पूर्वे, साख्ये त्वक्षरभावना ।
तृतीये चाऽन्तिमा प्रोक्ता भावना पारमेश्वरी ॥

(कर्म पु. २-८६)

ज्ञानशक्तिरेवेद सर्वं यदिह दृश्यते किञ्चित् । तथा हि आश्रयरूपाया ज्ञानशक्तेरेवैकस्या. सद्रूपतया व्यवस्थापितत्वात् तत्रोत्पन्नविनष्टाना सर्वासामेवैतासामनन्ताना क्रियाणा स्वाश्रयानतिरिक्तत्व फलति, लहरीकलापस्य जलरूपत्ववत्स्वाश्रयसमुत्पन्नायास्तस्याः स्वाश्रय एव विलयनादन्ततस्तस्या अपि स्वाश्रयात्मकत्वमेवावसीयते । तस्मा यदिह क्रियाशक्ति· क्रियाशक्तिरिति कृत्वा सर्वत्र दृश्यते तदिह मायया क्रिया शक्त्या ज्ञानशक्तिरेवैषा तत्र तत्रान्यथान्यथा प्रतिभासत इत्यभ्युपेय भवति ।

तत्र किमिद ज्ञानशक्तिस्वरूपमस्तीति चेत्तत्रोच्यते । सच्चिदानन्दश्चेति । इद सत्, इय चित्, अयमानन्दः इमास्तिस्र शाखा यस्मादेकस्मान्मूलाप्रतिस्फुरिता भवन्ति तन्मूल ज्ञानशक्तिरिति व्यपदिशाम. नैतस्या ज्ञानशक्ते-

रत्यर्थं चिन्त्यमानाया अपि सत्त्वचैतन्यानन्दव्यतिरिक्तं किञ्चिद्रूपं प्रतिपद्यामहे। यत्प्रतिपद्यामहे सत्त्वादिरूपं तदपि स्वप्रकृतेः स्वेन यः सम्बन्धः स एव क्रियासापेक्षो भावो ज्ञानशक्तिस्वरूपतया प्रकल्प्यते, एवं रूपेणैव हि ज्ञानशक्तिः क्रियाशक्तावुपकरोति। यदि ज्ञानशक्तिर्न स्यात्तर्हि क्रियाशक्तौ प्रतीयमानं सत्त्वं चैतन्यमानन्दश्च नानुवर्तेत। न च क्रियाशक्तेरेव ते धर्मा अभ्युपगम्यन्तामिति वाच्यम्, विरोधात्। विरुद्धयोः प्रकृत्योः कदाचिदधिकरणाभेदेऽपि स्वरूपाभेदासम्भवात्।

क्षोभरूपा हि क्रिया प्रतिक्षणविलक्षणा उत्पन्नविनष्टात्मा नोत्पद्यक्षणायापि सती भवितुमर्हति, संश्चार्थः क्षणमप्यासन् भवितुं नार्हति। क्रिया तु पूर्वं नास्ति अथ अस्ति-पुनर्नास्ति-इत्येवं त्रिभावा। तत्र यत्राप्यसौ नास्ति तत्रापि कश्चिदर्थोऽस्तीति कृत्वा प्रतीयते। यत्रासौ क्रिया दृष्टा चादृष्टा च साऽयमसल्लक्षणायाः क्रियाशक्तेरतिरिच्य सल्लक्षणः स्वीक्रियते। ये त्वसल्लक्षणादर्थात् सल्लक्षणातिरेकेऽपि न सल्लक्षणादर्थादतिरिक्ताऽयमसल्लणोऽर्थ इति पश्यन्ति तेषां मते नास्ति द्वैधम्। एक एवार्थोऽयं क्रियाशक्तिरेवोच्यतां ज्ञानशक्तिरेव वेत्यन्यदेतत्। व्यवहारतस्तु विरोधं पश्याम इति द्वैतं मन्यामहे धर्मश्च धर्मी चेति। धर्मः क्रियाशक्तिः-धर्मी ज्ञानशक्तिः।

अत एवास्याः क्रियाशक्तेर्व्यवहारकाले स्वाश्रयभेदः काल्पनिकः-परमार्थभावनाकाले तु स्वाश्रयाभेदो वास्तविकः, तथा चान्ततः सर्वं खल्विद ज्ञानशक्तिरेवेति निःसन्दिग्धं सिध्यति। एवमेवार्याणां धर्मस्याश्रयो वेदः "वेदाद्धर्मो हि निर्बभौ"। तस्य व्यावहारिके स्वाश्रयभेदेऽपि परमार्थतो वेदादभिन्नो धर्म इति निस्संदिग्धं द्रष्टव्यम्। तत्र तस्याः क्रियाशक्तेर्वैचित्र्यादनेकरूपत्वाद् यत्र क्रियाविशेषे ज्ञानशक्तिस्वरूपं किञ्चिदुद्भूतं प्रतिभासते सा सत्त्वप्रधाना क्रियाशक्तिरित्युच्यते, यत्र तु सर्वथैव ज्ञानशक्तिस्वरूपं तिरोभूतं तत्रैषा तमःप्रधाना क्रियाशक्तिरित्युच्यते, यत्र तु सर्वथैव ज्ञानशक्तिस्वरूपं तिरोभूतं तत्रैषा तमःप्रधाना क्रियाशक्तिरित्येव क्रियाशक्तिविशेषाणां द्वैविध्यादिदं सर्वं जगदपि द्वेधा भिद्यते, चेतनो जडश्चेति।

अत्रेदं जिज्ञास्यते सत्त्वप्रधानायां क्रियायां ज्ञानशक्तिस्वरूपं प्रतिभासते ततश्चेतनो भवतीति यदुच्यते तन्नावकल्पते। प्रतिक्षणविलक्षणप्रसरेषु नानाजातीयेषु प्राकृतिकेष्वर्थेषु स्वेतरपदार्थप्रकाशप्रधानाया मनोवृतेः सर्वेतरक्रियावैलक्षण्येनाभ्युपगन्तव्यतया तावनवेष्टसिद्धौ तत्र सत्त्वे ज्ञानशक्तिस्वरूपावभासस्वीकारस्य नैष्फल्यात्। इतरपदार्थप्रकाशनात्मिकाया मनोवृत्तेः क्रियातिरिक्तया तदतिरिक्तस्य ज्ञानशक्तिस्वरूपस्य कस्यचिदिदानीं यावदसिद्धेश्च तन्नोच्यते। एवं हि प्रतिप्रसवप्रधाना जगन्निर्वाहिका क्रिया रजःशब्देनाख्यायते सा च सञ्चरप्रति-

सचरस्वाभाव्याद् द्विविधा। सचर. प्रवृत्तिलक्षणा प्रवृत्ति, प्रतिसचरस्तु निवृत्तिलक्षणा प्रवृत्ति.।

तत्र प्रवृत्तिलक्षणा प्रवृत्तिर्द्वेधा-इतरया समबलया प्रवृत्त्या बाधिता चाबाधिता च। बाधिता हि स्तम्भलक्षणा सत्या अपि प्रवृत्तरावरणात्तम शब्देनाहूयते-यथोभयत. समबलाकृष्टाया रश्मौ सत्यावपि प्रवृत्तो नोपलक्ष्येते। अबाधिता तु रज.शब्देनैव। अनयोरुभयोरप्यवस्थयोर्ज्ञानशक्तिस्वरूप नावभासते विरोधात्। विशुद्ध सत्त्व हि क्रियाविजातीयस्य ज्ञानस्य सत्यस्य सत्पदप्रसिद्धस्य स्व रूपम्, तद्विरुद्ध क्षोभस्तूत्पन्नविनष्टक्रमरूपाया. क्रियाया असत्पदप्रसिद्धाया स्व रूपम्। अयतोऽपि क्षोभेऽनुवर्तमाने विशुद्ध सत्त्व नास्ति। अथापि यदि निवृत्तिलक्षणा प्रवृत्तिर्भवति तत्र मलिन सत्त्वमवभासते। यथात्कटप्रकाशमलिनप्रकाशयो. शीघ्रातिशीघ्रतेजोगतौ शनैश्चरवाय्वादिगतौ च तारतम्यम्, तथेहापि द्रष्टव्यम्। तदित्थ ज्ञानशक्त युत्पदप्रसिद्धायास्त्रिविधा स्वभावापरपर्याया प्रकृति सिद्धा। सत्त्वलक्षणा च क्षोभलक्षणा च तमोलक्षणा चेति, त्रिविधापि क्षोभलक्षणत्वाविशेषादेकाविधेव वा।

ऊर्ध्व सत्त्वविशालस्तमोविशालस्तु मूलत सर्ग.।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्त। (सा. का)

अथ रजोविशालेऽपि तस्या ज्ञानशक्तेस्तमोलक्षणप्रकृतिप्राधान्ये धानवस्तथा क्षोभलक्षणप्रकृतिप्राधान्ये जीवा इति भूतत्रैविध्यम्। तत्रापि रजस्तमसा प्रवृत्तिलक्षणत्वविशेषाज्ज्ञानावरणरूपत्वाच्च तमस्त्वमतस्तत्प्रधाना ज्ञानशक्तिर्जडरूपेण मलिनसत्त्वप्रधाना तु सा चेतनरूपेण प्रतिपद्यत इति सुष्ठूक्त सत्त्वप्रधानाया क्रियाया ज्ञानशक्तिस्वरूप प्रतिभासत ततश्चेतनो भवतीति। एवमेव यत्र तमः प्रधानाया क्रियाया ज्ञानशक्तिस्वरूप तिरोहितमिवेवानुभूयते तत्र जडत्वव्यवहार।

ज्ञानशक्तिस्वरूप ज्ञानेन्द्रियसत्त्वे प्रतिभासते तदभावे तु तिरोहित भवति अत एवाहुराचार्याः सेन्द्रिय चेतन द्रव्य निरिन्द्रियमचेतनम्-इति। तस्माज्जडेषु ज्ञानशक्तेरनुद्भूतत्वेऽपि न त्वेव ज्ञानशक्तिर्नास्तीति मन्तव्यम्, तत्रैव तदन्तर्गतसोमस्य मनोवृत्तिरूपया क्रियया विपरिणतावस्थत्वे ज्ञानशक्ते. पुनरुद्भूतत्वदर्शनात्। एतदभिप्रायेणैव "शृणोत ग्रावाण." "शृणवन्त्वाप." "स्वधित मैन हिंसी." इत्येवमादिभिश्चेतनोपयुक्तवाक्यैर्निराशङ्क जडेषु व्यवहरन्तो दृश्यन्ते महर्षयः। यथा हि—

रे पाद! न व्रजसि कि भगवत्प्रदेश
रे हस्त! न स्पृशसि कि भगवत्प्रपन्नम्।

रे नेत्र ! पश्यसि न किं भगवद्विभूतिं
रे चित्त ! न स्मरसि किं भगवद्गुणौघम् ।

इत्यादिभिर्वाक्यैः पादाद्यवच्छेदेन कार्यकारिणी आत्मशक्तिरनुरुध्य तत्तत्सर्वशक्तिमानयं देहात्मैवानुरोध्येत न पादादयस्तेषां जडत्वस्य प्रसिद्धत्वात्,एवमेव शृणोत ग्रावाणः–स्वधिते मैनं हिंसीरित्यादिभिर्वाक्यैर्ग्रावाद्यवच्छेदेन कार्यकारिणोऽश्विच्छक्तीरनुरुध्य तत्तत्सर्वशक्तिमानयं विश्वात्मैवानुरोध्यत इति सुव्यक्तम् । तस्माद् यथेदानीं संप्रतिपन्नेऽपि प्रतिदेहमात्मैक्ये रे पाद रे हस्तेत्यादयो भेदव्यवहारा व्यवहर्तृ प्रवृत्तिवचित्र्यादुपपद्यन्ते, एवमेवैते शृणोत ग्रावाण इत्यादयो व्यवहारा अपीति नैतावता नानेश्वरवादः प्राचामार्याणां व्यवहारलभ्यः ।

यत्तु पूर्वकाले ऋषीणां ज्ञानदौर्बल्यादग्निवायुसूर्यपर्जन्येन्द्रादिजडप्रकृत्युपासना प्रवृत्ता, पश्चाद्भावयतां क्रमेण ज्ञानवृद्धावकात्म्यबुद्धिः संजाता इत्युपनिषद्भागः पश्चान्निर्मित इत्याहुस्तदिदं संपूर्णवेदमर्मदर्शिनामाद्योपान्त्यवेदचिन्तानिष्णातानामार्यविदुषां न विचारसहम् । संहिताभागेऽपि—

पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्' 'तमेकं सन्तं बहुधा वदन्ति'

इत्येवमादिभिरनेकात्मत्वेन प्रतिपन्नानामेषामर्थानामैकात्म्यप्रतिपादनात् । उपनिषद्भागेऽपि तेजोऽवन्नादिप्राकृतिकपदार्थानामनेकात्मतया देवत्वेनाख्यानात् । तस्मान्नेयमग्निवाय्वादिजडोपासना ज्ञानदौर्बल्यात्,अपि तु ज्ञानप्राबल्यात् सर्वत्रैव चिच्छिक्तसमन्वयमीक्षमाणानां चिद्घनोपासनैव पूर्वमेकदेशावच्छेदेन पश्चाद्विशिष्टावच्छेदेन प्रवृत्तेति पश्यामः । सर्वेषामेव मन्त्रभागानां चैकस्मिन्नेवार्थे वमरूपे सामान्यविशेषाभ्यां व्याचिख्यासिते तात्पर्यविसानात् ।

अथ चेतनेऽपीयं क्रियाशक्तिर्द्वेधा–ज्ञानस्वरूपनेदिष्ठसंबन्धा ज्ञानेन्द्रियप्रवर्तिनी, तद्व्यापारफलं ज्ञानम् । ज्ञानस्वरूपदविष्ठसंबन्धा न कर्मेन्द्रियप्रवर्तिनी, तद्व्यापारफलं क्रिया । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि ज्ञानेन्द्रियाणि वाक्पाणिपादोपस्थोपायवः कर्मेन्द्रियाणि । एतेषामुभयेषामधिष्ठातृदेवतापि द्वेधा–मनः प्राणश्च । प्राणसहकृतमनोऽधिष्ठितानि ज्ञानेन्द्रियाणि प्राणश्च । मनः सहकृतप्राणाधिष्ठितानि कर्मेन्द्रियाणि प्राणाश्च । अत एव मनसा सहैकादशेन्द्रियाणि, प्राणेन सहैकादश प्राणाः । अथ मनस्यपि क्रियाशक्तिर्द्वेधा, ज्ञानप्रधाना मतिः, मतिर्बुद्धिरित्येकार्थौ । क्रियाप्रधाना कृतिः, कृतिर्यत्न इत्येकार्थौ । मतिरपि द्वेधा–ज्ञानसंबन्धाद्वैराग्यम्–क्रियासंबन्धादध्यवसायः । वैराग्यमपि द्वेधा–यतमानसंज्ञा वशीकारसंज्ञा चेत्येवं ज्ञानक्रियाविजृम्भणमध्यवसयेम् ।

अथ क्रियाविशिष्टं ज्ञानं ब्रह्म, ज्ञानविशिष्टा क्रिया कर्म । "ब्रह्मैवेदं सर्वम्" "कर्मैवेदं सर्वम्" इत्याहुः ।

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ।। इति ।

अग्निर्ब्रह्म, सोमो धर्मः, अग्नीषोमात्मकं जगदित्याहुः ।

अथेयमुद्भूता ज्ञानशक्तिस्त्रिष्वधिष्ठानेषु विज्ञानं विद्योतयति-विषयजाते, संस्कारजाते, शब्दजाते च । स्वतो वा स्वव्याप्यतो वा-इन्द्रियसन्निकृष्टे कस्मिंश्चिद्विषये विज्ञानं विद्योतते तदेकमधिष्ठानम् । तस्य तस्य विषयस्यानुभवेन कश्चिदात्मनि संस्कार आधीयते, तत एव तदनुभवितुस्तत्तद्विषयासन्निधानदशायामपि तत्तद्विज्ञानं विद्योतते तद्द्वितीयमधिष्ठानम् । अथ विषयासन्निधानेऽपि तदीयसंस्काराभावेऽपि शब्दे श्रुते काचित् प्रतिपत्तिरुत्पद्यते तत् तृतीयमधिष्ठानम् । न चैतदधिष्ठानत्रयातिरेकेण किञ्चिद् विज्ञानं कुत्रापि दृश्यते ।

यत्तु वदन्ति-हस्तसाक्षात्कारात्तत्सम्बन्धिनि मनुष्ये प्रतिपत्तिः, धूमसाक्षात्कारात् तत्सम्बन्धिनि वह्नौ प्रतिपत्तिः एवं कार्यकारणसाक्षात्कारादतीतानागतयोः कारणकार्ययोरप्युत्पद्यते प्रतिपत्तिः । न चैषा तावदिन्द्रियसन्निकृष्टविषया संस्कार विषया वा शाब्दी वेति चतुर्थमधिष्ठानमभ्युपेयम् । यदि चेन्द्रियसन्निकृष्टसन्निकर्षाद्व्याप्तसंस्काराद्वा जायमानत्वात्परम्परया तयोरेवान्तर्भाव इष्यते तर्हि अलं तृतीयाधिष्ठानस्वीकारेणाऽपि । इन्द्रियसन्निकृष्टशब्दसन्निकर्षाद्वृत्तिसंस्काराच्च शब्दप्रतिपत्तेरुद्भवात्तदविशेषात् इति । अत्रोच्यते । तदिन्द्रियसन्निकृष्टसन्निकर्षवति तदिन्द्रिययोग्यतासमर्पकसम्बन्धसत्वे तज्ज्ञानस्य वैषयिकत्वमिष्यते । अर्थस्तु शब्दस्य न श्रुतियोग्यः । अत एव नास्ति तयोः सम्बन्ध इत्याह भगवान् कणादः-"शब्दार्थावसम्बन्धौ । सामयिकः शब्दादर्थप्रत्ययः" इति ।

तथा च भिन्नदेशकालस्थादिन्द्रियसन्निकृष्टाच्छब्दाद् भिन्नदेशकालस्थे विषये तदिन्द्रियायोग्ये या प्रतिपत्तिः सातिरिच्यते वैषयिकसांस्कारिकप्रतिपत्तिभ्यामिति द्रष्टव्यम् । तस्मात् त्रिस्थानमेव विज्ञानम् । अतश्चाधिष्ठानभेदादस्य विज्ञानस्य त्रीणि नामानि-ब्रह्म, विद्या, वेद इति विषयाधिष्ठानसापेक्षत्वे ब्रह्मशब्दः १. संस्काराधिष्ठानसापेक्षत्वे विद्याशब्दः २. शब्दाधिष्ठानसापेक्षत्वे च तत्रैव वेदशब्दः ३. तदित्थं ब्रह्म विद्या वेद इति त्रयः शब्दास्तत्तदुपाधिभेदापेक्षया विभिन्नार्था अपि विज्ञानस्वरूपमात्रसापेक्षत्वे एकार्था भवन्ति । अत एव ब्राह्मणग्रन्थेषु तत्र तत्रैकार्थाभिप्रायेणैव ब्रह्मविद्यावेदशब्दाः श्रूयन्ते । तत्र सर्वमेवेदं विषयजातं विज्ञानात्मकत्वाद् ब्रह्मेत्युक्तं त्रेधा विभज्य व्याख्यातं द्रष्टव्यम् । जाग्रदवस्थापन्नस्थूलशरीराभिमानिनो विश्वस्य विराजो वा स्थूलरूपेण, स्वप्नावस्थापन्नसूक्ष्मशरीराभिमानिनस्तैजसस्य हिरण्यगर्भस्य वा सूक्ष्मरूपेण, सुषुप्त्यवस्थापन्नकारणशरीराभिमानिनः प्राज्ञस्य सर्वज्ञस्य वा कारणरूपेण च । न चैतत्स्थूलसूक्ष्म-

कारणातिरेकेण किञ्चिद्विषयजातं पश्यामः। यथा घटः स्थूलः, पृथिवी सूक्ष्मा, अग्निः सोमो वा कारणम्। जलं स्थूलम्, आपः सूक्ष्मा, सोमवरुणौ कारणमित्येवमादि।

तस्माद् ब्रह्म व्याकुर्वाणेनैतानि सर्वाणि विषयजातान्येव याथातथ्येन व्याकृतानि भवन्ति। एवं विद्यापि त्रेधा परिच्छिद्य व्याख्यायते—आधिदैविकरूपेण, आधिभौतिकरूपेण च। यानि चैतानि विषयजातानि दृश्यन्ते, तानि सर्वाणि भूतानि। भूतानि उत्पन्नानीत्यनर्थान्तरम्। तथा च यानि बहूनां मूलद्रव्याणामन्योन्यसमवायेन किञ्चिल्लौकिकं स्वरूपं दधते तानि भूतानि। तत्र यान्येषां भूतानां मूलद्रव्याणि तान्येव देवशब्दवाच्यानि, देवानामेव मिथुनधर्म्मेण युद्धधर्म्मेण च सर्वमेवेदं जगद्विजृम्भमाणं दृश्यते।

एकैकस्मिन् भौतिकवस्तुनि सन्त्येव बहवो देवाः परस्परविलक्षणशक्तिमन्त इति हि विलक्षणबुद्धिमन्तो महर्षयः प्रतिजानते श्रुतिषु। स एष जातो जायते सर्वाभ्य एव देवताभ्य इत्यादिषु। (ऐतरेय)। तेषां देवानां यावता याथातथ्येन शक्तयो न विज्ञायेरन्–न खलु तावता भौतिकवस्तूनां सम्यग् विज्ञानं संभवतीति कृत्वा आदावाधिदैविकविज्ञाने प्रवर्तन्ते स्म चिराय महानुभावा महर्षयः। तत्राग्नीन्द्रादित्यप्रमुखास्त्रयस्त्रिंशत्सोमपा देवाः, नवनवतिप्रकारा असुराः, अष्टप्रकाराः पितरः, सप्तर्षयः, सप्तविंशतिप्रकारा गन्धर्वा मैथुनधर्म्मेण युद्धधर्मेण च भूरिभूरि प्रवर्तमाना आख्याताः।

तत्र सर्वत्रैव विज्ञानशक्तिं सामान्येन पश्यतां महर्षीणामविशेषात् सर्वत्र त्रिविधावाग्व्यवहारा भवन्ति परोक्षाः प्रत्यक्षा आध्यात्मिकाश्चेति प्रदर्शितं भगवता यास्केन निरुक्ते दैवतकाण्डे। उक्तं तु पूर्वम् सर्वं खल्विदं ब्रह्मेवेते। तच्चतुष्पात् प्रतिपद्यते परं ब्रह्म प्रत्यग् ब्रह्म, अन्वग् ब्रह्म, पराग् ब्रह्मेति। तत्र ब्रह्मणः स्वरूपेण सतो निर्गुणस्य परब्रह्मसंज्ञा, अथ तदतिरिक्तस्य शुद्धसत्वावच्छिन्नस्याहंपदप्रतिपाद्यस्य ब्रह्मत्वं तस्योत्तमपुरुषयोगित्वात्तदनुरोधेनाध्यात्मिकव्यवहारः।

मलिनसत्त्वावच्छिन्नस्य त्वंपदप्रतिपाद्यस्य प्रत्यग्ब्रह्मत्वपराग् ब्रह्म ब्रह्मत्वाभ्यां व्यवहृतस्यान्वग्ब्रह्मत्वं तस्य मध्यमपुरुषयोगित्वात्तदनुरोधेन प्रत्यक्षव्यवहारः। रजस्तमोवच्छिन्नस्य तु तत्तत्पदप्रतिपाद्यस्य पराग्ब्रह्मत्वं तस्य प्रथमपुरुषयोगित्वात्तदनुरोधेन परोक्षव्यवहारः। इत्थं जडचेतनसाधारण्येन त्रिविधो वाग्व्यवहारो महर्षिणाम्। तस्मात्तादृशव्यवहारदर्शनमात्रेणैव ते प्राचीना महर्षयो जडोपासका आसन्नित्यर्थो नाध्यवसातुं शक्यते। तस्मादाधिदैविकाधिभौतिकाध्यात्मिकपर्य्यन्तयावद्विज्ञानकक्षापरिपक्वप्रज्ञैर्महर्षिभिर्विज्ञानसौकर्याय परिच्छिद्य व्याचिख्यासया पूर्वमाधिदैविकविज्ञानमुपन्यस्तमिति सिद्धम्।

एवमाधिदैविकविज्ञाने परिपक्वमतीनां विद्यार्थिनामनुग्रहाय आत्माकाश-वाय्वग्निजलभूमीनां तेजोऽबन्नानां वा भौतिकद्रव्याणां विवेकः प्रवर्त्तितः। किन्तु भौतिकतत्त्वानां मौलिकतत्त्वानतिरेकं पश्यद्भिर्महर्षिभिस्तेष्वपि रथाश्वशस्त्र-शकुनिवृक्षादिषु भूलोकस्थेषु भूतेषु देवशब्देन व्यवहाराः प्रवर्त्तिताः, एषां सर्वेषां पार्थिवानामग्निप्रधानत्वाद् अग्नेश्च भूस्थानदेवत्वात्। एवं तत्तदन्तर्गतदेवा-धिकारतारतम्येनैषां सौम्याग्नेयवारुणत्वादिभिरपीष्यन्ते व्यवहाराः। तत्रैतेषां भौतिकानामनन्तत्वात् प्रतिभूतं च शक्तिरचनादिवैलक्षण्यादेकैकभौतिकाधिका-रेणानन्ता विद्याः सम्भवन्ति। तासु काश्चनाथर्ववेदादिषु संक्षिप्य प्रदर्शिता इति दिग्दर्शनविधया आधिभौतिकविज्ञानमुपन्यस्तम्।

इत्थञ्च मौलिकतत्त्वतो भौतिकतत्त्वतश्च व्याकृताः सर्वे भावाः—तत्रैतेषां परस्परतो भेदः ससिद्धः किन्तु अयमेषां भेदो व्यवहारोपयोगी न तु वास्तविक इत्येव पारमार्थिकतत्त्वमुपदर्शयितुं पश्चात् प्रवृत्ता भगवन्तो महर्षयः। ते हि पश्यन्ति यथा वनस्यात्मा वृक्षाः, वृक्षस्यात्मा तत्समवेता रसादयो भावाः, रसादी-नाञ्च सोमाद्यात्मकत्वम्, सोमादिदेवानाञ्च ब्रह्मात्मकत्वमिति। यत्सत्त्वे यत्सत्ता स तस्यात्मा। अस्तिकाचिदलौकिको शक्तिः यदधीनाः सर्वे रसादयो भावाः सोमादयो देवा वा एकत्र समवेता वृक्षस्यात्मतां गच्छन्ति सैव खलु ब्रह्म शब्देनाख्यायते। एवं सर्वत्रैवान्ततो ब्रह्मात्मकत्वमिति कृत्वा नैतेषां पारमार्थिको भेदः। तच्च ब्रह्मविज्ञानशक्तिरूपमित्युक्तम्। तस्मात् सर्वमेवेदं चराचरात्मकं जगद्विज्ञानात्मकम्। तस्मात् सर्वेषामेषां भावानामैकात्म्यमित्येतदाध्यात्मिकं विज्ञानम्। तदित्थमाधिदैविकाधिभौतिकाध्यात्मिकभेदेन त्रिविधा विद्या भवती-त्युपदर्शितम्।

अथ वेदोऽपि त्रेधा विभज्य व्याख्यातः—ऋग् यजुः साम इति। शब्दा-धिष्ठानं विज्ञानं वेद इत्युक्तम्। शब्दश्च पद्यगद्यगानभेदात् त्रेधा विभक्तः। अत एव वेदस्यापि त्रैविध्यम्—पद्यात्मिका ऋक्, गद्यात्मकं यजुः, गानात्मकं साम। इदमप्यत्र बोध्यम्। यच्च यावच्चेह लोके भूस्थानमाग्नेयं सा सर्वा ऋक्। वेदे महर्षिभिः पद्यमयप्रबन्धेन तत्प्रतिपादनसंकेतात्। तथा यच्च यावच्चेह लोके भुवःस्थानं वायव्यं तत् सर्वं यजुः। गद्यमयप्रबन्धेन तत्प्रतिपादनसंकेतात्। अथ यच्च यावच्चेह लोके स्वःस्थानमादित्यं तत्सर्वं साम। गानमयप्रबन्धेन तत्प्रति-पादनसंकेतात्। तत्रैतेषां पद्यानां संग्रह एव ऋग्वेदशब्देनाख्यायते, तत्र भूस्थान-सम्बन्धेनाग्न्यादिदेवता मन्त्रा हौत्रकर्मोपयुक्ता आख्याताः।

तथैवैषां गद्यानां संग्रहो यजुर्वेद इत्याख्यायते। तत्रान्तरिक्षस्थानसम्बन्धेन वाय्वादिदेवता मन्त्रा आध्वर्यवकर्मोपयुक्ता आख्याताः। अत्रान्तरिक्षस्थानेषु सर्वेष्वेवेन्द्रादिदेवेषु वायुशब्दसंकेतः। अथान्येषां गानोपयुक्तानां मन्त्राणां संग्रह-

सामवेद इत्याख्यायते, तत्र स्वःसम्बन्धेनादित्यादिदेवता मन्त्रा औद्गात्रकर्मोपयुक्ता आख्याताः। एतदभिप्रायेणैव ऐतरेयादिश्रुतिग्रन्थेषु मन्वादिस्मृतिग्रन्थेषु च अग्नेर्ऋग्वेदस्य, वायोर्यजुर्वेदस्य, आदित्यात्सामवेदस्योत्पत्तिराम्नायते।

तदित्थमग्नीन्द्रादित्यसम्बन्धितया सर्व एव जगद्भावा ऋग्यजुःसामशब्दाभिधेया भवन्ति। ऋग्यजुः सामानि च वेद इत्युच्यते। तस्माद् वेदशब्देनापि सर्वमिदमाख्यातं भवति। न चेह सोऽवशिष्यते यो वेदस्य विषयो न स्यात्। तथा चाग्नीन्द्रादित्यसापेक्षाणामर्थानामृग्यजुः सामशब्दैराख्यानाद् ऋग्यजुः साम्नां च वेदशब्देनाख्यानाद् वेदस्य च शब्दाधिष्ठानविज्ञानरूपत्वादमुष्मिन् वेदे कर्तृसम्बन्धेन त्रेधा प्रतिपत्तिर्भवति।

विज्ञानमात्राभिप्रायेण वेदस्याकर्तृकत्वम्—ऋग्यजुःसामात्मकविषयजाताभिप्रायेण वेदस्येश्वरकर्तृकत्वम्–ऋग्यजुःसामात्मकशब्दप्रबन्धाभिप्रायेण वेदस्य महर्षिकर्तृकत्वमिति। इत्थं ब्रह्मविद्यावेदानामौपाधिकभेदं पुरस्कृत्य तत्तत्स्वरूपाणि संक्षेपान्निदर्शितानि किन्तु विज्ञानमात्राभिप्रायेण ब्रह्मविद्यावेदानामैकार्थ्यमित्युक्तम्। तथा च ये भेदा ब्रह्मणि दर्शितास्ते विद्यायां वेदेऽपि, ये वा विद्यायां वेदे वा तेऽपि तदन्यत्रोभयत्र व्यवहर्तुं युज्यन्त इत्यतः सर्वमिदं साङ्कर्येण संहिताब्राह्मणयोरुपनिबद्धम्। अत एव च—

> अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
> दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥

इत्येवं मनुना ऋग्यजुःसामभेदैस्त्रिलक्षणं ब्रह्म निर्दिष्टम्। अथ पुनः शारीरिकमानसिकात्मिकबलसाधनोपायप्रकारप्रदर्शनपरेण कर्मकाण्डोपासनाकाण्डज्ञानकाण्डात्मकेन प्रकरणत्रयेण परिच्छिद्य ब्राह्मणानि प्रोक्तानि। तत्र कर्मकाण्डे शरीरप्रयत्नाभिनिर्वर्त्यानि सर्वविधलौकिकफलसाधनानि यज्ञकर्माणि दर्शितानि, तान्येव पुनः श्रौत—स्मार्त्त–सामयाचारिक-भेदत्रयात्मककल्पैः समुपबृंहितानि। अथोपासनाकाण्डे मानसप्रयत्नाभिनिर्वर्त्यानि सर्वविधालौकिकफलसाधनानि दर्शितानि।

ज्ञानकाण्डे पुनरध्यात्मविद्या प्रदर्शिता। तदित्थं प्रकरणैः परिच्छिद्य वेदाम्नानाद् ऋग्वेदसंहितायां मण्डलविशेषेऽध्यात्मविद्यापदार्थानामनुल्लेखेऽपि तावता तेषां महर्षीणामध्यात्मविद्याज्ञानमेव तदानीं नासीदिति न शक्यते वक्तुम्। आधिदैविकपदार्थोल्लेखनयोग्ये प्रकरणेऽध्यात्मपदार्थोल्लेखस्यायोग्यत्वात्तदनुल्लेखेऽपि तादृशार्थप्रकल्पनस्यासंभवात्। तदित्थं ज्ञानशक्तिसम्बन्धेन वेदस्वरूपमुपन्यस्तम्।

अथ क्रियाशक्तिसम्बन्धेन वैदिकानां धर्मस्वरूपं दर्शयितव्यम्। इयं हि क्रियाशक्तिर्द्वेधा–सांसिद्धिकी नैमित्तिकी च। सा नून सांसिद्धिकीयामस्या आश्रयं कदापि न व्यभिचरति। यत्राप्यसौ कुर्वद्रूपा स्पष्टं नानुभूयते, तत्रावश्यं सत्यपि सा बलवन्नैमित्तिकक्रियाविशेषणाप्रतिबाधादनुद्भूता भवतीति बोद्धव्यम्। यथा कीलनाद्रश्मेरतिबलैरप्याकर्षणे तदबलफलभूता क्रिया सत्यपि नानुभूयते। द्वेधा हि परमाणवः सम्भवन्ति–गतिस्वभावाः स्थितिस्वभावाश्च। तत्र तैजसपरमाणवो गतिस्वभावास्तेषु निमित्तसापेक्षा स्थितिर्भवति, स्थितिहेत्वपगमे स्वत एव गतिः प्रवर्त्तते सा सांसिद्धिकी।

एवं पार्थिवपरमाणवः स्थितिस्वभावास्तेषु निमित्तसापेक्षा गतिर्भवति गतिहेत्वपगमे स्वत एव स्थितिः प्रवर्तते सा सांसिद्धिकी। यत्तु सर्वे गतिस्वभावा एव सर्वे वा स्थितिस्वभावा एव। यदि स्थिताःसन्ति न ते निमित्तमनपेक्ष्य गच्छन्ति यदि गच्छन्ति न पुनस्ते निमित्तमनपेक्ष्य तिष्ठन्ति। तदयं जडमात्रसाधारणो नियमः। इति केचिद् ब्रूयुः–तच्चिन्त्यम् सर्वत्रगतिस्थित्योरुभयोरेव नैमित्तिकत्वस्य सांसिद्धिकत्वस्य वा विचारासहत्वात्। सृष्ट्यादौ परमाणुषु गतिस्थित्योरुभयोरेव स्थापयितुमशक्यत्वात्। तस्मात् सृष्टिप्रलयव्यवस्थां मन्यमानानामार्याणां मते केषाञ्चिद् गतिः सांसिद्धिकी, स्थितिस्तु नैमित्तिकी, अन्येषां पुनः स्थितिः सांसिद्धिकी, गतिस्तु नैमित्तिकी, इत्येवमन्यत्रापि।

यथा नक्तमिव सन्नपि चन्द्रिकाप्रकाशो दिवाभिभवान्नानुभूयते बलवत्सौरप्रकाशेन प्रतिबाधात्, एवमेव सांसिद्धिकी क्रिया क्वचित् सत्यपि नानुभूयते। तथा जपाकुसुमसन्निधानात्स्फटिकादावसन्नपि लालिमा प्रतीयते रक्तकाचान्तरिते वा सौरप्रकाशे रक्तता प्रतीयते। एवमेव नैमित्तिकी क्रिया क्वचिदसत्यपि बलवत्क्रियाश्रयसन्निकर्षात् तत्र सङ्क्रान्ता प्रतीयते। तदित्थं सांसिद्धिकी पञ्चधा—उद्भूता, दोषमार्जनात्मकसंस्कारोद्भाविता विषयान्तरे दृष्टा, प्रतिबन्धकातिशयरूपदोषसंयोगादन्तर्हिता, विरुद्धतुल्यबलसंयोगात्तिरोभूता चेति।

एवं नैमित्तिकी त्रेधा—स्वरूपकरणात्मकसंस्कारजाता, आतिशयाधानात्मकसंस्काराजाता, क्रियावत्संसर्गपतिता चेति। तत्रेयं सांसिद्धिकी क्रिया चिरावस्थानलक्षणतया गुणशब्देनाख्यायते, नैमित्तिकी तु क्रिया बलशब्देन क्रियाशब्देनैव वा व्यवह्रियते। तथा हि सूर्येऽग्नौ वा प्रकाशकत्वमुद्भूता प्रथमा क्रिया। उष्णजलस्योष्णतापगमे प्रतिपन्नं शैत्यं संस्कारजा द्वितीयोद्भाविता क्रिया। चन्द्रमणिसन्निहिताग्नावुष्णत्वात्प्रतीतावपि चन्द्रमणिविगमे या पुनरुष्णताऽनुभूयते साप्युद्भाविता नाम द्वितीया क्रिया। सन्निधीयमानस्य विषयस्य दहनेनाग्नौ दाहकत्वं प्रतिपद्यते सैषा सङ्क्रान्ता नाम तृतीया क्रिया। उष्णजले वर्तमानं शैत्यं तथा चन्द्रमणिसन्निहितेऽग्नौ वर्त्तमानमुष्णत्वमन्तर्हितास्या चतुर्थीक्रिया।

परिमिताग्निपरमाणुसंयोगादनुष्णोऽपि जले शैत्यमप्रतीयमानं तिरोभूताख्या पञ्चमी क्रिया । इयञ्च नैमित्तिकपक्षेऽपि तुल्या–तथा हि–समबलमनुष्याभ्या-मुभयतः समाकृष्टायां रश्मौ वर्त्तमानप्यप्रतीता गतिः पञ्चमी क्रिया भवति ।

अथ राज्ञां राजमन्त्रिणामितरेषाञ्च कर्म्माधिकारिणां तादृशाधिकारसिद्धि-रेव स्वरूपकरणसंस्कारः । अतश्चायमधिकारः षष्ठी क्रिया आधिकारिकी नाम । एवमेव ब्राह्मणक्षत्रियादीनां ब्राह्मणत्वक्षत्रियत्वादयोऽपि स्वरूपसंस्कारजत्वात् षष्ठी क्रिया । तथा लोष्ठादिपार्थिवपदार्थानामुत्पतनतिर्य्यग्गमनप्रयोजकमाधीय-मानबलं सप्तमी क्रिया आतिशयिकी नाम । अथेयमष्टमी क्रियावत्संसर्गापतिता द्वेधाश्रितमूला, आश्रयमूला चेति । तत्र जलीयपरमाणुसंपर्काच्छैत्यम्–आग्ने-यपरमाणुसंयोगादुष्णत्वञ्च वायौ प्रतीयमानमाश्रितमूला क्रिया । तथा रथनौका-दियानस्थशरीरे पिञ्जरस्थितपक्षिशरीरे च गतिप्रयोजकमाधीयमानं बलमाश्रय-मूला क्रिया भवति । रथादिक्रियाया रथादिसंसर्गानुरोधेन रथादिस्थे संक्रमणात् ।

तदित्थमष्टधा क्रिया व्याख्याता । उद्भूता, उद्भाविता, संक्रान्ता, अन्त-र्हिता, तिरोभूता, आधिकारिकी, आतिशयिकी, सांसर्गिकी चेति । तासु च सांसिद्धिक्याः सर्वविधाया एव धर्म्मशब्देन व्यवहारः–तेन तेन धर्म्मिणा नित्यं ध्रियमाणत्वात् तत्तद्वस्तुस्वरूपधारणकारणत्वाच्च । अथ नैमित्तिकीष्वपि स्वरूप-करणात्मकसंस्कारसिद्धायाः क्रियाया धर्म्मशब्देनैव व्यवहारः–तेन तेन धर्म्मिणा नित्यं ध्रियमाणत्वात्–तत्तद्वस्तुस्वरूपधारणकारणत्वाच्च । अथान्यासां नैमित्ति-कीनामधर्म्मत्वम् । तेन धर्म्मिणा नित्यमधारणात् तद्व्यतिरेकेणापि तद्वस्तुस्व-रूपसिद्धेश्च । एवमप्यावेशकाले तात्कालिकधर्म्मत्वमासामप्युपचर्य्यतेत्यपि द्रष्ट-व्यम् रथैकगतिकत्वस्य मनुष्यधर्म्मत्वाभावेऽपि रथारूढधर्म्मत्वसम्भवात् । तदित्थ-मुक्तः सामान्यो धर्म्माधर्म्मप्रकारः । अत्राधर्म्मो धर्म्माभावरूप इत्यपि ध्येयम् ।

अथ सांसिद्धिकशक्तितिरोभावकातिशयावेशस्तु नित्यमधर्म्मः । तस्य धर्म्मविरोधित्वात् । अत एव सुखविरोधिपरिणामवतोऽतिशयस्यात्मन्याहितस्या-धर्म्मत्वम्–सुखानुभवस्यात्मसांसिद्धिकशक्तितया तद्विरोधिक्रियावेशस्य धर्म्मत्वा-संभवात् । स च सुखविरोधिपरिणामवानतिशयस्त्रेधा दृश्यते–परव्यापारप्रयोज्यः, स्वव्यापारप्रयोज्यः, अदृष्टव्यापारप्रयोज्यश्च । तत्र परव्यापारप्रयोज्यस्य तु सुतरामधर्म्मत्वम् । यत्र तु सुखभोगमिच्छतापि सुखविरोधिपरिणामवानतिशयः स्वयमात्मन्याधीयते । तत्राज्ञानादिरूपस्यातिशयान्तरस्य पूर्वमाहितस्य प्रयोज-कत्वं पश्यामः । तस्मात्तस्यापि कथञ्चित् परप्रयोज्यत्वावसायादधर्म्मत्वं संसिद्धम् ।

अथ यत्र सुखविरोध्यतिशयाधाने न त्वेव कश्चित् परव्यापारो न वा स्वव्यापारः प्रयोजकतया दृश्यते तत्र साधारणस्य ग्रहादिदैवसंयोगस्य जन्मान्त-

राहितातिशयस्य वा प्रयोजकत्वेन स्वीकर्तव्यत्वादवश्य तत्रापि तस्य संस्कारस्याधर्मत्व ससिद्धम् । यत्र तु परव्यापारप्रयोज्यस्य स्वव्यापारप्रयोज्यस्याऽदृष्टव्यापारप्रयोज्यस्य वातिशयस्य सुखविरोधित्व न प्रतिपद्यते । तत्रतेषा दु खाभावरूप सुखजनकत्वात्, सुखजनकातिशयाना च दोषमार्जनात्मकसंस्काररूपतया सिद्धमेव धर्मत्वमितिद्रष्टव्यम् । सोऽयमपरो धर्माधर्मप्रकार. सप्तमक्रियामूलको व्याख्यात: । अत्राधर्मो धर्मविरोधिरूप इत्यपि ध्येयम् ।

अथ या क्रियावत्संसर्गपातिताख्या द्विविधा क्रिया व्याख्याता—तदनुबन्धेनैवार्याणां निकृष्टवृत्तिभिर्दुराचारिभिर्म्लेच्छै. सह सहवासादिसंसर्गप्रतिषेधो, बीभत्सदेशनिवासप्रतिषेध , कुत्सितमासादिभक्षणप्रतिषेध —इत्येवमादिका. कतिपये आहारविहारव्यवस्थाप्रकारा: प्रवर्तन्ते । यथाहि वायुसक्रान्तजलाग्निपरमाणुजातातिरेकेण वायौ शीतत्वमुष्णत्व वा प्रतीयते, एवमेवानिष्टसंसर्गवशादनिष्टधर्मा यथा न सक्रमेरन् तथा चरितव्यम् । विद्यया तु तदिष्टानिष्टत्वे सम्यक् परीक्ष्य तत्रतत्राहारविहाराद्यर्थं प्रवर्तेत निवर्तेत वा न तु देशकाले पात्राद्यनुरोधमकृत्वा यत्र तत्र सहसा प्रवर्तेतेत्यार्याणामभिप्राय ।

यदि देश काल. पात्र वा स्वस्वाधिकाराख्यषष्ठक्रियानुकूलानि प्रतीयेरन्, अवश्यं तर्हि तस्मिन्नाहारविहाराद्यर्थे प्रवृत्ति. साध्वी । तदेतत्पुण्य कर्म । तादृशञ्चकर्मकुर्वाणा अभ्युदयेन युज्यन्ते । यदि तु तादृशषष्ठक्रियाप्रतिकूलानि देशकालपात्राणि सभाव्यापि स्वस्वाधिकारविरुद्धे आहारविहाराद्यर्थे प्रवर्तेरन्-तर्हि नूनं कृच्छ्रेण युज्येरन् । न शस्त्रवृत्तिना कर्माणि शास्त्रवृत्तिभि:, शास्त्रवृत्तिना वा शस्त्रवृत्तिभि , कर्तुं युज्यन्ते, रुग्णेन स्वस्थभोज्यानि स्वस्थेन वा रुग्णभोज्यान्यभ्यवह्रियन्ते, पैत्तिकश्लेष्मिकाणां वान्योन्यविरुद्धोपचारानुसेवनमवकल्पते, कुलीनेन नीचकर्म, नीचेन वा कुलीनकर्म क्रियमाणमवकल्पते । न शीतकालिकवस्त्रावरणमुष्णकाले उष्णकालिक वा शीतकाले वर्तितुमिष्यते । नापि वा शीतप्रधानदेशोपयुक्ता वेशभूषाहारविहारा उष्णदेशे उष्णप्रधानदेशोपयुक्ताश्च ते शीतदेशे युज्यन्ते ।

तस्मात् सर्वत्र सर्व· स्वस्वदेशकालकुलपात्रानुरोधेन क्रियमाण कर्म तस्यान्यस्य च हिताय भवति । वैपरीत्येन कुर्वाणा अवश्य कपूयचरणा भवन्ति कृच्छ्रेण च ते युज्यन्ते । यत्तु रमणीयचरणा अपि भूयसा कृच्छ्रेण युक्ता दृश्यन्ते । कपूयचरणाश्चाभ्युदयेन, तदेतच्छिक्षादोषात्-इष्टानिष्टपरिचायकविद्यावैमुख्येन प्रवर्तमानानामिदानीन्तनानामविद्याफलभूत कृच्छ्र घुणाक्षरन्यायेन तु क्वचिदभ्युदय: प्रवर्तत इत्यन्यदेतत् । तस्मात्—

*ज्ञात्वा कर्माणि कुर्वीत नाऽज्ञात्वा किञ्चिदाचरेत् ।*
*अज्ञानेन प्रवृत्ताना स्खलनं स्यात् पदे पदे ।*

आर्पं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्म्मं वेद नेतरः ।।

सोयमष्टमक्रियामूलको धर्म्माधर्म्मप्रकारः संक्षेपान्निर्दशितः ।
अत्राधर्म्मोऽनिष्टधर्म्मरूप इत्यापि ध्येयम् ।

अथ स्वरूपकरणात्मकसंस्कारानुरोधिनी या क्रिया, तदनुरोधेनापि धर्म्म-स्वरूपं वक्तव्यम् । इयं ह्याधिकारिकी क्रिया यद्यपि पात्रभेदादनेकधा भिद्यते । अथापि सामान्यभावेन प्रतिपत्ती सर्वाधिकारसाधारण्येन त्रेधा विजृम्भमाणा दृश्यते । यज्ञो दान तपश्चेति । स्वस्मिन्नसतां स्वापेक्षितानामतिशयानां परतः स्वस्मिन्ना दानं तपः । स्वोपयोगाधिकानां स्वस्मिन् सतामतिशयानां परस्मै सम-र्पणं दानम् । तत्र तपस्तावद् देवाराधनं संयमसाधनं शरीरशोपणं व्रतमित्यादिश-ब्दैर्व्यवह्रियते-अश्रद्धा परमः पाप्मा श्रद्धा हि परमं तपः-इति बौधायनीये । तेषा-मतिशयानां देवाद्यनेकरूपैर्विवक्षणात् ।

दानञ्च स्वस्वत्वनिवृत्तिभावनायां परस्वत्वोत्पादने दानशब्देन तदनिवृत्ति-भावनायां परस्वत्वोत्पादने उत्सर्गशब्देन परस्वत्वानुत्पादनेऽपि स्वस्वत्वनिवृत्ति-भावनायां त्यागशब्देनेत्येवमनेकधा व्यवह्रियते । यावज्जीवनञ्चैते दानादाने जडचेतनसाधारण्येन दृश्येते । जडेष्वपि सर्वेषु स्वेतरधर्म्मग्राहकत्वस्य स्वधर्म्मव्या-सञ्जकत्वस्य चानुशयरूपेण भूयसा दृश्यमानत्वात् । चेतनेषु केवलमैच्छिकदाना-दानसम्बंधेन प्रवृत्तिनिवृत्ती विशिष्येते तदित्थं कर्म्मविनिमयेन सर्वमिदं जगदेके-कशः संपन्नं बलवद्भवति । तथा चः संपन्नः सर्वो निरपेक्षं जगदाप्यायनाय प्रव-र्त्तत तदिदं जगदाप्यायनं यज्ञ इत्युच्यते । अग्निषोमीयं हीदं सर्वं जगत् । सर्वजग-दुपादानभूता हि देवाः प्रायेण सोममाददते अग्निं पुनरन्यत्र व्यासञ्जयन्ति ।

अग्निर्हि मुखं देवानां सोमादिहविर्भोजनाय । यथा हि बुभुक्षाग्नौ प्रज्वलिते तत्रान्नाहुतिः क्रियते, एवमेव सर्वस्मिन्नेवार्थजाते समिद्धेग्नावितरातिशयाहुतिः प्रवर्तते । तस्मादयमपि यज्ञः सर्वसाधारणो धर्मः । यच्च किञ्चेदं दृश्यते तत्सर्व-मग्नौ सोमाहुतिर्भवतीति जगत्प्रवर्तते । यद्भुङ्क्ते यदध्यापयति यद्वा किञ्च करोति स सर्वो यज्ञः, यच्चेदं राज्ञां राज्यं प्रतपति राजनि वा प्रजानां करप्रत्य-र्पणं स सर्वो यज्ञः । स्त्रीगर्भाग्नौ रेत आहूयते । यच्च किञ्चिदिहाग्निद्वारा वस्तू-त्पाद्यते स सर्वोप्यग्निसाध्यः कर्मकलापो यज्ञः । यज्ञो हि श्रेष्ठतमं कर्म्म, सर्वेषा-मेव कर्म्मणामन्ततस्तत्रैवान्तर्भावात् । अत एव भगवानाह—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ।।

तदित्थमादानकर्म्मणा स्वात्महितं दानकर्म्मणा च परहितं विशेषेण ससाध्य ततो यज्ञकर्मणा सामान्यभावेन सर्वजगद्धिताय प्रवर्त्तेत, न तु वा तत्र फलाभिसन्धित्सया व्यक्तिविशेषो लक्ष्यीकरणीय । यथा हि शरीरस्थिना. मर्वेऽवयवा इतरे इतरकर्मणि व्यापृता भवन्ति । देशान्तरस्थितवस्तुदर्शनाय चक्षुर्न प्रभवतीति पादस्तच्छरीरं देशान्तरे नयति तथा चेद चक्षुस्तद्देशीयवस्तुदर्शने प्रभवति न तु वा तावता पादं पश्यति फलान्तरेण वा सबध्नाति,, तस्य तत्कर्त्तव्यमिति क्रियत एव । तेन तच्चक्षुः पादादिघटितशरीराधिष्ठाता आत्मा सतुष्टो भवति ।

एवमेव भगवतो विराड्रूपस्य परमेश्वरस्य सर्वमिदं जगज्जातमङ्गप्रत्यङ्गमिव भवति । तथा चाङ्गभूतेन मनुष्यादिनाऽपि न स्वफलप्राप्तिमनुसन्धायैव सर्वत्र प्रवर्तितव्यम्—किन्तु ममेदमधिकारसिद्धं कर्त्तव्यं कर्म्मेति बुद्धया सर्वथा निष्कामः कर्म्मसु सज्जेत । तथा चानेन कर्म्मणा सर्वजगदात्मा भगवान् परमेश्वरं सतुष्टो भवतीत्यार्य्याणामभिमान. । अयं च जगदुपकारो यद्यपि विशेषलक्षणयाऽनेकधा भिद्यते । तथापि तावत्समस्य–काम्यादिविशिष्टयज्ञविधि ,वर्णाश्रमव्यवस्था, समाजबन्धश्चेति त्रेधा पारिच्छिद्य विवेचित । तत्र यज्ञविधौ कारीरीष्ट्यादयो वृष्टिप्रसञ्जकाः, श्येनयागादय आभिचारिका. महाभिषेकादयो विजयफलकाश्चेत्येव वहवो यागविधय समाख्याताः । अत्रेदमपि युक्तमनुसधातुम् । यद्यपि यज्ञतपोदानानि सर्वसाधारणो धर्म्म. तथापि विशेषप्रतिपित्साया यज्ञप्रधानकर्म्मा मनुष्यव्यक्तिर्ब्राह्मण इत्युच्यते ब्राह्मणो हि यजते । तप.प्रधानकर्म्मा च क्षत्रियः । क्षत्रियो हि प्रतपति । दानप्रधानकर्म्मा तु वैश्य. सहि सर्वलोकोपयुक्तवस्तुसामग्रीसभारं सपाद्य सपाद्य जिघृक्षयोपसन्नाय समर्पयितुमीहते ।

यस्तु मनुष्यः स्वकर्तव्यकर्म्मसु यज्ञं वा तपो वा दानं वा कश्चिदप्येकं भाव प्राधान्येनासलक्ष्य सज्जते स शूद्र इत्युच्यते । शूद्रो हि परप्रेरितं कर्म्म करोति न तु कर्तव्ये विशिष्यस्वाध्यवसायमनुरक्षति । तदित्थं कर्मानुरोधेन चतुर्धा मनुष्यजातिर्विभज्यते । अथाऽन्ये पुनरत्र पश्यन्ति । विद्या-पराक्रम-धन, शारीरबलशक्तीनामेकैकस्या. सर्वजगच्छक्त्युपकारकत्वात् क्रमेणैकैकशक्तिसाधनाय मनुष्यास्तत्तदेकशक्तिसिद्धयनुकूलेपु कर्म्मस्वधिकृत्य नियमेन प्रवर्त्तिता. । तत्र विद्याशक्तिप्रधाना ब्राह्मणाः । पराक्रमशक्तिप्रधानाः क्षत्रिया. । धर्मशक्तिप्रधाना वैश्याः । शरीरबलमात्रप्रधाना शूद्राः, इत्येव प्रायेण सर्वजगन्मनुष्याश्चतुर्धा विभज्य सस्थापिताः । ब्राह्मणाना विद्याशक्तिर्ब्रह्मदेवाराधनसाध्या अग्निर्हि ब्रह्म । ब्राह्मणेन ब्राह्मणोऽग्नेश्छन्दसा वर्तितव्यम् । गायत्रमग्नेश्छन्द. । ब्रह्मवर्चसं हि गायत्री, गायत्रीछन्दस्यष्टौ वर्णा भवन्ति । वर्णोऽक्षरमित्यनर्थान्तरम् ।

तस्मादष्टमे वर्षे ब्राह्मणा उपनीता भवन्ति एवं क्षत्रियाणां पराक्रमशक्तिरिन्द्रदेवाराधनसाध्या । तस्मात् क्षत्रियेणेन्द्रच्छन्दस वर्तितव्यम् । त्रैष्टुभमैन्द्रच्छन्दः । वीर्यं हि त्रिष्टुप् । त्रिष्टुप् छन्दस्येकादशवर्णा भवन्ति तस्मादेकादशे वर्षे क्षत्रिया उपनीता भवन्ति । एवं वैश्यानां धनशक्तिर्विश्वेदेवाराधनसाध्या । आदित्या हि विश्वेदेवाः । तस्माद् वैश्येनादित्यच्छन्दसा वर्त्तितव्यम् । जागतमादित्यच्छन्दः । पशवो हि जगती । जगती छन्दसि द्वादशवर्णा भवन्ति । तस्माद् द्वादशे वर्षे वैश्या उपनीता भवन्ति । तदित्थ वर्णाच्छन्दसा नियमितेनैषां वर्तनादेते वर्णाच्छन्दोऽनुरोधेन वर्णा इत्युच्यन्ते ।

अथापि विद्यायाः सत्वप्रधानत्वादौपचारिकं शुक्लत्वम् । पराक्रमस्या प्रधानत्वादौपचारिकं रक्तत्वम् । धनस्य संङ्कीर्णगुणप्रधानत्वादौपचारिकं पीतत्वम् । शारीरबलस्य तु तमःप्रधानत्वादौपचारिकं कृष्णत्वम् । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" इति श्रुतौ सत्वादिगुणानां प्रकृतिशब्देनाभिप्रेतानामौपचारिकशुक्लादिवर्णैराख्यानात् सर्वेषामेवैषामर्थजातानां प्राकृतिकतया चतुर्भिर्व्यवस्था प्रवर्तते । तस्मात् सत्त्वप्रधानो ब्राह्मणः शुक्लो वर्णः, रजःप्रधानः क्षत्रियो रक्तो वर्णः, संकीर्णगुणप्रधानो वैश्यः पीतोः वर्णः ।

तमोगुणप्रधानः शूद्रश्च कृष्णो वर्णः—इत्येवमेते गुणानुरोधेनापि वर्णा इत्युच्यन्ते । तथा चैषां ब्राह्मणत्वाभिमानिनां विद्याशक्तिसाधनायाधिकृतानां स्वाधिकारवैमुख्येन वैश्यशूद्रादिकर्म्मसु भूयसी प्रवृत्तिर्दृश्यते वैश्यत्वशूद्रत्वाद्यभिमानश्च नास्ति । तत एव व्यभिचारादधर्म्मात् स्वधर्मपतितत्वाच्च नितरां भूयसा कृच्छ्रेण युक्ता दृश्यन्ते । एवं क्षत्रियवैश्यादयोऽपि स्वधर्मपतिता अवनतिभाजो दृश्यन्ते । तस्मात् सर्वैरेवेदमाप्तवाक्यं सर्वदा शरणीकरणीयम् । देशधर्मजातिधर्म-कुलधर्म्मादिश्चाम्नायैरविरुद्धाः प्रमाणम्—गौतमः—

जातिजानपदान् धर्मान् श्रेणीधर्म्मांश्च धर्म्मवित् ।
समीक्ष्य कुलधर्म्मांश्च स्वधर्मं प्रतिपालयेत् ।।

श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्म्मो भयावहः ।।

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ।।

अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ।।

सत्यञ्चैतत्, यदि हि नाम कश्चित् सैनिकत्वाभिमानी सैनिकाधिकारसिद्धमर्थं न कुर्य्यात्—वणिगधिकारसिद्धं वाणिज्यं च कुर्यात् तेनाऽवश्यं सैनिकत्वा-

भिमानः परित्यक्तव्यः स्यात् अथवा दण्डादिकृच्छ्रं भोक्तव्यं स्यात्। एवमेव यदि हि नाम कश्चिद् ब्राह्मणवंशजत्वाद् ब्राह्मणत्वाभिमानी क्षत्रियवंशजत्वात्क्षत्रियत्वाभिमानी ब्राह्मणाधिकारसिद्धं क्षत्रियाधिकारसिद्धं वार्थमुपेक्षमाणो वणिगधिकारसिद्धं वाणिज्यं कुर्यात् तेनावश्यं ब्राह्मणत्वाद्यभिमानः परित्यक्तव्यः स्यात्-अथवा दारिद्र्यादिकृच्छ्रं भोक्तव्यं स्यात्। सुखसौभाग्योपयिकसर्वकर्मपतितत्वात्। नास्य वाणिज्येनैवार्थसिद्धिः।

तदुपयुक्तकतिपययोग्यताया विषयसिद्धिकारणभूताया ब्राह्मणत्वाद्यभिमानेन प्रतिबाधादसत्त्वात्। नाप्यस्य ब्राह्मण्येनैव वार्थसिद्धिः। तदुपयुक्तकतिपययोग्यतासत्त्वेऽपि तादृशकर्मप्रवृत्तिवैकल्यात्तत्फलानुत्पत्तेः। तस्मादुभयतः पतितोऽसौ सुखप्रयोजकं न कञ्चन धर्मं धत्त इत्यवश्यं दुःखभाग् भवितुमर्हति। यदि तु कश्चिद् ब्राह्मणो वंशपारम्पर्य्यक्रमागतवाणिज्यव्यवसायमाहात्म्याद् वाणिज्योपयुक्तकतिपययोग्यमपि धत्ते। अथ च वाणिज्य एवाजन्म प्रवृत्तिं धत्ते सोऽयं यद्यप्यंशतः सुखसौभाग्यप्रयोजकं धर्मं धत्त इत्यवश्यं सुखसौभाग्येनाप्यसौ सपन्नः कथञ्चिद् भवत्येवेति दृश्यते। अथापि न तदानीमसौ ब्राह्मणो वक्तव्यः।

अकुर्वन् विहितं कर्म नरः पतनमृच्छतीति।<br>
वचनात्तस्य ब्राह्मण्यपतितत्वात्।<br>
स्वधर्मपतितो लोभात् परवृत्तिं समाश्रितः।

अभ्यासात् सम्यगासक्तस्तत्साम्यमुपगच्छतीति वचनात्तस्य वणिग्भूतत्वात्। यद्यपि योनिर्विद्या कर्म चेति त्रयः समुदिता ब्राह्मण्यहेतुस्तथा योनिःपशुः कर्म चेति त्रयः समुदिता वाणिज्यहेतुरित्याप्तसिद्धान्तादसौ वणिग्धर्मा ब्राह्मणो न ब्राह्मणो न वा वणिगित्येव युक्तपक्षः।

अनार्य्यमार्य्यकर्माणमार्य्यं चानार्य्यकर्म्मिणम्।<br>
सम्प्रधार्य्याब्रवीद्धाता न समौ नासमाविति॥

इति मनूक्तन्यायेनास्योभयतो वैलक्षण्याभ्युपगमात्।

तथापि योनेर्मुख्यत्वाभिमानिना जन्मना वर्णव्यवस्थापक्षपातिना योनेर्मुख्यत्वादसौ नाम्ना केवलं ब्राह्मणो व्यपदिश्यते। कर्मणो मुख्यत्वाभिमानिना कर्मणा वर्णव्यवस्थापक्षपातिना तु कर्मणो मुख्यत्वादसौ वणिगुपाधिनैव व्यवह्रियते। तदेतदुभयोः सामञ्जस्यं कर्तुमिव भगवानत्रिः—

देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः।<br>
पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः॥

कृषिकर्म्मरतो यश्च गवाञ्च प्रतिपालकः।
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते॥

इत्येवं पतितब्राह्मणान् सलक्षणं दशधा गणयामास यद्वा तद्वा भवतु इद त्ववश्यमत्राध्यवसीयते। यदिहेत्थं कश्चिदपि स्वाधिकारसिद्धं कर्म परित्यज्या-न्यथा वर्तमानो मर्य्यादाभङ्गकरो न त्वेव सुखीभवितुमर्हति। अधिकारोल्लङ्घन-स्याधर्म्मत्वादधर्म्मस्य च दुःखजनकत्वात्। एवं वेशभूषापरिच्छदा अपि स्वस्व-वृत्तिदेशकालकुलोचितास्तत्तद्वृत्तिदेशकालकुलपरिचयाय नितरामुपयुक्ता नाका-रण परित्यक्तुं युज्यन्ते। तस्माद्देशकालकुलवृत्तिसापेक्षो यस्य यादृशोऽधिकार-सिद्धो धर्म्मः पूर्वपुरुषैरस्मन्मान्यैर्नियमितस्तस्य तथैव परिपालनेऽस्माकमभ्युदयो नान्यथेति संसिद्धम्।

## ६. विधि-विमर्शः

विधि-निषेधार्थवादभेदेन वाक्यं त्रिविधम्। तत्र प्रवर्तकं वाक्यं विधिः। ओदनकामः पचेत स्वर्गकामो यजेतेत्यादिलौकिकालौकिक-वाक्यानां प्रवर्तक-कर्त्तव्यताज्ञानजननेन प्रवर्तकत्वाद्विधित्वम्।

अथ तरति मृत्युं तरति ब्रह्महत्यामित्यर्थवादानामपि फलसाधनता बोधद्वारा प्रवर्तकतया तत्रातिप्रसङ्गः। न च कर्त्तव्यता-बोधकवाक्यत्वं विधित्वं तच्च नार्थवादानामिति वाच्यम्। 'पाकं कुर्वीत' यागं 'कुर्वीते'त्यादिवाक्यासंग्रहात्, न हि तत्र कृतिसाध्यत्वरूपं कर्त्तव्यत्वं प्रतीयते, धात्वर्थकृतौ कृतिसाध्यत्वबाधेन लिंगात् तद्बोधनासम्भवात्। न च तत्र धातुना कृतिर्द्वितीयया च साध्यत्वरूपं कर्मत्वं प्रत्याय्यत इति कृतिसाध्यताबोधकत्वमनपवादमिति वाच्यम्। तर्हि पाकं करोतीति, "यागं करोतीति" वाक्यानामपि दर्शितरीत्या कृतिसाध्यताबोधकत्वेन तादृशार्थवादातिप्रसंगात्।

अथ विषयत्वरूपं कर्मत्वं न तु जन्यत्वरूपं प्रतीयत इति चेदुच्यते तदा पाकं कुर्वीतेत्यादावपि विषयत्वमेव कर्मत्वमित्यविशेषो दुर्वार एव। वस्तुतः पाकानुपधायकतद्विषयककृत्युत्तरकाले पाकं चकारेत्यादि प्रयोगविरहात् कृति-साध्यत्वमपि तत् कर्मताघटकमतो दुर्वार एवातिप्रसंगः। न च प्रवृत्तिजनक-कृतिसाध्यताबोजनकवाक्यत्व तत् पाकं करोतीति वाक्यजन्यकृतिकर्म्मताबोध-स्याप्रवर्तकत्वान्नातिप्रसङ्ग इति वाच्यम्।

तादृश वाक्य-जन्यज्ञानस्य कृतिसाध्यताविषयकत्वे प्रमाणान्तराधीनेष्ट-साधनताज्ञानसहकारेण तस्य प्रवर्तकताया दुर्वारत्वात्। उच्यते, इष्टसाधन-ताबोधकवाक्यं विधिः, पाकं कुर्वीतेत्यादिवाक्यं च धात्वर्थकृताविष्टसाधनता-

बोधकं पचेत्यादिवाक्यं च धात्वर्थपाकादौ तद्बोधकं सर्वत्र विधिप्रत्ययस्येष्टसाधनाबोधकत्वात्। न च न कलञ्जं भक्षयेदित्यादिनिषेधेऽतिव्याप्तिस्तस्यापि कलञ्जभक्षणाभावे नरकानुत्पादरूपेष्टसाधनताबोधकत्वादिति वाच्यम्।

क्रियाविशेषणतयैव विधिप्रत्ययस्येष्टसाधनताबोधकत्वव्युत्पत्तेः। निषेधस्थले च बलवदनिष्टाननुबन्धीष्टसाधनत्वाभावस्यैव क्रियाया बोधोपगमात्। क्रियाविशेषणीभूताभावविशेषणत्वेऽपि परस्परस्यैव इष्टसाधनत्वस्य क्रियाविशेषणत्वेन उक्तव्युत्पत्त्यभङ्गात्। अथैवमप्यभावविशेषणतयेष्टसाधनताबोधकत्वमादायैव निषेधातिप्रसङ्गो दुर्वारः, आश्रयतासम्बन्धेन इष्टसाधनताप्रकारकबोधजनकत्वनिवेशेऽपि आश्रयतया तद्विशिष्टपाकादिबोधकतदादिपदघटिते वाक्येऽतिप्रसङ्गः।

धातूपस्थाप्यार्थे साक्षाद्विशेषणतयेष्टसाधनताबोधकत्वविवक्षणे पाण्डित्यकामो जन्मतिथौ सामिषं न भुञ्जीतेत्याद्यभावविधावव्याप्तिरिति चेन्न, आश्रयतासम्बन्धेन प्रत्ययोपस्थापितेष्टसाधनत्वान्वितस्वार्थपरपदघटितवाक्यत्वस्य विवक्षणीयत्वात्, जन्मतिथावामिषं न भुञ्जीतेत्यादावामिषभोजनाभाव इष्टसाधनमिति बोधे आश्रयतयैवाभावे प्रत्ययोपस्थापितेष्टसाधनताऽन्वयः।

न कलञ्जं भक्षयेदित्यादौ कलञ्जभक्षणं बलवदनिष्टाननुबन्धीष्टसाधनत्वाभाववदित्यादिबोधे च नाश्रयतया इष्टसाधनतान्वयः। उक्तव्युत्पत्तिस्त्वप्रामाणिकीति भावः। न च क्रियाकार्यतामात्रस्य विधिप्रत्ययार्थतावादिमीमांसकानां मते स्वर्गकामो यजेतेत्यादिसकलविधीनामेव नैतल्लक्षणेन संग्रहः, यतः इष्टसाधनताया विधित्वानभ्युपगमे पाकं कुर्वीत पाकं करोतीति वाक्यजन्यबोधाविशेषेण एकस्य प्रवर्तकता नापरस्येत्यनुपपत्तेः, तन्मतं विचारासहमेव, अतो मीमांसकमतेऽपि कृतिसाध्यत्वमिष्टसाधनत्वं पृथग्विध्यर्थ एव, परन्तु न्यायमतवन्मिलितं तदुभयं न विध्यर्थं, अतोऽहरहः सन्ध्यामुपासीतेत्यादौ तन्मते अयोग्यतया इष्टसाधनतानन्वयेन केवलकृतिसाध्यताबोधनिर्वाहः। अत एव विलम्बभाविफलसाधनक्रियाविधायकवाक्येन व्यापारगतस्वर्गादिफलसाधनताबोधनमपि तेषामुत्पद्यत इति युक्तमुत्पश्यामः।

न चैवमुक्तलक्षणेनाहरहरित्यादि नित्यविधीनां न तन्मते संग्रह एवेति वाच्यम्, इष्टसाधनत्वद्विष्टसाधनत्वाभाववत्त्वयोरिच्छाविषयताप्रयोजकधर्मत्वेनानुगमय्य लक्षणे निवेशनीयतया नित्यविधिसंग्रहसम्भवात्।

'नित्यविधिस्थले लिङ्पदस्य द्विष्टसाधनत्वाभाववत्त्ववाचकतामभ्युपेत्यैव तस्य प्रवर्तकत्वनिर्वाहात्। न्यायमते च नित्यस्थलेऽपि सर्वत्रेष्टसाधनत्वमेव

१. तथा च आश्रयतासम्बन्धेन प्रत्ययोपस्थितेच्छाविषयताप्रयोजक-धर्मान्वितार्थपरपदघटितवाक्यत्वं विधित्वमिति तु परमार्थः।

विध्यर्थः, सन्ध्योपासनादेरपि ब्रह्मलोकगमनादिसाधनताया अर्थवादेन बोधनात् । मुमुक्षवोऽपि प्रत्यवायानुत्पादरूपफलसाधनताबोधात् तत्र प्रवर्तन्ते, अतस्तादृशफलसाधनत्वमपि तत्तद्विध्यर्थः, तत्साधनत्वञ्च क्षेमसाधारणम् ।

अथ स्वर्गकामो यजेतेत्यादिना स्वर्गादिसाधनत्वमेव प्रतीयते न तु तात्पर्यभ्रमादपि इष्टान्तरसाधनत्वमिति समभिव्याहृतपदोपस्थापितकामनाविषयतावच्छेदकावच्छिन्नसाधनत्वे विधिप्रत्ययशक्तिः स्वीकार्या, तथा च सन्ध्यावन्दनादिविधौ फलकामवाचकपदाभावात् कथं फलसाधनताबोधः । यदि च विश्वजिता यजेतेत्यत्रैव फलकामवाचकपदं तत्राप्यध्याह्रियते अर्थवादोऽपि विध्युत्थापितो विधिप्रत्ययस्य स्वोपस्थापितत्वात्तत्कामवाचकपदाध्याहार उपयुज्यते । अतो विधेरिष्टसाधनताबोधकत्वमित्युच्यते तदा ब्रह्मलोकावाप्त्यादिरूपभावफलकामबोधकपदमात्रसमभिव्याहारकल्पने मुमुक्षावशेन तत्कामशून्यस्यानधिकारापत्तिः ।

नरकाभावरूपफलकामबोधकपदमात्रसमभिव्याहारकल्पने च भावफलकामनाया अधिकारत्वानुपपत्तिः । उभयफलकामबोधकपदसमभिव्याहारकल्पने च संवलिताधिकारापत्त्या एकैकमात्रफलकामस्याधिकारो न स्यादिति तस्याकारणं प्रत्यवाय नानुबध्नीयात् । यदि च फलद्वयकामनायाः पृथक् पृथक् धर्मिविशेषणतया बोधकम् अधिकारिपदं कल्प्यते तदा वाक्यभेदापत्तिर्वाक्यार्थभेदात् ।

यदि च नरकनिवृत्तिब्रह्मलोकावाप्तिकाम इत्यादिपदमेव कल्प्यते अत्र च एकफलविशेष्यतापन्नकामनायामपरस्य एककामनाविशेष्यतापन्नधर्मिणि अपरकामनाया वा अन्वयेन तात्पर्यमुपेयते येनोभयकाम एवाधिकारी स्यात्, अपितु एकफलधर्मितावच्छेदकतापन्नकामनात्वावच्छिन्ने तत्फलविषयककामनासाधारण्येन फलान्तरान्वये कामनान्वयस्य च शौचादिरूपपरस्परधर्म्मितावच्छेदकतापन्नधर्म्मावच्छिन्ने परस्परानाश्रयसाधारण्येनान्वये तात्पर्यं, एवं सति वाक्यभेदस्याप्यनवकाशः विशेषणद्वयनिरूपितविशेष्यतयोरभेदस्यावच्छेद्यावच्छेदकभावस्य वा विशेष्यभेदेनासम्भवेऽपि तदुभयनिरूपितधर्मितावच्छेदकतारूपविषयताया अभेदस्यावच्छेद्यावच्छेदकभावस्य वा सत्त्वात् । अत एव सर्वेभ्यो दर्शपौर्णमासावित्यत्र प्रकृतवाचिशब्दोपस्थाप्य पुत्र-पश्वादिफलानां तत्कामनानाञ्च दर्शितरीत्या पृथक्पृथगेव कामनाधिकारिरूपविशेष्ययोरन्वयेऽपि न वाक्यभेदः न वा धवखदिरौ छिनत्तीत्यादौ भिन्न-भिन्नकर्मत्वस्य छिदादिविशेषणत्वेऽपि तथा, तथासति समासानुपपत्तेः। न चैवमपि कामनाया अधिकारिविशेषणत्वे कामनाशून्यशौचादिमतां सन्ध्योपासनाद्यकरणे प्रत्यवायो न स्यादिति वाच्यम् ।

निन्दार्थवादस्य कामनाद्यधिकाररहितमाचारणशौचादिमत एवाकरणे प्रत्यवाय इत्यत्र तात्पर्यात् । अत एव समर्थस्यातिक्रम्य तदनुष्ठानवैमत्य तादृशस्य प्रत्यवाये द्वेषेण तत्परिजिहीर्षावश्यकत्वात् यस्य च प्रत्यवाये न बलवान् द्वेषोऽपि तु नान्तरीयकप्रमादादेव तेनानुष्ठीयत एव तत्तत्कर्मत्युच्यते तदापि सकृद-नुष्ठितात् दर्शपौर्णमासादितः पुत्रपश्वादिरूपनानाफलानामिव तादृशात् सन्ध्यावन्दनादिनित्यकर्मणोऽपि नरकनिवृत्तिब्रह्मलोकावाप्त्यादिरूपफलद्वयस्या-सिद्धिप्रसङ्गः ।

उत्पत्तिवाक्ये फलस्य समुच्चयबोधकत्वे वैकल्पिकमेव फलमिति योग सिद्धिप्रकरणसिद्धान्तात् । न च तादृशस्थले भावरूपफलानामेव समुच्चय न तु भावाभावरूपफलयोरपीति वाच्यम् । बीजसाम्येनाविशेषात् । उत्पत्तौ फलाना यत्र एककामनया युगपदन्वयरूपो यागो नास्ति तत्र मिलितफलकामनया एकम-नुष्ठान न शास्त्रार्थ इत्येव हि उक्तसिद्धान्तबीज तद्भावाभावरूपफलसाधारण-मपि । न च तत्तत्कामनात्वेन कामनाया अधिकारतया समूहालम्बनकामनावतो विभिन्नकामनारूपवतो वा अधिकारो व्याहत एव समूहालम्बनादिरूपकामनायाः प्रत्येकं तत्तत् फलविषयत्वाक्षतेरित्यसौ सिद्धान्तो निर्युक्तिक एवेति वाच्यम् । शब्दानामवधारणपरताया औत्सर्गिकतया असमुच्चितनत्तत्फलकामबोधकपदाना तत्तत्फलमात्रकामपरतया समूहालम्बनादिरूपकामनावतोऽनधिकारस्य युक्ति-त्वात् ।

अत्रोच्यते नित्यकाम्यस्थलेऽनिष्टनिवृत्तिसंवलिततत्तत्फलकाम एवाधिकारी अतो जयन्तीव्रतादितः सकृदनुष्ठितादपि प्रत्यवायपरिहारतत्तत्फलञ्च सिध्यति, एवं सन्ध्यावन्दनादितोऽपि । न चैव प्रत्यवायपरिजिहीर्षामात्रेण मुमुक्षूणा तत्तत्क-र्मानुष्ठानानुपपत्तिरनधिकारित्वादिति वाच्यम् ।

समुच्चितफलकामाधिकारिककर्मणि एकैकफलकामनासहकारेणापि तत्तत् कामनाविषयफलजनकत्वोपगमात् । अन्यथा काश्यादिमृतस्य नरकाद्यभावनिश्च-येन तन्नरकोद्धारादिकामनारहिततत्पत्न्यास्तत्सहमरणस्य सकलशिष्टसम्मतस्या-नुपपत्ते । व्यालग्राही यथा व्यालमित्यादिवचनैः पत्युर्नरकोद्धारादिफलसहितस्व-र्गभोगस्य सहमरणफलत्वबोधनात् । तत्तत्कामनाशून्यायाः सहमरणानधिकारात् । अत एव एतान् महाराजविशेषधर्मानित्यादिवाक्यबोधितमहस्रप.अवृत्तनेकलोक-भोगपूर्वकविष्णुलोकगमनादिफलकतडागयागादिकमपि केवलविष्णुलोकगमनादि-फलकामनया शिष्टैरनुष्ठीयते ।

यदि च तादृगाचारबलात्प्रत्येकफलकामकर्तव्यताबोधकश्रुतिरपि तत्र कल्प्-यते इत्युच्यते तदा प्रकृतेऽपि तादृशश्रुत्यन्तरमाचारवशादुपेय, तदुभयफलकामन-

यापि शिष्टानां सकृदनुष्ठानात् समुचितफलकामकर्तव्यत्वबोधकमपि श्रुत्यन्तरं गत्यन्तरविरहस्य तुल्यत्वादित्यलं विस्तरेण।

अथ क्षेमसाधनत्वस्य विध्यर्थत्वे न कलञ्जं भक्षयेदित्यादिनिषेधस्थले कलञ्जभक्षणेन तत् कृत्या वा प्रतियोगितया अन्वितेनाभावेन नरकनिवर्तिरूपेष्टसाधनत्वस्यान्वयः किमिति नोपेयते बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य पृथक् शक्त्या बलवदनिष्टासाधनत्वमात्रस्य वा विध्यर्थस्य क्रियामभावबोधकत्वोपगमे व्युत्पत्त्यन्तरस्य कल्पनीयतया गौरवात्।

नञर्थाभावे इष्टसाधनताबोधकत्वव्युत्पत्तेरभावविधिस्थले भवतोऽप्यावश्यकत्वात्। न चैवमभावविधिवत् निषेधोऽपि अभावप्रवर्तक एव स्यात् न तु प्रतियोगिगोचरनिवृत्तिप्रयोजकः प्रतियोगिनि द्विष्टसाधनत्वाबोधनादिति वाच्यम्। प्रतियोगिनो द्विष्टसाधनतां विना तदभावस्य द्विष्टाभावसाधनत्वानुपपत्त्या उत्तरकालं तत्कल्पनया प्रतियोगिगोचरनिवृत्तिनिर्वाहात्। न च विधिनिषेधयोरविशेषः अभावरूपेष्टसाधनताया विधिस्थले निषेधस्थले चाभावरूपवरसाधनताया बोध इति विशेषात्। न चाभावविधिस्थलेऽपि अभावे इष्टसाधनतान्वयमनभ्युपगम्य प्रतियोगितान्वयेष्टाभावसाधनत्वरूपानिष्टसाधनत्वबोधः किन्नोपेयते प्रतियोगिन इष्टाभावसाधनत्वमभावस्येष्टसाधनत्व-निर्वाह्यमित्युत्तरकालमभावे इष्टसाधनत्वकल्पनयैव तद् गोचरप्रवृत्तिनिर्वाहसम्भवादिति वाच्यम्। एकादश्यामुपवसेत् जन्मतिथावामिषं परिहरेदित्याद्यभावविधौ धात्वर्थ एवाभावस्य प्रतियोगिभोजनादिविशेष्यतयाऽन्तर्भावात् अनिष्टासाधनत्वरूपविध्यर्थाभावस्य प्रतियोगिनि बोधासम्भवेन[1] न भुञ्जीत उपवसेदित्यादिविधिवाक्यानामनुभवसिद्धाविलक्षणबोधजनकतानुभवानुरोधेनाभावे इष्टसाधनता बोधस्यैव सर्वत्राभावविधिस्थले स्वीकर्तुमुचितत्वात्। मैवम्। रात्रौ श्राद्धं न कुर्वीतामावास्यायां श्राद्धं कुर्वीतेत्यादौ एकक्रियावैयर्थ्यभयेन नञः पर्युदासत्वासम्भवेन प्रतिषेधवचनताया आवश्यकत्वात्। रात्रिश्राद्धकरणस्य नरकासाधनत्वेन तद्भावस्य नरकाभावासाधनतया क्रियायामिष्टसाधनत्वाभावबोधस्यावश्याभ्युपेयताच्च क्रियायां लिङर्थाभावबोधकताया नञो व्युत्पन्नत्वान्निषेधान्तरस्थलेऽपि तत्र तदभावबोधे बाधकाभावात्। अभावविधावेव तत्रेष्टसाधनताबोधात्।

अथ भोजनाभावादेरजन्यस्य कृत्यसाध्यतया तत्र प्रवृत्तेरसम्भवात् कथमुपवसेदित्यादेरभावविधित्वमिति चेत्सत्यम्। एकदा प्रतियोग्यभावयोरप्रवृत्तेस्तयोरेकगोचरप्रवृत्तेः प्रतिबन्धकतया भोजनाभावकृते भोजनाद्यनुकूलकृतिविघटनेन भोजनाद्यभावस्य निर्वाहकत्वात्। तदगोचर-प्रवृत्तौ क्षम-साधारणतत्सा-

---

१. एकदेशेऽन्वयस्याव्युत्पन्नतया धात्वर्थैकदेशे अन्यथासद्भाव इति भावः।

घनत्वस्याक्षतत्वेन तस्यापि कृतिसाध्यत्वात् । अभावे प्रवृत्तौ प्राणपवक-सचारा-भावे प्रवृत्त्या कुम्भकस्य प्रय नसाध्यतानुपपत्त्या प्राणायामस्याप्रयत्नसाध्यतानुप-पत्तेश्च । क्रियाविरहस्य तत्साध्यताया अवश्योपपादनीयत्वात । विधिश्चतु-र्विध उत्पत्तिविधि, विनियोगविधि अधिकारविधि, प्रयोगविधिश्चेति । कर्मादे प्राथमिकप्राप्तिर्येन स उत्पत्तिविधि प्रथमप्राप्तेरुत्पत्तित्वात्, प्राप्ति प्रवृत्ति-विषयताप्रयोगप्रतीति । दध्ना जुहोतीत्यादे प्रमाणान्तरप्राप्तहोमादिकमनूद्य-दध्यादिरूपगुणविधायकस्य होमादिकर्मोत्पादकत्वाभावात् । प्राप्तौ प्राथमिक-त्व विशेषणम् । उत्पत्तिविधिश्च कश्चित् कर्ममात्रोत्पादक यथा अग्निहोत्र जुहोतीत्यादि, कश्चिद्गुणविशिष्टकर्मोत्पादक यथा सोमेन यजेतेत्यादि, तत्र विशेषणीभूतसोमादिद्रव्यस्याप्यप्राप्ततया विधेयत्वात । कश्चित् प्राप्ते कर्मणि गुणमात्रविधायक, यथा–दध्ना जुहोतीत्यादि उपसद्भि[1] चरित्वामासमग्नि-होत्र जुहोतीत्यादिश्च । दध्ना जुहोतीतिवत् न यावज्जीवमग्निहोत्र जुहोतीत्या-दिविधिप्राप्ताग्निहोत्रानुवादेन द्रव्य–कालाभयावधि गुणद्वयस्य मियोविशेष्य-विशेषणभावानापन्नस्य विधाने विधेयताभेदेन वाक्यभेदप्रसगात् विधेयताद्वयस्य परस्परनिरूप्यनिरूपकभावविरहेण तच्छालिधियो विशृखलसमूहालम्बनरूपतया तज्जनकवाक्यस्यैकवाक्यत्वासभवात् अतोऽसौ गुणद्वयविशिष्टगौणाग्निहोत्रपरार्थ-रूपकर्मान्तरविधिरेव, तथा सति च न वाक्यभेद ।

इतरविशेषणतया विधेयकोटिनिविष्टयोरेकविशेष्यता निरूपितविशेषण-तापन्नयोर्विधेयघटकतया विधेयताद्वयस्य स्वनिरूपकविशेष्यताद्वारा निरूप्यनिरूप-कसम्भवात् प्राधान्येन द्वयोर्विधाने प्रधानयो. परस्परापेक्षाविरहेणानुवाद्यविशेष्य-ताविधेयताभेदेन विधेयद्वयविषयतयाविशृखलतया तथा सत्येव वाक्यभेदात् । विनियोगे विधश्च विनियोगेन परार्थतया अन्यविध परार्थत्वमेव च शेषत्वम्, परोपकार्यत्वमेव शेषित्वमिति मीमासकपरिभाषा ।

न च काम्यकर्मणः उत्पादकस्य स्वर्गकामो यजेतेत्यादिविधेरपि विनियोग-विधित्वापत्ति तत्र क्रियाया. पुरुषार्थसाधनत्वरूपशेषत्वेन विधानादिति वाच्यम् । तत्र क्रियाया कृतिसाध्यतया विधानमादाय उत्पत्तिविधित्ववत् पुरुषार्थसाधन-ताविधानमादाय विनियोगविधित्वस्येष्टत्वात्, क्रियोत्पत्तिविधित प्रथम क्रिया-कर्तव्यतयैव प्रतीयतेऽनन्तर च कुतैतदुपयोग इत्याकांक्षाया पुरुषार्थोपयोगिना-प्रतीतिरिति फलभेदेन एकविधेरेव उभयविधित्वौचित्यात् । विनियोगविधिश्च यत्र न प्रत्यक्ष तत्र मन्त्रलिगादिना कल्प्य । मन्त्रलिङ्गञ्च मन्त्रस्य विनियोग-साधनोपयोग्यर्थप्रकाशनसामर्थ्यं तदुक्त क्षमता च लिगमिति यथा बर्हिर्देवसदन दामीत्यादिमन्त्रस्य बर्हिच्छेदादिप्रकाशनसामर्थ्य, तल्लिगकानुमानञ्चाय मन्त्रो

---

१. उपसद्भि सतिलव्रीहिभिरित्यर्थ ।

वर्हिच्छेदने विनियुक्तः असति वाधके तत्प्रकाशकत्वात् यो मन्त्रोऽसति वाधके यत् कर्मप्रकाशकः स तत्र विनियुक्तः क्रव्यादांशप्रक्षेपप्रकाशतद्विनियुक्तः क्रव्यादमग्निमित्यादिमन्त्रवदित्यादि ।

यत्र लिंगेनान्यत्र विनियोगः सेद्धुमर्हति श्रुत्या चान्यत्र तत्र श्रौत एव विनियोगः, न तु लैङ्गिकः, श्रुतिश्च विभक्त्यन्तपदश्रवणं, तदुक्तं श्रुतिर्द्वितीयेति, द्वितीयापदं विभक्तिमात्रोपलक्षकं यथा ऐन्द्र्यागार्हपत्यमुपतिष्ठत इत्यत्र इन्द्रप्रकाशकमन्त्रस्य गार्हपत्योपस्थाने विनियोगसिद्धिर्न तु इन्द्रोपस्थापने, तथाहि तत्र द्वितीयाविभक्तिरूपस्य गार्हपत्याग्नेरुपस्थेयत्वरूपं शेपित्वं ऐन्द्र्या तृतीयया च इन्द्रमन्त्रस्य उपस्थानकरणस्वरूपं शेषत्व झटिति वोध्यते, मन्त्रस्य इन्द्रप्रकाशकतया लिंगेन च इन्द्रोपस्थानकरणरूपत्वविनियोगसिद्धिश्च विलम्बेनैव, यतो मन्त्रस्य स्वार्थप्रकाशने सत्येव इन्द्रप्रकाशनसामर्थ्यं ग्रहीतव्यं तदनन्तरमेव च तादृशज्ञानादिन्द्रोपस्थानकरत्वसिद्धिर्भविष्यति, तत्पूर्वमेव मन्त्राधीनेन्द्रबोधनिरपेक्षया श्रुत्या गार्हपत्योपस्थानं करणत्वं वोध्यते । एवञ्च विनियोगाकांक्षाविरहान्न लैंगिको विनियोगश्च सिद्ध्यति । तदुक्तं पार्थसारथिमिश्रैः श्रुतिलिंगाधिकरणे यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते तावदेव श्रुतिमन्त्रं गार्हपत्यार्थतां नयेदिति ।

एतच्च ऐन्द्रीपदमिन्द्रविशेषे रुढमित्याशयेन तस्य योगेनेन्द्रप्रकाशकत्वार्थकत्वे ऐन्द्रीपदादेरसामर्थ्यरूपलिंगज्ञानात्तत्र मन्त्रजन्यशाब्दवोधापेक्षाविरहेणासंगत्यापत्तेः, श्रुति-लिंग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्वल्यमर्थप्रकर्षादिति सूत्रोक्तं श्रुत्यापेक्षया लिंगस्य विलम्बेनार्थवोधकतया दौर्वल्यमपि निराकांक्षतया विनियोगासाधकत्वमेव ।

अथात्र श्रुतिमात्रेण न लिंगविरोधः द्वितीया-तृतीयाभ्यां प्रतियोग्यनुपरोक्तशेषिभावबोधनात्तादृशस्य ऐन्द्र्याः शेषत्वस्य गार्हपत्ये शेपित्वस्य च भिन्नभिन्नप्रतियोगिसाधारणस्याविरोधादिति प्रतियोग्युपस्थापकसमभिव्याहृतगार्हपत्यादिपदसहकारणैव प्रतियोगिविशेषोपरक्तयोः शेष-शेपिभावो मन्त्रबोध्यशेषशेपिभावविरुद्धः श्रुत्या प्रतिपादनीयः, तथा च समभिव्याहृतपदसमुदायरूपवाक्येनैव विरोधः वाक्यस्य च लिंगापेक्षया दौर्वल्ययुक्तसूत्रसिद्धमिति कथं लैंगिकविनियोगविरोध इति चेत् सत्यं, मिश्रैरेव शेष-शेपित्वमात्रं हि श्रुत्यैन्द्रीगार्हपत्ययोरुक्तः, अन्योन्यविषयनियमस्त्वेकवाक्यत इति कारिकया उक्तपूर्वपक्षमाशंक्यस्यायं वाक्यविरोधोऽस्ति श्रुतितोऽपि विरुध्यते ।

सहिते हि विरुध्येते न तु लिंगेन केवल इति समाहितम् । यद्यप्येदपि समाधानं शिथिलं तथा हि गार्हपत्यपदस्य लक्षणमेन्द्रपरत्वे द्वितीयाया आधारार्थकत्वे वा वाक्यस्य लिंगे नाविरोधनिर्वाहात् द्वितीयान्तगार्हपत्यपद-

श्रवणमानात् योऽर्थः, प्रतीयते तद्घटितवाक्यार्थस्यैव लैंगिकार्थविरोधेनास्ता श्रुत्यापि लिङ्गविरोध, तथापि पदान्तरैकवाक्यतासहकृतश्रुतिलभ्यार्थस्य विलम्बेन प्रतीयमानतया केवलश्रुतिलभ्यस्य शीघ्रोपस्थितिकार्थस्याविरोधेन लिङ्गार्थबाधानुपपत्तेः।

अन्यथा वाक्यमात्रस्य विरोधेनापि लिंगार्थबाधापत्ते तथापि शब्दविषया वाक्येन या लिंगविरुद्धार्थ प्रकाश्यते साऽपि लैंगिकार्थापेक्षया शीघ्रोपस्थितिक वाक्यस्यैन्द्रीपदोपस्थापितमन्त्रजन्यशाब्दबाधसापेक्षलिंगज्ञानाधीनानुमित्यपेक्षया प्रथमत एव श्रौतमुख्यार्थघटितवाक्यार्थस्य शाब्दबोधात् । तथा च वाक्येनापि प्रकृते लिंगस्य निराकांक्षतावाक्यलिंगस्य बलीयस्त्व च स्यान्न ते कृणोमीत्यादावेव तत्र सदनसादनार्थकयोर्मन्त्रपूर्वोत्तर-प्रतीकयो. प्रत्येक सदनसादनार्थकत्वे गृहीत एव सादनस्य सदनकल्पनप्रयोजकत्व गृहीत्वा कल्पयामीत्यन्नेन किमर्थ सदन-करणमित्याकांक्षोत्थापनात् तदाकांक्षातस्तस्मिन् सीदामृते इत्यादे. प्रवृत्ति-रित्याकाररूपरसाकांक्षास्वरूपैकवाक्यताग्रहसम्भवात्तल्लिंगककार्यविनियोगसिद्धे[1] पूर्वमेत सदनसादनरूपार्थप्रकाशनसामर्थ्यलिंगेन पृथक् तत्तदर्थं विनियोगसिद्धि-रिति वाक्यस्य निराकांक्षतया विनियोगाराधकत्वात् ।

मन्त्रलिङ्गवत् कथितसूत्रनिर्दिष्टवाक्य प्रकरण-स्थान-समाख्यानामप्य-नुमानोत्थापकतयैव विनियोगसाधकत्व बोध्यम् । सूत्र लिंगपद मन्त्रलिंगपरमेव, लिंगसामान्यपरत्वे वाक्यादिचतुष्कस्यापि तदन्तर्भावेनैव पृथगुपादानासगतेः । तत्र वाक्य पदानामेकवाक्यता पूर्व कथिता प्रकरण मज्ञातयागस्तस्य शेषिणः कथंभावरूपाकांक्षाभिधानम्, स्थान तत्सान्निध्य समाख्या अवयवशक्त्या उपयुक्तार्थ-समर्थनम्, तथा चोक्त श्रुतिर्द्वितीया क्षमता च लिंग वाक्य पदान्येव सहतानि । सा प्रक्रिया या कथमित्यपेक्षा स्थान क्रमो योगबल समाख्येति लिङ्गादीना स्मृत्याचारवत श्रुतिकल्पकत्वेऽपि बलवत् प्रत्यक्षसिद्धश्रुत्यादिविरोधस्थले न तद्-विरुद्धार्थकश्रुतिकल्पनसम्भव. । तद्विरोधेन तद्विरुद्धार्थे लिंगादेव प्रवृत्त. प्रत्यक्ष-श्रुतिविरुद्धे यथा श्रुतार्थे स्मृतेरिवेति ध्येयम् । एतेषामुदाहरणानि अन्यत्राप्य-नुसन्धेयानि ।

विनियोगविधिरपि अपूर्वविधि-नियमविधि-परिसंख्याविधिभेदात् त्रिधा । य विधि विना कथमपि तदर्थगोचरप्रवृत्तिर्नोपद्यते तदपूर्वविधि', नियतप्रवृत्ति-फलका विधि. नियमविधिः, स्वविषयादन्यत्र प्रवृत्तिविरोधी विधि. परिसंख्या-विधि, तदुक्त विधिरत्यन्तमप्राप्तौ नियम. पाक्षिके सति । तत्र चान्यत्र च परि-सख्येति गीयते ।

---

१. परभाग पूर्वभागप्रयोज्यफलप्रयोजकः पूर्वभागोन्याकांक्षानिवर्तकत्वादित्यनुमानेन भागद्वयप्रजोज्यैकफलसिद्धौ समुदायमन्त्रस्यैकार्थविनियोगसिद्धिरिति भाव ।

अत्यन्तमप्राप्ताविति सत्यामिति शेषः सतीत्यग्रिममेव वा विपरिणमय्यात्रापि योज्यं, अत्यन्तपदञ्च नाप्राप्तिविशेषणपरं भिन्नाविभक्तिकत्वात्, किन्तु सत्यामित्यत्र सधातुस्तदर्थभवनरूपक्रियाविशेषणपरम्, अतो द्वितीयान्तता, अप्राप्तिभवनविशेषण फलतो प्राप्तिविशेषणमेव अत्यन्ताप्राप्तिविधिं विना तद्विषये रागतः शास्त्रतश्च कदाचिदपि प्रवृत्त्यसम्भवः स तु प्रवर्तकः पूर्वविधिरित्यर्थः।

एवं भूतश्च विधिर्व्रीहीन् प्रोक्षतीत्यादिः, व्रीहिसाध्यपुरोडाशद्रव्यकयागजन्यापूर्वार्थिनां व्रीहिप्रोक्षणादौ प्रवर्तको विधिः, अप्रोक्षितव्रीहिभिरपि अवहत्तैर्यागनिर्वाहकपुरोडाशसम्भवात् प्रोक्षणे व्रीहिसंस्कारद्वारा यागोपकारकत्वस्य तेन विधिना अबोधने कथमपि तत्र प्रवृत्तिर्न स्यादिति प्रकारान्तरासंभवात्, प्रवृत्तिविषयताकप्रोक्षणप्रवर्तकतया तत्रोक्तलक्षणसमन्वयः।

नियमः पाक्षिके सतीति विधिं विना प्रवृत्तेः पाक्षिकत्वे सतीत्यर्थः प्रवृत्तेरनियमे सतीति यावत्। तथा च तद्गोचरप्रवृत्तिनियमनिर्वाहको विधिस्तन्नियमविधिरिति फलितं, तादृशश्चावघातादिविधिः व्रीहीनवहन्तीति विधिं विना पुरोडाशनिष्पादकव्रीहिवैतुष्यद्वारा यागोपकारके अवघाते इव तत्परिहारेण नखदलनादावपि प्रवृत्तिप्रसक्त्या अवघाते प्रवृत्तिनियमो न स्यादिति तादृशविधेः प्रवृत्तिनियामकनिर्वाहकत्वम्। यागोपकारकव्रीहिवैतुष्ये अवघाताधीनत्वनियमस्तादृशविधितो यद्यपि दुर्लभः नियमस्यापदार्थत्वादेकवाक्यार्थत्वाच्च। तथापि तादृशविधितो व्रीह्यवघातत्वेन विनियोगसाधनतावगमात् यागजन्यपरमापूर्वस्य तदवघातरूपकारण विना अनिष्पत्तिप्रतिसन्धानेन तत्र नियमतः प्रवृत्तिनिर्वाहः।

तत्र चान्यत्र चेति यत्रोद्देश्ये यस्य विधानं तदन्यस्मिन्नपि तत्सम्बन्धस्य तस्मिन् वा तदन्यसम्बन्धस्य प्रवृत्तितः प्रसक्तेरित्यर्थः, तथा च तादृशसम्बन्धप्रसञ्जकः प्रवृत्तिविरोधी विधिः परिसंख्याविधिरित्यर्थः।

तत्र प्रथमः इमामगृभ्णन् रसनामृतस्येत्यश्वाभिधानीमादत्ते इत्यत्र इमामित्यादिमन्त्रस्य रसनामात्रग्रहणप्रकाशकतया अश्वरसनादान इव गर्दभरसनाया आदानेऽपि मन्त्रस्य विनियोगो मन्त्रलिंगाल्लभ्यते तथा च तदादानकालेऽपि तन्मन्त्रपाठप्रवृत्त्या तत्रापि तन्मंत्रसम्बन्धः स्यादेव चेदेतद्विधिर्न स्यात्, एतस्माच्च विधितः प्रथममश्वरसनाग्रहणे एतन्मन्त्रविनियोगलाभे निराकांक्षतया एतद्विधेर्विधयत्वेतरोद्देश्यसम्बन्धप्रसज्यप्रवृत्तिविरोधिता। द्वितीयश्च गृहमेधीये आधाराज्यभागौ जुहोतीति अत्रातिदेशं न प्रकृतीभूतदर्शाङ्गस्य प्रयाजादेराघाराज्यभागहोमस्य गृहमेधीयाज्यानुद्देश्ये सम्बन्धलाभादीदृशविध्यसत्वे च इति कर्तव्य-

तान्तर्गतस्याज्यभागहोमस्य विधानेनेति कर्तव्यतान्तर्भूतहोमसमुदयाकाङ्क्षानुपपत्त्या एव च प्रयाजादिप्रापकातिदेशप्रवर्तकतया तन्निवृत्त्यातिदेशाप्रवृत्तौ तत्प्रापणीय-प्रयाजादिनिवृत्तिः।

अथ व्रीहीनवहन्तीति नियमविधिदर्शितपरिसंख्याविध्योः को विशेषः नियमविधेरपि परिसंख्यावदितरनिवृत्तिफलकत्वात् नियमविध्यसत्वे पुरोडाशद्वारा यागोपकारकवैतुष्यार्थिनोऽवघातेतरतदुपाये प्रवृत्तिशङ्के।

यदि चावघातनियमविधेरवघातप्रवृत्तिनियमफलकत्वं परिसंख्यातो विशेष इमामगृभ्णन् रशनामित्यादिपरिसंख्याया अश्वरशनादाने मन्त्रपाठप्रवृत्तिनियमस्य मन्त्रलिङ्गेन मन्त्रस्यासाधारण्येन उपकारकतावाधनादेव निर्वाहात् तस्याः प्रवृत्तिनियमानुपपादकत्वादिति विभाव्यते, तदास्तु परिसंख्याया नियमान्तर्भाव, नियमस्तु परिसंख्यायामन्तर्भवतु परिसंख्याफलस्य तत्साधारण्यादिति चेन्नियम-स्थले इतरनिवृत्तस्यतः सम्भवेऽपि तत्र तत्तात्पर्याभ्युपगमात्। न चापायान्तर-निवृत्यापि नियमतोऽवघातप्रवृत्त्युपपत्तेर्निवृत्तावेव तात्पर्यं न तु नियमप्रवृत्ता-वित्येव किं नापेयत इति वाच्यम्।

अवघातविधिना अवघातस्यासाधारण्येन यागोपकारकताबोधनेऽपि अव-घातमात्रेण वैतुष्यानिर्वाहप्रतिसन्धाने अन्यापायसम्वलनेनाप्यवघातप्रवृत्तिसम्भवा-दवघातविधेरितरनिवर्तकत्वायोगेन तस्येतरनिवृत्तौ तात्पर्यासम्भवात्।

अथ तयासत्युपायान्तरसम्वलितावघाताधीनमपि वैतुष्यं शास्त्रार्थं इति चेदिष्यत एवैतत्।[1] अत एव इतरसम्वलनस्याशास्त्रार्थत्वे नियमोनेष्यते यथा पञ्च पञ्च नखा न् भुञ्जीतेत्यादौ तत्र पञ्चनखभक्षणे शशकादिपञ्चकरूपक-र्म्मनियमे मिलितशशकमार्जारादिमांसभक्षणे नियमानुल्लङ्घनान्नियमेनेतरनिवृत्य-सम्भवात्।

अत एव तत्र दोषत्रयदुष्टोऽपि अगत्या परिसंख्या स्वीक्रियते, अत एव इतर-निवृत्त्युपपत्तेः न तु नियम, तथा सति मिलितमांसस्याभक्ष्यतानुपपत्तेः।

न चैवमपि तत्र नियम एव स्वीक्रियते मिलितमांसं भक्ष्यमेवास्तु मार्जार-मांसादिभक्षणप्रायश्चित्तविधीनां शशकादिमांसासम्वलितमांसभक्षणेतरपरत्वेनाति-रोधात् इति न च दुष्टाया. परिसंख्याया आदर इति वाच्यम्। शिष्टाचारविरो-धात् बहुतरप्रायश्चित्तविधिषु संकोचेन गौरवप्रसङ्गाच्च।

इत्थंविधं शब्दवर्गं गाथा सद्गकर्म्म-शशास्तथा।
भक्ष्यान् पञ्चनखाहुरनुष्ट्राश्चैकतोदतः॥

1. अतः नियमे उपायान्तरसम्वलनस्य शास्त्रार्थत्वं अत एवेति।

इति मनुवचने निर्धारणसप्तमीबलात् पञ्चनखपरिसंख्यानपरमेवैतत् इति शूलपाणि: । यद्यपि भक्ष्यपञ्चनखे शशकाद्यभेदनियमेन इतरपञ्चनखस्या-भक्ष्यता लभ्यते भक्ष्यपञ्चनखत्वे शशकाद्यभेदव्याप्यतालाभे शशकादिभिन्नप-ञ्चनखे गृहीतव्यापकताकशशकाद्यभेदाभावेन भक्ष्यपञ्चनखत्वाभावसिद्धौ भक्ष्य-त्वाभावमादायैव पर्य्यवसानादिति मन्यते तदा तु तत्र परिसंख्याकार्यकारी नियम एव पञ्चपदार्थस्य व्याप्य-व्यापकभावस्य संसर्गमर्यादया भावसम्भव: । वस्तुतस्तु उद्देश्यतावच्छेदकाविधेयसम्बन्धयोरेव व्याप्य-व्यापकभावस्य संसर्गमर्यादया भाव व्युत्पत्तिसिद्धं तथा च भक्ष्या: पञ्चनखा: पञ्च इत्यादि भक्षत्वविशेषित-पञ्चनखानां शशकाद्यभेदरूपविधेयोद्देश्यतया अभिमतव्याप्य-व्यापकभावलाभेऽपि पञ्च-पञ्चनखान् भुञ्जीतेत्यादिवाक्यात्तल्लाभासम्भव:, पञ्चनखकर्मता-विशेषितभक्षणबोधकतादृशवाक्याद्भक्षणकर्मताविशेषितपञ्चनखस्यालाभेन तादृ-शस्योद्देश्यत्वासम्भवादन्तरेण परिसंख्यानं नेतरनिवृति: सम्भवति ।

ननु इमामगृभ्णन् रसनामित्यादिपरिसख्याविधिस्थले पूर्वदर्शितरीत्या इतरनिवृत्ति: सम्भवति, पंच-पचनखानित्यादौ च परिसंख्यायां कथमितरपंच नखाभक्ष्यत्वलाभ इति चेत्, लक्षणया पञ्चपदस्य पञ्चातिरिक्ततत्परतया भक्षणार्थकधातोश्च बलवदनिष्टानुबन्धिभोजनार्थकतया तल्लाभसम्भव: ।

अथवा धातुर्न भोजनविशेषपराऽपितु विरोधिलक्षणया भोजनाभाव-पर एव, तत्र च विधिप्रत्ययेन नरकनिवृत्तिरूपेष्टसाधनत्वं प्रत्याय्यते, अतो विध्यर्थबोधकतया लिङ्गादे: साधुत्वनिर्वाह: । अत एव च स्वार्थहान्यादिदोष इति यत्र नियमेनोपपत्तिस्तत्र न तदादर: । अत एव याजनाध्यापनप्रतिग्रहै-र्ब्राह्मणो धनमर्जयेदित्यादौ ब्राह्मणधनाऽर्जने याजनादिकरणकत्वनियम एव सर्व-सिद्ध:, तावतैव वाणिज्यादिना तदर्जननिवृत्तिसिद्धि: ।

तथा हि बलवदनिष्टाननुबन्धित्वरूपविध्यर्थविशेषितधनार्जनरूपोद्देश्ये याजनादिकरणत्वस्य विधाने तस्य तत्सम्बन्धस्य वा तादृशोद्देश्यतावच्छे-दकव्याप्यत्वलाभात् तदभावेन वाणिज्यादिकरणकार्जनेऽनिष्टानुबन्ध्यर्ज-नत्वस्य व्याप्यस्याभावे सिध्यति तत्रानिष्टानुबन्धित्वस्यैव सिद्धिपर्य्यवसानात् । न हि तत्र शशकमार्जारादिककर्मकैकभक्षणसम्भवात्, वाणिज्ययाजनादिकरण-कैकार्जनसम्भव: येन करणनियमपक्ष तत्रानिषिद्धयाजनादिकरणकत्वाभावविरहेण दर्शितरीत्या निषेधपर्यवसानेन परिसंख्याद्रियेत ।

अत एव शब्दनिर्णये विधिवादे वाचस्पतिमिश्रै: नियम: पाक्षिके सतीत्या-दिकम् । कारकाणां यत्र पाक्षिकतया समुच्चयासम्भवरूपा तत्र नियम एवाद्रियते, तत एवेतरनियमनिवृत्तिसम्भवात्, यत्र तत्समुच्चयसम्भवस्तत्रागत्याकारकान्तर-निवृत्तये परिसङ्ख्येत्येव व्याख्येयम् । इदन्तु चिन्त्यते ब्राह्मणो धनमर्जयेदित्यत्र

ब्राह्मणो विशेष्य न तु धनार्जनविशेषणम्, एवञ्च ब्राह्मणकर्तृकत्वविशेषितधनार्जनस्योद्देश्यत्वासम्भवात्तदविशेषितानिष्टाननुबन्धिधनार्जनस्यैवोद्देश्यत्वमुपेयम् । तद्व्यापकता च न याजनादिकरणकत्वस्य सम्भवति वैश्यादिकर्तृकवाणिज्यादिकरणकानिषिद्धधनार्जनसाधारण्याभावात् ।

एवं बलवदनिष्टाननुबन्धित्वादिविध्यर्थस्याख्यातार्थकृता वान्वयमते निष्टाननुबन्धिकृतिविषयार्जनमेव याजनादिकरणोद्देश्यमुपगन्तव्यं तच्च न सम्भवति तादृशकृते कर्त्राख्यातस्थले धात्वर्थविशेष्यतयैव भानात् । एवं याजनत्वस्य प्रत्येकमेव विधेयतया प्रत्येकं नानिषिद्धब्राह्मणधनार्जनव्यापकता परस्परं व्यभिचारात् ।

अन्यतमकरणत्वेन व्यापकता सत्वेऽपि नोक्तवाक्यात्तल्लाभसम्भव तादृशरूपस्य विधेयतानवच्छेदकत्वात् विधेयतावच्छेदकरूपेणैव च विधेये व्यापकताबोधस्य व्युत्पत्तिसिद्धत्वात् अन्यथातिप्रसङ्गात् ।

याजनादित्रित्वस्य त्रितयसाधारणत्वेन तत्तत्करणत्वेन व्यापकत्वसम्भवात् । अन्यतमत्वघटितेन तेन रूपेण व्यापकताविवक्षणीयेत्यपि न. त्रित्वस्य व्यासज्यवृत्तितया तात्पर्यपर्याप्त्यधिकरणकरणकत्वस्य प्रत्येकमसत्वेनाप्रसिद्ध्या व्यापकत्वासम्भवात् पर्याप्तिसम्बन्धेनैव च बहुवचनस्य त्रित्वाद्यन्वयबोधकताव्युत्पत्तेः, पर्याप्त्यटिततदाश्रयकरणत्वस्य विधेयतावच्छेदकतया भानासम्भवात् ।

एवं याजनादित्रितयविशेषितत्रित्वस्य बहुवचनेन प्रकृत्यर्थविशेष्यतया बोधो न सम्भवति याजनत्वाद्यवच्छिन्नविशेषणतया बहुवचनार्थत्रित्वान्वयात् । तथा च त्रित्ववद्याजनत्वादिकमेव विधेयतावच्छेदकघटकं तादृशञ्च प्रत्येकवृत्तितया न व्यापकतावच्छेदकमिति न प्रतीकारः । यदि च ब्राह्मणो धनमर्जयेदित्यतो ब्राह्मणकर्तृकानिषिद्धधनार्जनत्वादेरुद्देश्यतावच्छेदकतया भभावेऽपि तद्रूपनिरूपितव्यापकतासम्बन्धमर्यादया भासते इत्युपेयते, उपेयते च व्युत्पत्तिवैचित्र्याद् बहुत्वस्य पर्याप्तिं परित्यज्याश्रयतामात्रं सम्बन्धः तदा पञ्च पञ्चनखान् भुञ्जीतेत्यादावपि विपरीतविशेष्य-विशेषणभावलभ्यस्य भक्ष्यपञ्चनखत्वस्य वाक्यादुद्देश्यतावच्छेदकतया अभानेऽप्येतादृशसमभिव्याहारस्थले तद्रूपनिरूपिताया. शशकादिपञ्चकत्वाश्रयाभेदत्वावच्छिन्नव्यापकताया संसर्गमर्यादया भावसम्भवेन इतरनिवृत्तिसिद्ध तत्रापि परिसंख्या न स्यात् ।

इदन्तु तत्त्वम् उद्देश्यतावच्छेदकविधेययोर्व्याप्य-व्यापकभावबोधनेनान्यथा वा यत्रेतरनिवृत्तौ विश्रान्तिस्तदेव परिसंख्यावाक्यम्, स च क्वचित प्रवर्तकतया परिसंख्याविधि: इमामगृभ्णन्नित्यादि., क्वचिन्निषेधवन्निवृत्तिमात्रपरतया

अविधिरूपं परिसंख्यावाक्यं, पञ्च पञ्चनखानित्यादि याजनाध्यापकेत्यादिकमपि परिसंख्यैवेति ।

अथैवं सति परिसंख्यास्थाने स्वार्थहान्यादिदोषप्रवादस्यासङ्गतिः, स्वार्थपरित्यागमन्तरेणापि परिसंख्याविधिस्थले पञ्चनखादिपरिसख्यास्थलेऽपि इतरनिवृत्ति सिद्धेर्दर्शितत्वात् ।

एवमृतौ भार्यामुपेयादित्यादि नियमो न तु परिसख्यादोषत्रयग्रासादिति सर्वसिद्धसिद्धान्तोऽपि व्याहन्यते स्वार्थहान्यादिमन्तरेणैवानिष्टानुबन्धितभार्याभिगमने ऋतुकालव्याप्तिबोधात् परिसख्याफलस्येतरकाले भार्याभिगमननिवृत्तिनिर्वाहान्नियमानावश्यकत्वात् । न च ऋतावनभिगमने प्रत्यवायश्रुतेः ऋतुकालाभिगमनस्यावश्यकत्वे तत्तात्पर्यमावश्यकमिति तत्र नियम इति वाच्यम् । अनृतावभिगमस्यापीन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामत इत्यादि निषेधात्तदेकवाक्यतया परिसंख्याया अप्यौचित्यादिति चेन्न, येन रूपेणोद्देश्यता तदन्यरूपव्यापकता उद्देश्य-विधेयभावमर्यादातो न लभ्यते इति पञ्च पञ्चनखान् भुञ्जीतेत्यादानुद्देश्याविशेषणभक्ष्यपञ्चनखत्वादौ शशकाद्यभेदव्याप्त्यलाभ इत्याशयेन तत्र परिसख्यायां स्वार्थहान्यादिदोषस्य प्राचीनैरभिधानात् । अत एव शिरोमणिभट्टाचार्यमहोदयैरेवकारार्थविचारे इह भवने मैत्रेणैवपेक्ष्यते तेमनमित्यत्र तेमनकर्मकपाकत्वेन पाकानुपस्थित्या तद्रूपस्योद्देश्यतावच्छेदकत्वासम्भवात्, एतद् भवनवृत्तित्वविशेषिततद्रूपावच्छेदेन मैत्रान्यकर्तृकत्वव्यवच्छेदबोधासम्भवात् मैत्रान्यस्मिन्नेतद्भवनाधिकरणकत्वे तेमनकर्मकपाककर्तृत्वावच्छेदबोधाय एवकारस्य लक्षणाकृता ।

प्रकृते च लक्षणोपगमे स्वार्थपरित्यागो ध्रुवश्च, ऋतौ स्वदारान् गच्छेत् इत्यादौ यद्यपि लिङर्थबलवदनिष्टानुबन्धित्वविशेषितभार्याभिगमनत्वानाभिगमस्य भानात्तद्रूपस्थकालविशेषसम्बन्धोद्देश्यतावच्छेदकत्वं सम्भवतीति तद्रूपे ऋतुकालसम्बन्धव्याप्तिलाभः सम्भवति, तथापि पचति चैत्रो गच्छतीत्याद्यप्रयोगादाख्यातार्थस्य विधयतयेव भानं न तदुद्देश्यतावच्छेदकतयेति व्युत्पत्तेर्बलवदनिष्टाननुबन्धित्वरूपलिङर्थस्य नोद्देश्यतावच्छेदकत्वं व्युत्पत्तिसिद्धमित्यालोच्य तत्र परिसंख्या नाहृता, किन्तु, ऋतुकालेऽभिगमननियम एव ।

अथ ऋताविति वाक्यात् तत् कालेऽभिगमननियमबोधनेऽपि तत्कालनानभिगमनेऽनिष्टसाधनत्वाबोधकतया तादृशविधिवाक्यात्तत्कालीनाभिगमने प्रवृत्तिनियमं नोपपादयतीति तस्य नियमविधित्वं दुर्घटमिति चेन्न तादृशवाक्यस्य तत्कालीनाभिगमने नरकाभावरूपेष्टसाधनताबोधकत्वोपगमेनोत्तरकालमर्थतस्तत्कालप्रत्यासन्नस्याभिगमनाभावस्य नरकसाधनत्वबोधात् तत्कालीनाभिगमे नियतप्रवृत्त्युपपत्त्या तद्वाक्यस्य नियमविधित्वोपपत्तेः ।

सन्ध्यामुपासीतेत्यादिनित्यविधीनां क्रियासु नरकाभावसाधनताबोधकतया उक्तरीत्या तत्र नियमप्रवृत्तिसम्पादकत्वेऽपि न तेषां नियमविधित्वं विधिं विनापि यादृशक्रियाया रागात्प्राप्तिः प्रवृत्तिसम्भवस्तत्र प्रवृत्तिनियमापादकविधेरेव नियमविधित्वात् ।

परन्तु सन्ध्यावन्दनादावन्यतः प्रवृत्त्यसम्भवात्तद्विधायकवाक्यानामपूर्वविधित्वमेव । यथोक्तरीत्यैव ऋतावित्यादिविधेः क्रियाया नियतप्रवृत्तिनिर्वाहकत्वे तस्य नियमबोधकत्वं किमर्थमुपेयत इति चेन्नापेयत एव तथात्वं नियमाबोधकत्वेऽप्यवधारविधिवन्नियमविधित्वसम्भवात् ।

ऋतौ भार्यामुपेयादेवेत्यादिवाक्ये एवकारस्यायोगव्यवच्छेदार्थकतया भार्याभिगमे ऋतुकालवृत्त्यभावप्रतियोगित्वव्यवच्छेदस्यावधारणस्याबाधस्यावबोधकतया तत्रैव नरकाभावस्येष्टसाधनत्वान्य ।

केचित्तु कालनिष्ठक्रियाया अयोगे लिङर्थबलवदनिष्टाननुबन्धित्वव्यवच्छेद एवकारेण बोध्यते इत्याहुः ।

कार्तिकादौ हविष्यं भुञ्जीतेत्यादिर्नापूर्वविधिः दुग्धादिरूपहविष्यभोजने रागत एव प्रवृत्तिसम्भवात् । नापि ऋतुकालाभिगमादिविधिर्वन्नियमविधिरकरणे प्रत्यवायस्याप्रामाणिकत्वात् । नापि परिसंख्याविधिः इमामगृभ्णन्नित्यादेर्गर्दभरसनाग्रहणे एतन्मन्त्रस्य सफलत्वज्ञानविरोधितया तत्र तदन्यमन्त्रपाठाप्रवृत्तिप्रयोजकत्वावत् प्रकृतस्य हविष्येतरभोजने लौकिकप्रमाणसिद्धफलत्वे सफलत्वज्ञानाविघटनेन प्रवृत्तिविरहप्रयोजकताया असम्भवात् । अपितु हविष्यं ब्रह्मचारित्वं महापातकनाशनमित्याद्यर्थवादबाधितफलार्थिनं हविष्येतरभोजनाद्यभावे प्रवर्तयन् एकादश्यामुपवसेदित्यादिवत् अभावविधिरेव ।

न च तद्वाक्यादितरभोजनाद्यभावबोधासम्भवान्न तद्विधित्वसम्भव इति वाच्यम् । तथाविधविधरर्थवादेन कल्पयते हविष्येतरन्न भुञ्जीतेत्याद्याकारकस्यैव कल्प्यत्वात् । प्रत्यक्षं वै पञ्च पञ्चनखानित्यादावपि लक्षणयाभिमतार्थबोधकताया उपपादनीयत्वात् । मदर्थवादेऽपि हविष्यादिपदस्य तदितरभोजनाद्यभावे लाक्षणिकत्वापगमात् । भुञ्जीत पितृसेवितमित्यत्र श्राद्धनिवेदितान्नोभेतरद्रव्यभोजननिषेधकवाक्यतया परिसंख्यामेव स्वीकुर्वन्ति ।

वस्तुतः प्रदक्षिणमुपव्रज्य भुञ्जीत पितृसेवितमित्यादिवचनैरितिकर्तव्यतासन्देहेन शेषभोजनाविधानात् शेषभोजनस्याङ्गत्वं दुरपवादमिति श्राद्धोपकारकतया तद्विधानेन विनियोगविधिप्रभेदो नियतप्रवृत्तिफलकत्वान्नियमविधिरूपोऽयम् । शेषाङ्गत्वेनास्याङ्गत्वेनि श्रामावश्यकोपवासादिदिने शेषभोजनमन्तरेणापि प्रधाननिर्वाहस्तत्राश्राद्धं नि शेषाश्रमासादिदर्शनेन । श्राद्धशेषभोजस्याङ्गस्यानपेक्षानिर्वाहात् । एवमेव श्राद्धविवेककृतः ।

न च श्राद्धजन्यापूर्वे शेषभोजनस्य कारणत्वे कथं तद्घटितसामग्रीतः परमापूर्वोत्पत्तिः, कारणत्वभावे शेषसत्वेऽपि तदपेक्षा न स्यात् कथं वा तदङ्गं भवेत्, सावशेषश्राद्धजन्यपरमापूर्वे तस्य कारणत्वोपगमेऽपि निरवशेषश्राद्धजन्य-परमापूर्वसामग्र्यः शेषसत्वेऽपि तद्भोजनमन्तरेणापि अक्षतत्वात् प्रधानानिर्वाहो दुर्घट इति वाच्यम् ।

शेषभोजनवत् शेषाभावस्यापि वैकल्पिकाङ्गत्वेन श्राद्धजन्यपरमापूर्वसामान्योत्पत्तौ शेषाभाव-शेषभोजनरूपाङ्गद्वयान्यतरसामग्र्यापेक्षया सामञ्जस्यात् । न च शेषाभावस्याङ्गताबोधकविध्यभावात् कथं तस्याङ्गतेति वाच्यम् ।

शेषसत्वे किं कुर्वीतेत्याकांक्षया प्रवृत्ततस्य शेषान्नं भुञ्जीतेति विधेः । शेषसत्वे भोजनापेक्षाबोधकतयाशेषासत्वे तदनपेक्षाबोधकतयाशेषासत्वे तदनपेक्षाबोधकतयाशेषसत्वे शेषभोजनं विनैव प्रधानसिद्धिरित्येतल्लाभात्, तत्र शेषाभावस्यानपेक्षायाशेषसत्वेऽपि शेषभोजनमन्तरेणापूर्वस्य दुर्वारतया शेषभोजनविधेस्तत्र नियमेन प्रवर्तकत्वायोगात्तद्विधिवैयर्थ्यो न शेषाभावस्याङ्गतायास्तद्बोधकविधेश्चाक्षेपात् उभयस्थलसाधारणः शेषभोजनाभावविशिष्टस्य शेषस्याभाव एवाङ्ग भुञ्जीत पितृसेवितमित्यनेन विशेषणाभावरूपस्य शेषभोजनस्य वस्तुगत्या विशिष्टाभावत्वावच्छिन्न पदपूर्वसाधनत्वं तदेवबोध्यते, तद्रूपस्य जनकतावच्छेदकत्वञ्च व्यभिचारात् शेषभोजनत्वस्य तथात्वाबाधात् तदुत्तरकालत्वं, तावता विशेष्याभावस्यापि साधारणरूपेणाङ्गतासिद्धिरित्यप्याहुः ।

ईदृशरीत्यैव लौहितं निरस्याति शकृन्निरस्यतीत्यादिविधिबोधितलोहित-शकृन्निरासात्मकप्रतिपत्तिरूपाङ्गबाधेऽपि लोहित-शकृदाद्यसत्वस्थले प्रधानसिद्धि-रुपपादनीया । न चाङ्गबाधभयेन लोहिताद्यसत्वस्थले लोहिताद्यन्तरं सम्पाद्यै-तन्निरसनं युक्तमिति वाच्यम् ।

लोहितादिसत्वे किं कुर्वीतेत्याकांक्षया तादृशविधीनां प्रवृत्त्या लोहिता-द्यसत्वस्थले तेषां विधीनामप्रवृत्तेस्तत्र तदङ्गतबोधकाभावात् एतन्यायमूलक एव विप्रतिपत्ति प्रतिवाद्याप्रयोजकत्वमिति भावः । अथ लौकिकशेषभोजनस्या-लौकिकाङ्गत्वे पूर्वदिवसीयनिरामिषसकृद्भोजनस्यापि श्राद्धाङ्गता स्यादिति निरामिषं सकृद् भुक्त्वा[1] इत्यादौ निरामिषसकृद्भोजनातिरिक्तभोजनाभाव-परत्वं भज्येतेति चेन्न पूर्वदिवसे आवश्यकोपवासस्थले आवश्यकश्राद्धस्य निर्वाह-प्रसङ्गेन तत्र वैकल्पिकाङ्गान्तरकल्पने च गौरवेण तद्वचनस्य निरामिष सकृद्-भोजनातिरिक्तभोजनाभावरूपाङ्गविधायकताया एवोपगमादित्यधिकविस्तार-भयेनालम् ।

—□—

# ग्रन्थोद्धृतमन्त्रादीनामाकरग्रन्थप्रदर्शनपूर्वक वर्णानुक्रमिकसूचीपत्रम्

ओ



औ



क

## त

| | |
|---|---|
| तद्वा इद बृहती सहस्रम् | ऐ ब्रा २ ३ ७ |
| तद्वा एतत् सहस्र वाच | श ब्रा ४ ५ ८ ३ |
| तद्योऽहसोऽमो | ऐ ब्रा २ १ ६ |
| तदेतद् सहस्र तत सवम् | ऐ ब्रा २ ३ ४ |
| तस्य वा एतस्य बृहती | ऐ ब्रा २ २ ४ |
| तस्य प्राची दिक प्राञ्च | श ब्रा १४ ६ ११ |
| तस्मात् स पुरुप | श ब्रा १४ ४ २ ५ |
| तद्वा एप एव वपट्कार | श ब्रा १४·४ २ ६ |
| तयोरादित्ययो सत्र | बृहद्दवता २ ३ |
| तपसो वै ता प्रजा | मैं स १ १० ६ |
| त्वमिमा ओपधी | ऋ स १ ६ २३ |
| तानि वा एतानि | तै ब्रा २ ३ ८ |
| तास्वप्सु स्वा छायामपश्यत् | गो ब्रा १ ३ |
| तस्याग्निर्होताऽऽसीत | गो ब्रा १ १३ |
| तापी पयोष्णी निर्विन्ध्या | ब्रह्म पु १६ |
| त्रिविष्टप त्रिदिवम | गो ब्रा ५ १० |
| त्रयी विद्या ब्रह्म | श ब्रा. ५ ७ २ |
| त्रिविक्रमो विष्णु | का श ब्रा १३ २ १ |
| त्रिवृद्व चक्षु | कौपी ब्रा ३ ५ |
| त्रीन् समुद्रान् समसृपत् | कौपी ब्रा ३ ६ |

## द

| | |
|---|---|
| दक्षिण पादमवनेनिजे | ऐ ब्रा ८ ५ ८ |
| दक्ष दधाते अपसम | ऋ स १ २ ६ |
| दश दशिनो विराट | कौपी ब्रा १७ ३ |
| दशेम स्वष्टुर्जनयन्त गभम | ऋ स १ ६५ २ |
| दानुमत्या बृहन्त गत्तमाशाथे | ऋ स ५ ६८ ५ |
| दा भाम्या नु | सि कौ उणादि सू ३११ |
| दिवस्पृथिव्यो पर्य्योज | ऋ स ६ ४७ २७ |
| दाघतमा मामतेयो | ऋ स १ १५८ ६ |
| दीघश्रुत्तमम् | ऋ स ५ ३८ २ |
| देवरथो वा एप यद्यज्ञ | ए ब्रा २ ५ ५ |
| दवाना नु वय जाना | ऋ स १० १२ १ |
| देवाना माने प्रथमा | ऋ स १० २७ २३ |
| देवानामेना निहिता पदानि | ऋ स १ १६४ ५ |

ध



न

प

| | |
|---|---|
| मनु सर्वः | कौषी. ब्रा. २६:१७. |
| मनोर्ऋचो भवन्ति | मैत्रा. स २.१ ५. |
| मध्या कर्तोविततं सञ्जभार | शु. य. स ३३. ३७. |
| मनो अस्या अन आसीत् | ऋ स. १० ८५ १०. |
| मयैव प्राची दिश विजानाथ | ऐ ब्रा १ २ १. |
| मन्त्रब्राह्मणयोर्वेदनामधेयम् | आप यज्ञ परिभाषा सू १० |
| मन्युरिन्द्रो मन्युरेवा | ऋ स. १. ८३ २. |
| मा मामिम तव सन्तमत्र | ऋ स. ५. ४० ७. |
| मायेत् सा ते यानि | ऋ. स १० ५४.२. |
| मा शिश्नदेवा अपिर्ऋतं | ऋ सं. ७ २१ ४ |
| मासाना चार्धमासाना | निरुक्तम् ५.२१.१ |
| मासाना मार्गशीर्षोऽहम् | गीता ११. १० |
| मित्रो जनान् यातयति ब्रुवाणः | ऋ स. ३ ५६. १ |
| मित्राय पञ्च येमिरे जना. | ऋ स ३. ५६ ८. |
| मुख वा एतद्दतूना यद् | ऐ ब्रा. ३. २ ४ |

## य

| | |
|---|---|
| य एनमादिदेशति करम्भात् | ऋ स. ६. ५६. १. |
| यज्ञो मृगधर्मा | ताण्डय. ब्रा ३. ५ ६ |
| यज्ञ पृच्छाम्यवम | ऋ. स १. १०५ ४. |
| यत् कृष्णो रूप कृत्वा प्राविशः | शत ब्रा. १ १. ४१ |
| यत्वा सूर्यं स्वर्भानुस्तमसा | ऋ. स. ५. ४०. ५. |
| यत् प्रथममुददीप्यत सोऽसा | ऐ. ब्रा. १. ४. ७. |
| यत्रेन्द्र देवताः पर्यवृज्जन् | ऐ ब्रा. ५. ३ ४ |
| यतिवेषधरानसुरान् | ऐ ब्रा. सा. भा ३. ५ ७. |
| यतीन् सालावृकेभ्य. | ऐ. ब्रा. ८ ३. २. |
| यत्त्रिष्टुब् वज्र. | ऐ ब्रा ५ २. ५. |
| यत्सानो सानुमारुहत् | ऋ. स. ३ ५५. १७ |
| यज्ञेन यज्ञमयजन्त देवा' | ऋ. स १ १६४. ५०. |
| यदङ्ग दाशुषे त्वमग्ने | ऋ स. १. १ ६. |
| यदन्यासु वृषभो रोरवीति | ऋ स ३. ५५. १७. |
| यदङ्गारा पुनरवशान्ता | ऐ. ब्रा. ३. ५. २. |
| यदपोनप्त्रीया वज्रा | ऐ. ब्रा. ४ २. ५ |
| यदवृणोतद् वृत्रस्य वृत्रत्वम् | निरुक्तम् २ १७ १ |
| यदाजिमीयुस्तदाज्यानामाज्यत्वम् | ताण्ड्य ब्रा ७ ५ ३ |

वृत्रमवधीत् — ऐ. ब्रा. ७. ५. २.
वसिष्ठो ह विराजम् — श. ब्रा. १२. ३. १.
विरश्मिभि: ससृजे — कौषी, ब्रा. २५. ३.
विरूपास ईदृषय: — श. ब्रा. १०. ६२. ५.
विष्णो: कर्माणि — ऋ. सं. १. २२. १६.
वितायमान: सरस: — का. श. ब्रा. १३ १ १.
विकङ्कस्या चलेन्द्रस्य — वा. पु. ३७.
विद्युतो ज्योति: — ऋ. सं. ७. ३३. १०.
वि न इन्द्र जिघांससि — ऋ. सं. १. १७०.
विश्वामित्रं ह्येतदह: — ऐ. ब्रा. २. २. ३.
वैराज: सोम: — कौषी. ब्रा. ६. ६.
वृषा सोमो योपा आप: — श. ब्रा. ४. ५. ६. १२.
बृहच्च तद्दिव्यम् — मुण्ड. उ. ३. १. १०.



## श

शतं जीव शरदो वर्धमान: — ऋ. सं. १०. १६१. ४.
शतायु र्वै पुरुष: — ऐ. ब्रा. २. २. ७.
शरद्धेमन्त: शिशिर इति — शत. ब्रा. ३. ५. ७.
शश्वत् पुरोपा व्युवास — ऋ. सं. १. १३. १३.
शिपिविष्टो विष्णुरिति — निरुक्तम् ५. ८. १.
शूद्रार्यो चर्मणि व्यायच्छाते — ताण्ड्य. ब्रा. ५. ५. १४.
शोणामेक उदकं — अथर्व. सं. १. १६१. १०.
श्रीश्च ते लक्ष्मीश्च पत्न्या — शु. य. सं. ३१. २२.

## ष

षष्टिश्च षट् च रेवति — अथर्व. सं. १९. ४७. ४.
षष्टिश्चाध्वर्यो नवतिश्च — आ. श्रौ. सू. १. ३.
षष्टिं सहस्रमनुनिर्मजामजे — ऋ. सं ८. ४. २०.
षष्टि: सहस्रमनुगव्यमागत् — ऋ. सं. १. १२६.

## स

स उ एव स: — ऐ. ब्रा. ३. ३. ९.
स उत्सहतां यो विष्णुस्य — निरुक्तम् ४. १६. ६.
स एव स मृगव्याध: — ऐ. ब्रा. ३.३.९.
स जनास इन्द्र: — ऋ. सं. २. १२. १.
सत्यात्रेव नापत्यौ — निरुक्तम् ६. १३. १.
सदृशीरद्य सदृशी: — ऋ. सं. १. १२३. ८.

| | |
|---|---|
| स न शर्माणि वीतये | ऋ स ३ १३ ४ |
| सप्तदशो वै प्रजापति | ऐ ब्रा १ १ १ |
| सप्त मर्यादा कवयस्ततक्षु | ऋ स १० ५ ६ |
| सप्तास्यासन् परिधय | ऋ स १० ९०. १५ |
| समानमेतदुदक | ऋ स. १ १६४ ५१ |
| संवत्सर एव सहस्रवास्ताकवान् | ए ब्रा ५ ३ ४ |
| संवत्सराय दीक्षिष्यमाणा | तै ब्रा ७ ४ ८ १ |
| स यन्ता विप्र एषा | ऋ स. ३ १३ ३ |
| स यावादादित्या दक्षिणत | ऐ ब्रा ३ ८. ४ |
| सर्वाणि भूतान्यन्तरीक्षम् | त. आ ३ २ ४. |
| सर्वेषा वा एतत पञ्चजनाना | ऐ ब्रा ३ ३ ७ |
| स वा एष न कदाचनास्तमेति | ए ब्रा ३ ४ ६ |
| सविता नो रासता दीर्घमायु | ऋ स १० ३६ १४ |
| सविता पश्चातात् सविता | ऋ स १० ३६ १४ |
| सहस्रस्थूण विभृथ | ऋ. स ५ ६२ ६ |
| साक्षात्कृतधर्माण ऋषया | निरुक्तम् १ २० २ |
| साङ्गा सरहस्या | व्या. म. भा पश्पशाह्निकम् |
| सामवेदस्य किल सहस्रभेदा. | चरणव्यूहसू १ ५ |
| सा वै वाक् सृष्टा चतुर्धा | निरुक्तम् १३ ६ १ |
| सास्मिन् पौर्णमासीति | पा सू ४ २ २१ |
| सिनीवालि पृथुष्टके | ऋ स २ ३२ ६ |
| | निरुक्तम ११ ३२ १ |
| सु-पूजित मत प्रहृष्ट | ऐ ब्रा सा भा २ ३ ६ |
| सु-मत्-पद्-वग्-दे | ऐ ब्रा २ ३ ६ |
| सुमङ्गलीरिय वधू | छा म ब्रा १ २ १४ |
| सुपप्नास ऋभवस्तदपृच्छता | ऋ स १ १६१ १३ |
| सूर्यस्य पश्य श्रेमाण | ऐ ब्रा ४ ३ ३ |
| सोमो वै वाजस्तस्य | ऐ ब्रा ३ २ १ |
| सोम मन्यते पपिवान | ऋ स १० ८ ५३ |
| सोऽस्य दिव्याहवनीयो भवति | ग ब्रा ८ ३ ५ |
| स्त्रिय यद्दहणा युन नघीदुं हिनर | ऋ म ४ ३० ८ |
| स्वर्भानोरधयदिन्द्र माया | ऋ स ५ ४० ७० |
| स्वसा स्वस्रे ज्यायस्यै | ऋ स १ १२४ ८ |
| स वा एष आत्मा | श ब्रा १४ ४ ३ १० |
| सत्रे ह जाता | ऋ स ७ ३३ १३ |

| | |
|---|---|
| सप्तभिः पुत्रैरदितिः | ऋ. सं. १०:७२:९. |
| सर्वो वै यज्ञः | श. ब्रा. ११:१:३:४. |
| स वाव विवस्वान् | मैत्रा. सं. १:६:१२. |
| स एप पिता पुत्रः | श. ब्रा. ६:१:२. |
| सहस्रधा पञ्चदशान्युक्था | ऋ. सं. १०:११४:८. |
| सर्वासु दिक्षु पितरः | मैत्रा. सं. १:७:१९. |
| सोमात्मको ह्ययं वेदः | गो. ब्रा. २:७. |
| सोऽमृतः शुक्रोऽग्निः | श. ब्रा. ६:१. |
| सोऽयं पुरुषः प्रजापतिः | श. ब्रा. ६:१:१. |
| साकं जाना सप्तथ | ऋ. सं. १:१६४:१५. |



ह

| | |
|---|---|
| हस्त एवास्य हस्तश्चित्रा | तै. ब्रा. १. ५. २. २. |
| हित्वी शिरो जिह्वया वावदच्चरत् | ऋ. सं. ६, ५९. ६. |
| हिमेनाग्निम् | ऋ. सं. १. ११६. |
| हिरण्ययो वेतसो मध्य आसम् | ऋ. सं. ४. ५८. ४. |
| हृदयस्यस्याग्रेऽवद्यति अथ जिह्वायाः | शत. ब्रा. ३. ६. ४. १५–१७. |